अहन्नहिमन्वपस्ततर्द प्र
वक्षणा[1] अभिनत् पर्वतानाम्[1] ॥

हिरण्यस्तूपस्य । इन्द्रस्य[2] नु इति क्षिप्रनाम[3] क्षिप्रं वीर्याणि वीरकर्माणि प्रवोचं प्रब्रवीमि । यानि चकार कृतवान् करोति वा प्रथमानि अन्येनाकृतपूर्वाणि[4] उत्कृष्टानि वा । वज्री गृहीतवज्रः सन्नित्यर्थः । अहन्नहिं[5] हतवान्[6] मेघम् । अन्वपस्ततर्द[7] अन्वित्यपरभावे पश्चाद्भावे वा तर्दतिर्हिंसार्थः । मेघवधोत्तरकालं[8] तदीया अपो हिंसितवान् । भूमौ[9] पातितवानित्यर्थः । सा हि तासां हिंसा । केचित्तु तर्दतिं विस्तारार्थं व्याचक्षते पृथिव्यामपो विस्तारितवानित्यर्थः । ताभिश्च पातिताभिर्विस्तारिताभिर्वा प्रोपसर्गोऽभिनदित्येतेन सम्बध्यते । वक्षणा[10] इति नदीनाम नदीश्च कुलिशपातेन[11] प्राभिनत् । पर्वतानां सम्बन्धिनीस्तेभ्यो हि ताः प्रभवन्तीति सम्बन्धः ।

अथवा वक्षणाः पर्शवस्तान्[12] प्राभिनत्[13] । पर्वतानां मेघानामेकं मेघं ...कवान् ।[14] अन्येषां चापि पर्शून्[15] भग्नवानित्यर्थः । अथवा पर्शुवचनेन[16] वक्षणाशब्देन तत्सामीप्यात् पक्षोऽत्र[17] प्रतिनिर्दिश्यते[18] । पर्वतशब्दस्तु महीधरवचन एव । महीधराणां पक्षान् प्राभिनत् भिन्नवानित्यर्थः ।

---

१ [ ऋ० १।३२।१ ] 'इन्द्रस्य नु वीर्याणि प्रवोचम्' इति प्रतीकः B. 'इन्द्रस्य नु वीर्याणि' इत्येव प्रतीकः C.
२ 'इन्द्रस्य' इति त्रुटितम् B.
३ क्षिप्रनाम' इति त्रुटितम् C. [निघ० २।१५]
४ 'कृतपूर्वाणि' इति द्विर्लिखितम् B
५ 'अहन्नहिम्' इत्यारभ्य 'विस्तारितवानित्यर्थः' इत्यन्तः पाठस्त्रुटितः C.
६ अहतवान् B
७ अन्विष्य परभावे परश्चाद्भावः B
८ कालस्तदीया B.
९ पतित B
१० प्रवक्षणा B. [निघ० १।१३]
११ शपातो न B.
१२ पशवः B, C.
१३ प्रभिनत् C.
१४ अत्र कश्चन पाठस्त्रुटितः B C. अथवा 'हतवान्' इति पाठोऽत्र भवेत् ।
१५ पशूर्भग्न B. C.
१६ पशुवच B. C.
१७ वत्पक्षोऽत्र B. वक्षोऽत्र C.
१८ वति निर्दि B.

एवं चरकाध्वर्यूणां ब्राह्मणे इतिहासः श्रूयते—"प्रजापतेर्वा एतज्ज्येष्ठं तोकं[1] यत्पर्वतास्ते पक्षिण आसन् ते परापातमासन् यत्र यत्राकामयन्त । अथवा इयं तर्हि शिथिरासीत्[2] । तेषामिन्द्रः पक्षानच्छिनत् तैरिमामदृंहदिति'[3] ।

इन्द्रे कामा अयंसत
दिव्यासः पार्थिवा उत ।
त्यमू षु गृणता नरः[4] ॥

ये दिव्या दिवि भवा ये च पार्थिवाः । [5]यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः । ते सर्वे इन्द्रे कामा अयंसत यमिर्बन्धनार्थः । इन्द्रे निबद्धा[6] इन्द्र आयत्ता इत्यर्थः । एतज्ज्ञात्वा त्यमू षु[7] त्यं कं उ इति पादपूरणः । गृणत[8] स्तुतेत्यर्थः । नरः सर्वे मनुष्याः ।

परोक्षकृतानन्तरं प्रत्यक्षकृतानां लक्षणमाह—

मध्यमपुरुषयोगास्त्वमिति चैतेन सर्वनाम्ना ।[9]

मध्यमपुरुषयोगाः— मध्यमेन त्रिकेण योगो यासाम् । क्वचिच्चामन्त्रितेनेति शेषः । ताः प्रत्यक्षकृतास्त्वमिति चैतेन सर्वनाम्ना योगो यासां ताश्च । इह प्रत्यक्षकृतादिलक्षण एव क्वचिदामन्त्रितयोगः क्वचित् सर्वनामयोगः क्वचित् समुच्चयः । अन्यतरस्य[10] योगेऽन्यतरदध्याहार्यमाकांक्षितत्वादेकवाक्यतायै । उदाहरणम्[11]—

त्वमिन्द्र बलादधि सहसो जात ओजसः ।
त्वं वृषन् वृषेदसि[12] ॥

---

१ इताकं B. इतोकं C. अग्रे 'यत्र' इत्यस्मात्पूर्वं 'परापातमासन्' इति त्रुटितम् B. C. ।
२ शीबा आ C. शिबा आ B.
३ [मैत्रा० सं० १।१०।१३]
४ अस्य मूलमद्यापि नोपलब्धम् ।
५ अत्रोदाहरणवचने यच्छब्दः क्वापि न दृश्यते । अतश्चिन्त्यमिदं व्याख्यानम् ।
६ निबन्धाः B. C.
७ न्यमूषु B.
८ गृणन्तः B. गृणन्त C.
९ इदं प्रतीकवाक्यं नास्ति C.
१० 'र' इति त्रुटितम् C.
११ उदाहरणम् C.
१२ [ऋ० १०।१५३।२] 'त्वमिन्द्र बलादधि' B. 'त्वमिन्द्र बलात्' C. इत्येव प्रतीकः ।

इन्द्रमातरो देवजामयश्च तासामार्षम् । त्वं हे इन्द्र बलात्[1] । किं विशिष्टात्[2] । सहसोऽभिभवितु[3] जात उत्पन्नः । 'अधिशीङ्'[4] इति कर्मप्रवचनीयः[5] सः पादपूरणः । ओजसः बलस्यैवैतद् विशेषणम् । उजतेर्वा[6] उब्जतेर्वा[7] । उजतिश्च वृद्ध्यर्थः वृद्ध्या महत[8] इत्यर्थः । यदोब्जतेस्तदा न्यग्भावयितुः शत्रूणामित्यर्थः । किं च त्वं हे वृषन् वर्षयितः[9] वृषा वर्षिता । इत् पदपूरणः । असि भवसि । एवशब्दस्यार्थे वा, येनोक्तलक्षणात् बलाज्जातो[10] वर्षितैव त्वमसि ।

वि नं इन्द्र मृधो' जहि
नीचा यंच्छ पृतन्यतः ।
यो अस्माँ अभि दास-
त्यधरं गमया तमः[11] ॥

शासस्य भारद्वाजस्य[12] । विविधं नोऽस्माकं हे इन्द्र मृधो मृधं करोतीत्याद्युक्तनिर्वचनम्[13] । संग्रामकारिण[14] इत्यर्थः । मृधं कुर्वन्तीति विगृह्य तत्करोतीत्यादिना णिच् प्रत्ययदावसंख्यानिलरणाविष्के[15] वदति देशाहिलोपः । ततो धातोः 'अन्येभ्यः'[16] इत्यादिना क्विप् ततश्च द्वितीया-

---

१ स्ववान् B. न्व (व) खात C.
२ ष्टान् सः सह B. ष्टातर सह सह C.
३ भि भवतु C.
४ [पा० १।४।४६] C. पुस्तके 'अक्रिधिशीण्डिति' इति पाठः । अत्र 'अधिपरी अनर्थकौ 'पा० १।४।९३ इति पाठो युक्तः ।
५ ०नीय सः C. अत्र 'कर्मप्रवचनीयसंज्ञः' इति वा युक्तः पाठो भवेत् ।
६ 'ब्ज' इति त्रुटितम् B. C.
७ अब्जतेर्वा B. उब्जतेर्मा C.
८ 'त' इति त्रुटितम् B.
९ वर्ष इत वृष C.
१० बल ज्यातो C.
११ [ऋ० १०।१५२।४] 'वि न इन्द्र मृधो जहि, B. 'वि न इन्द्र' C. इत्येव प्रतीकः ।
१२ भरद्वा० C.
१३ ०क्तनृवचनम् C.
१४ ०करिणा C.
१५ 'प्रत्ययदावसंख्यानिलरणा विष्के वदति देशाहिलोपः,' इत्ययं पाठः सन्दिग्धः । C. पुस्तके 'प्रत्ययभावासंख्याणिकरणाविष्के वदति दशाष्टीलोपः', इति पाठः ।
१६ [पा० ३।२।७५, ७६]

बहुवचनम् । शत्रून्[1] जहि भिन्धि मारयेत्यर्थः[2] । नीचा[3] नीचैः । यच्छ[4] नियच्छ बधान प्रणामयेत्यर्थः । पृतन्यतः पृतनेति संग्रामनाम तस्मादिच्छायां[5] क्यच् । संग्रामं य इच्छन्त्येव[6] केवलं[7] न त्वध्यवस्यन्ति[8] कर्म । किञ्च यस्त्वस्मानभिदासति[9] आभिमुख्येनोपक्षयति । यच्छ्रुतेस्तच्छब्दोऽध्याहार्यः । तमधरं[10] कुलोत्सादलक्षणं[11] गमया तमः[12] सांहितिकं दीर्घत्वं गमय तमः ।

अथापि अपि वाऽयमपरो मन्त्रप्रकारो यत्र—

प्रत्यक्षकृताः स्तोतारो भवन्ति
परोक्षकृतानि स्तोतव्यानि[13] ॥

प्रत्यक्षकृतेत्यादि[14] । पुरस्तादेव व्याख्यातः[15] । स्तोतव्यानीन्द्रादीनि दैवतानि । अत्र हि मध्यमत्रिकामन्त्रितयोगश्च[16] प्रेष्याणां [17]नामविभक्तिप्रथमत्रिकयोगश्च[18] स्तुत्यानाम् । अतोऽयमन्य एव प्रैषमन्त्रप्रकार इति उदाहरणैर्दर्शयति[19] । [20]ससमुच्चयप्रकारान्तरं वा ।

मा चि॒द॒न्यद्वि शं॑सत
सखा॑यो॒ मा रि॑षण्यत ।
इन्द्र॒मित्स्तो॑ता॒ वृष॑णं॒ सचा॑
सु॒ते मुहु॑रु॒क्था च॑ शंसत[21] ॥

---

१ शस B. C.
२ बन्ध B.
३ न वा B.
४ यश्च नियश्च विबधान C.
५ दिश्चाया क्यस् C.
६ इच्छ (श्च C.) न्त्येव B. C.
७ केवलान् B. C.
८ 'वस्यन्ति' इति त्रुटितम् C.
९ यत्वस्मा B. C.
१० तद (म C.) ध (धा C.) राम् B. C.
११ लक्षणीम् B. 'लक्षणम्' इति युक्तः स्यात् ।
१२ 'त' इति त्रुटितम् B. C
१३ इदं मूलवाक्यं नास्ति C
१४ यत्र प्रत्यक्ष B. क्षकृता हेत्यादि C.
१५ देव सव्याख्या C
१६ प्रकामन्त्रिकयो B.
१७ 'वि' इति त्रुटितम् B.
१८ 'ग' इति त्रुटितम् B. C
१९ रणैतद्दर्श C
२० 'स' इति नास्ति C
२१ [ऋ० ८।१।१] 'मा चिदन्यत्' इत्येव C । 'मा चिदन्यं वि शंसत' B

प्रगाथस्यार्षम्। मा चित्पादपूरणः। त[1] इन्द्रादन्यद्देवतारूपं विशंसत विविधं[2] स्तोष्टेत्यर्थः। हे सखायः समानख्याना ऋत्विजो मा रिषण्यत[3] रिषण्यतिर्हिंसार्थः[4]। विफलेनान्यदेवतास्तुतिपरिश्रमेणात्मानं हिंसिषः। स्तुत्यर्थो[5] वा रिषण्यतिः। अन्यद्दैवतं मनसापि मा शंसिष्ट। इन्द्रं इदेवार्थे[6] इन्द्रमेव स्तोता। छान्दसत्वाद् गुणः सांहितिकं[6] दीर्घत्वम्। कं[7] स्तुतेत्यर्थः। कीदृशम्। वृषणं वर्षितारम्। सचा[8] सह। सुते[9] अभिष्टुते सोमे मुहुर्मुहुः पौनःपुन्ये पुनः प्राप्ते काले उक्था च उक्थानि चास्य शंसत[10]।

> क्री॒ळं वः॒ शर्धो॒ मारु॑त-
> मन॒र्वाणं॑ रथे॒शुभ॑म्।
> कण्वा॑ अ॒भि प्र गा॑यत[11]॥

कण्वाख्य ऋषिः पुत्रान् पौत्रांश्च......[12]। क्रीडनस्वभावतो[13] वः छान्दसत्वात् प्रथमा बहुवचनस्यायं वसादेशः। शर्धो बलं सेनाख्यं मारुतं मरुतां स्वभूतम्। अनर्वाणमप्रत्यृतगमनपूर्वमन्यं प्रत्याश्रिततया अपराश्रितमित्यर्थः। रथेशुभं रथेनैकस्मिन् स्थितं शोभितृ। कण्वाः कण्वस्य पुत्राः पौत्राश्च। अभिप्रगायत[14] प्रकर्षेणाभिष्टुतेत्यर्थः। अथवा कण्व इति मेधाविनाम। कण्वा मेधाविन ऋत्विज उच्यन्ते। प्रकर्षेणाभिष्टुत इति।

> उप॒ प्रेत॑ कुशिकाश्चे॒तय॑ध्व॒-
> मश्वं॑ रा॒ये प्र मु॑ञ्चता सु॒दासः॑।

---

१ अत्र 'न' इति युक्तः पाठः।
२ विविधां C
३ मार्षण्यत B
४ ति हिंसान्धः C
५ स्तुत्यर्थे वा B
६ 'सांहितकं दीर्घं' इत्येव C
७ 'कं' इत्यधिक एव भाति। 'तं' इति वा स्यात्।
८ समा C. 'समास' इत्येव B.
९ स्तुते B.
१० शंसयतः B. C.
११ [ऋ० १।३७।१] 'क्री॰ वः' इत्येव प्रतीकः B. 'क्रिभुं वः' C.
१२ अत्र कश्चन पाठस्त्रुटितः। कदाचिदत्र 'प्रत्याह' इति पाठो भवेत्।
१३ कि इन स्वभा C.
१४ अभिप्राय B. अभिप्रायक C.

राजा वृत्रं जङ्घनत् प्रागपागु-
दगथा यजाते वर आ पृथिव्याः[1] ॥

विश्वामित्रस्य। पुत्रान् पौत्रांश्चाह। **उप प्र इत** उपस्थाय प्रकर्षेण इत गच्छत। कौशिका[2] मम[3] पितामहस्य कुशिकस्यापत्यभूता यदीयाः[4] पुत्राः पौत्राश्च। अथवा क्रोशतेः शब्दकर्मणः कुशिका ऋत्विजः। **चेतयध्वं** मा विक्षिप्तचेतसो[5] भवत। उप प्रगम्य चाश्वं[6] **राये** अश्वमेधफललक्षणाय धनाय **प्रमुञ्चत** उत्सृजतेत्यर्थः। 'संवत्सरायोत्सृजन्ति'[7] इति श्रुतेः। **सुदासः** सुदा इत्येवं नामकस्य कल्याणदानस्य वा राज्ञः स्वभूतं **राजा** ह्ययं यस्माद् **वृत्रं** शत्रून्[8] **जंघनत्** अत्यर्थं[9] हतवान्। **प्राक्** प्राच्यां दिशि **अपाक्**[10] प्रतीच्यां दिशि **उदक्** उदीच्यां च सर्वासु दिक्षु शत्रुनिकायं हतवानित्यर्थः। **अथेति** हेतौ। एतस्मात् कारणात् **यजाते** अश्वमेधेन[11] यजते। **वरे** श्रेष्ठे स्थाने। **आ** यजिना सम्बध्यते। पदपूरणो वा। **पृथिव्याः**।

अथाध्यात्मिक्य उत्तमपुरुषयोगा
अहमिति चैतेन सर्वनाम्ना[12]।

**अथा**नन्तरमध्यात्मविषया ऋचो वक्ष्यन्त इति शेषः। **उत्तमे**त्यादि, उत्तमत्रिकेण योगो यासाम्। **अहमिति चैतेन सर्वनाम्ना** इत्युक्तार्थम्। **यथैतद्**[13] वक्ष्यमाणं सूक्तद्वयमप्युदाहरणम्। तस्य त्वेकैकामृचमाद्यां

---

१ [ऋ० ३।५३।११] उप प्रेत कुशिकाश्चेतयध्वम्' इति B 'उप प्रेत' इत्येव C.
२ काशिकाः C. 'कुशिका' इति सम्यक्पाठः।
३ यम B.
४ 'तदीयाः' इति पाठः सम्यक्
५ चेत सूत C.
६ चाश्वः B. C.
७ [अनुपलब्धमूलमिदं वाक्यम्]
८ अत्र 'शत्रुं' इत्येकवचनान्तः पाठो युक्तो भवेत्।
९ त्यर्थहेत C.
१० अवाक् B. अपात् C.
११ 'न' इति त्रुटितम् C.
१२ 'अथाध्यात्मिक्यः' इत्येव प्रतीकः C.
१३ 'तद्' इति द्विर्लिखितम् C.

व्याचक्ष्महे । यथैतदिन्द्रो वैकुण्ठो लबसूक्तं वागाम्भृणीयमिति[१] इन्द्रो वैकुण्ठ इत्येतेन[२]—अहं भुवमिति सूक्तं लक्ष्यते । कथम् । द्रष्टृदृश्ययोरभेदात् । द्रष्टा दृष्टश्च[३] निर्दिश्यते । विकुण्ठनामा[४] [५]काचिदिन्द्रादधिकबलं सुतमन्वेषमाणा उग्रेण तपसा ब्रह्माणमाराध्य तस्माल्लब्धवरा कृतमङ्गलस्वस्त्ययना भर्त्रा संबभूव । विदित्वैतद्वृत्तान्तं चेन्द्रस्तस्याः स्वयमेवापत्यतां जगाम । तस्येदं वैकुण्ठस्य[६] ब्रह्म[७] प्रादुरासीत् । स[८] एते सहिमानमासीत् ।

अहं भुवं वसुनः पूर्व्यस्पति-
रहं धनानि सं जयामि शश्वतः ।
मां हवन्ते पितरं न जन्तवो-
ऽहं दाशुषे वि भजामि भोजनम्[९] ॥

छान्दसत्वादडभावो[१०] ह्रस्वत्वं च । अभूवमित्यर्थः । वसुनो धनस्य पूर्व्यः पूर्वः पुराण एव पतिः स्वामी । अहं धनानि संजयामि सम्यग्जयामि । शश्वतः[११] शश्वदिति बहुनाम ततः षष्ठी बहोः[१२] शत्रोः स्वभूतानि । मामेवार्ताः सन्तः प्राणिनो हवन्ते[१३] आह्वयन्ति । पितरं न पितरमिव जन्तवो मनुष्याः । अहं दाशुषे[१४] अहमेव हवींषि दत्तवते यजमानाय सर्वस्मै विभजामि भागशो ददामि भोजनं धनम् ।

लबसूक्तम्[१५] । लबरूप[१६] इन्द्रस्तस्मात् त्वयाल्पेन[१७] सता बहुसोमः पीत[१८] इत्यृषिभिरुक्तः सन् तान्प्रत्याह—

---

१ 'यथैतत्' इत्यारभ्य अयं पाठो B. पुस्तक एव । [निरु० ३।१]

२ इत्यनेन C.

३ दष्टा दष्टश्च C. अयं पाठः सन्दिग्धः । 'द्रष्टा दृश्यश्च' इति स्यात्

४ विकुण्ठमाना B.

५ 'काचि' इति त्रुटितम् B. C.

६ 'वैकुण्ठस्य' इत्यारभ्य भूयान् पाठस्त्रुटितः C.

७ ब्रह्मा B.

८ अयं सन्दिग्धः पाठः । कदाचिदत्र 'स एतेन महिमानमतिष्ठो' इति पाठः स्यात् ।

९ [ऋ० १०।४८।१] 'अहं भुवं' इत्येव प्रतीकः B. अस्य मन्त्रस्य सर्वमपि व्याख्यानं त्रुटितम् C.

१० दसभावो B.

११ शश्वत् B.

१२ बह्वोः शश्वोः B.

१३ मामेवात्तस्सन्तः स्तृणानो भवन्ते B.

१४ अहनाशुषे B.

१५ लम्बनसूक्तम् B.

१६ बलरूप B.

१७ तयाल्पेन B.

१८ पित B.

इति वा इति मे मनो
गामश्वं सनुयामिति ।
कुवित् सोमस्यापामिति[१] ॥

एवमर्थे[२] चैवार्थे । परस्य च इतेः परो द्रष्टव्यः । एवमेव[३] च मे मम मनः[४] । गामश्वं च सनुयां दद्यामस्मै[५] यजमानाय । कुवित् बहु सोमस्याहमपां पीतवानिति । इतिशब्दो हेतौ । अस्माद्धेतोः प्रत्युपकारकरणादित्यभिप्रायः ।

वागाम्भृणीयं सूक्तम् । वाक् वैदिकीयम् । आम्भृणस्य[६] महतः फलस्य हेतुभूतेति [७]तत्सम्बन्धिन्याम्भृणी च सा वागाम्भृणी चेति विशेषणसमासः । वागाम्भृणीसम्बन्धि वागाम्भृणीयम् ।

अहं रुद्रेभिर्वसुभिश्चरा-
म्यहमादित्यैरुत विश्वदेवैः ।
अहं मित्रावरुणोभा बिभ-
र्म्यहमिन्द्राग्नी अहमश्विनोभा[८] ॥

वागाम्भृणी[९] आत्मनो महिमानमाचष्टे[१०] । असत्यां सम्बन्धिभूतायामपि रुद्रादयश्चरन्तः कथं भवेरन् मूकास्तिष्ठेयुरित्येवमर्थं स्तुतिभूता वा तेषाम् । अहं रुद्रेभी रुद्रैर्वसुभिश्च सह चरामि । अहमादित्यैरुत विश्वदेवैः अपि सर्वदेवैः । अहमेव मित्रावरुणौ[११] हविस्सम्प्रदानं कुर्वन्तौ

---

१ [ऋ० १०।११९।१] अस्य मन्त्रस्य सर्वमपि व्याख्यानं त्रुटितम् C.
२ 'इति एवमर्थे' इति युक्तः स्यात् ।
३ एवमेवं च B.
४ 'न' इत्येव B.
५ दद्याः अस्मै B.
६ आमन्त्रणस्य B.
७ 'तत्सम्बन्धिन्यां अणीवसा वां अणीत्येति विशेषणसमासो वागांभ्रणीसम्बन्धि वागांभ्रिणीयं' इत्यादर्शपुस्तकपाठः ।
८ [ऋ०१०।१२५।१] 'अहं रुद्रेभिः' इत्येव प्रतीकः B. अस्य मन्त्रस्य 'अहमादित्यैरुत विश्वदे' इत्यन्तं व्याख्यानं त्रुटितम् C.
९ 'वा' इति त्रुटितं 'गां अणी' इत्येव पाठः B.
१० मानमाचक्षते B.
११ वरुण हविस्सम्प्रदानं कुर्वति उभा B,

उभा उभावपि बिभर्मि पुष्णामि । अहमेव इन्द्राग्नी[१] । अहमेवाश्विनौ उभा उभौ । सर्वत्राकारो द्विवचनस्य स्थाने ।

[ इति द्वादशस्या-(सप्तमस्या-) ध्यायस्य द्वितीयः खण्डः । ][२]

---

## [अथ तृतीयः खण्डः][२]

परोक्षकृताः प्रत्यक्षकृताश्च मन्त्रा भूयिष्ठाः ।
अल्पश आध्यात्मिकाः[३] ।

**परोक्षकृता** इत्यादि । मन्त्रस्वभावप्रदर्शनपरं भाष्यम् । ऋचि प्रकृतायां मन्त्रा इति मन्त्रवचनं यजुराद्युपसंग्रहार्थम् । **भूयिष्ठा** अतिशयेन बहवः । **अल्पशः** क्वचित् क्वचिदाध्यात्मिकाः प्रत्युक्तविषयत्वेन ये के अभिप्रेताः ।

स्तुत्याशिषोरन्यतरदर्शनेनान्यथापि मन्त्रप्रवृत्तिं दर्शयितुमाह—

अथापि स्तुतिरेव भवति नाशीर्वादः[४] ।
इन्द्रस्य नु वीर्याणि प्र वोचं
यानि चकार प्रथमानि वज्री ।
अहन्नहिमन्वपस्ततर्द प्र
वक्षणा अभिनत् पर्वतानाम्[५] ॥

इन्द्रस्य नु वीर्याणीति व्याख्यातो[६] मन्त्रः ।

अथाप्याशीरेव न स्तुतिः[७] ।

आशीरेव न स्तुतिः । आशीरेवेत्यस्यैवावधारणार्थं[८] कथनं न स्तुतिरिति । उदाहरणम्—

सुचक्षा अहमक्षीभ्यां भूयासं
सुवर्चा मुखेन सुश्रुत्कर्णाभ्यां भूयासमिति[९] ।

---

१ 'इन्द्राग्नी' इति त्रुटितम् B.
२ आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।
३ इदं मूलवाक्यं नास्ति C.
४ इदं मूलवाक्यं नास्ति C.
५ [ ऋ० १।३२।१ ]
६ [ नि० ७।२ ]
७ इदं मूलवाक्यं नास्ति C
८ ०णार्थं कल्प न B. ०णार्थं कथ न C
९ [ मान० गृ० १।१।२५] इदं मूलवाक्यं नास्ति C

सुचक्षा अहं शोभनस्य तपस्य[1] द्रष्टा अहमक्षीभ्यां भूयासमित्याशिषि लुङ्। सुवर्चा मुखेन वर्चस्वीत्यर्थः। सुश्रुत् शोभनस्यैव शब्दस्य श्रोता कर्णाभ्यां भूयासमित्यनुषङ्गः।

[ तदेतद् बहुलमाध्वर्यवे याज्ञेषु च मन्त्रेषु[2] ]

तदेतदाशीः प्रायस्त्वं बाहुल्येनाध्वर्युवेदे याज्ञेषु च करणमन्त्रेषु। अन्यस्मिन्नविच्छेदे। 'तच्चक्षुरिदमाप[3]' इत्याद्यनेकमुदाहरणम्। अन्यतरसद्भावेऽपि च स्तुत्याशिषोरन्यतरदध्याहर्तव्यम्। साकाङ्क्षत्वादेकवाक्यतायै।

[ अथापि शपथाभिशापौ[4] ]

अथापि अपि च शपथाभिशापौ। एकमेवोदाहरणम्—

अद्या मुरीय यदि यातुधानो अस्मि
यदि वायुस्ततप पूरुषस्य।
अधा स वीरैर्दशभिर्वि यूया
यो मा मोघं यातुधानेत्याह[5]॥

विश्वामित्रप्रयुक्तैः कैश्चिद् राक्ष[6]सस्त्वमित्यभिप्रयुक्तो[7] वसिष्ठ आह। अद्या[8] मुरीय सांहितिकं दीर्घत्वम्। अद्याहं मुरीय म्रियै यदि यातुधानो राक्षसोऽस्मि भवामि। यदि वा आयुर्जीवितलक्षणं ततप[9] तपिरत्र विनाशोपलक्षणार्थः[10]। विनाशितवान् अपहृतवानित्यर्थः। पूरुषस्य[11] पुरुषस्य कस्यचित्। अधा[12] अथ एतदलीकम्[13]। ततः स वीरैः पुत्रैर्दशभिर्वियूया मध्यमः प्रथमस्य स्थाने यौतिर्मिश्रणार्थः। विदगमेऽपि[14]......मि...

---

1 अयं पाठः संदिग्धः। 'तपसा' इति स्यात्।
2 इदं मूलवाक्यं नास्ति। B.C.
3 [ Cf. का० सं० ३१।४ ]
4 इदं मूलवाक्यं नास्ति। B.C.
5 [ ऋ० ७।१०४।१५ ] 'अद्या मुरीय यदि यातुधानो अस्मि'B. 'अद्या मुरीय' इत्येव C
6 राक्षसीस्त्व B.C.
7 प्रयुक्तौ B.C.
8 आद्या मु B.
9 ते तवप B. ततव C.
10 क्षणार्थम् B.
11 पुरुषस्य B. C.
12 'अधा' नास्ति B. अथ C.
13 दलिकम् C.
14 गमेवि C. अयं पाठः सन्दिग्धस्त्रुटितश्च

पृथग्भवेद् वियुज्येतेत्यर्थः। यो मा[१] मां मोघं वृथैव[२] यातुधानेति राक्षसेत्येवमाह। पूर्वार्धेन शपथः। उत्तरार्धेनाभिशापः।

अथापि कस्यचिद् भावस्य वस्तुतः पदार्थस्यात्यन्तपरोक्षस्याख्यातुमिच्छा।

न मृत्युरासीदमृतं न तर्हि
न राज्या अह्न आसीत् प्रकेतः।
आनीदवातं स्वधया तदेकं
तस्माद्धान्यन्न परः किंचनास[३]॥

प्रजापतेः परमेष्ठिनः परमर्षेः। अवान्तरप्रलयादूर्ध्वं[४] प्राग् जगत्सृष्टेर्वावस्था। तामियमृक् पराचष्टे। न मृत्युरादितः[५] मर्त्यानामभावान्मृत्योश्चाभावात्। प्रतिद्वन्द्विरूपत्वाच्चामृतस्य[६] अमृतं न अमृतमपि नैवासीत्। तर्हि तस्मिन् काले न राज्या नापि रात्रे अह्नः अह्नो वासीत् प्रकेतः प्रज्ञानमियं रात्रिरिदमहरिति। अथवा प्रकेतः प्रज्ञापयिता आदित्यः स ह्युदयास्तमयाभ्यां रात्र्यहनी विभजते। स नासीत्। आनीत् 'अन प्राणने[७]' इत्यस्यैव लुङि रूपम्। अजीवीत् केवलमित्यर्थः। अवातं[८] शरीरस्याभावात् मुखनासिकाभावे ताभ्यां यो नाभिप्रदेशात् प्रयत्नः प्रेरितो नुगच्छति तद्रहितम्। एतदुक्तं भवति। अलौकिकमेतत् प्राणनं यतः स्वधयान्नेन तत्रैव शक्त्यात्मना लीनेन प्रणीतयन्[९] स्मितवदित्यर्थः। तदेकं कारणमात्माख्यम्। ह: पादपूरणः। अन्यन्न परं पदं किञ्चन किञ्चित् आस बभूवेत्यर्थः।

तम आसीत् तमसा गूळ्हमग्रे-
ऽप्रकेतं सलिलं सर्वमा इदम्।

---

१ यद्पाया B. यद्पामां C.
२ वृथैव B. पृथैव C.
३ [ ऋ १० । १२९ । २ ] 'न मृत्युरासीत्' इत्येव प्रतीकः B.C.
४ अपान्तर प्रह्रयादूर्ध्वं C.
५ 'रासीत्' इति पाठोऽत्र कदाचित् स्यात्।
६ ०द्वन्द्वीरूप सत्वा C
७ [ धा० २।६०॥४।६६ ]
८ अवात B. C.
९ प्रणीतयत् C. सन्दिग्धमिदं पदम्। 'प्राणयन् स्थितवदित्यर्थः।' अयमत्र युक्तः पाठः।

तुच्छ्येनाभ्वपिहितं यदासीत्
तपसस्तन्महिनाजायतैकम्[१] ॥

**तमः** सादृश्याज्जगत्कारणमाह । किं सादृश्यम् । यथा तमसि मन्दा घटादयः सन्तोऽपि नोपलभ्यन्ते एवमस्मिन् विकाराः[२] । अतस्तम इव तमः । अनभिव्यक्तविशेषणं[३] जगतः कारणं **तदासीत्**[४] । तेन **तमसा**[५] **गूढं** संवृतम**ग्रे** प्राक् पुरस्सृष्टेः[६] । **अप्रकेतं** अप्रज्ञातम् । **सलिलं** सति सत्तालक्षणे कारणात्मनि[७] शक्त्यात्मना लीनम् । सर्वेवतद्रूपं सरिरं सलिलं सरणशीलमित्यर्थः । **सर्वं** विकाररूपम् । **आः** अस्ते[८]रेतद्रूपं 'बहुलं छन्दसि[९]' इतीडभावः । आसीदित्यर्थः । **इदं** यदिदानीमुपलभ्यते **तुच्छेन** स्वल्पेन सूक्ष्मेण । आभुरित्येतदपठितमपि[१०] पदान्तरसम्बन्धसामर्थ्यान्महन्नाम[११] । महत् स्थूलं सर्वमेव विकारजातम् । **अपिहि** आपिहितं स्थगितं **यत्तदानीमासीत् । तपसः** तपो व्रतोपवासादिसाधनो धर्मविशेषः । तेनात्र धर्मसामान्यं लक्ष्यते । तेन यथा सर्वोपभोगहेतुत्वाविशेषादधर्मोऽपि । तेनैतदुक्तं[१२] भवति । अतीतसृष्टिकृतधर्माधर्मयो**स्तन्महिम्ना** माहात्म्येन कालान्तरावस्थायिना फलप्रसवसामर्थ्येनेत्यर्थः । **अजायत** जातं स्वेन विश्वरूपेण विकारात्मना कार्यरूपेण परिणतमित्यर्थः । **एकं** सत् प्राक्परिणामात् कारणात्मना एकतामापन्नं[१३] सदित्यर्थः[१४] ।

अथवा आभ्विति[१५] महन्नाम्ना महदाख्यं प्रथमं बुद्धितत्वमुच्यते । यत् सांख्यैरहङ्काराणां तन्मात्राणां च कारणत्वेन प्रतिज्ञायते तदेकमजायत नान्यत् किञ्चित् । तमश्चास्मिन् पक्षे [१६]प्रकृत्यव्यक्तादिपर्यायं प्रधानमुच्यते ।

---

१ [ऋ०१०।१२९।३] 'तम आसीत्' इत्येव प्रतीकः B. C.
२ विकारः अतस्मत इव C.
३ 'न' इति त्रुटितम् C.
४ ददासीत् C.
५ 'सा' इति त्रुटितम् C.
६ पुरुस्सृष्टेः C.
७ कारणात्मने C.
८ आस्तेरेत B.
९ [ पा०७।३।९७।
१० आहु इत्येत C. 'आभु' इति स्यात् ।
११ महानाम C.
१२ तेनैव तदुक्तं C.
१३ 'क' इति त्रुटितम् B.C.
१४ स्यादित्यर्थः B.
१५ आह्निति C.
१६ प्रकृत्या व्यक्ता B.

[ अथापि परिदेवना कस्माच्चिद्भावात्[१] ]

अथापीत्यादि। परिदेवना अनुकूलशब्दादिविषयोपभोगभ्रंशहेतुकमात्मनिन्दादि च विलपितं[२] यत्र। आह कस्माच्चिद्[३] भावात्। अर्थवादार्थात्[४] कारणमित्यर्थः। उदाहरणम्—

सुदेवो अद्य प्रपतेदनावृत्
परावतं परमां गन्तवा उ।
अधा शयीत निर्ऋतेरुपस्थे-
ऽधैनं वृका रभसासो अद्युः[५] ॥

उर्वश्या वियुक्तस्य पुरूरवसः परिदेवनैषा। शोभना अनुग्राहका देवा यस्य सुदेवः। कः पुनरसौ। योऽन्यभृगुश्रृङ्गात् कर्मारितगाद्वा[६] प्रपतेत्[७]। अनावृत् अनावर्तिना अचेतसाऽनिश्चितमना इत्यर्थः। परावतं परावच्छब्दो[८] दूरवचनः स्त्रीलिङ्गः। परमां प्रकृष्टामत्यन्तदूर इत्यर्थः। गन्तवै गन्तुम्। अत्तुमित्यभिप्रायः। अथानन्तरं च मृतः[९] सन् शयीत दीर्घनिद्रालुठित आसीतेत्यभिप्रायः। क्व। निर्ऋतेः[१०] पृथिव्या उपस्थे अवयवभूते स्थाने। अथानन्तरं च एवं वृका रभसासो महन्नामैतत् महान्तो वेगवन्तो वा अद्युः भक्षयेयुः।

न वि जानामि यदि वेदमस्मि
निण्यः संनद्धो मनसा चरामि।
यदा मागन्प्रथमजा ऋतस्या-
दिद्वाचो अश्नुवे भागमस्याः[११] ॥

---

१ इदं मूलवाक्यं नास्ति B. C.
२ द्विलपितं C.
३ तस्माच्चिच भावात् C.
४ अत्रायं सन्दिग्धः पाठः।
५ [ ऋ०१०।६५।१४] 'सुदेवो अद्य' इत्येव प्रतीकः B. सुदेवा अन्य C.
६ अयं पाठः सन्दिग्धः।
७ प्रदेवतेत् C.
८ पापच्छब्दो B. C.
९ कृतः सन् B.
१० निरुतेः C.
११ [ ऋ० १।१६४।३७ ] 'न वि जानामि' इत्येव प्रतीकः B. C.

संसारे परिवर्तमानस्य गर्भवासजन्मजराव्याधिमरणदुःखाभिभवनिमित्तस्यानुज्ञानाभावमोक्षं[1] प्राप्नवतो दीर्घतमसः परिदेवना[2]। **नाहं विजानामि यदि वा इदं** शरीरमात्रकमेवास्मि नातो व्यतिरिक्तः। यदि वेति विकल्पश्रुतेः। यदि वा अतो व्यतिरिक्त इति शेषः। अथवा इदमिति करणनिर्देशः। यदि वा विकाररूपम्। **निण्यः** अन्तर्हितः। **सन्नद्धो**ऽज्ञानेन सम्यग्बद्धः। अविद्यायोगिना **मनसा चरामीव**[3] चरामि संसारे। **यदा** यस्मिन् काले **मा** माम्। **आगन्**[4] आगमिष्यति ममोत्पद्यत इत्यर्थः। **प्रथमजा**[5] तत्त्वोत्पत्तौ प्रथमजातत्वात् प्रथमजा बुद्धिः सा ऋतस्य सत्यस्य सर्वत्र वा[6] गतस्यागतस्यात्मनः। षष्ठीश्रुतेः सम्बन्धिनी ग्रहीतृ इत्यर्थः। **आत् इत्**[7] पदपूरणः। यदेति श्रुतेस्तदेत्यध्याहार्यम्। तदा **वाचो** ऋग्यजुस्सामलक्षणाया **अस्या** उपनिषल्लक्षणं **भागं** भजतीयं परमात्मनः। **अश्नुवे** प्राप्स्यामि मोक्षं वा यास्यामीत्यभिप्रायः।

एवमुपाध्यायेन यदिवेति तुल्यायां संहितायां यदीति इकारान्तं वेति च इत्येवं रूपद्वयमपोद्धृत्य[8] व्याख्यातम्। तत्रेदं युक्तमासीत् वक्तुः[9]। यश्चेति[10] इव चेति चकार[11] शाकल्य इति। तत्रायमभिप्रायः[12] शाकल्यस्य इति। इवशब्दो वाशब्दार्थे यच्छब्दो यद्यर्थे। अर्थे स एव।

**अथापि निन्दाप्रशंसे।**

उदाहरणम्—

**मोघमन्नं विन्दते अप्रचेताः**
**सत्यं ब्रवीमि वध इत्स तस्य।**

---

१ मोक्षप्राप्त C. 'मोक्षमप्राप्त' इति पाठः स्यात्।
२ परिदेवानाहं C. परिदेवनामहम् B
३ चरमि न B. 'चरामीव' इत्यधिक एव पाठो भाति।
४ आगमन् B. C.
५ प्रथमजाम् B. C.
६ सर्वत्रावगतस्या B.
७ इति पद C.
८ रूपं द्वय B. रूपद्वय C.
९ अत्र 'वक्तुम्' इति युक्तं स्यात्।
१० यश्चति B. येच्चेति C.
११ चकारः B. C.
१२ प्रायं शाकल्य इति B. C.

नार्यमणं पुष्यति नो सखायं
केवलाघो भवति केवलादी[१] ॥

भिक्षुर्नामाङ्गिरसस्तस्यार्षम्। मोघं व्यर्थम्। अन्नं विन्दते लभते। अप्रचेता अभू[२]इत्यर्थः। सत्यमविपरीतं ब्रवीमि। वध इत् एवार्थे वध एव सोऽन्नलाभः। तस्य तस्येति श्रुतेर्यच्छब्दोऽध्याहार्यः। यो नार्यमणं अर्यमा तत्प्रकाराणां[३] वैश्वदेवे चोदितानामुपलक्षणार्थम्[४]। अर्यमप्रकारं देवं पुष्यति नो नापि सखायं समानाख्यानं मनुष्यं यो देवताभ्यो नाप्यतिथिभ्यो ददातीत्यर्थः। केवलाघः[४] केवलपापो भवति केवलादी केवलभोजी।

प्रशंसायामुदाहरणम्—

भोजायाश्वं सं मृजन्त्याशुं
भोजायास्ते कन्या ३ शुम्भमाना।
भोजस्येदं पुष्करिणीव वेश्म
परिष्कृतं देवमानेव चित्रम्[५] ॥

प्रजापतेर्दुहिता दक्षिणा नाम तस्या आर्षम्। दानप्रशंसैषा। भोजाय भोजो दाता तस्मै। अश्वं परिचारकाः संमृजन्ति उद्वर्तयन्ति। आशु[६] शीघ्रम्। भोजायास्ते कन्या कन्यात्वेनात्र सन्निकर्षादभिनवं यौवनं लक्ष्यते[७]। अभिनवयौवना स्त्री शरीरावयवसन्निवेशाशेषशोभया वस्त्रालंकारशोभया च[८] शुम्भमाना शोभमानेत्यर्थः। भोजस्यैवेदं पुष्करिणीव विचित्रहंससारसानुयातं हृदयाह्लादजननं हृदय[९]वेश्म गृहं [१०]परिष्कृतमधोवलम्बितवितानांशुककुसुमस्तबकादिना विभूषितम्। देवमानेव प्रथमैकवचनस्य

---

१ [ऋ० १०।११७।६] 'मोघमन्नं' इत्येव प्रतीकः B. C. 'मोघं' इति द्विर्लिखितम् B. C.

२ सन्दिग्धमिदं पदम्। अत्र कदाचित् 'अज्ञः' इति पाठो भवेत्।

३ 'ण' इति त्रुटितम् C.

४ केवलान्यं केवलपाप एव भवति C.

५ [ऋ० १०।१०७।१०] 'भोजायाश्वं' इत्येव प्रतीकः B. C

६ आशु B. C.

७ यौवने लक्ष्य C,

८ प C.

९ अत्र 'हृदय' इत्यधिकमेव भाति।

१० ष्कृत अधो B. C.

स्थाने 'सुपां सुलुक्[1]' इत्याकारः। देवमानमिव चित्रं मनोहरं कुट्टिमचित्रकर्मादिना विचित्रम्।

एवमेवाक्षसूक्ते 'प्रावेपाम्[2]' इत्येतस्मिन् द्यूतनिन्दा[3] कृषेश्च प्रशंसा यस्मिन् मन्त्रे तमुदाहरिष्यामः।

अक्षैर्मा दीव्यः कृषिमित् कृषस्व
वित्ते रमस्व बहु मन्यमानः।
तत्र गावः कितव तत्र जाया
तन्मे वि चष्टे सवितायमर्यः[4] ॥

कवलस्यार्षम्। मौजवतोऽक्षस्य[5]। अक्षैर्मा दीव्यः दैवीः[6] मा स्था इत्यर्थः। कृषिमित् इदेवार्थे कृषिमेव कृषस्व[7] कर्षणं कुर्वित्यर्थः। वित्ते स्व एव धने रमस्व तदेव बहु मन्यमानः। न किञ्चित् परवित्तेन द्यूतोपार्जितेन। यस्मात् तत्र तस्यां कृषौ गावः[8]। हे कितव तत्रैव जाया[9] कृषिं कुर्वतो गावो भार्या च भवतीत्यर्थः। तथा च वसिष्ठः 'लाङ्गलमसीः[10]' इति मन्त्रं व्याकरोत्। 'तदुद्वपति गां[11]' चापि वेत्यादिना। तन्मे मह्यं वि चष्टे विविधमाचष्टे सवितायमर्यः[12] ईश्वरः।

मन्त्रवैचित्र्यप्रसङ्गमुपसंहरन्नाह—[13]

[एवमुच्चावचैरभिप्रायैर्ऋषीणां मन्त्रदृष्टयो भवन्ति[14]।]

---

१ [पा० ७।१।३९]
२ [ऋ० १०।३४] प्रावेपामि B
३ ण्यूतन्निन्दा B. तस्मिण्यूतन्निन्दा C.
४ [ऋ० १०।३४।१३] 'अक्षैर्मा दीव्यः' इत्येव प्रतीकः B. C.
५ वतोवाक्षस्य C. 'मूजवतो वाक्षस्य' इति पाठोऽत्र युक्तः स्यात्।
६ अयं सन्दिग्धः पाठः। अत्र कश्चन पाठस्त्रुटितः।
७ 'स्व' इति द्विर्लिखितम् B.
८ भावः C.
९ जाला C.
१० [अनुपलब्धमूलमिदं वचनम्]
११ [वा० सं० १२।७१] गां चा एव इत्या C.
१२ 'स' इति त्रुटितम् C.
१३ प्रसंगोपसंहर (ह B.) तजायाह B, C.
१४ इदं मूलवाक्यं नास्ति B. C

**एवमुच्चावचैर्बहुप्रकारैः** [1]कामक्रोधभयहर्षादिभिर्निमित्तैर्ऋषीणां **द्रष्टॄणां मन्त्रदृष्टयो** मन्त्रविषयाणि दर्शनानि भवन्ति। तदेतत् 'साक्षात्कृतधर्माणः[2]' इत्यत्र सप्रपञ्चं मन्त्रदर्शनं नित्यत्वाविरोधेन प्रदर्शितम्।

[ इति द्वादशस्या-( सप्तमस्या-) ध्यायस्य तृतीयः खण्डः ][3]

---

## [ अथ चतुर्थः खण्डः[3] ]

श्रूयमाणदेवतासंविज्ञानपदेषु मन्त्रेषु देवतालक्षणमुक्तम्। येषु कृतं नास्ति तदर्थमाह—

**[ तद्येऽनादिष्टदेवता मन्त्रास्तेषु देवतोपपरीक्षा[4] ]**

**तद्य** इत्यादि। तदित्युपन्यासार्थम्। अनादिष्टा अप्रदिष्टस्तुत्यदेवतालिङ्गा मन्त्रा यस्मिन् अग्निष्टोमादौ यज्ञे श्रुत्यादिविनियुक्ता अग्न्यादिदेवता एव विज्ञेयाः। तथा च वक्ष्यति 'प्रकरणश एव निर्वक्तव्याः' इति प्राकारणिकी[5] देवता कल्प्यत इति युक्तम्। प्रधानदेवताश्चोररीकृत्यैतदुच्यते।

**[ यद्देवतः स यज्ञो वा यज्ञाङ्गं वा तद्देवता भवन्ति[6] ]**

**यद्देवत** इति। 'ऐन्द्रं पयोऽमावास्यायाम्[7]' इति श्रूयते 'माहेन्द्रं वा' इति तच्छेषभूताः शाखाच्छेदनादिषु सान्नाय्यसंस्कारत्वेन विनियुक्ता इषेत्वादयस्तद्देवत्याः। तथा चैन्द्रवायवग्रहणादिसंस्कारा मन्त्रा इन्द्रवायुदेवत्या एव यज्ञाङ्गं 'पतीयमेमे[8]' इत्याद्याघारमन्त्राभिप्रायम्।

येषां यज्ञे विनियोगो नास्ति तेषु कथमित्याह—

**अथान्यत्र यज्ञात् [ प्राजापत्या इति याज्ञिकाः[9] ]**

ननु अविनियुक्तो मन्त्रो नैवास्ति। वाचःस्तोमे हि सर्वा ऋचः प्रयुज्यन्ते इति ऋगादीनां[10] सर्वेषां प्रयोगः श्रूयते। उच्यते। प्रसिद्धप्रयोगज्योतिष्टोमादियज्ञाभिप्रायमेतत्। अथान्यत्र प्रसिद्धात् ज्योतिष्टोमा-

---

१ कामतोद्भय C.
२ [निरु० १।२०]
३ आदर्शपुस्तकेष्वत्र खण्डस्थ समाप्तेरारम्भस्य च निर्देशो न दृश्यते।
४ इदं मूलवाक्यं नास्ति B. C.
५ प्राकरिणिकी B, प्राकरणी C.
६ इदं मूलवाक्यं नास्ति B. C.
७ [अनुपलब्धमूलमिदं वचनम्]
८ अयं पाठः सन्दिग्धस्त्रुटितश्च
९ 'अथान्यत्र यज्ञात्' इत्येव प्रतीकः B. C.
१० ऋगादिमां C.

देयेज्ञादित्यर्थः । वाचःस्तोमा यज्ञात्[1] सन्नप्रयोगानादीयते । अपि च वाचस्स्तोमाश्विनविकृत्यादिषु विज्ञातदेवतालिङ्गानामपि प्रयोज्यदेवता[2] इत्यनेन विरोधः स्यात् । तस्माद् वाचस्स्तोमादीनामविवक्षा[3] युक्तेति । अथवा उपाकरणब्रह्मजपप्रायश्चित्तादिस्मृतिविनियोगाभिप्रायम् । अथान्यत्र यज्ञात् प्राजापत्या इति याज्ञिका मन्यन्ते । अतिरिक्तो वै प्रजापतिः । अज्ञातलिङ्गश्च मन्त्रोऽप्यनुक्त इति । अतो निरुक्तसामान्यात् प्राजापत्या भवितुमर्हन्ति ।

## नाराशंसा इति नैरुक्ताः ।

नाराशंसं च यज्ञ इति[4] कोऽर्थः । यज्ञश्च[5] विष्णुः 'यज्ञो वै विष्णुः[6]' इति संस्तवात् । अग्निरिति शाकपूणिः[7] । अग्निरिति भूयिष्ठभाग् देवतानाम् । 'अग्निः सर्वा देवताः[8]' संस्तुतेः[9] । तेनास्य[10] श्रेयस्त्वम् । उभयथापि नैरुक्तपक्षः ।

## [ अपि वा सा कामदेवता स्यात्[11] ]

अपि वा एतस्य मन्त्रस्य कामत इच्छातो या इष्टा देवता सा स्यात् । ऋगभिप्रायो[12] वा स्त्रीलिङ्गनिर्देशः । सा ऋग् यथेष्टदेवता स्यात् । एतदुक्तं भवति । गुणपदात्मकत्वादेवंविधस्य मन्त्रस्य ऐश्वर्याच्च देवतायां सर्वेषां गुणानां सर्वदेवतासाधारणत्वादविरोधे सति सम्भवाद् युक्तं यथेष्टदेवताकल्पनम् ।

## प्रायोदेवता वा ।

प्राय इति प्रकरणमभिप्रेतम् । प्रायिकी प्राकरणिकी[13] तस्य मन्त्रस्य देवता सा ऋक् । उक्तस्यार्थस्य[14] लोकेऽपि प्रसिद्धतां दर्शयति—

---

१ यस्तृन्
२ देवत C.
३ मपिवक्षा B. मपि वपक्षा C.
४ 'नाराशंसश्च यज्ञ इत्येकोऽर्थः' इति पाठोऽत्र समीचीनो भवेत् ।
५ श्च इव वि B. श्च श्व वि C.
६ [श० ब्रा० १ ।१।८।८॥१।१।२। १३॥३।२।१।३८॥ कौ० ४।२॥ १८।८, १४॥तां० ३।६।१०]
७ [निरु० ८।६]
८ [ऐ० ब्रा० २।३॥ तै० ब्रा० १। ४।४।१०]
९ संस्कृतेः C. 'इति संस्तुतेः' इति पाठो युक्तः स्यात् ।
१० तेनाश्रयस्त्वं B. तेनाश्रेयस्त्वम् C.
११ इदं मूलवाक्यं नास्ति B. C.
१२ ऋग्भिः प्रायो C.
१३ प्राकरिणीकी C.
१४ 'स्य' इति त्रुटितम् C,

[ अस्ति ह्याचारो बहुलं लोके देवदेवत्य-
मतिथिदेवत्यं पितृदेवत्यम्[१] ]

अस्ति हि हिशब्दो यस्मादर्थे। यस्मादस्त्ययमाचारो बहुलं बाहुल्येन लोके यथा, इदं देवेभ्य इदमतिथिभ्य इति निर्दिष्टे यदन्यदनिर्दिष्टं प्रकृतत्वात्तेषां न साधारणम्। एवमनिरुक्तो[२] मन्त्रो यद्दैवतप्राये मन्त्रगणे पठितस्तद्दैवत इति युक्तं प्राकरणिकत्वेन लोके दृष्टान्तः। अथा[३]विशेषेणानुद्दिश्य यदन्नं सिद्धं भवति तद्दैवत्य[४]मग्न्यादिहोमाद् भवति, तत्कालोपस्थितातिथिदेवत्यं तस्यां प्राणोद्यत्वाद् भवति, पितृदेवत्यं तत एव स्वधानिनयनाद्, बलिहरणाच्च भौतिकमपि[५]। एवं विशेषेणानुद्दिष्टदेवताको[६] मन्त्रोऽपि वैश्वदेवो भवितुमर्हतीति द्वितीयं व्याख्या[७] दृष्टान्तयोजना[८]।

अथैकस्मिन्ननेकविकल्पे देवताकल्पे कः स्थितः पक्ष इत्याह—

याज्ञदैवतो मन्त्र इति।

इतिरेवार्थे। याज्ञदैवत एवेत्यर्थः। यज्ञो[९] विष्णुः स चादित्यः। वक्ष्यति[१०] 'अथ यद्विषितः[११]' इति। तेनानादिष्टदेवता तर्हि तद्दैवतो मन्त्रः। अन्तर्हितस्य चादित्यः प्रकाशयितेति अत[१२] आदित्यदेवतः। यतो वक्ष्यति 'यच्च किञ्चित् प्रवहितमादित्यकर्मैव तत्[१३]' इति। देवता देवता यस्य स देवदैवतः। देवताशब्देनाग्निरुच्यते। तस्य सर्वदेवतासंस्तुतेः[१४]। आग्नेयो वेत्यर्थः। एवं सति नाराशंसा इति यः पुरस्तान्नैरुक्तपक्ष उक्तस्तस्मिन् देवावस्थापितमिति याज्ञदैवतो[१५] मन्त्र इति स्थितिरिति[१६] शेषः।

प्रसिद्धदेवतासंविज्ञानपदेषु गुणपदात्मकेषु च मन्त्रेषु देवतालक्षणमुक्तम्। अथेदानीं येषु गुणगुणिसम्बन्धावगमश्चास्ति। न च गुणिनो देवतारूपत्वेन प्रसिद्धिः। तेष्वपि देवतानिश्चिचयिषयाह[१७]—

१ इदं मूलवाक्यं नास्ति B. C.
२ एवं निरुक्तो B.
३ अथ विशेषे B.
४ तद्दैवत्य C.
५ भौतिकमपि C.
६ विशेषणानिर्दिष्टदेवताको C.
७ 'व्याख्याता' इति पाठः स्यात्।
८ 'न्त' इति त्रुटितम् B.
९ यज्ञं C.
१० न वक्ष्यति C.
११ [अनुपलब्धमूलमिदं वचनम्]
१२ अन्त आदि C.
१३ [निरु० ७।११] 'प्रवह्लित' इति मूले पाठः।
१४ संस्कृतेः B.
१५ याज्ञं दैवतो B. C.
१६ स्थितमिति C.
१७ निश्चयिषया C.

[ अपि ह्यदेवता देवतावत् स्तूयन्ते ।
यथाश्वप्रभृतीन्योषधिपर्यन्तानि[1] ]

अपि[2] हीत्यादि । अपिशब्दोऽथशब्दस्यार्थे । हिशब्दो यस्मादर्थे । अथ यस्माददेवता[3] देवतारूपत्वेन लोके वेदे वा प्रकरणे च हविषां न प्रसिद्धा[4] । अथ देवतावत् यथा[5] प्रसिद्धा[6] अग्न्यादिका देवता नामाङ्गद्रव्यसंयोगात् कर्मादिभिस्तद्वत् स्तूयते यथाश्वप्रभृतीनि चेतनावन्ति । अचेतनानि चाक्षादीन्योषधिपर्यन्तानि देवताधिकारे च समाम्नातानि ।

[ अथाप्यष्टौ द्वन्द्वानि[7] ]

अथशब्दस्तथाशब्दस्यार्थे । अपिशब्दश्चार्थे[8] । तथा चाष्टौ द्वन्द्वानि उलूखलमुसले इत्यादीनि स्तूयन्त इत्यनुषङ्गः ।

[ स न मन्येतागन्तूनिवार्थान् देवतानाम् ।
प्रत्यक्षदृश्यमेतद् भवति[9] ]

देवता चाणिमादिगुणा[10] स्तोतुर्यथाभिलषितार्थसम्पादनसमर्थेष्यते । अश्वादयश्चात्मनो विसंवादनेन[11] समर्थाः । किं पुनः परस्यापि वाश्वादयः[12] ससंज्ञाः । अक्षादिष्वेतदपि नास्ति । तस्मात् श्रूयमाणानामपि मन्त्रेषु अश्वग्रासादीनां गुणत्वेन स याज्ञिको नैरुक्तो वा[13] मन्त्रस्य देवतायाश्चिन्तक आगन्तूनिव । आगन्तुत्वेऽनित्यतामप्राधान्यं च दर्शयति । यथा पुरुषस्य गवाश्वरासभादय उपकरणभूता[14] अपायिन उपायिनश्च । एवमेव अर्थानश्वादीन् देवतानामनित्यानुपकरणभूतांश्च प्रतीत्य स्वतन्त्रा एतास्स्तुत्या देवता इति न मन्येत नावबुध्येत न श्रद्दधीतेति यावत् । अदेवता देवतावदित्यादि

---

१ अयं मूलपाठो नास्ति B. C.
२ अपिहित्यादि C.
३ यस्माद्देवता B.
४ प्रसिद्धाः C.
५ अथ B.
६ प्रसिद्ध अग्न्या C.
७ इदं मूलवाक्यं नास्ति B. C.
८ 'अपिशब्दश्चार्थे' अयं पाठस्त्रुटितः B.
९ अयं मूलपाठो नास्ति B, C.
१० गुणाः स्तो B.
११ विचोदिसम्पादनेन C.
१२ वपाश्वादयः B.
१३ 'वा' इति त्रुटितम् B.
१४ भूतः अपा C.

आगन्तूनिवेत्यादि च सर्वप्रत्यक्षदृश्यमेतद् भवति। अस्मिंल्लोके न शक्यं निह्नोतुम्। यथा चास्मिन्नेवं देवेष्वित्यतश्च[1] अश्वान्यनित्यसंयोगादिष्वप्यनाश्वासः।

एतदुक्तं भवति। अश्वाक्षादीनां वा प्रत्यक्षविरुद्धमभिलषितकामप्रदायित्वं कल्पयितव्यम्। अश्वादिवदेव अग्नीन्द्रादिदेवतानामदेवतात्वम्। उभयेषां मन्त्रेषु गुणगुणिसम्बन्धाविशेषात्।

केचित्त्वनादिष्टदेवता[2] मन्त्रा इत्यादिशेषतया अपि[3] ह्यदेवता इत्यादिकं ग्रन्थं वर्णयन्ति। अपिः[4] संभावनायाम्। [5]अतश्चरेष्वश्वादिषु तावता[6] कल्पनम्। किं पुनर्गुणपात्मकेषु[7] मन्त्रेषु यत्र विरोधोऽपि नास्तीति। अतो युक्तं तेषूक्तेन प्रकारेण देवताकल्पनं स[8] न मन्येतेत्ययुक्तम्। असति विरोधे देवताकल्पनम्। अश्वादीनां तु देवतारूपत्वेन विरोधात् स न मन्येतेत्यादि समानं पूर्वेण।

अस्य समाधिः—

**माहाभाग्याद्देवताया [एक आत्मा बहुधा स्तूयते।**
**एकस्यात्मनोऽन्ये देवाः प्रत्यङ्गानि भवन्ति[9]]**

भज्यतेऽसाविति भागः पुण्यानुभावः कश्चित्। महान् भागो यस्यासौ महाभागः। तद्भावो माहाभाग्यं तस्माद् धेतोः[10] पञ्चमी। [11]निरतिशयपुण्यानुभावादणिमादिलक्षणादैश्वर्यात्[12] कारणादित्यर्थः। अथवा भाग्यशब्दः पुण्यवचनः प्रसिद्धः। महान्ति भाग्यानि यस्येत्यादि[13] समानम्। कस्याः। **देवताया एक आत्मा बहुधा** वैश्वरूप्येण परिणतोऽग्न्यादिभावेनावस्थितः सन्नित्यर्थः। **स्तूयते** मन्त्रैः। एतस्मादेव[14] च कारणाद् महाभागलक्षणा-

---

१ देवेष्वप्यताश्च अश्चान्यनित्यसंयोगाद्वेष्वप्यनाश्चासः C. अयं पाठः सन्दिग्ध एव।

२ केचित्त (त C.) नादिषु देवता मन्त्रः B. C.

३ अविह्यदे B. C.

४ अविसंभावायाम् B. C.

५ अतिश्चरे B. C.

६ अत्र 'देवता' इति वा पाठो भवेत्।

७ अत्र 'गुण्यात्मकेषु' इति 'गुण गुण्यात्मकेषु' इति वा युक्तः पाठो भवेत्।

८ सह मन्ये B. C,

९ 'माहाभाग्याद्देवताया' इत्येव प्रतीकः B. C.

१० अत्र 'हेतौ पञ्चमी' इति युक्तः पाठः।

११ भिरतिशय B. C.

१२ नुभवा B.

१३ 'यस्य' इति त्रुटितम् C.

१४ एतस्मै देव C.

देकस्य देवतात्मनोऽन्ये देवाः प्रत्यङ्गानि भवन्ति। अङ्गान्येव प्रत्यङ्गानि अथवा अङ्गान्यपेक्ष्य प्रत्यङ्गम्। हस्तादीन्यङ्गम्, अङ्गुल्या[1]दीनि प्रत्यङ्गम्। अनेन वाङ्ग[2]प्रत्यङ्गभावा......रिक्तानि। एवमेकस्माद्देवतात्मनोऽन्ये देवा अव्यतिरिक्ता इत्यभिप्रायः। तथा च 'इन्द्रं मित्रं वरुणम्[3]' इत्यत्रैकमात्मानं बहुधा मेधाविनो वदन्तीत्यनन्यत्वं वक्ष्यति।

न च केवल[4]देवतात्मन एव माहाभाग्यादन्ये देवाः प्रत्यङ्गानि भवन्ति। किन्तर्हि—

[अपि च सत्त्वानां प्रकृतिभूमभिर्ऋषयः स्तुवन्तीत्याहुः[5]]

अपि च सत्त्वानामन्ये देवाः प्रत्यङ्गानि भवन्ति। यत्प्रकृतेर्देवतात्म-[6]भूताया ये भूमानस्तैर्भूमभिर्महत्त्वैरित्यर्थः। ऋषयो मन्त्राः 'द्यौस्ते पृष्ठम्[7]' इत्यादयः। मन्त्रदृशो वा स्तुवन्तीत्येवमाहुरन्येऽपि ब्रह्मवादिनः। अश्वः स्तूयते। द्यौरिति द्युस्थाना देवताः। ते तव पृष्ठं पृथिवी पृथिवीस्थाना सभास्थान-[8]मित्यादि।

किं पुनः कारणं प्रकृतिभूमभिरश्वभिरश्वादीनि[9] सत्त्वान्यृषयः स्तुवन्ति। उच्यते।

प्रकृतिसार्वनाम्न्याच्च[10]।

प्रकृतिर्देवतात्मानमत्रं नाम परिणाम इत्यर्थः। सर्वत्वेन कार्त्स्न्येन जगद्वैचित्र्यरूपेण नाम[11] सर्वनाम तद्भावः सार्वनाम्न्यं प्रकृतेः सार्वनाम्न्यं तस्मात्। एतदुक्तं भवति। माहाभाग्यं सार्वनाम्न्ये हेतुः। सार्वनाम्न्यं बहुधा स्तुतः[12]। तच्चैतत्[13] सार्वनाम्न्यं 'आत्मैवैषां रथः' इत्यादिना[14] स्पष्टं दर्शयिष्यति। सार्वनाम्न्याच्चेति च शब्दो [15]हेतुसमुच्चये उक्तेन

---

१ 'दी' इति त्रुटितम् C,

२ चांगप्रत्यङ्गभा...रिक्तानि C. अत्र कश्चन पाठस्त्रुटितः। अर्थानुसारी पुनः 'अनेन चाङ्गप्रत्यङ्गभावात्मना यथा हस्तादीन्यङ्गुल्यादीनि चाव्यतिरिक्तानि' इत्यानुपूर्वीकः पाठोऽत्र भवेत्।

३ [ ऋ० १।१६४।४६॥ ]

४ कंपल C.

५ अयं मूलपाठो नास्ति B. C.

६ देवात्मभूताया B.

७ [ मैत्रा० सं० २।७।१२ ]

८ सभस्थान C.

९ भूमिभिराश्वभि C. अयं सन्दिग्धः पाठः।

१० 'च' इति नास्ति B. मुद्रितपुस्तके 'सार्वनाम्याच्च इति पाठः।

११ नामः सर्वनामः B. C.

१२ अत्र 'स्तुतिः' इति स्यात्।

१३ तच्चेत् B.

१४ इत्यादीनां B. C.

१५ हेतुः समु B. C.

प्रकारेण न सम्भवति। अतः[1] समुच्चये द्रष्टव्यः प्रकृतिसार्वनाम्न्याद् बहुधा स्तुतिश्च।

देवताधर्मश्च वक्ष्यमाणः। कोऽसौ।

**इतरेतरजन्मानो [भवन्तीतरेतरप्रकृतयः। कर्मजन्मानः। आत्मजन्मानः[2]]**

किमुक्तम्—इतरेतरजन्मान इति। एतस्यैव व्याख्यानम्—इतरेतरप्रकृतयः परस्परप्रकृतयः। आदित्यादग्निः सायं जायते। अग्नेरप्यादित्यः[3] प्रातरिति। तथा अदितेर्दक्षो[4] दक्षाच्चादितिः। 'अदितिर्द्यौः[5]' इत्यादि च। सोऽयं देवधर्मः। तथा च वक्ष्यति[6] 'अपि वा देवधर्मेण[7]' इति। **कर्मजन्मानो** विशिष्टकर्मनिमित्तजन्मानः। एतदुक्तं भवति। यत्[8] पुरस्तान्माहाभाग्यमुक्तं देवताया न तदनैमित्तिकं[9] नाप्यन्यनिमित्तम्[10]। किं तर्हि। विशिष्टकर्मनिमित्तमेवेति। ननु मनुष्या अपि कर्मजन्मान एव। अतो विशिनष्टि। **आत्मजन्मानः** आत्मेच्छया[11] जन्म येषां त आत्मजन्मानः। एतदुक्तं भवति। ईदृशं तेषामत्यन्तविशिष्टं कर्म येन यस्मिन् काले यथादृशं[12] च कार्यकरणमिच्छन्ति तस्मिंस्तथा तादृशमेवोत्पद्यते योनावयोनौ च।

यतश्चैतदेवमतः—

**[आत्मैवैषां रथो भवति। आत्माश्वाः। आत्मायुधम्। आत्मेषवः। आत्मा सर्वं देवस्य[13]]**

आत्मैवैषां रथादि भवति। किं बहुना। योगैश्वर्यबलात् सर्वनामैव भवति देवस्य। यावान् कश्चित् देवस्य[14] सर्वस्येत्यभिप्रायः। ततोऽश्वग्रावादयो नादेवाः। नाप्यागन्तव[15] इति सिद्धम्।

अन्ये वर्णयन्ति। यथा एकस्मान्मृत्पिण्डाद् घटशरावादयः क्रियाभेदानुविधायिनो नानारूपा जायन्ते। एवमेकस्माद्देवतात्मनो[16]ऽधिकरणधर्मणो

---

१ हेतुः B. हेतु C.

२ 'इतरेतरजन्मानः' इत्येव प्रतीकः B. C.

३ अग्नेरित्यादित्यः B. C.

४ अदितिर्दक्षो B. C.

५ [ऋ० १। ८९। १०॥ निरु० ४। २३]

६ 'लक्ष्य' इत्येव B. C.

७ [निरु० ११।२३]

८ यः पुर B.

९ 'कं' इति त्रुटितम् B. C.

१० न्यन्निमि B. C.

११ आच्छया C.

१२ यथादर्शनं च B.

१३ अयं मूलपाठो नास्ति B. C.

१४ देवतास्य B. देवतस्य C.

१५ गन्तव्य B. C.

१६ तात्मना B. तात्मकिना C.

मृत्पिण्डस्थानीयादग्न्यादयोऽश्वादयश्च संकल्पलक्षणक्रियाभेदानुविधायिनः प्रसूयन्ते ।

यद्येकः कुम्भकारस्थानीयः क्रियाभेदहेतुः कश्चित् कारणात्मनोऽपि परः कल्पनीयः प्राप्नोतीत्याह—

**आत्मजन्मानः ।**

स्वात्मेच्छया प्रतिलब्धजन्मान इत्यर्थः । एतदुक्तं भवति । उक्तविशेषणो देवतात्मा माहाभाग्यात् प्रतिलब्धसर्वनाम्नो[1] विश्वरूपं विन्दतः कल्पानुविधानात् [2]तिरोधीयद्रानैकत्वं प्रादुर्भवद्भेदावस्थं[3] [4]भेदेतरेतरजन्मानः कर्मजन्मान आत्मजन्मानो देवा अश्वा इत्यादिभिरभेदेनाग्निरश्व इत्यादिभिः सर्वाभिधानैर्गीयन्त[5] इति पूर्वकर्मनिमित्तत्वमुक्तम् । अस्मिन् पुनर्व्याख्याने क्लेशकर्मविपाकाशयैरपरामृष्टः[6] पुरुषविशेषः कश्चिदीश्वरोऽभ्युपगत[7] इति भेदः । सोऽयं माहाभाग्यादित्यादिग्रन्थ आपादपरिसमाप्तेरध्यात्मविन्नैरुक्तयाज्ञिकपरिकल्पितेषु [8]देवतैकत्वनित्यवृत्यभिधानदेवताभेदपक्षेषु[9] त्रिष्वपि देवताया[10] माहाभाग्याभ्युपगमाद्योजयितुं[11] शक्यः । प्रायेण[12] तु व्याख्यातृभिरध्यात्मवित्पक्षेणैव[13] योजयितव्य इति ।

इति महेश्वरविरचिते निरुक्तविवरणसमुच्चये
द्वादशस्य [सप्तमस्याध्यायस्य[14]]
प्रथमः पादः समाप्तः[15] ।

---

१ सार्वनाम्नो C.
२ अयं पाठः सन्दिग्धः ।
३ प्रदुर्भवद्भेदावस्थः C.
४ हेदेतरे C.
५ नैर्मीयत B.
६ [पात० यो० १।२४] सूत्रस्यार्थतोऽनुवादः
७ 'भ्यु' इति त्रुटितम् C.
८ कत्व वत्य C.
९ 'भेद' इति नास्ति B.
१० दैवताया माहभा C.
११ ग्याद्युपगमद्योज B.
१२ 'ण' इति नास्त्यादर्शपुस्तकेषु ।
१३ भक्षेणैव B. भक्षेन्नैव C.
१४ अयं कोष्ठकान्तर्गतः पाठो नास्त्यादर्शपुस्तकेषु ।
१५ 'समाप्तः' इति नास्ति C.

# अथ द्वादशस्य [सप्तमस्याध्यायस्य[१]]

## द्वितीयः पादः ।

इह देवताविकल्पं प्रति त्रयो वादिनोऽध्यात्मविन्नैरुक्तयाज्ञिकाः[२] । तत्राध्यात्मविदामेकैव[३] देवता । तच्च दर्शनमुक्तं माहाभाग्यादेकस्यात्मन इति । याज्ञिकदर्शनमपि परस्ताद् वक्ष्यते । अपि वा पृथगेव स्युरित्यादिना । सम्प्रति स्वमतमुपन्यस्यति ।

[तिस्र एव देवता इति नैरुक्ताः[४]]

तिस्र एव देवता इत्यादि । एवशब्दोऽवधारणे । नैकधाप्यभिधानसम्मताः । किं तर्हि । तिस्रः । कुत एतत् । तिसृणां प्राधान्येन 'सूर्यो नो दिव-[५]स्पातु[६]' 'अग्निमेवास्माल्लोकादसृजत' इत्याद्यनेकत्र[७] लिङ्गप्रतिपादितस्थानत्र-[८]याभिसम्बन्धात् ।

कास्ताः । केन स्थानेन सम्बद्धा[९] इत्याह ।

**अग्निः पृथिवीस्थानो वायुर्वेन्द्रो वान्तरिक्षस्थानः सूर्यो द्युस्थानः । इति ।**

वायुर्वेन्द्रो वेति नायमिन्द्रवाय्वोः[१०] स्थानाधिकारो विकल्पेन[११] नापि समुच्चयेन त्रित्वविरोधात् । अन्तरिक्षस्थान इति चैकत्वनिर्देशात् । द्वे अन्तरिक्षस्थानावित्यवक्ष्यत्[१२] । तस्मादेकस्यैव[१३] देवतात्मनो मध्यमस्थानस्य पर्यायावेताविति निश्चयः । तथा च 'आसस्राणासः[१४]' इत्यत्रैकविषयतामभिधानद्वयस्य दर्शयिष्यति । सत्यपि तु पर्यायत्वे क्वचित्तु काचित् प्रसृततरा[१५]

---

१ अयं कोष्ठकान्तर्गतः पाठो नास्ति B. अयं सर्वोऽप्यध्यायपादारम्भात्मकः पाठो नास्ति C.
२ याज्ञकाः C.
३ तत्राध्यात्मवतामे B.
४ अयं मूलपाठो नास्ति B. C.
५ दिवप्सातु C.
६ [ ऋ० १०। १५८। १। ]
७ इत्यद्यने C.
८ स्थानं त्रयोभि B. C.
९ सम्बन्धा C.
१० मिन्द्रवायो वयो स्था C
११ विकलेन C.
१२ नादित्यवक्ष्यात् C.
१३ 'एकस्यैव' इति B. पुस्तके 'व' इत्येव
१४ [ ऋ० ६।३७।३ । निरु० १०।३ ]
१५ 'त' इति त्रुटितम् C.

भवति। इन्द्रशब्देनाभिधानं मध्यस्थानस्य प्रसिद्धतरत्वात्[१] । सुप्रसिद्धि[२]-मुररीकृत्य वक्ष्यति 'वायवा याहि दर्शत[३]' इत्यत्र 'कमन्यं[४] मध्यमादेवमवक्ष्यत्' इति। तुल्यायां हि प्रसिद्धौ कमन्यमित्याशङ्का नोपपद्यते। यथा चेन्द्रशब्देन मध्यमस्थानस्य सम्बन्धो मुख्यः। एवमग्निसूर्यशब्दाभ्यां पृथिवीद्युस्थानयोः।

यद्येवमग्निशब्दवदिन्द्रसूर्यशब्दयोरपि प्रथमसमाम्नानं[५] युक्तं मुख्यत्वात्। सत्यमेवम्। तथापि तु इन्द्रस्य रसानुप्रदानलक्षणं[६] कर्म प्रधानम्। तच्चासौ वायुरूपेण कर्मात्मना साधयतीति वायुशब्दस्यैव[७] प्रथमः पाठः। वायुनैवावृता आन्तरिक्ष्य आपः। वरुणः स एव। स्तनयित्नुलक्षणात् शब्दनाद् रुद्रः। तस्मात्तेनैव कर्मक्रमेण वृष्टिं साधयति। तेनैव तदवस्थाभिधायिनामभिधानमाम्नानं युक्तम्। तथा सूर्यस्य प्रधानकर्म प्रविहितं[८] प्रकाशनम्। तच्चोर्ध्वमर्धरात्रात्[९] क्रियात्मना भवतीति। सूर्य एव प्रकाशनकर्मा अश्विशब्दवाच्यः। तथा स्फुटतरप्रकाशावस्थः स एवोषा सूर्या वृषाकपायीत्यादिशब्दवाच्यो भवति। अतस्तेनैव क्रमेणाभिधीयत इति[१०] युक्तम्।

यदि तिस्र एव देवताः किमग्न्यादिसाहचर्येण जातवेदोवरुणाश्विप्रभृतीनां समाम्नानम्। उच्यते। **तासां माहाभाग्यादेकैकस्या अपि बहूनि नामधेयानि भवन्ति।** तासां **माहाभाग्यात्** कारणादे**कैकस्या** जातवेदा वैश्वानरो वरुणो रुद्रोऽश्विना[११] उषा इत्यादीनि **बहूनि नामधेयानि भवन्ति।** एतदुक्तं भवति। स्थानभेदेन तासामेव पर्याया एते। सत्यपि च पर्यायत्वे परः परः पूर्वस्माद् विप्रकृष्टतरसम्बन्धः। प्रतीति विप्रकर्षात्। एवं च सत्यग्निरेव तेन क्रियायोगेन विशिष्टो जातवेदा वैश्वानर इत्यादिभिरभिधीयते। तथाश्विनाउषा[१२] इत्यादिभिरुत्तरोत्तरावस्थः सूर्योऽभिधीयते।

ऐश्वर्ययोगादिविकरणधर्मत्वे[१३] सति

**[ अपि वा कर्मपृथक्त्वात्। यथा होताध्वर्युर्ब्रह्मोद्गातेत्यप्येकस्य सतः[१४] ]**

---

१ तरतां च B. C.
२ सुप्रसिद्धमुर B. सिप्रसिद्धिमुर C
३ [ ऋ० १।२।१ ॥ निरु० १०।२ ]
४ किमन्यं B. C. [ निरु० १०।२ ]
५ 'स' इति नास्ति B.
६ दाने लक्ष B
७ 'वा' इति त्रुटितम् C.
८ 'प्रवह्लिहतं' इति पाठः स्यात्।
९ र्ध्वे (र्ध्वC.) र्धरात्रात्मना B. C
१० इत्युक्तम् B.
११ रुद्रोश्विना (नौC.) रुद्रा उष्या इत्या B. C.
१२ नावृषा C.
१३ दि द्विकरण B. 'द्वि' इति नास्ति C. अत्र 'अधिकरण' इति युक्तः पाठः।
१४ अयं मूलपाठो नास्ति B. C.

अपि वेत्यादि। अपिशब्दोऽथशब्दस्यार्थे। अथवा कर्मपृथक्त्वात्। यतः कर्माणि[1] पृथग्भूतानि। एकत्वेऽपि सति कर्मनिमित्तानि बहूनि नामधेयानि। यथा कौण्डपायिनामयने गृहपतिसप्तदशा दीक्षन्ते। तेषां होतृप्रभृतयः पञ्च त्रीणि त्रीणि कर्माणि कुर्वते। तन्निमित्ताश्च तेषामाख्याभेदा भवन्ति। यो होता सोऽध्वर्युः स वोद्गातेत्यादयः[2]। यथा च लोके एको देवदत्तः पचन् पाचको, लुनन् लावकः, स्तुवन्[3] स्तावक उच्यते। एवमिहापि योऽग्निः[4] स जातवेदाः स वैश्वानरस्तथा य इन्द्रः स वायुः स वरुणः। एवं यः सूर्यः सोऽश्विनौ[5] स उषा इति।

एवं स्वपक्षे त्रित्वमभिधाय याज्ञिकपक्षे[6] प्रदर्शनायाह।

**अथवा[7] पृथगेव स्युः।**

अग्नेर्जातवेद आदयोऽन्ये वेद्याः[8]। तथैवेन्द्राद्[9] वाय्वादयः। सूर्याद्प्यश्व्युष[10] आदयः।

पृथक्त्वे हेतुमाह।

**पृथग्घि[11] स्तुतयो भवन्ति**

हिशब्दो यस्मादर्थे। यस्मात् पृथक्स्तुतयो [भवन्त्यग्न्यादयः। अतस्तेषां[12] भिन्न-] रूपता एव भवति। तथा[13] हि।

**अग्निमीळे[14]**

इत्याग्नेयमेवोपदिश्यते।

**प्र नूनं जातवेदसम्[15]।**

इति जातवेदसीयम्।

**वैश्वानराय पृथुपाजसे विपः[16]।**

---

१ 'णि' इति त्रुटितम् B. C.

२ 'द्गा' इति त्रुटितम् B. C.

३ सवन् C.

४ योनिः स B. C.

५ 'स' इति द्विर्लिखितम् B. C.

६ याअज्ञिपेक्षे C.

७ मुद्रितपुस्तकेषु 'अपि वा' इति मूलपाठः।

८ वेर्यायाः B. वेय्याया C.

९ वेन्द्रवाय्वा (यवा C.) दयः B. C.

१० 'प्य' इति नास्ति B. दप्युश्च्युष C.

११ पृथग्विं C.

१२ 'भवन्त्यग्न्यादयः। अतस्तेषां भिन्न' इति पाठोऽस्माभिरेवात्रावश्यकत्वात् सन्निवेशितः। 'रूपता' इत्यस्य स्थानेऽपि B. पुस्तके 'रूपाता' इति C. पुस्तके च 'रुचाता' इति पाठः।

१३ तथापि B. C.

१४ [ऋ० १। १। १]

१५ [ऋ० १०। १८८।१]

१६ [ऋ० ३।३। १] विवः B.

इति वैश्वानरीयमिति। तथा ऐन्द्रं वायव्यं वारुणमिति। तथाऽऽश्विनमुषस्यं सौर्यमिति प्रतिनियता स्तुतिचोदना। स्तुतिभेदाच्च स्तुत्यभेदेन भवितव्यम्।

किञ्च—

## तथाभिधानानि[1]।

तथाऽनेनैव[2] प्रकारेण पृथगेवेत्यर्थः। अभिधानादिचोदना हविर्भाजो देवताया 'आग्नेयोऽष्टाकपालः' 'वैश्वानरीयो द्वादशकपालः' इति व्यवस्थितैव। चोदनाव्यतिरेके हि प्रायश्चित्तश्रवणात्। अन्याभ्यो गृहीते अन्यासु चाहितासु चोदिताभ्यः[3] प्रयच्छेत् 'आज्येन वा हविषा[4] वा यजेत्' इति च कर्मणि विशेषात्।

तथा गुणद्रव्यकर्मसंयोगनियमो दृश्यते। यथा हिरण्यपाणित्वात्[5] सवितुः। अदन्तकत्वं पूष्णः। कपर्दित्वं रुद्रस्य शितिकण्ठनीललोहितत्वादिगुणयोगश्च[6]। तथा ऋष्टयो[7] मरुताम्। पाशो[8] वरुणस्य। हरी[9] इन्द्रस्य इत्यादिद्रव्ययोगः। तथा कर्मयोगोऽग्नेर्वहनानि। वैश्वानरस्य सर्वस्य[10] प्राप्तिः। इन्द्रस्य वृत्रवधादि। वरुणस्य पाशविमोचनादि[11]। सूर्यस्य रसादानादि[12]। पूष्णः पथि रक्षणमिति[13]। अतो[14] यथोक्तस्तुत्यभिधानाभिनियमलक्षणाल्लिङ्गात् स्तुत्यभिधेयभेदेनाप्यवश्यं भवितव्यमिति।

### यथो एतत्

[ कर्मपृथक्त्वादिति बहवोऽपि विभज्य कर्माणि कुर्युः[15] ]

अथ यदेतदुक्तम्। कर्मपृथक्त्वादेकस्य[16] बहुनामधेयत्वमित्यर्थः। नैकान्तिकत्वमित्याह। बहवोऽपीत्यादि। एकदन्तेनाचष्टे[17]। यथैकस्य

---

१ कथाभिधागानानि C.
२ तथा नैव प्रका B. C.
३ चोतिताभ्यः C.
४ आज्येन (ना C.) वा हिना यजेत् B. C.
५ 'त्' इति त्रुटितम् C. अत्र 'हिरण्यपाणित्वं' इति युक्तः पाठो भवेत्।
६ कर्णा (ण्ठ) नीललोहित्वादि C.
७ ऋषयो C.
८ पशो वरु C.
९ हरि इन्द्र C.
१० सर्वस्याप्राप्तिः C.
११ विमचना C.
१२ दानादिर C.
१३ रक्षत्तमिति B. C,
१४ अथो B. C.
१५ 'यथो एतत्' इत्येव प्रतीकः B. C
१६ 'कर्म' इति नास्ति B. C.
१७ अयं सन्दिग्धः पाठः। अथवा 'इत्येतदन्तेनाचष्टे' 'तदेवाचष्टे' इति पाठः भवे।

कर्मपृथक्त्वान्नामपृथक्त्वं दृष्टम्[१]। एवं बहूनि कर्माणि विभज्य कुर्वतां बहूनामपि नामपृथक्त्वं दृष्टमेव। तत्र कुत एतत्—एकस्य बहूनीति न पुनर्बहूनामेवेदमस्येदमस्येति[२] विभज्य कुर्वतां बहूनि नामधेयानीति। तस्मादयमसाधको हेतुः। अपि च प्रत्यक्षे पृथिव्यादावर्थेऽभिधेये प्रयोगप्रतीतिवशात् पर्यायत्वं पद [३] प्रतीयेत। यथा नैघण्टुके[४] प्रकरणे गवादीनाम्। इह शब्दव्यतिरेकेण न देवतार्थस्य[५]। अतीन्द्रियत्वात्[६]। किं जातवेद आदयोऽग्नेरेव पर्याया उत पृथगर्थपदानीति[७]।

नायमनेकान्तः[८]। नहि देवतायाः संख्यादिविशिष्टस्तुतिसत्त्वावधारणे[९] किञ्चित् प्रमाणमस्ति। ऋते मन्त्रार्थवादलिङ्गात्[१०]। दर्शनभेदः परस्परविरोध्यध्यात्मविन्नैरुक्तयाज्ञिकानाम्[११]। अनेकजन्मान्तराभ्यासवासनापरिपाकवशात् प्रतिभानव्यवस्था द्रष्टव्या।

तत्राध्यात्मविदस्तावत् सन्मात्रनिबद्धबुद्धयः[१२] शिथिलीभूतकर्मग्रहग्रन्थयो भिन्नविषयभवसंक्रमस्थानवैराग्याभ्यासवशात्[१३] समासादितस्थिरसमाधयो निरस्तसमस्ताधयो निरस्तबाह्यविषयैषणा[१४] निरुद्धान्तःकरणवृत्तयो निष्कम्पदीपकल्पाः क्षेत्रज्ञज्ञानमननाः[१५] प्रकृतिविरक्तं विरजसं प्रध्यायन्तः[१६] किं केन[१७] पश्यति[१८] किं केन शृणोतीत्यात्मैकत्वेनास्तद्वितेनान्यं[१९] न पश्यन्ति न शृण्वन्तीति। इममेवागममुररीकृत्याह[२०]।

**सम्यग्दर्शनसम्पन्नः कर्मभिर्न स बध्यते।**
**दर्शनेन विहीनस्तु संसारं प्रतिपद्यते[२१]॥**

इति। तथा—

---

१ द्रष्टुम् B. C.
२ मेत्रेदमिदमस्यै विभ B. C.
३ अत्र 'पदानां प्रतीयेत' इति 'पदानां प्रतिपद्येत' इति वा पाठो भवेत्।
४ चौणादिके B.
५ 'प्रतीतिः' इति शेषः।
६ अत्र 'देवतायाः' इति शेषः।
७ पत्तिरणीति B. C.
८ नान्याप्यनेकान्तः B. C.
९ स्तुससत्वाव B. स्तुसत्वत्वाव C.
१० 'लिङ्ग' इत्येव B. C.
११ ध्यात्मभिन्नैरु B. ध्यात्मविनैरु C,
१२ सन्मान (B.) निबन्ध B. C.
१३ क्रम (मा C.) स्थानं वैरा B. C.
१४ यैषिणा B. C.
१५ ज्ञयोगनाममना B. ज्ञागयाननाममना C.
१६ शुध्यायन्तः शुद्धायान्तः C.
१७ केद B. C.
१८ पश्यन्ति B. C.
१९ त्यात्म (त्मं C.) कायेनास्ततेना B. C.
२० अमामेगवमुर B. इमामेवाव मुर C.
२१ [अनुपलब्धमूलमिदं वचनम्]

त्यज धर्ममधर्मं च उभे सत्यानृते त्यज ।
उभे सत्यानृते त्यक्त्वा येन त्यजसि तत्त्यज[1] ॥

इत्यादि । नैरात्म्यवादिनान्तु[2] विशेषः ।

तेनमेव[3] हि संसारो रागादिक्लेशवासितम्[4] ।
तदेव[5] तैर्विनिर्मुक्तं न भदन्त[6] इति कथ्यते[1] ॥

इत्यादि सौगताः प्रतिजानते इति ।

नैरुक्ता अपि मन्त्रदेवतानिर्वचनेन तावद्द्रव्यमनुबुभूषन्तोऽग्न्यादिभ्यस्त्रिभ्यो[8] नान्यं पश्यन्ति न शृण्वन्ति ।

याज्ञिका अपि तेन तेन फलेन नाधिनः सन्तस्तस्मिंस्तस्मिन् कर्मणि देवतायाः संप्रदानत्वेन चोदनालक्षणत्वात्[9] तदुद्देशेन व्यवदानानि । द्रव्यत्यागो यागस्तस्य फलसाधानत्वेनाभ्युपगमात्[10] । दर्शपूर्णमासाभ्यामित्यादिवाक्यस्य दर्शपूर्णमाससंज्ञकेन यागेन स्वर्गं भावयेदित्यर्थस्य[11] प्रपञ्चनप्रतिपादनाद्यागस्य फलं, न देवताया इति निश्चितम् । अतस्तस्याश्च गुणभूतत्वाद् यागनिर्वृत्तौ[12] स्रुगादिवदङ्गभावोपगमात् । सा च यागनिर्वृत्तिश्चोदनालक्षणेऽग्न्यादौ शब्दमात्रे देवतायां सिद्धेति वस्तुसदसद्भावाकारविचारः[13] कर्मणि मन्दोपयोग इति कृत्वा शब्द[14] व्यतिरिक्तां देवतां[15] न पश्यन्ति न शृण्वन्ति । शुद्धयाज्ञिकास्तु[16] शब्दव्यतिरिक्तामितिहासपुराणप्रसिद्धां[17] 'तुविग्रीवः[18]' इत्यादिमन्त्रप्रत्यायितरूपां[19] प्रतिजानते स्तुवते ध्यायति[20] वेति सर्वदर्शनेषु च सर्वे मन्त्रा योजनीयाः । कुतः । स्वयमेव भाष्यकारेण सर्वमन्त्राणां त्रिप्रकारस्य विषयस्य प्रदर्शनाय 'अर्थं वाचः पुष्पफलमाह[21]' इति यज्ञादीनां

---

१ [अनुपलब्धमूलमिदं वचनम् ]
२ 'दिनास्तुवि' इत्येव। 'शेषः' इति नास्ति B. C.
३ अयं सन्दिग्धः पाठः ।
४ क्लेशावासि C.
५ तदैव B.
६ 'न वदन्त इति कथ्यन्त' इत्येवादर्शपुस्तकपाठः ।
७ ताद्द्राव्य C.
८ भ्यस्त्रीभ्यो C.
९ क्षणात्वात् C.
१० नाभ्य पगमाः C.
११ दित्यस्यार्थस्य B. C.
१२ यागनिवृत्या B. C.
१३ वाक्तर B.
१४ शब्दस्य व्य C.
१५ तिरिक्तं देव B. C.
१६ याज्ञिकाः स B. C.
१७ रिक्तमितिहासःपुराणं प्रसि B. C.
१८ [ऋ० ५।२।१२॥८।१७।८॥८।६४।७]
१९ प्रत्ययित B. C.
२० 'ध्यायन्ति', इति वा स्यात् ।
२१ [निरु० १।२०]

पुष्पफलत्वेन प्रतिज्ञानात्। अधिदेवादिविषयेणैव श्रुतेः[1] न श्रुतप्रवृद्धतायाः स्मरणात्[2]।

तत्रात्मविदामेकत्वं पारमार्थिकमौपचारिको भेदः। स च पुरस्तादुपप्रदर्शितः। स्थानमस्य आब्रह्मभुवनात्[3] चतुर्दश भुवनानि। प्राजापत्यं[4] कृत्स्नं कार्यम्। तथा च लिङ्गम् 'तस्मात्परं नापरमस्ति किञ्चित्[5]' इति षष्ठ[6] मन्त्रो व्याख्यातः। पारमार्थिकादन्यदौपचारिकम्[7]। याज्ञिकानां प्रत्यभिधानं भेदः पारमार्थिकः। भाक्तमन्यत्।

इदानीं[8] यथौपचारिकमेकत्वं तथा दर्शयति—

**[ तत्र संस्थानैकत्वं सम्भोगैकत्वं चापेक्षितव्यम्[9] ]**

तत्रेत्यादि। तस्मिन् भेदपक्षे स्थानैकत्व पृथिव्यादिस्थानगतमेकत्वं स्थानिषूपचारेणोपेक्षितम्[10]। न च केवलं स्थानैकत्वमेव सम्भोगैकत्वं च। भुजः पालने। सहभोग[11] पालने कर्तव्ये स्थित्यर्थं विश्वस्यानुग्राहकत्वेनैकत्वं सम्भोगैकत्वं च।

उदाहरणम्

**यथा पृथिव्यां मनुष्याः पशवो देवा इति स्थानैकत्वम्।**

यथा पृथिव्यां मनुष्यादयः तात्स्थ्यादभेदेन पृथिवीशब्देनाभिधीयन्ते। पृथिवी च यथा 'भूर्भुवः स्वः[12]' इति लोकशब्दैर्लौकिका एकत्वेन। एवमग्निरित्यभेदाभिधानम्[13]। जातवेद आदीनां स्थानैकत्वात्। एवमेवोत्तरयोरपि स्थानयोर्योजनीयम्। यदेकत्वं[14] दृष्टान्तदार्ष्टान्तिकयोः।

अपि—

**सम्भोगैकत्वं च दृश्यते।**

उदाहरणम्—

---

१ श्रुतेन C.
२ ताया स्मरणाः C.
३ ह्मभावना चतु B. C.
४ पत्यः कृत्स्नः कार्यः। तथा च लिंगः C.
५ [तै० आ० १०।१०।३ मु० १०।४] 'यस्मात्परं' इति मूले पाठः।
६ [निरु० २।३]
७ र्थिकमन्य B. C.
८ मिन्दानीं यथो थौप C.
९ इदं मूलवाक्यं नास्ति B. C.
१० 'पेक्षितव्यम्' इति युक्तः स्यात्।
११ 'सम्भोगे' इति पाठो युक्तः स्यात्
१२ [वा० सं० ३।५] सुवः B.
१३ धानात् B. धानाम् C.
१४ यमेकत्वं B. C.

[ यथा पृथिव्याः पर्जन्येन च वाय्वादित्याभ्यां च सम्भोगः । अग्निना चेतरस्य लोकस्य[1] ]

यथेत्यादि । यथा पृथिव्या धृत्यादिस्वव्यापारं कुर्वन्त्याः पर्जन्यादिभिः स्वव्यापारेण द्वारेण । यथोक्तम् 'देवानां माने प्रथमा[2] ' इत्यस्मिन्मन्त्रे[3]ऽनुग्राहकत्वाविशेषात् संभूय पालने एकत्वं दृश्यते । एवमग्न्यादीनामप्यौपचारिकमेकत्वं[4] द्रष्टव्यमित्यभिप्रायः[5] । अग्निना चेतरस्यान्तरिक्षस्य[6] लोकस्य च सम्भोगः । यथा वक्ष्यति 'अग्निर्वा इतो वृष्टिम्[7]' इति । 'भूमिं पर्जन्या जिन्वन्ति दिवं जिन्वन्त्यग्नयः[8]' इति च ।

इदानीं यथोक्तस्य भेदाभेददर्शनस्य दृष्टान्तमाह[9] ।

[ तत्रैतन्नरराष्ट्रमिव[10] ]

तत्रैतद्[11] भेदाभेददर्शनं नरराष्ट्रमिव । नरशब्दोऽमात्यजनपदादिप्रकृत्युपलक्षणार्थः । पृथा[12] देवा इति । तदेवार्थवस्तु भेदेनाभिधीयते राष्ट्रमित्यभेदेन । एवमुक्तेषु भेदेनैकस्याभेदेन चानेकस्य । तत्रैतद् भेदाभेददर्शनं यथायोगमभिधानं द्रष्टव्यमिति ।

[ इति द्वादशस्या-( सप्तमस्या-) ध्यायस्य पञ्चमः खण्डः[13] । ]

---

## [अथ षष्ठः खण्डः[13] ।]

### अथाकारचिन्तनं देवतानाम् ।

संख्याविचारानन्तरमाकारः संस्थानं तद्विषयचिन्तनं विचारो देवतानां वर्तिष्यत इति शेषः । आनन्तर्याद् याज्ञिकपक्ष एष विचार इति केचिन्-

---

१ अयं मूलपाठो नास्ति B. C.
२ [ऋ० १०।२७।२३]
३ स्मिन्मन्त्रे B. C.
४ 'मेक' इति त्रुटितम् B. C.
५ 'इ' इति त्रुटितम् C.
६ 'क्ष' इति त्रुटितम् C.
७ [निरु० ७।२४॥ तै० सं० २।४।१० ]
८ [ ऋ० १।१६४।५१॥ निरु० ६।२२॥७।२३ ]
९ 'दृष्टान्तता' इत्येव B 'दृष्टन्तं' इत्येव C.
१० इदं मूलवाक्यं नास्ति B. C.
११ 'त्रैत' इति त्रुटितम् B.
१२ अयं पाठः सन्दिग्धः । अथवा 'प्रकृतय इति' इति पाठोऽत्र भवेत् ।
१३ आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।

मन्यन्ते[१]। इतरयोरपि विकारधर्मत्वाद् भाक्तस्य भेदस्याभ्युपगमात् प्रकृति-भूतस्य च विकारभूतस्य[२] च देवतात्मनोऽत्यन्तपाराध्यांद्[३] [इदमाकार-चिन्तनं[४] युक्तम्।

तत्र—

**पुरुषविधाः स्युरित्येकम्।**

**पुरुषविधा** अस्मदादि-] रूपाः[५] स्युरित्येकं दर्शनम्।

कुतः—

**[चेतनावद्वद्धि स्तुतयो भवन्ति[६]]**

**चेतनावदि**त्यादि। भूमादिस्मरणात्[७] प्रशंसायां मतुप्। तदन्तात् 'तेन तुल्यम्'[८] इति वतिः। **हि** शब्दो हेत्वपदेशे। प्रशस्तेन दृष्टानुश्रविकफल-कर्मविवेकविशिष्टेन गवादिभ्यो व्यावृत्तेन चैतन्येन चेतनावद्भिस्तुल्यं यस्मात् **स्तुतयो** गुणगुण्यभिधानरूपा मन्त्राः चाटुश्लोका इव राजादीनां भवन्ति। तस्माद् विशिष्टपुरुषविधा इति।

न च केवलं स्तुतयः। किं तर्हि।

**तथाभिधानानि।**

यथा प्रकृष्टचैतन्यविशिष्टानां पुरुषाणां परस्परस्याभिधानानि तथेन्द्र-मरुदादीनामपि कयाशुभीयादिषु संवादेषु भवन्ति। अतो[९]ऽपि पुरु-षविधाः[१०]।

पौरुषविध्ये साध्ये चेतनावदिति य उक्तो हेतुस्तस्यैव—

**अथापि [पौरुषविधिकैरङ्गैः संस्तूयन्ते[११]]**

---

१ केचित्। अन्यतर B. 'न्ते, इ' इति त्रुटितम् C.
२ 'विकारभूतस्य च', इति नास्ति B.
३ पराध्यादि C.
४ 'इदमाकार' इत्यारभ्य 'अस्मदादि' इत्यन्तः पाठो नास्त्यादर्शपुस्तकेषु। अर्थवशादस्माभिरेवात्र योजितः।
५ रूपस्त्वरित्ये B. C.
६ इदं मूलवाक्यं नास्ति B. C.
७ 'भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने। संसर्गेऽस्तिविवक्षायां भवन्ति मतुबादयः॥' [पात० म० भा० ५।२।९४] इति स्मृतेरित्यर्थः।
८ [पा० ५।१।११५]
९ एतोऽपि B.C.
१० रुषो विधाः B. C.
११ 'अथापि' इत्येवं प्रतीकः B. C.

इत्यादिः[1] परः प्रपञ्चः। अङ्गादिभिः स्तुतिविशेषस्य प्रदर्शनात्। **अथ** शब्दस्तथार्थे। **अपि** शब्दो ह्यर्थे। तथाहि[2] **पौरुषविधिकैः** पुरुषविधेयस्तुतिभावानि बाहुमुष्ट्यादीन्यङ्गानि तैः स्तूयन्ते। उदाहरणम्।

**उरुं नो लोकमनु नेषि विद्वान्**
**स्वर्वज्ज्योतिरभयं स्वस्ति।**
**ऋष्वा त इन्द्र स्थविरस्य बाहू**
**उप स्थेयाम शरणा बृहन्ता।**[3]

गर्गस्यार्षम्। **उरु** विस्तीर्णमसंबाधम्[4]। **नो**[5]ऽस्मल्लोकं स्वर्गाख्यमिन्द्रलोकाख्यं वा। **अनुनेषि** अनुपूर्वस्य नयतेर्लटि[6] रूपम्। आनुपूर्व्येण नयेत्यर्थः। पश्चाद्वा मरणस्य मरणोत्तरं[7] कालमित्यर्थः। **विद्वान्** जानन् भक्ततामस्माकम्। यतः **स्वर्वत्**[8] स्वकादित्यादिवदित्यर्थः[9]। तेन कर्तृभूतेन तद्वदादित्यकर्तृकमित्यर्थः। **ज्योतिः**। लोकविशेषणं[10] वा लिङ्गव्यत्ययेन स्वर्वन्तं सर्वेणाभिलषितेनार्थेन तद्वन्तं लोकम्। **अभयं** च **स्वस्ति** चाविनाशश्चेत्यर्थः[11]। किञ्च **ऋष्वा** ऋष्वो महन्नामैतत् महान्तौ[12] प्रभावतः रेषणौ[13] वा। **ते** तव हे **इन्द्र स्थविरस्य** भूतः[14] **बाहू**[15] यौ तयोः **उप** समीपे **स्थेयाम** तिष्ठेम तव समीपे निवसेमेत्याशास्महे। स्तुतिर्वोपस्थानम्। तव बाहू स्तूयामेत्यर्थः। बाहूपस्थानेन च तद्वत[16] उपस्थानं लक्ष्यते। कीदृशौ। **शरणा** 'शॄ हिंसायाम्[17]' शरितारौ[18] शत्रूणाम्। शरण्यौ वा। **बृहन्ता** सर्वत्राकारो द्विवचनस्य[19] स्थाने। महान्तौ प्रमाणतः।

---

१ 'ह्' इति त्रुटितम् B. C.
२ तथाहि पौरुषमधिकैः B. C.
३ [ वि० ६।४७।८ ] 'उरुं नो लोकम्' इत्येव प्रतीकः B. C.
४ 'म्' इति त्रुटितम् B, C.
५ नमस्मल्लो B. C. 'नोऽस्मांल्लोकं' इति युक्तः पाठो भवेत्।
६ तेर्लिटि' C तेर्लेटि इति युक्तः स्यात्।
७ 'मरणोत्तरकालं' इति समस्तपाठः स्यात्।
८ स्वर्वक् C.
९ 'स्वरादित्यादि' इति पाठः स्यात्।
१० लोकवि B. C.
११ 'नाशञ्चे' इति पाठः स्यात्।
१२ महान्ते B. C.
१३ रेषणो वा B. C.
१४ अत्र 'बृहतः' इति 'महतः' इति वा पाठः स्यात्।
१५ बाहै B.
१६ तन्वत B. C.
१७ [ धा० ९।१९ ] मे हिंसा C.
१८ शरितारः B.
१९ 'स्य' इति नास्ति C.

उताभये पुरुहूत श्रवोभि-
रेको दृळ्हमवदो वृत्रहा सन्।
इमे चिदिन्द्र रोदसी अपारे
यत्संगृभ्णा मघवन् काशिरित्ते[१] ॥

इति द्वितीयमुदाहरणं पुरस्ताद्[२] व्याख्यातम्।

[ अथापि पौरुषविधिकैर्द्रव्यसंयोगैः[३] ]

अथापीत्यादि[४]। तथा चेत्यर्थः। पुरुषप्रकारेषु ये [द्रव्यसंयोगास्तैः[५] ] सांयोगिकैरश्वजायादिभिर्भोग्यैर्द्रव्यैः सम्बन्धाः स्तूयन्त इत्यनुषङ्गः।
उदाहरणम्।

आ द्वाभ्यां हरिभ्यामिन्द्र याह्या
चतुर्भिरा षड्भिर्हूयमानः।
आष्टाभिर्दशभिः सोमपेय-
मयं सुतः सुमख मा मृधस्कः[६] ॥

गृत्समदस्य। आ इत्युपसर्गो याहीत्यनेन सम्बध्यते। द्वाभ्यां हरिभ्यां हे इन्द्र आयाहि। आ चतुर्भिरायाहि। आषड्भिरायाहि[७]। हूयमानोऽस्माभिरायाहि। अष्टाभिर्दशभिर्वा प्रभूतत्वादश्वानाम्[८]। यावद्भी रोचते तावद्भिरायाहीत्यर्थः। सोमपेयं सोमपानमस्मदीयं[९] प्रतीत्यध्याहारः। किमर्थमुच्यते आयाहीति। यस्मादयं सुतः सोमः हे सुमख सुयज्ञ आगच्छ। अन्तरा कैश्चित् सह मा मृधः संग्रामान् कः मा[१०] कार्षीरित्यर्थः। अविलम्बितमित्यभिप्रायः।

अपाः सोममस्तमिन्द्र प्र याहि
कल्याणीर्जाया सुरणं गृहे ते।

---

१ [ ऋ० ३।३०।५ ] 'उताभये पुरुहूत' इत्येव प्रतीकः B. C.
२ [ निरु० ६।१ ]
३ इदं मूलवाक्यं नास्ति B. C.
४ अथापत्यादि C.
५ 'द्रव्यसंयोगास्तैः' इत्ययं पाठो नास्ति B. C. अर्थवशादस्माभिरेवात्र योजितः।
६ [ ऋ० २।१८।४ ] 'आ द्वाभ्यां हरिभ्याम्' इत्येव प्रतीकः B. C.
७ 'या' इति त्रुटितम् C.
८ प्रहूत B. C.
९ पान अस्म B. C.
१० 'मा' इति त्रुटितम् C.

यत्रा रथस्य बृहतो निधानं
विमोचनं वाजिनो दक्षिणावत्[1] ॥

विश्वामित्रस्य । **अपाः**[2] पीतवानसि **सोममभि** । **अस्तं** गृहं हे **इन्द्र प्रयाहि** । कस्मादेवमुच्यते । यस्मात् **कल्याणीः** छान्दसत्वाद् धल्ङ्यादि-[3] लोपाभावः[4] । कल्याणीः प्रशस्तरूपा **जाया सुरणं**[5] सुष्ठु रमणीयं[6] यत् परिभोगयोग्यं पर्यंकास्तरणादि **गृहे ते** तव । **यत्रा** यत्र च **रथस्य बृहतो** महतो[7] **निधानं** स्थानं यजनशालाख्यम् । **विमोचनं**[8] विमोचनस्थानं च मन्द्राख्यम्[9] । **वाजिनो**ऽश्वस्य दक्षिणा दानं वासयोग्यमशनादि तेन तद्वत् ।

[अथापि पौरुषविधिकैः कर्मभिः[10]]

**अथापी**त्यादि[11] । अथवोक्तविशेषणैरेव[12]कर्मभिः । उदाहरणम्—

इदं हविर्मघवन् तुभ्यं रातं
प्रति सम्राळहृणानो गृभाय ।
तुभ्यं सुतो मघवन् तुभ्यं
पक्वो३ऽद्धीन्द्र पिब च प्रस्थितस्य[13] ॥

अग्नियुतस्य स्थौरस्य अग्नियूपस्य[14] वार्षम्[15] । प्रत्यक्षं व्यपदिशति । **इदं हवि**रिति सामान्येन[16] हविर्मात्रमनूद्य उपरिष्टाद् विशेषं वक्ष्यति । हे **मघवन्** धनवन् **तुभ्यं**[17] **रातं** 'रा दाने[18]' दत्तमस्माभिः । **प्रत्युपसर्गो गृभाये**त्याख्यातेन सम्बध्यते । तत् हे **सम्राट्** सम्यग्दीप्त **अहृणानः** कण्ड्वादिरयम् ।

---

१ [ऋ० ३।५३।६] 'अपाः सोमम्' इत्येव प्रतीकः B. C.
२ अपः पीत B.
३ [पा० ६।१।६८]
४ भावात् कल्पा B.
५ सुमरणं सुष्ठु चरम C.
६ णीयस्त्वं यत् B. C.
७ 'महतो' इति त्रुटितम् B.
८ 'विमोचनं' इति त्रुटितम् B.
९ अत्र 'मन्दुराख्यम्' इति पाठः स्यात् ।
१० इदं मूलवाक्यं नास्ति B. C.
११ यथावीत्यादि C.
१२ रेवत कर्म C.
१३ [ऋ० १०।११६।७] 'इदं हविः' इत्येव प्रतीकः B. C.
१४ अग्नियूप B. C.
१५ 'वा' इति त्रुटितम् C
१६ 'न' इति त्रुटितम् B. C.
१७ कृत्यं C.
१८ [धा० २।४७]

अहृणीयमानो[1] ऽक्रुध्यन् **प्रति गृभाय**[2] प्रतिगृहाणेत्यर्थः। **तुभ्यं** सुतस्त्वदर्थमेव[3] **सुतः** सोमः हे **मघवन् तुभ्यं पक्वः** सवनीयपुरोडाशः। एतज्ज्ञात्वा **अद्धि** भक्षय हे **इन्द्र** पुरोडाशादि। **पिब च** सोमस्य **प्रस्थितस्य**[4] त्वां प्रति स्थितस्य प्रस्थितसंज्ञकस्य वा। षष्ठीश्रुतेरेकदेशमिति शेषः। द्वितीयार्थे वा षष्ठी प्रस्थितम्।

**आश्रुत्कर्ण श्रुधी हवं**
**नू चिद्दधिष्व मे गिरः।**
**इन्द्र स्तोममिमं मम**
**कृष्वा युजश्चिदन्तरम्**[5] ॥

मधुच्छन्दसः। आभिमुख्येन श्रोतारौ कर्णौ यस्य तस्य सम्बोधनं हे **आश्रुत्कर्ण श्रुधी** शृणु **हव**माह्वानम्। **नु** इति क्षिप्रनाम। **चि**दिति चार्थे क्षिप्रं च **दधिष्व** धारय। **मे गिरः**[6] स्तुती[7]र्याज्यानुवाक्यादिलक्षणाः[8] हे **इन्द्र स्तोमं** च शस्त्राख्यम्। **इमं मम** स्वभूतम्। **कृष्वा** कुरुष्व **युजः** युज्यत इति युक् सहायः[9]। **चिद**प्यर्थे। सहायादपि कुत्साद्वा विष्णोर्वा मतिशायिकोऽयमासन्नतरमित्यर्थः[10]।

एवमुक्ताभिर्ऋग्भिः पौरुषविध्यं प्रसाध्यार्थान्तरमुपन्यस्यति[11] स्म[12]।

**अपुरुषविधाः स्युरित्यपरम्। अपि तु यद् दृश्यते।**

पुरुषाकारेभ्योऽन्याः स्युर्देवताः। न[13] पुरुषसद्भावं[14] देवता इत्यभिप्रायः। तथा चोक्तम् 'तत्रोपमार्थेन वा[15]' इत्युपप्रतिज्ञाय[16] प्रत्यक्षेण प्रसिद्ध-

---

१ 'णो' इति त्रुटितम्
२ गृहाय प्रतिगृहाणेत्यर्थः C.
३ तस्तद्वर्थं C.
४ 'प्रस्थितस्य' इति नास्ति B. C.
५ [ऋ० १।१०।६] 'आश्रुत्कर्ण' इत्येव प्रतीकः B. C.
६ गिमः C.
७ स्तुतिर्या B. C,
८ लक्षणाः B. C.
९ सखायः B.
१० अयं सन्दिग्धः पाठः।
११ साध्यमर्था B. C.
१२ न्यसति स्म B.
१३ नापुरुष B.
१४ अत्रेदं क्लीबत्वं चिन्त्यम्।
१५ [निरु० २।१६] मूले 'वा' इति नास्ति।
१६ 'य' इति त्रुटितम् B.

देवत्वेनापुरुषाकारेण अग्न्यादिदेवतानां[1] पूर्वोक्तं पौरुषविध्यत्वं[2] व्यभिचरितुमाह। **अपि तु यद् दृश्यते** उपलभ्यते।

[इति द्वादशस्या-( सप्तमस्या-) ध्यायस्य षष्ठः खण्डः।][3]

---

## [ अथ सप्तमः खण्डः[3]। ]

**[अपुरुषविधं तद्यथाग्निर्वायुरादित्यः पृथिवी चन्द्रमा इति[4] ]**

**अपुरुषविधं तद्यथा**ऽग्निरित्यादि। तत्र वायुः स्पर्शनः। अन्ये दर्शनाः। एतदुक्तं भवति। यथैव च[5] धनधान्यपशुहिरण्यादि पुरुषस्योपकरणम्। एवं कर्माङ्गानि देवता अप्यग्न्यादयः। तत्सामान्यार्थमिन्द्रादिशब्दवाच्या अप्येवंविधा[6] भवितुमर्हन्तीति।

एवं प्रत्यक्षेण सामान्यतोदृष्टेन चापौरुषविध्य[7] उक्ते पूर्वोक्तसमीकरणायाह।

**[ यथो एतच्चेतनावद्वद्धि स्तुतयो भवन्तीति।**
**अचेतनान्यप्येवं स्तूयन्ते। [8]यथाक्षप्रभृतीन्योषधिपर्यन्तानि[9] ।]**

**यथो एतच्चेतनावद्व**दिति। अस्य समीकरणमचेतनात्मन्यपि[10] द्रव्याण्यक्षादीन्योषधिपर्यन्तानि 'मित्रं कृणुध्वम्'[11] इति चेतनावद्भिस्तुल्यं स्तूयन्ते।

एवं सामान्येन समीकृत्य विशेषेण[12] समीकरिष्यन्नाह।

**[ यथो एतत्पौरुषविधिकैरङ्गैः संस्तूयन्त इति, अचेतनेष्वप्येतद् भवति। अभिक्रन्दन्ति हरितेभिरासभिरिति ग्रावस्तुतिः[13] ]**

एतत्पौरुषविधिकैरङ्गैरिति। अस्य समीकरणमचेतनेष्वप्येतद् भवति। अभिक्रन्दन्तीत्युदाहरणम्।

---

१ 'देवतानां' इति नास्ति B. C.
२ पौरुषं विध्यत्वं B. C. 'पौरुषविध्यं' इत्येव युक्तः पाठः।
३ आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते।
४ अयं मूलपाठो नास्ति B. C.
५ 'च' इति नास्ति C.
६ 'एवं विधा' इति द्विर्लिखितम् B. C.
७ पौरुष्यविध्य B. C.
८ [निघ० ५।३।४-२२]
९ अयं मूलपाठो नास्ति B. C.
१० तनात्मन्यपि B. C.
११ [ऋ० १०।३४।१४]
१२ 'विशेषेण' इति नास्ति B. C.
१३ अयं मूलपाठो नास्ति B. C.

एते वदन्ति शतवत् सहस्रव-
दभि क्रन्दन्ति हरितेभिरासभिः ।
विष्ट्वी ग्रावाणः सुकृतः सुकृत्यया
होतुश्चित् पूर्वे हविरद्यमाशत[1] ॥

अर्बुदस्य[2] । **एते वदन्ति** महान्तं शब्दं कुर्वन्तीत्यर्थः । **शतवत् सहस्रवत्** शतमिव सहस्रमिव वा **क्रन्दन्ति** अभ्याहूयन्ति चेन्द्रम् । **हरितेभिः** हरितवर्णैः । **आसभिः** आस्यैः । छान्दस आस्यशब्दस्यासन्नादेशः । **विष्ट्वी** 'विष्लृ व्याप्तौ[3]' इत्यस्यैतद्रूपम् । ईत्वमपि सा ........ दित्वा[4] व्याप्येत्यर्थः । **ग्रावाणः सुकृतः**[5] शोभनकर्मकारिणः । **सुकृत्यया** शोभनक्रिययाभिषवाख्यया[6] । **होतुश्चित्** होतुरपि सकाशात् **पूर्वे हविरद्यम**दनीयं[7] सोमाख्य**माशत** आशितवन्तः[8] । ग्राव्णः[9] स्तुतिरिति सुप्रसिद्धम् ।

पौरुषविधिकै[10]र्द्रव्यसंयोगैरित्येतदपि पूर्ववत् कल्पितोपमारूपमित्याह ।

[ **यथो एतत्पौरुषविधिकैर्द्रव्यसंयोगैरित्येतदपि**[11]] **तादृशमेव**[11] ।

उदाहरणम्—

सुखं रथं युयुजे सिन्धुरश्विनं-
तेन वाजं संनिषदस्मिन्नाजौ ।
महान् ह्यस्य महिमा पनस्यते-
ऽदब्धस्य स्वयशसो विरप्शिनः[12] ॥

---

१ [ऋ० १०।९४।२] 'एते वदन्ति' इत्येव प्रतीकः B. C.
२ अब् शब्दस्य C.
३ [धा० ३।१३]
४ अयं सन्दिग्धः पाठः ।
५ सुकृताः B. C.
६ भोनक्रीयया C.
७ हुचिाअमद C.
८ 'आशितवन्तः' इति द्विर्लिखितम् B.
९ तावतुः B. सावतु C.
१० विधकै B. C.
११ प्रतीकत्वेन 'तादृशमेव' इत्येव पाठः B. C.
१२ [ऋ० १०।७५।९] 'सुखं रथं युयुजे' इत्येव प्रतीकः B. C.

सिन्धुक्षिन्नाम प्रैय्यमेधस्तस्यार्षम्[1]। सुखं सुखयानं रथं[2] युयुजे युक्तवान्। सिन्धुर्नाम नदीविशेषः। अश्विनं[3] अश्ववन्तम्। तेन वाजमन्नम्। संनिषत् संभक्तवान्। अस्मिन्नाजौ संग्रामे। महान् ह्यस्य महिमा पनस्यते स्तूयते[4] स्तोतृभिः। अदब्धस्यानुपहिंसितस्य[5] केनचित् स्वयशसः स्वाश्रययशसः। विरप्शिनः[6] विरमणशीलस्य महन्नाम वा महत इत्यर्थः। नदीस्तुतिरित्याद्युक्ताभिप्रायम्[7]। कर्मसंयोगैरित्येतदपीति कृतव्याख्यानम्। अङ्गकर्मसंयोगयोरेकमेवोदाहरणम्।

[ अपि वोभयविधाः स्युः[8] ]

अपि वेत्यादि। अपिरथार्थे। अथवा उभयविधा द्विप्रकारा अपि स्युः। उभयथापि मन्त्रदर्शनात्।

[ अपि वा पुरुषविधानामेव सतां कर्मात्मान एते स्युः[8] ]

अपि वेति च दर्शनान्तरम्। सर्वदेवतानामेव[9] द्व्यात्मकत्वमिष्यते। तत्रैते कर्मात्मानः पृथिव्यादयो धृतिसंग्रहपक्त्यादि शीतोष्णवर्षादि च विदधानाः कृत्स्नं जगत् त्रायन्ते[10]। अन्ये त्वधिष्ठातारः पुरुषविधास्तेषामेव पृथिव्यादीनां स्युः। एवमेव च सति अग्निस्तुतिरित्यादि[11] स्थानविभागेन च बलिहरणस्मरणं समञ्जसतरं जायते। ऐश्वर्यातिशयवशाच्च कदाचिदमूर्त्या सद्रूपतयावस्थिता[12] देवता मन्त्रेषु स्तूयते। कदाचिद् ग्रावादिद्रव्यरूपापन्ना। कदाचित् पुरुषविधा। [13]सर्वाभिधानव्यतिरेकेण देवतायाः सद्भावे रूपविशेषे च मन्त्रशब्द एव प्रमाणमिति सर्वथाप्यविरोधः सिद्धः।

अस्य च द्व्यात्मकत्वस्य दृष्टान्तं[14] दर्शयितुमाह।

[ यथा यज्ञो यजमानस्य[8] ]

यथा यज्ञः कर्मरूप आत्मा यजमानस्य कर्मणामनुष्ठातुः[15]। यज्ञशब्दश्चात्र कार्यकारणयोरभेदोपचारात् श्रौतस्मार्ताग्निहोत्राष्टकादिकर्मानुष्ठान-

---

१ प्रियमेधस्त B.
२ कथं B. C.
३ आश्विनं C.
४ स्तूयन्ते B. C.
५ नुपवह्निं सित C.
६ विरप्सिनः C.
७ स्यादीन्युक्ता B. स्यान्युक्ता C.
८ इदं मूलवाक्यं नास्ति B. C.
९ मेवाध्यात्मक C.
१० त्रायते B. C.
११ ग्निस्तुष्वित्या B. C.
१२ तयावास्थिता B.
१३ सर्वथाभिधान C.
१४ दृष्टान्तु C.
१५ नुष्ठातुम् B.

हेतोः संस्कारराशेरपूर्वाख्यस्य फलदानावस्थायिनः समुपलक्षणार्थम्। तद्वशेन हि पुनः शरीरात्मनोर्ग्रहणम्।

एतदेव च दर्शनं द्रढयन्नाह—

**[ एष चाख्यानसमयः[1] ]**

एष चेत्यादि[2]। इतिहासपुराणादिष्वाख्यानेषु समयः[3] सिद्धान्तः प्रसिद्ध इति।

इति निरुक्तविवरणसमुच्चये द्वादशस्य [ सप्तमस्याध्यायस्य[4] ]

द्वितीयः पादः।

[ सप्तमश्च खण्डः समाप्तः[4] ]

——:o:——

१ इदं मूलवाक्यं नास्ति B. C.
२ एष वेत्यादि B.
३ समवायि C.
४ अयं कोष्ठकान्तर्गतः पाठ आदर्शपुस्तकेषु नास्ति।

## [अथ[1]] तृतीयः पादः [अष्टमः खण्डः[1]]

किञ्चिद् वक्तव्यमवशिष्यते। तद्विवक्षया[2] स्वपक्षेणोपक्षेपः[3]।

### तिस्र एव [देवता इत्युक्तं पुरस्तात्[4]]

इत्यादि। एवमुपक्षिप्याह।

### [तासां भक्तिसाहचर्यं व्याख्यास्यामः[5]]

**तासां** तिसृणां देवतानाम्। **भक्तिसाहचर्यं** भज्यतेऽसाविति भजेः कर्मसाधनः क्तिन् भजनीयो भक्तिः। सहचरभावः साहचर्यं भक्तिश्च साहचर्यं चेत्यर्थः। यो यस्य भजनीयस्तं भक्तिम्। येन च यस्य स्तुतौ हविषि वा सहभावोपगमनलक्षणं साहचर्यम्। तच्च विविधमाख्यास्यामः। किमर्थम्। यानि यद्भक्तीनि[6] तेषामन्यतमस्याप्याश्रयणे [मन्त्रस्याग्नेयादित्वं[7] यथा विज्ञायेत। नन्वन्यतमस्याश्रयणे]ऽप्याग्नेयादित्वं कथमुन्नीयेतेति। यथा 'अयं लोकः प्रथमच्छन्दोमयः[8]' इतीदंल्लोकसंस्तवात्[9] प्रथमस्य च्छन्दोमयस्याग्नेयत्वम्। तथाह 'अग्नये वासन्तिकाय गायत्राय[10]' इत्यादि। 'प्रथममहरयमेव[11] लोक आयतनेनाग्निर्गायति'[10] इत्यादि[12] च ब्राह्मणान्युपपन्नरूपाणि कथं स्युरित्येवमर्थं[13] भक्तिव्याख्यानम्। साहचर्यं[14] तु मन्त्र-

---

१ अयं कोष्ठकान्तर्गतः पाठो नास्ति B. अयं सर्वोऽप्यध्यायाद्यारम्भात्मकः पाठो नास्ति C.

२ तद्विचक्षया C.

३ पक्षे वो (यो C.) पक्षेपः B. C.

४ 'तिस्र एव' इत्येव प्रतीकः B.C.

५ अयं मूलपाठो नास्ति B. C.

६ योनि यत् भक्ति नि C.

७ 'मन्त्रस्याग्नेयादित्वं यथा विज्ञायेत। नन्वन्यतमस्याश्रयणे' इति पाठो नास्त्यादर्शपुस्तकेषु। अर्थवशादस्माभिरेवात्र सन्नियोजितः।

८ [अयं वै लोकः प्रातः सवनम् शा० ब्रा० १२।८।२।८॥ गो० उ० ३।१६] मयी B. C.

९ संस्तद्वात् B. C.

१० [अनुपलब्धमूलमिदं वचनम्]

११ अयं पाठः सन्दिग्धः।

१२ इत्यादिवत् B. 'इत्यादीनि च' इति पाठोऽत्र युक्तो भवेत्।

१३ रितीत्येव B.

१४ सावाप्यन्तु B. C.

स्वभावोपप्रदर्शनमात्रफलम्[1]। अथवा भावसाधनो[2] भजनं भक्तिस्तया कृतं साहचर्यम्। समानमन्यत्। अस्मिन् व्याख्याने[3] 'अथास्य संस्तविका' इत्याद्यप्रस्तुतोपव्याख्यानं प्रासङ्गिकं द्रष्टव्यम्।

अथैतानीत्यादि व्याख्यानं प्रतिज्ञायानन्तरं व्याचष्टे।

**[ एतान्यग्निभक्तीनि। अयं लोकः प्रातःसवनं वसन्तो गायत्री त्रिवृत्स्तोमो रथन्तरं साम ये च देवगणाः समाम्नाताः प्रथमे स्थाने। अग्नायी पृथिवीळेति स्त्रियः[4] ]**

**एतानी**ति वक्ष्यमाण प्रतिनिर्देशः। अग्निर्भक्तिर्येषामित्यग्निभक्तीनि[5]। अग्निविषयं वा भजनमेषामिति। नपुंसकनिर्देशश्च लिङ्गसर्वनामत्वे सत्य-विरोधात्। तस्य वक्ष्यमाणैः स्त्रीलिङ्गैः[6] ...। लोकानां मध्ये **अय**मिति प्रत्यक्षं पृथिवीलोकमपि दर्शयति। एवं प्रातःसवनादिष्वपि योज्यम्। **ये च देवगणाः** देवा जातवेद आदयो देवगणाश्चाक्षादयः[7] पठिताः **प्रथमे** पृथि-व्याख्येऽग्नेः स्थाने। अग्नायी पृथिवी इळेति च याः स्त्रियः। ये च समाम्नाताः प्रथमे स्थान इत्येव[8] वा सिद्धे[9] देवगणादिरनुवादः। प्रपञ्चमात्रमन्यत्।

ननु नद्य आप इत्यादीनामग्निभक्तित्वे सत्यग्नेः प्रतीतिः। इळायाः पुनः प्रत्यक्षमपठिताया अपि आप्रीषु[10] 'तिस्रो देवीः[11]' इत्यनेन सामान्यशब्देनो-पात्तायाः पृथिवीस्थानत्वविशेषणं लिंगतो दर्शयितुम्। तथा चोदाहरिष्यति— 'आ नो यज्ञं भारती[12]' इत्यत्र 'इळा मनुष्वदिह[12]' इति प्रत्यक्षस्थाननिर्देशात्। तथा 'द्यां भारत्यादित्यैरस्पृक्षत् सरस्वतीमं रुद्रैर्यज्ञमावीदिहैवेळया वसुमत्या[13]' इति। इहेति पूर्वस्थाननिर्देशाद् वसुमत्या इति चाग्निः। 'प्रथमो वसुभि-र्नोऽव्यात्[14]' इत्यादिलिङ्गादग्निः। वसुभिर्वा वसव[15] इति समाख्या। तस्मात्[16] पृथिवीस्थाना इति च भाष्यकारेण प्रतिज्ञातम्[17]। प्रथमस्थानसम्बन्धैर्वसुभि-

---

१ भावो वा प्र B.
२ भजसा B. भवसा C.
३ व्याख्याने' इति त्रुटितम् C.
४ अयं मूलपाठो नास्ति C. B.
५ षामन्यग्नि C. षान्यग्नि C.
६ अत्र कश्चन पाठस्त्रुटितः। 'पुंल्लिङ्गादिभिश्च संबन्धः' इति पाठः स्यात्।
७ चाक्षदयः B. C. ८ इत्येतावता C.
९ सिध्ये B. C. १० अप्रीषु B.
११ [ऋ० १०।११०।८]
१२ [ऋ० १०।११०।८।। निरु० ८।१३]
१३ [मैत्रा० सं० ४।१३।८।। तै० ब्रा० ३।६।१३।७]
१४ [ऐ० ब्रा० १।२४।। अग्निर्वसुभिः] वासुभि B. C.
१५ पसव B. १६ तः स्यात् B.
१७ प्रतिज्ञापितम् C.

स्तद्वच्छ्रवणात्। तत्र यथादित्यैः[1] सम्बन्धाद् भारत्याद्युस्थानत्वम्। सरस्वत्याश्च रुद्रैर्मध्यस्थानत्वम्। एवमिळायाः पृथिवीस्थानत्वं सिद्धम्।

**[अथाऽस्य कर्म। वहनं च हविषामावाहनं च देवतानाम्। यच्च किञ्चिद्दार्ष्टिविषयिकमग्निकर्मैव तत्[3]]**

**अथास्ये**त्यादि। अपठितानां लोकादीनां पठितानां च देवगणानां[4] भक्तिसाहचर्यमुक्तम्। अनन्तरं साहचर्यमाह। **अस्याग्नेः कर्म वहनं** देवान् प्रति सरसभूतानां हविषां प्रापणम्[5]। 'अग्निर्देवो होता[6]' इति होतृत्वा**दावाहनं**[7] **च देवतानाम्**[8]। एतत् तावददृष्टविषयत्वादागमाच्छ्रद्धीयेत[9]। यत्तु[10] दृष्टविषयभवं वा[11] दृष्टविषयप्रयोजनं वा वाक्ति सन्तमसापनोदनादि[12] तद्दार्ष्टिविषयिकमग्निकर्मैव तत् तदपि। ननु दृष्टत्वादवाच्यम्। उच्यते। दृष्टार्थं भविष्यति।

अन्ये वर्णयन्ति। भावे निष्ठा। दृष्टं दर्शनं समवेक्षणमालोचनं[13] तस्य विषयो दृश्यः सूक्ष्मः कश्चिदात्मादिपदार्थः। तत्र भवस्तत्प्रयोजनं वा। ज्ञानप्रकाशरूपत्वाविशेषादग्निकर्मैव तदित्युच्यते[14]।

पुरस्तात् स्तुतौ हविषि च साहचर्यं प्रतिज्ञातम्। तत्केनेत्याह—

**[अथास्य संस्तविका देवा इन्द्रः सोमो वरुणः पर्जन्य ऋतवः[15]]**

**अथास्ये**त्यादि। अनन्तरमस्याग्नेः संस्तविकाः सह स्तवनं[16] संस्तवस्तत्प्रयुक्ता देवा वक्ष्यन्त इति शेषः। इन्द्रः सोम इत्यादयः। क्रमशः संस्तवोदाहरणानि प्रदर्श्यन्ते।

**अग्न इन्द्रश्च दाशुषो दुरोणे**
**सुतावतो यज्ञमिहोप यातम्।**
**अमर्धन्ता सोमपेयाय देवाः[17]॥**

---

१ यदादित्यै. B.
२ मिळायां B.
३ अयं मूलपाठो नास्ति B. C.
४ देवगणां C.
५ प्रावणम् C.
६ [अग्निर्वै देवानां होता ऐ० ब्रा० १।२८॥३।१४] 'होता' नास्ति C. अत्र 'अग्निर्देवानां होता' इति पाठो भवेत्।
७ दावहनं B. C.
८ देवानाम् B.
९ त्वादुभागमाच्छुद्धी B. त्वाभागमा C.
१० यस्त्वदृष्ट B. C.
११ न B. C.
१२ नं तमसा B.
१३ मालोकनं B.
१४ 'तद्' इति द्विर्लिखितम् B. C.
१५ अयं मूलपाठो नास्ति B. C.
१६ स्तवचनं C.
१७ [ऋ०' ३।२५।४] 'अग्न इन्द्रश्च' इत्येव प्रतीकः B. C.

विश्वामित्रस्य। हे **अग्ने इन्द्रश्च** कर्मोपसंग्रहार्थाय च[1] श्रुतेस्त्वं चेति शेषः। **दाशुषो** दत्तवतो[2] हवींषि यजमानस्य स्वभूते **दुरोणे**[3] हविर्धानलक्षणे यज्ञगृहे। **सुतावतः** छान्दसं दीर्घत्वं सुतवतः सोमात्। **यज्ञमिहा**स्मिन् काले। **उपयात**मुपगच्छतम्[4]। **अमर्धन्ता** मृधेर्हिंसार्थस्येदं रूपम्। आकारो द्विवचनस्य स्थाने। अनुपहिंसन्तौ परस्परम्। संग्रामनाम वा मृध इति ततो णिच्। अमृधयन्तौ अन्तरा संग्राममकुर्वन्तौ केनचिदित्यर्थः। **सोमपेयाय** सोमपानार्थं **देवा** देवौ।

**अग्नीषोमाविमं सु मे**
**शृणुतं वृषणा हवम्।**
**प्रति सूक्तानि हर्यतं**
**भवतं दाशुषे मयः[5]॥**

गौतमस्य[6]। हे **अग्नीषोमौ इमं[7] सु मे** सुष्ठु मे मम शृणुतम्। **वृषणौ** हे वर्षितारौ। **हवमाह्वानम्।** **प्रति**र्धात्वर्थानुवादी[8]। **सूक्तानि** च स्तुतिरूपाणि **हर्यतं** हर्यतिः प्रेप्साकर्मा[9] प्रेप्सतं[10] कामयेथाः। किञ्च **भवतं दाशुषे** हवींषि[11] दत्तवते यजमानाय **मयः** सुखौ।

**त्वं नो अग्ने वरुणस्य विद्वान्**
**देवस्य हेळोऽव यासिसीष्ठाः।**
**यजिष्ठो वह्नितमः शोशुचानो**
**विश्वा द्वेषांसि प्र मुमुग्ध्यस्मत्[12]॥**

वामदेवस्य। **त्वं नो**ऽस्माकम्। हे **अग्ने विद्वान्** जानन्। किम्। सामर्थ्यात् भक्तताम्। **वरुणस्य** व्यवहितसम्बन्धः। **देवस्य** देवनशीलस्य[13] **हेळः** क्रोधनामैतत्। योऽस्माकमुपरि[14] क्रोधः। **अव यासिसीष्ठाः** अवशब्दो-

---

१ यतः श्रु B. यतश्रु C.
२ 'द' इति त्रुटितम् C.
३ दुराणे B. दूरोणे C.
४ यान्तमुपगच्छन्तम् B. C.
५ [ऋ० १।९३।१] 'अग्नीषोमाविमम्' इत्येव प्रतीकः B. C.
६ गौतमस्स C.
७ इमे C.
८ प्रतिर्धात्वर्थानुवासी B. C.
९ प्साकर्म B. C.
१० प्रप्सतं केमयेथाः C.
११ हविषि B. C.
१२ [ऋ० ४।१।४] 'त्वं नो अग्ने' इत्येव प्रतीकः B. C.
१३ देवल C.
१४ 'रि' इति त्रुटितम् B. C.

ऽपेत्येतस्यार्थे[1] यातेर्लिङि अन्तर्नीतण्यर्थस्य, प्रत्यक्षेण मोचयापनय। **अस्मत्** पञ्चम्येषा अस्मत्त इत्यर्थः। किञ्च यश्च त्वं **यजिष्ठो** होतृत्वादतिशयेन यष्टा। **वह्नितमः** वोढृतमश्च[2] सः। **शोशुचानः** शुचेर्यङ्लीदम्। अत्यर्थं दीप्यमानः[3]। **विश्वा** विश्वानि सर्वाणि **द्वेषांसि** द्वेष्याणि[4] द्वेष्टॄणि वा रक्ष-आदीनि **प्रमुमुग्धि** मुचेरन्तर्णीतण्यर्थस्य[5] प्रत्यक्षेण मोचयापनय। **अस्मत्** पञ्चम्येषा अस्मत्त इत्यर्थः।

**अग्नीपर्जन्याववतं धियं म-**
**ऽस्मिन् हवे सुहवा सुष्टुतिं नः।**
**इळामन्यो जनयद् गर्भमन्यः**
**प्रजावतीरिष आ धत्तमस्मे[6] ॥**

भरद्वाजस्य। हे **अग्नीपर्जन्यौ**। **अवतं** गच्छतम्[7]। **धियं** कर्मनामैतत् कर्म **मे** मम[8] श्रुतम्[9]। **अस्मिन् हवे** आह्वाने **सुहवा**[10] स्वाह्वानौ। **सुष्टुतिं** शोभनां च स्तुतिं चास्माकं[11] स्वभूतां गत्वाच्चेळामन्नम्। **अन्यो**[12] युवयोरेकः। **जनयत्** जनयत **गर्भमन्यः**। एवं **प्रजावतीरिषः**[13] प्रजासन्निहितान्यन्नानि। **आधत्तमस्मे** आभिमुख्येन स्थापयतमस्मासु। चतुर्थ्यर्थे वा श आदेशः। आभिमुख्येन दत्तमस्मभ्यमित्यर्थः।

**अग्ने देवाँ इहा वह**
**सादया योनिषु त्रिषु।**
**परि भूष पिब ऋतुना[14] ॥**

---

१ पेतेत्यस्या B. C.
२ 'वोढतमश्च' इति त्रुटितम् B. C.
३ मानं B. C.
४ द्वेष्यत्वान्नि B. द्रुष्यत्वानि C.
५ मेचेरन्त B.
६ [ ऋ० ६।५२। १६ ] 'अग्नीपर्जन्यौ' इत्येव प्रतीकः B. C.
७ 'धियं' इत्यस्मात् पूर्वं 'वि' इति B पुस्तके 'वित्' इति च C. पुस्तके ऽधिकः पाठः।
८ 'म' इति त्रुटितम् C
९ अत्र 'शृणुतम्' इति पाठो भवेत्।
१० 'सुहवा' इत्यस्मात्परं 'मह्' इत्यधिकः पाठो वर्तते B. C. स्वाह्वानौ B.
११ 'च' इत्यत्र नास्ति C. अत्र 'नो ऽस्माकं' इति पाठो युक्तः स्यात्।
१२ अस्य B.
१३ प्रजापतिरिषः C.
१४ [ ऋ० १।१५।४ ] 'अग्ने देवान्' इत्येव प्रतीकः B. C.

अग्ने देवान् इहास्मदीये यज्ञे। आवह आह्वय। आहूय च सादय उपवेशय। योनिषु सवनाख्येषु। उपविष्टांश्च सतः[1] परिभूष यो यथा परिग्रहीतव्यस्तं तथा परिगृहाण यागाय स्वयमपि च पिब सोमं ऋतुना सह।

[आग्नावैष्णवं च हविर्न त्वृक् संस्तविकी दशतयीषु विद्यते[2]]

आग्नावैष्णवं चेत्यादि मन्त्रस्वभावकथनमात्रमेव। विष्णुना सह भाक्ता[3] हविष्कृतैवाग्नेः केवलम्। न त्वृक्[4] संस्तवप्रयोजना शाखानुवचनगता दशतयीषु[5] दश मण्डलाख्या अवयवो यासां ता दशतय्यः[6] ऋग्वेदस्य शाखास्तासु विद्यते[7]। तु शब्दोऽवधारणे[8] तास्वेव। अन्यत्र वेदे स्यादपि। अभियुक्तोपदेशाच्च श्रद्धायामेवमेवेति। उदाहरणम्—

अग्नाविष्णू सजोषसे-
मा वर्धन्तु वां गिरः।
द्युम्नैर्वाजेभिरा गतम्[9]॥

वामदेवस्य। हे अग्नाविष्णू सजोषसा सम्प्रीयमाणौ। इमा वर्धन्तु वर्धयन्तु वां गिरः[10] स्तुतयोऽस्मदीयाः। युवामपि च द्युम्नैर्धनैः। वाजेभिर्वाजैश्चान्नैः सहयोगलक्षणे[11] तृतीया। यान्यस्मभ्यं[12] देयानि तैः सहागतमागच्छतम्।

[अथाप्याग्नापौष्णं हविर्न तु संस्तवः[13]]

अथापीत्यादि। अग्नेः पूष्णा सह [14]हविरेव[15] केवलं न तु संस्तवः। अन्यस्मिन्नपि वेदे। कुत एतत्। पूर्ववत् प्रतिषेधविषयस्यानवधारणात्। अतश्च संस्तवः। येन

[तत्रैतां विभक्तस्तुतिमृचमुदाहरन्ति[13]]

---

१ सतं B, C.
२ अयं मूलपाठो नास्ति B. C.
३ 'ता' इति नास्ति B. C.
४ तत्पृथक् B. C.
५ दाशतयीषु B.
६ दाशतय्यः B. दशतयः C.
७ विद्यन्ते B. C.
८ शब्दो यथारणे B. C.
९ [मैत्रा० सं० ४।१०।१॥ ४।११।२॥ तै०सं० ४।७।१]
१० गिरयः B.
११ [पा० २।३।१९]
१२ अस्मभ्यं B. C.
१३ इदं मूलवाक्यं नास्ति B. C.
१४ 'ह' इति त्रुटितम् B.
१५ 'व' इति त्रुटितम् B. C.

तत्र तस्मिन्नपि पूष्णा सह [1]हविस्सापर्ये प्रदर्शनायोदाहरन्तो विभक्त-स्तुतिमेतां वक्ष्यमाणामृचमुदाहरन्त्यभियुक्ताः ।

[इति द्वादशस्या-(सप्तमस्या-) ध्यायस्य अष्टमः खण्डः[2] ।]

---

[अथ नवमः खण्डः[2] ।]

पूषा त्वेतश्च्यावयतु प्र विद्वा-
ननष्टपशुर्भुवनस्य गोपाः ।
स त्वैतेभ्यः परि ददत् पितृभ्यो-
ऽग्निर्देवेभ्यः सुविदत्रियेभ्यः[3] ॥

देवश्रवसो यामायनस्य । शुनः कर्णस्तोमे प्रमीयमानोऽनयाऽभिमन्त्रयते । प्रमितस्य शाची:[4] । 'देवयानाः पितृयाणाश्च'[5] लोकाः सर्वान् लोकाननृणाः सञ्चरेम' इति[5] । पूषा त्वा त्वामितोऽस्माल्लोकात् । च्यावयतु 'छन्दसि परेऽपि[6]' प्रच्यावयतु । विद्वान् जानन्[7] सर्वत्राय[8]मनन्तर्हितज्ञान[9] इत्यर्थः । अनष्टपशुः । कुतः । यतो भुवनस्य भूतजातस्य गोपाः गोप्ता । प्रच्याव्य च स एव त्वा त्वाम् । एतेभ्यश्चन्द्रमण्डलोपान्तवर्तिभ्यः परि ददत्[10] परिद-दातु पितृभ्यः । तथा चोक्तम् 'दक्षिणायनात् पितृलोकम्[11]' इति । एवमत्र त्रयः पादाः पौष्णाः पर आग्नेयः । अग्निरपि पितृलोकादुत्कृष्य देवेभ्यः । चतुर्थीश्रुतेः ददात्वित्यनुषङ्गः । चन्द्रादित्यर्थः । तदप्युक्तम् 'पितृलोकाच्चन्द्र-मसम्[12]' इत्यादि । किं विशिष्टेभ्यो देवेभ्यः । सुविदत्रियेभ्यः[13] सुविदत्-

---

१ 'ह' इति त्रुटितम् B. C.

२ आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।

३ [ ऋ० १०।१७ ३ ] 'पूषा त्वेतः' इति प्रतीकः C. 'पूषा श्रवसः' इति पाठः B.

४ शोची: C. अत्र 'प्रमीतस्य चाशीः' इति युक्तः पाठः

५ [ मान० श्रौ० २।५।५।२२ ] यानाश्च B. याणाञ्च C.

६ [ पा० १।४। ८० ]

७ 'जा' इति त्रुटितम् B. C.

८ 'त्रा' इति त्रुटितम् B. C.

९ तज्ज्ञानमित्यर्थः B.

१० परिददाति B. परिददात् C.

११ [ निरु० १४।८ ]

१२ [ निरु० १४।८ ]

१३ 'सुविदत्रियेभ्यः' इति नास्ति B.C.

शब्दाद् धनवचनान्मत्वर्थीयो घः शोभनेन शोभनविचित्रेण वा[1] धनेन धनवद्भ्यः ।

अथवा स त्वैतेभ्य[2] इत्यनेन तच्छब्देन[3] उपरिष्टान्निर्देक्ष्यमाणो[4]ऽग्निरेवोच्यते। पूष्णा प्रच्यावितं[5] त्वामग्निः स त्वामेतेभ्यः परिददातु पितृभ्यः। अग्निर्देवेभ्यश्च सुधनेभ्यः सुविचित्रधनेभ्यो वेति। अस्मिन् व्याख्याने पूर्वार्धं पौष्णम्[6] । उत्तरार्धमाग्नेयमिति विभक्तस्तुतित्वम् । व्याख्यातॄणां संशयमापन्नस्तृतीयः पादः। पौष्णस्तदन्वादेशादित्येकं दर्शनम्। अग्नेः प्रकीर्तनमित्यपरम्। विन्दतेर्वा सु इत्येकोपसर्गपूर्वात्। ददातेर्वा सुवीति[7] द्व्युपसर्गयुक्तात्। शेषं भाष्यमृग्व्याख्याने गतम् ।

[ इति द्वादशाध्या-( सप्तमस्या-) ध्यायस्य नवमः खण्डः[8] ]

---

## [ अथ दशमः खण्डः[8] ] ।

**[ अथैतानीन्द्रभक्तीनि । अन्तरिक्षलोको माध्यंदिनं सवनं ग्रीष्मस्त्रिष्टुप् पञ्चदशस्तोमो बृहत्साम ये च देवगणाः समाम्नाता मध्यमे स्थाने । याश्च स्त्रियः । अथास्य कर्म । रसानुप्रदानं वृत्रवधो या च का च बलकृतिरिन्द्रकर्मैव तत्[9] ]**

**अथैतानी**त्यादि पूर्वेण कृतव्याख्यानम्। **ये च देवगणाः** । देवा वरुणादयो देवगणाः पुनर्मरुदादयश्च । **याश्च स्त्रियो** दित्यादयः । **रसानुप्रदानं** वृष्टिः। **वृत्रवधो**[10] मेघवधः। **या च का च बलकृतिः** यावत् किञ्चिद् बलेन क्रियते कीटपतङ्गादिभिरपि कर्म इन्द्रकर्मैव तत्। कुतः। बलं हि प्राणः प्राणश्च वायुर्वायुश्चेन्द्रः ।

---

१ बाधनेन B. C.
२ सत्वेतेभ्यः B. C.
३ ब्देभ्य उप B. C.
४ मायातिरेवोच्यन्ते B. C.
५ वितस्त्वामग्नि B. C.
६ वैष्णवम् B. C.
७ सुधीपीति B.
८ आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।
९ अयं मूलपाठो नास्ति B. C.
१० 'वृत्रवधः' इति नास्ति B. C.

[अथास्य संस्तविका देवाः । अग्निः सोमो वरुणः पूषा बृहस्पतिर्ब्रह्मणस्पतिः पर्वतः कुत्सो विष्णुर्वायुः[1] ]

अथास्येत्याद्यपि कृतव्याख्यानम् । उदाहरणानि क्रमशः प्रदर्श्यन्ते ।

इन्द्राग्नी रोचना दिवः
परि वाजेषु भूषथः ।
तद्वां चेति प्र वीर्यम्[2] ॥

विश्वामित्रस्यार्षम् । इन्द्राग्नी रोचना दिवः सम्बन्धीति । पर्युपसर्गो भूषथ इत्यनेन सम्बध्यते । वाजेषु बलनामैतत् । तृतीयार्थे चात्र सप्तमी । बलैः परिभूषथः परिगृहीतविष्कम्भेण[3] तेजसा चानुगृह्णीथ इत्यर्थः । ग्रहनक्षत्रादीनि । तच्च वां युवयोः स्वभूतं चेति[4] चेत्यते छन्दसि वर्तमाने कर्मणि लुङ्यडभावः । प्रापेति[5] प्रकर्षेण चेत्यते जिज्ञासितवीर्यं सामर्थ्यं सर्वेण लोकेन ।

इन्द्रासोमा समघशंसमभ्य१घं
तपुर्ययस्तु चरुरग्निवाँ इव ।
ब्रह्मद्विषे क्रव्यादे घोरचक्षसे
द्वेषो धत्तमनवायं किमीदिने[6] ॥

इति[7] ।

इन्द्रावरुणा युवमध्वराय नो
विशे जनाय महि शर्म यच्छतम् ।
दीर्घप्रयज्युमति यो वनुष्यति
वयं जयेम पृतनासु दूढ्यः ॥[8]

---

१ अयं मूलपाठो नास्ति B. C.

२ [ऋ० ३।१२।९] 'इन्द्राग्नी रोचना दिवः' इत्येव प्रतीकः B. C.

३ होताविष्क B.

४ 'चेति' इति त्रुटितम् B.

५ अत्र 'प्रेति' इति पाठः स्यात् ।

६ [ऋ० ७।१०४।२] 'इन्द्रासोमा समघशंसम्' इत्येव प्रतीकः B. C.

७ 'इति' इति नास्ति B. C

८ [ऋ० ७।८२।१] 'इन्द्रावरुणा युवमध्वराय' इत्येव प्रतीकः B. C.

इति च पुरस्ताद्[1] व्याख्यातम् ।

इन्द्रा नु पूषणा वयं
सख्याय स्वस्तये ।
हुवेम वाजसातये[2] ॥

भरद्वाजस्य । नु इति क्षिप्रनाम । इन्द्रशब्देन पूषाशब्देन चेन्द्रः । कुतः । द्विवचनस्थानादिकारश्रुतेश्छान्दसत्वाद् विरूपैकशेषो[3] द्रष्टव्यः । इन्द्रापूषणौ नु क्षिप्रं युवां वयं सख्याय[4] स्तुत्यस्तोतृत्वलक्षणाय स्वस्तये अविनाशाय हुवेम नित्यमाह्वयेमेत्याशास्महे । वाजसातये वाजमन्नं सातिः संभजनम् । अन्नसंभजनाय चात्मनः युवयोर्वा ।

इदं वामास्ये हविः
प्रियमिन्द्राबृहस्पती ।
उक्थं मदश्च शस्यते[5] ॥

वामदेवस्य[6] । इदं वां युवयोः । आस्ये अग्न्याख्ये मुखे प्रक्षिप्तं सत् हविः प्रियमस्त्विति शेषः । हे इन्द्राबृहस्पती उक्थं मदकरत्वान्मदः[7] होत्रादिभिर्यच्छस्यते[8] तदुक्थम् । त्वदर्थं तदपि प्रियमस्त्वित्यनुषङ्गः ।

विश्वं सत्यं मघवाना युवोरि-
दापश्चन प्र मिनन्ति व्रतं वाम् ।
अच्छेन्द्राब्रह्मणस्पती हविर्नो-
ऽन्नं युजेव वाजिना जिगातम्[9] ॥

गृत्समदस्य । विश्वं बहु सत्यं मघवाना मघवन्तौ[10] । युवोः युवयोः । इदिति पदपूरणः । अथवा सत्यमेतत् सर्वं जगद् युवयोः स्वभूतम् ।

---

१ [निरु० ५।२॥६।११]

२ [ऋ० ६।५७।१] 'इन्द्रा नु पूषणा' इत्येव प्रतीकः B. C.

३ द्विरूपैक B.

४ सख्याय B. संख्युय C.

५ [ऋ० ४।४९।१] 'इदं वामास्ये' इत्येव प्रतीकः B. C.

६ 'वामदेवस्य' इत्यारभ्य 'शेषः । हे इन्द्रा' इत्यन्तस्य पाठस्य स्थाने 'वामदेवेति पदपूरणः अथवा सत्यमेतत् सर्वं जगद् युवयोः स्वभूतं आपश्चनेति नि' इति पाठो वर्तते C.

७ त्वान्मदं B.

८ 'दि' इति त्रुटितम् C.

९ [ऋ० २।२४।१२] 'विश्वं सत्यम्' इत्येव प्रतीकः B. C.

१० मघवन्ता B.

आपश्चनेति[1] निपातोऽन्यत्राप्यर्थे। इह तु प्रतिषेधे। द्वेधा पदे पदकारेण नाश्रितेऽप्याश्रयितव्ये। आपश्चन प्र मिनन्ति व्रतं[2] मेघहननादिकम्। वां युवयोः फलाभावो हिंसाकर्मणः। अत एतदुक्तं भवति। हतमात्र एव मेघे आपश्चन प्रमिनन्ति[3] न हिंसन्ति। अत्रैकवाक्यतायै यत्तच्छब्दाध्याहारः। यावीदृशौ स्थस्तौ। अच्छ अभेरर्थे[4] जिगातमित्येतेन सम्बध्यते। हे इन्द्राबृहस्पती हविर्नोऽस्माकं स्वभूतमन्नं योग्याशनादि युजेव यथा युजौ सहयोगिनौ[5] वाजिना वाजिनावश्वौ। एवमभिजिगातमभिगच्छतम्।

इन्द्रापर्वता बृहता रथेन
वामीरिष आ वहतं सुवीराः।
वीतं हव्यान्यध्वरेषु देवा
वर्धेथां गीर्भिरिळया मदन्ता[6] ॥

विश्वामित्रस्य। इन्द्रापर्वता[7] हे इन्द्रापर्वतौ बृहता महता रथेन। वामीः वननीयाः प्रशस्याः। इषोऽन्नानि। आवहतमस्मान् प्रत्यानयतम्। किंविशिष्टाः। उच्यते। सुवीराः शोभनैर्वीरैः पुत्रैः पौत्रैश्च सहिताः[8]। किञ्च वीतं[9] भक्षयतम्। हव्यानि[10] हवींषि पुरोडाशादीनि। अध्वरेषु यज्ञेषु। देवा हे देवौ। वर्धेथां च गीर्भिः स्तुतिभिः। इळयाऽन्नेन च हविराख्येन मदन्ता माद्यन्तौ[11] तृप्यन्तावित्यर्थः।

इन्द्राकुत्सा वहमाना रथेना
वामत्या अपि कर्णे वहन्तु।

---

१ 'बृहस्पती उक्थं' इत्यारभ्य 'आपश्चनेति नि' इत्यन्तः पाठो द्विर्लिखितः C.
२ प्रतं C.
३ 'नन्ति' इति नास्ति B. C.
४ इहेरर्थे B. C.
५ योगिना B. C.
६ [ऋ० ३।५३।५] 'इन्द्रापर्वता' इत्येव प्रतीकः B. C.
७ 'इन्द्रापर्वता' इति त्रुटितम् B.
८ सहितः B.
९ पीतं B. C.
१० अन्यानि C.
११ मान्यन्तौ C.

निः षीमद्भ्यो धमथो निः षधस्थान्
मघोनो हृदो वरथस्तमांसि[1] ॥

अवस्योः। हे इन्द्राकुत्सौ **वहमाना** वहमानौ प्रापयन्तौ **रथेनात्मानम्। आ**[2] इत्युपसर्गो वहन्त्वित्येतेन सम्बध्यते। **वामत्या** अश्वा[3] **अपि कर्णे** अपठितमपि कर्मनामैतत्। करणमित्यस्य वा कर्मनाम्नश्छान्दसोऽकारलोपः कर्मण्यस्मदीये **आवहन्तु**। किञ्च **निः**[4] **सीमद्भ्यो निर्धमथः**। निरुपसर्गाभ्यासादत्राख्यातस्याप्यभ्यासो[5] द्रष्टव्यः। अभ्यासाच्चार्थभूयस्त्वम्। सीमिति परिग्रहार्थीयः सर्वपर्यायः। अद्भ्य इति द्वितीयार्थे चतुर्थी पञ्चमी वा अपः। एतदुक्तं भवति। सुष्ठु सर्वान् निर्धमथो[6] निर्गमयथः। अपो वृष्टिलक्षणाः। कुतः। **सधस्थात्** सहस्थानान्मेघात्[7]। एतच्च कुर्वन्तौ[8] **मघोनो** हविराद्येन धनेन धनवन्तौ यजमानस्य **हृदो** हृदयात्। **वरथो** वरयथो[9]ऽपनयथः। **तमांसि** तमोरूपाणि असत्यां वृष्टौ कथं[10] जीविष्यामः कथं पुत्राः कथं पौत्रा इत्येवमादीनि मानवानि दुःखानि।

अथवा **मघोन** इत्याद्यन्यथा योज्यते। उदकलक्षणेन[11] धनेन धनवतो मेघस्य। **हृदः** हृच्छब्देन सामीप्यादुदकं लक्ष्यते। उदकाद् **वरथो**[12]ऽपनयथस्तमांसि तमोरूपाणि तमस्स्थानि यान्यावरणानि।

इन्द्राविष्णू दृंहिताः शम्बरस्य
नव पुरो नवतिं च श्नथिष्टम्।
शतं वर्चिनः सहस्रं च साकं
हथो अप्रत्यसुरस्य वीरान्[13] ॥

वसिष्ठस्य। हे **इन्द्राविष्णू दृंहिता** दृढीकृताः **शम्बरस्य** स्वभूताः। **नव पुरो नवतिं च श्नथिष्टं** श्नथतिर्वधकर्मा हतवन्तौ स्थः। तांश्च श्नथन्तौ तत्रस्थान् **शतं वर्चिनो** दीप्तिमतोऽन्नवतो वा। **सहस्रं**[14] **च साकं** सह

१ [ऋ० ५।३१।९] 'इन्द्राकुत्सा' इत्येव प्रतीकः B. C.
२ 'आ' इति नास्ति B. C.
३ वामश्वः अश्वा B. वां आश्वः अश्वाः C.
४ नष्पी धमथः C.
५ भ्यानस्या B. C.
६ इन्धमथः C.
७ स्थानामो (मे C.) घात् C.B.
८ कुर्वन्तो B. C.
९ 'वरयथः' इति नास्ति B.
१० रथं C.
११ उदकवल B. C.
१२ वरयथो C.
१३ [ऋ० ७।९९।५] 'इन्द्राविष्णू' इत्येव प्रतीकः B. C.
१४ सवत्सं च C.

हथो[1] हतवन्तौ स्थः। अप्रति[2] प्रतीत्युपसर्गः। उपसर्गाश्च पुनरेवमात्मका यत्र क्रियावाची[3] शब्दः प्रयुज्यते तत्र क्रियाविशेषमाहुः। यत्र न प्रयुज्यते तत्र ससाधनां[4] क्रियामाहुः[5]। तेनात्र प्रतिशब्दः[6] ससाधनक्रियावचनत्वात् प्रत्यवतिष्ठमानशब्दस्यार्थे। अप्रत्यवतिष्ठमानान्। असुरस्य शम्बरस्य वीरान् पुत्रान् पौत्रांश्च।

इन्द्र॑वायू इ॒मे सु॒ता उप॒ प्रयो॑भि॒रा ग॑तम्।
इन्द॑वो वामु॒शन्ति॒ हि॥[7]

इति षष्ठे[8] व्याख्याता।

ननु नैरुक्तपक्षे इन्द्रस्य वायुना संस्तवानुपपत्तिरभिधेयस्याभेदात्। उच्यते। द्वावात्मानौ। अन्तरात्मा शरीरात्मा[9] चेति। अनेन प्रकारेणाधिष्ठात्रधिष्ठेयभेदादविरोधः।

प्रकृत्यव्यतिरेकेणापि प्रसङ्गादाह।

[ अथापि मित्रो वरुणेन संस्तूयते[10] ]

अथापि मित्रो वरुणेन सह स्तूयते। उदाहरणम्—

आ नो॑ मित्रावरुणा घृ॒तैर्गव्यू॑तिमुक्षतम्।
मध्वा॒ रजां॑सि सुक्रतू[11]॥

जमदग्नेः विश्वामित्रस्य वा। आ इत्युपसर्ग उक्षतमित्यनेन[12] सम्बध्यते। नोऽस्माकं स्वभूतम्। मित्रावरुणा हे मित्रावरुणौ। घृतैरुदकैः। गव्यूतिं गावो येन मार्गेण चरन्ति तमुक्षतम्। आसिञ्चतमित्यर्थः। न च

---

१ हथाः C.
२ अप्रती C.
३ वाचि शब्दं C.
४ ससाधनाः C.
५ क्रियामाह B. C. 'उपसर्गाश्च' इत्यारभ्य 'क्रियामाहुः' इत्यन्तः पाठो महाभाष्यादुद्धृतः ५.२.१. पृ० ३७६.
६ पति शब्दः B.
७ [ऋ, १ २।४] 'इन्द्रवायू' इत्येव प्रतीकः B. C.
८ [निरु० १।५]
९ महाभाष्ये १.३.२. पृ० २६२.
१० इदं मूलवाक्यं नास्ति B. C.
११ [ऋ० ३।६२।१६] 'आ नो मित्रावरुणा' इत्येव प्रतीकः B. C.
१२ इक्षत C.

केवलं गव्यूतिमेव। किं तर्हि। मध्वा उदकेन वृष्टिलक्षणेन। रजांसि सर्वानेव[1] लोकान्। हे सुक्रतू सुकर्माणौ।

पूष्णा रुद्रेण च सोमः।

उदाहरणम्—

सोमापूषणा जनना रयीणां
जनना दिवो जनना पृथिव्याः।
जातौ विश्वस्य भुवनस्य गोपौ
देवा अकृण्वन्नमृतस्य नाभिम्॥[2]

हे सोमापूषणौ[3] जनना जननौ जनयितारावित्यर्थः। कस्य। रयीणां धनानाम्। कस्य। सामर्थ्यात् स्तोतुर्यष्टुश्च यजमानस्य[4] च दातारावित्यर्थः। वृष्टिद्वारेण जनना जनयितारौ दिवो द्युलोकस्य। 'इतः प्रदानस्य[5] उपजीवन्ति' इति श्रुतेः। एवमेव जनना जनयितारौ पृथिव्याः पृथिवीलोकस्य। जातौ जातमात्रावेव च[6] सन्तौ युवां विश्वस्य सर्वस्य भुवनस्य भूतजातस्य[7] गोपौ गोप्तारौ। देवा अकृण्वन् कृतवन्तः। अमृतस्योदकस्य नाभिमाश्रयम्।

सोमारुद्रा युवमेतान्यस्मे
विश्वा तनूषु भेषजानि धत्तम्।
अव स्यतं मुञ्चतं यन्नो अस्ति
तनूषु बद्धं कृतमेनो अस्मत्[8]॥

हे सोमारुद्रौ युवं युवाम्। एतान्यस्मे अस्माकम्। विश्वा विश्वानि सर्वाणि। तनूषु शरीरेषु रोगोपशमकराणि[9] भेषजानि औषधानि धत्तम्[10]। अरोगशरीरानस्मान्[11] कुरुतमित्यर्थः। किञ्च अवस्यतं स्यतिरुपसृष्टो विमोचने विमुञ्चतमपनयतं वास्मत्त इत्यर्थः। अपनीय चान्यत्र नीत्वा मुञ्चतम्। यत्

---

१ सर्वांदेव लोकात् B. C.
२ [ऋ० २।४०।१] 'सोमापूषणा' इत्येव प्रतीकः B. C.
३ 'हे सोमापूषणौ' इति त्रुटितम् B.
४ मानश्च B. C.
५ [अनुपलब्धमूलमिदं वचनम्] इत प्रदान B. 'स्य' इति त्रुटितम् C. 'वृष्टिप्रदानेनास्य' इति पाठोऽत्र स्यात्।
६ 'च' इति नास्ति B.
७ 'जात' इति द्विर्लिखितम् C.
८ [ऋ० ६।७४।३] 'सोमारुद्रा' इत्येव प्रतीकः B. C.
९ काराणि C.
१० दत्तम् C.
११ रीरादस्मात् B. C.

नोऽस्माकमस्ति तनूषु बद्धं निबद्धम्। अस्यैव विवरणं कृतम्। किं तत्। एनः[1] पापमस्माभिरिति शेषः। असमत् पञ्चम्यन्तं पुरस्तात् कृतसम्बन्धम्।

अग्निना च पूषा।

इत्यपपाठः। 'न तु संस्तवः[2]' इति प्रतिषेधविरोधात्।

वायुना च पूषा।

इत्यस्ति[3] पाठः। उदाहरणम्—

प्र तव्यसो नमउक्तिं तुरस्या-
हं पूष्ण उत वायोरदिक्षि।
या राधसा चोदितारा मतीनां
या वाजस्य द्रविणोदा उत त्मन्[4]॥

आङ्गिरसो[5]ऽत्रिरपश्यत्। प्रेत्ययमदिक्षीत्यनेन[6] सम्बध्यते। तव्यस[7] इति तवतेर्वृद्ध्यर्थस्य तृचि 'तुश्छन्दसि[8]' इतीयसुनि 'तुरिष्ठेमेयस्सु[9]' इति लोपः। छान्दसत्वादोयसुन[10] आदिलोपेन रूपम्। तवीयसो[11]ऽतिशयेन वर्धितुः। तवशब्दस्य[12] बलनाम्नो मत्वन्तस्यापकर्षणेन बलवत[13] इत्यर्थः। नमउक्तिं स्तुत्युक्तिम्। तुरस्य त्वरणस्य। तुपूर्वस्य रिषतेर्वा[14] हिंसार्थस्य हिंसितुस्तमसाम्। अहं पूष्णः उत वायोः प्रादिक्षि 'दिश अतिसर्जने[15]' प्रकर्षेण दिशाम्यतिसृजाम्युच्चारयामीत्यर्थः[16]। या[17] यौ राधसा धनेन [चोदितारा[18]] चोदितारौ मतीनां स्तुतीनाम्। धनं ददतौ[19]तरतिक्रियायां स्तोत्रं चोदयत इत्यर्थः। या[20] यौ वाजस्यान्नस्य साकाङ्क्षत्वाद् दाताराविति

---

१ एनं पाप B.
२ [निरु० ७।८]
३ इत्यति पाठः B. C.
४ [ऋ० ५।४३।६] प्रतव्य सोम उक्तिं (क्तिः C.) B. C.
५ अङ्गिरसोऽग्नि (ति C.) रप B. C.
६ पेक्षययमदीक्षित्य B. C.
७ तप्यस B. C.
८ [पा० ५।३।५६]
९ [पा० ६।४।१५४]
१० यसुन् (न् C.) B. C.
११ तपीयसो B. C.
१२ तपः शब्द B. तवश्शब्द C.
१३ बलवन्त B. C.
१४ [ धा० १।६६५॥४।१२५ ] 'स्य रिष' इति त्रुटितम् B. C.
१५ [ धा० ६।३ ]
१६ जामुच्चा B, C.
१७ यो B. C.
१८ 'चोदितारा' इति नास्ति B. C.
१९ अस्य वाक्यस्य पाठः सन्दिग्धः।
२० य B. C.

शेषः। द्रविणोदा[1] द्रविणसो[2] धनस्य दातारौ[3]। उतशब्द एवार्थे। त्मन्[4] 'मन्त्रेष्वाङि[5]' इत्यादिलोपः। तृतीयायाश्च[6] लुक्। आत्मना आत्मनैवेत्यर्थः।

**वातेन च पर्जन्यः।**

उदाहरणम्—

**धर्तारो दिव ऋभवः सुहस्ता**
**वातापर्जन्या महिषस्य तन्यतोः।**
**आप ओषधीः प्र तिरन्तु नो गिरो**
**भगो रातिर्वाजिनो यन्तु मे हवम्[7]॥**

वसुकर्णस्य[8]। उदकदानप्रकाशकरणादिना केनापि स्वेनोपकारेण **धर्तारो** धारयितारो **दिवः**। **ऋभवो**[9] देवविशेषाः। **सुहस्ताः** शोभनहस्ताः। **वातापर्जन्या** वातापर्जन्यौ[10] च। **महिषस्य** महतः। **तन्यतोः**[11] स्तनयित्नुलक्षणस्य शब्दस्य। नित्यं धनं[12] धर्तारावित्यनुषङ्गः। **आप ओषधीः** प्रथमार्थे द्वितीया। ओषधयश्चाभिलषितफलप्रदानेन[13] **प्र तिरन्तु**[14] तरतिर्वृद्ध्यर्थः प्रवर्धयन्तु। **नो**ऽस्माकम्। **गिरः** स्तुतीः। **भगश्च रातिः** दातिः[15]। **वाजिनश्च** देवाः। **यन्तु** गच्छन्तु **मे** मम **हवमा**ह्वानम्।[16]

[ इति द्वादशस्या-( सप्तमस्या-) ध्यायस्य दशमः खण्डः। ][17]

—:०:—

१ 'दा' इति त्रुटितम् B.
२ द्रविणसा B. C.
३ दाता तौ B.
४ 'त्मन्' इति नास्ति B. C.
५ [ पा० ६।४।१४१ ]
६ यायां च B. C.
७ [ ऋ० १०।६६।१० ] 'धर्तारो दिव ऋभवः' इति प्रतीकः B. 'धर्तारो दिवः' इत्येव C.
८ वसुतरणस्य C
९ ऋतवो C.
१० 'वातापर्जन्यौ' इति त्रुटितम् B
११ तद्यतोः C.
१२ धनधर्ता B.
१३ 'न' इति नास्ति B. C.
१४ प्रकिरन्तु C.
१५ 'दातिः' नास्ति B. 'दातिः' इति द्विर्लिखितम् C.
१६ हविषामाह्वा B.
१७ आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेर्निर्देशो न दृश्यते।

[अथैका-शः खण्डः[१] ]

[अथैतान्यादित्यभक्तीनि । असौ लोकस्तृतीय-
सवनं वर्षा जगती सप्तदशस्तोमो वैरूपं साम
ये च देवगणाः समाम्नाता उत्तमे स्थाने याश्च स्त्रियः[२]]॥

**अथैतानी**त्यादि[३] । सूर्यभक्तीति वक्तव्ये आदित्यभक्तीति वचनं स्वे पक्षे सूर्यपर्यायतामादित्यस्य दर्शयितुम् । शेषं[४] पूर्ववद् योज्यम् । **देवगणा** आदित्यादयः । **याश्च स्त्रियः**—उषाः सूर्या वृषाकपायीत्यादयः[५] ।

[अथास्य कर्म रसादानं रश्मिभिश्च रसधारणं
यच्च किञ्चित् प्रवह्लितमादित्यकर्मैव तत्[६] । ]

कर्म तस्योदकस्यादानं[७] ग्रहणम् । **रश्मिभिश्च रसधारणम्** । अस्थाने यः पतितः । गृहीतरसधारणं च मण्डले । **प्रवह्लितं** चान्तर्धानकर्म[८] । रात्रिग्रह-नक्षत्रादिप्रच्छादनम् । तच्चासौ प्रकाशेनान्तर्धत्त इति । प्रवह्लितं[९] प्रकाशनमादित्यकर्मेत्यर्थः । अविद्यापनयेनात्मादिप्रकाशनम् ।

[ चन्द्रमसा वायुना संवत्सरेणेति संस्तवः[१०] ]

चन्द्रमसेत्यादिसंस्तवः । अल्पत्वादथास्येत्यादिना प्रपञ्चो[११] न कृतः । उदाहरणम् ।

पूर्वापरं चरतो माययैतौ
शिशू क्रीळन्तौ परि यातो अध्वरम् ।
विश्वान्यन्यो भुवनाभिचष्ट
ऋतूँरन्यो विदधज्जायते पुनः[१२] ॥

सूर्यायाः । एकः पूर्वोऽपर इत्येवं **चरतो** गच्छतः । मायया स्वया प्रज्ञया । **एतौ** सूर्याचन्द्रमसौ **शिशू** इव तौ[१३] **क्रीळन्तौ परि यातः**

---

१ आदर्शपुस्तकेष्वत्र खण्डस्यारम्भस्य निर्देशो न दृश्यते ।
२ अयं मूलपाठो नास्ति B. C.
३ तानित्यादि । सूर्यदत्तीति C.
४ शेषः पूर्व C.
५ यी ( यि C. ) त्यादयः B. C.
६ अयं मूलपाठो नास्ति B. C.
७ अत्र 'रसस्योदकस्य' इति युक्तः पाठो भवेत् ।
८ 'च' इति नास्ति C.
९ प्रवहितं B. C.
१० इदं मूलवाक्यं नास्ति B. C.
११ प्रपञ्चे न B. C.
१२ [ ऋ० १०।८५।१८। ] 'पूर्वापरम' इत्येव प्रतीकः B. C.
१३ तौन्यतौ C.

परिगच्छतश्च। अध्वरं यज्ञम्। विश्वानि सर्वाणि। अन्य एको भुवनानि भूतजातानि। अभिचष्टे अभिदर्शयति प्रकाशकरणेन सूर्यः। ऋतूनन्यश्चन्द्रमा आत्मनो वृद्धिक्षयाभ्यां विदधत् कुर्वन् जायते। पुनः भूयो भूयो मासि मासीत्यभिप्रायः।

वायुना संस्तुतिं वक्ष्यति—

सप्त ऋषयः प्रतिहिताः शरीरे
सप्त रक्षन्ति सदमप्रमादम्।
सप्तापः स्वपतो लोकमीयु-
स्तत्र जागृतो अस्वप्नजौ सत्रसदौ च देवौ[1] ॥

इत्यत्र। तत्र जागृतो[2] अस्वप्नजौ सत्रसदौ च देवौ वाय्वादित्या-[3] विति।

संवत्सरेण संस्तुतिरुक्ता—

सप्त युञ्जन्ति रथमेकचक्र-
मेको अश्वो वहति सप्तनामा।
त्रिनाभि चक्रमजरमनर्वं
यत्रेमा विश्वा भुवनाधितस्थुः[4] ॥

इत्यत्र। संवत्सरे प्रधान उत्तरोऽर्धर्च इति।

इदानीमनिर्दिष्टभक्तीनां शारदादीनां भक्तिप्रदर्शनायाह—

[एतेष्वेव स्थानव्यूहेष्वृतुच्छन्दः स्तोम-
पृष्ठस्य भक्तिशेषमनुकल्पयीत[5] ]

एतेष्वेवोक्तेषु 'अयं लोक' आदिस्थानसम्बन्धेन व्यूहेषु प्रातस्सवनवसन्तादि रचनाविशेषेषु ऋतुशब्द[6] इत्यादि द्वन्द्वैकवद्भावः। भक्तिशेषं यदत्रानुक्तभक्ति[7] तदानुपूर्व्येण कल्पयेत्।

---

१ [यजु० ३४।५५] 'सप्त ऋषयः प्रतिहिताः शरीरे' इत्येव प्रतीकः B. C,

२ जाग्रते B. C.

३ [निरु० १२।३७] वाय्वादित्या-विति B. C.

४ [ऋ० १।१६४।२ निरु० ४।२७] 'सप्त युञ्जन्ति' इत्येव प्रतीकः B. C.

५ अयं मूलपाठो नास्ति B. C

६ अत्र 'ऋतुच्छन्दः' इति युक्तः पाठः।

७ नुभक्तभक्ति C.

[शरदनुष्टुबेकविंशः स्तोमो वैराजं सामेति पृथिव्यायतनानि ।
हेमन्तः पङ्क्तिस्त्रिणवः स्तोमः शाक्वरं सामेत्यन्तरिक्षायतनानि ।
शिशिरोऽतिच्छन्दास्त्रयस्त्रिंशः स्तोमो रैवतं सामेति द्युभक्तीनि[१] ]

शरदनुष्टुबित्यादि । पृथिव्यायतनानि आयतनं स्थानम् । स्थानसम्बन्धेन च लक्षणयाग्न्यादिस्थानभक्तित्वमुच्यते । तथा च द्युभक्तीनीत्याह[२] भक्त्यन्वाख्यानं वार्षिकेष्वहस्सु 'अहश्चतुर्थेनाह्नाप्नुवन्ति अनुष्टुभं छन्द एकविंशति स्तोमं वैराजं साम उदीचीं दिशं शरदमृतूनाम्'[३] इत्यादीनां ब्राह्मणवचनानामुपपन्नरूपत्वाच्च[४] । असंविज्ञानपदेषु च मन्त्रेषु उक्तान्यतमसाहचर्येण देवतासंविज्ञानायेत्युक्तं पुरस्तात् ।

इदानीं देवतातद्भक्तिसाहचर्यव्याख्यानप्रसङ्गेन मन्त्रादिशब्दानां निर्वचनानि दर्शयति । कथं नामान्यत्र मन्त्राणां[५] मन्त्रत्वम् 'तस्माद्यज्ञात् सर्वहुत ऋचः सामानि'[६] इत्यादावुक्तनिर्वचना[७] एते स्युरिति ।

[इति द्वादशस्या-( सप्तमस्या- ) ध्यायस्य एकादशः खण्डः[८] । ]

---

## [ अथ द्वादशः खण्डः[८] ]

**मन्त्रा मननात् ।**

मन्त्राः कस्मात् । मननात् । मन्तव्या हि ते, मन्यन्ते तैरधिदैवादिविषया इति मन्त्राः ।

**छन्दांसि च्छादनात् ।**

छदिर्व्याप्त्यर्थः । न ह्यव्याप्तछन्दसा मिताक्षरः कश्चिन्मन्त्रोऽस्ति[९] । आवरणार्थस्यैव वा[१०] ब्राह्मणोक्तनिर्वचनम्[११] 'यदेभिरात्मानमाच्छादयन् देवा मृत्योर्बिभ्यतस्तच्छन्दसां छन्दस्त्वम्[१२]' इति विज्ञायते ।

---

१ अयं मूलपाठो नास्ति B. C.
२ भक्तिनीत्यादिह B. C.
३ [कौ० ब्रा० २२।६]
४ त्वा च B. त्वाय C.
५ मात्राणां B. C.
६ [ऋ० १०।९०।९]
७ दावुक्तिनि B. C.
८ आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।
९ कस्मिन्म C.
१० या B. C.
११ णोक्तिनि B. C.
१२ शत० ब्रा० ८।५।२।१ तान्यस्मै अच्छदयंस्तानि यदस्मा अच्छदयंस्तस्माच्छन्दांसि ॥ छां० उप० १।४।२ यदेभिरच्छादयंस्तच्छन्दसां छन्दस्त्वम् ।

**यजुर्यजतेः ।**

प्रायेण हि याजुष्या होममन्त्राः[१] । ऋगुक्तनिर्वचनाच्चेति[२] ।

**साम सम्मितमृचा ।**

यावदृक् तावदेव साम । समः सकारः । ऋचेति तृतीयान्तादाकारः । मिमीतेर्मकारः[३] । **अस्यतेर्वा** क्षेपणार्थस्य[४] क्षिप्तं[५] हि तदृगक्षरेषु । 'ऋच्यध्यूढं साम गायति[६] ' इति श्रुतेः । **स्यतेर्वा** [७] ऽवसानार्थस्य । ऋच्येव हि तदवसितं तिष्ठितं[८]भवति । उभयत्र मो नामकरणः ।

आद्यमेव निर्वचनमागमेन द्रढयन्नाह ।

**[ऋचा समं मेन इति नैदानाः[९]]**

ऋचा समं मेने ज्ञातवान् प्रजापतिः सामैवमात्मानं[१०] तत्साम्नः सामत्वमिति । एवमादीनां[११] नामग्रन्थः तद्विदो मन्यन्त इति शेषः ।

**[गायत्री गायतेः स्तुतिकर्मणस्त्रिगमना वा विपरीता गायतो मुखादुदपतदिति च ब्राह्मणम्[१२]]**

गायत्री गायतेः स्तुत्यर्थस्य । स्तूयते हि तया देवता । **त्रिगमना**[१३]**वा** त्रिभिः पादैर्गमनं वर्तनं सा त्रिगायेति[१४] विपरीताक्षरा गायत्री । ब्राह्मणोक्तं वा निर्वचनम् । गायतः प्रजापतेर्वा मुखादुत्पत्तिस्तस्मान्निःसृता[१५] ।

**[उष्णिगुत्स्नाता भवति । स्निह्यतेर्वा स्यात् कान्तिकर्मणः । उष्णीषिणीवेत्यौपमिकम् । उष्णीषं स्नायतेः[१६]]**

---

१ 'म' इति त्रुटितम् B. C.
२ 'इति' द्विर्लिखितम् B.
३ मिमीते मृकारः B. C.
४ [धा० ४।१०३] पेक्षणार्थे B. C.
५ क्षिप्रं B.
६ [छा० उ० ११६-७]
७ [धा० ४।४१]
८ अत्र 'निष्ठितं' इति युक्तः पाठः ।
९ इदं मूलवाक्यं नास्ति B. C.
१० अत्र 'सामैवात्मानं' इति पाठः स्यात् ।
११ अत्र 'एवं निदानो नाम ग्रन्थः' इति पाठो युक्तः ।
१२ अयं मूलपाठो नास्ति B. C.
१३ पा (वा C.) त्रिगमना पा (वा C.) तिभिः B. C.
१४ सा तिगायेति विवरीता B.
१५ 'तस्मात्' इति द्विर्लिखितम् B. C.
१६ अयं मूलपाठो नास्ति B. C.

उष्णिगुत्स्नाता 'ष्णै वेष्टने[1]' गायत्रीतश्चतुर्भिरक्षरैः[2] पूर्वं वेष्टितेव। आह च 'उष्णिग्गायत्रौ जागतश्च[3]' इति। चतुरुत्तराणि चोत्तरच्छन्दांसि। **स्निह्यतेर्वा स्यात्।** [4]कान्तमेतद्देवानां च्छन्दः। अथवा चत्वार्यक्षराण्यतिरिच्यमानान्यस्या[5] उष्णीषस्थानीयानि। अत उपमाप्रयुक्तमेतदभिधानम्। उष्णीषिणी वोष्णिगिति। प्रसङ्गादाह **उष्णीषं** शिरोवेष्टनं **स्नायतेः** शौचार्थस्य वेष्टनार्थस्य वा। उभयार्थस्यापि[6] तत्र सम्भवात्।

**ककुप् [ककुदिनी भवति। ककुप् च कुब्जश्च कुजतेर्वा। उब्जतेर्वा[7]]**

एतदप्यौपमिकम्। मध्यमस्य जागतत्वात्[8]। चतुरक्षरं ककुदस्थानीयमस्याम्[9]। तेन तद्वती ककुदिनी[10] भवति। तद्दकारस्य पकारापत्त्या[11] परलोपेन[12] च ककुप्। ककुद्[13] खुरविषाणार्थस्य रूपम्। 'ककुदस्यावस्थायां लोपः[14]'। 'मुमोद गर्भो वृषभः ककुद्मान्[15]' इति लोके वेदे च गौरवविशेषविषयत्वेन ककुदशब्दस्य प्रसिद्धेः। ककुभिनीत्यपपाठः[16]। ककुभशब्दस्यार्थान्तरे क्वचिद् ग्रन्थे स्मरणात्। 'काकुभं दन्तधावनम्[17]' इति। मुमोद गर्भ इत्यादौ निरुक्तस्यातिप्रसङ्गादाह। **ककुप् च कुब्जश्च कुजतेः** कौटिल्यार्थस्य। **उब्जतेर्वा** न्यग्भावार्थस्य। ईषद्भग्नभावात्। उभयथार्थोपपत्तेः।

**अनुष्टुबनुष्टोभनात्। [गायत्रीमेव त्रिपदां सतीं चतुर्थेन पादेनानुष्टोभतीति च ब्राह्मणम्[18]]**

स्तोभतिर्वृद्ध्यर्थः[19]। पादवृद्धेः। तथा च ब्राह्मणम्। **गायत्रीमेवे**त्यादि। **अनुष्टोभति**[20] अनुसंवर्धयति।

---

१ [धा० ११४४८] वै ष्णै वेष्टने B.
२ यत्रीति कश्च B. C.
३ [पिङ्ग० ४।१८ [ उष्णिग्गायत्र्यो जगतश्च B. C.
४ का तदर्थेतद्देवानां B. C.
५ मानास्याहुष्णी B. C.
६ उभयस्यापि C.
७ 'ककुप्' इत्येव प्रतीकः B. C.
८ जागतार्थात् B.
९ ककुभस्थानीयमस्याः C.
१० ककुभिनी B. ककुदीनि C.
११ परावत्या B.
१२ 'न' इति त्रुटितम् C.
१३ अत्र 'ककुदं' इति पाठः स्यात्।
१४ [पा० ५।४।१४६]
१५ [ऋ० १०।८।२] वृतः कक़ु B वृषभः कक़ु C,
१६ कुभनी B. नीत्यवपा C.
१७ [अनुपलब्धमूलमिदं वचनम्]
१८ 'अनुष्टुबनुष्टोभनात्' इत्येव प्रतीकः B. C.
१९ तिर्विध्यर्थः C.
२० अनुष्टोभति C.

बृहती परिबर्हणात्।

बृहिर्वृद्ध्यर्थः[1]। सर्वपादेष्वेकाक्षरवर्धनादित्यर्थः[2]।

पङ्क्तिः पञ्चपदा।[3]

अस्या इत्यर्थः।

त्रिष्टुप् [स्तोभत्युत्तरपदा। का तु त्रिता स्यात्। तीर्णतमं छन्दः। त्रिवृद् वज्रस्तस्य स्तोभनीति वा। यत् त्रिरस्तोभत् तत् त्रिष्टुभस्त्रिष्टुप्त्वम्। इति विज्ञायते[4]]

प्रविभज्य[5] दर्शयति। स्तोभतिः स्तुतिकर्मा उत्तरपदमस्या बहुव्रीहिः। पूर्वपदस्य त्रिशब्दस्य किं प्रवृत्तिनिमित्तमिति पृच्छति। का पुनस्त्रितेति। तीर्णतमं पूर्वेभ्यो महत्त्वात् तीर्णतमम्[6]। तरतेस्तृणातेर्वा पूर्वपदम्। उभयथार्थोपपत्तेः। तरणात्[7] स्तोभनाच्चेति द्विधातुजत्वम्[8]। त्रिवृत्[9] शब्दाद्वा पूर्वपदमित्याह। त्रिवृद्[10] वज्र इति। उभयतस्त्रिकोटित्वात् त्रिवृत्त्वम्[11]। तस्य स्तोभनी स्तोभति[12] स्तौति। तथा च ब्राह्मणं दर्शयति। अस्तोभदित्यादि[13]। यस्मात् त्रिस्कृत्य तया[14] वज्रमस्तोषत।

[इति द्वादशस्या-(सप्तमस्या-) ध्यायस्य द्वादशः खण्डः][15]

---

## [अथ त्रयोदशः खण्डः।[15]]

जगती [गततमं छन्दो जलचरगतिर्वा। जल्गल्यमानोऽसृजत्। इति च ब्राह्मणम्[16]]

पूर्वेभ्यो महत्त्वादतिशयेन गतम्। अनवस्थितत्वाद्वा[17] जलतरङ्गचला गतिः प्रस्तारो यस्याः। बहुप्रकारप्रस्तारेत्यभिप्रायः[18]। जल्गल्यमानः। आवि-

---

१ वध्यर्थः C.
२ वृद्धना C.
३ पञ्चवेदा C.
४ 'त्रिष्टुप' इत्येव प्रतीकः B. C.
५ 'भ' इति त्रुटितम् C.
६ तमः B. तमं पा C.
७ स्तरणात् B. 'तरणा' इत्येव C.
८ द्विधा भुजत्वम् B. C.
९ तृपृत् C.
१० तृपृत् C.
११ तपूत्त्वम् C.
१२ स्तौति भति C. अत्र 'तस्य स्तोभति स्तौति' इत्येतावानेव पाठः साधीयान् भवेत्।
१३ रस्तौभन्नित्यादि C.
१४ स्तया B. C.
१५ आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य वा निर्देशो न दृश्यते।
१६ 'जगती' इत्येव प्रतीकः B. C.
१७ 'त्व' इति त्रुटितम् B.
१८ कारः प्रस्ता B. C.

शलोदा[1] धर्म्यादिषु पठ्यते। अत्यर्थं ग्लायन् प्रजापति[2]र्निर्विण्णः सन् सृष्टवानिति[3] ब्राह्मणमाह[4] ।

**[विराड् विराजनाद्वा विराधनाद्वा विप्रापणाद्वा। विराजनात्सम्पूर्णाक्षरा। विराधनादूनाक्षरा। विप्रापणादधिकाक्षरा। पिपीलिकामध्येत्यौपमिकम्। पिपीलिका पेलतेर्गतिकर्मणः[5] ]**

विराडित्यादि निगदव्याख्यातम्। अन्ते च विराजो निर्वचनं श्रैष्ठ्यात्। अन्तं वै श्रेष्ठो भवत इति श्रैष्ठ्यां च ब्राह्मणेदाम्यः श्रीर्वै विराज्यं नाद्यं[6] चेति। **पिपीलिकामध्येत्युपमाप्रयुक्तं नाम।** अल्पाक्षरमध्यमपादत्वात्। पिपीलिकामध्यमिव मध्यं यस्या इत्युत्तरपदलोपी समासः। प्रदर्शनं चेदं यवमध्यादीनां छन्दोनाम्नां निर्वचनस्य। **पिपीलिका न**[7] ह्यसौ क्षणमप्युदास्ते।

**[इतीमा देवता अनुक्रान्ताः। सूक्तभाजो हविर्भाज ऋग्भाजश्च भूयिष्ठाः[8] ]**

**इतीमा** इत्यादि। एवमनेन[9] प्रकारेण **इमा** अग्न्याद्या[10] **देवता** देवपत्न्यन्ताः सामान्येन लक्षणेनानुक्रान्ताः। ताः[11] पुनः काश्चित् सूक्तं भजन्ते काश्चित्[12] हविः। काश्चिदुभयम्[13]। काश्चिदृचम्। यथा सूर्यः[14]। सर्वातिशयेन बह्व्यः। अन्ये [15]भूयिष्ठवचनमसमाम्नातपरमेष्ठिप्रहनक्षत्रसर्पलाङ्गलप्रभृत्युपसंग्रहं[16] मन्यन्ते। चशब्दादर्धर्चभाजः[17] पादभाजश्च। तथा तस्याह एकान्तराया अर्धर्चोऽन्त्यो द्विदैवत्यः। ह्यामोत्याग्नेयः पाद इत्यादि शौनकाचार्यदर्शनम्। अयमपि च वक्ष्यति 'आदित्यदैवतो द्वितीयः पादः'[18] इति।

---

१ अस्य वाक्यस्य पाठः सन्दिग्धः।
२ पतिं नि B. C.
३ पृष्टवा B. C.
४ णवानिति B.
५ अयं मूलपाठो नास्ति B. C.
६ अयं पाठः सन्दिग्धः।
७ तह्यसौ B. नह्यसौ C.
८ अयं मूलपाठो नास्ति B. C.
९ मदेकेन C.
१० मग्नाद्या B. C.
११ 'ताः' इति नास्ति B. C.
१२ कां (का C.) चित् प्रविः B. C.
१३ 'काश्चिदुभयम्' इति त्रुटितम् C.
१४ यथा आर्य्यः C.
१५ मेष्ठी गृह B. C.
१६ सर्वलाङ्ग (ङ्गू B) ल B. C.
१७ 'च' इति नास्ति B. C.
१८ [ निरु० ११।६ ] देवतो द्वितीयपादः B. C.

[काश्चिन्निपातभाजः[१] ]

**काश्चि**देवाल्पा इत्यर्थः । **निपातभाजः** समाम्नाताः । निपातशब्दश्च शुद्धोऽपि संपूर्वार्थे[२] द्रष्टव्यः । साधारणस्तुतित्वात् । अत एतदुक्तं भवति । देवतान्तरेण सह स्तुतिसन्निपातभाजः । तथा च वक्ष्यति । 'विधाता धात्रा व्याख्यातः । तस्यैष[३] निपातो भवति बहुदेवतायामृचि[४]' । 'सोमस्य राज्ञः [५]' इति । न तु पुनर्नैघण्टुकत्वेन निपातभाक्त्वं दैवते काण्डे समाम्नातानामवकल्पते[६] । 'तद्यानि[७] नामानि प्राधान्यस्तुतीनां देवतानाम्'[८] इत्यनेन विरोधात् ।

**[ अथोताभिधानैः संयुज्य हविश्चोदयति । इन्द्राय वृत्रघ्न इन्द्राय वृत्रतुर इन्द्रायांहोमुच इति । तान्यप्येके समामनन्ति[९] ]**

**अथोत** उतशब्दश्चार्थे । अनन्तरं च परेषामतिप्रसङ्गमात्मनश्च व्युदासं[१०] दर्शयितुमिदमुच्यते । **अभिधानै**र्गुणानामिति शेषः । वृत्रहादिभिर्गुणपदैरित्यर्थः । संयोगैर्गुणिनं हविश्चोदयति श्रुतिः । **इन्द्राये**त्यादि प्रदर्शनं चेदम् । अग्नये पवमानाय मरुद्भ्यः[११] क्रीळिभ्य इत्यादीनाम् । तान्यपि गुणाभिधानानि एके नैरुक्ताः पठन्ति । इन्द्रो वृत्रहा इन्द्रोऽहोमुर्गाति[१२] । श्रूयमाणगुण-[१३] विशिष्टाया एव देवतायाः सम्प्रदानत्वमभिमन्यमानो[१४] भाष्यकार आह । तद्युक्तम्—

**[भूयांसि तु समाम्नानात् । यत्तु संविज्ञानभूतं स्यात् प्राधान्यस्तुति तत्समामने[१५] ]**

**भुयांसि तु** । तु शब्दो हेतौ । भूयस्त्वं प्रभूतोपलक्षणार्थम् । यस्मात् **भूयांसि** प्रभूतान्यपर्यन्तानि तेषां **समाम्नानात्** स्युः । ऐश्वर्यात्

---

१ इदं मूलवाक्यं नास्ति B. C.
२ संपूर्थे B. पीसंपार्थे C.
३ तस्यैव B. C.
४ [ निरु० ११। ११ ]
५ [ ऋ० १०।१६७।३॥ निरु० ११।१२ ]
६ मयक B.
७ नद्यादिनामानि B. C.
८ [ निरु० ७।१ ]
९ अयं मूलपाठो नास्ति B. C.
१० उत युदासं C.
११ मरुद्भिः क्रीळिभ्यः B.
१२ इन्द्रो हांमांगिति B.
१३ 'गुण' इति त्रुटितम् C.
१४ दायत्व C.
१५ अयं मूलपाठो नास्ति B. C. अत्र 'समामने' इत्यस्य स्थाने 'समामनेत्' इति पाठः स्यात्

गुणिनि गुणविशिष्टानां[1] संख्यानासम्भवात्। ततश्चानवस्थाप्रसङ्गादध्येतारः शास्त्रात् पराभज्येरन्। तस्माद् यदेव **संविज्ञानभूतं**[2] रूढितामापन्नं स्यात् **प्राधान्यस्तुति** च। एतदुक्तं भवति। यद् गुणित्वेनैव दृष्टं न कदाचिच्छेषभूतं **तत्समामनेत्** पठेदित्यर्थः। एवमेव च कृत्वा दैवतस्य मया स्वरूपं दर्शितं तद्यानि नामानि।

**[अथोत कर्मभिर्ऋषिर्देवताः स्तौति वृत्रहा पुरन्दर इति।
तान्यप्येके समामनन्ति। भूयांसि तु समाम्नानात्।
व्यञ्जनमात्रं तु तत्तस्याभिधानस्य भवति[3]]**

**अथोत** एवमेवेत्यर्थः। **कर्मभिः** कर्मशब्दैः क्रियानिमित्तैरित्यर्थः। ऋषिर्वेदो देवतामिन्द्रं स्तौति। वृत्रं हतवान् वृत्रहा। पुरो दारितवान् पुरन्दर इति न[4] पठेत्। प्रदर्शनं चेदं 'अग्निं होतारं' 'अग्निं पुरोहितम्' इत्यादेः। एवमत्रापि क्रियापदनिमित्तपदसमाम्नानात् भूयस्त्वमेव केवलं स्यात्। कुतः। यतोऽर्थविशेषस्याभिव्यञ्जनमात्रं[5] गुणकर्मोपनिधानमात्रेण हि **तत्तस्य** संविज्ञानभूतस्येन्द्रादे**रभिधानस्य भवति**।

**अस्य दृष्टान्तः**—

**[यथा ब्राह्मणाय बुभुक्षितायौदनं देहि।
स्नातायानुलेपनं, पिपासते पानीयमिति[6]]**

**यथा ब्राह्मणायेति**। अस्य सामान्यविशेषवचनस्य संविज्ञानभूतस्य सम्प्रदानत्वेन श्रुतस्य च बुभुक्षितायेत्यादि समानाधिकरणं विशेषणं गुणक्रियोपनिधानेनार्थस्य व्यञ्जनमिति।

इति महेश्वरविरचिते[7] निरुक्तभाष्यविवरणसमुच्चये[8] द्वादशस्य
[सप्तमस्याध्यायस्य[9]] तृतीयः पादः।
[त्रयोदशश्च खण्डः समाप्तः[9]]

---

१ 'ष्टानां' इति C. पुस्तके 'नां' इति B. पुस्तके च त्रुटितम्।
२ नरूतं C.
३ अयं मूलपाठो नास्ति B. C.
४ 'न पठेत्' इति नास्ति C.
५ स्यापर्यंजन B. स्योपर्यंजनं C.
६ अयं मूलपाठो नास्ति B. C.
७ श्वरकृते C.
८ रणे समु B.
९ अयं कोष्ठकान्तर्गतः पाठो नास्त्यादर्शपुस्तकेषु।

## अथ चतुर्थः पादः ।[१] [अथ चतुर्दशः खण्डः]

### अथातोऽनुक्रमिष्यामः ।

[२]सप्तमद्वितीयपादादावथातः[३] शब्दावुक्तार्थौ । एवं[४] तावत् सामान्येन सर्वदेवतानां लक्षणं सप्रपञ्चमभिधायानन्तरं प्रतिपदं विशेषेण वक्तव्याकाङ्क्षास्तीति । अतस्तद्विवक्षयानुपूर्व्येण[५] यथासमाम्नायम**नुक्रमिष्यामो** व्याख्यानेनेति शेषः । कथम् । भूया निर्वाच्यस्योद्देशः । तन्निर्वचनम् । प्राधान्यस्तुतिप्रदर्शनार्थ[६]मुदाहरणम्[७] । 'स न मन्येत[८]' इत्यादिविचारः । 'यस्तु सूक्तं[९] भजते[१०]' इत्यादि । 'अयमेव[११]' इत्यवधारणम् । एवं प्रकारया[१२] ।

**[ अग्निः पृथिवीस्थानः । तं प्रथमं व्याख्यास्यामः । अग्निः कस्मात् । अग्रणीर्भवति । अग्रं यज्ञेषु प्रणीयते । अङ्गं नयति संनममानः[१३] ]**

**अग्निः पृथिवीस्थान** इत्यादि[१४] स्वपक्षमनूद्य तं मुख्यत्वात् **प्रथमं व्याख्यास्याम** इति प्रतिज्ञापुरस्सरमग्नेः[१५] प्रवृत्तिनिमित्तमाह । **अग्निरग्रणीः** प्रधानो देवतानाम् । मुख्यसंस्तुतः[१६] । सेनानीत्वाद्वा । 'अग्निर्देवतानां

१ अयं सर्वः पाठो नास्ति C. M.
२ निरुक्तद्वितीयाध्यायस्य द्वितीयपादादावित्यर्थः ।
३ 'दा' इति त्रुटितम् C. वथाथः B. C.
४ 'एवं' इत्यारभ्य 'लक्षणं स' इत्यन्तः पाठस्त्रुटितः M.
५ 'वक्षया' इत्यारभ्य 'व्या' इत्यन्तः पाठस्त्रुटितः M.
६ 'स्तुति' इत्यारभ्य 'नार्थम्' इत्यन्तः पाठस्त्रुटितः M.
७ उदाहरणमित्यस्यानन्तरम्— 'अग्निमीळे इत्यादि स न मन्येतेत्यादिविचारः' M.—तन्निर्वचनम् स न...विचारः B. C.
८ [निरु० ७।१६]
९ 'ते' इत्यारभ्य 'पृथिवी' इत्यन्तः पाठस्त्रुटितः M.
१० [निरु० ७।१८] ११ [निरु० ७।१८]
१२ प्रकाय B. C. 'एवं प्रकारेण' इति पाठस्त्वत्र युक्तः स्यात्
१३ अयं मूलपाठो नास्ति B. C. त्रुटितः M.
१४ 'दि' इति त्रुटितम् B. C. इति M.
१५ 'पुरस्सरं' इत्यारभ्य 'प्रधानो दे' इत्यन्तः पाठस्त्रुटितः M.
१६ मुख्य संस्तुतम् C. मुख्यसंस्कृतम् B.

सेनानीः[१] ' इति हि विज्ञायते[२] । अग्रोपपदात् 'सत्सूद्विष[३] ' इत्यादिना क्विप् । यद्वा अग्रं प्रथमं यज्ञेषु कर्तव्येषु तादर्थ्येन[४] प्रणीयते । अग्रशब्दादेव नयतेश्च पूर्ववत्[५] प्रत्ययः स एव[६] । अपरभागे[७] केवलं साधनभेदः पूर्वं कर्तरि[८] अधुना कर्मणि । विषयभेदश्च ( सेनायज्ञलक्षणः[९] । ) यद्वा अङ्गं शरीरं यज्ञस्य तन्नयति । सन्नममानः[१०] कर्मकर्तरि[११] शानच् । सम्यक् स्वयमेव प्रह्वीभवन् । हविषां वा करणत्वेन साधनभावं प्रतिपद्यमान इत्यर्थः । अस्मिन् पक्षे अङ्गशब्दात्[१२] पूर्वभागः । सन्नमतेः परभागः । इकारोऽन्तकरणः[१३] । सर्वत्र वाक्यार्थपदवचनं[१४] श्रोत्रियवत्[१५] । यत्र पादादौ[१६] सन्नमत्रव गच्छति[१७] तदङ्गं नयति आत्मसात्करोति अधिकरोतीति यावत् । एवमर्थस्यान्यत्वं व्युत्पत्तिः सैव ।

**अक्नोपनो[१८] भवतीति स्थौलाष्ठीविः । न क्नोपयति न स्नेहयति[१९] ।**

नञोऽकारः क्नोपयतेः स्नेहार्थस्य ककारनकारौ । ककारस्य गकारापत्तिः । इकारोऽन्तकरणः । स्थूलाष्ठीवः कश्चित् । स च[२०] बाह्वादिषु[२१] द्रष्टव्यः । तदपत्यं स्थौलाष्ठीविराचार्यो मन्यते । किमिदमक्नोपन[२२] इति ।

---

१ [ऋ० १०।११०।११॥४।१।२० ऐ० ब्रा० ६।१४। अग्निना वै मुखेन देवा असुरान् निर्जघ्नुः ।

२ 'यते' इत्यारभ्य 'अग्रं' इत्यन्तः पाठस्त्रुटितः M.

३ [पा० ३।२।६१]

४ र्थ्येषु न B.

५ 'देवत्' इत्यारभ्य 'कर्मणि' इत्यन्तः पाठस्त्रुटितः M.

६ 'पूर्वस्य' इत्येव पाठः B. C.

७ अपरभागौ B. C.

८ क (कृ C.) र्तरियधुना B. C.

९ क्षया C. सेनालक्षणयज्ञलक्षया B. कोष्ठकान्तर्गतः पाठो नास्ति M.

१० ममाह कर्म B. C.

११ 'कर्तरि' इत्यारभ्य 'हविषां वा' इत्यन्तः पाठस्त्रुटितः M.

१२ '०शब्दात्' इत्यारभ्य '०सर्वत्र' इत्यन्तः पाठस्त्रुटितः M.

१३ न्त प्रकर B. C.

१४ ०र्थे M.

१५ श्रोत्रियावत् C.

१६ पादास्मादौ B. C. अथवा 'यागादौ सन्नमन्नेव गच्छति' इति पाठोऽत्र भवेत् । पादार्थादौ M.

१७ 'गच्छति' इत्यारभ्य 'अधिकरो०' इत्यन्तः पाठस्त्रुटितः M.

१८ 'न क्नोपन इत्यादि' एव प्रतीकः B. C. 'अक्नोपनो' इत्यारभ्य 'स्नेहार्थस्य' इत्यन्तः पाठस्त्रुटितः M.

१९ अयं मूलपाठो नास्ति B. C

२० 'स च' इति त्रुटितम् B.

२१ [पा० ४।१।९६] बाह्वादि C.

२२ पनय इति B C.

न क्नोपयति। एवमपि न गृह्यते। क्नोपयतेरर्थान्तरे प्रसिद्धत्वात्। अनेकार्था धातव इत्याह। न स्नेहयति। नञ्विशिष्टस्नेहयतेः स्नेहनविपरीतं विरूक्षणं लक्ष्यते। विरूक्षयतीत्यर्थः। दग्धव्यस्यैधादेः शोषणादक्नोपनो विरूक्षण इत्यर्थ।

[त्रिभ्य आख्यातेभ्यो जायत इति शाकपूणिः।
इतात्। अक्ताद्दग्धाद्वा। नीतात्। स खल्वेते-
रकारमादत्ते गकारमनक्तेर्वा दहतेर्वा नीः परः[1] ]

त्रिभ्य आख्यातेभ्यो धातुभ्यः[2]। तत्र [3]वाच्यक्रियाक्षरानुगमादित्यभिप्रायः। कतमेभ्यस्त्रिभ्य इत्याह। इतादित्यादि। एतेरञ्जेर्दहेर्वेति वक्तव्ये क्तान्तानामुपादानं[4] रूपप्रत्यासत्तिप्रदर्शनार्थम्[5]। अञ्जेर्जकारस्य दहेश्च हकारस्य निष्ठायां गकारापत्तिर्दृष्टेति। इतान्नीता[6]दिति तु तत्साहचर्यात्[7]। किं कुत इत्याह। स खलु शाकपूणिरग्निशब्दो वा एतेः अयनमित्यादिरूपत्वेन परिणतस्याकारमादत्ते। गकारं विकल्पेन। नीः नयतिः परो डिप्रत्ययान्तः। इतश्चात्रायमभिव्यक्तश्च[8] सुप्रकाशत्वाद्दाहात्मकत्वेन[9] वा नयति हविर्देवान् प्रतीत्यग्निः।

[ तस्यैषा भवति[10] ]

तस्य प्राधान्यस्तुतिप्रदर्शनायैषा प्रथमातिक्रमे कारणाभावात् समर्था भवति।

[ इति द्वादशस्या-( सप्तमस्या- ) ध्यायस्य चतुर्दशः खण्डः। ][11]

---

## [ अथ पञ्चदशः खण्डः[11]। ]

अ॒ग्निमी॑ळे पु॒रोहि॑तं
य॒ज्ञस्य॑ दे॒वमृ॒त्विज॑म्।
होता॑रं रत्न॒धात॑मम्[12] ॥

---

१ अयं मूलपाठो नास्ति B. C.
२ भ्यः या तत्र B. C. 'भ्यो वा तत्र' इति वा स्यात्।
३ क्षरासुगमा B.
४ नामुमादानं C
५ सक्ति प्र C.
६ इतानीता B. C.
७ 'त' इति त्रुटितम् C.
८ श्चात्राय B. C.
९ शत्वाद्दाहात्म B. C.
१० इदं मूलवाक्यं नास्ति B. C.
११ आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते।
१२ [ ऋ०१।१।१] अग्निमीळे' इत्येव प्रतीकः B. C.

मधुच्छन्दसः परा च। **अग्निमीळे** 'ईड स्तुतौ'[1] याच्ञायां[2] वा। यद्वा अध्येषणायाम्[3] । स्तौमि याचे। अध्येषणायामिति[4] । पूजाकर्मा वा। कीदृशम्। **पुरोहितं** शान्तिकपौष्टिकाभिचारिकैः कर्मभी राजानं सर्वापद्भ्यस्त्रायते यः स पुरोहित उच्यते तत्स्थानीयम्। कस्य। **यज्ञस्य** आपदामपहर्तारमित्यर्थः। कुत एतत्। यद्धि[5] होतारो यज्ञस्येत्यादि सर्वं तदग्निर्देवो होतानुर्लक्षणं करोतिश्रुतेः। **देवं** देवेभ्यो मनुष्येभ्यश्चाग्निर्ददाति तदायत्तत्वात्तस्य। दीपयति च। न च यज्ञस्य देवमेव केवलम्। किन्तर्हि। **ऋत्विजञ्च**[6] कतमम्। **होतारं** 'अग्निर्वै देवानां होता'[7] इति श्रुतेः। अथवा ऋत्विग्[8]-होतृशब्दावपि क्रियाशब्दावेव। ऋतावृतौ काले काले[9] यो यागकालस्तस्मिन् यष्टारमृत्विजम्। होतारमाह्वातारम्। कस्य। सामर्थ्याद्देवानाम्। यद्वा **जुहोतेर्होता**[10] होमकारिणं तदधिकरणत्वप्रतिपत्त्या। **रत्नधातमं** रत्नानामतिशयेन दातारम्।

पुरोहितो व्याख्यातः सप्तमे[11] 'पुर एनं दधति' इति। यज्ञश्चाष्टमे[12] व्याख्यातः 'यजतिकर्मेति'। **दीपनात् द्योतनाद्वेति** धात्वन्यत्वमात्रम्। द्युस्थानसामान्येन वा देवशब्दस्य निर्वचनादविरोधः। हविर्वहनकर्मण्य वा पृथिवीस्थानत्वम्। अधिष्ठात्रात्मना द्युस्थानत्वमित्यभिप्रायः। **यो देवः सा देवता** देवात्तलोऽनर्थकवृत्तित्वस्मरणात्। इत्येवाह[13] आचार्यः।

**[तस्यैषा परा भवति[14]]**

**तस्याग्नेरेषा** वक्ष्यमाणा पूर्वस्याः **परा** अनन्तरा सर्वाग्नेयीत्वादुदाहरणं **भवति**।

[इति द्वादशस्या-(सप्तमस्या-)ध्यायस्य पञ्चदशः खण्डः।][15]

---

१ [ धा० २।६ ]
२ याञ्चायां C.
३ 'अध्येषणायां स्तौमि याचे' इति त्रिर्लिखितम् C.
४ पणायेति B.
५ अस्य वाक्यस्य पाठः सन्दिग्धः।
६ जश्च B. C.
७ [ ऐ० ब्रा० १।२८॥३।१४ ] अग्निर्वै C
८ ऋत्विजोग्रश C.
९ 'काले' इति नास्ति C.
१० जुहोतिर्होता B. C
११ [ निरु० २।१२ ] 'सप्तमे' इत्यारभ्य 'चाष्टमे व्याख्यातः' इत्यन्तःपाठस्त्रुटितः B
१२ [ निरु० ३।१६ ] अथवाऽत्र 'यज्ञश्चाष्टमे।' 'प्रख्यातं यजतिकर्मेति' इति पाठो भवेत्।
१३ इत्येपाह B. इत्योवाह C.
१४ इदं मूलवाक्यं नास्ति B. C.
१५ आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेर्निर्देशो न दृश्यते।

## [ अथ षोडशः खण्डः । ][1]

**अग्निः पूर्वेभिर्ऋषिभिरीड्यो नूतनैरुत ।**
**स देवाँ एह वक्षति[2] ॥**

सर्वत्र यत्तदोर्नित्यसम्बन्धसूचनाय स देवताग्निः परस्तात् प्रतिनिर्देशार्थतच्छब्दश्रुतेर्भाष्यकार उद्देशार्थं यच्छब्दमध्याजहार[3] । **अग्निर्यः पूर्वेभिः** पूर्वैर्भृग्वङ्गिरःप्रभृतिभि**ऋषिभिरीड्यः** ईडितव्यः । **नूतनैः** नवनामैतत । उतशब्दोऽप्यर्थे । अपिशब्दः समुच्चये । नवैरस्मत्प्रभृतिभिः । **स देवान्** । **आ** इत्युपसर्गो व्यवहितेनापि वक्षतीत्यनेन[4] सम्बध्यते । **इह** प्रकृते कर्मणि **आ वक्षति** लोडर्थे पञ्चमः आवहतु । वन्दितव्य इत्यनिरुक्तपाठः । अथवा पर्यायप्रदर्शनमस्तु । नवतरैरिति[5] स्वार्थिकस्तरप् । यावदुच्चैस्तरामिति यथा ।

इदानीं चोदकमुखेनाशङ्कां व्युदसितुमाह[6] ।

**स न मन्येत । [अयमेवाग्निरिति । अप्येते उत्तरे ज्योतिषी अग्नी उच्येते । ततो नु मध्यमः[7] ]**

स चोदको[8] न मन्येत न प्रतिजानीयात् । किम् । उच्यते । पृथिवीस्थानो ज्योतिर्विशेषोऽग्निरिति । किन्तर्हि । नु पश्चान्मध्यमो ज्योतिर्विशेषोऽग्निशब्दवाच्यत्वेनोदाह[9] । **उत्तरे ज्योतिषी** विद्युदादित्याख्ये **अग्नी** । एषा[10] शेषप्रवृत्तिरुच्यते क्वचिन्मन्त्रे । ततस्तस्य पृथिवीस्थानस्य ज्योतिषोऽग्निशब्दवाच्यत्वेन प्रदर्शितोदाहरणस्याग्नित्वं[11] न प्रदर्श्यत इति शेषः ।

[इति द्वादशस्या-(सप्तमस्या-)ध्यायस्य षोडशः खण्डः ।][12]

---

१ आदर्शपुस्तकेष्वत्र खण्डस्यारम्भस्य निर्देशो न दृश्यते ।
२ [ ऋ० १।१।२ ] 'अग्निः पूर्वेभिः' इत्येव प्रतीकः B. C.
३ ब्दं तम B. ब्दन्तम C.
४ वक्ष्यती B.
५ नवकरैरिति B. C.
६ दसीतुमा C.
७ 'स न मन्येत' इत्येव प्रतीकः B.C.
८ चोदकं B.
९ अत्र 'उदाहृतः' इति पाठः स्यात् ।
१० एषाशष B. एकादेश C.
११ ग्नित्वे न B. C.
१२ आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते ।

[ अथ सप्तदशः खण्डः[1] ]

अभि प्रवन्त समनेव योषाः
कल्याण्यः स्मयमानासो अग्निम्।
घृतस्य धाराः समिधो नसन्त
ता जुषाणो हर्यति जातवेदाः[2] ॥

वामदेवस्य। प्रवतेर्गतिकर्मणश्छान्दसत्वाद् वर्तमाने लङि प्रवन्त[3] इति। अभि प्रवन्ते[4] अभिगच्छन्ति। समनेव समाने पुंसि अननं प्राणनं मनो वा यासां ताः समाननाः समनसो वा। तत्र समननशब्दस्य समननश्शब्दस्य वा इवे छान्दसो नकारस्य सकारस्य वा लोपः। समना इव समनस इव वा। यथा ता एकभर्तृका बह्व्यो योषाः स्त्रियः कल्याण्यो दर्शनीयाः। स्मयमानास ईषद्धसन्त्यः। स्मयनेन चात्र संभोगकारकत्वं लक्ष्यते। भर्तृदर्शितसम्भोगाभिलाषा इत्यर्थः। ता युगपदभिगच्छन्ति। तद्वदग्निं वैद्युतं घृतस्योदकस्य मेघस्य धाराः। समिध[5] उदकेन्धनत्वात्तस्य समिन्धनकारिण्योऽभिगच्छन्ति। अभिगम्य च नसन्त.........नसतिराप्नोतेर्नमतेर्वार्थे। आप्नुवन्ति नमन्ति वा तं प्रति। असावपि ता जुषाणो[6] जुषमाणः प्रीयमाणो भावानुवृत्त्या सेवमानः। हर्यति पुमानिव कामयते[7]। जातवेदाः जातविद्यः।

कस्मात्[8] पुनरत्र पार्थिव एवाग्निर्न गृह्यते। घृतं वाहुतिलक्षणम्। आज्यमाहवनीयम्। [9]आहुतिलक्षणस्याज्यस्य धारा अभिगच्छन्ति। उच्यते। बहूनां धाराणां युगपदभिगमनवचनात्। क्रमत्वाच्चाहुतीनां घृतधाराणां युगपदग्निं प्रत्यभिगमनस्यासम्भवात्। वैद्युते तु[10] सम्भवति।

कृतान्तलोपमेव समनःशब्दं निर्ब्रवीति[11]। संपूर्वादनतेर्मनोतेर्वा। तथा चोक्तम् 'मनो[12]मनोतेः' इति। औपमिकमुपमाप्रयुक्तम्। हर्यतिर्गतिकान्त्योः।

---

१ आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते।
२ [ ऋ० ४।५८।८ ] 'अभि प्रवन्त (पन्तं C.)' इत्येव प्रतीकः B.C.
३ वर्तन्त इति B. C.
४ अभि प्रवर्तन्ते B. C.
५ 'समिधः' इति नास्ति B. C.
६ 'जुषाणः' इति नास्ति B. C.
७ कामयन्ते C.
८ तस्मात् B.
९ व्याहुती लक्ष B. व्याहुतीलक्ष C.
१० 'तु' इति त्रुटितम् B.
११ निब्रन् पूर्वीति C.
१२ [ निरु० ४। ४ ] मनोते मनोतेः B.

कान्तिश्च प्रेप्सा । **अभिहर्यतीति**[१] प्रसिद्धप्रयोगप्रदर्शनम् । 'समुद्रादूर्मिः'[२] इत्यत्र मन्त्रे उदेष्यस्तमेषि[३] पर्येषीत्युदयकर्मणा लिङ्गेनादित्येन प्रसिद्धेनादित्यमुक्तं मन्यन्तेऽभियु्क्ताः । तथा चास्मिन्नर्थे ब्राह्मणमपि दर्शयति 'समुद्राद्ध्येषोऽद्भ्य[४] उदैत्' इति । उदैत् उदेतीत्यर्थः । यथेवमकः[५] किमुच्यते । सूक्तादित्वादस्या ऋचो य एवस्यामुक्तः स्वधीर्यः[६] स एव परास्वपि[७] ऋक्षु वक्तव्यः । तेन 'अभि प्रवन्त' इत्यत्राप्यादित्य एवाग्निरुच्यते । न पार्थिवो वैद्युतो वेत्यभिप्रायः । आदित्यमपि हि रश्मिभिराह्रियमाणस्योदकस्य धारा अभिगच्छन्ति । अग्निरुत्तरं ज्योतिरादित्यमौपमिकं च समानम् । ताश्च सम्प्रीयमाणः कामयते । अत आदित्योऽग्निरुच्यते ।

अत्रापि चेदमेवोदाहरणमित्यनेनाभिप्रायेण

समुद्रादूर्मिर्मधुमाँ उदार-
दुपांशुना सममृतत्वमानट् ।
घृतस्य नाम गुह्यं यदस्ति
जिह्वा देवानाममृतस्य नाभिः[८] ॥

इत्युपन्यासः । वामदेवस्य । **समुद्रादूर्मि**स्तेजःसंघात आदित्याख्यः । **मधुमान्** मध्वित्युदकनामैतत् । उदकवानित्यर्थः । **उदारत्** उद्गच्छति । एकवाक्यतायै यत्तच्छब्दाध्याहारः[९] । उपेत्युपसर्ग[१०] आनडित्याख्यातेन सम्बध्यते । **अंशुना** चन्द्रमसाहारभूतेनामृतत्वमानट् 'अशू[११] व्याप्तौ' अश्नुते उपसंव्याप्नोतीत्यर्थः । कुत एतत् । 'यमक्षितिमक्षितयः पिबन्ति'[१२] इति मन्त्रान्तरे दर्शनात् । न च केवलमंशुना । किन्तर्हि । **घृतस्या**हुतिलक्षणस्याज्यस्योद-

---

१ मुद्रितनिरुक्तपुस्तके 'विहर्यतीति' इति पाठः । पूनामुद्रितपुस्तके इदमपि पाठान्तरम् ।
२ [ ऋ० ४।५८।१ ]
३ व्यस्तमेषि B.
४ [ कौषी० ब्रा० २५।१ ] 'समुद्राद्धि' इत्येव प्रतीकः B. C.
५ अत्र कश्चन पाठत्रुटित आदर्शपुस्तकेषु ।
६ सन्दिग्धमिदं पदम् ।
७ स्वव्युक्षु वक्तव्यः B. स्वव्यक्षु वक्तव्यः C.
८ [ ऋ० ४।५८।१ ] 'समुद्रादूर्मिः' इत्येव प्रतीकः B. C.
९ ब्दावध्या C.
१० 'उपेति' इति नास्ति B. C.
११ [ धा० ५।१८ ] अशु व्याप्तौ C.
१२ [ यजु० ५।७॥ निरु० ५।११ ।

कस्य वा रश्मिभिराहृतस्य। गुह्यं नाम[1] गुह्यत्वेन सारवत्तां दर्शयति। नामशब्दोऽपि निपातोऽप्रकाशनायामन्यत्र। सारभूतमप्रकाशकं यदस्ति तेन चामृतत्वमानडिति सम्बन्धः। जिह्वा जिह्वाभूतः। देवानां दीप्तानां रश्मीनां तदायत्तप्रवृत्तिर्वा तेषाम्। अमृतस्योदकस्य च नाभिराश्रय इत्यर्थः। य एवं विशिष्टोऽमृतत्वमानशे[2] स समुद्रादुदारदिति सम्बन्धः।

न केवलमुत्तरे ज्योतिषी अग्निः। किन्तर्हि। सर्वा[3] देवता अग्नि-शब्देनोच्यन्ते[4]। तथा च ब्राह्मणम् 'अग्निः सर्वा देवताः[5] ' इत्यादि।

[तस्योत्तरा भूयसे निर्वचनाय[6] ]

तस्य ब्राह्मणोक्तस्यार्थस्य उत्तरा ऋक् भूयसे अभिव्यक्तावत्र भूय-स्त्वम्[7] । विशेषेणाभिव्यक्ततरायेत्यर्थः।

इति द्वादशस्या-(सप्तमस्या-) ध्यायस्य सप्तदशः खण्डः][8]

——:०:——

[अथ अ[illegible]ादशः खण्डः।[8] ]

इन्द्रं मित्रं वरुणमग्निमाहु-
रथो दिव्यः स सुपर्णो गरुत्मान्।
एकं सद्विप्रा बहुधा वदन्त्य-
ग्निं यमं मातरिश्वानमाहुः[9] ॥

दीर्घतमसः। इन्द्रं मित्रं वरुणं चाग्निमाहुः। अग्निशब्देन ब्रुवन्तीत्यर्थः। परस्तात्तच्छब्दश्रुतेर्यच्छब्दाध्याहारः[10]। अथशब्दश्चार्थे। यश्चायं दिव्यो दिवि भवः। सुपर्णः[11] रश्मिनामैतत्। अन्तर्णीतमत्वर्थः।

---

१ 'गुह्यं नाम' इति नास्ति C.
२ मानर्श C.
३ सर्वदेवता B. C.
४ नोच्यते B. C.
५ [ ऐ० ब्रा० ६।३॥ मैत्रा० सं० १।४।१३ ]
६ इदं मूलवाक्यं नास्ति B. C.
७ भूयस्त्वम् C.
८ आदर्शपुस्तकेऽत्रत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते।
९ [ ऋ० १। १६४।४६ ] 'इन्द्रं मित्रम्' इत्येव प्रतीकः B. C.
१० ध्याहार्यः C.
११ सुवर्णः B. C.

सुपर्णवानित्यर्थः[१]। शोभनं वा पतनं गमनं यस्य स[२] सुपतनः सुपर्ण[३] आदित्यः। गरुत्मान् गरुत् गरणं[४] भौमानां रसानां[५] रश्मिभिर्गरणेन तद्वान्। छान्दसत्वादभावः[६]। गरितेत्यर्थः। अथवा गुर्वात्मा सन् गरुत्मान्। सः द्वितीयार्थे तु प्रथमा। तं चाग्निमाहुरिति सम्बन्धः।

परेऽर्धर्चे भिन्नं वाक्यम्। किञ्च एकं सत्कारणमात्माख्यं वस्तु। विप्रा मेधाविनः। बहुधा बहुभिः प्रकारैर्वदन्ति। अग्निं यमं मातरिश्वानं चाहुरिति प्रदर्शनमात्रं चेदम्। सर्वैर्हि शब्दैस्तेन तेन विकारात्मनावस्थितः कारणात्मैवोच्यते। एवमस्या ऋचः पूर्वार्धर्चे इन्द्रादयोऽग्निशब्देनोच्यन्ते इत्येतदाह। परः सर्वशब्दकारणात्मेति।

कस्मात् पुनः पूर्वार्धर्च एव न व्याख्यायते? इन्द्रं मित्रं वरुणमग्निमेवाहुरिति। उच्यते। एवं व्याख्यायमाने इन्द्रादिशब्दानामग्नौ प्रवृत्तिः प्रदर्शिता स्यान्नाग्निशब्दस्येन्द्रादिषु। अग्निशब्दस्य (च) देवतान्तरेष्वपि प्रवृत्तिप्रदर्शनार्थमस्या ऋच इहोपादानम्। पार्थिवज्योतिर्व्यभिचारदर्शन[७]परत्वादुपन्यासस्य ब्राह्मणवादाच्च। तेनात्र पूर्वोऽर्धर्चो नरुक्तपक्षपरिचोदनाप्रसङ्गादध्यात्मविद्दर्शनेन[८] व्याख्यातो भाष्यकारेण।

ततश्च इममेवाग्निमित्यादिना [न[९]] समुदायनिर्वचनम्। किन्तर्हि? परस्यैवार्धर्चस्य 'बहुधा वदन्ति' [इत्येतस्य[१०]] विवरणम्। कथम्? एवशब्दोऽवधारणे। महान्तमित्येतस्माच्च परो द्रष्टव्यः। योऽप्यग्निशब्दात्[११]। एकमात्मानमित्यात्मशब्दो वस्तुवचनः। 'मायामात्रमिदं द्वैतमद्वैतं[१२]परमार्थतः' इति निश्चितमतय[१३] एकं सर्वं वस्तु यस्मान्नापरमस्तीत्यादि प्रतिपादितमहिमानं महान्तमेव अन्यस्या[१४] छ्यापादात्मानं करणाख्यमशिवं पार्थिवमिन्द्रं मित्रं वरुणमग्निं वैद्युतं दिव्यं च सूर्याख्यमग्निं यमं मातरिश्वानमित्यनेन प्रकारेण सर्वशब्दैर्बहुधा वदन्तीति योज्यम्।

---

१ सुवर्णा वा B. C.
२ 'स' इति त्रुटितम्।
३ सुवर्णा C.
४ गरुणं C.
५ 'रसानां' इति त्रुटितम् B.
६ सत्वादभावः B. 'सत्वादुभावः' इति स्यात्।
७ 'दर्शन' इति त्रुटितम् B.
८ दनो प्रसं० C.
९ 'न' इति नास्ति B. C.
१० 'इत्येतस्य' इति नास्ति B. C.
११ 'परः' इति शेषो योज्यः।
१२ [अनुपलब्धमूलमिदम्] मिदं चैतदद्वैतं B.
१३ मतयः C मनसः M.
१४ स्या छापदात्मानं C. अत्रायं कियानपि पाठः सन्दिग्ध एव।

एवं तु परार्धशेषतया सर्वस्मिन् भाष्ये योज्यमाने 'अग्निः सर्वा देवताः' इति प्रकृतोदाहरणविषयत्वं भाष्ये न प्रदर्शितं स्यात्। तस्मादिममेवाग्निमित्यादि वदन्तीत्यन्तं भाष्यं परस्यार्धर्चस्योदाहरणप्रकारेण विवरणम्। अग्निं चेमं यमं च मातरिश्वानं चेत्येवमादिभिर्वदन्तीति। इन्द्रं मित्रमित्यादि तु पूर्वार्धर्चविवरणमेव द्रष्टव्यम्। यथा मन्त्रे[1] 'नैरुक्तपक्षपरिचोदनापरिहारायोच्यते। सत्यम्। उत्तरेणापि ज्योतिषि अग्निशब्दप्रयोग उच्यते।

'समुद्रादूर्मिः' इत्यनेकदेवताविकल्पमेतत् सूक्तम्। यथाह शौनकः 'यथाल्पलिङ्गं वामदेवस्य[2]' इत्यादिना। तद्यदा[3] मध्यमोऽग्निरादित्यो[4] देवतेति पक्षः। तदाग्निशब्दस्य गौणी वृत्तिः। अथ त्वाज्यसूक्तत्वात् पार्थिवोऽग्निर्देवता तदा जातवेदः शब्दस्येत्याह।

**[ यस्तु सूक्तं भजते यस्मै हविर्निरुप्यते। अयमेव सोऽग्निः। निपातमेवैते उत्तरे ज्योतिषी एतेन नामधेयेन भजेते[5] ]**

**निपातमेव** न स्तुतिर्न हविरित्यर्थः[6]। **एतेन** अग्निनामधेयेन भजेते। एतदुक्तं भवति। मध्यमे उत्तमे च ज्योतिष्यग्रणीत्वाङ्गनयनादिक्रियायोगाद् गौणी वृत्तिः शब्दस्य। ततश्च तद्विषयं सूक्तं हविर्वाग्नेयमिति (न) व्यपदिश्यते। किन्तर्हि? यैव तत्र मुख्या तयैवेति। एवं च सति पार्थिवज्योतिर्विषयमेव सूक्तं हविर्वाग्नेयमिति व्यपदिश्यते। चोदनासु[7] लोकप्रसिद्धस्य मुख्यस्य पदार्थस्य ग्रहणादग्निशब्दस्य व्यभिचार इति सिद्धम्।

इति निरुक्तभाष्यविवरणे द्वादशस्य [ सप्तमस्याध्यायस्य ][8] चतुर्थः पादः

---

[ अष्टादशश्च खण्डः समाप्तः। ][8]

—:०:—

---

१ मन्त्रनैरु C.
२ [ अनुपलब्धमूलमिदं वचनम् ]
३ तद्यथा M.
४ 'आदित्यो' इत्यनन्तरं 'वा' इत्यधिकः M.
५ अयं मूलपाठो नास्ति B.C.M.
६ हन्विरि B.
७ चोदनास्सु C.
८ अयं कोष्ठकान्तर्गतः पाठो नास्त्यादर्शपुस्तकेषु।
इति निरुक्तविवरणे द्वादशस्य चतुर्थः पादः M.

अथ पञ्चमः पादः[१] ।

अग्निशब्दं विशेषतो व्याख्याय क्रमप्राप्तं जातवेदसमाह ।

**[ जातवेदाः कस्मात् ? जातानि वेद । जातानि वैनं विदुः । जाते जाते विद्यत इति वा । जातवित्तो वा जातधनः । जातविद्यो वा जातप्रज्ञानः[२]]**

अर्थप्रधानत्वाच्च नैरुक्तस्य सर्वत्रार्थप्रधानस्यैव पर्यनुयोगो निर्वचनं च । अग्निः कस्मात् ? **जातवेदाः कस्मादिति ? जातानि** सर्वाणि भूतानि **वेद** लोकपालत्वात् । **जातानि वा** तिर्यगादीन्यप्येनं[३] **विदुः** । कारकभेदः केवलम् । सर्वस्मिन् वा भूतजाते विद्यते । 'विद सत्तायाम्[४]' सर्वत्रास्तीत्यर्थः[५] । **जातवित्तो वा** [ 'वित्तो भोगप्रत्यययोः[६]' इति स्मरणात्[७] ] विदेर्लाभार्थस्य [ वेद ] वित्तं धनं हविर्लक्षणमैश्वर्यादि इतरद्वा[८] । 'धनमिच्छेद्धुताशनात्[९]' इति च प्रवादः । **जातविद्यो वा** 'विद विचारणे[१०]' इत्यस्य, वेदो विचारणं ( विद्या )[११] जाता विद्या यस्य वैश्वानरविद्यायामिह च कृतविचार इत्यर्थः । द्युतेर्वोत्तरपदं जातमात्र[१२] एव विद्योतते प्रज्ञानस्वभावत्वाद् जातविद्योतन इत्यर्थः ।

[प्रज्ञानं वा][११] ब्राह्मणोक्तमपि जनेर्विन्दतेश्च निर्वचनमिति दर्शयति ।

**'यत्तज्जातः पशूनविन्दतेति तज्जातवेदसो जातवेदस्त्वम्' इति ब्राह्मणम्[१३] ।**

---

१ अयं सर्वोऽपि पाठो नास्ति C.M.

२ अयं मूलपाठो नास्ति B.C.M.

३ निर्म्मियागादिरपि C. निर्यागादिरपि B.

४ [ धा० ४।६५ ]

५ स्तीत्यत्र B. C.

६ [पा० ८।२।५८]

७ M. पुस्तके कोष्ठकान्तर्गतः पाठो नास्ति।

८ तरद्वा B. C.

९ [अनुपलब्धमूलमिदं वचनम्]

१० [धा० ७।१३]

११ कोष्ठकान्तर्गतः पाठो नास्ति M. पुस्तके।

१२ जातमित्यत्रैव B.

१३ [मैत्रा० सं० १।८।२] 'यत्तज्जातः' इत्येव प्रतीकः B. C. यत्तज्जातः पशूनित्यादि M.

**अविन्दत** अलभत ? [ कुतः ? देवेभ्यः ][१] कुत एतत् ? 'पुरुषं चौषधीनाम्'[२] इति मन्त्रलिङ्गात् । 'यज्ञार्थं पशवः सृष्टाः[३]' इति च स्मरणात् । यस्माच्चैवम्—

**'तस्मात् सर्वानृतून् पशवोऽग्निमभिसर्पन्ति'[४] इति च ।** **सर्वानृतून्** सर्वकालमित्यर्थः । 'स्वामित्वादग्निमाभिमुख्येन[५] सर्पन्ति[६]' इति च ब्राह्मणम् ।

**[ तस्यैषा भवति[७] । ]**

**तस्य** जातवेदसः प्राधान्यस्तुत्युदाहरणमेषा[८] **भवति ।**

[ इति द्वादशस्या-( सप्तमस्या- ) ध्यायस्य एकोनविंशः खण्डः[९] ]

---

[ अथ विंशः खण्डः । ][९]

**प्र नूनं जातवेदसमश्वं हिनोत वाजिनम् ।**
**इदं नो बर्हिरासदे[१०]**

श्येनस्याग्निपुत्रस्य । **प्रो**पसर्गो व्यवहितेनापि[११] हिनोतेत्याख्यातेन सम्बध्यते । **नून**मिति पादपूरणः । **जातवेदस**मुक्तनिर्वचनम् । **अश्वं** 'अशू व्याप्तौ[१२]' व्याप्तारमन्नपक्त्यादिना[१३] स्वकर्मणा कृत्स्नस्य जगतः । लुप्तोपमो वाश्वशब्दः । अश्वमिव शीघ्रकारित्वात् । **हिनोत**[१४] 'हि गतौ वृद्धौ च[१५]' ऋत्विजामयं प्रैषः प्रहिणुत उपगच्छतेत्यर्थः[१६] । प्रवर्धयत वा स्तुतिभिः । **वाजिनं** वाजेनान्नेन हविर्लक्षणेन तद्वन्तम् । वेजनवन्तं[१७] वाचालत्वादर्चिषाम्[१८] ।

---

१ कोष्ठकान्तर्गतः पाठो नास्ति M. पुस्तके ।
२ [ऋ० १०।९१।८]
३ [मनु० ५।३९।C. शत० ब्रा० ३।१।४।९ पशवो हि यज्ञः ॥३।२।३। ११ पशवो यज्ञः ॥ ११।६।३।९ कतमो यज्ञ इति पशव इति ।
४ [मैत्रा० सं० १।८।२] 'तस्मात्' इत्येव प्रतीकः B. C. M.
५ मिख्यादग्नि C.
६ सर्वम् B. C.
७ इदं मूलवाक्यं नास्ति B.C.M.
८ मेष भ B. मेव भ C.
९ आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते।
१० [ऋ० १०।१८८।१] 'प्र नूनं जातवेदसम्' इत्येव प्रतीकः B.C.M.
११ व्यवस्थितेनापि M.
१२ [ धा० ५।१८ ]
१३ पक्त्यादिना C.
१४ हिनोतेः B. C.
१५ [ धा० ५।११ ]
१६ गच्छतेत्य C.
१७ वैजन C.
१८ वाचाल० B. C.

किमर्थमेवमुच्यते। **इदं नो**ऽस्माकं स्वभूतम्। **बर्हिरासदे** 'तुमर्थे सेसेन्[1]' इत्यादि विधानात्। आसत्तुमासादनायेत्यर्थः[2]। कथं नामायं जातवेदाः। 'वेदिस्तरं बर्हिरासीदेत्'[3] इति प्रसङ्गात्। सुहृद्भूत्वाऽऽह स्वपक्षे वा पर्यायत्वं दर्शयितुम्।

**तदेतदेकमेव जातवेदं गायत्रं तृचं दशतयीषु विद्यते। यत्तु किञ्चिदाग्नेयं तज्जातवेदसानां स्थाने युज्यते[4]।**

इत्यादि। एतदेवैकं जातवेदः शब्दं गायत्रच्छन्दोयुक्तं तृचं सूक्तं दशतयीषु[5] न सर्वशाखास्वित्यर्थः[6]। अन्यच्छन्दोयुक्तमन्यदपि[7] स्यात्। यद्येवमतः किम्। यत्तु किञ्चिदाग्नेयं गायत्रं तज्जातवेदस्य शासतीति चोदनासम्पादनार्थं[8] जातवेदःशब्दसम्बन्धिनां सूक्तानां प्रसङ्गे प्रयुज्यते। नान्यच्छन्दोयुक्तं जातवेदोलिङ्गमपि। एवं च ब्रुवता पर्यायत्वं दर्शितं भवति।

**स न मन्येते**त्यादि कृतव्याख्यानम्। केवलं तूदाहरणगताग्निजातवेदःशब्दावुक्तविपरीतगुणप्रधानभावौ द्रष्टव्यौ। पूर्वत्राग्नेः सम्प्रति जातवेदसो विचार्यत्वेन प्राधान्यात्।

**अथासावादित्यो**ऽग्निशब्देनेव[9] जातवेदःशब्देनोच्यते। पूर्वोक्तयैवोदाहरणकल्पनयेति द्रष्टव्यः। तथेदमपरमुदाहरणं 'उदु त्यं जातवेदसम्[10]' इति। तदुपरिष्टात् सप्तदशे[11] व्याख्यास्यामः।

**यस्तु सूक्त**मित्यादि समानम्।

इति निरुक्तविवरणभाष्ये
द्वादशस्या-[सप्तमस्या-[12]] ध्यायस्य
पञ्चमः पादः।
[ विंशश्च खण्डः समाप्तः ][12]

---

१ [ पा० ३।४।९ ]
२ आसत्तुं आसदयाये ० B. C.
३ [ अनुपलब्धमूलमिदं वचनम् ]
४ 'तदेतत्' इत्येव प्रतीकः B.C.M.
५ दाशतयीषु B.
६ 'र्थः' इति त्रुटितम् C.
७ अयच्छन्दो B. C.
८ सम्पातनार्थं B. C.
९ त्योनि शब्दे C.
१० [ ऋ० १।५०।१ ]
११ [ निरु० १२।१५ ]
१२ अयं कोष्ठकान्तर्गतः पाठो नास्ति B. 'इति द्वादशस्य पञ्चमः पादः' इत्येव पाठः C.M.

अथ षष्ठः पादः[१]। [ एकविंशः खण्डः[१]। ]

वैश्वानरो वक्तव्यः।

[ वैश्वानरः कस्मात्? विश्वान्नरान्नयति। विश्व एनं नरा नयन्तीति वा। अपि वा विश्वानर एव स्यात् प्रत्यृतः सर्वाणि भूतानि, तस्य वैश्वानरः[२]। ]

स कस्मात्? समासवृत्तिः कृद्वृत्तिस्तद्धितवृत्तिश्चेति तिस्रो हि वृत्तयो वैयाकरणनिकायप्रसिद्ध्या शब्दशास्त्रे प्रसिद्धास्तत्र[३] तद्धितवृत्तिं दर्शयति। सर्वान् नरानितो[४] लोकान्तरं नयति[५]। कुत एतत्? 'परिददत् पितृभ्योऽग्निः[६]' ['अयं वै त्वत्[७]' 'त्वमस्मादयं ते योनिस्त्वमस्य योनिः[८]' ][९] 'जातवेदो वहस्वैनं सुकृतां यत्र लोकः[१०]' 'मैनमग्ने[११]' इत्यादिमन्त्रलिङ्गात्। तेन[१२] विश्वानराणां नेतृत्वेन सम्बन्धी[१३] वैश्वानरः। इदमर्थेऽण्[१४]। विश्व एनमित्यादि कर्मार्थे[१५] प्रणयति कारकविपर्यासमात्रेणान्यत्वम्। अपि वा विश्वान् जन्तून् अरः[१६] 'ऋ गतौ[१७]' इत्यस्य छान्दसत्वाद् भूते पचादित्वादच्[१८]। उपपदविभक्तेश्चालुक्। एवशब्दोऽवधारणे। सर्वाणि भूतानि अरः प्रत्यृतः[१९]

---

१ अयं कोष्ठकान्तर्गतः पाठो नास्ति B. अयं सर्वोऽप्यध्यायाद्यारम्भात्मकः पाठो नास्ति C. M.

२ अयं मूलपाठो नास्ति B. C.M.

३ प्रसिद्धां B. C.

४ नरान्नयति लो B. नरान्निता C.

५ नयन्ति C.

६ [ ऋ० १०।१७। ३॥ निरु० ७।६ ]

७ [शाङ्खायनश्रौतसूत्रे ४।१४।३६]

८ शाङ्खायनश्रौतसूत्रे ४।१४।३६।

९ कोष्ठकान्तर्गतः पाठः M पुस्तके न दृश्यते।

१० शां० श्रौ० सू० ४।१४।३६॥ तै० आ० जातवेदो वहेमं सुकृतां यत्र लोकः। जैमिनीयब्रा० १।४७ जातवेदो नया ह्येनं सुकृतां यत्र लोकः ]

११ [ ऋ० १०।१६।१ ]

१२ केन B.

१३ सम्बन्धि C.

१४ मर्थे अर्था C.

१५ कर्मार्थं M.

१६ पुरः B. C.

१७ [ धा० १।९६१॥३।१६ ]

१८ [ पा० ३।१।१३४ ] पचत्वादच् C. पचाद्यच् M.

१९ आरः प्रसृतः B.

प्रविष्ट इति वैश्वानरः। इयमेव व्युत्पत्तिः। स च सामर्थ्यात् प्राणाख्यो वायुः। तेन[1] जन्यमानत्वात् तस्यापत्यं वैश्वानरः।

[ तस्यैषा भवति। ][2]

**तस्य** प्राधान्यस्तुत्युदाहरणमेषा।[3]

[इति द्वादशस्या-[सप्तमस्या-] ध्यायस्य एकविंशः खण्डः[4] ]

---

[अथ द्वाविंशः खण्डः ४]

वैश्वानरस्य सुमतौ स्याम
राजा हि कं भुवनानामभिश्रीः।
इतो जातो विश्वमिदं वि चष्टे
वैश्वानरो यतते सूर्येण ॥[5]

कुत्सस्य। उक्तनिर्वचनस्य **वैश्वानरस्य सुमतौ** शोभनायामनुग्रहबुद्धौ **स्याम** भवेम वयमित्याशास्महे? कीदृशस्य? **राजा** 'अत्रैकवाक्यतायै यत्तच्छब्दाध्याहारो भाष्यकारेण लोकवच्च[6] स्तुतिपूर्वकत्वाद् याच्ञायाः प्रथमः पादः पश्चाद् योजितः स्वामी यः। **हिकौ**[7] पादपूरणौ। **भुवनानां** सर्वेषां भूतजातानाम्। **अभिश्रीः** श्रयतेरेतद्रूपम्। अभ्याश्रयणीयश्चोपकारकत्वात्। **इतो जात** इतश्च पार्थिवाल्लोकादोषधिवनस्पतिभ्योऽरणिभ्यो[8] वा जातः सन्। **विश्वं सर्वमिदं** भूतजातं **वि चष्टे** प्रत्यवेक्षणाद् विविधं पश्यति। अन्तर्णीतण्यर्थो वा विविधं दर्शयति प्रकाशयतीत्यर्थः। **वैश्वानरो यतते** 'यती प्रयत्ने[9]' प्रयत्नेन चात्र तत्पूर्वकं गमनं लक्ष्यते सङ्गच्छते च **सूर्येण** सह। कथम्। सूर्यस्य रश्मयः पृथिवीमागच्छन्ति। अग्नेरप्यर्चिष ऊर्ध्वं गच्छन्ति। तयोर्भासोर्यः संसर्गस्तदभिप्रायमिदं सङ्गतवचनम्।

---

१ केन C.
२ नास्त्यादर्शपुस्तकेषु।
३ मेषा B. C.
४ आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते।
५ [ ऋ० १।९८।१ ] 'वैश्वानरस्य सुमतौ' इत्येव प्रतीकः B.C.M.
६ लोकवर्चः B.
७ अभिकौ B. भिकं C.
८ 'रणिभ्यो' इति द्विर्लिखितम् C.
९ [ धा० १।३० ]

**तत् को वैश्वानरः ।**

तदिति वाक्योपन्यासे । क इति प्रश्नः कः सन्देहः ? आचार्यविप्रतिपत्तेरात्मेति वैश्वानरविद्यायामात्मविदः ।

**मध्यम इत्याचार्याः ।**

पूर्वे नैरुक्ता[1] मन्यन्त इति शेषः । [ कुतः ][2]

**[ वर्षकर्मणा ह्येनं स्तौति[3] । ]**

वर्षकर्मणा यस्मादेनं वैश्वानरं स्तौति[4] ।

[इति द्वादशस्या-(सप्तमस्या-) ध्यायस्य द्वाविंशः खण्डः । ][5]

---

[ अथ त्रयोविंशः खण्डः । ][5]

**प्र नू मंहित्वं वृषभस्यं वोचं**
**यं पूरवो वृत्रहणं सचन्ते ।**
**वैश्वानरो दस्युमग्निर्जघन्वाँ**
**अधूनोत् काष्ठा अव शम्बरं भेत् ॥**[6]

नोधसः । **प्रो**पसर्गो वोचमित्यनेन[7] सम्बध्यते । **नु** क्षिप्रम् । **महित्वं** महत्त्वम् । **वृषभस्य** वर्षितुः **प्र वोचं** प्रब्रवीम्यहम् । **यं**[8] **पूरवो** मनुष्यनामैतत् मनुष्या **वृत्रहणं** मेघस्य हन्तारं **सचन्ते** [सेवन्ते][9] वर्षकामा इति शेषः । किं रूपं पुनस्तन्महित्वम् ? उच्यते । **वैश्वानरो**ऽग्नि**र्दस्यु**मुपक्षयितारं रसानां कर्मणां वा[10]वृष्ट्यायत्तानां **जघन्वान्**[11] । **अधूनोत्**[12] कम्पितवान् कम्पयति[13] वा **काष्ठा** अपो घ्नन् मेघस्थाः । **अवे**त्युपसर्गोऽधोभावे[14] । अध[15] [तत] एव च **शम्बरं** मेघम् **भेत्** [अभिनत्][9] ।

---

१ पूर्वं नैरुक्तं B.
२ नास्ति M.
३ इदं मूलवाक्यं नास्ति B.C.M.
४ स्तौमि B. C.
५ आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।
६ [ ऋ० १।५९।६ ] 'प्र नू महित्वम्' इत्येव प्रतीकः B.C.M.
७ मित्येतेन C.
८ यत् M.
९ नास्ति B. C.
१० वापवृष्ट्या B. पापवृष्टया C. अत्र 'वापां वृष्ट्या' इति वा पाठो भवेत् ।
११ जघनात् C.
१२ अधुनोत् B.
१३ ० ती वा C. ० तीव B.
१४ धो० M.
१५ अथ M.

पूरयितव्याः कामानाम् । दस्यतेः 'तसु उपक्षये दसु च[1]' इत्यस्य तदर्थे वर्तमानस्येति शेषः । अर्थानुगमं दर्शयति । उपदस्यन्त्यस्मिन् स्थिता वाग्यमना[2] वा रसा उदकानि । अन्तर्णीतण्यर्थो वा ।

[ अथासावादित्य इति पूर्वे याज्ञिकाः[3] ]

असावादित्य इति नेदीयसो विदेशकेनादसा[4] साभिनयं दर्शयति । याज्ञिका इति । यज्ञसहचरितं यज्ञस्थमधीयते[5] विदुर्वा ये ते याज्ञिका भण्यन्ते[6] । कुत एतदिति चेत् ? वैयाकरणस्मरणात् । तथाहि 'तदधीते तद्वेद[7]' इत्यधिकृत्य 'क्रतूक्थादिसूत्रान्ताट्ठक्[8]' इत्यध्येतृविदुषोस्तद्धितं स्मरन्ति । पूर्ववचनात् षाष्ठिकानां[9] साक्षात्कृतधर्माणामुपलक्षणार्थं वा । ते हि चोदनाल[10] ... सवनक्रमं शास्त्रकर्मं च दृष्ट्वा वैश्वानरशब्दस्यादित्यविषयामूहां चक्रिरे । कथम् ?

[ एषां लोकानां रोहेण सवनानां रोह
आम्नातः । रोहात् प्रत्यवरोहश्चिकीर्षितः[11] ]

एषामग्न्यादिभक्तीनां पृथिव्यादीनां लोकानां रोहेण । रोह उपर्युपरिभावः पृथिवीलोकस्तस्योपर्यन्तरिक्षलोकस्तस्योपरि[12] द्युलोकः[13] । एतेन रोहेण तुल्य एवमेवोक्तभक्तीनां सवनानां रोह उपर्युपरिभाव आम्नातो ब्राह्मणपठितः । किम् ? उच्यते । प्रातः सवनादिक्रमेण[14] द्युलोकसंस्तुतिस्तृतीयसवनसमारोहात्[15] । अनन्तरं क्रमेणैव प्रत्यवरोहः प्रत्यवरोहणमवतारः कर्तुमिष्टः ।

कल्पनामात्रं चैतदित्याह ।

तामनुकृतिं [ होताग्निमारुते शस्त्रे वैश्वानरीयेण सूक्तेन प्रतिपद्यते । सोऽपि न स्तोत्रियमाद्रियेत । आग्नेयो हि भवति ][16]

१ [ धा० ४।१०६,१०७ ] दसूपक्षये दर्शि च B. C. दसू० M.
२ अयं पाठः सन्दिग्धः ।
३ अयं मूलपाठो नास्ति B. C. M.
४ व्यसोपि देशकेनादसः C. व्यसोपदेशकेनादसा M.
५ यज्ञन्धम C. ग्रन्थमधीयते M.
६ भरण्यते C.
७ [ पा० ४।२।५९ ]
८ [ पा० ४।२।६० ]
९ अयं सन्दिग्धः पाठः ।
१० चोदनास० M.
११ अयं मूलपाठो नास्ति B.C.M.
१२ ० लोकस्योपर्यन्त० M.
१३ 'तस्योपरि द्युलोकः' इति त्रुटितम् B.
१४ सवनातिक्रमेण B. C.
१५ संस्तुतीः B.
१६ 'तामनुकृतिमिति' इत्येवं प्रतीकः B. C. M.

तस्य प्रत्यवरोहस्यानुकरणमनुकृतिर्या[1] तां होता आग्निमारुतसंज्ञके शस्त्रे चिकीर्षन्निति[2] शेषः। वैश्वानरदेवत्येन सूक्तेन प्रथमे[3] प्रतिपद्यते प्रवर्तत इत्यर्थः। 'वैश्वानराय पृथुपाजसे[4] विपः[5]' इत्येतेन। तस्मान्मन्यामहे वैश्वानर आदित्यः। सोऽपि अपिशब्दोऽपि चेत्यस्य[6] निपातसमुदायस्यार्थे पुरस्ताच्च द्रष्टव्यः। अपि च स होता विधिसामर्थ्यादेव शस्त्रान्तरेष्विव प्रतिपन्नौ[7] न स्तोत्रियं प्रतिपदमाद्रियेत। नाद्रियत[8] इत्यर्थः। किं कारणम्? आग्नेयो हि[9] हिशब्दो हेतौ यस्मादाग्नेयः स्तोत्रियः। तेन तमनादृत्य वैश्वानरीय एव प्रतिपद्यते।

[ तत आगच्छति मध्यस्थाना देवता रुद्रं च मरुतश्च। ततोऽग्निमिहस्थानमत्रैव स्तोत्रियं शंसति[10] ]

एवं वैश्वानरमादित्यं स्तुत्वा ततो द्युलोकादागच्छति अन्तरिक्षलोकं मध्यस्थाना देवताः स्तोतुं रुद्रम्। 'आ ते पितः[11]' मरुतश्च[12] 'प्रत्यक्षसप्तवसः[13]' इति। ततोऽन्तरिक्षलोकादग्निं स्तोतुमिहस्थानमागच्छतीत्यनुषङ्गः। अत्रैव[14] पृथिव्यां न दिवीत्यभिप्रायः। 'यज्ञायज्ञा वो अग्नये[15]' इति स्तोत्रियमाग्नेयं शंसति[16]। अतो यथायतनं[17] स्तुतिदर्शनादसावादित्य इति याज्ञिकदर्शनम्। याज्ञिकानामपि च स्थानकल्पना गौणी प्रदर्शितैवेत्यविरोधः।

---

१ कृतिं या तां B. C.
२ र्षन्तीति B. C.
३ प्रथममेव M.
४ ०वाजसे M.
५ [ ऋ० ३।३।१ ] विवः M.
६ चेत्येतस्य M.
७ प्रतिपत्तो B. प्रतिपत्तौ M. प्रतिपत्तौ न स्तोतीयं प्रतिपदमादीयेत नादीयत इत्यर्थः C.
८ नादीयते M.
९ हविः B. C. 'किं कारणम्' इत्यारभ्य 'तस्मादन्यः सं०' इत्यन्तः पाठस्त्रुटितः M.
१० अयं मूलपाठो नास्ति B. C.
११ [ ऋ० २।३३।१ ] पितरं B.
१२ मारुतश्च C.
१३ [ शत० ब्रा० सप्त वै मारुतो गणः। ५।४।३।१७॥ कौ० ब्रा० ५।२ घोरा वै मरुतः स्वतवसः ] प्रत्यक्षसः प्रतपस C.
१४ अत्र वै B.
१५ [ ऐ० ब्रा० १३।११ ]
१६ 'शं' इति त्रुटितम् C.
१७ यथा यथनं C.

**अथापि [वैश्वानरीयो द्वादशकपालो भवति।**
**एतस्य हि द्वादशविधं कर्म[1] ]**

अपि च 'वैश्वानरं[2] द्वादशकपालं पुरोडाशं निर्वपति'[3] इति श्रूयते। अतः किम्? उच्यते। अत एतद्वैश्वानर आदित्यः। कस्य हेतोः? द्वादशत्वसम्बन्धात्। **एतस्या**दित्यस्य यस्मात् द्वादशविधमुदयास्तमयाभ्या महोरात्रादिक्रमेण द्वादशमासप्रविभागप्रकारं[4] कर्म। द्वादश मासाः संवत्सरः। तथा द्वादशत्वसम्बन्धात् द्वादशाक्षरा जगती जागतोऽसावादित्य[5] इति।

**अथापि [ ब्राह्मणं भवति[6] ]**

अपि च ब्राह्मणं वक्तव्यमेवास्यार्थस्य[7] प्रतिपादकं भवति। 'असौ वा आदित्योऽग्निर्वैश्वानरः[8]' इत्यादि।

**अथापि [ निवित् सौर्यवैश्वानरीभवति[9] ]**

अपि च **निवित्** निविदिति केषाञ्चिन्मन्त्राणां समाख्या। अथ निविदं शंसतीति येषां विनियोगः। सूर्यवैश्वानरसम्बन्धात् सौर्यवैश्वानरी। कीदृशो यो वैश्वानर उच्यते? प्रकृतार्थप्रतिपादने समर्थो भवति। तां दर्शयति।

**आ यो द्यां भात्या पृथिवीम्[10]**

इति। अस्य व्याख्यानम्—

**एष हि [ द्यावापृथिव्यावाभासयति[11] ]**

यस्मादेष एवाभिमुख्येन प्रकाशयति स्वेन तेजसा[12] महिम्ना। नाग्निः पार्थिवोऽल्पदेशप्रकाशनात्[13]। य इति श्रुतेः स इत्यध्याहारः। सोऽग्निर्वैश्वानरः। इह श्रु[14]······मत्सदिति च सम्बन्धसामञ्जस्याद् वैश्वानर आदित्यः।

**अथापि [ छान्दोमिकं सूक्तं सौर्यवैश्वानरं भवति[15] ]**

---

१ 'अथापि' इत्येव प्रतीकः B. C.
२ वैश्वानरं B.
३ [शत० ब्रा० ५।२।५।१३॥ तै० ब्रा० वैश्वानरं द्वादशकपालं निर्वपति १।३।२।५]
४ मास्र प्रवि C.
५ जगतो B.
६ 'अथापि' इत्येव प्रतीकः B. C.
७ 'क्तव्य' इति त्रुटितम्। 'वामेवास्यार्तस्य' इत्येवं पाठः B.
८ [मैत्रा० ब्रा० २।१।२] 'असौ वादित्यः' इत्येव B. C.
९ 'अथापि' इत्येव प्रतीकः B. C.
१० [श० श्रौ० ८।२२।१]
११ 'एष हीत्यादि' एवं प्रतीकः B. C.
१२ तेजसा B.
१३ प्रदर्शनात् B.
१४ अत्र कश्चन पाठस्त्रुटितः।
१५ 'अथापि' इत्येव प्रतीकः B. C.

अपि च छन्दोमसंज्ञके हमिहवं[1] सूक्तं सूर्यवैश्वानरसम्बन्धि वैश्वानर-शब्दस्यादित्यविषयत्वप्रख्यापने समर्थं भवति। कतमत्।

दिवि पृष्टो अरोचता-
ग्निर्वैश्वानरो बृहन्।
क्ष्मया वृधान ओजसा चनो
हितो ज्योतिषा बाधते तमः[2] ॥

दिवि[3] द्युलोके पृष्टः स्पर्शनेन स्थानं लक्ष्यते। तत्र स्थित इत्यर्थः। अरोचत अद्योतिष्ट[4] रोचते वा दीप्यते। कोऽसौ? अग्निर्वैश्वानर आदित्यः। बृहन् महान्। रोचमानश्च ज्योतिषा बाधते तमः। एष हीत्यादिनोक्तार्थ-विषयं सामर्थ्यमुपदर्शयति।

[ अथापि हविष्यान्तीयं सूक्तं सौर्यवैश्वानरं भवति ][5]

अथापीत्यादि पूर्ववद् व्याख्येयम्। तत्र हविष्यान्त[6] इति[7] शब्दवति[8] सूक्ते प्रकृतार्थप्रतिपत्तये मन्त्रः[9]।

विश्वस्मा अग्निं भुवनाय देवा
वैश्वानरं केतुमह्नामकृण्वन्।
आ यस्ततानोषसो विभाती-
रपो ऊर्णोति तमो अर्चिषा यन्[10] ॥

मूर्धन्वत आङ्गिरसस्य। विश्वस्मै भुवनायेति तादर्थ्ये चतुर्थ्यौ[11]। स सर्वस्य भुवनस्य भूतजातस्यार्थाय। अग्निमभरण्यं[12] देवा वैश्वानरमादित्यम्। तुं कर्तारम्। कस्य? अह्नां स ह्युदयास्तमयाभ्यामहानि करोति। तेन

१ अयं पाठः सन्दिग्धः।
२ [यजु० ३३।९२॥ आश्व० श्रौ० ८।१०] 'दिवि पृष्ठो अरोचत' इत्येव B. 'दिविष्टो आरोचत' इत्येवम् C.
३ 'दिवि द्यु' इति त्रुटितम् B. C.
४ इत्यद्यत्विष्ट B. अत्योतविष्ट C.
५ अयं मूलपाठे नास्ति B. C.
६ विविष्यान्त C.
७ यति B. वति C.
८ पति B.
९ मन्त्राः B.
१० [ऋ० १०।८८।१२] 'विश्वस्मा अग्निम्' इत्येव प्रतीकः B. C.
११ चतुर्थी B.
१२ अभिमय C.

रश्मिनअधिकारे अकृण्वन् कृतवन्तः[१]। कीदृशो वैश्वानरः? उच्यते। आ इत्युपसर्गस्ततानेत्येतेन सम्बध्यते। यो वैश्वानर आततान विस्तारितवान्। उदयगिरिशिखरोपकण्ठे वर्तमानः। किम्? उषसो विभातीः विविधं दीप्यमानाः। एकस्या एव पूजनार्थे बहुवचनम्। किञ्च अप[२]ऊर्णोति अपच्छादयतीत्यर्थः। किम्? शार्वरं तमः स्वेनार्चिषा। यत् उत्पूर्वार्थे द्रष्टव्यः। उद्यत्। एवमहां कर्तृत्वमादित्य[३] एवोपशेते नाग्नाविति[४]। अतोऽसावादित्यो वैश्वानरो नाग्निरिति[५] याज्ञिकः[६] पक्षः।

अयमेवाग्नि[ वैश्वानर इति शाकपूणिः[७] ]

नेदीयसोपदेशकेनो[८] समासाभिनयं दर्शयति। एवोऽवधारणे। अयमेव पार्थिवो नेतरावित्यर्थः। शाकपूणिग्रहणं स्वमनीषिकानिवृत्त्यर्थं[९] दार्ढ्यार्थं वा। प्रतिज्ञैषा। हेतुस्तु[१०] विश्वानरशब्दयोर्विषयभेदः। स कथमिति चेत्। आह।

[विश्वानरावेते उत्तरे ज्योतिषी। वैश्वानरोऽयं यत्ताभ्यां जायते। कथं न्वयमेताभ्यां जायत इति[११]]

विश्वानरावेते[१२] उत्तरे ज्योतिषी मध्यस्थानेव समाम्नानात्। विश्वात् प्रकाश्यात्[१३] प्रत्यृते गते प्राप्ते तेन वैश्वानरोऽयं यद् यस्मात् ताभ्यां पञ्चम्येषा तयोः सकाशादित्यर्थः। जायत इत्यलक्षणतद्धितार्थनिर्देशः। कथं न्वित्यनुपृष्टे प्रतिवचनम्।

[ यत्र वैद्युतः शरणमभिहन्ति यावदनुपात्तो भवति मध्यमधर्मैव तावद् भवति उदकेन्धनः शरीरोपशमनः। उपादीयमान एवायं सम्पद्यत उदकोपशमनः शरीरदीप्तिः[१४] ]

---

१ अकृतवन्तः C.
२ आप C.
३ कतृत्व C.
४ नानाविति B. C.
५ नागिति B.
६ याज्ञिकपक्षः C.
७ 'अयमेवाग्निरित्यादि' इति प्रतीकः B. C.
८ अयं सन्दिग्धः पाठः।
९ निवृत्त्यर्थं C.
१० 'तु' इति नास्ति B.
११ अयं मूलपाठो नास्ति B. C.
१२ नावेते उत्तरो C.
१३ प्रकाश्यत् C.
१४ अयं मूलपाठो नास्ति B. C.

यत्र यस्मिन् काले वैद्युतो विद्युत्सम्बन्धितेजोऽजः[१] शरणमाश्रयमात्मनः काष्ठादि हिंसितव्यं वा[२] हन्तिर्गतिकर्मा अभिगच्छति यच्छब्दश्रुतेस्तच्छब्दाध्याहारः । तत्र तदा यावदसावनुपात्तोऽपरिगृहीतः केनचिद्ब्राण्डेन भवति मध्यमधर्मैव तावद् भवति । का[३] पुनस्तस्य मध्यमधर्मतेत्याह[४] । उदकमिन्धनमस्योदकेन[५] दीप्यते । शरीरं काष्ठादि उपशमनं निर्वापणम् । अग्नौ[६] काष्ठादिना शाम्यतीत्यर्थः । स खलूपादीयमान[७] एवायं पार्थिवः सम्बध्यते[८] पार्थिवधर्मा भवतीत्यर्थः । पार्थिवधर्मता[९] च प्रसिद्धा कथ्यते उदकोपशमन इत्यादिना । एवं तावद् वैद्युतात् ।

[ अथादित्यात् । उदीचि प्रथमसमावृत्त आदित्ये कंसं वा मणिं वा परिमृज्य प्रतिस्वरे यत्र शुष्कगोमयमसंस्पर्शयन् धारयति तत् प्रदीप्यते । सोऽयमेव सम्पद्यते[१०] ]

अथादित्यात् कथं जन्मेत्याह । उदीचीति सप्तम्येकवचनम् । आदित्याधिकरण उत्तरस्यां दिशि समावृत्तमात्र एवादित्ये उदगयनमुखमात्र एवेत्यभिप्रायः । कंसः प्रसिद्धो मणिः सूर्यकान्तः । प्रतिस्वरोऽपि रश्म्युपतापादयः[११] । यत्र यदा । असंस्पर्शयन्निति स्पर्शप्रतिषेधेन परं सन्निकर्षं दर्शयति । तच्च प्रदीप्यते तदानेकाकारेण[१२] । स आदित्याद्यमेव पार्थिवः सम्पद्यते[१३] ।

[ अथाप्याह । वैश्वानरो यतते सूर्येण[१४] । इति । न च पुनरात्मनात्मा संयतते । अन्येनैवान्यः संयतते । इत इममादधात्यमुतोऽमुष्य रश्मयः प्रादुर्भवन्ति । इतोऽस्यार्चिषः । तयोर्भासोः संसङ्गं दृष्ट्वैवमवक्ष्यत्[१५] ]

---

१ अजशरण B.
२ व्याहन्तिर्गतिगतिकर्मा C.
३ कः पुन B.
४ 'धर्म योह' इत्येव B. धर्मत्र्योह C.
५ 'म' इति त्रुटितम् C.
६ अग्नो *C.*
७ खलु वा दी C.
८ अत्र 'सम्पद्यते' इति पाठो युक्तः स्यात् । मूलेऽप्ययमेव पाठः ।
९ धर्मेका च C.
१० अयं मूलपाठो नास्ति B. C.
११ तापद् यत्र C.
१२ 'का' इति त्रुटितम् B. C.
१३ सम्पध्यते C.
१४ [ऋ० १।९८।१]
१५ अयं मूलपाठो नास्ति B. C.

एवं तावद् विषयभेदादादित्यादस्यात्वे[1] हेतुमभिधाय हेत्वन्तरमप्याह। **अथापि** अपि चाह मन्त्रः। **वैश्वानर** इत्यादि। एतदनेनाह। यद्यादित्याद्न्यो वैश्वानरः स्यात्, अस्मिन् मन्त्रे स्वात्मनि क्रियाविरोध आपद्येत, न चैतदिष्टम्। तस्मादन्यः[2] **संयतते** संगच्छत इत्यर्थः। पुरस्तान्मन्त्रो[3] व्याख्यातः। तत्र संगतिर्न प्रदर्शितेति भाष्यकारो दर्शयति। **इतः** काष्ठादेरिमं पार्थिवं पृथिव्यामादधाति। **अमुतो** द्युलोकादादित्यरश्मयः[4]। **इतो** (पृथिवी) लोकादस्याग्नेरर्चिषः[5] प्रादुर्भवन्तीत्यनुषज्यते। **अवक्ष्यन्मन्त्रो** मन्त्रदृग्वा।

किञ्च—

**[ अथ यान्येतान्यौत्तमिकानि सूक्तानि भागानि वा सावित्राणि वा पौष्णानि वा वैष्णवानि वा तेषु वैश्वानरीयाः प्रवादा अभविष्यन्। आदित्यकर्मणा चैनमस्तोष्यन्निति। उदेषीत्यस्तमेषीति विपर्येषीति[6] ]**

**अथ यानी**त्यादि[7]। **औत्तमिकानि**[8]। धूमादि द्रष्टव्यम्[9]। उत्तमस्थानदेवतास्तुतिविषयाणि। **भागानि** भगदेवत्यानि[10] सवि[illegible]।दिदेवत्यानि वा। तेषु **वैश्वानरीया** वैश्वानरशब्दसम्बन्धिनः[11]। अभविष्यन्नित्यादि क्रियातिपत्तौ[12] लृङ्। **एवमस्तोष्यन्**[13] मन्त्राः। **इति**रेवमर्थे। एवमुदेष्येवमस्तमेषि[14] विपर्येषोति[15] पर्यन्तम्[16]। यद्यादित्यादन्यो[17] वैश्वानरः स्यात् तत एवं स्याद् यथोक्तं यतस्तु खलूक्तविपर्ययः[18]।

---

१ स्यत्वे C. अत्र 'अस्योत्पाद्यत्वे' इति 'अस्य जन्यत्वे' इति वा पाठः स्यात्।
२ 'तस्माद्न्यः सं०' इत्यन्तः पाठस्त्रुटितः M.
३ [निरु० ७।२२]
४ ० दिव्यस्य र० M.
५ अत्र 'आदित्यस्य' इत्यधिकः पाठः B. C.
६ अयं मूलपाठो नास्ति B. C. M.
७ अथायातीत्यादि C.
८ औत्तमकानि M.
९ द्रष्टव्यः C.
१० 'भगदेवत्यानि' इति युक्तः स्यात्।
११ न्धिनम् B. C.
१२ लृट् B. वत्तौ वृङ् C.
१३ एवं वैश्वानरं स्तोष्यन् B. C.
१४ मस्तेमेषि C.
१५ 'वि' इति त्रुटितम् C.
१६ एवं पर्यन्तमिति B. C.
१७ स्यादनन्यो C.
१८ खलु सूक्तं विपर्ययः B. C.

[ आग्नेयेष्वेव हि सूक्तेषु वैश्वानरीयाः प्रवादा भवन्ति । अग्निकर्मणा चैनं स्तौतीति । वहसीति । पचसीति । दहसीति[1] ]

आग्नेयेष्वेव हीत्यादि निगदव्याख्यातम् । अत उक्तविपर्ययादन्यो वैश्वानर आदित्यादिति सिद्धम् ।

एवं युक्तिभिः स्वपक्षमवस्थाप्य परपक्षोक्तयुक्तिसमीकरणायाह[2] ।

[ यथो एतद् वर्षकर्मणा ह्येनं स्तौतीति । अस्मिन्नप्येतदुपपद्यते[3] ]

यत्तावदेतद् वर्षकर्मणेति अस्मिन्नपि पार्थिवेऽग्नावेतदुपपद्यते यथा तथेद-मुदाहरणम् ।

समानमेतदुदकमुच्चैत्यव चाहभिः ।
भूमिं पर्जन्या जिन्वन्ति दिवं जिन्वन्त्यग्नयः[4] ॥

दीर्घतमसः । समानमेवैतदुदकं उच्चैति ऊर्ध्वं गच्छति च[5] । अवचा[6] शब्दोऽधोभावे । अथ एति[7] पततीत्यर्थः[8] । अहभिश्छान्दसत्वाद् वर्णलोपः । तृतीया च सप्तम्यर्थे[9] । अहस्सु उदगयने यान्यहानि तेषूर्ध्वं गच्छति । दक्षिणायने यानि तेष्वधः । अत्रोत्तरेणार्धर्चेन सहैकवाक्यतायै योग्यविभक्ति-युक्तौ यत्तदावध्याहार्यौ । येनोदकेन वृष्टिरूपतामापन्नेन भूमिं भूलोकं पर्जन्याः पार्जयितारो रसानां माध्यमिका देवगणा जिन्वन्ति[10] प्रीणयन्तीत्यर्थः। तत्परिण-मत्वात्तद्रूपतामापन्नेन[11] तेनैवोदकेन दिवं द्युलोकं[12] जिन्वन्ति प्रीणयन्त्यग्नयः। 'इतः प्रदानं देवा उपजिन्वन्ति अमुतो मनुष्याः[13]' इति श्रुतेः । 'अग्नौ प्रास्ता-हुतिः[14]' इति च स्मृतेः । इत्येवमग्नेर्वर्षकर्मस्तुत्यर्था या ऋक् सेयं स्वनिगद-व्याख्याता

---

१ अयं मूलपाठो नास्ति B.C.M.
२ परपक्षे युक्ति० M.
३ अयं मूलपाठो नास्ति B.C.M.
४ [ऋ० १।१६४।५१] 'समान-मेतत्' इत्येव प्रतीकः B.C.M.
५ नास्ति B. C.
६ अवच अवशब्दो C. 'अवचशब्दो' इति वा स्यात् ।
७ अयं पतति C. अथ पतति B.
८ पतती C.
९ सप्तम्या अर्थे B. C.
१० जीवन्ति C.
११ त्वात्मात्वात्प्रभूतताम C. M.
१२ 'द्युलोकं' इत्यारभ्य 'तद्वैश्वा-नरस्ये यथा०' इत्यन्तः पाठस्त्रु-टितः । M.
१३ [अनुपलब्धमूलमिदं वचनम्]
१४ [मनु० ३।७६]

यथा चाग्नेरेवमादित्यस्यापि वर्षकर्मस्तुतिं दर्शयति पूर्वपक्षस्य[1] सुतरामनैकान्तिकत्वप्रसिद्धये ।

इति निरुक्तविवरणभाष्ये द्वादशस्या-[सप्तमस्या-][2]ध्यायस्य
षष्ठः पादः ।
[त्रयोविंशश्च खण्डः समाप्तः[2] । ]

---

१ पूर्वपक्षहोस्तुस्युतरामनै B. पूर्वपक्षहोस्तुतरामनै C,
२ अयं कोष्ठकान्तर्गतः पाठो नास्त्यादर्शपुस्तकेषु । C. पुस्तके तु 'इति द्वादशस्य षष्ठः पादः' इत्येव पाठः ।

[ अथ सप्तमः पादः[१] । ]

कृष्णं नियानं हरयः सुपर्णा
अपो वसाना दिवमुत्पतन्ति ।
त आ ववृत्रन्त्सदनादृतस्या-
दिद् घृतेन पृथिवी व्युद्यते[२] ॥

दीर्घतमसः । **कृष्णं** कृष्णवर्णं देवतानां रात्रित्वेन[३] स्मरणाद् मेघनीलत्वाच्च । **नियानं** नियमेन यानं प्रायणमस्मिन् सर्वप्राणिनामिति यानशब्दो[४] नियमनवचनः । स दक्षिणायने द्रष्टव्यः । विशेषणसम्बन्धेन[५] कृष्णत्वेन सम्बन्धात् । प्रथमा द्वितीया वा सप्तम्यर्थे द्रष्टव्या । कृष्णेऽयने दक्षिणायन इत्यर्थः । त आ[६] ववृत्रन् इत्येतेन वास्य[७] सम्बन्धः । **हरयो** हर्तारो रसानाम् । **सुपर्णा** रश्मयः । **अपो** वस्त्रस्थानीयाः । **वसाना** आत्मन्यासजन्तः । **दिवमुत्पतन्ति** । परस्तात्तच्छब्दश्रुतेर्यच्छब्दाध्याहारः । ये ते कृष्णनियाने **आववृत्रन्** आववर्तन्ते[८] । **सदनात्** स्थानात् । **ऋतस्योदकस्य** आदित्यमण्डलादित्यर्थः । **आदित्** आच्छब्दोऽथेत्यस्यार्थे । इच्चेति[९] । अनन्तरं[१०] च **घृतेनोदकेन** **पृथिवी व्युद्यते** 'उन्दी क्लेदने[११]' स्विद्यत[१२] इत्यर्थः ।

क्षणं[१३] नियमनमित्यस्यार्थकथनम् । रात्रिः । कस्य ? सामर्थ्यात् आदित्यस्येति । हरय इति वा सम्बन्धः । अमुत आदित्यमण्डलात् । अर्वाञ्चोऽधोमुखाः पर्यावर्तन्ते । सहभूतस्योदकस्य स्थानादित्यर्थः । एवमादित्याद् वृष्टिः ।

---

१ अयं कोष्ठकान्तर्गतः पाठो नास्ति B. C.
२ [ ऋ० १।१६४।४७ ] 'कृष्णं नियानम्' इत्येव प्रतीकः B. C. 'नियानं' इत्यस्यानन्तरं 'कृष्णं' इत्यधिकः पाठः C.
३ रात्रि येन स्मरणात् B. C.
४ अत्र 'नियानशब्दो' इति पाठः स्यात् ।
५ 'णसम्बन्धेन' इति पाठो नास्ति C.
६ आप वृत्र C.
७ वान्य B.
८ अत्र वकारोऽधिक एव । 'आवर्तन्ते' इत्येव युक्तः पाठो भवेत् ।
९ 'इत्' इति 'च' इत्यस्यार्थे इत्यर्थः ।
१० आनन्तरं च B. C.
११ [ धा० ७।२० ] क्लेदने C.
१२ क्लिसद्यत C. 'क्लिद्यते' इति स्यात् ।
१३ 'कृष्णं निरयणं' इति युक्तः स्यात् ।

अथापि ब्राह्मणमुक्तमन्त्रद्वयार्थानुवादी[1] भवति।

**अग्निर्वा इतो वृष्टिं समीरयति[2] ।**

अग्निर्वा इतो वृष्टिमपः सम्यगीरयति आहुतिद्वारेण। यद्वा दग्धद्रव्यान्तर्गता आपो दह्यमाना धूमरूपतामापन्ना ऊर्ध्वं गच्छन्ति। तदुक्तम् 'अग्नेर्वै धूमोऽभ्रम्[3] ' इति विज्ञायते।

अथापरं ब्राह्मणम्।

**धामच्छद्दिवि[4] खलु वै भूत्वा वर्षति**
**मरुतः सृष्टां वृष्टिं नयन्ति।**

सम्प्रत्यर्थे धामशब्दस्तेजोरूपत्वाद्रश्मिवचनः। धामभी रश्मिभिर्भामरसलक्षणस्योदकस्याच्छादनात्। अष्टौ मासानात्मन्यासञ्जनाद्[5] ग्रीष्मान्तर्वर्ती सन्नादित्यो धामच्छदुच्यते[6]। तदा धामच्छद् भूत्वा चतुरो मासान् वर्षति। मरुतो मध्यमस्थाना वायवः। तेन धामच्छता सृष्टां वृष्टिमुदकं भूमिं नयन्ति।

तथेदमपरं ब्राह्मणम्

**यदा वा असावादित्यो [ऽग्निं रश्मिभिः**
**पर्यावर्ततेऽथ वर्षति[7]]**

न्यङ् वाचिनः[8] रश्मिभिरधोमुख इत्यर्थः। सर्वत आभिमुख्येन वर्तते। अनन्तरं वर्षति। एवमुक्तस्यार्थस्य द्रढिम्नोऽनुवादो यथासम्भवं योजनीयः।

**यथो एतद् [रोहात् प्रत्यवरोहश्चिकीर्षित**
**इत्याम्नायवचनादेतद् भवति[9]]**

यदप्येतद् अस्यादित्यस्य वैश्वानरत्वे कारणमुक्तं रोहादिति। तत्राप्युच्यते। आम्नायवचनादिति। एतदुक्तं भवति। चोदनालक्षणेऽर्थे सति कल्पनामात्रमौपचारिकमेतद् वैश्वानरत्वं निपातभाक्त्वेन तत्राग्नेर्वक्ष्यति।

---

१ मुक्तं मन्त्र B.
२ [ काठ० सं० ११।१० ]
३ [ श० ब्रा० ५।३।५।१७ ]
४ 'धामच्छद्दिवि' इत्येव B. धामच्छद्दिवः C.
५ सञ्जनात्सु ग्री B. C.
६ 'धामच्छदुच्यते। तदा' इत्येतावान् पाठस्त्रुटितः B.
७ 'यदा वा असावादित्यः' इत्येव प्रतीकः B. C.
८ निङ्वाचिनः B. C.
९ 'यथो एतद्' इत्येव प्रतीकः B. C.

यथो एतद् [वैश्वानरीयो द्वादशकपालो भवतीति अनिर्वचनं कपालानि भवन्ति । अस्ति हि सौर्य एककपालः पञ्चकपालश्च[१]]

[२]अनिर्वचनमनुदाहरणं[३] कपालानि । कथम् ? उच्यते । यदि सूर्यो वैश्वानरः स्याद् वैश्वानरीयवत् सौर्योऽपि द्वादशकपालः स्याद् द्वादशविधकर्मत्वात् । यतस्तत् सव्यभिचारमेककपालत्वादिना तस्मादयमप्यहेतुः ।

[ यथो एतद् ब्राह्मणं भवतीति । बहुभक्तिवादीनि हि ब्राह्मणानि भवन्ति । पृथिवी वैश्वानरः[४] । संवत्सरो वैश्वानरः[५] । ब्राह्मणो वैश्वानरः[६] । इति[७] ]

बहुभक्त्या उपचारेण वदन्ति एवंस्वभावानि । तच्च बहुभक्तिवादित्वं[८] दर्शयन्ति । पृथिवी विश्वान्नरान्नयतीति वैश्वानरः । एवंसंवत्सरब्राह्मणवादीति[९] ।

[ यथो एतत् निवित्सौर्यवैश्वानरी भवतीति । अस्यैव सा भवति[१०] ]

यदप्येतत्[११] निविदिति । अस्यैव पार्थिवस्य वैश्वानरत्वे[१२] यथा सा भवति तथाप्याचक्ष्महे ।

अग्निर्वैश्वानरः सोमस्य मत्सत् ।
विश्वेषां देवानां समित् ।
अजस्रं दैव्यं ज्योतिः ।
यो विड्भ्यो मानुषीभ्यो दीदेत् ।

---

१ 'यथो एतदित्यादि' इत्येवं प्रतीकः B. C.
२ अग्निर्वच B. C.
३ मुदाहरणं B.
४ [ श० ब्रा० १३।३।८।३ ]
५ [ श० ब्रा० ५।२।५।१५॥९।६।१।५ ]
६ [ तै० ब्रा० ३।७।३।२ ]
७ अयं सर्वोऽपि मूलपाठो नास्त्यादर्शपुस्तकेषु ।
८ भक्तवादि B.
९ 'एव संवत्सरब्राह्मणवादिति' इत्यादर्शपुस्तकपाठः ।
१० अयं मूलपाठो नास्ति B. C.
११ यदस्यैतत् B. यदस्येतत् C.
१२ त्वेव यथा B. C.

द्युषु पूर्वासु दिद्युतानः ।
अजर उषसामनीके ।
आ यो द्यां भात्या पृथिवीम् ।
उर्वन्तरिक्षम् ।
ज्योतिषा यज्ञाय शर्म यंसत् ।
अग्निर्वैश्वानर इह श्रवदिह सोमस्य मत्सत् ।
प्रेमां देवो देवहूतिमवतु देव्या धिया ।
प्रेदं ब्रह्म प्रेदं क्षत्रम् ।
प्रेमं सुन्वन्तं यजमानमवतु चित्रश्चि-
त्राभिरूतिभिः श्रवद्ब्रह्माण्यावसागमत्[1] ।

विश्वामित्रस्यार्षम् । सोमस्य मत्सद्[2] मदेः पाञ्चमिकं रूपं तृप्यतु । विश्वेषां देवानां मध्ये समित् सन्दीपिता । अजस्रं नित्यं दैव्यं दिव्यानां सम्बन्धि ज्योतिः । यो विड्भ्यो मनुष्यजातिभ्यस्तासामर्थायेत्यर्थः[3] । किम् ? अदीदेत्[4] दीप्यते । एतच्च निवित्पदं विशेषतो हेतुत्वेन भाष्य उपन्यस्तम् । द्युषु[5] पूर्वासु पूर्वेष्वप्यहस्स्वित्यर्थः । अग्निहोत्रार्थं दिद्युतानः[6] कानजयं[7] द्योतितवानित्यर्थः । अजरो जरावर्जितः । उषसामनीके[8] मुखे उष—उदयवेलायामित्यर्थः । आकारो भाति नान्तर्णीतण्यर्थेन[9] सम्बध्यते । तस्य चार्थं भासयतिनाचष्टे यश्चाभासयति[10] द्यां दिविष्ठां देवा हविर्वहनादिना । आ पृथिवीं भातिरुक्तार्थोऽनुषज्यते आभासयति पृथिवीम् । आ उरु विस्तीर्णमन्तरिक्षमदर्शितसम्बन्धम्[11] । ज्योतिषा च स्वेन[12] रक्ष आदि निघ्नन् यज्ञाय शर्म सुखं यंसत्[13] छान्दसत्वाद् वर्तमाने लेट् अवभावश्च[14] प्रयच्छति ।

---

१ [ शां० श्रौ० सू० ८।२२।१ कौ० ब्रा० १।८ ] 'उर्वन्तरिक्षम्' इत्यत्र 'ओर्वन्तरिक्षम्' इति पाठः स्कन्दस्वामिव्याख्यासम्मतः । अयमेव पाठो निविस्कुन्तापे पठ्यते ।

२ 'द्' इति त्रुटितम् । B. C.

३ भ्यः मत्साम B. भ्यः तत्साम C.

४ अदीः दे B. अदीर C.

५ न्युषु B. C.

६ दिन्ध्यताहः B. C.

७ अयं सन्दिग्धः पाठः ।

८ 'नीके मुखे' इति त्रुटितम् B.

९ न्तर्नीतण्य B.

१० यश्याभा B. C.

११ र्शितं सम्बन्ध B. C.

१२ 'स्वेन' इति त्रुटितम् B.

१३ 'यत्' इत्येव B. C.

१४ अत्र 'अडभावश्च' इति पाठः स्यात् । 'वभावश्च प्रयच्छति' इत्यत आरभ्य 'संबध्यते । इमां च देवः' इत्यन्तः पाठस्त्रुटितः C.

नित्यमेव चाग्निर्वैश्वानरः इहास्मिन् यज्ञे अवत् पञ्चमलकारे विकरणव्यत्ययेन शप्। न[1] च लोडर्थे शृणोतु। किम्। सामर्थ्यात् स्तुतीः। इहैव सोमस्य मत्सत् 'मद तृप्तौ[2]' इत्यस्य पाञ्चमिकरूपं तृप्यतु। प्रशब्दो व्यवहितेन अवत्वित्येतेन सम्बध्यते। इमां च देवो देवहूतिं देवा हूयन्ते यस्यां सा देवहूतिर्यागक्रिया तां प्रावतु प्रकर्षेण रक्षतु। देव्या देवानां स्वभूतया धिया[3] प्रज्ञया। प्रेदं ब्रह्म ब्राह्मणास इत्यर्थः[4]। अवत्वित्यनुषङ्गः सर्वत्र। प्रेदं क्षत्रं क्षत्रियांश्चेत्यर्थः। प्रेमं[5] सुन्वन्तं यजमानं चावतु। चित्रश्चायनीयश्चित्राभिरूतीभिः पालनैः अवत् शृणोतु च नित्यमेव ब्रह्माणि स्तुतिलक्षणानि[6]। आवसेत्याकारो[7] गमदित्येतेन सम्बध्यते। अवसा अवसित्यन्ननाम[8]। अतो[9] हेतौ[10]तृतीया। प्रयोजनस्य च हेतुत्वेन विवक्षा। अनेन च सोमाख्येन हेतुभूतेन सोमं पातुमित्यर्थः, आगमत् पाञ्चमिकं रूपम्। आगच्छत्वित्याशास्महे।

[ यथो एतच्छान्दोमिकं सूक्तं सौर्यवैश्वानरं भवतीत्यस्यैव तद् भवति[11] ]

यदप्येतच्छान्दोमिकमिति। अस्यैव पार्थिवस्य तद्वैश्वानरत्वे यथालिङ्गं[12] भाष्यकारेण प्रदर्शितं तथा व्याचक्ष्महे।

वृषा पावक दीदिहि
अग्ने वैश्वानर द्युमत्।
जमदग्निभिराहुतः[13]॥

वामदेवस्य। प्रत्यक्षकृतत्वान्मन्त्रस्य वृषादेश्चानामन्त्रितत्वाद् यच्छब्दाध्याहारकल्पना[14]। यस्त्वं[15] हविर्वहनद्वारेण वृषा[16] वर्षिता सः। हे पावक[17]

---

१ अत्र 'स च' इति पाठः स्यात्।
२ [ धा० १०।१७२ ]
३ 'धिया' इति त्रुटितम् C.
४ 'इ' इति त्रुटितम् C.
५ प्रेमा B. प्रेमः C.
६ 'ति' इति द्विर्लिखितम् C.
७ कारे गम B.
८ अव इत्यसनाम B. अवयित्यसनाम C.
९ 'अ' इति त्रुटितम् C.
१० हेतोः B. हेता C.
११ अयं मूलपाठो नास्ति B. C.
१२ 'तद्वैश्वानरत्वे यथा०' इत्यन्तः पाठस्त्रुटितः M.
१३ [ आश्व० श्रौत० ८।६ ] 'वृषा पावकं' इत्येवं प्रतीकः B.C.M.
१४ ल्पनयास्त्वया C.
१५ यस्त्वया B. C.
१६ वृष्टा B.C.
१७ पावक C.

शोधक **दीदिहि** दीप्यस्व[1]। हे **अग्ने वैश्वानर द्युमत्** क्रियाविशेषणमेतत्। दीप्तिमत्। प्रभूतया दीप्त्या भृशं दीप्यस्वेत्यर्थः। यश्च त्वं **जमदग्निभि**र्ऋषिभिराहुतो[2] मर्यादया यथाशास्त्रं हुतः[2]।

लिङ्गदर्शनप्रसङ्गेन जमदग्निशब्दं निराह[3]। **जमदग्नयः** 'चमु छमु[4] जमु झमु अदने[5]' प्रजमिताः प्रयोजिता अग्नयो यैः। बहुव्रीहिः। ज्वलतेर्वा नित्यमेव प्रज्वलिता अग्नयो येषामिति।

**[ यथो एतत् हविष्पान्तीयं सूक्तं सौर्यवैश्वानरं भवतीत्यस्यैव तद् भवति[6] ]**

यदप्येतद्[7] हविष्पान्तीयमिति। तदप्य**स्यैव** वैश्वानरस्य पार्थिवत्वे लिङ्गं भवति। कुत एतत्? सूक्ताद्यस्य[8] मन्त्रस्याग्नेयत्वात् पराचीनानामप्याग्नेयत्वमेव। वैश्वानरश्रुतिश्चाग्नेरेव विशेषणं प्रकरणान्न[9] सूर्यस्येति दर्शयति।

[ इति द्वादशस्या-(सप्तमस्या-) ध्यायस्य चतुर्विंशः खण्डः। ][10]

---

[ अथ पञ्चविंशः खण्डः[10] ]

**हविष्पान्तमजरं स्वर्विदि**
**दिविस्पृश्याहुतं जुष्टमग्नौ।**
**तस्य भर्मणे भुवनाय देवा**
**धर्मणे कं स्वधया पप्रथन्त[11]॥**

मूर्धन्वत आङ्गिरसस्यार्षम्। परस्तात्तच्छब्दश्रुतेर्यच्छब्दाध्याहारः। **हवि**र्यत् सोमाख्यम्। **पान्तं** पिबतेरर्हार्थे[12]ऽन्तोनामकरणः[13] पानार्हम्। **अजरं**

---

१ दीप्यस्य C.
२ हुतं B.
३ न्निराह B.C.
४ शमु M.
५ [ धा० १।४७०-४७३ ]
६ अयं मूलपाठो नास्ति B.C.M.
७ प्यतर्धविष्णा C.
८ सूक्तादि यस्य B.
९ प्रकरणं न B.C.
१० आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते।
११ [ ऋ० १०। ८८। १] 'हविष्पान्तम्' इत्येव प्रतीकः B.C.M.
१२ तेरहार्थे B.C.
१३ करणं C.

जरावर्जितम्। **स्वर्विदि** स्वरादित्यस्तस्य वेत्तरि[1]। **दिविस्पृशि** दिवं[2] च स्प्रष्टरि[3]। हविर्नयनद्वारेण[4] द्वेऽप्येतेऽग्निविशेषणे। **आहुतं** मर्यादया यथा-शास्त्रं हुतम्। **जुष्टं** प्रियं देवानाम्। **अग्नौ** आहवनीयाख्ये। **तस्य भर्मणे** भर्म भरणं सम्भूतत्वान् करणं तदर्थम्। **भुवनाय** भावनाय भावनं देवतायोग्य-त्वापादनं तदर्थं च **देवाः**। **धर्मणे** धारणाय चाविच्छेदेन। **कमिति** पाद-पूरणः। **स्वधयाऽन्नेन** प्रयाजानुयाजहविराख्येन इममेव पार्थिवमग्निं **पप्रथन्त**[5] क्षीणं सन्तं वीर्येण प्रथितवन्तः। तदेतत्—अथ प्रयाजानुयाजा[6] इत्य-न्तरिक्ष आसत इति।

[ इति द्वादशस्या-( सप्तमस्या-) ध्यायस्य
पञ्चविंशः खण्डः।[7] ]

——:०:——

[ अथ षड्विंशः खण्डः[7] ]

अपामुपस्थे महिषा अगृभ्णत
विशो राजानमुप तस्थुरृग्मियम्।
आ दूतो अग्निमभरद् विवस्वतो
वैश्वानरं मातरिश्वा परावतः[8] ॥

**महिषा** महन्नाम [ वा ] महान्तो माध्यमिका देवगणाः। **अगृभ्णत**[9] परिगृह्णन्ति परिचारयन्तीत्यर्थः। परिचार्य[10] च **विशो** मनुष्यनामैतत् लुप्तो-पमं च मनुष्या इव। **राजानमुपतस्थुः** उपपूर्वस्तिष्ठतिः स्तुतौ[11] स्तुतवन्तः

---

१ वेत्तेरिव B. C.
२ दिविश्च C.
३ स्प्रष्टुरि B.
४ 'द्व' इति द्विर्लिखितम् B.
५ क्षिणं प्रथमन्तक्षियं C. क्षिनमपप्रथन्त B.
६ अत्र M. पुस्तके 'किंदेवता प्रयाजा इत्यत्र वक्ष्यते महत्यन्त-रिक्षे' इति पाठो वर्तते।
७ आदर्शपुस्तकेष्वत्र खण्डस्य समा-प्तेरारम्भस्य च निर्देशो न दृश्यते।
८ [ ऋ० ६।८।४ ] 'अपामिति' इत्येवं प्रतीकः केवलं B. पुस्तके। M. पुस्तके प्रतीको नास्ति।
९ अगृभ्यान् B. अगृह्णत् C. अगृह्णन् M.
१० 'चार्य' इति द्विर्लिखितम् C.
११ स्तुतेन M.

स्तुवन्ति वा। **ऋग्मियं**[१] अर्चतेः स्तुतिकर्मणो ऋक् ततो मत्वर्थीयो[२] नामकरणः। तया ऋचा तद्वन्तं स्तुतिमन्तमित्यर्थः। अर्चार्हं वा स्तुत्यमित्यर्थः[३]। अत्रैकवाक्यतायै भाष्यकारेण तच्छब्दोऽध्याहृतः[४]। तच्छ्रुतेश्च यच्छब्दो[५] अध्याह्रियते। यमुपतस्थुः। आकारोऽभरदित्येतेन[६] सम्बध्यते। तं **दूतः**। कस्य? सामर्थ्याद् देवानाम्। **अग्निमभरत्** हरतेर्हकारस्य भकारः। [आहरत्[८]] आहृतवान्। कुतः? **विवस्वत** आदित्यस्य सकाशात्। **वैश्वानरमग्निविशेषणमेतत्**। कतमो दूतः? उच्यते, **मातरिश्वा** वायुः। **परावतः** दूरनामैतत् दूरादर्चनीयमित्यर्थं[९] दर्शयितुं कृत्यः[१०]।

विवासनमपनयनं तमसाम्[११]। तेन तद्वान्। प्रपूर्वस्येरयतेः[१२] परापूर्वस्य वा[१३] वेतेर्गतिकर्मणः परावच्छब्द इति दर्शयति **प्रेरितवत**[१४] इत्यादिना। 'पञ्चम्यास्तसिल्'[१५] प्रकर्षेणेरितादादित्यात् **परागतादस्याग्नेरित्यादिना**।

आह्रियमाणस्य[१६] चाग्नेर्वैश्वानरत्वविशिष्टस्य यतश्चाह्रियते विवस्वतस्तेषामन्यत्वमाह मन्त्रः। अतश्च मध्यमोत्तमाभ्यामन्यत्वं[१७] सिद्धं वायुरित्यभिधेयवचनम्। मातर्यन्तरिक्षे[१८] श्वसितिः[१९] शब्दकर्मा, मातर्युपपदे[२०] श्वसेर्धातोः[२१] 'श्वन्नुक्षन्पूषन्[२२]' इत्यादिनिपातनात्[२३] [वैयाकरणाः[२४]] यद्वा मातरिशु शब्दे चोपपदे अनितेर्गतिकर्मणो विच्। अयं शु शब्दस्य वा शु शब्देनार्थवचनम्।

इदानीं द्युस्थानस्य वैश्वानरत्वे यदुक्तं लिङ्गम् 'वैश्वानरं केतुमह्नामकृण्वन्' इति। तदप्यव्यभिचारप्रदर्शनायाह[२५]।

---

१ ऋग्वियं C.
२ वा ये B. वायोर् C.
३ सास्तुत्य B.C.
४ तच्छब्दोऽध्याहृत्य B. रच्छब्दोऽ ध्याहृत्यं C.
५ यच्छब्दे ह्रियते C.
६ रोऽभ्युदित्ये B.C.
७ त इतं B. तदूतं C.
८ नास्ति M.
९ 'द' इति त्रुटितम् B.
१० कृत्यं B.
११ 'तमसा' इत्येव B.C.
१२ स्प रयतेः B.
१३ स्यावगतेः B. वावगतेः C.
१४ प्रेरितेम B. प्रेरिततम C.
१५ [पा० ५।३।७]० तसिद C. तसिःM
१६ 'हन्तुम्मात० C. हन्तुर्मातरिश्वना B.' इत्यधिकः पाठः।
१७ त्वा सिद्ध वा (वो C.) यु B.C.
१८ मातान्तरिक्ष० C. मातान्तरिक्षं M.
१९ श्चर्वाति शब्द C.
२० वाकयुपपदेश्च सेधति C.
२१ ० स्सति M.
२२ [उणा० १।१५९] अलुक्षन्स्वचन् B.C. M.
२३ निपाताद्वान्तु B.C.
२४ नास्ति M.
२५ तस्य० य० M.

अथैनं [एताभ्यां सर्वाणि स्थानान्यभ्यापादं स्तौति[१] ]

पार्थिवमग्निं[२] एताभ्यां वक्ष्यमाणाभ्यामृग्भ्याम्। सर्वाणि पृथिव्यादीनि स्थानानि[३]। अभ्यापादं 'विशिपतिपदिस्कन्दां'[४] इति णमुल्। क्रियाविशेषणं चैतत्। सर्वस्थानाभ्यापादनेन सर्वस्थानासेवनेन[५] वा। सर्वस्थानाभ्यापादनविशिष्टं स्तवनमित्यर्थः।

[ इति द्वादशस्या—(सप्तमस्या-) ध्यायस्य षड्विंशः खण्डः ][६]

---

[ अथ सप्तविंशः खण्डः[७] ]

मूर्धा भुवो भवति नक्तमग्निस्
ततः सूर्यो जायते प्रातरुद्यन्।
मायाम् तु यज्ञियानामेताम्
अपो यत्तूर्णिश्चरति प्रजानन्[७] ॥

मूर्धन्वत एवार्षम्[८]। परश्च। यथा सर्वावयवेभ्यो मूर्धा शिरः प्रधानम्। एवं सर्वतः प्रधानभूतत्वात् मूर्धा। कस्य? भुवो भूलोकस्य भूतजातानामित्यभिप्रायः। भवति आलोकस्यावशितपाकैश्चाधीनत्वात्[९]। कदा? नक्तं[१०] विशेषेण रात्रावग्निः। ततो रात्रावतीतायां सूर्यो जायते प्रातरुद्यन् स एवाग्निः। मायां प्रज्ञानामैतत्[११]। ऊ तु पादपूरणौ। छद्मवचनो[१२] वा मायाशब्दो[१३] [ विज्ञानातिशय ] कोऽप्ययमिन्द्रजालः। यज्ञियानां यज्ञार्हाणाम्। केषाम्? सामर्थ्याद्देवानाम्। एतामिति मायाप्रतिनिर्देशः। द्वितीयानिर्देशाच्च वेदविदो मन्यन्त इति शेषः। कुत एतत् स एवं[१४] सूर्य इति? उच्यते।

---

१ 'अथैनं' इत्येव प्रतीकः B. C.M.
२ र्थंवत्वमग्निं B.C.
३ स्थानादीनि B.
४ [ पा० ३।४।५६ ]
५ 'सर्वस्थानासेवनेन' इति त्रुटितम् B.
६ आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते।
७ [ ऋ० १०।८८।६ ] 'मूर्धा भुवः' इत्येव प्रतीकः B.C. M.
८ 'एव' नास्ति M.
९ ० कस्याशित० ०कस्याशितपाकादेश्च तदधीन० M.
१० नक्तं B.C.
११ प्रतिज्ञानमैतत् C.
१२ छुम्र० B.C.
१३ शब्दोऽपि ज्ञाना B.C. कोष्ठकान्तर्गतः पाठो नास्ति M.
१४ स एवं सूर्यं C.

**अपो यत्** अप इति कर्मनाम। यदिति[1] यस्मादर्थे। यस्मादसौ अस्मिन् काले इदं कर्तव्यमस्मिन्निदमिति कर्म, आत्मीयं लोकस्य वा **प्रजानन्**निति व्यवहितेन सम्बन्धः। **तूर्णिः** क्षिप्रनामैतत्। क्षिप्रं **चरति** पृथिवीतो दिवं दिवश्च पृथिवीम्। अन्यानि च सर्वाणि स्थानानि मूर्धायं मस्तकवचनः[2]।

तत्र मूर्तं पिण्डं शरीरं तदस्मिन् धीयते ध्रियत इत्यर्थः। तद्भावभावित्वेन मूर्तशब्दाद् दधातेश्च मूर्धेत्येतद्दर्शयति। अग्नौ तु प्राधान्यमङ्गीकृत्य प्रवृत्तिः सम्भवति। तत्राप्ययमर्थः। सर्वप्राणिनां शरीरमस्मिन् सति ध्रियत इति। तथा 'अग्निरायुर्मनुष्याणाम्[3]' इत्यायुर्वेदस्मरणात्।

**[ तस्योत्तरा भूयसे निर्वचनाय[4] ]**

भूयस्त्वं स्थानत्रयसम्बन्धात्।

[इति द्वादशस्या-(सप्तमस्या-) ध्यायस्य
सप्तविंशः खण्डः ][5]

---

[ अथाष्टाविंशः खण्डः[5]। ]

**स्तोमे॑न॒ हि दि॒वि दे॒वासो॑ अ॒ग्निम्**
**अजी॑जन॒ञ्छक्ति॑भी रोद॒सि॒प्राम्।**
**तमू॑ अकृण्वन्त्रे॒धा भु॒वे कं**
**स ओष॑धीः पचति वि॒श्वरू॑पाः[6]॥**

**स्तोमेन** स्तुत्या। परस्तात्तच्छब्दश्रुतेर्यच्छब्दस्याध्याहारः। यम्। हीति पदपूरणः। आदित्यात्मना **दिवि देवासो** देवा इन्द्रादयो हविषो दातारो ऋत्विग्यजमाना वा। **अग्निमजीजनन्** जनितवन्तः। **शक्तिभिः** कर्मनामैतत्। न केवलं स्तुतिभिः। किन्तर्हि। कर्मभिश्च विष्टपस्थानसम्बन्धहेतुभिः। तथा च ब्राह्मणम्, 'एष नोदियात् यद्येतामग्नावाहुतिं न जुहुयात्[7]'

---

१ 'ति' इति त्रुटितम् B.C.

२ नायमस्तकवचना (नां C.) B.C.

३ [ शत० ब्रा० ६।७।३।७ आयुर्वा अग्निः। ]

४ अयं मूलपाठो नास्ति B.C. M.

५ आदर्शपुस्तकेऽत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते।

६ [ ऋ० १०।८८।१० ] 'स्तोमेन' इत्येव प्रतीकः B.C.

७ [ शत० ब्रा० २।२।५ ] यदेतामाहुत्या न C. 'एष नोदियात्' इत्यस्मात्पूर्वं B. पुस्तके 'शश्वद्ध वा' इति, C. M. पुस्तके च 'शद्ध वा' इति पाठः। अयमन्यथाभूतः पाठः। अत्र कदाचित् 'शश्वत् ह वा' इति पाठः स्यात्।

इति। 'आहुतिभ्य एवैनं जनयन्ति[1]' इति च। **रोदसिप्रां** 'प्रा पूरणे[2]' इत्येतस्मिन् 'आतो मनिन्[3]' इत्येवं विच् अयम्। रोदस्योर्द्यावापृथिव्योरापूरयितारं स्वेन तेजसा। **तमू** ऊकारः[4] पादपूरणः **अकृण्वन्** अकुर्वन् कृतवन्तः। **त्रेधा भुवे** त्रेधाभावायेत्यर्थः। पृथिव्यामन्तरिक्षभावाय अन्तरिक्षे द्युभावाय दिवि आहुतिभ्योऽप्यादित्यभावाय। कमिति पादपूरणः। **स** एव त्रिधाभूतस्तेन तेन स्थानाधिकारसंनियुक्तेनोपकारेण व्रीह्यादिका **ओषधीः पचति**[5] **विश्वरूपाः**। तेन तेन तस्य तण्डुलाशितपीतादिना[6] रूपेणावस्थिता इत्यभिप्रायः।

शाकपूणिग्रहणमस्यैव पक्षस्य दृढीकरणम्[7]। अस्मिन्नर्थे ब्राह्मणमपि दर्शयति।

**'यदस्य [ दिवि तृतीयं तदसावादित्यः[8] ' इति हि ब्राह्मणम्। तदग्नीकृत्य स्तौति[9] ]**

यदस्याग्नेः[10]पार्थिवस्य दिवि तृतीयं[11]कृतवन्तः। तदसौ तदेवासावादित्यः। न ततो व्यतिरिक्तः। एवं ब्राह्मणमाह। तच्चादित्यरूपं तृतीयमग्नीकृत्येत्यभूततद्भावं दर्शयति। अग्निरूपतामापाद्य स्तौति।

अयमेव 'तमू अकृण्वन्' इति मन्त्रो मन्त्रदृग्वा।

**[ अथैनमेतयादित्यीकृत्य स्तौति[12] ]**

अथैनमग्निमेतया वक्ष्यमाणया ऋचा आदित्यीकृत्य स्तौति।

[ इति द्वादशस्या-( सप्तमस्या-) ध्यायस्याष्टाविंशः खण्डः ][13]

---

१ [ अनुपलब्धमूलमिदं वचनम् ]
२ [ धा० २।५१ ]
३ [ पा० ३।२।७४ ]
४ उत्तारः B. उक्तारः C.
५ पवति C.
६ शिलतपीता C.
७ द्रढिम्ना करणं B. दृढीम्नो करणं C. द्रढिम्नः M.
८ अस्य मूलमद्यापि नोपलब्धम्।
९ 'यदस्येत्यादि' इत्येवं प्रतीकः B.C. M.
१० यदि स्याग्नेः C.
११ तृतीयां B.
१२ अयं मूलपाठो नास्ति B. C.
१३ आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेर्निर्देशो न दृश्यते।

[ अथैकोनत्रिंशः खण्डः[1] । ]

यदेदेनमदधुर्यज्ञियासो
दिवि देवाः सूर्यमादितेयम् ।
यदा चरिष्णू मिथुनावभूताम्
आदित्प्रापश्यन् भुवनानि विश्वा[2] ॥

यदा इत्पादपूरणः[3] । एनमिति पूर्वस्यामृच्यादिष्टस्याग्नेरन्वादेशः । एनमग्निमदधुर्निहितवन्तः । यज्ञियासो यज्ञार्हाः । क्व[4] ? दिवि देवाः इन्द्रादयो ऋत्विग्यजमाना वा । सूर्यं सन्तं (सूर्यत्वेन) सूर्यत्वमापन्नमित्यर्थः । आदितेयमदितेः पुत्रम् । यदा यदा निहितः स एकः स एवाद्वरतत्कृष[5] एतौ द्वावपि मिथुनौ समाश्रयन्तौ स्त्रीपुंसौ चरिष्णू चरणशीलौ[6] । अभूतां प्रादुर्भूतौ । नभसा[7] गन्तुं प्रवृत्तावित्यर्थः[8] । आदित्यवधौ ततः[9] प्रभृति तत्कृतेन प्रकाशेन प्रापश्यन् प्रपश्यन्ति भुवनानि भूतानि विश्वा सर्वाणि ।

लोकेऽयं मिथुनशब्दो नपुंसकैकवचनान्तः । सारङ्गमिथुनम् । चक्रवाकमिथुनम् । 'यत् क्रौञ्चमिथुनादेकमवधीः'[10] इति स्त्रीपुंसयुगले प्रसिद्धम् । इह तु भाष्यकारो यथा पठितद्विवचनान्तमेव[11] । 'डुमिञ् प्रक्षेपणे'[12] इत्येतस्मात् श्रयत्यर्थात् थु इति प्रत्ययः । शब्दसारूप्यप्रसक्तमिथश्शब्दनिर्विवक्षयाह[13] । थकारो[14] वा । मिथः शब्देनानिर्विवक्षितेन[15] तत एव धातोः थकारप्रत्यय इत्यभिप्रायः । मिथुनार्थमाह । नयतिः परो वनिर्वेति[16] । नयतेर्वनेर्वा[17] नकार इत्यर्थः । अथ मिथुनशब्दविषय एव प्रत्ययविकल्पः । तत्र यदा थुः तदा नयतिः परः । यदा थः तदा वनिः कृतसम्प्रसारणः ।[18] छान्दसत्वं चापरपूर्ववत् पूर्वत्वमपरत्वमपि द्रष्टव्यम् ।

---

१ आदर्शपुस्तकेष्वत्र खण्डस्यारम्भस्य निर्देशो न दृश्यते ।
२ [ ऋ० १०.८८।११ ] 'यदेदेनम्' इत्येव प्रतीकः B. C.
३ इत्पदपूरणः B. C.
४ क्वचित् B.
५ अयं सन्दिग्धः पाठः । अत्र कदाचित् 'स एव वा द्वौ तत्कृतावेतौ' इति वा पाठः स्यात् ।
६ चरणभूतौ शीलौ B.
७ 'न' इति त्रुटितम् C.
८ वृत्ता इत्य B.
९ तत्र प्रभृति B.
१० [ राम० बालकाण्डे० २.१५. ]
११ अत्र 'पठति' इति शेषो योज्यः ।
१२ [ धा० ५।४ ]
१३ शक्तं मिथ B. C.
१४ एकारो वा B. C.
१५ अत्र वाक्ये तृतीयान्तपाठस्य स्थाने सप्तम्यन्तपाठः साधीयान् भवेत् ।
१६ वह्निर्वेति B.
१७ 'वनेः' इति त्रुटितम् B.
१८ 'सं' इति त्रुटितम् B. C.

अर्थमाह समाश्रितौ संसेवमानावन्योऽन्यं नयतः कालम्। वनुतो वा सम्भजतः प्राचीम्। तथा च 'पूर्वे अर्धेरजसः'[1] इति मन्त्रवर्णात्। मनुष्यमिथुनावप्येतस्मादेव धातुप्रत्ययसमुदायात्। केवलं तु मिनोतिर्मैथतिकर्मा। तथा च दर्शयति। मेथन्ताावाक्रोशन्तावन्योन्यं नयत इत्यादि समानं पूर्वेण।

अस्यैव तद् भवतीति हविष्पान्ती यस्य सर्वस्याग्निप्रधानत्वप्रतिज्ञां निर्वोढुमाह।

अथैनं [एतयाऽग्नीकृत्य स्तौति[2]]

अनन्तरमेनमिति मध्यमस्य आचार्यस्य मतेन वैश्वानरत्वेन प्रदिष्टस्यायमन्वादेशः[3]। एनं मध्यममुत्तमपदे[4] ताभ्यां वक्ष्यमाणाभ्यामृग्भ्यामनग्निं सन्तमग्नीकृत्य स्तौति।

[इति द्वादशस्या-(सप्तमस्या-) ध्यायस्यैकोनत्रिंशः खण्डः][5]

——:०:——

[अथ त्रिंशः खण्डः[5]]

यत्रा वदेते अवरः परश्च
यज्ञन्योः कतरो नौ वि वेद।
आ शेकुरित् सधमादं सखायो
नक्षन्त यज्ञं क इदं वि वोचत्[6]॥

यत्र[7] वदेते। आत्मनेपददर्शनाद् विप्रलापो गम्यते। विवदेते। अवरोऽयं पार्थिवोऽग्निः, परश्च [मध्यमः][8]। एतौ द्वौ[9] दैव्यौ होतारौ [यज्ञस्य नेतारौ यज्ञन्यौ[10]] तयोर्यज्ञन्योः यज्ञस्य नेत्रोः। कतरो नौ आवयोर्विवेद

---

१ [ऋ० १।१२।१॥ निरु० १२।७]
२ 'अथैनमित्यादि' इत्येवं प्रतीकः B.C.
३ अनन्तरमाचार्यस्य मतेन, वैश्वानरत्वेन प्रदिष्टस्य मध्यमस्यायमेनमित्यन्वादेश इत्यन्वयः।
४ मध्यपदेताभ्यां C. अत्र 'उत्तमपदेनाभ्यां' इति पाठो युक्तः स्यात्।
५ आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते।
६ [ऋ० १०।८८।१७] 'यत्रा वदेते' इत्येव प्रतीकः B. C.
७ यत्रश्च देते C.
८ नास्ति B. C.
९ द्वौ दैव्यौ B. C.
१० 'यज्ञस्य नेतारौ' इति त्रुटितम् C. कोष्ठकान्तर्गतः पाठो न दृश्यते M.

विशेषेण वेद जानाति। सम्यग्यज्ञं[1] नेतुमिति शेषः। यत्रेति श्रुतेस्तत्रेत्यध्याहारः। तत्र **आशेकुः**। आकारोऽत्र प्रतिषेधे। न शेकुर्न शक्नुवन्ति। **इत्** एतयोः **सधमादं** सहमादं[2] सहस्पर्धां संघर्षमपनेतुमिति शेषः। के? **सखाय** ऋत्विजः। कुत एतत्? यदाह। **नक्षन्त** नक्षतिर्व्याप्तिकर्मा[3] व्याप्नुवन्ति कुर्वन्तीत्यर्थः। **यज्ञं** ये[4] तेषामित्यनेकाध्याहारकल्पनयैकवाक्यता[5] योज्या।

## [ तस्योत्तरा भूयसे निर्वचनाय[6] । ]

अस्यामृचि मध्यमसाधारण्येन स्तुतिः। उत्तरस्यां केवलस्यैवेति भूयस्त्वम्।
[इति द्वादशस्या-(सप्तमस्या-) ध्यायस्य त्रिंशः खण्डः।][7]

---

[ अथ एकत्रिंशः खण्डः[7] ]

यावन्मात्रमुषसो न प्रतीकं
सुपर्ण्यो३ वसते मातरिश्वः।
तावद्दधात्युप यज्ञमायन्
ब्राह्मणो होतुरवरो निषीदन्[8] ॥

यमृभुजमिति[9] मातरिश्वना पृष्टे प्रतिवचनमेतत्। **यावन्मात्रं** यावत् प्रमाणम्। **उषसः** षष्ठीश्रुतेर्भागमिति शेषः। भागमवयवम्। नशब्दः सम्प्रत्यर्थे। **प्रतीकं**[10] अञ्चेर्गत्यर्थस्य[11] रूपम्। प्रत्यक्तं[12] प्रतिगतमित्यर्थः।

---

१ सम्यगञन्नेतुमिति B. C.
२ हृषमादं B. C.
३ व्यपाप्तिकर्मा B. व्यवाप्तिकर्मा C.
४ येते M.
५ रूपनं एक C.
६ अयं मूलपाठो नास्ति B.C.M.
७ आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते।
८ [ ऋ० १०।८८।१९ ] 'यावन्मात्रम्' इत्येव प्रतीकः B. C. M.
९ ०मृत्विजं M.
१० प्रतीतं B.
११ अञ्चेः M.
१२ प्रत्यक्तं M.

तत्को द्राविणोदाः ? इन्द्र इति क्रौष्टुकिः । स बलधनयोर्दातृतमः ।

तस्य च सर्वा बलकृतिः ।

तदिति वाक्योपन्यासे । कं इति प्रश्ने । द्रविणोदश्शब्दस्याभिधेयं विचार्यते । किं प्रकृतोऽग्निरेव आहोस्विद्देवतान्तरमिति । इन्द्र इति क्रौष्टुकिराचार्यो मन्यते । हेतुमाह । स बलस्य धनस्य चातिशयेन दाता विशिष्टैश्वर्ययोगाद् बलसम्बन्धाच्च या च का च बलकृतिरित्युक्तम् । बलसम्बन्धं दर्शयति । तस्य च सर्वा बलकृतिरिति ।

एतदुक्तं भवति । इन्द्रविषयत्वेनैव द्रविणोदःशब्दस्योक्तनिर्वचनसामञ्जस्यादिन्द्रो द्रविणोदा इत्युक्तफलसम्बन्धेनापि दर्शयति । 'ओजसो जातम्' इति चेन्द्रमाह मन्त्रः ।

अश्वादियायेति यद् वदन्त्योजसो जातमुत मन्य एनम् ।

मन्योरियाय हर्म्येषु तस्थौ यतः प्रजज्ञ इन्द्रो अस्य वेद ॥

गौरिवीतिराह । यतो यो जातस्तद्धर्माणां तत्र दर्शनाद् वेगवत्तायाश्चेन्द्रे मन्त्रलिङ्गेभ्यो वाय्वात्मनि वा दर्शनात् वेगवतोऽश्वादयं जात इत्येवमवधार्य अश्वादयमियाय एतिरत्र शुद्धोपि उत्पूर्वार्थे उदियाय उद्गतो जात इत्यर्थः । इतिश्चैवमर्थे । यदिति व्यत्ययेन नपुंसकं पुल्लिङ्गस्य स्थाने । एवं यमित्यर्थः । यं वदन्ति । यच्छ्रुतेस्तच्छब्दाध्याहारः । तमहमोजसो जातम् । उतशब्दोऽप्यर्थे ओजसश्च परो द्रष्टव्यः । बलादपि जातं मन्ये । एवं बलमपि ह्यस्मिन् दृश्यत एव । मन्योः मन्यू रोषो दीप्तिर्वा । रोषाद्दीप्तेर्वा अयमियाय उत्पन्नो जातः । तस्याप्यस्मिन् दर्शनात् । यश्च हर्म्येषु गृहेषु सामर्थ्याच्छत्रूणां स्वभूतेषु यज्ञगृहेषु तस्थौ तिष्ठति । किं बहुना । यतो यतो वा प्रजज्ञे जातोऽयम् । तदिन्द्र एवात्मजन्मनस्तत्त्वं वेद नान्यो वेदितुमर्हति । 'विदो लटो वा' इति णल् ।

अथापि चायमपरो हेतुरिन्द्रस्य द्रविणोदस्त्वे—

अग्निं द्राविणोदसमाह ।

मन्त्रो मन्त्रदृग्वा । उदाहरणं मृग्यम् । अथवा 'द्रविणोदाः पिबतु द्राविणोदसः' इत्येतदुदाहरणमुक्तं कल्प्यम् ।

ननु च पूर्वपक्षवादिन इन्द्रस्य द्रविणोदस्त्वाद् द्रविणोदःशब्दसामानाधिकरण्याच्च

१–'तत्क इत्यादि' इत्येवं प्रतीकः B. C.
२–'क' इति त्रुटितम् B.C. ३–प्रश्नं B. C.
४–विधायते B.C. ५–अहोस्विदेव C. ६–यावकाच B.
७–[ ऋ० १० । ७३ । १० ] 'अश्वादियाय' इत्येव प्रतीकः B. C. ८–गौरिवीतिराह C.
९–तुरु दर्शनात् B. C. १०–वेगवत्त्वाया B.
११–मश्वादय B. १२–एभिरत्र B. C.
१३–यच्छ्रुते यस्तदध्याहरः C. १४–मनुरोषो C.
१५–नान्यो B. C. १६–[ पा० ३ । ४ । ८३ ]
१७–'णल्' इति त्रुटितम् B.
१८–अग्निर्द्रविणो B. अग्नि द्रविणोदास C.
१९–[ ऋ० २ । ३७ । ४ ]

द्रा[1]विणोदसशब्दस्यास्मिन्मन्त्रे इन्द्र एव द्राविणोदस उच्यते नाग्निः। सत्यम्। गौण्या वृत्त्या न मुख्यया[2]। मुख्यया[3]त्वग्निरेव द्राविणोदस इन्द्राज्जायमानत्वात् सादृश्यान्मन्त्रे यथाकथञ्चिद् गौण्या वृत्त्या इन्द्रो द्राविणोदस उच्यते। मुख्याभिधानान्या[4] च का च गौणी वृत्तिः। अतो यदस्या गौण्या वृत्त्या द्वारभूतमुख्याभिधानं तमभिप्रेत्यैतदुच्यते। तथाप्य[5]यमग्नि द्राविणोदसमाहेति न दोषः।

अथवा नैव सामानाधिकरण्येन सम्बन्धः। किन्तर्हि? वैयाधिकरण्येना[6]ध्याहारेण। यस्यापत्यं द्राविणोदसोऽग्निः स द्रविणोदा इत्यर्थः। एतस्य चायमपत्यम्। यत आह एवं[7] पुनरग्निरेतस्मादिन्द्राज्जायते। कुत एतदिति चेत्? 'यो अश्मनोरन्तः' इति मन्त्रवर्णनात्।

यो हत्वाहिमरिणात् सप्त सिन्धून् यो गा उदाजदपधा बलस्य।
यो अश्मनोरन्तरग्निं जजान संवृक्समत्सु स जनास इन्द्रः॥[8]

गृत्समद आह ऐन्द्रं रूपमास्थितः। इन्द्रोऽयमिति मन्यमानैरसुरैर्हन्यमानस्ता[9]नाह स्मेत्याख्यानम्। यो हत्वा अहिं मेघं अरिणात्[10] रिणातेर्गतिकर्मणोऽन्तर्णीत[11]ण्यर्थस्येदं रूपं अगमयत्। सप्त सिन्धून् व्यत्ययेन पुलिङ्गम्। सिन्धूर्नदीः[12]। नदीनां मध्ये याः प्रधानभूता गङ्गाद्याः सप्त नद्यस्ताः प्राधान्यान्निदर्शिता मन्त्रदृशा। अन्त[13]रिक्षनदीर्वा सप्त अम्बा[14] चाम्बाला चेत्येवमाद्याः[15]। यश्च गा उदाजत्[16] उद्गमयतीत्यर्थः। अपधा अपेत्येतेषां अपेत्येतस्य स्थाने। आत्मनो धा निधानेन स्थापनेन। मेघमात्मनोऽधो निधाय तावत्पादाभ्यां मृद्नाति यावदुदकमस्मिन् जातमित्यर्थः। अवघातेनैव बिलोद्घाटनेनैव बलस्य मेघस्य। यश्चाश्मनोः। अश्मेति मेघ[17]नाम पर्वतनाम वा। द्यावापृथिव्यौ वा तद्व्या[18]पनयोगात्। अन्तरित्यत्य[19]यमधिकरणभूतं मध्यमाचष्टे द्यावापृथिव्यौ वा[20]। अत्राधेयवंशयोस्तरुशाखयोर्वा वायुना संघर्षाज्जायते। तं दावरूपम[21]ग्निं वैद्युतं वा जजान जनयति। संवृक्[22] सम्यक् छेत्ता हन्ता शत्रूणां समत्सु संग्रामेषु. सः। जनासः हे असुरजनाः। इन्द्रो नाहमिति।

---

१–द्रविणोदस C.
२–मुख्या B. ३–मुख्याभ्यग्निरेव B C.
४–'धानादन्या च काचन गौणी' इति पाठोऽत्र स्यात्। ५–प्यानिं द्रावि C.
६–रण्येन संबन्धोऽध्याहा B. रण्येनात्यां हारे C.
७–एषा पुन C. B.
८–[ ऋ० २ । १२ । ३ ] 'यो हत्वाहिम्' इत्येव प्रतीक B. C.
९–मानास्तानाहस्तेत्या C
१०–'अरिणात्' इति त्रुटितम् C.
११–न्तर्णीतण्यत्वस्येदं C. १२–सिन्धू नदिः C.
१३–'न्त' इति त्रुटितम् C.
१४–अन्ना ( म्वा C. ) चाम्बरला B. C.
१५–मान्याः यश्च B. C. १६–उदाजः C.
१७–मेघानां पर्वतानामयां B.
१८–तद्यापने ( न C. योगात् B. C.
१९–त्यप्यय B. २०–व्यौ चा व्यौश्चा C.
२१–दाव कूपमग्निं B. C. २२–संपृक् C.

[ अथाप्यृतुयाजेषु द्राविणोदसाः प्रवादा भवन्ति । तेषां पुनः पात्रस्येन्द्रपानमिति भवति ][1]

अपि चान्यो हेतुः । ऋतुयाजेषु द्रविणोदःशब्दसम्बन्धो द्राविणोदसः पात्या देवतायाः प्रवादाः सन्ति । अतः किम् ? उच्यते । तेषां पुना ऋतुयाजानां पात्रस्य ऋतुपात्रमिति समाख्या भवति । ततः श्रनार्थापत्या उपपन्नमिन्द्रस्य द्रविणोदस्त्वम् । ते च प्रवादा[2] यस्मिन्मन्त्रे स व्याख्यायते ।

होता यक्षद्देवं द्रविणोदामपाद्धोत्रादपात्पोत्रादपान्नेष्ट्रात्तुरीयं पात्रममृक्तममर्त्यमिन्द्रपानं देवो विणोदा द्राविणोदसः स्वयमायूयात् स्वयमभिगूर्यात् स्वयमभिगूर्तया होत्रय ऋतुभिः सोमस्य पिबत्वच्छावाक यजा[3]

विश्वामित्रस्य । 'ऋतुभिः प्रेष्य'[4] इति अध्वर्युणा प्रेषितो[5] मैत्रावरुण अच्छावाकं प्रति प्रैषमाह । होता यक्षत् । होतेति तत्कार्यापत्तेरच्छावाक उच्यते । होतृकार्यापन्नोऽच्छावाको यजतु । यक्षदित्यस्याभियजत्वित्यर्थः सर्वमन्त्रेषु विज्ञेयः । कुतस्त्योऽयमर्थ इति चेत् ? इहत्य एवेति ब्रूमः । छान्दसत्वादमुष्य प्रयोगस्य । छन्दसीत्यधिकृत्य हि 'लिङर्थे लेट्'[6] इति पञ्चमलकारस्मृतेः[7] । देवं दानादिगुणमिन्द्रम् । द्रविणोदामपाद्धोत्रात् । अत्रैकवाक्यतायै यत्तदध्याहारः । यः पीतवान् होत्रात्,होतुः स्वभूतात् पात्रात् । अपात् पीतवान् । नेष्ट्रात् नेष्टृस्वभूतात् । स च भवता इज्यमानस्तुरीयं 'चतुरश्छयतावाद्यक्षरलोपश्च'[8] इति पूरणप्रत्ययस्मरणाच्च चतुर्थमुच्यते । चतुर्थमिदं पात्रममृक्तम् । अमृतशब्दस्यायं छान्दसः ककार उपजनः । अमृतसदृशं इष्टं हिततमं[9] चेत्यभिप्रायः । अमर्त्यं[10] मरणवर्जितम् । इन्द्रपानं इन्द्रः पिबति येन चषकस्थानीयेन तत् । देवो द्रविणोदाः उक्तनिर्वचनाद् द्रविणोदसः । द्राविणोदसो द्रविणोदस इन्द्रस्य[11] पुत्रोऽग्निः दीप्त्या तैक्ष्ण्येन वा तत्सदृश इत्यर्थः । गौण्या वृत्त्या इन्द्रे[12] द्राविणोदसशब्द इत्युक्तं पुरस्तात् । स्वयमायूयात् मिश्रयित्वा आलोड्येत्यर्थः[13] । स्वयमभिगूर्य[14] अभ्युद्यम्य स्वयमुत्क्षिप्येत्यर्थः । स्वयमभिगूर्तया स्वयमेवाभ्युद्यतया[15] स्वयमुच्चारितयेत्यर्थः[16] । होत्रया वाङ्नामैतत् । वाचा अहो मृष्ट[17] इति वर्णयित्वेति शेषः । ऋतुभिः सह सोमस्य पिबतु स्वांशम् । द्वितीयार्थे वा षष्ठी सोमम् । त्वमपि हे अच्छावाक यज मा विलम्बिष्ठाः ।

---

१–अयं मूलपाठो नास्ति B. C.

२–द्रविणोदःशब्दयुक्तश्चत्वारः प्रवादाः । तेष्वयमनुपदं पठ्यमानश्चतुर्थः । [ ऐ०ब्रा० २।१४ ]

३–[ प्रैषः ५१ ] 'होता यक्षत्' इत्येव प्रतीकः B.C.

४–प्रेष्ययेतु B. ऋतुभिद प्रेष्येतु C.

५–'प्रेषितो' इति द्विर्लिखितम् C.

६–[ पा० ३ । ४ । ७ ]

७–पञ्चमो लकार C.

८–[ पा० ५ । २ । ५१ ] इति सूत्रे वार्तिकम् ।

९–एततं B. हितनं चत्य C.

१०–असत्यं B. अमर्त्यं C.

११–इत्यस्य B.

१२–'इन्द्रे' इति त्रुटितम् B.

१३–आलोध्येत्यर्थः C.

१४–गूर्याभिभ्युद्यम्य C.

१५–नेभ्युद्यते॰B.

१६–'स्वयम्' इति नास्ति C. उच्चार्येतयेत्यर्थः B.

१७–मुष्ट B.

अथाप्येनं सोमपानेन स्तौति[1]।

अपि चायमन्यो हेतुः। यस्मादेनमभिगूर्यापकृतं[2] द्राविणोदसं सोमपानेन स्तौति। 'मन्दस्व होत्रात्[3]' इत्यादिमन्त्रोऽत्रैव सूक्ते। उदाहरणं प्रदर्शयिष्यते। सोमपानं चेन्द्रस्योचितम्। सोमाप्यायनमन्त्रेषु 'अंशुरंशुष्टे[4]' इत्यादिषु इन्द्रार्थतयैव[5] सोमस्य प्रतीतौ सामान्येन चेन्द्रः सोमो मीयते गृह्यते चेति सोमसम्बन्धश्रवणात्। यादर्थ्येन च संस्कारस्तस्यैव सम्प्रदानत्वं युक्तमिति सेयमर्थापत्तिः। वेदे च प्रायेण श्रुतार्थापत्तिर्भवति। तथा चोक्तं भट्टारकेणापि[6]।

पीनो दिवा न भुंक्ते चेत्यादि....वचः श्रुतौ।
रात्रिभोजनविज्ञानं श्रुतार्थापत्तिरुच्यते[7]॥

इति वेदेऽपि लोकवद् भवितुमर्हतीति चूर्णिकारो[8] ब्रूते 'य एव लौकिकाः शब्दाः' इत्यादि पूर्ववदुपन्यस्तादस्मादिन्द्रो द्रविणोदा इति।

अथाप्याह मन्त्रैः[9]। द्रविणोदाः पिबतु उज्वलेनोदिना[10] द्राविणोदसोऽग्निसदृशः। यस्य वा द्राविणोदसोऽग्निपत्यम्।

ननु पुरस्तादप्येतदुपन्यस्तम्। सत्यम्। न तु भाष्यकारेण। किन्तर्हि? व्याख्यातृभिः। तदपि द्राविणोदसंशब्दस्याग्निविषयत्वप्रदर्शनायोदाहरणत्वेन। तत्र तु भाष्यकारस्य 'एष पुनरेतस्मात्' इति तद्धितार्थोपपत्तिमात्रमिन्द्रस्य द्रविणोदस्त्वे हेतुत्वेन विवक्षितम्। इह तु द्रविणोदःशब्देनेन्द्रस्य साक्षाद्व्यपदेशहेत्वन्तरत्वेन स्वयं मन्त्रमुदाजहार।

अपाद्धोत्रादुत पोत्रादमत्तो त नेष्ट्रादजुषत प्रयो हितम्।
तुरीयं पात्रममृक्तममर्त्यं द्रविणोदाः पिबतु द्राविणोदसः[12]॥

गृत्समदस्य। अपात् पीतवान् होत्रात् होतृस्वभूतात् पात्रात्। उत पोत्रात्[13] अपि च हेतुस्वभूतात्[14]। अमत्त 'मद तृप्तौ[15]' इत्यस्यैतद्रूपम्। छान्दसत्वाद्विकरणाभावः। तृप्त इत्यर्थः। उत नेष्ट्रात् नेष्टृस्वभूतात्। अजुषत सेवितवान्। प्रयोऽन्नं सोमाख्यम्। हितमुपकारकमात्मनः[16]। ददातेर्वा दानार्थस्य निष्ठायामिदं रूपम्। हितं दत्तं सदस्माभिः। तुरीयं चतुर्थमिदं पात्रम्।

---

१–'अथापि' इत्येव प्रतीकः B. C.
२–देनं गूर्याप्रकृतं C.
३–[ ऋ० २। ३७। १ ]
४–[ मै० सं० १। २। ७॥ ३। ८। २ ]
५–'इन्द्रादिषु B. C. ६–भग् भारकेणापि C.
७–[ अनुपलब्धमूलमिदं वचनम् ]
८–पूणिकारो B. ९–मन्त्रं B.
१० उज्वलन्तो दिना B.
११–'स' इति त्रुटितम् C.
१२–[ ऋ० २। ३७। ४ ] 'अपाद्धोत्रात्' इत्येव प्रतीकः B. C.
१३–पत्रात् C. 'उत पोत्रात्' इति त्रुटितम् B.
१४–हेतु स्वभूतात् B. १५–[ धा० १०। १७२ ]
१६–मुपाकरकिम C.

अमृक्तममृतसदृशम्[1]। ककार उपजनः। अमर्त्यममरणधर्मम्। द्रविणोदा इन्द्रः पिबतु द्राविणोदसः[2]। द्राविणोदसोऽग्निः[3]। लुप्तोपमं चैतत्। तैक्ष्ण्यादिना [अग्नि-][4] सदृश इत्यर्थः। यस्यासौव[5] पत्यम्। तस्मादिन्द्रो द्रविणोदा इति पूर्वः क्रौष्टुकिपक्षः।

अतः परं सिद्धान्तमाह।

अयमेवाग्निर्द्रविणोदा इति शाकपूणिः। आग्नेयेष्वेव हि सूक्तेषु द्राविणोदसाः प्रवादा भवन्ति[6]

एवशब्दोऽवधारणे। नेन्द्रो नापीन्द्रो[7] वाग्निर्वा द्रविणोदाः। किन्तर्हि? अयमेव पार्थिवोऽग्निः। शाकपूणिग्रहणं नैरुक्तसिद्धान्तसम्प्रदायाविच्छेद[8]प्रदर्शनाय। प्रतिज्ञामात्रमिदम् हेतुस्तु 'अथ यान्येतान्यौत्तमिकानि' इति पूर्वोक्त एवैवमनुसन्धातव्यः। माध्यमिकानीति तथा[9] ऐन्द्राणि वा वायव्यानि वा वारुणानि वा बार्हस्पत्यानि वेति। तेषु द्राविणोदसा इत्यादि समानम्। इन्द्रकर्मणा[10] रसानुप्रदानादिना यत् तान् स्तुवन्ति[11], आग्नेयेष्वेवैन्द्रा[12] द्राविणोदसाः[13] प्रवादाः सन्ति। उदाहरणम्।

स प्रत्नथा सहसा जायमानः सद्यः काव्यानि बळधत्त विश्वा।
आपश्च मित्रं धिषणा च साधन् देवा अग्निं धारयन् द्रविणोदाम्॥[14]

कुत्सस्य। 'स'[15] इति तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहार्यः। यः[16] पूर्वेषामप्यङ्गिरःप्रभृतीनामधत्त अधारयत् सः प्रत्नथा प्रत्नमिति पुराणनाम। [था इति वैडिति[17] चोपमायाम्। पुराणनाम वा][18] उपमानश्रुतेरुपमेयाध्याहारः। इदानीन्तनानामपि यजमानानाम्। सहसा बलेन[19] मथ्यमानाभ्यामरणिभ्यां जायमानः सद्यस्तस्यामेव वेलायाम्। काव्यानि मेधावि[20]-

---

१–अमृतमम् B. C.
२–'पिबतु द्राविणोदसः' इति द्विर्लिखितम् B. C. 'पिबतु द्राविणोदसः' इत्यन्तः पाठस्त्रुटितः M.
३–द्रविणोद B. ४–नास्ति B. C.
५–यस्या वासवपत्यं C. 'वपत्यम्। तस्मादिन्द्रो द्रविणोदा' इति पाठस्त्रुटितः M.
६–'अयमेवाग्निरित्यादिना' इत्येव प्रतीकः B.C.M.
७–'नेन्द्रो नापीन्द्रो वाग्नि' इति त्रुटितम् M.
८–'विच्छेद प्रदर्शनाय। प्रतिज्ञाम' इति पाठस्त्रुटितः M.
९–ऐन्द्रियाणि B. ऐन्द्रीधाणि C. 'मिकानीति तथा ऐन्द्राणि वा वाय' इति पाठस्त्रुटितः M.
१०–'र्मणा रसानुप्रदानादिना यत्' त्रुटितम् M.
११–स्तुवन्त्याग्ने० B. यतनस्तुवन्त्याग्नेयेष्वेन्द्रा C.
१२–'ऐन्द्रा' नास्ति M.
१३–द्रविणोदसः B. ष्वेवेन्द्राविणोदसः C.
१४–[ ऋ० १ । ९६ । १ ] 'स प्रत्नथा' इत्येव प्रतीकः B. C. M.
१५–'स' इति त्रुटितम् C. 'त्सस्य। 'स इति तच्छब्दश्रुतेर्योग्या' इति त्रुटितम् M.
१६–'यः' इति नास्ति B. C. १७–पचेति C.
१८–कोष्ठकान्तर्गतः पाठो न दृश्यते M.
१९–'बलेन' इत्यारभ्य '०भ्यां' इत्यन्तः पाठस्त्रुटितः M.
२०–वेधापि C.

कर्माणि हविर्नयनादीनि । बलधत इत्यादीनि धारयति करोतीत्यर्थः । [विश्वा] विश्वानि सर्वाणि । किञ्च आपश्च फलस्यापनात् [आपः] आहुतयोऽत्राभिप्रेता नोदकानि । आपश्चाहुतयः । धिषणा च वाङ्नामैतत् । वाक् च स्तुतिलक्षणा व्यवहितसम्बन्धः । मित्रमुपकारकमग्निम् । कस्य ? सामर्थ्याद् यजमानानाम् । साधन् सधेरन्तर्णीतण्यर्थस्येदं रूपं साधयन्ति कुर्वन्तीत्यर्थः । [किञ्च] देवा अग्निं धारयन् । छान्दसत्वादडभावः । अधारयन् धारितवन्तो निहितवन्तः । द्रविणोदां हविराख्यस्य धनस्य दातारम् । ऊर्ध्वमर्पयितारमित्यर्थः । तदेव वक्ष्यति । 'अथा देवा दधिरे हव्यवाहम्' इति ।

एवं स्वपक्षहेतुमभिधायाधुना परपक्षोक्तहेतुसमीकरणयाह—

यथो एतत् स बलधनयोर्दातृतम:—इति सर्वासु देवतास्वैश्वर्यं विद्यते

उक्तार्थम् । दातृतमं इत्यनेकान्तम् । यतः सर्वा ईश्वरा दातारश्च देवताः । अग्नेरप्येतदविशिष्टम् ।

[यथो एतत्-ओजसो जातमुत मन्य एनमिति चाहेति । अयमप्यग्निरोजसा बलेन मथ्यमानो जायते । तस्मादेनमाह सहसस्पुत्रं सहसः सूनुं सहसो यहुम्[12]॥

तथा ओजसो जातत्वं चाविशिष्टमित्याह । अयमपीत्यादिना । तस्मादेवमाह[13] मन्त्रो मन्त्रदृग्वा । सहसस्पुत्रमित्यादि । क्रमेणोदाहरणानि ।

द्रुन्नः सर्पिरासुतिः प्रत्नो होता वरेण्यः । सहसस्पुत्रो अद्भुतः ॥[14]

सोमाहुतेः । 'दार्वन्नः सर्वाशनः' इति शतपथे विवरणात् । आसुतिशब्दोऽशनवचनः । दारणं चान्नस्य[16] भेदेनोपादानात् सलक्षणमशनमाह न त्वशनमात्रम् । द्रुशब्दो दारुपर्यायः । दार्वन्नः सर्पिरासुतिः सर्पिर्वा यो रसो यस्य सः । प्रत्नः पुराणः । होता वरेण्यः सहसो बलस्य पुत्रः । अद्भुतो महान् । 'अथापि स्तुतिरेव भवति' इति स्तुतिमात्रं मन्त्रार्थः ।

---

१—बलसक्तं B. बळसत्त C. बळधत्त...करोतीति पाठस्त्रुटित M. २—नास्ति M.

३—'नोदत......नामै०' त्रुटितः M.

४—साधन् B. C. 'जमानानाम् । साधन् सधेरन्तर्' इति पाठत्रुटितः M.

५—दद्भभावः C.

६—अथाधारयन् B. अप्रतः पाठस्त्रुटितः M.

७—धातारम् C.

८—[ ऋ० १० । ५२ । ३ ॥ निरु० ६ । ३५ ]

९—पक्षोक्मदेतु B. C.

१०—'यथो एतदिति' इत्येवं प्रतीकः B. C.

११—दातमत B. C.

१२—अयं मूलपाठो नास्ति B. C.

१३—वमहामन्त्रो B.

१४—[ ऋ० २ । ७ । ६ ] 'द्रून्नः सर्पिरासुतिः, इत्येव प्रतीकः B. C.

१५—[ अनुपलब्धमूलमिदं वचनम् ] दार्वनः सपाशनः B. १६—चानस्य C.

१७—दानः त सल १८—त्वसशन C.

१९—[निरु० ७ । ३ ]

त्वं ह यद्यविष्ठ्य सहसः सूनवाहुत । ऋतावा यज्ञियो भुवः[1] ॥

विरूपस्य । त्वम् । हः पादपूरणः । यत् व्यत्ययेन नपुंसकं पुल्लिङ्गस्य स्थाने । 'स्थूलदूर-'[2] इत्यादिना इष्ठनि तद्धितेऽतिशायिके यविष्ठशब्दस्य व्युत्पादितत्वाद् यः यविष्ठ्य । यविष्ठ अतिशयेन युवन् । शब्दविदोऽप्यूचुश्छन्दसीत्यधिकृत्य 'व्यत्ययो बहुलम्'[3] इत्यत्र ।

सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङां च ।

व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिध्यति बाहुलकेन[6] ॥

इति । सहसो बलस्य .........[7] ।

अग्ने वाजस्य गोमत ईशानः सहसो यहो । अस्मे धेहि जातवेदो महि श्रवः[8] ॥

......। यहो यहुरित्यपत्यनाम[10] तस्य सम्बोधनं यहो पुत्र । अस्मे अस्मासु धेहि निधेहि स्थापय । अस्मभ्यं वा देहि । हे जातवेदः जातप्रज्ञान । महि महत् । श्रवोऽन्नम्[11] ।

[यथो एतत्-अग्निं द्राविणोदसमाह- इति । ऋत्विजोऽत्र द्राविणोदस उच्यन्ते ।

हविषो दातारस्ते चैनं जनयन्ति ][12]

यथो वै यत् पुनः—अग्निं द्राविणोदसमाह-इत्युक्तम् । ऋत्विजोऽत्राधिकारके लोके समन्त्रदृशो वा हविर्लक्षणस्य धनस्य दातृत्वादुच्यन्ते[14] । ते चैनं विधिसामर्थ्याज्जनयन्ति यथा तथैष निगमः ।

अग्नावग्निश्चरति प्रविष्ट ऋषीणां पुत्रो अधिराज एषः[15] ॥

तस्मै जुहोमि हविषा घृतेन । मा देवानां मोमुहद्[16] भागधेयं स्वाहा[17] ॥

कल्पजोऽयं मन्त्रः ।

कल्पनाद्धि प्रयोगाणां कल्पोऽनुष्ठानसाधनः ।

सूत्रन्तु[18] सूचनात्तेषां स्वयं कल्प्यं प्रयोगकम्[19] ॥

---

१–[ ऋ० ८ । ७५ । ३ ] 'त्वं ह यद्यविष्ठ्य' इति प्रतीकः P. त्वाह यद्यविष्य C.

२-[पा० ६ । ४ । १५६ ]

३–[ पा० ३ । १ । ८५ ]

४–हलव: ( व C.) स्वर P. C. ५–यङां च B.

६–[पा०३।१।८५] इति सूत्रस्थमहाभाष्ये कारिका।

७–अत्र भूयान् पाठस्त्रुटित आदर्शपुस्तकेषु । तत्रास्य मन्त्रस्यावशिष्टा व्याख्या,अग्रिममन्त्रस्य च 'सहसः' इति पदपर्यन्ता व्याख्या नास्ति ।

८–[ ऋ० १ । ७९ । ४ ]

९–यहुरपत्य B. यहुरिपत्य C.

१०–'नाम' इति द्विर्लिखितम् C.

११–श्रवः महिमन्नम् C.

१२–अयं मूलपाठो नास्ति B. C.

१३–यथोपायत् B. १४–दुच्यते B. C.

१५–[cf. अथर्व० ४ । ३९ । ९ ॥ यजु० ५ । ४]

१६–देवानां मुहB. 'मिथुया' इति पाठः आश्व०सूत्रे । 'यूयुवाम' ते सं०

१७–[ आश्वलायनश्रौतसूत्रे ८ । १४ । ४ ]

१८–सत्रन्तु C. १९–[अनुपलब्धमूलमिदं वचनम्]

इति भट्टभट्टारकैरभ्यधायि ।

वामदेवस्य । अस्य विवरणम् । अग्नौ आहवनीयाख्ये । अग्निर्मर्त्येष्वश्चरति सङ्गच्छते । प्रविष्टः सन् ऋषीणां द्रष्टृणामृत्विजां पुत्रः । अधिराजोऽधिकं दीप्तः स्वामी वा सर्वस्य एषः । परस्तच्छब्दश्रुतेर्यच्छब्दाध्याहारः । यस्तस्मै तदर्थं जुहोमि होम करोमि हविषा । केन ? घृतेन । मा च देवानां बहूनामप्यस्मिन् हुतं मोमुहत् मोहमागमत् । भागधेयं स्वार्थिकोऽयं धेयः । माऽस्माकं देवैर्दत्तमानीयमानं यजमानान्तरभागधेयैः सह मोमुहद् भागधेयम् । स्वाहा इति प्रदानार्थो निपातः ।

यदि तर्हि ऋत्विजो द्रविणोदसः । कथं द्रविणोदा अग्निरिति ? सोमं पूर्वपक्षोदाहरणम् । तद्व्यभिचारः प्रदर्शितः ।

[यथो एतत्-तेषां पुनः पात्रस्येन्द्रपानमिति भवति इति भक्तिमात्रं तद् भवति । यथा वायव्यानीति सर्वेषां सोमपात्राणाम्]

यत् पुनस्तेषां पुनः पात्रस्येति । भक्तिमात्रं तत् गुणवादन्यायेन समाख्यामात्रम् । दुर्बला च समाख्या । 'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्' इति न्यायविद्वचनात् । यतः कुतश्चिद् गुणात् प्रवर्तते । यथा वायव्यानीति 'वायव्यान्युपतिष्ठते' इति सर्वसोमपात्राणां समाख्या भवत्या ।

[यथो एतत्-सोमपानेनैनं स्तौति-इति । अस्मिन्नप्येतदुपपद्यते]

सोमपानस्तुतिश्चास्मिन्नग्नावप्युपपद्यते यथा तथा दर्शयति ।

अग्ने मरुद्भिः शुभयद्भिर्ऋक्वभिः सोमं पिब मन्दसानो गणश्रिभिः ।
पावकेभिर्विश्वमिन्वेभिरायुभिर्वैश्वानर प्रदिवा केतुना सजूः ॥

आवास्यस्य । अग्ने मरुद्भिः शोभयद्भिरात्मानं रुक्माभिराभरणविशेषैर्मण्डयद्भिः । ऋक्वभिः, अर्चनमृक् स्तुतिस्तया तद्वद्भिः सह सोमं पिब मंदसानो मोदमानो गणश्रिभिर्गणत्वमा-

---

१-मत्यश्चरन्ति C. '०मथ्यमाल०' इति स्यात्
२-'हुतं' इति त्रुटितम् B.
३-मो अस्मा B. C.
४-'नीयमा' इति त्रुटितम् C.
५-मानन्तर B. C.
६-धेये सह B. धेये स्सह C.
७-'त' इति त्रुटितम् B. C.
८-अयं मूलपाठो नास्ति B. C.
९-'यत्' इति त्रुटितम् C.
१०-'तत्' इति त्रुटितम् B.
११-[ मी० सू० ३ । ३ । १४ ]
१२-समाख्या इति शेषः ।
१३-अयं मूलपाठो नास्ति B. C.
१४-[ ऋ० ५ । ६० । ८ ] 'अग्ने मरुद्भिः' इत्येव प्रतीकः B. C. द्विर्लिखितः प्रतीकः B.
१५-चावास्य B. C.
१६-'ऋक्वभिः' इति त्रुटितम् B. ऋक्वभिः C.
१७-सोमं वि C.

श्रितैः। पावकेभिः पावनैः। विश्वमिन्वेभिः इन्वतेर्व्याप्तिकर्मण एतद्रूपम्। सर्वव्यप्तिभिः। आयुभिर्गन्तृभिश्चेत्यर्थः। वैश्वानर प्रदिवा पुराणेन केतुना प्रज्ञानेन चरितया प्रज्ञयेत्यर्थः। सजूः संसेवमानः। आत अस्माद्वा संप्रीयमाणो वा।

अन्ये तु अग्ने मरुद्भिरित्यत्र, अग्नेरर्चिष ऋत्विजो वा मरुत इति मन्यन्ते। इतरथा पार्थिवस्य मध्यमैः सह सोमपानेऽनुदाहरणमेष मन्त्रोऽग्नेः स्यादिति। तदसत्। मरुतां गुणभावात् सहस्तुतेश्चाविरोधात्।

शौनकस्तु मारुतत्वान्मन्त्रस्य मरुतः संसेव्यमानो न स्वतन्त्र इत्येवमग्नेरप्राधान्यं मन्यते। सर्वथा त्वग्नेः सोमपानसम्बन्धोऽस्तीत्येतावान् प्रकृत उपयुज्यत इति भाष्यकाराभिप्रायः।

[ यथो एतद् द्रविणोदाः पिबतु द्राविणोदस इति। अस्यैव तद् भवति ][10]

यदपि द्रविणोदाः पिबत्विति। तदपि ऋत्विग्दर्शने प्रतिविहितम्। ततश्चास्यैवाग्नेर्द्रविणोदस्त्वे लिङ्गं तद् भवति। न च तदेव केवलम्। किन्तर्हि? वनस्पतेरग्नित्वादिदं च।

[इति त्रयोदशस्या-(अष्टमस्या-) ध्यायस्य द्वितीयः खण्डः][13]

---

## [अथ तृतीयः खण्डः।][13]

मेद्यन्तु ते वह्नयो येभिरीयसेऽरिषण्यन् वीळयस्वा वनस्पते।
आयूया धृष्णो अभिगूर्या त्वं नेष्ट्रात्सोमं द्रविणोदः पिब ऋतुभिः॥[14]

गृत्समदस्य। मेद्यन्तु स्निह्यन्तु। ते प्रथमाबहुवचनमेतत्, न षष्ठ्येकवचनम्। येभिरिति यच्छब्दसम्बन्धात् छांदसत्वात्तु नियातः। षष्ठीपक्षेऽपि वा यच्छब्दश्रुतेस्तच्छब्दाध्याहारः। ते तव स्वभूतास्तेऽश्वाः। येभिर्यैः। किम्? ईयसे गच्छसि। अरिषण्यन् अहिंसंश्च कश्चित् वीळयस्व संस्तम्भयस्व दृढो भव। हे वनस्पते वनानां पात अग्ने। दृढीभूय च आयूया आलोड्य। धृष्णो हे धर्षितः। तमसामभिगूर्या अभ्युद्यम्य च त्वं नेष्ट्रात् नेष्टृस्वभूतात् पात्रात् सोमं हे द्राविणोदः धनस्य बलस्य वा दातः पिब ऋतुभिः सह।

---

१–मित्येन्वभिः C.
२–चरितन्या B. C. ३–सजू C.
४–अस्माद्या B. ५–अग्ने ऋक्किरर्चिषः B. C.
६–मन्यते B. ७–भावा स स्तुते B. C.
८–मारुतस्त्वान्म B. C. ९–न न्वतन्त्र B. C.
१०–अयं मूलपाठो नास्ति B. C ११–विणोः पिब C.
१२–स्त्ववेव लिंगं B. C.
१३–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते।
१४–[ ऋ० २ । ३७ । ३ ] 'मेद्यन्तु ते' इत्येव प्रतीकः B. C.
१५–स्तेश्वाद येभि C १६–यौसि C.
१७–आरिष B.
१८–हिंसश्च C B. १९–मभिगृह्य C.

मानग्रहणसंस्कारादिश्च[1] विशेषो भवतीत्यैन्द्रत्वेऽहेतुः[2]। ऐन्द्रः सोम इति च सामान्यस्य लतारूपस्याविरोधात्। नेष्ट्रीयाद्[3] धोत्रादिधिष्ण्याग्निशाला विशिष्टस्थानविशेषः। 'धिष्ण्यानुपस्थाय' 'स्वस्य धिष्ण्यस्य' इति च प्रयोगात् स्थानेन सम्बन्धादर्थप्रसक्तस्य निर्वचनम्। धिष्ण्यः सन् आकारलोपेन[4] धिषणमुक्तं भवति। धिषणकस्तोत्रं शस्त्रादि लक्षणम्। सा देवान् प्रति नीयमाना[5] भवति यस्मिन् प्रदेशे। स[6] धिषणशब्द 'धिषेः'[7] इत्यस्य दधात्यर्थे[8] वर्तमानस्य। सा ह्यर्थान्[9] धारयति[10]। सम्बन्धस्य नित्यत्वात्[11]।

यद्वा धीरिति प्रज्ञा कर्म वा तया संभजति। वनस्पत इत्येनमाहुः प्रकृतं[12] द्राविणोदस्याः। तस्मादग्निरित्यभिप्रायः। अन्तरनुप्रविष्टोऽपि यतो निर्भवति। अतः पातेति[13] व्यपदिश्यते। पिबतेर्वैतद्रूपमिति। ततश्चार्थभेदोऽपि[14]। अतः सूक्तहविर्भाक्त्वेनाग्निर्द्रविणोदाः। निपातभाक्त्वेन क्वचिन्मध्यम [इति][15] सिद्धम्।

अग्न्यादिषु प्रतीत्यविप्रकर्षाभिप्रायः क्रम इत्युक्तम्। इध्मादिषु व्यवधानात्[16] कीता विप्रकर्षः। अश्वादि वार्तिककारः पठति। "क्रमप्रयोजनं नाम्नां शाकपूणिरुपलक्षितम्। प्रकल्पयेदन्यदपि न प्रज्ञामवसादयेत्॥" इति शौनकस्याप्ययमेवाशय इत्यध्यगीष्महि।

अयमाप्रिय[17]शब्दः 'आप्रीणामुत्तमा[18] याज्या' इत्यृक्षु प्रसिद्धसम्बन्धात् तदेव तास्वपि प्रवर्तते। तदेत[19]दृचां देवतानां च साधारणं गुणाभिधानमिति। अत एतेनाध्वादिदेवता निर्विवक्षयोपक्रमत इति।

इति निरुक्तविवरणसमुच्चये त्रयोदशस्या- (अष्टमस्या-) ध्यायस्य प्रथमः पादः।[20]

---

१–दि च विवेशा B. C.
२–तीत्येतन्द्रत्वे B.
३–नेष्ट्रियात् C.
४–अकारणलोपेन B. C.
५–नियमाना C.
६–सदधिषण C.
७–'धिषेः' इति नास्ति B. C.
८–धात्यरिर्थे C.
९–सां ह्यर्थन् C.
१०–वारयति B. C.
११–नित्यर्थत्वात् C.
१२–प्रकृतद्रावि C.
१३–पादेति व्यपदिशते B. C.
१४–भेदेऽपि B. C.
१५–'इति' इति नास्ति B. C.
१६–व्यवधाभिधानात् तकीतापि विप्रकर्षः C.
१७–मप्रिय B. माप्रीय C.
१८–मुत्तमा B.
१९–'तदे' इति त्रुटितम् B.
२०–'त्रयोदशस्य प्रथमः पादः' इत्येव पाठः C.

## अथ द्वितीयः पादः[1]। [ अथ चतुर्थः खण्डः ।]

अथात आप्रियः । [ आप्रियः कस्मात् ? आप्नोतेः ।
प्रीणातेर्वा । 'आप्रीभिराप्रीणाति'[2] इति च ब्राह्मणम् ।][3]

अथशब्द आप्रीणां विशेषेधिकारार्थः[4] । अतःशब्द आनन्तर्ये[5] । आप्रियोऽधीता अनन्तरं वक्ष्यन्त इति शेषः । आप्नोतेरित्यादि ऋक्पक्षे करणसाधनः । तथा च ब्राह्मणम् 'आप्रीभिः' इति ऋक्पक्ष एव । देवतापक्षे तु आप्तव्या तर्पितव्या भवति कर्मसाधनः । आप्रीसूक्तेषु च क्रमनियमो दृष्टः । सर्वस्य[6] प्रथममिध्मस्येत्यादि । स एवानुविधीयत इत्याह ।

तासाम् [इध्मः प्रथमागामी भवति । इध्मः समिन्धनात् तस्यैषा भवति ।][7]

प्रथमं श्रुति[8]पथमागच्छत्येवंशीलः । सर्वाप्रीसूक्तेषु तथा दर्शनात् । इध्मः समिन्धनात् । कात्थक्यपक्षे करणसाधनः । शाकपूणेर्भावसाधनः कर्मसाधनो वा । तस्य प्राधान्यस्तुत्युदाहरणमेषा ।

[इति त्रयोदशस्या- (अष्टमस्या-)ध्यायस्य चतुर्थः खण्ड. ।][9]

---

## [अथ पञ्चमः खण्डः ।][9]

समिद्धो अद्य मनुषो दुरोणे देवो देवान् यजसि जातवेदः ।
आ च वह मित्रमहश्चिकित्वान् त्वं दूतः कविरसि प्रचेताः ॥[10]

जमदग्नेः सूक्तम् । समिद्धो अद्य मनुषो मनुषशब्दो मनुष्यपर्यायः । यत आह 'मनोरपत्यं मनुषो वा'[11] इति । सामर्थ्याच्चात्रान्तर्णीतवी[12]प्सार्थः । तेनायमर्थः । मनुष्यस्य मनुष्यस्य[13] यष्टुर्दुरोणे यज्ञ[14]गृहे देवः । प्रत्यक्षकृतत्वान्मन्त्रस्य समिद्धो देव इति वाऽनामन्त्रितत्वादेकवाक्यतायै यत्तच्छब्दावध्याहार्यौ । यस्त्वं समिद्धो देवो होतृत्वाद्देवान् यजसि ।

१–अयं पादारम्भात्मकः पाठो नास्ति C. कोष्ठकान्तर्गतः पाठो नास्त्यादर्शपुस्तकेषु ।
२–[ ऐ० ब्रा० ६ । ४ ]
३–'अथात आप्रिय इति' इत्येवं प्रतीकः B. C.
४–शेषोधिका B. ५–न्तर्येर्य C. ६–सर्वत्र C.
७–'तासामित्यादि' इत्येवं प्रतीकः B. C.
८–श्रुतिप्रथमा C.
९–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।
१० [ ऋ० १० । ११० । १ ] 'समिद्धो अद्य' इत्येव प्रतीकः P. C.
११–[ निरु० ३ । ७ ]
१२–चान्तर्नीतवी B.
१३–'मनुष्यस्य' त्रुटितम B. मनुषस्य C.
१४–'दुरोणे यज्ञ' इति नास्ति B. C.

हे जातवेदः स ममापि आ च वह आस्थाने[1] चः पठितः। आवह च[2]। किम्? सामर्थ्याद्देवान्। च[3] श्रुतेर्यज चेति शेषः। मित्रमहः[4] मित्राणां पूजयिता। चिकित्वान् जानन्[5] स्वमधिकारं भक्ततां वास्माकम्। कस्मादेवमुच्यते? यस्मात् त्वं दूतः सर्वयजमानानाम्। कविरसि मेधावी चासि। प्रचेताः प्रवृद्धप्रज्ञानः। सर्वैर्दूतगुणैर्युक्त इत्यर्थः।

[यज्ञेध्म इति कात्थक्यः। अग्निरिति शाकपूणिः[6]]

यज्ञेध्म उच्यते। योऽयमधीयते प्रतिप्रवण[7]मिध्मो यज्ञे स एवायमिति। समिधामिध्मत्वमुपगतानामग्नीनां सन्दीप्तानाम्[8]। अतो[9] यज्ञेध्मे आधेयधर्माणामाधाराधेयस्य व्यपदेशः। समिद्ध इति मञ्चाः क्रोशन्तीति यथा। यद्वाग्निः। तैः समञ्ज[10]समेव। समिच्छब्दस्य समिद्भिः[11] प्रेष्यसमित्वसमित्सुमना इत्यादिष्विध्मपर्यायत्वात्[12]। विशिष्टकाष्ठकलापवचनो वा। तत्सम्बन्धादग्निवचनो द्रष्टव्यः। भाष्यं निगदव्याख्यानम्।

तनूनपात् [आज्यमिति कात्थक्यः। नपादित्यननन्तरायाः प्रजाया नामधेयम्। निर्णततमा भवति। गौरत्र तनूरुच्यते। तता अस्यां भोगाः। तस्याः पयो जायते। पयस आज्यं जायते। अग्निरिति शाकपूणिः। आपोऽत्र तन्व उच्यन्ते। तता अन्तरिक्षे। ताभ्य ओषधिवनस्पतयो जायन्ते। ओषधिवनस्पतिभ्य एष जायते। तस्यैषा भवति[13]]

प्रविभज्य दर्शयति। अननन्तरायाः[14]। एकेन व्यवहितायाः पौत्रलक्षणायाः। सा हि पुत्रापेक्षया निर्वै[15]स्तराश्नता कात्थक्य[16]पक्षेऽभिप्रेता। परस्तात् पक्षान्तरस्योपन्यासात्। तनोतेस्तनूरुभयत्र। केवलं कारकभेदः। भोगाः क्षीरादयः। आज्यं पौत्रस्थानीयम्। एष इत्यग्निं व्यपदिशति।

[इति त्रयोदशस्या- (अष्टमस्या-) ध्यायस्य पञ्चमः खण्डः।[17]]

---

१–अस्थाने ( B. ) यः पठितः B. C.
२–'च' इति नास्ति B. व C.
३–'च' इति त्रुटितम् B.
४–मित्रवहः B.
५–जनान् B.
६–अयं मूलपाठो नास्ति B. C.
७–प्रणव B. प्रवण प्रमि C.
८–सानाम C.
९–आनो B. अनो C.
१०–'ञ्ज' इति त्रुटितम् C.
११–समुच्छब्दस्य समिद्भयः C.
१२–'त्' इति नास्ति B. C.
१३–'तनूनपात्' इत्येव प्रतीकः B. C.
१४–अनन्तराया C.
१५–अयं सन्दिग्धः पाठः।
१६–का ( पा ) थक्य C.
१७–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते।

## [ अथ षष्ठः खण्डः । ][1]

तनूनपात्पथ ऋतस्य यानान् मध्वा समञ्जन्त्स्वदया सुजिह्व ।
मन्मानि धीभिरुत यज्ञमृन्धन् देवत्रा च कृणुह्यध्वरं नः ॥[2]

यदा तावदाज्यं तनूनपात् तदैवं व्याख्येयम् । हे तनूनपात् गवां पौ[3]त्रस्थानीयान् पथः द्वितीयाबहुवचनमेतत् । ये पन्थानः ऋतस्य यज्ञस्य यानान् । कतमे ? हवींषि । तैर्हि[4] यज्ञो याञ्जन्[5] सर्पति[6] तान् यानान् हविराख्यान् । मध्वा मधु स्वादेनात्मनः समञ्जन् सन्धुक्षयन् स्वदय आस्वादय । स्वाशब्दात् तत्करोतीति णिच् छान्दसं ह्रस्वत्वम् । स्वादय स्वादून् कुर्वित्यर्थः । सुजिह्व शोभनजिह्व मृष्टेत्यर्थः । मन्मानि मननानि यानि चास्माकं परिधिप्रस्तर-प्रभृतीनि । धीभिः कर्मभिरञ्जनादिभिः । उत यज्ञं उपस्तरणा[7]भि धारणादिभिः ऋन्धन् सम-र्धयन् । देवत्रा च देवेषु कृणुहि कुरु ज्ञापयेत्यर्थः । देवान् प्रति गमयेत्यर्थः । देवत्रेति द्वितीया[8]-सप्तम्योरर्थे त्राप्रत्ययः । अध्वरं[9] यज्ञम् । नोऽस्माकं स्वभूतम् । चशब्द[10]स्तु हवींषि स्वादयं[11] देवत्रा च यज्ञं कुर्वि[12]त्येवं समुच्चयार्थः ।

यदा त्वग्निस्तनूनपात् तदैवं योजना । हे तनूनपा[13]दग्ने पथ ऋतस्य यानान् तान् हविराख्यान् मधुना वा[14]र्ग्जनितेन रसेन समञ्जन् सम्यग्गमयन् सम्यग्वाचयन्नित्यर्थः । स्वादू कुरु । सुजिह्व वाङ्नामैतत् । हे सुवाक् । मन्यतेरर्चतिकर्मणो मन्म स्तोत्रमत्राभि-प्रेतम्[15] । मन्मानि च स्तोत्राणि । धीभिः स्वाभिः प्रज्ञाभिः कर्मभिर्वा सर्मन्[16] ह्वयन् । देवत्रा चेत्या[17]दि समानम् ।

नराशंसो [ यज्ञ इति कात्थक्यः । नरा अस्मिन्नासीनाः शंसन्ति । अग्निरिति शाकपूणिः । नरैः प्रशस्यो भवति । तस्यैषा भवति[18] ]

---

१—आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।
२—[ ऋ० १०।११०।२] 'तनूनपात्' इत्येव प्रतीकः B. C.
३—पौत्रस्थानीयान्य पथः C.
४—तैर B. तैर्हि C.
५—सन्दिग्धमिदं पदम् ।
६—सर्पितान्यानात् C.
७—रणादिभिघा C.
८—'द्वितीया' इति द्विर्लिखितम् C.
९—अध्वरः C.
१०—चञ्चुशब्दस्तु B.
११—यदयं B. C.
१२—कुर्वन्त्येवं B.
१३—अपाः पौत्राग्ने व ( वा C. ) थ ऋकस्य यथा-नान् तान् B. C.
१४—त्राकं जनि B. वार्कं जनि C.
१५—भिप्रेतः C.
१६—सन्दिग्धमिदं पदम् । 'ऋन्धन्' इति स्यात् ।
१७—चेत्यर्थादि B. C.
१८—'न ( ना B. ) राशंसः' इत्येव प्रतीकः B. C

नरो होतृप्रभृतयोऽस्मिन् प्रकृते[1] आसीनाः शंसन्तीति यज्ञोऽन्यपदार्थः। अग्निर्वा ऋत्विग्यजमानैर्नरैः प्रशस्यत्वान्नाराशंसानि। अस्य च सूक्तस्य तनूनपातं[2] चात् वासिष्ठीं नाराशंसीमुदाजहार।

[इति त्रयोदशस्या-(अष्टमस्या-) ध्यायस्य षष्ठः खण्डः।][3]

---

## [अथ सप्तमः खण्डः।][3]

नराशंसस्य महिमानमेषामुप स्तोषाम यजतस्य यज्ञैः।

ये सुक्रतवः शुचयो धियन्धाः स्वदन्ति देवा उभयानि हव्या॥[4]

नराशंसो यज्ञो अग्निर्वा तस्य महिमानं माहात्म्यम्। एषामृत्विजां देवानां वा वक्ष्यमाणानां वा। षष्ठीश्रुतेः सम्बन्धिन इति शेषः। उपस्तोषाम उपस्तुमः। यजतस्य यजेरयमर्हार्थे अतप्रत्ययो यजनार्हस्य। यज्ञैः सप्तम्यर्थे तृतीया ज्योतिष्टोमादिषु यज्ञेषु। यज्ञपक्षे यज्ञार्हस्य महाफलस्य जगतः स्थितिहेतोर्ज्योतिष्टोमादेः। यज्ञैरिति इत्थंभूतलक्षणे[5] तृतीया। अभ्यासापेक्षं बहुवचनम्। यागाभ्यासैरित्थंभूतस्य। उपस्तुते चास्मिन् वा ये सुक्रतवः क्रतुरिति कर्मनाम, सुकर्माणः। शुचयो दीप्ताः। धियन्धाः कर्मणः प्रज्ञाया वा धारयितारः। यच्छब्दश्रुतेस्तच्छब्दाध्याहारः। ते स्वदन्ति लोडर्थे पञ्चमः। आस्वादयन्त्वित्यर्थः। देवाः कर्माङ्गभूताः। उभयानि हव्या हवींषि सौमिकानि धार्शुकानि[6] च। अथवा तान्त्राण्यङ्गहवींषि आवापिकानि च प्रधानहवींषीत्यर्थः।

[ ईळ ईट्टेः स्तुतिकर्मणः। इन्धतेर्वा। तस्यैषा भवति ][7]

ईळ ईट्टेः[8] स्तुत्यर्थस्य। इन्धतेर्वा[9] दीपनार्थस्य। इळोऽग्निः[10]। तस्यैषा।

[ इति त्रयोदशस्या- ( अष्टमस्या- ) ध्यायस्य सप्तमः खण्डः। ][11]

---

१–तेरासीनाः B.

२–अत्र सन्दिग्धः पाठः।

३–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते।

४-[ ऋ० ७ । २ । ३ ] 'नराशंसस्य' इत्येव प्रतीकः B. C.

५–[ पा० २ । ३ । २१ ] क्षणतृती B.

६–अत्र 'पाशवानि' इति स्यात्।

७–अयं मूलपाठो नास्ति B. C.

८–[ धा० २ । ९ ]

९–[ धा० ७ । ११ ]

१०–इळोऽग्निः C. 'ईळोऽग्निः' इति स्यात्।

११–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेर्निर्देशो न दृश्यते।

## [अथाष्टमः खण्डः ।][1]

आजुह्वान ईड्यो वन्द्यश्चा याह्यग्ने वसुभिः सजोषाः ।

त्वं देवानामसि यह्व होता स एनान्यक्षीषितो यजीयान्[2] ॥

प्रत्यक्षकृतत्वान्मन्त्रस्य जुह्वान इत्यादिनामन्त्रितत्वात् एकवाक्यतायै यत्तच्छब्दा-ध्याहारः । यस्त्वं देवानां यह्व[3] महन् होतासि व्यवहितसम्बन्धः । स एनान् यक्षि यच्छ[4] । इषितैः[5] प्रेषितोऽसि । इष्टो वास्माभिः । यजीयान् अतिशयेन यष्टा । यह्व इति पठ्यमानस्यैव[6] निर्वच-नायोपन्यासः । यातश्चासावाश्रयार्थिभिः । द्विधातुजत्वं दर्शितम् ।

[बर्हिः परिबर्हणात् । तस्यैषा भवति[7]]

बर्हिः परिबर्हणात् । उद्यच्छमाना ।

[इति त्रयोदशस्या- (अष्टमस्या-) ध्यायस्याष्टमः खण्डः ।][8]

---

## [अथ नवमः खण्डः ।][8]

प्राचीनं बर्हिः प्रदिशा पृथिव्या वस्तोरस्या वृज्यते अग्र अह्नाम् ।

व्यु प्रथते वितरं वरीयो देवेभ्यो अदितये स्योनम्[9] ॥

प्राचीनं प्रागञ्चितं प्राङ्मुखमित्यर्थः । किं तत् ? बर्हिः । स्वस्यार्थस्य प्रदेशकत्वात्[10] प्रदिशति[11] वाक्यम् 'प्रागुदग्वा बर्हिरास्तीर्यते'[12] इत्यादि । मन्त्रो वा 'ऊर्णम्रदा वि'[13] इत्यादिः । तेन प्रदिशा पृथिव्याः । वस्तोर्वसनाय आच्छादनायेत्यर्थः । अस्या वेदिलक्षणायाः । वृज्यते प्रवृ-ज्यते लूयते प्रस्तीर्यते वा[14] । [अग्रे अह्नां][15] अग्रः प्रथमो भागोऽह्नां तस्मिन् पूर्वाह्ण इत्यर्थः । स्तीर्यमाणां च तत् व्युप्रथते । उकारः पादपूरणः । विप्रथते । वितरं विकीर्णतरं वा । वरीयो वरतरमङ्गान्तरेभ्य उरुतरं वा[16] । देवेभ्यश्चादितये पृथिव्यै वेदिलक्षणायै स्योनं सुखकारत्वात्

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते।

२–[ऋ० १० । ११० । ३ ] 'आजुह्वान' इत्येव प्रतीकः B. C.

३–'ह्व' इति त्रुटितम् B. ये महन् C.

४–अत्र 'यज' इति स्यात् । ५–ऋषितः B. C.

६–विपद्य C. ७–अयं मूलपाठो नास्ति B. C.

८–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।

९–[ ऋ० १० । ११० । ४ ] 'प्राचीनं बर्हिः' इति प्रतीकः C. प्रतीको नास्ति B.

१०–प्रदेशक B. प्रदेशकत्वा C. ११–प्रदिशती B.

१२–[ अनुपलब्धमूलमिदं वचनम् ]

१३–[ऋ० ५।५।४]ऊर्णामृदसम्B.C. १४–वाटB.C.

१५–'अग्रे अह्नां अग्रः' इत्यस्य स्थाने 'अग्रतः ( त C. )' इत्येव पाठः B. C. नास्तिः M.

१६–उरूतर वो C.

सुखमित्यर्थः। विस्तीर्णे बर्हिषि देवाः सुखतरं निषीदन्ति। वेदिरपि तैर्निषीदद्भिर्न दुःख्यते। अत एव च परत्वम्।

स्योनं स्यतेः[2]। अवस्यन्ति[3] अन्तादनुभवन्तः। तन्न सामि भुक्तवन्तमन्तरा मुञ्चति अभिमुखीभूतं वा। तथा चाह।

पर्य[4]वस्थितकालस्य सुखस्य परिवर्जनम्। अनागतसुखे[5]च्छा च नैष बुद्धिमतां नयः॥[6]

एतद् व्याख्यातव्यं गच्छन्ति तत्र सक्ता विनश्यन्ति। सेवनार्हं वा प्रया[7]जानाम्।

आग्नेयस्तुतिपक्षे[8] [अग्निपक्षे][9] बर्हि[10]रग्निः परिवृद्धत्वात् प्राच्यां दिशि [11]प्रणयनात् प्रा[12]श्चिः प्रणयनार्थः। वस्तोः 'वस निवासे'[13] देवानां वसनाय। प्रणी[14]तं च सदग्न्याख्यं बर्हिर्विप्रथते आघारादिभिः। वि[15]स्तीर्णतनु ज्वालादिभिः। वरीयो [16]यज्ञसाधनत्वात्। स्योनं देवेभ्यो हविर्वहनेन। अदितये च पृथिव्यै आ[17]हुतिद्वारेण वृष्टिहेतुत्वात्।

[ द्वारो जवतेर्वा। द्रवतेर्वा। वारयतेर्वा। तासामेषा भवति[18] ]

द्वारः कस्मात्? जवतेर्गतिकर्मणः। जकारस्य दकारापत्त्या। द्रवतेर्वा रेफलोपे। तदुभये[19]त द्वारो नामकरणः। वारयतेर्वा द[20]कार उपजनः। अनभिमतो हि तास्वेव निवार्यते। ते[21]षामेषा।

[ इति त्रयोदशस्या-( अष्टमस्या-] ध्यायस्य नवमः खण्डः। ][22]

---

## [अथ दशमः खण्डः।][22]

व्यचस्वतीरुर्विया वि श्रयन्तां पतिभ्यो न जनयः शुम्भमानाः।
देवीर्द्वारो बृहतीर्विश्वमिन्वा देवेभ्यो भवत सुप्रायणाः॥[23]

व्यचस्[24]वतीः। वि अञ्चनं विगमनं परस्परतः प्रविशतां निर्गच्छतां च तेन तद्व[25]त्यो

---

१-सुखं निषी C. M. २-स्येते B. C.
३-अवस्यति B. C. स्यन्ति आन्ता M.
४-पर्युपस्थित C. ५-गते सुखे C.
६-[ अनुपलब्धमूलमिदं वचनम् ]७-प्रयजानाम् B.
८-क्षतादग्नि C. ०क्षता B. ९-नास्ति M.
१०-बहिरग्निः B. C. ११-प्रथयनात् B. C.
१२-प्रजिः B. प्रजितः C. वृजिः M. १३-[धा० १।१०३०]
१४-प्रणितं च B. C. प्रीणीतं स्सन्नग्त्याख्यं M.
१५-विस्तीर्णत ज्वा० B. C.
१६-परीयो B. C.
१७-अहुति B. आह्वति C.
१८-अयं मूलपाठो नास्ति B. C. M.
१९-ता उभयत उकारो B. C. M.
२०-गकार B. C. उकारः M.
२१-अत्र 'तासामेषा' इति स्यात्।
२२-आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते। २३-[ऋ० १०।११०।५] 'व्यचस्वतीः' इत्येव प्रतीकः B. C.
२४-'व्यचस्वतीः' इति नास्ति B. C.
२५-तद्वत्या B C.

द्वितीया प्रथमार्थे व्यञ्जनवत्यः[1]। उर्विया[2] उरुशब्दोऽत्रान्तर्णीतप्रकर्षार्थः[3]। प्रथमाया च 'इया-डियाजीकाराणामुपसंख्यानम्[4]' इति[5] इयादेशः[6]। क्रियाविशेषणं चैतद् विस्तीर्णतरम्। भाष्ये उरुत्वेनेत्यर्थः। विवरणं, उरुत्वेन युक्ता विवृततरा मित्यर्थः। विश्रयन्तां प्रत्यक्षकृतोऽयं[7] मन्त्रः। प्रथमपुरुषश्चायम्। अत एकवाक्यतायै भवच्छब्दोऽध्याहार्यः। भवत्यो विश्रयन्तां विपुलं विवृतमात्मानं[8] कुर्वन्त्वित्येतदाशास्महे। पतिभ्यः[9] नानापतिनामिति वार्था याति सम्भोगकाले जनयो जायाः शुम्भमाना इति शेषः। एनत्[10] ज्ञात्वा देवीः। हे देव्यो द्वारो[11] यज्ञगृहस्य ज्वाला वह्नेः। बृहतीः[12] बृहत्यः। विश्वमिन्वा इन्वतेर्गतिकर्मण एतद्रूपम्। सर्वगमना इत्यर्थः। व्याप्तिकर्माणो वा सर्वव्यापिन्यः। देवेभ्यो देवानामर्थाय भवत सुप्रायणाः[13] सुप्रगमनाः सुविवृता इत्यर्थः। शुम्भमाना शुं[14]शोभिषमाणा इत्यर्थः। अग्निपक्षे ज्वाला द्वारो हविषां सुप्रायणा[15] इति।

उषासानक्ता देवता द्वंद्वयमिति[16] दर्शयति। उषाश्च नक्ता चेति। तत्र चोषस उषासा आदेश औत्तरपदिके स्मर्यते।[17]............।

[इति त्रयोदशस्या-(अष्टमस्या-)ध्यायस्य दशमः खण्डः।][18]

---

## [अथैकादशः खण्डः।][18]

आ सुष्वयन्ती यजते उपाके उषासानक्ता सदतां नि योनौ।
दिव्ये योषणे बृहती सुरुक्मे अधि श्रियं शुक्रपिशं दधाने ॥[19]

[20]........। आसदतां[21] योनौ स्थाने वेद्याख्ये। दिव्ये दिवि भवे। योषणे स्त्रियै। सुरुक्मे

---

१–यऽपि अञ्जन B.
२–उर्विरा B. C.
३–प्रकर्षार्थे C.
४–याजिकारूणा B. C.
५–[पा० ७।१।३९] इति सूत्रे वार्तिकम्।
६–तयादेशः B. C.
७–'अयं' इति नास्ति B C.
८–'विवृतं' इति नास्ति। 'विपुलं' इत्येव द्विलिखितम् M.
९–अयं सन्दिग्धः पाठः। अत्र 'पतिभ्यो न पतीनामिव' इति पाठो भवेत्।
१०–इति B. C.
११–द्वारा B. C.
१२–बृहस्पतीः B. बृहस्पतिः C.
१३–सुप्रयाणाः B.
१४–'शु' इति त्रुटितम् B. अग्रे 'शोभीषमाणाः' इति पाठः B. C.
१५–सुपयाणा B.
१६–०द्वन्द्वेऽयम् B. C.
१७–अत्र कश्चन पाठस्त्रुटित आदर्शपुस्तकेषु।
१८–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते। १९–[ऋ०१०।११०।६]
२०–अत्र कियानपि पाठस्त्रुटित आदर्शपुस्तकेषु।
२१–आदतां B. अदतां C. असीदतां M.

सुष्ठु दीते। अधिदधान इत्येतेन सम्बध्यते। श्रियम्। कीदृशम्? शुक्रपिशं शुक्रं दीप्तिः रो मत्वर्थे। पेश इति रूपनाम दीप्तिमद्रूपाम्। अधिदधाने अस्माकमुपरि निदधाने अस्मभ्यं ददतावित्यर्थः।

यजते शब्दव्याख्यानं यक्षिये इति। उपाके इत्यस्य उपक्रान्ते। दिव्ये द्योतने योषणे योषे सम्मिते परस्परतो विविक्ते इत्यर्थः। विपिशित अवयवशो विभक्तमित्यर्थः।

अग्निपक्षे दीप्तिरुषास्तमसो विवासनात्। आहुतिर्नक्ता अनक्त्यग्निमिति स्मयते। अयं मन्त्रार्थ उपपन्नतरः। आहुतिसंपाते प्रकाशप्रकर्षात्। यज्ञाहत्वमुपक्रमणं चाविशिष्टम्। योनिराहवनीयः। योषणे आत्मना मिश्रयन्तौ परस्परतो यज्ञफलभूताः।

दैव्या होतारा आकारो द्विवचनस्य स्थाने। पार्थिवमध्यमावभिधेयौ। तयोरेषा।

[ इति त्रयोदशस्या-( अष्टमस्या-) ध्यायस्यैकादशः खण्डः। ][18]

---

## [अथ द्वादशः खण्डः।][18]

दैव्या होतारा प्रथमा सुवाचा मिमाना यज्ञं मनुषो यजध्यै।
प्रचोदयन्ता विदथेषु कारू प्राचीनं ज्योतिः प्रदिशा दिशन्ता॥[19]

दैव्या देवानां स्वभूतौ होतारौ। प्रथमा प्रथमौ मनुष्यहोतृसकाशात्। सुवाचा शोभनवाचौ। मिमाना मिमानौ यज्ञं मनुषः पितृशब्देन पुत्रस्याभिधानं मनुषस्य यष्टुः सर्वस्य। यजध्यै यागनिर्वृत्तये। प्रचोदयन्ता प्रचोदयन्तौ। विदथेषु यज्ञेषु। किम्? सामर्थ्याद् ऋत्विजो यजमानांश्च। कारू कर्तारौ स्तुतीनाम्। प्राचीनं ज्योतिराहवनीयाख्यम्। प्रदिशा प्रदेशकेन वचनेन दिशन्ता अत्र यष्टव्यमित्येवं प्रदिशन्ताविव। साकांक्षत्वाद्यज इति शेषः।

तिस्रो देवीः प्रथमार्थे द्वितीयेति दर्शयति तिस्रो देव्यः। तासामेषा।

[इति त्रयोदशस्या-(अष्टमस्या-) ध्यायस्य द्वादशः खण्डः।][26]

---

१–अग्निर्दधाने B. अद्रिर्दधाने C. २–शुक्रविषं B.C. ३–शुक्रो B. शुक्र C. ४–'पेश' इति नास्ति B.C. ५–रूपं नाम B. C. ६–उपान्ते B. C. ७–उपक्रमान्ते B. ८–दीप्ये C. दीप्ते B. ९–रुषां तम B. १०–हुतिं नक्ता B.C. हुति नक्ता M. ११–अनक्त्यग्निरिति B. C. १२–हुती सं B. हुती संवादे C. 'तरः। आहुतिसंपा' इति त्रुटितम् M. १३-काशं प्रक B प्राकाशः प्रकर्षात् C, प्रकाशप्रकर्षात् M, १४–पक्रमं B

१५–विशिष्टः B. १६–अकारो B.C. १७–तयोरेषाम् B.C. १८–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते। १९–[ऋ०१०।११०।७] 'दैव्या होतारा' इत्येव प्रतीकः B. C. M. २० 'प्रथमा' इति त्रुटितम् C. २१–होतु सका C. २२–'सु' इति त्रुटितम् B. २३–मनुष्यः B. C. २४–०निर्वित्तये M. अत्र 'निर्वृत्तये' इति युक्तः स्यात्। २५–तासौमेषा C. २६–आदर्शपुस्तकेष्वत्र खण्डसमाप्तेर्निर्देशो न दृश्यते

## [अथ त्रयोदशः खण्डः। ][1]

आ नो यज्ञं भारती तूयमेत्विळा मनुष्वदिह चेतयन्ती ।
तिस्रो देवीर्बर्हिरेदं स्योनं सरस्वती स्वपसः सदन्तु ॥[2]

आकार एत्वित्येतेन सम्बध्यते । नोऽस्माकं स्वभूतं यज्ञम् । भारती भरत आदित्यस्तस्य स्वभूता भा दीप्तिस्तूयं प्रकर्षमेतु[3] [आ][4] गच्छतु । इळा इळा च मनुष्वत्[5] पृथिव्यां स्थात्रीति शेषः । पृथिवीस्थानेत्यर्थः । चेतयन्ती जानन्ती आगमनकालं भक्ततां वास्माकम्[6][7] । आगत्य च तिस्रो देवीः तिस्रोऽप्येता देव्यः । आ इत्युपसर्गः सदन्त्वित्येतेन सम्बध्यते । इदमस्मदीयं बर्हिः[8] सुखं सरस्वती सरस्वत्या सह तिस्रो देव्य इत्यर्थः । स्वपसः सुकर्माणः[9] सदन्तु आसीदन्त्वित्यर्थः ।

त्वष्टा मध्यमस्थानं आप्रीत्वादिह[10] समाम्नातः । तूर्णशब्दादश्नोतेश्वं त्विषेर्वा स्याद्दीप्त्यर्थस्य[11] । त्वक्षतेर्वा[12] करोत्यर्थस्य 'तक्षू त्वक्षू तनूकरणे'[13] इति । यद्व्यापारस्त्वष्टा तस्यैषा ।

[इति त्रयोदशस्या-(अष्टमस्या-) ध्यायस्य त्रयोदशः खण्डः ।][14]

---

## [ अथ चतुर्दशः खण्डः । ][14]

य इमे द्यावापृथिवी जनित्री रूपैरपिंशद् भुवनानि विश्वा ।
तमद्य होतरिषितो यजीयान् देवं त्वष्टारमिह यक्षि विद्वान् ॥[15]

देवताद्वन्द्वे दिवो द्यावादेशो[16] द्विवचनस्य[17] पूर्वसवर्णादेशो द्यावापृथिव्यौ । जनित्री जनयित्र्यौ सर्वस्य [कर्स्थ][18] रूपैर्नानाप्रकारैर्युक्तः । अपिंशत् पिंशतिरत्र करोत्यर्थे अकरोत्[19]

---

१—आदर्शपुस्तकेष्वत्र खण्डारम्भस्य निर्देशो न दृश्यते ।
२—[ऋ० १०।११०।८] 'आ नो यज्ञम्' इत्येव प्रतीकः B. C. M.
३—दीप्तिस्त्वयं B. C. ४—'आ' इति नास्ति M.
५—मनुष्यवत् C.
६—आगत C. 'नकालं भक्ततां' इत्यारभ्य च 'आप्रीत्वादिह समाम्नातः' इत्यन्तः पाठस्त्रुटितः C.
७—अस्मद्भक्ततां वा M.
८—'बर्हिः' इति त्रुटितम् B. C. अग्रे 'सुखां सार' इति पाठः M.
९—'सुकर्मणः' B. C.
१०—स्थाने आपीत्वा B.
११—श्नोतेर्यश्च चिश्वे (श्वे C.) द्या वैद्युत् B. C.
१२—तेर्व्याकरो P.
१३—[धा० १।६५६-५७] तन्त्रः करणे C.
१४—आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।
१५—ऋ० [१०।११०।९] 'य इमे द्यावापृथिवी' इत्येव प्रतीकः B. C. M.
१६—[पा० ६।३।२९] १७—द्विर्वचनं च B. C.
१८—नास्ति M. १९—अत्र करोत् B. C.

करोति वृष्टिप्रदानेन भुवनानि भूतजातानि च विश्वा सर्वाणि। तमद्य होतः अग्नेरन्तरात्मा वा अस्मदीय इषितोऽन्विष्टः प्रेषितो वा मया। यजीयान् अतिशयेन यष्टा। देवं त्वष्टारमिह यज्ञे यक्षि यज। विद्वान् यज्ञं स्वाधिकारं वा।

माध्यमकस्त्वष्टेत्याहुर्नैरुक्ताः। तथा मन्त्रे वाक्यार्थोपपत्तेः। मध्यमस्थाने चाम्नानात्। पार्थिवोऽग्निरिति शाकपूणिः। तस्याग्नेः पार्थिवस्य त्वष्टृशब्द[त्वे]प्रदर्शनार्थैषापरा।

[इति त्रयोदशस्य-( अष्टमस्या-) ध्यायस्य चतुर्दशः खण्डः।]

---

## [ अथ पञ्चदशः खण्डः। ]

आविष्ट्यो वर्धते चारुरासु जिह्मानामूर्ध्वः स्वयशा उपस्थे।
उभे त्वष्टुर्बिभ्यतुर्जायमानात् प्रतीची सिंहं प्रति जोषयेते॥

कुत्सस्य। आविष्ट्य इति स्वार्थे त्यप् [ 'अव्ययात्त्यप्' 'आविष्टस्योपसंख्यानं छन्दसि' इति। ] आविरेव आविष्ट्यः प्रकाश इत्यर्थः। सर्वलोकप्रकाशो वर्धते। चारुः शोभना। आसु। कासु ? उच्यते। जिह्मानां गर्भे इति पूर्वस्यामृच्यादिष्टानामोषधीनामयमन्वादेशः। तेन सामर्थ्याद्यस्यां गर्भभूतस्तास्वोषधीष्वित्यर्थः। जिह्मानां जिह्माः कुटिलाः सप्तम्यर्थे चात्र षष्ठी कुटिलासु तिरश्चीष्वपि सतीष्वित्यर्थः। ऊर्ध्वः ऊर्ध्वज्वालः। अग्नेरूर्ध्वगतित्वात्। 'अग्नेरूर्ध्वज्वलनं वायोस्तिर्यग्गमनमित्यदृष्टकारितम्' इति वैशेषिकाः। स्वयशाः स्वनिमित्तकीर्त्तिः। उपस्थे यत्रायमुपगम्य तिष्ठति तस्यामुपस्थे तत्र। किञ्च उभे द्यावापृथिव्यौ वाहोरात्रे वारणी वा। अतिप्रवृद्धः सन्नयं कदाचिदावां दहेदित्येवं त्वष्टुरग्नेर्बिभ्यतुर्जायमानादुद्विजत एव भीतेव। प्रतीची तमेव प्रति परिचारकत्वेन गते तत्परिचर्यापरे इत्यर्थः। सिंहं तमेवं सहन-

---

१-सर्वायतिं अद्य B. सर्वार्या तं अद्य C.
२-स्त्व (स्वे C.) ष्टा B. C.
३-मत्स्सचि स्थाने चाम्नानात् C. मध्यमे च स्थाने समाम्नानात् B. C.
४-'त्व' इति नास्ति M.
५-आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते।
६-[ऋ० १। ९५। ५] 'आविष्ट्यो वर्धते' इत्येव प्रतीकः B. C. M.
७-०यार्थे B. C. ८-[पा० ४। २। १०४]
९-[ अनुपलब्धमूलमिदं वचनम् ] कोष्ठकान्तर्गतः पाठो नास्ति M.
१०-यस्यांगभूत C. ११-सदिष्वित्यर्थः C.
१२-ऊर्ध्वाज्वालः C. १३-गतीत्वात् C.
१४-वैशेशिकदर्शने ५. २. १३:—०तिर्यक्पवनमणूनां मनसश्च द्यं कर्मादृष्ट०]
१५-'०पस्थं' B. C. १६-सलयं B.
१७-०एव B. C.
१८-मे बिभ्यतु याजमाना C.
१९-सेमेव C.

मभिभवितारं भयानकं प्रति जोषयेते तैस्तैरुपकारैः प्रति सेवेत इत्यर्थः। तस्य प्रकाशस्यैवं दर्शयता भाष्यकारेण तेऽप्याहृता व्याकरणस्मृतिकाराः।

चारुं सामान्येन निर्वक्ति। चारुतयैवान्यत्रान्यत्र गच्छति। जिह्मं 'ओहाङ् गतौ' इत्यस्य इतश्चेतश्च गतमित्यर्थः। स्वाशयेते स्पशिर्बाधने। तेन च सेवालक्षणं बन्धनं लक्ष्यते। तथा च जोषत्यर्थः प्रदर्शित इति सिद्धम्।

इति निरुक्तविवरणसमुच्चये त्रयोदशस्या-[अष्टमस्यां-] ध्यायस्य द्वितीयः पादः।

---

## अथ तृतीयः पादः। [ अथः षोडशः खण्डः।]

वनस्पतिरवसरप्राप्तः। स पुनरयमभिधेयतोऽभिधानतश्च व्याख्यातः 'एष हि वनानाम्' इति। तस्यैषा।

[इति त्रयोदशस्या-( अष्टमस्या-) ध्यायस्य षोडशः खण्डः।]

---

## [ अथ सप्तदशः खण्डः।]

उपावसृज त्मन्या समञ्जन् देवानां पाथ ऋतुथा हवींषि।
वनस्पतिः शमिता देवो अग्निः स्वदन्तु हव्यं मधुना घृतेन॥

उपावसृजेति प्रैषे लोट्। वनस्पतेश्चायं प्रैषः। कुत एतत्? अन्येष्वाप्रीसूक्तेषु 'अवसृजा वनस्पते' 'वनस्पतेऽवसृजोप देवान्' इत्यादिषु दर्शनात्। हे वनस्पते उपोपसर्गश्रुतेर्योग्यक्रियाध्याहारः। उपगम्यावसृज देहीत्यर्थः। त्मन्या आत्मनैव समञ्जन् संगच्छमानः।

---

१-भयाहकं B. भयाहक C. २-रुपकापरः C.
३-'काराः' इति नास्ति B.C.
४-चारुः सामान्येन निर्वचनम्। तस्य B. C.
५-[धा० ३।७]'जिह्मं ओहाङ् ग'इति त्रुटितमB.C. 'तौ इत्यस्य'अस्य स्थाने 'तार्षीयस्य' इति पाठःC.
६-स्पशिन्मन्थनेB. न्मथनेC.'स्वाशयेते'नास्तिB.C'
७-सेनालक्षणं C. ८-यन्धनं B.
९-०र्थःप्रदर्शितमितिM.'इति सिद्धम्'इति नास्तिB.
१०-अयं कोष्ठकान्तर्गतः पाठो नास्ति B. 'इति त्रयोदशस्य द्वितीयः पादः' इति पाठः C. M.
कोष्ठकान्तर्गतः पाठो नास्त्यादर्शपुस्तकेषु।
११-अयं पादारम्भात्मकः पाठो नास्ति C.
१२-'र' इति त्रुटितम् C. १३-स सुनरय C.
१४-[निरु० ८।३] एष भुवनानाम् M.
१५-आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते।
१६-[ ऋ० १०।११०।१० ] 'उपावसृज' इत्येव प्रतीकः B. C. M. १७-[ऋ० १।१३।११]
१८-[ऋ० ३।४।१०]जोपदेवात् C. ०जोवदेवातB.
१९-०त्यर्थात्मना B. C.

केन सह ? यदि यूपो वनस्पतिस्ततः पशुना । अथाग्निस्तत आहुतिभिः कर्माङ्गदेवैर्वा । देवानां चतुर्थ्यर्थे षष्ठी देवेभ्यः । पाथोऽन्नम् । ऋतुथा ऋतावृतौ काले काले यो यो याग-कालस्तस्मिंस्तस्मिन्नित्यर्थः । किं हवींषि पाशुकानि दीयमानश्च तद्वदेव । वनस्पतिः शमिता शमिता च शामित्रोऽग्निः । देवो देवश्चाग्निराहवनीयाख्यः । त्रयोऽप्येते स्वेन स्वेनानुग्राह-केण स्वदन्तु स्वादुकुर्वन्तु । हव्यं हविर्मधुनोदकेन च प्रोक्षणादिगतेन घृतेन चोपस्तरणादि-गतेन [उपावसृज । मन्यो समजसीति पाठः] तस्य यूपस्याग्नेर्वापरा ।

[ इति त्रयोदशस्या-( अष्टमस्या-) ध्यायस्य सप्तदशः खण्डः । ][11]

---

## [अथाष्टादशः खण्डः ।][11]

अञ्जन्ति त्वामध्वरे देवयन्तो वनस्पते मधुना दैव्येन ।
यदूर्ध्वस्तिष्ठा द्रविणेह धत्ताद् यद्वा क्षयो मातुरस्या उपस्थे ॥[12]

विश्वामित्रस्य । अञ्जन्ति म्रक्षयन्ति त्वाम् । अध्वरे यज्ञे । देवयन्तो देवान् यष्टुमिच्छन्तः । छान्दसत्वाद्यचि ईत्वाभावः । वनस्पते हे वनस्पतिविकार यूप । मधुना दैव्येन 'एतद्वै दैव्यं मधु[दैव्यं] यदाज्यम्' इति श्रुतेः । आज्यमत्र मधु दैव्यमुच्यते । तेन यूपपक्षे स्वक्तम् । 'स्वयमेव यजमानः कुर्वीत' इति श्रुतेः । अग्निपक्षे आहुतिलक्षणेन । यत् लिङ्गव्यत्ययेन यः । ऊर्ध्वस्तिष्ठा लिंडर्थे पञ्चमः स्थास्यति । द्रविणा द्रविणानि धनानि यज्ञफलभूतानि

---

१–अथाधिस्तत B. C.
२–'देवेभ्यः' इति त्रुटितम् B.
३–वाथत्व अन्नम् C. पाथस्त्वन्नम् B.
४–'काले यो' इति त्रुटितम् C.
५–स्तमन् B. C.
६–वा शुकानि C. वाशूकानि B. अत्र 'पाशवानि' इति पाठः स्यात् । इतः परं 'दीयमानश्च तद्व-वेव' B. C.
७–देवयाग्निरा B. ८–०णोपायनादि० B. C.
९–'त्मन्या' इति स्यात् । कोष्ठान्तर्गतः पाठो नास्ति M.
१०–यूपस्य (स्या C.) हे द्रुयापारः B. C.
११–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।
१२–[ऋ० ३ । ८ । १] 'सञ्जन्ति त्वाम्' इत्येव प्रतीकः B. C. M.
१३–अञ्जयन्ति C. न्ति मृक्ष M.
१४–यष्णुमि C.
१५–नास्ति M.
१६–[cf. ऐ०ब्रा० २।२ एतद्वै मधु दैव्यं यदाज्यम् । 'यदाज्यतीति B. C.
१७–स्वयक्त B. स्वव्यक्त C.
१८–[अनुपलब्धमूलमिदम् ] कुर्विति B.
१९–'आहुति' इति द्विर्लिखितम् B. C.
२०–त्रूद्धर्थे B. C.
२१–द्रुतानि C.

यज्ञाङ्गमापद्यमानोऽस्माकं धत्तात् दास्यसि । यत् प्रथमा षष्ठ्यर्थे वाशब्दश्चार्थे । यस्य च ते क्षयो निवासोऽवटाख्यः कृत इति शेषः । मातुः मातृभूताया अस्या वेदिसम्बन्धिन्या उपस्थे उपस्थाने उत्तरवेद्यामित्यर्थः । एवमयं यूपः स्तुतः । अग्निरिति शाकपूणिः । पूर्ववत्तस्यैषापरा ।

[इति त्रयोदशस्या- (अष्टमस्या-) ध्यायस्याष्टादशः खण्डः ।][1]

---

## [ अथैकोनविंशः खण्डः । ]

देवेभ्यो वनस्पते हवींषि हिरण्यपर्ण प्रदिवस्ते अर्थम् ।

प्रदक्षिणिद्रशनया नियूय ऋतस्य वक्षि पथिभीरजिष्ठैः ॥[2]

वामदेवस्यार्षम् । देवेभ्यो देवानामर्थाय । हे वनस्पते यूप अग्ने वा । एतानि हवींषि । हिरण्यपर्ण[3] तक्ष्णेनापहृतानि वलिशभूतानि[4] [दहनानि[5] दहतां[6]] वनस्पतीनां पर्णानि[7] येनासौ हिरण्यपर्णः[8] । अथ वा हिरण्यपर्णानीव[9] ज्वालालक्षणानि पर्णानि[10] यस्य स हिरण्यपर्णः[11] । तस्य सम्बोधनं हे हिरण्यपर्ण[12][13] । प्रदिवः पुराणनामैतत् । अर्थमित्येतेन[14] सम्बध्यते । ते छान्दसत्वाद् द्वितीयैकवचनस्य स्थाने स्वादेशः[15] । पुराणमनादिकालप्रसिद्धमिममर्थं त्वां ब्रूम इति शेषः । एतच्च ज्ञात्वा प्रदक्षिणिद्रशनया[16] रज्ज्वा[17] नियूय निर्बध्य । यूपपक्षे आत्मानं परिव्ययणार्हभावं गत्वेत्यभिप्रायः । इतरत्र [निध्यैतमिहं[18]] हवींषि[19] । ऋतस्य यज्ञस्य ये पन्थानस्तैः[20] पथिभिः । कीदृशैः ? रजिष्ठैः अतिशयेन ऋजुभिः । उदकं वा रजस्तेन तद्वद्भि-

---

१—आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।

२-[मैत्रा० सं० ४ । १३ । ७] 'देवेभ्यो वनस्पते' इत्येव प्रतीकः B. C. M.

३—रण्यवर्ण B. C.

४—वैद्रभूतानि M.

५—वहतानि B. दहतानि C.

६—वहतां B. कोष्ठकान्तर्गतः पाठो नास्ति M.

७—वर्णानि B.C.

८—०ण्यवर्णः B. C.

९—अभि हिर B. C.

१०—ण्यवर्णानिव B. C.

११—वर्णानि B. C.

१२—०ण्यवर्णः B. C.

१३—०ण्यवर्ण B. C.

१४—'न' इति त्रुटितम् C.

१५—०नस्यायने आदेशः B. C. ०नस्यायन्ते M.

१६—०वृद...... ..रशनया B. C.

१७—रज्ज्वादि (ना) B.

१८-निश्चयै B. C.

१९—अयं पाठः सन्दिग्धः ।

२०—नास्ति M.

यैः। सच्छ्रेतश्रान्तस्य पातव्यमुदकमस्तीत्यभि ग ः।][1] [2] रञ्जकैर्त्रा प्रीतिकरस्वरूपैः [इत्यर्थः][3] प्रपिष्टतमैः,[4] पिष्टमिति[5] रूपनाम, प्रकृष्टतमरूपैरित्यर्थ । एवंविशिष्टैरक्षि वह। यज्ञाङ्गभावो-[7] पगमनेन यूपस्य हविर्वहनप्रयोजनम्। एषापरा।

[इति त्रयोदशस्या-(अष्टमस्या-) ध्यायस्यैकोनविंशः खण्डः।][8]

---

## [अथ विंशः खण्डः।][8]

वनस्पते रशनया नियूय पिष्टतमया वयुनानि विद्वान्।
वह देवत्रा दिधिषो हवींषि प्र च दातारममृतेषु वोचः॥[9]

हे वनस्पते रशनया रज्ज्वा नियूय निबध्य। पिष्टतमया[10] पिष्टमिति रूपनाम। सामर्थ्या-[6] च्चात्रान्तर्णीतमत्वर्थः[11]। रूपवत्तमयाऽतिशयेन[12] रूपवत्तयेत्यर्थः। वयुनानि स्वानि प्रज्ञानानि अस्मदीयानि वा भक्तीरयवाणि[13] विद्वान जानन् वह देवत्रा देवान् प्रति। दिधिषः[14] हे स्वकर्मणः कृत्स्नस्य वा जगतो धारयितः। हवींषि प्रो[15]पसर्गो वोच इत्येतेन सम्बध्यते। प्रवोचः प्रब्रूहि च। दातारं[16] यजमानम्। अमृतेषु[17] मरणवर्जितेषु देवेषु। अमुना यजमानेनैतानि[18] हवींषि दत्तानीत्येवं देवेभ्यः कथयेत्यर्थः।

मन्त्रवाक्यसङ्गतिर्न तथा यूपे यथाग्नाविति[19] शाकपूणिः। विद्धंतादस्यार्थप्रति-[20] पादनार्थमन्त्रोदाहरणम्[21]।

स्वाहाकृतय इ[22]त्यभिधानतोऽभिधेयतश्च वक्तव्या इति शेषः। 'प्रविभज्य निर्ब्रूयात्'[23] इत्यभिधानम्[24]। अत आह।

---

१–अयं सन्दिग्धः पाठः। अत्र 'गच्छतः श्रान्तस्य' इति वा पाठो भवेत्। २–वातव्य C.
३–नास्ति M. ४–'प्रपिष्टतमैः' इति त्रुटितम् C.
५–प्रविष्टमिति C.
६–सामर्थ्याचात्रा रूपं C. ७–यजांग B.C.
८–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते।
९–[मैत्रा०सं० ४। १३। ७] 'वनस्पते रशनया' इत्येव प्रतीकः B. C M.
१०–'वष्टकमया C विष्टतमया M.
११–त्रान्तर्नीत B. १२–रूपवल्कमया B. C.
१३–रमवाणि C. अयं सन्दिग्धः पाठः। १४–न्दिविषः C.
१५–'प्र' इत्येव B. प्रो० C अत्र 'पसर्गो' इति पाठस्त्रुटितः B. C.
१६–दातर स्व जमान C. १७–तेष्ण रमण C.
१८–मानेन तानि B. मानेनेतानि C.
१९–यथान्नाविति B. C.
२०–अयं सन्दिग्धः पाठः। कदाचिदत्र 'वृद्धकात्थक्यार्थप्रति' इत्यादि पाठो भवेत्।
२१–र्थमन्त्रोदा B. २२–'तय इ' इति त्रुटितम् C.
२३–[निरु० २।२] निब्रूयात् B.
२४–'नम्' इति त्रुटितम् C.

[स्वाहेत्येतत् सु आहेति वा। स्वा वागाहेति वा। स्वं प्राहेति वा। स्वाहुतं हविर्जुहोतीति वा। तासामेषा भवति।][1]

स्वाहेत्येतत्पूर्वपदं सु[2] आहेति वा। स्वाहाकारान्तो होममन्त्राणां कर्तव्यः। 'न ह वै ता आहुतयो देवान् गच्छन्ति ये[3] अवषट्कृता[4] वा अस्वाहाकृता वा भवन्ति'[5] इति श्रुतेः। स्वाहाकारस्य सम्प्रदानत्वेन[6] मन्त्रान्तेऽवश्यंभावित्वादयमर्थो यस्यान्ते[7] श्रूयते स होममन्त्रः शोभनमर्थमाह। अथवा प्रजापतेः स्वा[8] आत्मीया वागाहेति स्वाहा। एवं हि श्रूयते 'स्वा[9] ह्येनं वागभ्यवदत् तत्[10] स्वाहाकारस्य[11] जन्म[12]' इति। एवमिति स्वाहाकाररूपा वाक् प्रजापतेर्निसृष्टेत्यर्थः। अथवा स्वं[13] प्राहेति यजमानस्य स्वयं हविर्देवतायै दत्तं तदुद्देशेन त्यागात्[14] तस्य यजमानस्येत्येवं प्राहेति स्वाहा। सम्प्रदानत्वं[15]स्वाहाकारस्य स्पष्टमनेन प्रकारेण प्रदर्शितं भवति। स्वाहुतमित्यादि। अथवा यदनेन स्वाहाकारेण जुहोति तदेव सुष्ठु मर्यादया जुहोतीति। एवं च सति पूर्वकाणि निर्वचनानि ब्रूतेः[18]। इदं जुहोतेरिति[19]। अत्र स्मरणार्थमुक्तमस्य[20] प्रयाजस्य वक्ष्यमाणदेवतासंकीर्तनकृतत्वात्[21] स्वाहेति। एवं पूर्वाकृति[22]करणमुच्चारणं वा समीक्ष्य वक्ष्यमाणदेवतानां ताः स्वाहाकृतय उच्यन्ते। भाष्यकारेण तु[23] प्रसिद्धमभिधेयमिति कृत्वा नोक्तम्। तासां स्वाहाकृतीनामेषा।

[इति त्रयोदशस्या-(अष्टमस्या-)ध्यायस्य विंशः खण्डः।][24]

---

## [अथैकविंशः खण्डः।][24]

सद्यो जातो व्यमिमीत यज्ञमग्निर्देवानामभवत् पुरोगाः।
अस्य होतुः प्रदिश्यृतस्य वाचि स्वाहाकृतं हविरदन्तु देवाः॥[25]

सद्य एव जायमानः सन् व्यमिमीत[26] निर्मिमीते यज्ञम्। अग्निर्देवानामभवत् भवति पुरोगा

---

१–अयं मूलपाठो नास्ति B. C. २–सुमूहेति C.
३–'ये' इति त्रुटितम् B. C. ४–कृत्वा वा B. C.
५–[शत० ब्रा० १।३।३।६,१४] ६–सम्प्रदत्त्वेनB.
७–यस्या ने B. यस्य ने C.
८–स्वाहा आत्मीया स्वाहेतिB.C. ९–सा ह्येनंB.C.
१०–'तत्' इति त्रुटितम् B. C.
११-'स्य' इति त्रुटितम् B. C.
१२–[मैत्रा० सं० १।८।१] १३–स्वयं पाहेति B.C.
१४–स्वाहा हवि B. C. १५–इदं B. C.
१६–स्य (स्या C.) त्तस्य B. C. १७–पदानत्वं B.C.
१८–ब्रूमः B.C. १९–होतेतरतिC. २०–मुक्तमस्यB.
२१–'त' इति त्रुटितम् B. C. संकीर्तकत्वातM.
२२–०कृतिः M. २३–'तु' इति त्रुटितम् C.
२४–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते।
२५–[ऋ० १०।११०।११] 'सद्यो जातः' इत्येव प्रतीकः B. C. M.
२६–सत्म्यमिमीत C. स सद्योऽमिमीत B.

अग्रतो गामी । अस्य होतुः[1] प्रदिशि प्रकृष्टायां[2] दिशि प्राच्यामित्यर्थः[3] । ऋतस्य[4] गतस्यात्मना । वाचि[5] वाचात्राधारभूतमास्यं लक्ष्यते । आस्ये स्वाहाकृतं वषट्कारप्रदानत्वात् प्रयाजादीना स्वाहाकारशब्दोऽत्र न स्वाहाकारवचनः । [ किन्तर्हि[6] ] शोभनस्य वा करोतिरपि क्रिया-सामान्यवचनत्वाद् जुहोत्यर्थे । शोभनेन हुतं हविरदन्तु भक्षयन्तु उत्तमप्रयाजदेवताः ।

इतीमा [आप्रीदेवता अनुक्रान्ताः । अथ किंदेवताः प्रयाजानुयाजाः । आग्नेया इत्येके[7] ]

एवमिमा आप्रीणाम्[8] ऋचां देवतानिर्वचनो[9]दाहरणविचारयुक्तमानुपूर्व्येण[10] यथासमाम्नायं व्याख्याता[11] इत्युक्तोपसंहारवचनम् । उत्तरविवक्षयानन्तरं विचारः सन्देहप्रश्नपुरस्सरः । [का सा एषाम्[12]] किं देवताः प्रयाजानुयाजा इति । इदमयुक्तं[13] वर्तते । किमत्रायुक्तम् ? प्रयाज-देवता इति विचार्य ता एव सन्निहिता अनुपृच्छति किंदेवता इति । सोऽयं घोटारूढस्य विस्मृतो[14] घोटस्तत्रैतत् स्यात् ।

इह [हि][15] क्वचित् समुदायावयव[16]विसम्बन्धित्वेनाश्रयतो[17] द्रष्टव्या । यथैन्द्रवाय्[18]वादि-यागानां प्रत्येकं देवताभेदे सति तत्समुदायस्य प्रातः सवनसंज्ञकस्याग्नेयत्वं प्राप्तम् । आग्नेयं प्रातःसवनमिति । तद्वदिहापि स्यात् । उक्तास्वपि[19] प्रतिप्रयाजं देवतासु समुदाय-देवताभिप्रायः प्रश्न इति ।

तन्न । चोदनालक्षणत्वाद्देवतायाः । न च कल्पितप्रयाजसमुदायस्य काचिद्देवता श्रूयते । दृष्टान्ता[20]नुपपत्तिश्च । यतः प्रातःसवनस्याग्नेयत्वं[21] भक्तिमात्रम् । यथा वायव्या[22]-नीति सोमपात्राणि[23] ।

एवं तर्हि यज्ञ इति कार्थक्यं[24] इत्यादिप्रदर्शिता[25]चार्यविप्रतिपत्तेः । 'छन्दोदेवता इत्यपरम्[26] । छन्दांसि वै प्रयाजाः[27]' इत्यादि[28]वक्ष्यमाणवा[29]देभ्यश्च[30] देवतासन्देहे सति निश्चय-माधास्यामीति प्रश्न इति किंदेवताः । [तत्प्रति][31]वचनम्—

---

१–हेतुः प्रदिशि B. होतुः प्रदर्शि C.
२–'प्रकृष्टायां दिशि' इति त्रुटितम् B.
३–प्राच्यमित्य M.    ४–मतस्य C.
५–वाचिरवा (वाचि) चात्रा B.    ६–नास्ति M.
७–'इतिमा इत्यादि' एवं प्रतीकः B. C. M.
८–अप्रीणा B.    ९–पाठस्त्रुटितः B. C.
१०–विचार आनु० B. C. ११–०नुक्रामन्ता B.C.
१२–'कासा एषाम्' इत्यधिक एवात्र पाठो भाति B. C. नास्ति M.
१३–'म' इति त्रुटितम् C.    १४–विस्तृते B. C.
१५–नास्ति M.    १६–'व' इति नास्ति B.
१७–०यतो द्रष्टव्यः C. ०यतो दृष्टम् M.
१८–वाय्वादि B.
१९–स्वपि प्रतिप्रयाजदेव C.
२०–दृष्टानुप० M. २१ वनमाग्नेय B.C. वनाग्नेयM.
२२–वायव्यानीति B.    २३–०पात्राणां M.
२४–कार्थक्यस्य B.    २५–र्शितः आचा B.
२६–त्यपरः C. २७–[नि६०८।२२] २८–इति B.C.
२९–वक्ष्यमाणा वा B. C.    ३०–देवेभ्यश्च B. C.
३१–'तत्प्रति' इति नास्त्यादर्शपुस्तकेषु ।

आग्नेया इत्येके मन्यन्त इति शेषः । कुतः ? मन्त्रलिङ्गात्[1] । सिद्धान्तोपक्रमश्चायं विचारः । अन्ते वक्ष्यति 'आग्नेया इति तु स्थितिः'[2] इति ।

[इति त्रयोदशस्या-(अष्टमस्या-) ध्यायस्यैकविंशः खण्डः ।][3]

---

## [अथ द्वाविंशः खण्डः ।][3]

प्रयाजान्मे अनुयाजांश्च केवलानूर्जस्वन्तं हविषो दत्त भागम् ।

घृतं चापां पुरुषं चौषधीनामग्नेश्च दीर्घमायुरस्तु देवाः ॥[4]

संवादसूक्तमेतत् । सौचीकमग्निं[5] देवा ऊचुः । हव्यं नो वहेति[6] । स ताननयर्चा भागं ययाचे । प्रयाजान्मे मह्यम् । अनुयाजांश्च केवलानसाधारणान् । ऊर्जस्वन्तं हविषो दत्त भागं स्विष्टकृदाख्यं घृतं च प्रयाजाज्यं भागादि अपां सम्बन्धीति शेषः । अद्भ्य उत्पन्नानां विकारभूतमित्यर्थः । पुरुषं चौषधीनां पुरुषशब्देनात्र पुल्लिङ्गत्वादाग्नेयः सवनीयः पशुरुच्यते । तं चौषधीनां सम्बन्धिनं भक्षयितारमित्यर्थः । अथवा पुरु बहु कर्म सनोतीति पुरुषं पुरोडाशस्तं च दर्शपूर्णमासादिषु कर्मसु ओषधीनां विकारतया सम्बन्धिनमग्नेश्च तद्धवींषि वहतो दीर्घमायुरस्तु देवाः ।

एवं याचिते भागे तं देवाः परयर्चा प्रत्यूचुः ।

तव प्रयाजा अनुयाजाश्च केवल ऊर्जस्वन्तो हविषः सन्तु भागाः ।

तवाग्ने यज्ञो३ऽयमस्तु सर्वस्तुभ्यं नमन्तां प्रदिशश्चतस्रः ॥[14]

केवला असाधारणाः । ऊर्जस्वन्तो बलवन्तः । हविषो मध्ये सन्तु भागाः । अनुज्ञाता अस्माभिरित्यर्थः । तवैवं च हे अग्ने यज्ञोऽयमस्तु भवतु सर्व एव । किं बहुना तुभ्यमेव नमन्तां प्रदिशः प्रकृष्टा दिशश्चतस्रोऽपि । अथवा प्रागन्तादिभिः प्रदिशोऽवान्तरदिश उच्यन्ते ताश्चतस्रश्च दिशः । तादर्थ्याच्च विश्वं भुवनमुच्यते दिक्शब्देन ।

---

१–'चा' B. C. २–[निरु० ८।२२]

३–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते।

४–[ऋ० १० । ५१ । ८] 'प्रयाजान्मे' इत्येव प्रतीकः B. C. M.

५–सौचीक० M. ६–'ति' इति त्रुटितम् B. C.

७–नास्ति B. C.

८–भागानि होदिष्व B. C.

९–'उत' इति त्रुटितम् C.

१०–तश्चौ C. अतश्चौ० B.

११–पुरुष बहु C.

१२–न्धिनामग्ने B. C १३–तद्धवींषि C.

१४–[ऋ० १०।५१।९] 'तव प्रयाजा अनुयाजाश्च केवले' इत्येव प्रतीकः B.C.

१५–तथैव B. C.

१६–प्रगन्ता C प्रगन्तादिशीति M.

**एवं मन्त्रलिङ्गादाग्नेयत्वमुपपाद्य ब्राह्मणमपि दर्शयति।**

आग्नेया [वै प्रयाजा आग्नेया अनुयाजाः। इति च ब्राह्मणम्।

छन्दोदेवता इत्यपरम्।

छन्दांसि वै प्रयाजाश्छन्दांस्यनुयाजाः। इति च ब्राह्मणम्।

ऋतुदेवता इत्यपरम्।

ऋतवो वै प्रयाजा ऋतवोऽनुयाजाः। इति च ब्राह्मणम्।

पशुदेवता इत्यपरम्।

पशवो वै प्रयाजाः पशवोऽनुयाजाः। इति च ब्राह्मणम्।

प्राणदेवता इत्यपरम्।

प्राणा वै प्रयाजाः प्राणा वा अनुयाजाः। इति च ब्राह्मणम्।

आत्मदेवता इत्यपरम्।

आत्मा वै प्रयाजा आत्मा वा अनुयाजाः। इति च ब्राह्मणम्[2]]

**अनुयाजादीनां[3] प्रसङ्गाद्देवताभिधानं निगदव्याख्यानम्। तत्र सिद्धान्तम्[4]।**

[आग्नेया इति तु स्थितिः। भक्तिमात्रमितरत्।][5]

**आग्नेया इत्येषा स्थितिः पक्ष इत्यर्थः। भक्तिमात्रमितरत् छन्दांसि वा इत्येवमादि-ब्राह्मणम्। विचारप्रयोजनाभिधित्सयाह।**

किमर्थं पुनरिदमुच्यते।

**इत्यादि।**

यस्यै देवतायै हविर्गृहीतं स्यात्तां मनसा ध्यायेत्, वषट्करिष्यन्। इति ह विज्ञायते।[6]

**ऋज्वर्थं ब्राह्मणम्[7]। निश्चिते च देवतातत्त्वेऽध्यवसानस्य संभवात्[8] [सगुणं कर्म भवति][9] निवृत्ते च विचारे सुहृद्भूत्वा कथयति।**

[इतीमान्येकादशाप्रीसूक्तानि।][10]

**यानि वेदे पठ्यन्ते तान्येतान्येकादश। संख्यावधारणमृग्वेदाभिप्रायम्[11]। यजुर्वेदे 'समिद्धो अग्निः[12]' इत्यादीन्यन्यानि[13] पठ्यन्ते। पश्वश्वमेधे[14] विनियोगः। बह्वृचानां त्वेकादशैव[15]।**

---

१–०यत्त्वमुपपादिते B. C.

२–'आग्नेया इत्यादि' इत्येव प्रतीकः B. C. M.

३–अनुयाजानां M. ४–०पत सिद्धान्तम् C. सिद्धान्तः B.

५–अयं मूलपाठो नास्ति B. C. M.

६–'यस्यै इत्यादि' इत्येव प्रतीकः B. C. M.

७–'ब्राह्मणमृज्वर्थम्' इत्यानुपूर्वीकः पाठः M.

८–अध्यवसानसंभवात् M.

९–क्रम B. C. कोष्ठकान्तर्गतः पाठो नोपलभ्यते M.

१०–अयं मूलपाठो नास्ति B. C. M. ११-ग्वेदादिभिप्रा B. C.

१२–[यजु० २९।१] समिद्धो' इत्यस्मात्पूर्वं 'अति' इत्यधिकः पाठः B. C. १३–इत्याद्यन्यानि M.

१४–पशवश्च मेधे B. १५–शैवम् B. C.

तथ च शौनकः पठति 'एकादश संप्रैषैर्यानि जानीमश्छन्दांसि' इति ।

[तेषां वासिष्ठमात्रेयं वाध्र्यश्वं गार्त्समदमिति नाराशंसवन्ति ।][2]

तेषामेकादशानां मध्ये वासिष्ठम् 'जुषस्व नः समिधमग्ने अद्य' इति । आत्रेयम् 'सुसमिद्धाय शोचिषे' इति । वाध्र्यश्वम् 'इमां मे अग्ने समिधं जुषस्व' इति । गार्त्समदम् 'समिद्धो अग्निर्निहितः [पृथिव्याम्]' इति । एतानि चत्वारि नाराशंसवन्ति । वसिष्ठशुनकादीनां नाराशंसयाजिनामाप्यः प्रयोज्याः । '[यद्वा] यो यजमानः' इति वचनाद्याज्यत्वेन द्रष्टव्यानि ।

[ मैधातिथं दैर्घतमसं प्रैषिकमित्युभयवन्ति । ][12]

मैधातिथं 'सुसमिद्धो न आ वह' इति । दैर्घतमसं 'समिद्धो अग्न आ वह' इति । प्रैषिकं प्रैषेषु भवं 'होता यक्षदग्निं समिधा सुषमिधा समिद्धम्' इत्यादीनि । एतानि त्रीणि तनूनपाता नाराशंसेन[16] चोभयवन्ति ।

[अतोऽन्यानि तनूनपात्वन्ति तनूनपात्वन्ति ।][17]

अतोऽन्यानि चत्वारि 'समिद्धो अद्य राजसि' 'समित्संमित सुमना [ बोध्यस्मे ]' 'समिद्धो विश्वतस्पतिः' समिद्धो अद्य मनुषो दुरोणे' इत्येतानि तनूनपाद्वन्ति । वसिष्ठादिव्यतिरिक्तानां तनूनपाद्याजिनाम् । सर्वेषु प्रत्यृचमेता देवताः । तथा चाह 'सर्वत्र प्रथिताभ्यः स्वस्य' इत्यादि सिद्धम् ।

इति निरुक्तविवरणसमुच्चये त्रयोदशा-[अष्टमो-] ध्यायः समाप्तः ।

[इति द्वाविंशः खण्डः समाप्तः][24]

---

१–[अनुपलब्धमूलमिदं वचनम्]
२–अयं मूलपाठो नास्ति B. C. M.
३–[ऋ० ७।२।१] 'ध' इत्येव पाठः B. C.
४–अत्रेयम् B. C.
५–[ऋ० ५।५।१]
६–[ऋ० १०।७०।१]
७–[ऋ० २।३।१] 'पृथिव्याम्' नास्ति M.
८–शूनका B.
९–०याजि जिनमाप्यः C. यजिनामाप्यः B.
१०–नास्ति M.
११–[अनुपलब्धमूलमिदं वचनम्]
१२–अयं मूलपाठो नास्ति B. C. M.
१३–ऋ० [१।१३।१]
१४–[ऋ० १।१४२।१]
१५–[मै० सं० ४।१३।३।। का० सं० १५।१३]
१६–नराशंसनेन B. नराशंसेन C.
१७–अयं मूलपाठो नास्ति B. C. M.
१८–[ऋ० १।१८८।१] 'अन्य' B. C.
१९–[ऋ० ३।४।१] बोध्यग्ने C. सुसमा बोध्यमे B. 'बोध्यस्मे' इति नास्ति M.
२०–[ऋ० ९।५।१ ]
२१–[ऋ० १०।११०।१]
२२–[अनुपलब्धमूलमिदं वचनम्] स्वस्य B. C.
२३–अयं कोष्ठकान्तर्गतः पाठो नास्ति B. C. त्रयोदशस्याध्यायः C.
२४–नास्त्यादर्शपुस्तकेषु ।

# अथ चतुर्दशो [नवमो]ऽध्यायः । [प्रथमः खण्डः ।][1]

अथ यानि [पृथिव्यायतनानि सत्त्वानि स्तुतिं लभन्ते तान्यतोऽनुक्रमिष्यामः ][2]

आप्रीदेवतापदं समाम्नायानन्तरं[3] यानि तानि । उद्देशप्रतिनिर्देशार्थौ यत्तच्छब्दौ । पृथिवी आयतनं स्थानं येषाम् । सत्त्वानि सत्त्वशब्दोऽयं[4] यद्यपि प्राणिवचनोऽप्यस्ति सर्वे सत्त्वाः सुखिनो भवन्तीति[5] । तथाप्यत्र वस्तुमात्रवचनो गृह्यते । अतो लिङ्गसंख्यायोगि वस्तु द्रव्यं सत्त्वमुच्यते । कुत एतत् ? अक्षादीनामचेतनानामपि परस्तादुपन्यसिष्यमाणत्वात् । इतरथा[6] ह्यश्वादिप्राणिप्रकरणादक्षादीनामप्रकृतोपन्यासः । तदर्थो वा विशेषाधिकारः पुनः कर्तव्यः स्यात् । स्तुतिं लभन्त इति हेतुवचनमेतत् । मन्त्रेषु गुणित्वेन[7] श्रूयन्त इति कृत्वा देवतावत्समाम्नाये पठितानि । अतो[8] हेतोरनुक्रमिष्यामो व्याख्यास्यामः । [9]

[ तेषामश्वः प्रथमागामी भवति । अश्वो व्याख्यातः । तस्यैषा भवति । ][10]

तेषां चैतन्यान्मनुष्येभ्यश्चानन्तरमश्वानामुत्पत्तिः श्रूयते । 'प्रजापतिः प्रथमामाहुतिमजुहोत्[11] । तत[12] एतस्या आहुतेः पुरुषोऽजायत । स द्वितीयामजुहोत् ततोऽश्वा अजायन्त'[13] इत्येवमश्वस्येतरेभ्यः प्राधान्यात् प्रथमगामित्वम्[14] । माहाभाग्याद्देवताया[15] इत्यत्र चोत्कर्षक्रमनियमाः[16] स्तुतिलाभहेतवः प्रपञ्चेनोक्ताः । अग्न्यादीनामिवाश्वादीनामपि[17] । अश्वो व्याख्यातः[18] । अश्नुतेऽध्वानमिति । तस्यैषा प्राधान्यस्तुतिः ।

[ इति चतुर्दशस्या-( नवमस्या-) ध्यायस्य प्रथमः खण्डः ।][19]

---

१–अयं कोष्ठकान्तर्गतः पाठो नास्ति P. अयं सर्वोप्यध्याय प्रारम्भात्मकः पाठो नास्ति C. M.

२–'अथ यानीत्यादि' इत्येवं प्रतीकः B. C.

३–पदसमाम्नायादनन्तरं B. C. M.

४–बन्धशब्दो B.C.

५–भवन्तु B.C. यथाप्यत्र B.

६–अतरथा C.

७–गुणितेन P. C.

८–अथतो हेतो C.

९–[निरु० २।२७]

१०–अयं मूलपाठो नास्ति B. C.

११–प्रथममाहुतीमजु B. C,

१२–अत B. C.

१३–[मैत्रा० सं० १।८।१] 'ततोऽश्वोऽजायत' इति पाठो ऽन्यत्र ।

१४–गामित्वान् B.

१५–महाभाग्य B. C.

१६–नियमः स्तुतिलोभ B. C.

१७–'नामिवाश्वादी' इति द्विलिखितम् C.

१८–नास्ति B. C.

१९–आदर्शपुस्तकेष्वत्र खण्डसमाप्तेर्निर्देशो न दृश्यते ।

## [ अथ द्वितीयः खण्डः ।][1]

अश्वो वोळ्हा सुखं रथं हसनामुपमन्त्रिणः ।
शेपो रोमण्वन्तौ भेदौ वारिन् मण्डूक इच्छतीन्द्रायेन्दो परि स्रव ॥[2]

[ इति चतुर्दशस्या-( नवमस्या-) ध्यायस्य द्वितीयः खण्डः ।][1]

---

## [अथ तृतीयः खण्डः ।][1]

मा नो मित्रो वरुणो अर्यमायुरिन्द्र ऋभुक्षा मरुतः परि ख्यन् ।
यद्वाजिनो देवजातस्य सप्तेः प्रवक्ष्यामो विदथे वीर्याणि ॥[3]

न त्वत्राऽश्वशब्दोऽस्ति[4] । माभूत् । तस्य पर्यायो वाजिन्[5]शब्दोऽस्ति । परासु च[6] बहुशोऽश्वशब्दोऽपि । अश्वसूक्तमिति[7] च समाख्यायते । तस्यैषा प्रथमा[8]भूता । अंशाभितष्टीया दि्वेकलिङ्गत्वेऽपि तद्देवत्वमिष्यते[9] । किमङ्ग पुनरनेकलिङ्गत्व इत्यदोषः ।

दीर्घतमस आर्षम् । मा इति प्रतिषेधार्थीयः परिख्यन्नित्येतेन सम्बध्यते । नोऽस्माकम् । परस्ताद्यच्छब्दश्रुतेस्तच्छब्दाध्याहारः[10] । तं[11]मित्रो वरुणोऽर्यमा । आयुः अयनस्वभावत्वाद्वायुः[12] । छान्दसो वकारलोपः । इन्द्र ऋभुक्षा महन्नामैतत् महान् । अथवा उरु भातीति ऋभुर्विस्तीर्णमन्तरिक्षम् । तस्मिन्यः क्षयति वसति स ऋभुक्षाः । अथवा ऋभवः सौधन्वनास्तेषां यः क्षयति राजति ईष्ट इत्यर्थः स ऋभुक्षाः । मरुतश्च मा परिख्यन् परिख्यानं[13] परिवर्जनम् । अनुमदन्तमाकाङ्क्षुः[14] । यद्वा[15]ऽनुमन्यन्तामित्यर्थः । यद्वयं वाजिनोऽश्वस्य देवजातस्य '[स][16] प्रथमामाहुतिमजुहोत् ततो मनुष्या अजायन्त । स द्वितीयामजुहोत् ततोऽश्वाः'[17] इति श्रुतेर्देवादग्नेराहुत्या जातस्य[18] । अथवा 'सूरादश्वं वसवो निरतष्ट'[19] इति दर्शनात् ।

---

१-आदर्शपुस्तकेऽत्र खण्डारम्भसमाप्तिनिर्देशो न दृश्यते
२-[ऋ०९।११२।४]अयं'अश्वो वोळ्हा'इति द्वितीयः खण्डो महेश्वरेण न व्याख्यातः । न च दुर्गेण व्याख्यातः ।
३-[ऋ० १।१६२।१] 'मा नो मित्रो वरुणः' इत्येव प्रतीकः B. C. ४-शब्दो नास्ति B. C.
५-'जिन्'इति त्रुटितमB.C.६-'च'इति नास्तिB.वC.
७-अश्वसतमिति B. ८-प्रथमभूता B. C.
९-त्वपि देवत्व B. त्वपि तदेवत्व C.
१०-नेस्तदध्याहा B. M. ११-तमित्रत्रो C.
१२-'व' इति त्रुटितम् C. आयनस्वभाव B. C.
१३-परिख्या (ख्य C.) तं B.C. ०ख्यानंवर्जे० M.
१४-'ननु मन्नदन्तमाकांक्षुः (क्षः B.)' इति पाठः B.C.
१५-यद्वमन्यन्ता B. C.१६-सप्तेः प्रथममाहु B. C. 'स' नास्ति M. १७-[मैत्रा० सं० १।८।१]
१८- ०हुताज्जातस्य B. C.
१९-[ऋ० १।१६३।२] वसवोऽग्निरतष्ट B. C.

देवैर्वसुभिरादित्याज्ञातस्य । सप्तेः सरणस्य प्रवक्ष्यामो विदथे यज्ञेऽश्वमेधादौ वीर्याणि । भाष्यकारेण परोऽर्धर्चः प्रथमं व्याख्यातः । तथाहि[2] प्रतिषेध्येन प्रतिषेधस्य सुखः सम्बन्ध इति कृत्वा ।

शकुनिः कस्मात् ? शकेः शकारः ककारश्च उकारश्च । नयतेर्निः । एतदाह शक्नोत्युन्नतुम् । कम् ? सामर्थ्यादात्मानम् । नदितुमिति नदतेर्निः । तकितुं[3] वान्तरिक्षेण गन्तुम् । तकते[4]र्वर्णव्यापत्येत्यर्थः । सर्वत इत्यादिना वाशीर्नामकत्वं[5] दर्शयति । शकुरोऽस्त्विवेति[6] वेति पाठान्तरम् । शक्नोतेर्वेति वैयाकरणः । शक्नोत्युन्नेतुमिति[7] । तस्यैषा ।

[इति चतुर्दशस्या-(नवमस्या-) ध्यायस्य तृतीयः खण्डः ।][8]

---

## [अथ चतुर्थः खण्डः ।][8]

कनिक्रदज्जनुषं प्रब्रुवाण इयर्ति वाचमरितेव नावम् ।
सुमङ्गलश्च शकुने भवासि मा त्वा काचिदभिभा विश्व्या विदत् ॥[9]

गृत्समदस्य । अर्धर्चयोरेकवाक्यतायै यत्तच्छब्दाध्याहारः । प्रत्यक्षकृतत्वाच्च मन्त्रस्य । कनिक्रददिति प्रथमपुरुषस्यैकवाक्तायै भवच्छब्दो[10] योज्यः । भवान् कनिक्रदत् अत्यर्थं शब्दं कृतवान् करोति वा । जनुषं जन्म जातिस्ताम्[11] । प्रब्रुवाणः प्रायेण शकुनिर्नाम्नां[12] शब्दानुकृति[13]निमित्तत्वात् तस्य शब्दस्य तन्नाम्नश्च सादृश्यात् ते जातिमात्मीयां प्रब्रुवाणो[14] इव । न च सकृदेव । किन्तर्हि ? सततमेव इयर्ति प्रेरयति वाचम् । अरितेवं[15] गमयितेव नाविको नावम् । स त्वं सुमङ्गलश्चास्माकं प्रशस्तः । हे शकुने भवासि भवसि[16] । मा च त्वा त्वां काचिदभिभा कश्चित्पराभिभवः[17] । अभिभूतिर्विश्व्या[18] सर्वप्रकारा विदत् विद्लृलाभार्थः, लमेत प्रापदित्यर्थः ।

मङ्गलं निराह । गिरतेः । गृणातिः स्तुतिकर्मा तदर्थे वर्तमानस्य । भाविनो हि कल्याणस्य प्रसूचकं निमित्तं मङ्गलमुच्यते । अतः स्तुत्यं तद्भवति । अथवा[19] गृणाति

---

१–विदथे B. C. २–तदभिप्रहि B. C.
३–तरितुं B. C. ४–तरते B. C.
५–शिर्नामकत्वं C. वा शिनमिकत्वं B.
६–ऽस्तु विवेति B. C. ७–०त्युन्नयति B. C.
८–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।
९–[ऋ० २ । ४२ । १] 'कनिक्रदत्' इत्येव प्रतीकः B. C.
१०–०च्छब्दयो भवान् B. C. ०ब्द:वो० M.
११–जानीताम् B. C. १२–शकुनिना नाम्नां B.C.
१३–'नु' इति त्रुटितम् B. १४–प्रब्रुवाण B. C.
१५–अरिते अवगमयिते नावि B. अरितेव गमयितेव C. १६–'सि' इति नास्ति B.
१७–पराभिहः B. C. १८–विश्व्या B. D.
१९–'अथवा' इत्यारभ्य 'नर्थानिति । अथवा' इत्यन्तः पाठो नास्ति B. C.

भक्षयति नाशयत्यनर्थानिति । अथवा स्तुतस्य वा भक्षयति नाशयति गोरोचनादधिमध्व-क्षतादिभिर्वर्धयवैस्तद्वदङ्गं रेफस्य च लत्वेनाङ्गलं सम्मकारोपजनेन मङ्गलम् । अथवा मज्जयंति तिरोभवति । मज्जेलेकारप्रत्ययो वर्णव्यापत्तिश्च । मामेव गच्छत्वित्येवमाशास्यते ।

गृत्समदमृषिमर्थं प्राप्तुमभ्युत्थितमभिप्रस्थितं कपिञ्जलः शकुनिविशेषोऽभिशब्दितवान् । शब्देनोत्साहितवानित्यर्थः । तस्यार्थस्याभिवादिनी ।

[इति चतुर्दशस्या-(नवमस्या-)ध्यायस्य चतुर्थः खण्डः ।][6]

---

## [अथ पञ्चमः खण्डः ।][6]

भद्रं वद दक्षिणतो भद्रमुत्तरतो वद । भद्रं पुरस्तान्नो वद भद्रं पश्चात्कपिञ्जल ॥[7]

गृत्समदस्यार्षम् । भद्रं कल्याणं वद दक्षिणतः स्थित इति शेषः । भद्रमेवोत्तरतः । भद्रमेवं पुरस्तात् । नोऽस्माकं वद । भद्रमेव पश्चाद् वद । हे कपिञ्जल पठितत्वान्निगदव्याख्यातेति ।

इतिहासप्रसक्तमृषिनाम निराह । गृत्सो मेधावी गृणानेः । स्तुत्यो ह्यसौ लोकस्य । स्तोता वा देवानां मदनः कर्तरि ल्युट् । सोमेन स्तुतिभिश्च मदयन् कर्तेति समानाधिकरण इत्यर्थः ।

मण्डूका मज्जूका इति प्राप्तिवचनम् । मज्जनादिति धात्वर्थस्यानुगमप्रदर्शनम् । मस्जेरूकप्रत्यये जत्वोत्वाभ्यां मज्जूका इति प्राप्ते छान्दसत्वाज्जकारस्य [ डकारः ] । झल्यपि चान्त्यात्पूर्वो नुम् । मदतेर्वा भौवादिकस्य मोदनकर्मणः । वेत्यवधारणार्थः । मन्दतेर्वा चौरादिकस्य 'मद तृप्तियोगे' इत्यर्थस्य तृप्तिकर्मणः । वेत्यवधारणार्थमेव । नित्यमदत्वा-

---

१—'व' इति नास्ति B. C. भिर्वापवैस्त C.
२—वर्जयति B.
३—व्यावर्तिश्च C.
४—०च्छत्वे व० B. C.
५—प्राममभ्युपस्थितं B. प्राप्तुममभ्यस्थितं अभि प्रस्थितं C.
६—आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।
७—[खैलिके सूक्ते ३ । १] 'भद्रं वद' इत्येव प्रतीकः B. C.
८—'व' इति त्रुटितम् C.
९—'ग' इति त्रुटितम
१०—नामा (म C.) भिगाह B. C.
११—मदन (य C., कालेति B. C.
१२—नास्ति B. C.
१३—मदेरुष (मदेरुदेरुष C.) प्रत्यये जत्वयुत्वाभ्यां B. C. मदेरुप्रत्यये M.
१४—मण्डू (ण्डु C.) का B. C.
१५—'डकारः' इति नास्ति B. C.
१६—पूर्वपदम् B. पूर्वद C. अत्र 'मस्जिनशोर्झलि' [पा० ७।१।६०] इति नुम् ।
१७—[धा० १०।१७२] तृप्तिशोधने B. C.

नित्यतृप्तत्व निम्यहृष्टत्वाद्वा मण्डूकाः । 'शलिमण्डिभ्यामूकण्' इति मण्डयतेरुत्पत्ति-लाघवादिति वैयाकरणाः । रेखाभक्तिविचित्रकत्वान्मण्डिता इव । मण्ड उदकम् । तस्मिन्नोको निवास एषामिति वा । प्रसङ्गादाह मदेर्हर्षार्थस्य । हृष्यन्ति हि ततस्नानपाना-वगाहार्थिनः । मुदेर्वा । धात्वन्यत्वमात्रम् । तेषामेषा ।

[ इति चतुर्दशस्या-( नवमस्या-) ध्यायस्य पञ्चमः खण्डः । ]

---

## [अथ षष्ठः खण्डः ।]

संवत्सरं शशयाना ब्राह्मणा व्रतचारिणः । वाचं पर्जन्यजिन्वितां प्र मण्डूका अवादिषुः ॥

वसिष्ठस्य । अत्रैकवाक्यतायै यत्तच्छब्दाध्याहारः । ये संवत्सरं शशयानाः शयितवन्तः । लुप्तोपममेतत् । सुप्ता इव वार्षी मासान् । निःशब्दा बभूवुरित्यर्थः । ब्राह्मणा ब्रुवतेरेतद्रूपम् । वचनसमर्था अपि सन्तो व्रतचारिणः । अथवा व्रतमिति कर्मनाम । स्वस्य कर्मणश्चरितारो गन्तार इत्यर्थः । ते वर्षासु वाचं पर्जन्यजिन्वितां, जिन्वतिः प्रीतिकर्मा, पर्जन्येन प्रीताम् । प्रशब्दोऽवादिषुरित्येतेन सम्बध्यते । मण्डूकाः प्रावादिषुः वर्तमाने लुङ् । प्रवदन्ति । ब्राह्मणा इति लुप्तोपम् । ये संवत्सरं शयिनवन्तस्ते यथा ब्राह्मणाः कृतस्वाध्यायोपकरणा व्रतचारिणः स्वाध्यायमेवं वाचं पर्जन्येन प्रीतां मण्डूकाः प्रवदन्तीति ।

शिश्याना इति अर्वाचः । ब्राह्मणा इत्यस्य व्याख्यानं ब्रुवाणा इति । अनावृष्ट्युपहते किल जीवलोके वसिष्ठो वर्षार्थी पर्जन्यमस्तौषीत् । तन्मण्डूका अन्वमोदन्त अन्वहृष्यन्त वर्ष-हेतुकं शब्दमकुर्वतेत्यर्थः । तत्प्रमोदश्च भाविनो वर्षस्य सूचक इति कृत्वा । दृष्ट्वा उपलभ्य श्रुत्वेत्यर्थः । स एष मण्डूकस्तुतेर्निदानमितिहासः ।

[इति चतुर्दशस्या-( नवमस्या-) ध्यायस्य षष्ठः खण्डः ।]

---

१–[उणा० ४।४२] श (स B.) लिमण्डिभ्य मूकन्तीति B. C.
२–रेखा भक्ति B. C. ३–मण्डिका B.
४–व (प C.) दकर्म B. C. ५ येषा० B. C.
६–०स्नानतपा C. ०स्नानातपानावनाहार्थिनः B.
७–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।
८–[ऋ० ७ । १०३ । १] 'संवत्सरम्' इत्येव प्रतीक B C.
९–यच्छब्दा B. C. १०–हे संव B.
११–गयाना C.
१२–ब्रुवन्ते एत B. C.
१३–प्रीता मण्डू B. C.
१४–कादच B. तदाच C. कार्नेच M.
१५–कृषते B. C.
१६–आदर्शपुस्तकेष्वत्र खण्डसमाप्तेर्निर्देशो न दृश्यत

## [ अथ सप्तमः खण्डः ।]

उप प्र वंद मण्डूकि वर्षं मा वंद तादुरि ।
मध्ये ह्रदस्यं प्लवस्व विगृह्यं चतुरंः पदः ॥[2]

उपोपसर्गश्रुतेः क्रियापदाध्याहारः । इह उपगम्य प्रवद । हे मण्डूकि । किम् ? वर्षं 'नपुंसके भावे क्तः' इति वृत्यर्थोण्युपसंख्यायते । वर्षमावद अभिमुख्येन वृष्टिनिमित्तं यत्तद्वद । मा मैवावारयतीत्यर्थः । तादुरि तरणशीले यावच्छरीरं तावदुदके वावदित्वा च देवद्रुष्टे । मध्ये ह्रदस्य प्लवस्व तर । विगृह्य प्रसार्य चतुरश्चतुरोऽपि पादान् ।

अक्षाः । अश्नोतेः कर्मभूता व्याप्नुवन्ति गृह्णन्त्येनां देवितारः । करणभूता वा अभिव्याप्नुवन्त्येभिः परस्परमित्यर्थः । तेषामेषा ।

[इति चतुर्दशस्या-(नवमस्या-) ध्यायस्य सप्तमः खण्डः ।][11]

---

## [अथाष्टमः खण्डः ।][11]

प्रावेपा मा बृहतो मादयन्ति प्रवातेजा इरिणे वर्वृतानाः ।
सोमस्येव मौजवतस्यं भक्षो विभीदको जागृविर्मह्यमच्छान् ॥[12]

कवषस्य मौजवतो वा । प्रावेपाः प्रवेपनस्वभावा अक्षाः । मा माम् । बृहतो महतः । सामर्थ्याद् विभीदकस्य । षष्ठीश्रुतेः फलत्वेन सम्बन्धिन इति शेषः । महतो विभीदकस्य फलानीत्यभिप्रायः । मादयन्ति हर्षयन्ति । प्रवातेजाः प्रचुरवाते काले वर्षासु प्रवणे वा प्रदेशे जाताः । इरिणे निरुदके असारप्रदेशे पर्वतानाम् । न च मनाक् । किन्तर्हि ? सोमस्येव यथा सोमस्य मौजवतस्य मूजवति पर्वते जातस्य भक्षः । एवं विभीदको विभीदकविकारोऽक्षाख्यो जये पराजये च हर्षेण शोकेन च । जागृविः जागरणकर्मी । मह्यं षष्ठ्यर्थे चतुर्थी मम । अच्छान् छादयति । किम् ? सामर्थ्यान्मनः । अत्यन्तं प्रीतिं करोतित्यर्थः ।

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते
२–[खैलिकं सूक्तं १६॥ अथर्व० ४ । १५ । १४] 'उप प्र वद' इत्येव प्रतीकः B. C.
३–'उप' इति नास्ति B. C.
४–मण्डूकाः B. C. ५–[पा० ३।३।११४]
६–अत्र 'कृदर्थो' इति युक्तः स्यात् ।
७–अमामेवा वारतीत्यर्थः C. ८–अदुष्टे C.
९–अयं सन्दिग्धः पाठः। १०–तुरो विवर्दं C. पदः M.
११–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।
१२–[ऋ० १०।३४।१] 'प्रावेपा मा' इत्येव प्रतीकः B. C.
१३–कचषस्य B. C. १४–अन्नतः B. मन्नतः C.
१५–पर्वतानाः M.
१६–०रणवामी C. ०रणकारी M. १७–अच्छन् B.

प्रवणेजा इति पाठे उभयत्र 'सप्तम्यां जनेर्डः' बहुलवचनाच्चालुक् । इरिणातिर्गतिकर्मा । इरिणं निरिणं सनकारलोपेन । निशब्दादिकारः । रिणातेरिकारः । अर्णशब्दाण्णकारः । अपगतोदकमिरिणमित्याह । तत अपेत्य जीविता । अन्यत्र सा हि शरस्कन्धशो निर्गता भवेति । अमुञ्जः कथम् ? स हि मुच्यते । इषीकया कथम् ? इषतेर्गतिकर्मणः । सा हि निर्गता भवति मुञ्जात् । इयमपीषीका अपरेषीका तस्मादेव । विभीदको भेदनात् । जागृविरच्छान् अवच्छेन्दन् । प्रथमया सूक्तस्याद्यया । परिद्यूनस्याक्षविजिगीषोः । वध्वस्ताक्षविजातृषोऽग्निवर्णस्येत्यर्थः ।

ग्रावाणोऽभिषवपाषाणाः । हन्तेर्वर्णव्यापत्त्या । हन्यते हि तैः सोमः । गृणातिः स्तुतिकर्मा । ग्रावस्तुद् ग्रावस्तोत्रमिति च समाख्या ।

[इति चतुर्दशस्या-( नवमस्या-) ध्यायस्याष्टमः खण्डः ।][11]

---

## [अथ नवमः खण्डः ।][11]

प्रैते वदन्तु प्र वयं वदाम ग्रावभ्यो वाचं वदता वदद्भ्यः ।
यदद्रयः पर्वताः साकमाशवः श्लोकं घोषं भरथेन्द्राय सोमिनः ॥[12]

अर्बुदस्य । एते उद्गातारः प्रवदन्तु । वयमपि होतारः प्रवदाम । ग्रावभ्यो वाचं स्तुतिलक्षणाम् । यूयमप्यध्वर्यवो वदत वदद्भ्योऽभिषवशब्दं कुर्वद्भ्य इत्यर्थः । परोऽर्धर्च प्रत्यक्षकृतत्वाद्भिन्नं वाक्यम् । यत व्यत्ययेन नपुंसकैकवचनं पुल्लिङ्गबहुवचनस्य स्थाने । हे यूयं हे अद्रयः पर्वताः पर्वतावयवाः साकं सह । आशवो होमस्याभिषवकाले व्यापारैः । यच्छ्रुतेस्तच्छब्दाध्याहारस्ते । अथवा आशुरिति क्षिप्रनाम क्षिप्रास्ते सह श्लोकं श्रवणीयं घोषमभिषवशब्दं भरथ हरथ प्रापयथ । इन्द्राय इन्द्रं प्रापयितुं तत्समीपं नयथेत्यर्थः । सोमिनः सोमवन्तो वा सोमवतो वा यजमानस्य गृहेष्विति शेषः ।

---

१–[पा० ३।२।९७] २–अर्णे M.
३–पिता B. हीविता ४–भवन्ति C.
५–अत्र 'अ' कारोऽधिक एव भाति ।
६–ऋषिकया C.
७–यमपीषिका प (पा C.) लेषिका B. C.
८–अत्र 'अचच्छदत्' इति स्यात् । ९–क्षतिजि B.
१०–वर्ध्वस्ताक्ष विजातृषोग्निर्वर्णस्येत्यर्थः C. अयं पाठः सन्दिग्धः ।
११–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।
१२–[ऋ० १०।९४।१] 'प्रैते वदन्तु' इत्येव प्रतीकः B. C.
१३–वेदनवद्भ्यः B. C. १४–व्यापारः B.
१५–तेस्तदध्याहा C.
१६–'श्रावणीयं घोषं' इत्यपि पाठः C.
१७–श्रापयितुं C. १८–वन्तो नो वा B. C.

अद्रय इत्यस्य निर्वचनं आदरणीयाः । सोमा इत्यतिरिक्तपाठः । आस्यलग्नेन सोमेन सोमिनः[2] । ऊर्ध्वं षष्ठ्येकवचनं वा ।

नाराशंसः नरान् शंसतीति कर्मोपपदे 'अन्येषामपि दृश्यते'[3] इति औत्तरपदिकं दीर्घत्वं जलाट्[4] श्वादन्तः श्वादंष्ट्रेत्येवमादिवत् । नरशंसः सन्[5] नराशंसः । ततः स्वार्थिकः प्रज्ञादित्वादण्[6] । नराशंस एव नाराशंसः । मन्त्रोऽभिधेयः । येन[7] नराः प्रशस्यन्त इति तु भाष्यकारः[8] । तस्यैषा इति[9] प्राप्तार्थवचनं[10] द्रष्टव्यम्[11] ।

अत्र चोदयति । यदि मन्त्रोऽभिधेयो नराशंसशब्दस्य देवतापदसमाम्नाये पाठोऽनुपपन्नः । यतो नासौ स्तुत्यः । करणं ह्यसौ स्तुतौ । यदपि[12] चोदाहरणं 'अमन्दान् स्तोमान्'[13] इति नाराशंसलिङ्गं न चासौ स्तुत्यः । कस्तर्हि ? भावयव्यः । अतोऽयं नाराशंसोपन्यासः[14] ।

उच्यते । नैष दोषः । इह हि भावयव्यस्य पौरुकुत्स्यायो[15] बाहुल्येन राजानः स्तुतिविषयत्वेन दृश्यन्ते । तत्र यदि तावत्ते स्वशब्देन पठ्येरन् भूयस्त्वाल्लक्षणे दोषः स्यात् ।

अथ राजानः । नरा[16] इति वा सामान्येन स्तुत्यसम्भवादुदाहरणाभावः ।

एवं तर्हि सामान्यस्यैव पाठः कर्तव्यः । स[17] सामान्ये विशेषार्थमपि विज्ञास्यते । यथा शकुनिः समाम्नातो विशेषस्यापि कपिञ्जलादेर्लक्षणम् । तथा चोभयमुदाहृतम् 'कनिक्रदत्' 'भद्रं वद' इति च । एवमिहापि क्वचित् सामान्येन राजत्वेन स्तुतिः सा च संगृहीता भविष्यति या[18] विशेषेण भावयव्यादीनाम् ।

यच्चोक्तं सामान्येन[19] स्तुत्यसम्भव इति । साहसमात्रं तत् । बहुशाखत्वाद्वेदानाम् । सामान्येन[20] योऽभिषिक्तो राजा 'आ त्वाहार्षमभिवर्तन हविषा'[21,22] इति सूक्ताभ्यामनुमस्तूते[23] । तथा च 'देवताधिकारे द्वे परे राज्ञाम्'[24] इति शौनकः पपाठ । तथा 'ध्रुवो राजा विशामयम्'[25] इति सामान्येन लिङ्गम् ।

१–'निर' इति त्रुटितम् B.
२–सोमिने यूर्ध्वं B. C. ३–[पा० ६।३।१३७]
४–जलाट् (टB.)श्वादन्तः B.C.अयं पाठःसन्दिग्धः।
५–नराशंसः सन्त (B. C.) रणाशंसः B.
६–[पा० ५।४।३८] ७–'न' इति त्रुटितम् B. C.
८–कारस्यैषा B. कारस्यार्षा C.
९–'इति' इति नास्ति B.C. १०–प्राप्त्यर्थवचनं B.
११–द्रष्टव्यः C. १२–यापि C. १३–[ऋ० १।१२६।१]
१४–अत्र 'अयुक्तः' इति शेषो योज्यः ।
१५–कुत्स्ययो C. अत्र 'पौरुकुत्स्यादयो' इति पाठो भवेत् ।
१६–हरा इति C.
१७–सा C. अत्र 'सति' इति युक्तः स्यात् ।
१८–याव B. C. 'य च' इति वा भवेत् ।
१९–'सामान्येन' इति त्रुटितम् B.
२०–समान्येन यभिषित्तो C.
२१–द्दाष B. हर्षमभिवर्तेन C.
२२–[cf. ऋ० १०।१७३।१ आ त्वाहार्षमन्तरेधि]
२३–सन्दिग्धमिदं पदम् । 'अनुस्तूयते' इति स्यात् ।
२४–[अनुपलब्धमूलमिदं वचनम्]
२५–[ऋ० १०।१७३।४]

तस्मादुभयार्थत्वेन राजशब्द एव पठितव्यः ।

सत्यम् । सिध्यत्येवं किन्त्वयं नाराशंसशब्दो मन्त्रे सोमे च रूढः । 'नाराशंसी नरेभिः[1] कारव्या इतीदं जना उपश्रुतेति नाराशंस्यं तथा विपर्यस्ये'[2] इति । नाभानेदिष्ठीये सूक्त उच्यते 'इदमित्था'[3] । 'ये यज्ञेन'[4] इति। होमोऽप्याज्यप्रयोगैर्नाराशंसः[5]। तेषां च भक्षमन्त्रः 'देवोऽसि नराशंसः'[6] इति । स्वयमेव वक्ष्यति 'नाराशंसानभिप्रेत्य'[7] इति । तस्मादयमत्र निरुक्तो भविष्यति । शक्ष्यामि वैनं व्युत्पत्तिद्वारेण राजमात्रस्य तद्विशेषस्य च भावयव्यादेरुपलक्षणार्थत्वेन सोमविषयत्वेन[8] च वर्णयितुमिति नाराशंसशब्द एव मन्त्रवचनैः समाम्नातः[9]। तस्य च सामान्येन च विशेषेण च राजोपस्तुति[10]विषयाः सर्वमन्त्रा[11] एवोदाहरणम् । अतो विस्रब्धमाह । येन नराः प्रशस्यन्ते स[12] नाराशंसो मन्त्रः । तस्यैषा भवति ।

[इति चतुर्दशस्या-( नवमस्या-) ध्यायस्य नवमः खण्डः ।][13]

---

## [अथ दशमः खण्डः ।][13]

अमन्दान्त्स्तोमान् प्र भरे मनीषा सिन्धावधि क्षियतो भाव्यस्य ।
यो मे सहस्रममिमीत सवानतूर्तो राजा श्रव इच्छमानः ॥[14]

अमन्दानिति स्तोमविशेषणम् । तत्कथमुपपद्यते । विषयविषयिणोरभेदात् । मन्दो बालिशो मूर्खः । तद्विपरीतो[15]ऽमन्दोऽबालिशोऽमूर्खः । तद्विषयाः पण्डिता वेदनीयास्तद्योग्या[16]नेतान् । अल्पो[17] वा मन्दः । अनल्पान्[18] वा स्तोमान् । प्रभरे प्रभरामि प्रापयामि । मनीषा तृतीयायाः सह योगलक्षणाया अत्र लुक् मनीषया[19] स्तुत्यर्थप्रज्ञया वा यावत्प्रज्ञमित्यर्थः । सिन्धावधि सिन्धुर्नदी तत्[20]सम्बन्धो वा देशः । अधिरुपरिभावे । सिन्धोर्नद्यास्तत्सम्बन्धस्य वा देशस्योपरि । क्षियतो[21] निवसतः । भाव्यस्य भावयव्यस्य । भावयव्यशब्दस्यायं छान्दसोऽक्षरद्वयलोपः । पर्यायान्तरं वा भावयव्यस्य राज्ञः । यो मे[22] मम प्रभूतस्व[23]दानेन सहस्रममिमीत निर्मितवान् सवान्

---

१–नैरभिः C. २–[अनुपलब्धमूलमिदं वचनम्]
३–[ऋ० १०।६१।१] ४–[ऋ० १०।६२।१]
५–होमाप्याज्य प्रगेयोर्नारा C.
६–[शांखायनश्रौतसूत्रे ७।५।२२॥१८।२१।१२]
७–[निरु० ११।५] ८–सोमदर्शत्वेन च B.
९–चनसमाB.C. १०–राजावः स्तुतिB.११–मन्त्र एवोB.
१२–'स' इति त्रुटितम् । अग्रे 'नराशंसः' इति B.C.
१३–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।
१४–[ऋ० १।१२६।१] 'अमन्दान्' इत्येव प्रतीकः B. C. १५–रीतममन्दो B.C.
१६–योग्यायेतान् B. योग्योयेतात C.
१७–अपो वा B. C. १८–अनवात् वा C.
१९–मनीषा स्तु B. २०–तत्तस B. कर्तरि स C.
२१–क्षीयतो C. २२–'मे' इति त्रुटितम् B. C.
२३–प्रभूतः सव (न C.) वामेन B. C.

स्तुत्यानित्यर्थः । अतूर्तः तुर्वतिर्हिंसाकर्मा । अत्यन्तशूरत्वादहिंसितपूर्वः[1] केनचित् । त्वरतेर्वा, अत्वरमाणो राजा । श्रवः श्रूयत इति श्रवः कीर्तिः प्रशंसा तामात्मनं[2] इच्छन् ।

सारूप्यप्रसक्तं बालं निराह । बालो[3] बलवर्ती बलेन वर्तेत एवंशीलः । बलशब्दात् तृतीयासमर्थाद् वर्तेत इत्येतस्मिन्नर्थे तद्धित इत्यभिप्रायः । स[4] ह्यमनस्कतया महतोऽपि सकाशादीप्सितमर्थं क्रीडनकादिकं[5] शक्तियुक्तिनिरपेक्षं[6] जिघृक्षति । पित्रोर्ज्येष्ठस्य वा भर्तव्यः । भ्रियेत[7] इति भारः सन् भकाररेफयोर्बकारलकारापत्त्या[8] बालः । अम्बा माता सा अस्मै[9] अलम् । अभ्यञ्जनमर्दन[10]स्तनपानादिषु तदर्थेषु पर्याप्तं भवतीति वा । अम्बा बलमस्यावयवद्वितादे[11]र्बालः । अम्बैवास्य बलं निमियन्न[12] पित्रादिकं[13]बलात् । उत्तरोऽर्धो[14] नालमिति शेषः । बलो वा[15] प्रतिषेधेन प्रतिषेधार्थेन आदितोऽपनीतेना[16]नुप्रविष्टेनाकारेण व्यवधानादबलो[17] बालः । अविद्यमानबल[18] इत्यर्थः । अत्र मरणसर्वार्थेषु अबलाः[19] ।

इति निरुक्तविवरणे[20] चतुर्दशस्या-[नवमस्या-][21]ध्यायस्य प्रथमः पादः ।

---

## अथ द्वितीयः पादः[22] । [अथैकादशः खण्डः ।][21]

नाराशंसशब्देनोपक्षिप्तस्य सतः सामान्येन स्तुत्यतया राज्ञः संप्रति स्तुतिलाभहेतुमाचष्टे ।

यज्ञसंयोगाद् [राजा स्तुतिं लभेत । राजसंयोगाद्युद्धोपकरणानि । तेषां रथः प्रथमागामी भवति][23]

यज्ञेन संयोगात् । यज्ञोऽश्वमेधः[24] । तत्संयोगाद्राजा सर्वयुद्धोपकरणोपेतं रथमधि-

---

१-पूर्वं केन B. २-त्मना इच्छन C.
३-यालो बल C. ४-सं ह्यम C. ५-कारिकं B.C.
६-C. पुस्तके 'शक्ति निरपेक्षन्ति घृक्षति' इति पाठः । 'जिघृक्षति' इत्यस्य 'जि' इति त्रुटितम् B.
७-स्तूयत इति B. ८-कारावक्या B.
९-अस्मे अलम् C.
१०-०ञ्जनोमर्दन C. ०ञ्जनोमर्दन रनानापाना० M.
११-अम्बालमन्यवयवद्विकालं बालः B. अलमन्यवयवद्वितादे बालः C.
१२-अयं सन्दिग्धः पाठः ।
१३-दिकं बलात् B. १४-उत्तरार्धो B. M.
१५-अबालो वा B. C. 'वा' इति त्रुटितम् B.
१६-आदितो सवनीते B. C.
१७-व्यवजाताप्ययनो B. प्युपजाताप्तवनो C. ०व्यवहितो M.
१८-मानश्च बल C.
१९-'अत्रवलाः' इति पाठः C.
२०-'निरुक्तविवरणे' इति नास्ति B. C.
२१-अयं कोष्ठकान्तर्गतः पाठो नास्ति P. C. M. 'इति चतुर्दशस्य प्रथमः पादः' इत्येव पाठः C.
२२-अयं पाठो नास्ति C.
२३-'यज्ञसंयोगादित्यादि' इत्येव प्रतीकः B. C.
२४-यज्ञोऽयमेद्य: B. C.

रूढः। स इद्धो राजा जीमूतस्येति स्तूयते। तत्संयोगाद्रथादीन्युपकरणानि। स्तुतिलाभाच्च रथादीनां देवतात्वम्। एष यज्ञाभिसम्बन्धात् स्तुतिसंक्रमः पूर्वाचार्यैः प्रदर्शितः।

अन्ये तु उपकरणानि राजसम्बन्धात्। राजा यज्ञसम्बन्धात्। यज्ञो देवतासम्बन्धात्। देवतात्मसम्बन्धात्। सोऽयमात्मैव सर्वावस्थः स्तूयत इति मन्यन्ते। तथा चोक्तम्।

स्थाने स्थाने स्तुतिः सर्वा स्थानाधिपतिभागिनी।
आत्मप्रतिष्ठा बोद्धव्या तथोपकरणस्तुतिः॥

इति स्तुतिसंक्रमन्यायमिमं मन्यन्तेऽध्यात्मचिन्तकाः। तदेतदात्मविदां दर्शनं 'माहाभाग्याद्देवतायाः' इत्यादिना 'आत्मैवैषां रथः' इत्येवमन्तेन प्रदर्शितम्। तेषामाधारभूतत्वाद् रथः प्रथममाम्नातः।

[रथो रंहतेर्गतिकर्मणः। स्थिरतेर्वा स्याद् विपरीतस्य। रममाणोऽस्मिंस्तिष्ठतीति वा। रपतेर्वा रसतेर्वा। तस्यैषा भवति।]

स कस्मात्? रंहतेः रथः। स्थिरतेर्वा विपरीताक्षरस्य। रममाणो विस्रब्ध इत्यर्थः। द्विधातुजत्वमत्र। रमतेरेवेति वैयाकरणाः। 'हनिकुषिनीरमिकाशिभ्यः क्थन्' इति क्थन् स्मरणात्। रसतेर्वा शब्दार्थस्य। भवति हि तस्यागच्छत उपलब्धिः। तस्यैषा।

[इति चतुर्दशस्या-(नवमस्या-) ध्यायस्यैकादशः खण्डः।]

---

१–ज्ञादिस B. C.
२–चार्य्यैः क्रमः प्रद B. C. ०र्य्यैः क्रमद० M.
३–रूपकर C.
४–नास्ति B. C.
५–देवतात्र सम्ब B. C. 'देवतात्मसम्बन्धात्' इति त्रुटितम् M.
६–स्थानस्तानि C. स्थानस्थानि M.
७–भागीनि C.
८–तथा चोपरस्तुतिः C. चोपरवस्तुतिः M.
९–अत्रैव दुर्गेणाप्युद्धृतोऽयं संदर्भः।
१०–'य' इति त्रुटितम् C. 'यमिमं मन्यन्तेऽध्यात्मचिन्तकाः' इत्येतावान् पाठस्त्रुटितः B.
११–[निरु० ७।४]
१२–मन्तोन B.
१३–प्रदर्शितः B.
१४–अयं मूलपाठो नास्ति B. C. M.
१५–विरथेर्वा C.
१६–[उणा० २।२] हतिरुधिरमिकाशिभ्यां (भ्याः C.) कथन् B. C.
१७–कथन स्मर B. C.
१८–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते।

## [अथ द्वादशः खण्डः ।][1]

वनस्पते वीड्वङ्गो हि भूया अस्मत्सखा प्रतरणः सुवीरः ।
गोभिः सन्नद्धो असि वीळयस्वास्थाता ते जयतु जेत्वानि ॥[2]

गर्गस्य ।[3] हे वनस्पते वनस्पतिविकार रथ । वीड्वङ्गः[4] वीडु दृढमङ्गमवयवो यस्य स दृढावयवः[5] । हिशब्दो यस्मादर्थे गोभिः सन्नद्ध इत्येतेन सम्बध्यते । भूया भव । एवमस्मत्सख[6] अस्माकं सखिभूतो[7] मित्रमिव व्यसनेपात इत्यर्थः[8] । प्रतरणः संग्रामाणां निर्वोढेत्यर्थः । सुवीरः शोभनवीरयुक्तः । कस्मादेवमुच्यते दृढाङ्गो भवेति[9] ? यस्माद् गोभिर्गोविकारैश्चर्मभिः श्लेष्मणा[10] च सन्नद्धः सम्यग्बद्धोऽसि तस्माद् वीळयस्व दृढीकुर्वा[11]त्मानम् । तया वीड्वङ्गतया[12] आस्थाता आरोढा च ते तव जयतु जेत्वानि कृत्यार्थे त्वैप्रत्ययः[13] । जेतव्यानि शत्रूणां वृन्दानि धनानि वा तेषाम्[14] ।

दुन्दुभिः शब्दानुकरणनिमित्तमेतन्नाम । द्रुमशब्दस्य वा रेफलोपः[15] । भिदेश्चाद्यन्त[16]विपर्ययः । उकारश्चोपजन[17] इत्याह । द्रुमो भिन्न इति वेति । भिन्नो निष्कुषितः । दुन्दुभ्यतेर्वा[18] स्यान्नैरुक्तधातोः[19] । ताड्यते ह्यसौ युद्धसमये । तस्यैषा[20] ।

[इति चतुर्दशस्या-(नवमस्या-) ध्यायस्य द्वादशः खण्डः ।][21]

---

## [अथ त्रयोदशः खण्डः ।][21]

उप श्वासय पृथिवीमुत द्यां पुरुत्रा ते मनुतां विष्ठितं जगत् ।
स दुन्दुभे सजूरिन्द्रेण देवैर्दूराद्दवीयो अप सेध शत्रून् ॥[22]

गर्गस्यैव । उप आ इत्येतस्य स्थाने । श्वसिः[23] सामर्थ्यात्पूरणे । आपूरय स्वेन

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते
२–[ ऋ० ६।४७।२६ ] 'वनस्पते' इत्येव प्रतीकः B. C. 'वनस्पते विध्वङ्ग' इति M.
३–स्य इहवन B. स्येह वन C.
४–विध्वङ्गः C. M. ५–दृढोवयवः C.
६–एवमस्मिन् सखा C. ७–भूतं मित्र C. M.
८–व्यसने पाते (इ) त्यर्थः B. व्यसने वातेत्यर्थः C.
९–दृढाङ्गेनेवेति B. C. १०–शुष्मणा च B. C.
११–दृढीकुर्वा C. १२–विध्वङ्गतयाC. वीध्वङ्गतयाM.
१३–त्वाप्रत्ययः B. १४–'म' इति त्रुटितम् C.
१५–रेफान लोपः(पा C.)B. C. १६–चात्यन्त विपB. C. M.
१७–चोपिजन इत्यहि C. ०यज इत्या० M.
१८–भ्यतेप्या (व्याC.) B. C. 'स्यात्' नास्ति B. C.
१९–धातुः B. C. २०–तस्या ते B. तास्यते C.
२१–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।
२२–[ ऋ० ६ । ४७ । २९ ] 'उप श्वासय' इत्येव प्रतीकः B. C. M. २३–त्वसि C. श्वसिC. श्वसिःM.

ध्वनिना । किम् ? पृथिवीमुत द्यां दिवश्च[1] । पुरुत्रा[2] बहुधा ते तव[3] शब्दं मनुतां शृणोत्वित्यर्थः । विष्ठितं विविधं स्थितं स्थावरमित्यर्थः । अतिशयप्रदर्शनं च विष्ठितशब्देन स्थावरस्येहो-[4]पादानम् । इतरथा श्रोत्राभावाद् घोषमननम्[5]नुपपन्नं स्यादित्यभिप्रायः । जगत् जङ्गमं च । परस्तात्तच्छ्रुतेर्[6]यद्ध्याहारः । य एवमुक्तोऽसि सः । हे दुन्दुभे सजूः सम्प्रीयमाण इति । इन्द्रेण देवैश्च सह । दूराद्दवीयो दूरतरम्[7] । अपसेध अप[8]गमय शत्रून् । तथा नदत एव शब्दं श्रुत्वा तव शत्रवो नश्यन्तीत्यभिप्रायः ।

इषुधिः कस्मात्[9] ? इषवो निधीयन्ते यस्मिन्[10] । 'कर्मण्यधिकरणे च[11]' इति किः[12] । तस्यैषा[13] ।

[इति चतुर्दशस्या-( नवमस्या-) ध्यायस्य त्रयोदशः खण्डः । ][14]

---

## [अथ चतुर्दशः खण्डः ।][14]

बह्वीनां पिता बहुरस्य पुत्रश्चिश्चाकृणोति समनावगत्य ।
इषुधिः सङ्काः पृतनाश्च सर्वाः पृष्ठे निनद्धो जयति प्रसूतः ॥[15]

वायोर्भरद्वाजस्य । परतश्च[16] युद्धोपकरणस्तुतयः । अत्रैकवाक्यतायै यत्तदध्याहारः । बह्वीनामिषूणां पिता पितृस्थानीयः पालयिता वा । यस्य चास्य बहुरिषुगणः पुत्रः पुत्रस्थानीयः पुत्रवद्रक्ष्यत[17] इत्यर्थः । यश्च चिश्चाकृणोति[18] चिश्चेति[19] निपातो हासवचनः । हासमतिकरोत्यु-[20]त्साह्यमानः । उज्वलपुङ्खत्वात् । शब्दानुकरणश्चिश्चेति[21] । एवंरूपं शब्दं करोति । समना समनानि समराणि । अवगत्य अवेति[22] उपेत्येतस्य स्थाने । उपगम्य स इषुधिः सङ्काः पृतनाश्च सर्वाः । द्वे अप्येते संग्रामनामनी । स्पर्धामात्रेण[23] लक्ष्य[24]व्यवधानार्थं यत्रेषवः क्षिप्यन्ते तद्विषय-मेकम् । वधार्थश्च[25] यत्र तद्विषयमन्यत् । ये स्पर्धया[26] लक्ष्यवेधमात्रार्थाः संग्रामाः । ये च वधार्थास्तान् सर्वान् योद्धुं पृष्ठे निनद्धो नितान्तं बद्धो जयति जयतु प्रसूतः प्रेरितः ।

---

१–दिवश्च B. C. २–'रु' इति त्रुटितम् B. C. ३–'त' इति त्रुटितम् C. ४–०रस्यैवोपा० B. C. ५–घोषमननुप M. ६–स्तानाच्छ्रुते C. ७–दूरतरः B.C. ८–अव C. ९–धिः इषवः कस्मा B. १०–यस्मात् B. C. ११–[ पा० ३ । ३ । ९३ ] १२–ञिः B. ङिः C. १३–तस्याषा C. १४–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।

१५–[ ऋ० ६ । ७५ । ५ ] 'बह्वीनां' इत्येव प्रतीकः B. C. १६–परश्च C. १७–रक्षत C. १८–चिश्वाकृ B. १९–चिश्वेति B. २०–हासमिति C. २१–चिश्वेति B. २२–अवेत्य B. C. २३–प्सर्धा C. २४–अत्र 'लक्ष्य' इति युक्तः स्यात् । २५–वधार्थश्च B. C. २६–स्पर्ध ( र्धा C. ) याथ लक्षयेथमात्रार्थाः B.C.

यत्तु तत्स्थानमिषूणा प्रेरणमिषुधयः। सङ्काः सचतेर्गतिकर्मणः सङ्गच्छन्ते वा तत्र योद्धारः संकीर्त्यन्ते वा।

हस्तघ्नः कलापी गोधेति प्रसिद्धः। हस्ते हस्तसमीपे स्थितो हन्यते ज्यया शरपुङ्खेन[३]। तस्यैषा।

[इति चतुर्दशस्या-(नवमस्या-) ध्यायस्य चतुर्दशः खण्डः।][४]

---

## [अथ पञ्चदशः खण्डः।][४]

अहिरिव भोगैः पर्येति बाहुं ज्याया हेतिं परिबाधमानः।
हस्तघ्नो विश्वा वयुनानि विद्वान् पुमान्पुमांसं परि पातु विश्वतः॥[५]

यथा सर्पो मुखे गृहीतो भोगैः। भोगास्तस्यैव कुटिलाः शरीरावयवास्तैः। अर्धर्चयोरेकवाक्यतायै यत्तदध्याहारः कार्यः। यः पर्येति[६] परिगच्छति परिवेष्टयतीत्यर्थः। बाहुं ज्यायाः स्वभूतां हेतिं वधं ताडनं ज्याकृतं प्रहारमित्यर्थः। परिबाधमानः सर्वतो निरुन्धन्[८] स हस्तघ्नो यथा विश्वा विश्वानि सर्वाणि वयुनानि[९] प्रज्ञानानि विद्वान् प्रजानन् पुमान् कश्चिदिवेमं योद्धारं पुमांसं परिपातु रक्षतु विश्वतः सर्वतः। हस्तघ्नस्यैव वा विशेषणम्। वयुनानि[१०] स्वानि कर्माणि जानन्।

पुमान् 'पातेर्डुमसुन्'[११] इति वैयाकरणाः। [स्त्री न][१२] पुरुमना इति नैरुक्ताः। पुंसतेर्वा पौरुषार्थस्य। तथा च पुंसतेः[१३]। पौंस्यं बलम्।

'अभीशवोऽभ्यश्नुवते[१४]' इति व्याख्याता[१५] अङ्गुलिनामत्वेन। इह रश्मयोऽभिधेयाः। तेषामेषा भवति।

[इति चतुर्दशस्या-(नवमस्या-) ध्यायस्य पञ्चदशः खण्डः।][४]

---

## [अथ षोडशः खण्डः।][४]

रथे तिष्ठन्नयति वाजिनः पुरो यत्रयत्र कामयते सुषारथिः।
अभीशूनां महिमानं पनायत मनः पश्चादनु यच्छन्ति रश्मयः॥[१६]

अत्रैकवाक्यतायै यत्तदध्याहारः। यो रथे तिष्ठन् तिष्ठतिरत्र सत्तायां नोर्ध्वतायाम्।

---

१–मिषुरयः C. २–चिङ्क B. C. ३–पुंखेण C.
४–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते। ५–[ऋ० ६।७५।१४] 'अहिरिव' इत्येव B. 'हविरिव' इति पाठः C.
६–'पर्' इति त्रुटितम् C. ७–ज्याहाः C.
८–निरुद्धन् C. ९–युवनानि C. १०–युवनानि B.
११–[उणा० ४। १७८] पुमाने सुराविति B. C.
१२–स्त्री नः C. B. 'स्त्री न' नास्ति M.
१३–पुंवते: पौंख्य ( ह्य C ) म् B. C.
१४–[निरु० ३।९] वोऽप्यश्नुवते: B.C.०ऽभ्यश्नुवते कर्माणिM.१५–मभिति व्याख्याता(का C.)रः B.C
१६–[ऋ० ६।७५।६]'रथे तिष्ठन्'इत्येव प्रतीकः B.C.

संग्रामे तिष्ठतीति यथा । रथ एव सन्नयति वाजिनोऽश्वान् पुरोऽग्रतः । यत्र यत्र कामयते सुषारथिः । अभीशूनां महिमानं पनायत । पनतेः स्तुतिकर्मणः । पनायत स्तुत हे स्तोतारः । यश्च मनोऽश्वानाम् । पश्चात्सन्तोऽनुयच्छन्ति[1] अनुबध्नन्ति सारथिमनसम् । सारथीच्छावशेन गमनचित्तमश्वानां कुर्वन्तीत्यर्थः । रश्मयोऽश्वानाम् । पूजयामीत्यपपाठः ।

धनुः । धन्वतेर्गत्यर्थस्य वधार्थस्य वा । उभयार्थोपपत्तेः । तथा च दर्शयति । धन्वन्त्यस्माद र्पयन्ति[2] अस्मात् । अर्पयन्तश्च[3] घ्नन्तीषवः । अपादानत्वाच्चास्योभयोपपत्तित्वम् । तस्यैषा ।

[इति चतुर्दशस्या-( नवमस्या-) ध्यायस्य षोडशः खण्डः ।][4]

---

## [अथ सप्तदशः खण्डः ।][4]

धन्वना गा धन्वनाजिं जयेम धन्वना तीव्राः समदो जयेम ।
धनुः शत्रोरपकामं कृणोति धन्वना सर्वाः प्रदिशो जयेम ॥[5]

केवलस्यापि धनुषश्छान्दसत्वादङ् । धन्वना धनुषा गाः शत्रूणां स्वभूताः । धन्वना धनुषैव । आजिं यः स्पर्धयैव लक्ष्यवेधफलमात्रं[6] क्रियते तं संग्रामं[7] जयेम । धन्वना धनुषैव । तीव्राः परस्परवधरूपाः । समदः संग्रामनामैतत् । लिङ्ग[8] शत्रुवधफलसंग्रामं जयेम । धनुः धनुरेव च शत्रोरपकामं मध्यमपदलोपी समासः । अपगतं काममस्मज्जयविषयं कृणोति लोडर्थे लट् करोतु धन्वना । किं बहुना धनुषैव वयं सर्वाः प्रदिशः[9] प्रगतादिभिरवान्तरदिशो जयेम ।

पठिता सा स्वनिगदेनैव व्याख्याता । समद् इति बहुवचनान्तं संग्रामनाम । प्रथमं[10] व्याख्येयत्वेनोपात्तम्[11] । तस्य निर्वचनं द्वितीयम् । संपूर्वाद्त्तेः सम्पदादि क्विपि । संभक्षणात् परस्परस्यायुषाम्[12] । समदन्तीति समदः[13] संग्रामा उच्यन्ते । मदतेर्वा क्विपि हर्षकर्मणः पूर्ववत् संहृष्यन्ति हि तत्र योद्धारः ।

---

१—०नुगच्छन्ति M.
२—दवयन्ति C.
३—अवयन्त C.
४—आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।
५—[ ऋ० ६ । ७५ । २ ] 'धन्वना गा' इत्येव प्रतीकः B. C. M.
६—लक्षवेधार्थफल B. लक्षवेधफल C. लक्षवेध M.
७—संग्रामं C. ०मात्रं संग्रामं क्रियते तं M.
८—अत्र 'लिंग' इति पदं सन्दिग्धमेव । अत्र कश्चन पाठस्त्रुटित इति भाति ।
९—'प्र' इति नास्ति B. अग्रे 'प्रगतादिभिः' इति पाठः सन्दिग्ध एव ।
१०—'प्रथम' इति द्विर्लिखितम C.
११—व्याख्यायत्वेन C; व्यख्ययेय० M.
१२—'स्याय' इत्येव पाठः B. । अग्रे च 'संग्रामा' इत्यन्तः पाठस्त्रुटितः B.
१३—समद तप्रत्ता C.

ज्या वक्तव्या। जयतेर्जयसाधनत्वात्। जिनातेर्वा 'ज्या वयोहानौ' इत्यस्य[1]। साभि[2]प्रायेण हेतुभावं प्रतिपद्यमाना वयो भावयति[3]। जयतेर्वा गत्यर्थस्यान्तर्णीत[4]ण्यर्थस्य। प्रजावयति प्रंगमयति[5] इषूनिति वेति पाठान्तरम्। तस्या एषा।

[इति चतुर्दशस्या-( नवमस्या-) ध्यायस्य सप्तदशः खण्डः।][6]

---

## [अथाष्टादशः खण्डः।][6]

वक्ष्यन्तीवेदा गनीगन्ति कर्णं प्रियं सखायं परिषस्वजाना।

योषेव शिङ्क्ते वितताधि धन्वञ् ज्या इयं समने पारयन्ती॥[7]

अत्रैकवाक्यतायै यत्तदध्याहारः। या वक्ष्यन्तीव यथा वदिष्यन्ती। इत पादपूरणः। कश्चित्[8] काचित् स्त्री आगच्छेत् तद्वत्। आगनीगन्ति पुनः पुनरागच्छति[9] आकृष्यमाणा कर्णं प्रति। प्रियं लुप्तोपममेतत्। प्रियमिव सखायं कश्चित्[10] काचित् स्त्री परिषस्वजाना परिष्वजन्ती[11]। किम्? सामर्थ्यादिषुं श्लिष्यन्तीत्यर्थः। सा योषेव सुरतसमये[12] शिङ्क्ते अव्यक्तं शब्दं करोति। वितताधि धन्वन् धनुष उपरि ज्या इयं समने संग्रामे पारयन्ती। किम्? सामर्थ्यादिषून्। इषुगमनेन वा पालयन्ती योद्धारम्।

इषु[13]रिषतेः। ईषति[14] हन्तीति[15] गतिकर्मणो वधार्थस्य वा। उभयार्थोपपत्तेः। तस्यैषा।

[इति चतुर्दशस्या-( नवमस्या-) ध्यायस्याष्टादशः खण्डः।][6]

---

## [अथैकोनविंशः खण्डः।][6]

सुपर्णं वस्ते मृगो अस्या दन्तो गोभिः सन्नद्धा पतति प्रसूता।

यत्रा नरः सं च वि च द्रवन्ति तत्रास्मभ्यमिषवः शर्म यंसन्॥[16]

गृध्रावयवभूतान् वाजा[17]निषुराच्छादयति। इषोर्हि विमया पक्षा[18] भवन्ति। तानभि-

---

१–[ धा० ९। २७ ] २–स्वाभि० B.
३–भाव इतिB. वयवो भावC. 'वयो हापयति' इति युक्तः स्यात्। ४–न्तर्नीतB. ५–प्रवगमयतिC.
६–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते। ७–[ऋ०६।७५।३] 'वक्ष्यन्तीव' इत्येव प्रतीकः B. C.
८–किञ्चित्B. कश्चित्C. ९–च्छन्तीB. ०च्छन्तिC.M.
१०–कश्चित्B.C. ११–परिषस्वजन्तीC.B. परिष्यज०M
१२–सतत समये B. C. १३–इषुमतःB. 'इषु' इति त्रुटितम्C. १४–ईषतिB. १५–हनतीतिB.C.
१६–[ऋ०६।७५।११] 'सुप (व C.) र्णं वस्ते' इत्येव प्रतीकः B. C. M.
१७–विजानीषु B. विदानिषु C.
१८–पक्षजा B. C.

प्रेत्यैतत् सुपर्णं वस्त इत्युच्यते । मृगो[1] रुरुः शबरादिः । तदवयवे शृङ्गास्थिनी[2] वा । प्रकृतिशब्देन च विकारस्याभिधानम्[3] । मृगस्य रुरोः शबरस्य वा यच्छृङ्गमस्थि वा तन्मय इत्यर्थः । 'मृग अन्वेषणे'[4] इत्यस्य वा । शत्रुमार्गणशीलो मृगोऽस्या इषोर्दन्तः फलम् । गोभिर्गोविकारैश्च स्नावभिः[5] श्लेष्मणा च सन्नद्धा सम्यग्बद्धा पतति गच्छति प्रसूता प्रेरिता क्षिप्ता सतीत्यर्थः । एवमिषुं स्तुत्वा परेणाशिषमाशास्ते । यत्र[6] यत्र संग्रामे नरो[7] मनुष्याः सं च वि च द्रवन्ति संगच्छन्ते विगच्छन्ति च । शूराः संगच्छन्ते कातरा विगच्छन्ति । तत्रास्मभ्यमिषवः शर्म शरणं यच्छन्तु रक्षन्त्वस्मानित्यर्थः । गोभिः सन्नद्धा इति व्याख्यातं सप्तमे[8] ।

अश्वाजनी[9] वक्तव्या । सुबोधत्वाद्[10] निर्वचनम् । कशेत्याभिधेयवचनम् । आहुरिति प्रसिद्धिं दर्शयति । अर्थकथनप्रसक्तमाह । कशा प्रकाशयति । भयमिति[11] विशेषप्रदर्शनं वाच्यव्यवच्छेदाय[12] । कृश्यतेर्वा[13] तनूकरणार्थस्य । अणूभावादित्यर्थः । समन्वयं दर्शयति । सा हि श्लेषावयवारम्भणतन्वी भवति । वागपि कशोच्यते । सा कस्मादित्याह ? वाक्[14] पुनः प्रकाशयत्यर्थान् अर्थविशेषान्[15] व्यवच्छेदनाय । खेशया[16] मुखाकाशे शेते तत उपलब्धेः । क्रोशतेर्वा शब्दार्थस्य । उभयोः[17] कशायाश्चर्मयष्टिरूपायाः प्रकृतत्वाच्च[18] वाचोऽपि हुङ्काररूपाया अश्वाजनीत्य[19]विशेषात् सन्देहे सति[20] वाग्व्यावृत्तये श्वेनं[21] व्यवच्छिन्दन्नाह । अश्वकशाया एषा इति ।

ननु च हुङ्काररूपायामपि वाचि कशा प्रकाशयति[22] भयमिति प्रवृत्तिनिमित्तस्य तुल्यत्वात् कशाशब्दस्योपपत्तेरश्वाजनी[23]शब्दवत्[24] अश्वकशाशब्दोऽपि नालं[25] व्यवच्छेदाय । सत्यम् । तथापि तस्य गुणसम्बन्धस्य रूढ्या प्रच्छादनात् । क्वचित्तु काचित् प्रसृततरा गतिरिति[26] अश्वाजनी[27] दर्शनीयपानीयशब्दवन्न[28] व्यवतिष्ठते । निर्ब्रवीति । अश्वकशेति तूक्तौ[29] चर्मयष्टिः प्रतीयते न हुङ्काररूपां वाचम् । तस्माद्युक्तो[30] व्यवच्छेदोऽश्वकशाया एषा इति । 'अथैतदश्ववत्[31]' इति यथा ।

---

१–'मृगः' इति द्विर्लिखितम् B. C.
२–शृङ्गास्थीनि B.C. ३–'वि' इति द्विर्लिखितम् B.C.
४–[ धा० १० । ३६७ ] ५–स्नायुभिः B. C.
६–'यत्रा' इति त्रुटितम् B. यत्र C.
७–'नर' इति त्रुटितम् B. C. ८–[निरु० २।५ ]
९–अश्वाजिनी M. १०–०त्वान्निर्वच० B. C.
११–ह्यमिति .C १२–वाच्यो व्यव B. C. M.
१३–तुश्यतेर्वा C. कृष्यतेर्वा B.
१४–वा ( नास्ति B. ) कुरुतः B. C.
१५–अनर्था विशेषार्थान् B. C.
१६–कशया मुखाकशते C. कशया केमुखेके शेते M.
१७–अभया: B. C. १८–पाया वाचश्च प्रकृ B. C.
१९–नीत्याविशेषान् B. C. २०–सति वा व्यावृ B.C.
२१–श्वेद व्यवन्दन्नाह B. च्छेदवन्दन्नाह C.
२२–'काश' इति त्रुटितम् C. २३–रश्वाशनी B. C.
२४–ब्दस्य पदश्च कशा C. २५–नालं व्यव C.
२६–'ति' इति त्रुटितम् C. २७–अश्वाजनि B. C.
२८–'ब्द' इति त्रुटितम् B. २९–तूक्तेरचर्म यष्टिं प्रतीयति B. रुक्तेश्चम्मयष्टिं प्रतीयति C.
३०–तस्मादुक्तो B. C. ३१–[ निरु० २ । २७ ]

अथ संविज्ञानपदसंभूतोऽश्वकशाशब्द एव कस्मान्न पठितः ? उदाहरणाभावात् । यद्युदाहरणाभावो हेतुः कथमिध्मः प्रथमगामितया तत्र क्वचिदाप्रीसूक्तेष्विध्मः पठ्यते ? उच्यते । एकादशत्वसंख्यानुरोधात् । यदि हि योऽस्ति स पठ्यते ततः समित्समिद्धशब्दौ पठ्ये(या)ताम् । यथा पाठेन पशावेकादशत्वचोदनालक्षणत्वं बाध्येत । शक्नोति सोऽयं रूढिसंयोगानां दर्शनभेदेन समित्कलापाग्न्यर्चिविषयेण समित्समिद्धशब्दौ बोधयितुमबाधेन प्रतिज्ञार्याः प्रयाजसंख्याया इत्युक्तमिध्मस्य प्रथमगामित्वं देवतापदसमाम्नाय इति । उक्तश्चेध्मः समिन्धनादिति ।

[इति चतुर्दशस्या-(नवमस्या-) ध्यायस्यैकोनविंशः खण्डः ।]

---

## [अथ विंशः खण्डः ।]

आ जंघन्ति सान्वेषां जघनाँ उप जिघ्नते ।
अश्वाजनि प्रचेतसोऽश्वान्त्समत्सु चोदय ॥

एषामिति श्रुतेर्येषामित्यध्याहारः । येषामेषां रथे नियुक्काना तोत्रेणा जंघन्ति अत्यर्थ पुनः पुनर्वा हन्ति । कः ? सामर्थ्यात् सारथिः । सानु समुच्छ्रितमंसप्रदेशं जघनान् जघनप्रदेशांश्च । उपजिघ्नते उपारूढा अत्यर्थं पुनः पुनर्वा घ्नन्ति । अत्रापि सामर्थ्यात् पृष्ठसादिनोऽश्ववाहाः । यच्छ्रुतेस्तदध्याहारः । तानेतान् हे अश्वाजनि प्रचेतसः प्रकृष्टप्रज्ञानान् गृहीतशालिहोत्रोपदिष्टनयानित्यर्थः । अश्वान् समत्सु संग्रामेषु चोदय प्रेरय ।

आजंघन्ति सानून्येषामिति वा पाठः । सान्वित्यस्य व्याख्यानं सरणस्वभावानि सक्थीनीति । सचतेरिति धातुनिर्देशः । आसक्तोऽस्मिन् काय इत्यर्थोपपत्तिवचनम् । जघनानि चोपघ्नन्तीति पाठः । जघनं हन्तेर्यङन्तस्य । प्रायेण ह्यश्वान् शिष्यान् वा पुत्रादीन्

---

१–यद्यु ( दू C. ) दाहर B. C.
२–पृथगामि याचता न B. C.
३–पठ्येतम् M. ४–वशादेका C. B.
५–'समित्कलापाग्न्यर्चि विषयेण' इति त्रुटितम् B.
६–'याः प्र' इति त्रुटितम् B. C.
७–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते
८–[ऋ० ६ । ७५ । १३] 'आ जंघन्ति' इत्येव प्रतीकः B. C. M.
९–कम् B. C. १०–सारथि B.
११–जिघ्रते B.C.
१२–अत्रादि सा C. M. १३–श्ववाकाः B. C.
१४–प्रवृद्धप्रज्ञानात् C. प्रवृद्धज्ञानात् M.
१५–शाली हो C.
१६–'आ जंघन्ति' इति पाठः स्यात् ।
१७–मूले 'सरणानि' इत्येव पाठः ।
१८–आ (अC) सक्तमस्मिन् का (कालC.) यB.C.
१९–यन्तन्तस्य C. 'यङ्लुगन्तस्य' इति पाठः स्यात्

पृष्ठप्रदेशे ताडयन्ति[1]। येषां घ्नन्त्युपघ्नन्तीति[2] पाठः। केषाम् ? अश्वादीनि[3]। समानाधिकरणे स्त्र्यामामन्त्रितान्त एते पदे द्रष्टव्ये। इकारस्य च व्यत्ययेन एकारः[4]।

उलूखलं कस्मात् ? उरु विस्तीर्णं खं सुषिरमस्य। ऊर्ध्वं वा उपरि भागे खं मुखमस्य। ऊल् अन्नं[5] तत्करोतीत्युक्तमुलूखलम्[6]। सर्वनिर्वचनेषु वर्णव्यापत्त्यादि वाच्यम्। ततः शब्दानुकरणनिमित्तत्वाद्वर्णव्यापत्त्यादिना उलूखलमभवदिति। तस्मादनुकरणनिमित्तकमेवाङ्गीकृत्य ब्राह्मणमपि दर्शयति। 'उरु मे कुरु'[7] इति। एवमुरुकरमेतत्। ततश्च ब्राह्मणोक्तनिर्वचनं ज्ञात्वा वर्णव्यापत्त्यादिकृतेन परोक्षेण वृत्तेन तदुलूखलमित्याचक्षते लौकिकाः। तस्यैषा।

[इति चतुर्दशस्या-(नवमस्या-) ध्यायस्य विंशः खण्डः।][8]

---

## [अथैकविंशः खण्डः।][8]

यच्चिद्धि त्वं गृहेगृह उलूखलक युज्यसे।
इह द्युमत्तमं वद जयतामिव दुन्दुभिः॥[9]

शुनःशेपस्य। चिदप्यर्थे। हीति पादपूरणः। यद्यपि त्वं[10] गृहे गृहे सर्वस्मिन् यज्ञगृह इत्यर्थः। हे उलूखलक व्रीह्याद्यवघाताय युज्यसे। शुद्धोऽपि सोपसर्गार्थे द्रष्टव्यः। विनियुज्यसे। तथापीह यज्ञे मया शुनःशेपेन विनियुज्यमानः सन् द्युमत्तमं क्रियाविशेषणमेतत्, दीप्तिमत्तमं वद गम्भीरं शब्दं कुर्वित्यर्थः। जयतामिव योधानां[11] दुन्दुभिव्याजेन च[12]। सा[13] निगदव्याख्यातायुषः[14] प्रकरणादिति।

इति निरुक्तविवरणसमुच्चये चतुर्दशस्या-[नवमस्या-][15] ध्यायस्य द्वितीयः पादः।[16]

---

१–ताडयते B. C.

२–०षामघ्न० C. ०षां घ्न० B.

३–'अश्वादीनाम्' इति युक्तः स्यात्।

४–'येषामाघ्नन्त्युपघ्नन्ति' इत्यारभ्य 'एकारः' इत्यन्तमिदं कस्य मूलभागस्य व्याख्यानमिति न ज्ञायते

५–ऊरत अंगं B. C.

६–त्युक्तमुसलम् B. C.

७–[श० ब्रा० ७। ५। १। २२] ऊरु मे C.

८–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते।

९–[ऋ० १। २८। ५] 'यच्चिद्धि त्वम्' इत्येव प्रतीकः B. C. M.

१०–त्वत् C.

११–योधान C.

१२–वा M.

१३–स B. C.

१४–'०नायुषः' B. C.

१५–अयं कोष्ठकान्तर्गतः पाठो नास्ति B. C.

१६–'इति चतुर्दशस्य द्वितीयः पादः' इत्येव पाठः C. M.

# अथ तृतीयः पादः [1] [अथ द्वाविंशः खण्डः ।][2]

[ वृषभः प्रजां वर्षतीति वातिबृहति रेत इति वा । तद्वृषकर्मा वर्षणाद् वृषभः । तस्यैषा भवति ][3]

वृषभः पाठक्रमप्राप्तो वक्तव्यः । स कस्मात् ? सर्वत्र व्याख्येयपदोपन्यासः । एतद् व्याख्यानम् । प्रजां प्रजाहेतुभूतं बीजं वर्षति सिञ्चति । बृहेर्वातिशयेन [रेतः][4] सेक्तुं बृहति[5] उद्यच्छत्यात्मानम् । प्रसङ्गात् पर्यायं निराह । पयसि प्रकृते 'क्षीरं क्षरतेः'[6] इति यथा । तदेव रेतःसेकलक्षणं वृषणकर्मैव[7] कर्म यस्य । आर्षणात् स्त्रीगव्याभिगमनाद्[8] वृषभः । तस्य वृषभस्यैषा ।

[इति चतुर्दशस्या-( नवमस्या-) ध्यायस्य द्वाविंशः खण्डः ।][2]

---

## [अथ त्रयोविंशः खण्डः ।][2]

न्यक्रन्दयन्नुपयन्त एनममेहयन् वृषभं मध्य आजेः ।

तेन सूभर्वं शतवत्सहस्रं गवां मुद्गलः प्रधने जिगाय ॥[9]

अस्मिन् सूक्ते द्रुघणस्य वृषभस्य च[10] स्तुतिलाभहेतुमितिहासं वक्ष्यति । मुद्गल[11] आह न्यक्रन्दयन्[12] तेनेति । तच्छब्दश्रुतेर्यद्ध्याहारः । यं हुङ्कारसूत्कारादीनां[13] प्रासोह[14] । केन ? शब्देन शब्दितवन्तः । उपयन्[15] उपागच्छन्तः । के ? सामर्थ्यात् सारथयो व्राजका[16]ः । एनं वक्ष्यमाणम् । अमेहयन् मूत्रपुरीषोत्सर्गं च विश्रमार्थं कारितवन्तो वृषभम् । क्व ? मध्य आजेः रथवाहनभूमेः । तेन सूभर्वं भर्वतिरत्तिकर्मा[17] शोभनमोदकादिभक्षमेनं सुखोपजीव्यं वा । वक्ष्यमाणगोसहस्रविशेषणं वा । सूभर्वं[18] सुयवसम् । शतवत् शतेन सहितं सहस्रं गवां मुद्गलोऽहं प्रधने संग्रामे जिगाय जितवानस्मि ।

---

१–अयं सर्वोऽपि पादारम्भात्मकः पाठो नास्ति C.
२–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते।
३–अयं मूलपाठो नास्ति B. C. M.
४–येन क्तेः सेक्तुं B. C. 'रेतः' नास्ति M.
५–'बृहति' इति त्रुटितम् C. ६–[निरु० २।५]
७–वृषभकर्मा (मे C. M.) कर्म यस्य B. C. M.
८–वर्षणात् स्त्रीगव्याभिगमनाद्वृषभः B. C,
९–[ऋ० १०।१०२।५] 'न्यक्रन्दयन्' इत्येव प्रतीकः B. C. M.
१०–'च' इति त्रुटितम् B. ११–मुतगल C.
१२–०न्दयितेनेति B. C.
१३–'यद्वात्कारस्तत्कारा B. C.
१४-अयं सन्दिग्धः पाठः।
१५–'उपयन्त' इति त्रुटितम् B. १६–प्राजकाः C.
१७–भर्वतिः रक्तिकर्मा B. भवति रक्तिकर्मा C. सुभर्वं राजानं भर्वति भर्वतिरत्ति० M.
१८–'सूभर्व' नास्ति B, C.

न्यँक्रन्दयन्नित्येतेन व्याख्यातं क्रन्दतिः शब्दकर्मा परंनिगदनेन । आर्जवनं यत्र परिणते घटादौ क्षिप्ता मनोक्षावा गृह्यन्ते आजवनो यत्र स्पर्धया । प्रधन इत्यपठितमपि सामर्थ्यात् संग्रामनाम । प्रकीर्णान्यस्मिन्निति ग्रहणकरूपेणोपक्षिप्तानीत्यभिप्रायः । यत्र तु परस्परं जिघांसतां प्रवृत्तिस्तत्रोपपन्नतरं निर्वचनम् । चूडामणिमुकुटकटकादिविक्षेपात् ।

द्रुघणो द्रुमविकारकाष्ठखण्डः । यत्र चायं संज्ञाभूतकः 'करणोऽयोविद्रुषु' वयाकरणस्मृतेः । तत्र द्रुघणः । स्तुतिप्रकरणे द्रुघणश्च योगबन्धेन प्रविश्योक्तलक्षणे संग्रामे व्यवहृत्य पणं कृत्वा जिघ्नाय जितवान् । तदर्थाभिधायिन्येषा ऋक् ।

[इति चतुर्दशस्या-(नवमस्या-) ध्यायस्य त्रयोविंशः खण्डः ।][12]

---

## [अथ चतुर्विंशः खण्डः ।][12]

इमं तं पश्य वृषभस्य युञ्जं काष्ठाया मध्ये द्रुघणं शयानम् ।
येन जिगाय शतवत्सहस्रं गवां मुद्गलः पृतनाज्येषु ॥[13]

एकस्तव वृषभस्त्वस्य कः सहायो येन त्वमजैषीरिति पृष्टः सन्नाह । इमं तं पश्य वृषभस्य युञ्जं युज्यत इति युक् सहायस्तम् । काष्ठाया दिशः अथवा भूमेरिनो मध्ये द्रुघणं शयानमपविद्धमवतिष्ठमानम् । येन द्रुघणेन जिगाय जितवान् शतसहितं गवां सहस्रं मुद्गलोऽहं पृतनाज्येषु उक्तलक्षणे संग्राम इत्यर्थः ।

पठ्यमानस्य निर्वचनार्थं उपक्षेपः । पृतनाः सेनास्तासां गमनार्थम् । यत्र योद्धुं संगच्छन्ते । जयार्थं वा । मुद्गान् लातीति मुद्गलः । ततस्तैस्तद्वान् लो मत्वर्थो वा । मुद्गं च

---

१–न् क्रन्द M.
२–'व्याख्यातं' इति त्रुटितम् B. C.
३–निगदेन C. ४–आजयनं M.
५–क्षिप्तो B C. 'मनोक्षावा' इति सन्दिग्धं पदम् ।
६–'आजवनो यत्र' इति पदद्वयमत्र व्यर्थमेव ।
७–'द्रुघणः' इति त्रुटितम् B C.
८–काष्ठषण्ड B. C. षण्डः M.
९–स [सं C.) ज्ञोभूतकः B. C.
१०–[पा० ३।३।८२] करणेयों विप्रु (प्रु C.) षी (षि C.) ति B. C. योविभूषु M.
११–व्यप हृत्य C.
१२–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।
१३–[ऋ० १० । १०२ । ९] 'इमं तं पश्य' इत्येव प्रतीकः B. C.
१४–'स्त' इति नास्ति B. C. १५–मजीषिरितिC.
१६–'तम्' इति नास्ति B.C. M.
१७–कः कायुज्यं तस्य B. C.
१८–आज्यन्तस्य रथवाहन B. C. ['हन' इति त्रुटितम् C.]
१९–'द्रुघणेन' त्रुटितम् B. C.
२०–जिह्रायन्तितवान् C. २१–शतवत्सहस्रं गवांB.C.

गलो वा मुद्गलान्[1]। मुद्गा वा गले अस्य । यस्य च मुद्गा[3] गले मुद्गेषु तस्य गलो भवति । ततो[4] मुद्गेषु गलोऽस्येति मुद्गलो मुद्गकषायभोजन इत्यर्थः । मदनः कामस्तं गिलति नियच्छति । हंसं ख्यानमदं पदार्धमुत्सेकं[5] मुदं वा हर्षम् । इष्टानिष्टविषयोपपत्तौ न हृष्यति[6] ग्लायति वा गभीरधीरित्यर्थः ।

भृम्यश्वो[7] नामर्षिः । भ्रमणा अश्वा यस्य । नित्यमुद्धतमण्डः[8] । अथवा भूमिरग्निः[9]। तथा वा तेजस्विन इत्यर्थः । बिभर्ति वा अश्वान् । ततः भार्म्यश्वः[10] ।

पितुरित्यन्नं[11]ऽप्रसिद्धत्वादभिधेयवचनम् । निर्वचनार्थं पठ्यमानस्यैव पातेर्वा रक्षणार्थस्य । रक्षितव्यं हि तत् । प्यायतेर्वा । तस्य शरीरवृद्धिहेतुत्वात् । तस्यैषा ।

[इति चतुर्दशस्या-( नवमस्या-) ध्यायस्य चतुर्विंशः खण्डः ।][12]

---

## [अथ पञ्चविंशः खण्डः ।][12]

पितुं नु स्तोषं महो धर्माणं तविषीम् । यस्य त्रितो व्योजसा वृत्रं विपर्वमर्दयत् ॥[13]

अगस्त्यस्य । परस्ताद्यच्छब्दश्रुतेस्तच्छब्दाध्याहारः । तं पितुमन्नं नु क्षिप्रं स्तौमि । महो महान्तं धर्माणं धारयितारम् । तविषीं[14] बलनामैतत् षष्ठ्यर्थे द्वितीया तविष्या बलस्य । यस्येत्यन्नस्य अपदेश[15]सम्बन्धलक्षणा च षष्ठी यस्यान्नस्य[16] सम्बन्धिना ओजसा बलेन यत्कृतेनेत्यर्थः । त्रितस्त्रिस्थान इन्द्रः । त्रिस्थानत्वं च वाय्वात्मना बलकृतिरूपेण वा सवनसम्बन्धेन वा । वृत्रं शत्रुं मेघं वा । विपर्वं[17] विगतपर्वाणं विश्लिष्टा[18]वयवसम्बन्धिनं कृत्वेति शेषः । पूर्वो विशब्दो[19]ऽर्दयतिना[20] वर्धकर्मणा सम्बध्यते व्यर्दयत् विविधं हतवान् हन्ति वा । तवतेर्वृद्ध्यर्थस्य तवस्तविष इति महन्नामनी ।

नद्यो व्याख्याताः । 'नदना भवन्ति शब्दवत्यः' इत्यत्र[21] । तासां प्राधान्यस्तुत्युदाहरणमेषा ।

[इति चतुर्दशस्या-( नवमस्या-) ध्यायस्य पञ्चविंशः खण्डः ।][12]

---

१—मलो वा B. C. २—अयं पाठः सन्दिग्धः ।
३—मुद्गान B. C. ४—को मुद्गलेषु B. C.
५—मुत्सेकः C. अस्य वाक्यस्य पाठः सन्दिग्धः ।
६—गृहयति B. C. ७—भूम्ययश्वो C.
८—अत्र 'दण्डः' इति वा पाठो भवेत् ।
९—'भूमिरग्निः' इति पाठः स्यात् । १०—[पा० ४।१।११४] ऋष्यर्णे C. ११—विक्रतिरित्यप्रसि B. C.
१२—आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।
१३—[ऋ० १।१८७।१] 'पितुं नु स्तोषं' इत्येव प्रतीकः B. C. १४—तविषि लल C.
१५—अवादेश B. १६—यः स्यात्तस्य B. यस्यात् नस्य C.
१७—'वं विगतप' इति नास्ति B. C.
१८—ण हविः श्लि B. णहेविश्लि C.
१९—पूर्वोपि श B. C.
२०—ब्दो दयति B. २१—[निरु० २ । २४]

## [अथ षड्विंशः खण्डः ।][1]

इमं मे गङ्गे यमुने सरस्वति शुतुद्रि स्तोमं सचता परुष्ण्या ।
असिक्न्या मरुद्वृधे वितस्तयार्जीकीये शृणुह्या सुषोमया ॥[2]

वेधसः पुत्रः सिन्धुक्षिदाह । इमं मे मम[3] स्वभूतं स्तोमम् । हे गङ्गे यमुने सरस्वति शुतुद्रि परुष्णि च । आकारः[4] सचतेत्यनेन[5] व्यवहितेनापि[6] सम्बध्यते । आसचत आसेवध्वं यूयम्[7] । असिक्न्या सहार्थे तृतीया असिक्न्या च सह वितस्तया च सह मरुद्वृधे हे मरुद्भिर्वर्धनीये आर्जीकीये त्वमपि[8] । पर आकारः[9] शृणुहीत्येतेन[10] सम्बध्यते । आभिमुख्येन शृणु सुषोमया च सह ।

एवं समस्तार्थवचनानन्तरमेकैकस्य पदस्य निर्वचनं विशिष्टं गमनमङ्गीकृत्याह । गङ्गा गमनादिति । गमयति वा प्राणिनो विशिष्टं स्थानमिति । यमुना प्रयुवती प्रकर्षेण मिश्रयन्ती आप्लावयन्ती नद्यन्तराणि । प्रवियुतं[11] क्रियाविशेषणमेतत् । विस्तीर्णमित्यर्थः[12] । सरस्वती[13] सर इत्युदकं[14] सर्तेस्तद्वती[15] । शुतुद्री[16] शुद्राविणीति निर्वचनम् । शु इति क्षिप्रनाम । क्षिप्रद्राविणीत्यर्थवचनम् । आशुशब्दात् तुदेः[च][17] शुतुद्री । तुन्नेव प्रतोदेन । अप्रसिद्धां परुष्णीं प्रसिद्धेनाह । तां च इरावतीमृजुत्वादतिक्रम्य परुष्णीं निराह । परूंषि पर्वाणि तैस्तद्वती । उक्तार्थोपपत्तिवचनं कुटिलगमिनीति । परूंषि चास्याः[18] कुटिलानीत्यभिप्रायः । असिक्नी 'वर्णादनुदात्तात्[19]' इतीकारप्राप्तौ 'असितपलितयोः प्रतिषेधः[20]' असिता पलिता । 'छन्दसि क्नमेके[21]' इत्यसिक्नीरिस्त्युपहतय[22] इत्यपि भवति । असिक्नीत्यस्य निर्वचनमसितेति । तत्पर्यायेणाचष्टे अशुक्लेति । उक्तोपपत्तिवचनं सितमिति शुक्लवर्णनामेत्यादि ।

मरुद्वृध इति सर्वासां विशेषणम् । तुल्यकारणत्वात्[23] । अवितस्ता[24] सती अकारलोपेन

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते
२–[ ऋ० १२ । ७५ । ५ ] 'इमं मे' इत्येव प्रतीकः B. C.
३–महः स्व B. महस्थभूतं C. ४–अकारः C.
५–तेत्येतेन B. C. ६–हितानापि C.
७–युवम् B. C.
८–मरुतभिपूर्वनीये आर्जीकि य त्वम् C.
९–अकारः B. १०–'ते' इति त्रुटितम् C.
११–प्रवियती B. C. प्रवियतमिति क्रि० M.
१२–विस्तीर्णमर्थः B. C. मर्थं M.
१३–सरस्वति B. C.
१४–दकनाम B. C.
१५–तद्वति B. C. 'तद्वती' त्रुटितम् M.
१६–शुतुद्रि B. C.
१७–तुदेत्यद्री B. C. 'च' नास्ति M.
१८–च स्युः B. C. १९–[पा० ४।१।३९]
२०–[पा० ४।१।३९। इति सूत्रे वार्तिकम्] 'प्रतिषेधः' इति त्रुटितम् B.
२१–[पा० ४।१।३९। इति सूत्रे वार्तिकम्]
२२–असिक्नीरिस्युपहतय B. C.
२३–करणत्वात C. M.
२४–असितस्ता B. C.

वितस्ता। 'तसूपक्षंये' अनुपक्षीणा महाप्रवाहेत्यर्थः। महाकूलेत्युक्तार्थोपपत्तिवचनम्। यां[3] विपाडित्याहुः सा आर्जीकीया। ऋजीकः पर्वतस्तत्प्रभवा। ऋजु[4] अकुटिलं गच्छति एवं शीला[5]या। प्रसक्तं पर्यायमाह। विविधं कूलपाटनात्। विपाशनाद्वा यथा तथा वक्ष्यति। विविधदेशप्रापणाद्वा। उदकस्योत्तानत्वात्[6]। सारप्रियो भवतेत्यभिप्रायः। विपाशनादित्युक्तस्योपपत्तिवचनं व्यपाश्यन्त[8] व्यपास्ता विक्षिप्ता हतपुत्रस्योद्भूत[9]तमोवृत्तेर्वसिष्ठस्येतिहासः। पूर्वमुरुञ्जिरा नामासीत्। सुषोमा ना[10]प्रसिद्धा अत आह सिन्धुरिति। यस्मादेनामभिप्रसुवन्ति आत्मानं प्रेरयन्ति गच्छन्ति पतन्तीत्यर्थः। अन्या नद्यः पर्वतस्यन्दनात्।

आपः कस्मात्? आप्नोतेः कृत्स्नं ताभिर्व्याप्तम्। आप्नोतेः संग्रहकर्मत्वात्। अथ[11] चाथर्वणश्रुतिः 'सर्वं वा इदमस्मयम्[12]' इति। तासामेषा।

[इति चतुर्दशस्या-(नवमस्या-)ध्यायस्य षड्विंशः खण्डः।[13]]

## [अथ सप्तविंशः खण्डः।[13]]

आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन। महे रणाय चक्षसे॥[14]

शिरस्य सिन्धुद्वीपस्य वा। हे आपः। हिः पादपूरणः। परस्तात्तच्छब्दश्रुतेर्यद्ध्याहारः। या यूयं मयोभुवः भवतिरत्रान्तर्णीत[15]ण्यर्थः सुखस्य भावयित्र्यः स्थ भवथ ता[16] नोऽस्मान् ऊर्जे अन्नाय दधातन स्थापयत। अन्नप्राप्तियोग्यान[17]स्मान् कुरुतेत्यर्थः। महे महते च[18] रणाय रमणीयाय चक्षसे दर्शनाय। महान्तं कालं पुत्रपौत्रसुहृद्विषयस्य दर्शनं[19] धत्तेत्यर्थः।

ओषधयो व्रीह्याद्याः। ओषद् दाहं क्षुधं धयन्ति पिबन्ति नाशयन्तीत्यर्थः। ओषते:

---

१—[धा० ४। १०६]

२—'महा' इति द्विर्लिखितम् C.

३—यो: विवामित्याह सा आर्जिकीया B. यो विपामित्याहुः सा आजीक्रिया C.

४—'ऋजु अकुटिल' इति द्विर्लिखितम् M.

५—लाया: B. ६—स्योत्तान C.

७—अयं सन्दिग्धः पाठः। ८—व्यपास्यन्त B. C.

९—स्योभूत B. C. १०—नाः प्रसिद्धा B. C.

११—अथाचाथ C.

१२—[cf. गो० ब्रा० १।२ तद् यदब्रवीद् आभिर्वा अहमिदं सर्वमाप्स्यामि यदिदं किंचेति तस्मादापोऽभवंस्तदपामप्त्वमाप्नोति वै स सर्वान् कामान् यान् कामयते। शत० ब्रा० ६।१।१।९ सेदं सर्वमाप्नोद् यदिदं किंच यदाप्नोत्तस्मादापः। शत० ब्रा० ४।५।७।७ अद्भिर्वा इदं सर्वमाप्तम्। सर्वे वाज इद C.

१३—आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते।

१४—[ऋ० १०। ९। १] 'आपो हि ष्ठा' इत्येव प्रतीकः B. C.

१५—न्तर्नीत B. १६—था त अस्मा C.

१७—ग्यान् तस्मात B. अन्त प्राप्ति योन्या तस्मात् C.

१८—'च' इति नास्ति B. १९—दर्श B. C.

पूर्वपदं धयतेरुत्तरपदं कर्तरि कारके । ओषति धयन्ति ज्वरादावेनाः पिबन्तीति वा वैद्योपदेशेनातुराः । निदिग्धिकाद्यभिप्रायं चैतत् । दोषं वातपित्तादिकं वा । तासामेषा ।

[इति चतुर्दशस्या-( नवमस्या-) ध्यायस्य सप्तविंशः खण्डः ।][3]

---

## [अथाष्टाविंशः खण्डः ।][3]

या ओषधीः पूर्वा जाता देवेभ्यस्त्रियुगं पुरा ।
मनै नु बभ्रूणामहं शतं धामानि सप्त च ॥[4]

आथर्वणो भिषक् । या ओषधीः प्रथमार्थे द्वितीया ओषधयः । पूर्वाः प्रथमजाताः । कुतः ? देवेभ्यः । न चाल्पेन कालेन पूर्वाः । किन्तर्हि ? त्रियुगं युगत्रयेण पुरा । युगत्रयस्य च प्रथमं कृतयुगं तेन कृतयुग इत्यर्थः । पुरस्ताद्यच्छ्रुतेस्तदध्याहारः । तासां मनै मन्वे जानामि । नु इति पादपूरणः । किं विशिष्टानाम् ? बभ्रूणां पिशङ्गवर्णानां भर्तॄणां वा कृत्स्नस्य जगतः । भर्तॄणां वाप्यधीनाम् । अहं शतं धामानि जन्मानि जातिविशेषाणीत्यर्थः । सप्त च सप्ताधिकजातिशतमित्यर्थः । स्थानानि वा धामानि यानि पुरुषस्य शरीरे वर्माणि तेषु सुखार्थं दुःखोपशनार्थं वैनाः संदधत्योषधिरूपत्वेन । धामशब्दोऽर्थत्रयवाची ।

रात्रिर्व्याख्याता । "प्ररमयति भूतानि" इत्यादिना तस्या एषा ।

[ इति चतुर्दशस्या-(नवमस्या-) ध्यायस्याष्टाविंशः खण्डः । ][3]

---

## [ अथैकोनात्रिंशः खण्डः । ][3]

आ रात्रि पार्थिवं रजः पितुरप्रायि धामभिः ।
दिवः सदांसि बृहती वितिष्ठस आ त्वेषं वर्तते तमः ॥[17]

कुशिकस्य रात्रेर्वा । आकारः अप्रायीत्येतेन सम्बध्यते । हे रात्रि । पार्थिवं रजो लोक-

---

१–दहतिB.C.२-न दिग्धिC.सन्दिग्धमिदं पदम् ।
३–आदर्शपुस्तकेऽत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।
४–[ऋ० १० । ९७ । १] 'या ओषधीः' इत्येव प्रतीकः B. C. ५–अथर्वणोऽभिषक् B.
६–नियुगंC. ७–तु इति B.C. ८–वाप्यधीनाम्B.
९–नातं B. C. १०–षानीत्यर्थः C.
११–अत्र 'मर्माणि' इति युक्तः पाठः ।
१२–र्थं पैनाकं दध B. र्थं वैनाकं दध C.
१३–ब्दोर्थन्त्रय C.
१४–[निरु० २।१८] 'ख्या' इति त्रुटितम् C.
१५–परमयति B. C. १६–तस्य एषा C.
१७–[खैलिकं सूक्तं२५॥अथर्व०१९।४७।१]'आ रात्रि' इत्येव प्रतीकः B. C. १८–कशीकस्य C.

वचनोऽयं पार्थिवं लोकमित्यर्थः । पितुः[1] पिताऽत्र मध्यमस्तस्य धामभिः स्थानैरन्तरिक्षप्रदेशैः सहेति शेषः । आप्रायि 'प्रा पूरणे'[2] इत्यस्यैतच्छान्दसत्वात्[3] कर्तरि णिचि रूपं पूरयसि त्वम् । केन ? सामर्थ्यात्तमसा । दिवो द्युलोकस्यावयवभूतानि सदांसि स्थानानि । बृहती[4] महती त्वं तमसा वितिष्ठसे विविधं गच्छसि विष्टभ्य वा तिष्ठसि स्थापयसीत्यर्थः[5]। आकारो वर्तेत इत्येतेन सम्बध्यते । पूरयित्वा च तत्रासम्भवात्[6] ततो द्युलोकात् त्वेषं[7] 'त्विष दीप्तौ'[8] सन्दीप्त्या महत्त्वलक्षणया दीप्तमावर्तते पुनरिमं लोकं प्रति तमस्तव स्वभूतम् । आप्रायी-[9]त्यस्य व्याख्यानमापूपुरः[10]। प्रातेरर्थे पूरयतिनाह[11]।

अरण्यानी अरण्यस्य पालयित्री[12] अधिदेवता काचिदिति नैरुक्ताः । 'महदरण्यम्'[13] इति वैयाकरणाः । अपार्णमपगतम् । कुतः ? ग्रामादिति पूर्वस्यैव निराकांक्षतायै । अरमणं वा नहि तद्रमणमिति[14] भयहेतुत्वात् । तस्या एषा ।

[इति चतुर्दशस्या (नवमस्या-) ध्यायस्यैकोनत्रिंशः खण्डः ।][15]

---

## [ अथ त्रिंशः खण्डः । ][15]

अरण्यान्यरण्यान्यसौ या प्रेव नश्यसि । कथा ग्रामं न पृच्छसि न त्वा भीरिव विन्दती ३ ॥[16]

देवमुनेरार्षम् । हे अरण्यानि अरण्याधिदेवते । अरण्यानि कान्ताराणि वनानि अटवी-रित्यर्थः । द्वितीयाश्रुतेः प्रतीति शेषः । असौ या त्वं प्रेव नश्यसि अस्थानेऽयमिवः पठितः प्रणश्यसीव[17]। यच्छ्रुतेस्तदध्याहारः । सा कथा कथं ग्रामं न पृच्छसि । नूनं न त्वा भीर्भयं विन्दति[18]। इवस्तु संप्रत्यर्थे[19] परिभयार्थे वा । सर्वतो भयं परिभयम् । पराची पराङ्मुखी ।

---

१–पितु न पिता C.
२–[धा० २।५१] ३–स्यैकछा C.
४–ब्रवाणी महन्ती C.
५–विष्कंभ वोतिषुसि स्थाप C.
६–'त् ततो' इति त्रुटितम् C.
७–त्वेषणं B. वेषणं C.
८–[ धा० १ । १०२६ ]
९–अप्रायी B.
१०–मपूपुरः B. C.
११–यतिनाच B. C.
१२–वाचयित्रि B.
१३–[पा० ४।१।४९] इति सूत्रे 'हिमारण्ययोर्महत्त्वे' इति वार्तिकम् । तदुदाहरणत्वेन महाभाष्ये-ऽयं पाठः ।
१४–तनूमयमिति B. C.
१५–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।
१६–[ऋ० १० । १४६ । १] 'अरण्यानी' इत्येव प्रतीकः B. C.
१७–प्रणश्यति B. प्रणश्यतित C.
१८–विन्दतीव B. C.
१९–संप्रत्यतः (त C.) B. C.

श्रद्धा कस्मात् ? श्रद्धानात्[1] श्रत् सत्यं तस्मिन् धीयते । तथा च मन्त्रे 'अश्रद्धामनृतेऽदधात् श्रद्धा सत्ये प्रजापतिः'[2] इति । सा च धर्मार्थसुखादिवर्गे[3] यथाशास्त्रमधिकृतपुरुषस्य कर्मानुष्ठानहेतुभावप्रदा[4] बुद्ध्याधिदेवता श्रद्धा । तस्या एषा ।

[इति चतुर्दशस्या-( नवमस्या-) ध्यायस्य त्रिंशः खण्डः ।][5]

---

## [अथैकत्रिंशः खण्डः ।][5]

श्रद्धयाग्निः समिध्यते श्रद्धया हूयते हविः ।
श्रद्धां भगस्य मूर्धनि वचसा वेदयामसि[6] ॥

श्रद्धाया आर्षम्[7] । अत्रैकवाक्यतायै सुखप्रतिपत्तये यत्तच्छब्दाध्याहारः । श्रद्धया यः स एवार्थः[8] सत्यम् । समिध्यते नेतरः[9] फलाभावात् । श्रद्धयैव च यदेव सत्यं हूयते हविर्नेतरत् । अथ च 'यः श्रद्दधानो जायते तस्येष्टं न क्षीयते'[10] 'श्रद्धयेष्टं च पूर्तं च'[11] इति श्रुतिस्मृतिदर्शनम् । अतः श्रद्धां भगस्य भागधेयस्य । भागधेयशब्देन पुण्यमुच्यते तस्य मूर्धनि सप्तमी द्वितीयार्थे मूर्धस्थानीयं प्रधानमङ्गं श्रद्धाख्यम् । वचसा वचनेनानेन मन्त्रवादाख्येन तथा च ब्राह्मणवादाख्येन स्वार्थेन च वयमावेदयामासि आभिमुख्येन वेदयामः प्रतिपादयाम इत्यर्थः ।

पृथिवी व्याख्याता प्रसङ्गेन । 'प्रथनात्'[12] इति । तस्या एषा ।

[ इति चतुर्दशस्या-(नवमस्या-) ध्यास्यैकत्रिंशः खण्डः । ][5]

---

## [अथ द्वात्रिंशः खण्डः ।][5]

स्योना पृथिवि भवानृक्षरा निवेशनी । यच्छा नः शर्म सप्रथः ॥[13]

मेधातिथेः । स्योना सुखनामैतत् । सुखा हे पृथिवि भव अनृक्षरा[14] अकण्टका । निवेशनी[15] निवेशयोग्या[16] । यच्छ नः प्रयच्छ [वा[17]] अस्मभ्यं शर्म[18] सुखम् । सप्रथः[19] सर्वतः[20] पृथु[21] विस्तीर्णम् ।

---

१–शृशूनात B श्रनात् C २–[वा०सं० १९ । ७७] ३–०खायवर्ग B.C. ४–प्रस्था० B. C. ५–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते । ६–[ऋ० १० । १५१ ।१] 'श्रद्धयाग्निः' इत्येव प्रतीकः B. C. M. ७–श्रद्धयार्षम् C. ८–एवा एवार्थ स० B.C. ९–नेकरः C. १०–[कौ० ब्रा० ७।४] जायते नाक्षी(क्षि B.)यते B. C.

११–[मनु० ४।२२६] १२–[निरु० १।१३,१४] १३–[ऋ० १ । २२ । १५] 'स्योना पृथिवि' इत्येव प्रतीकः P. C. 'स्यो...' इत्येव M. १४–अनृशरा B. १५–'नि' इति द्विर्लिखितम् B.C. १६–वेशय योग्या C. १७–'वा' इति नास्ति M. १८–शं सुखम् B. C. १९–सप्रथुः C. २०–कुर्वन्तः B. २१–पृथि विस्ती C.

कण्टक[1] इत्यभिधेयवचनम् । कृन्छतेरिति प्रत्ययार्थस्य । कण्टतेर्वा 'कण्टति, बिस्यति'[2] इति पाठात् गतिकर्मसु । स ह्यन्यावयवेभ्य[3] उद्गततरः । शरणमाश्रयः । सुखं सुखाश्रयत्वात् सर्वभूतानाम् ।

अप्वा[4] व्याख्याता । 'व्याधिर्वा भयं वा यदेनया विद्धोऽपवीयते' इति । तस्या एषा ।[5]

[इति चतुर्दशस्या (नवमस्या-) ध्यायस्य द्वात्रिंशः खण्डः ।][6]

---

## [अथ त्रयस्त्रिंशः खण्डः ।][6]

अमीषां चित्तं प्रतिलोभयन्ती गृहाणाङ्गान्यप्वे परेहि ।
अभि प्रेहि निर्दह हृत्सु शोकैरन्धेनामित्रास्तमसा सचन्ताम् ॥[7]

अप्रतिरथस्य[8] । अमीषामेतेषामस्मच्छत्रूणां चित्तं प्रतिलोभयन्ती विमोहयन्ती । गृहाणाङ्गानि अप्वे[9] भो[10] व्याध्यधिदेवते भयदेवते वा । तच्च चिकीर्षन्ती परेहि परागच्छ । एतान् प्रत्यतियाहीत्यर्थः । परागत्य चाभिप्रेहि अभिप्रगच्छोपसर्पेत्यर्थः । उपसृत्य[11] च शरीरं निर्दह । हृत्सु, द्वितीयाबहुवचनस्य स्थाने सप्तमी, हृदयानि । शोकैर्दुःखैः । अन्धेन च तमसा मरणलक्षणेन चास्मदमित्राः सचन्तां[12] सेवन्तां संसेवन्तामित्यर्थः[13] ।

अग्नायी सा पुनरग्नेः पत्नी । तथा च पूतक्रत्वादीनां[14] पुंयोगलक्षणेन[15] प्रत्ययस्मरणम् । तस्या एषा ।

[इति चतुर्दशस्या-( नवमस्या-) ध्यायस्य त्रयस्त्रिंशः खण्डः ।][6]

---

१–'कण्ट' इति त्रुटितम् B. C.

२–[निघ० २।१४]

३–सं ह्यटव्या अवय B. C. स ह्यटव्या M.

४–'प्वा' इति त्रुटितम् C. अव्या M.

५–[निरु० ६ । १२] तत्र 'अप्वा यदेनया विद्धोऽपवीयते । व्याधिर्वा भयं वा' इत्येव पाठः ।

६–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।

७–[ऋ० १०।१०३।१२] 'अमीषां चित्तम्' इत्येव प्रतीकः B. C. M.

८–'अ' इति त्रुटितम् B. C.

९–'अप्वे' इति त्रुटितम् B. C.

१०–भो ( भे C. ) व्याध्यदि वेद (भ C.) वते तव देवते वा B. C.

११–उपसृप्यश्च C.

१२–'न्तां' इति त्रुटितम् C.

१३–'संसेव्यन्ताम्' इति मूलनिरुक्ते पाठः ।

१४–[पा० ४।१।३६-३८]

१५–पुत्र योग B. C.

## [अथ चतुस्त्रिंशः खण्डः ।][1]

इहेन्द्राणीमुप ह्वये वरुणानीं स्वस्तये। अग्नायीं सोमपीतये ॥[2]

मेधातिथेः। इह यज्ञे इन्द्राणीमुपह्वये[3]। वरुणानीं स्वस्तये। अग्नायीं च सोमपीतये सोमपानार्थम्। यथैव चाग्नेः सोमपानसम्बन्धः। एवं तत्पत्न्या अपि[4]। मन्त्रलिङ्गा देवताऽग्नायी[5]। तत्स्तुत्यर्था या सा निगदेन पाठेनैव व्याख्याता।

इति निरुक्तविवरणसमुच्चये चतुर्दशस्य [नवमस्याध्यायस्य][7] तृतीयः पादः[8]।

---

## अथ चतुर्थः पादः[9]। [अथ पञ्चत्रिंशः खण्डः।][1]

अथातोऽष्टौ द्वन्द्वानि।

अथशब्दो द्वन्द्वविशेषाधिकारार्थः। आनन्तर्ये वा। अतः पृथिवीस्थानतया द्वन्द्वपदान्येवात्रविशिष्यन्ते[10]। अष्टौ पाठादेव निर्ज्ञातायां[11] संख्यायामष्टावित्यवधारणार्थं संख्यापदम्[12]। अन्यान्यपि द्वन्द्वपदानि सन्ति[13]। यानि त्विह पठ्यन्ते तान्यष्टौ द्वन्द्वानीति निर्वचनानीत्य[14]भिप्रायः। उषासानक्तादीनामाप्रीत्वेन समाम्नानादिह पाठः। मित्रावरुणादीनां पृथगपि स्तुत्युपपत्तेर्द्वन्द्ववृत्तित्वस्य व्यभिचारित्वादिहापरः[15] पृथिवी। उलूखलमुसलयोः[16] क्षोदनकारणत्वेन सन्निपत्योपकारकत्वे सति मुख्यत्वात् प्रथमकारित्वं भाष्यकारेणानुक्तमपि द्रष्टव्यम्।

उलूखलमुसले। उलूखलं व्याख्यातम्। मुसलं मुहुः सरम्। तयोरेषा भवति[17]।

तयोरुलूखलं व्याख्यातम्। उपेत्यनेकनिर्वचनप्रदर्शनेन[18]। मुसलं मुहुर्मुहुः सरणात्। उत्क्षिप्योत्क्षिप्य निपातनान्मुहुः सरणम्। तयोरेषा।

[इति चतुर्दशस्या-(नवमस्या) ध्यायस्य पञ्चत्रिंशः खण्डः।][1]

---

१—आदर्शपुस्तकेष्वत्र खण्डारम्भसमाप्तिनिर्देशो न दृश्यते

२—[ऋ० १।२२।१२] 'इहेन्द्राणीम्' इत्येव प्रतीकः B. C. ३—न्द्राणी उप C.

४—अपिC. ५—देवाग्ना C. ६—म्नाय्यस्तुत्यर्थाB. C.

७—अयं कोष्ठकान्तर्गतः पाठो नास्त्यादर्शपुस्तकेषु।

८—'इति चतुर्दशस्य तृतीयः पादः' इत्येव पाठः C.

९—अयं पादारम्भात्मकः पाठो नास्तिC. १०-शिष्यतेC.

११—निर्ज्ञातायां C. 'विज्ञातायां' इति वा स्यात्

१२-सख्यो पदम् C. १३-यन्तिB.C. १४-द्विवचनानीC.

१५—अयं सन्दिग्धः पाठः। अथवा 'व्यभिचारित्वादिहापाठः' इति स्यात्। तथा सति 'पृथिवी' इति पदमत्र व्यर्थमेव।

१६—सले योक्षादन्नकरणत्वेन C.

१७—अयं मूलपाठो नास्ति B. C.

१८—[निरु० ९।२०] 'उर्वित्यनेक' इति पाठो भवेत्।

## [अथ षट्त्रिंशः खण्डः ।][1]

आयजी वाजसातमा ता ह्युच्चा विजर्भृतः । हरी इवान्धांसि बप्सता ॥[2]

शुनःशेपस्य[3] । ता इति परस्तात्तच्छब्दश्रुतेर्यच्छब्दाध्याहारः । हे उलूखलमुसले आयजी मर्यादया यष्टव्ये । वाजसातमा वाजानां चान्नानामवहननेन संभक्ततमे[4]।[5] ता द्विवचनस्य स्थाने आकारः[6] । ते । हीति पादपूरणः । उच्चा उच्चैर्मुसल उत्क्षिप्यमाणे । विजर्भृतः[7] हरतेर्यङ्लुगन्तस्य कर्मणीदं व्यत्ययेन परस्मैपदम् । पुनः पुनर्विह्रियेते[8] । इन्द्रस्य स्वभूतौ हरी इव यथा ऋजीषं धानांश्च संभागमिन्द्राश्वौ भक्षयतः[9] । एवमन्धांसि अवहन्यमानान्यन्नानि[10] । बप्सता 'बभस्तिरत्तिकर्मा'[11] भक्षयन्त्यश्नन्तीत्यर्थः[12] ।

अत्रेध्मवत् स्तुतिरसत्यपि लिङ्गयोगे[13] । आयष्टव्ये मर्यादया पूजयितव्ये । पूजा चात्र 'आद्रिरसि वानस्पत्यं' इत्यादिमन्त्रवद् अत्रे[14] द्रष्टव्या । ये विजर्भृतस्तं आयजी इति च सम्बन्धः । संभक्ततमे[15] अन्नेभ्योऽन्नाकारेभ्योऽतिशमयायोगा[16] ।

हविर्धाने । शकटे सोमलक्षणानि हवींषि निधीयन्ते ययोः । सामीपिकं चाधिकरणम्[17] । कूपे गर्गकुलमितिवत् । तयोरेषा ।

[इति चतुर्दशस्या-( नवमस्या-) ध्यायस्य षट्त्रिंशः खण्डः ।][1]

— —

## [अथ सप्तत्रिंशः खण्डः ।][18]

आ वामुपस्थमद्रुहा देवाः सीदन्तु यज्ञियाः । इहाद्य सोमपीतये ॥[18]

गृत्समदस्य । आकारः सीदन्त्वित्येतेन सम्बध्यते । वनोपस्थं[19] पर्वतोपस्थमित्यादौ

---

१ आदर्शपुस्तकेष्वत्र खण्डारम्भसमाप्तिनिर्देशो न दृश्यते
२–[ऋ० १।२८।७] 'आयजी वाजसा मा' इत्येव प्रतीकः B. C. 'आ' इत्येव M.
३–शेफस्य M. ४–महनेन
५–संभक्तमे B. संभक्तनमे C.
६–स्थाने न आकारः B. C. ७–विजह्यता C.
८–विप्रियते B. C.
९–धनना इव B. धननाश्च संभाग C.
१०–'ना' इति त्रुटितम् C.
११–[निरु० ५।१२]
१२–०न्त्यघ्नन्ती C. ०न्त्यवघ्नन्ती० M.
१३–[अनुपलब्धमूलमिदं वचनम्]
१४–'अत्र' इत्यस्य स्थाने 'गृह्यमन्त्रा' इति पाठः B. C.
१५–समाभर्ततमे B. C.
१६–'मया' इति नास्ति C. अयं सन्दिग्धः पाठः ।
१७–करणरूपे गर्गे B. C.
१८–[ऋ० २।४१।२१] 'आ वामुपस्थम्' इति प्रतीकः C. M. 'आ वाम्' इत्येव B.
१९–वामुपस्थं C.

दर्शनादुपस्थशब्देन समीपमुच्यते। वां युवयोरुपस्थं समीपम्। अद्रुहा[1] हे अद्रोग्धव्ये हविर्धाने। देवा[2] आसीदन्तु। यज्ञिया यज्ञार्हा यज्ञसंपादिन[3] इन्द्रादयो यज्ञाङ्गदेवता इत्यभिप्रायः। इह प्रकृते। अद्य अस्मिन्नहनि। सोमपीतये सोमपानाय। उपस्थमुपस्थानमुपेत्य स्थीयते यस्मिन्।

द्यावापृथिव्यौ[4]। द्यावाशब्दः प्रसङ्गेन 'द्यावौ द्योतनात्'[5] इति पृथिवी 'प्रथनात्'[6] इति व्याख्याते। तयोरेषा।

[इति चतुर्दशस्या-(नवमस्या-)ध्यायस्य सप्तत्रिंशः खण्डः।][7]

---

## [अथाष्टात्रिंशः खण्डः।][7]

द्यावा नः पृथिवी इमं सिध्रमद्य दिविस्पृशम्। यज्ञं देवेषु यच्छताम्॥[8]

गृत्समदस्यैव। द्यावा पृथिवीशब्दयोः सत्यपि व्यवधाने परस्परसव्यपेक्षत्वात् प्रत्येकं द्विवचनम्। अतो यः समुदितयोः प्रत्येकमप्यसावेवार्थः। द्यावापृथिव्यौ नोऽस्माकं स्वभूतम्। सिध्रं[9] साधनं फलानाम्। अद्य अस्मिन्नहनि साद्गुण्यौ[10] दिविस्पृशं[11] दिवः संप्रष्टारं गन्तारमित्यर्थः। यज्ञं देवेषु यच्छतां प्रापयतामित्यर्थः।

विपाट्छुतुद्र्यौ[12] 'इमं मे गङ्गे'[13] इत्यत्र व्याख्याते। उभयोरेषा।

[इति चतुर्दशस्या-(नवमस्या-)ध्यायस्याष्टात्रिंशः खण्डः।][7]

---

## [अथैकोनचत्वारिंशः खण्डः।][7]

प्र पर्वतानामुशती उपस्थादश्वे इव विषिते हासमाने।
गावेव शुभ्रे मातरा रिहाणे विपाट्छुतुद्री पयसा जवेते॥[14]

'तद्यद् द्विवत्'[15] इति यदवोचं तस्यायं प्राप्तोऽवसरः[16]। विश्वामित्रस्तुष्टाव। प्रशब्दो

---

१—अद्रुहो हे अद्रोगन्धव्ये B. C. २—न देवा B. ३—संवादिन B. C. ४—पृथिवी B. ५—[निरु० २।२०] द्यावा द्योतनात् B. ६—[निरु० १।१४] ७—आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते। ८—[ऋ० २।४१।२०] 'द्यावा नः पृथिवि' इत्येव प्रतीकः B. C. ९—सिद्धं C.

१०—सन्दिग्धमिदं पदम्। अथवा 'साद्गुण्यात्' इति स्यात्। ११—स्पृष्टारं B. C. १२—छतुद्री B. छतुद्रेमा C. १३—[निरु० ९।२६] १४—[ऋ० ३।३३।१] 'प्र पर्वतानाम्' इत्येव प्रतीकः B. C. १५—[निरु० २।२४] तद्य द्विपदिति B. C. १६—प्रावोवसरः B. प्रायोवधरः C.

## [अथ षट्त्रिंशः खण्डः।][1]

आयजी वाजसातमा ता ह्युच्चा विजर्भृतः। हरी इवान्धांसि बप्सता ॥[2]

शुनःशेपस्य[3]। ता इति परस्तात्तच्छब्दश्रुतेर्यच्छब्दाध्याहारः। हे उलूखलमुसले आयजी मर्यादया यष्टव्ये। वाजसातमा वाजानां चान्नानामवर्हननेन[4] संभक्ततमे[5]। ता द्विवचनस्य स्थाने[6] आकारः। ते। हीति पादपूरणः। उच्चा उच्चैर्मुसल उत्क्षिप्यमाणे। विजर्भृतः[7] हरतेर्यङ्लुगन्तस्य कर्मणीदं व्यत्ययेन परस्मैपदम्। पुनः पुनर्विह्रियेते[8]। इन्द्रस्य स्वभूतौ हरी इव यथा ऋजीषं धानाश्च संभागमिन्द्राश्वौ[9] भक्षयतः। एवमन्धांसि अवहन्यमानान्यन्नानि[10]। बप्सता 'बभस्तिरत्तिकर्मा'[11] भक्षयन्त्यश्नन्तीत्यर्थः[12]।

अत्रेध्मवत् स्तुतिरसत्यपि लिङ्गयोगे। आयष्टव्ये मर्यादया पूजयितव्ये। पूजा चात्र 'आद्रिरसि वानस्पत्यः' इत्यादिमन्त्रवद् अत्र[13][14] द्रष्टव्या। ये विजर्भृतस्तं आयजी इति च सम्बन्धः। संभक्ततमे[15] अन्नेभ्योऽन्नाकारेभ्योऽतिशमयायोगा[16]।

हविर्धाने। शकटे सोमलक्षणानि हवींषि निधीयन्ते ययोः। सामीपिकं चाधिकरणमिं[17]। कूपे गर्गकुलमितिवत्। तयोरेषा।

[इति चतुर्दशस्या-(नवमस्या-)ध्यायस्य षट्त्रिंशः खण्डः।][1]

---

## [अथ सप्तत्रिंशः खण्डः।][18]

आ वामुपस्थमद्रुहा देवाः सीदन्तु यज्ञियाः। इहाद्य सोमपीतये ॥[18]

गृत्समदस्य। आकारः सीदन्त्वित्येतेन सम्बध्यते। वनोपस्थं[19] पर्वतोपस्थमित्यादौ

---

१ आदर्शपुस्तकेष्वत्र खण्डारम्भसमाप्तिनिर्देशो न दृश्यते

२–[ऋ० १।२८।७] 'आयजी वाजसा मा' इत्येव प्रतीकः B. C. 'आ' इत्येव M.

३–शेफस्य M. ४–मर्हनेन

५–संभक्तमे B. संभक्तनमे C.

६–स्थाने न आकारः B. C. ७–विजह्यता C.

८–विप्रियते B. C.

९–धनना इव B. धननाश्च संभाग C.

१०–'ना' इति त्रुटितम् C.

११–[निरु० ५।१२]

१२–०न्त्यघ्नन्ती C. ०न्त्यत्रघ्नन्ती० M.

१३–[अनुपलब्धमूलमिदं वचनम्]

१४–'अत्र' इत्यस्य स्थाने 'गृह्यमन्त्रा' इति पाठः B. C.

१५–समाभर्तृतमे B. C.

१६–'मया' इति नास्ति C. अयं सन्दिग्धः पाठः।

१७–करणरूपे गर्गे B. C.

१८–[ऋ० २।४१।२१] 'आ वामुपस्थम्' इति प्रतीकः C. M. 'आ वाम्' इत्येव B.

१९–वामुपस्थं C.

दर्शनादुपस्थशब्देन समीपमुच्यते । वां युवयोरुपस्थं समीपम् । अद्रुहो हे अद्रोग्धव्ये हविर्धाने । देवा आसीदन्तु । यज्ञिया यज्ञार्हा यज्ञसंपादिन इन्द्रादयो यज्ञाङ्गदेवता इत्यभिप्रायः । इह प्रकृते । अद्य अस्मिन्नहनि । सोमपीतये सोमपानाय । उपस्थमुपस्थानमुपेत्य स्थीयते यस्मिन् ।

द्यावापृथिव्यौ । द्यावाशब्दः प्रसङ्गेन 'द्यावौ द्योतनात्' इति पृथिवी 'प्रथनात्' इति व्याख्याते । तयोरेषा ।

[इति चतुर्दशस्या-( नवमस्या-) ध्यायस्य सप्तत्रिंशः खण्डः ।]

---

## [ अथाष्टात्रिंशः खण्डः ।]

द्यावा नः पृथिवी इमं सिध्रमद्य दिविस्पृशम् । यज्ञं देवेषु यच्छताम् ॥

गृत्समदस्यैव । द्यावा पृथिवीशब्दयोः सत्यपि व्यवधाने परस्परसव्यपेक्षत्वात् प्रत्येकं द्विवचनम् । अतो यः समुदितयोः प्रत्येकमप्यसावेवार्थः । द्यावापृथिव्यौ नोऽस्माकं स्वभूतम् । सिध्रं साधनं फलानाम् । अद्य अस्मिन्नहनि साद्गुण्यां दिविस्पृशं दिवः संस्प्रष्टारं गन्तारमित्यर्थः । यज्ञं देवेषु यच्छतां प्रापयतामित्यर्थः ।

विपाट्छुतुद्र्यौ 'इमं मे गङ्गे' इत्यत्र व्याख्याते । उभयोरेषा ।

[इति चतुर्दशस्या-( नवमस्या-) ध्यायस्याष्टात्रिंशः खण्डः ।]

---

## [अथैकोनचत्वारिंशः खण्डः ।]

प्र पर्वतानामुशती उपस्थादश्वे इव विषिते हासमाने ।
गावेव शुभ्रे मातरा रिहाणे विपाट्छुतुद्री पयसा जवेते ॥

'तद्यद् द्विवत्' इति यद्वोचं तस्यायं प्राप्तोऽवसरः । विश्वामित्रस्तुष्टाव । प्रशब्दो

---

१–अद्रुहो हे अद्रोगन्धव्ये B. C. २–न देवा B.
३–संवादिन B. C. ४–पृथिवी B.
५–[निरु० २।२०] द्यावा द्योतनात् B.
६–[निरु० १।१४]
७–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।
८–[ऋ० २।४१।२०] 'द्यावा नः पृथिवि' इत्येव प्रतीकः B. C. ९–सिद्धं C.
१०–सन्दिग्धमिदं पदम् । अथवा 'साद्गुण्यात्' इति स्यात् ।
११–स्पृष्टारं B. C.
१२–छतुद्री B. छतुद्रेमा C. १३–[निरु० ९।२६]
१४–[ ऋ० ३ । ३३ । १ ] 'प्र पर्वतानाम्' इत्येव प्रतीकः B. C.
१५–[निरु० २।२४] तद्य द्विपदिति B. C.
१६–प्रावोवसरः B. प्रायोवधरः C.

जवेत इत्येतेन सम्बध्यते । पर्वतानामुपस्थात् समीपात् । उशती कामयमाने । किम ? सामर्थ्यात् समुद्रगमनम् । अश्वे इव यथाश्वे वडवे । विषिने विमुक्ते मन्दुरातः । अथवा विविधवहनकर्मणि पेण्या रथे नियुक्त इत्यर्थः । तद्वद् हासमाने स्पर्धमाने परं हृष्यन्तौ वा । गावेव गाविव च शुभ्रे शोभने । मातरा मातरौ । एकस्य वत्सस्य पुत्रस्य स्नेहात् तं रिहाणे । अन्तर्णीतसनर्थे लिहिः । जिह्वयालेढु मिच्छन्त्यौ । विपाट्छुतुद्री द्विवचनस्य पूर्वसवर्णो विपाट्छुतुद्र्यौ पयसा उदकेन प्रजवेते प्रकृष्टेन जवेन गच्छतः ।

आर्त्नी धनुषः कोटी । आर्तन्यौ 'ऋ गतौ' इत्यस्य । ते हि ज्ययाकृष्यमाणे सङ्गच्छतः । 'कृती छेदने' इत्यस्य वा । तेष्वेवासंयोगाद् विविधमात्मानं कृतवन्तः । 'ऋष गतौ' इत्यस्य वा 'रिष हिंसायाम्' इत्यस्य वा । हिंसायां हि ते साधने भवतः । तयोरेषा ।

[ इति चतुर्दशस्या-(नवमस्या-) ध्यायस्यैकोनचत्वारिंशः खण्डः । ][13]

## [अथ चत्वारिंशः खण्डः ।][13]

ते आचरन्ती समनेव योषा मातेव पुत्रं बिभृतामुपस्थे ।
अप शत्रून्विध्यतां संविदाने आर्त्नी इमे विष्फुरन्ती अमित्रान् ॥[14]

वायुर्भरद्वाजस्तस्यार्षम् । ते ज्ययाकृष्यमाणयाकृष्यमाणे आचरन्ती आगच्छन्त्यौ ये द्वारं प्रति । समनेव समाने भर्तरि मनो ययोस्ते इव योषा योषितौ स्त्रियौ भर्तारं प्रति । मातेव पुत्रं यथा माता पुत्रमुपस्थे अङ्के धारयेदेवं बिभृतां धारयताम् । ये द्वारमप विध्यताम् । अपनयतां च शत्रून् । संविदाने सम्यक् जानन्त्यौ स्वकर्म । आर्त्नी धनुष्कोटी इमे विष्फुरन्ती । स्फुरतिर्वधकर्मा । निघ्नन्त्यौ अमित्रान् । अपपूर्वो व्यधिरपनयने द्रष्टव्यः । अपविद्धो निरस्त उच्यते ।

---

१–जपेत B.
२–षेण्यौ C. अत्र 'षण्णे' इति मूलानुसारी युक्तः पाठो भवेत् ।
३–भासमाने B. C. ४–'मातरा' इति त्रुटितम् B.
५–अन्तर्नीत B.
६–मुद्रितमूले 'अर्तन्यौ' इति पाठः
७–[धा० १।९६१॥३।१६] ८–कृष्यममाने C.
९–[धा० ६।१५४] १०–[धा० ६।७]
११–[धा० १।६९५॥४।१२५]
१२–भवन्तः B. C.
१३–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते।
१४–[ ऋ० ६ । ७५ । ४ ] 'ते आचरन्ती' इत्येव प्रतीकः B. C.
१५–यौ B. यो C.
१६–विभ्रतां M.
१७–यौ B. यो C.
१८–अवपूर्वो B. C.

शुनासीरौ। अप्रसिद्धत्वादभिधेयस्याह शुनो वायुः । क्षिप्रं वातीति निर्वचनम्। अन्तरिक्ष इत्यर्थप्राप्तार्थवचनम्[2]। सीरः सरणात्। तयोरेषा।

[इति चतुर्दशस्या-( नवमस्या-) ध्यायस्य चत्वारिंशः खण्डः।][3]

---

## [अथैकचत्वारिंशः खण्डः।][3]

शुनासीराविमां वाचं जुषेथां यद्दिवि चक्रथुः पयः। तेनेमामुप सिञ्चतम्॥[4]

वामदेवस्य। हे शुनासीरौ इमां स्तुतिलक्षणां वाचम्। जुषेथां सेवेथाम्। यद् यच्च दिवि चक्रथुः[5] कृतवन्तौ स्थः। पय उदकम्। तेनेमां पृथिवीमुपगम्य सिञ्चतम्। एतद्धि कर्म युवयोः। तथा चोक्तम् 'द्वा बृबूकं वहतः पुरीषं वाय्वादित्यौ'[6] इति निगदव्याख्याता।

देवीजोष्ट्री वक्तव्ये। देव्यौ जोषयित्र्याविति निर्वचनेन प्रथमाद्विवचनस्य स्थाने पूर्वसवर्ण इति। अभिधेयमाचष्टे। द्यावापृथिव्याविति वाहोरात्रे वा अन्ये नैरुक्ताः। सस्यं[7] व्रीह्यादि। समा[8] संवत्सरः। एतद्देवीजोष्ट्रीशब्दवाच्यमिति कात्थक्यो[9] नैरुक्तविशेषो मन्यत इति शेषः। तयोर्देव्योरेष संप्रैषः प्राधान्यस्तुत्युदाहरणं न ऋक्[10] न यजुर्न सामास्ति।

[इति चतुर्दशस्या-( नवमस्या-) ध्यायस्यैकचत्वारिंशः खण्डः।][3]

---

## [अथ द्विचत्वारिंशः खण्डः।][3]

देवी जोष्ट्री वसुधीती ययोरन्याघा द्वेषांसि यूयवदान्या-

वक्षद्वसु वार्याणि यजमानाय वसुवने वसुधेयस्य वीतां यज॥[11]

वसुधीती वसुनो धनस्य निधानभूते[12] दात्र्यौ[13] वा। ययोरन्या एका अघा[14] अघानि पापानि। द्वेषांसि द्वेष्याणि खादीनि[15]। यूयवत्[16] यौतिर्मिश्रणेऽन्यत्र। इह तु सामर्थ्यात् पृथग्भावे। पृथक्-

---

१-मुद्रितमूले 'शु एति' इति पाठः।

२-इत्यर्थः प्राप्तार्थं B. C.

३-आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते

४-[ऋ० ४।५७।५] 'शुनासीरौ' इत्येव प्रतीकः B. C.

५-चक्रतुः C. ६-[निरु० २।२२]

७-सस्यां B. C. ८-समा B. C.

९-कात्थक्यो B. C.

१०-'न ऋक्' इति त्रुटितम् B.

११-[काठ० सं० १९।१३॥ मैत्रा० सं० ४।१३।८॥ तै० ब्रा० ३।६।१३] 'देवी जोष्ट्री वसुधीती' इत्येव प्रतीकः B. C.

१२-न भूमेः B. न भूमे C. १३-धात्र्यौ वा C.

१४-'अघा' इति त्रुटितम् C.

१५-सन्दिग्धमिदं पदम्। १६-युयवत् C.

रोत्यपनयेतीत्यर्थः । आकारो वक्षदित्येतेन सम्बध्यते । अन्या एका आवक्षत आवहति ददातीत्यर्थः । वसु वसूनि । वार्याणि वरणीयानि । कस्मै ? यजमानायेति अन्तर्णीतवीप्सार्थो यावान् कश्चिद्यजमानः सर्वस्मै । किमर्थम् ? वसुवने 'वन षण संभक्तौ' वसूनां तेषां वननाय संभजनाय भोगायेत्यर्थः । वसुधेयस्य भोगातिरिक्तानां वसूनां निधानाय । पुरस्ताद्यच्छ्रुतेस्तद्ध्याहारः । ते वीतां पिबेतां कामयेतां वा । इदं हविः । त्वमपि हे होतर्यज मां विलम्बिष्ठाः।

[इति चतुर्दशस्या-(नवमस्या-) ध्यायस्य द्विचत्वारिंशः खण्डः ।][11]

---

## [अथ त्रिचत्वारिंशः खण्डः ।][11]

देवी ऊर्जाहुती इषमूर्जमन्यावक्षत्सग्धिं सपीतिमन्या नवेन पूर्वं दयमानाः स्याम ।

पुराणेन नवं तामूर्जमूर्जाहुती ऊर्जयमाने अधातां वसुवने वसुधेयस्य वीतां यज ॥[12]

अत्रैकवाक्यतायै यत्तदध्याहारः । ये उक्ताभिधेये[13] व्याख्याते ते देव्यौ । ऊर्जाहुती ऊर्जनं हविर्लक्षणं प्रत्याह्वातव्ये[14] तयोः । इषमूर्जं[15] उभयोरन्ननामत्वे पौनरुक्त्यप्रसङ्गादूर्जशब्दो रसवचनः । अन्नरसं चान्या एका आवक्षत् आवहतु । सग्धिं सपीतिमन्या[16] सहभोजनं सग्धिः[17] । घसेरिदं रूपम् । समानाग्धिः[18] सग्धिः । सहपानं सपीतिः[19] । सग्धिश्च ज्ञातिभिः सह । अन्या एका आवक्षदित्यनुषङ्गः[20] । तयोश्च प्रसादेन[21] नवेन यथा व्रीह्यादिना पूर्वं पुराणं[22] दयमाना[23] रक्षन्तो वयं स्याम भवेमेत्याशास्महे[24] । पुराणेन च नवं अक्षीणेषु पुराणेषु नवं स्यादित्यर्थः ।

---

१–नयन्तीत्य C.
२–'ते' इति त्रुटितम् B.
३–एतमाव B. एता आव C.
४–अन्तर्नीत B.
५–सर्वस्यै B. C.
६–[धा० १।४६४,४६५]
७–तिरिक्तां B.C.
८–'वसूनां' इति द्विर्लिखितम् C.
९–पिवतां B. विन्वतां C.
१०–माना विल B.
११–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।
१२–[काठ० सं० १९।१३॥ मैत्रा० सं० ४।१३।८॥ तै० ब्रा० ३।६।१३] 'देवी ऊर्जाहुती' इत्येव प्रतीकः B. C.
१३–धेयेऽप्याख्या B.
१४–'प्रत्या' इति त्रुटितम् B. 'प्र' इति त्रुटितम् C.
१५–इममूर्जं B. C.
१६–सन्धिं सविर्ति अन्या C.
१७–सन्धिः C.
१८–नाद्मि सन्धिः C.
१९–सवीतिः C.
२०–एता अवक्ष B. C.
२१–प्रसादेत B. C.
२२–पूर्वपुराणं B. C.
२३–नयमाना C.
२४–हवेमे C.

आशासानेभ्यश्च तामूर्जं तदेव रूपमन्नमित्यर्थः । ऊर्जाहुती ऊर्जं[1] प्रत्याह्वानव्ये । ऊर्जयमाने बलं कुर्वन्त्यौ । अधातां[2] दत्तामस्मभ्यम् । वसुवने...[3]त्यस्यान्नलक्षणस्य धनस्य वनाय[4] संभजनाय । वसुधेयस्य तस्यैव च भोगातिरक्तस्य च निधानाय[5] । वीतां[6] पिबतां कामयेतां वा । इदं हविः । त्वमपि होतर्यज मा विलम्बिष्ठाः । द्विरभ्यासोऽध्यायपरिसमाप्त्यर्थः । तथा श्रुतौ दर्शनादिति सिद्धम् ।

इति निरुक्तविवरणसमुच्चये चतुर्दशो [नवमो][7]ऽध्यायः समाप्तः ।[8]

---

१–ऊर्जा उप इति B. C.

२–अथातां C.

३–अत्र पाठस्त्रुटितः । कदाचिदत्र 'भोग्यस्यान्न' इति पाठो भवेत् ।

४–वधाय B.

५–निधनाय C.

६–पीतां C.

७–अयं कोष्ठकान्तर्गतः पाठो नास्त्यादर्शपुस्तकेषु ।

८–'इति चतुर्दशोऽध्यायस्समाप्तः' इत्येव पाठः C

# अथ पञ्चदशा- [दशमा-] ध्याये प्रथमः पादः ।

[ अथातो मध्यस्थाना देवताः । तासां वायुः प्रथमागामी भवति । वायुर्वातेः । वेतेर्वा स्याद्गतिकर्मणः । एतेरिति स्थौलाष्ठीविः । अनर्थको वकारः । तस्यैषा भवति ]

समाम्नायक्रमेणैवानन्तरं मध्यस्थाना देवताः । तासां वायोः प्रथमगामित्वे कारणमुक्तं द्वादशे वर्षकर्मप्राधान्यादिति । वायुः पुनर्वातेः । 'कृवापाजि' इत्युण्प्रत्ययान्तस्य । वेतेर्वाऽनेकार्थत्वाद् गतिकर्मणः । एतेरिति स्थौलाष्ठीविराचार्यो मन्यते । 'छन्दसीर्णः' इत्येवमायुः सन् वकारोपजनेन वायुः । ऋषभो वृषभ इतिवत् । सहाभिधानात् । अत्र हि एकोऽनर्थको वकारः । तस्य वायोरेषा ।

[ इति पञ्चदशस्या- ( प्रथमस्या- ) ध्यायस्य प्रथमः खण्डः ]

१–अयं कोष्ठकान्तर्गतः पाठो नास्ति B. अयं सर्वोऽप्यध्यायाद्यारम्भात्मकः पाठो नास्ति C.

२–अयं मूलपाठो नास्ति B. C.

३–०यस्था दता C.

४–[नि०७ । २२-२३] शे वर्षे कर्म B.

५–नर्वायुतः B. C.

६–[उणा० १।१] कृपावाङि B, C,

७–कौ एतैरिति B. कैरिति C.

८–[उणा० १ । २] सीर्णः C.

९–पृषत B. वृषत C.

१०–ए (ऐ B.) कावनर्थको व (प C.) कारः B.C.

११–आदर्शपुस्तकेष्वत्र खण्डसमाप्तेर्निर्देशो न दृश्यते ।

[ अथ द्वितीयः खण्डः । ][1]

वायवायाहि दर्शतेमे सोमा अरंकृताः ।
तेषां पाहि श्रुधी हवम्[2] ॥

मधुच्छन्दस आर्षम् । हे वायो आयाहि आगच्छ । दर्शत दर्शनीय । इमे सोमाः अयणैरलङ्करणैरलंकृता भूषिता इत्यर्थः । पर्याप्ता वा कृताः । तेषां षष्ठी श्रुतेरेकदेशस्यांशलक्षणमिति शेषः । द्वितीयार्थे वा षष्ठी तां पाहि पिबतेरेतद्रूपं न पातेः[3] । छान्दसत्वात् शपो लुक् पिबे[4] । श्रुधि शृणु । अस्माकं हवमाह्वानम् । मानादरं कृथाः[5] । 'दिविस्पृग्यात्यरुणानि कृण्वन्नुतो एति पृथिव्या रेणुमस्यन्[6]' इत्यादि लिङ्गदर्शनात् स्थानान्तरसम्बन्धेऽपि ।

कमन्यं मध्यमादिन्द्रादेवं[7] सोमपानसम्बन्धस्तुतिविषयत्वेन वायुमवक्ष्यत्[8] । यत इन्द्रस्योचितं सोमपानम् । तस्मादिन्द्र एव वायुः स्थानान्तरसम्बन्धेऽपि नान्य इति । न चेन्द्रवन्मध्यमे प्रसिद्धं वाय्वभिधानम्[9] । अतः सन्देहव्युदासोपन्यासः । तथा च 'वायुर्वेन्द्रो वा[10]' इति पर्यायत्वमुक्तम् । तस्य वा एषा । ऐन्द्र एव सूक्ते इन्द्रपर्यायत्व[11]प्रतिपादनार्था परा[12] ।

[ इति पञ्चदशस्या- ( दशमस्या- ) ध्यायस्य
द्वितीयः खण्डः । ][13]

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।

२–[ऋ० १ । २ । १] 'वायवा याहि' इत्येव प्रतीकः B. C.

३–परितः B. C. ४–विप B. C.

५–दरं कथा C.

६–[ऋ० १० । १६८ । १]

७–मध्यादिन्द्रा B.

८–मवक्षत् B. मवक्ष्यन् C.

९–वाय्वग्निभिधानः B. C.

१०–[निरु० ७ । ५]

११–'पर्य' इति द्विर्लिखितम् C.

१२–परान् C.

१३–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते ।

# [ अथ तृतीयः खण्डः । ]

आसस्राणासः शवसानमच्छेन्द्रं सुचक्रे रथ्यासो अश्वाः ।
अभि श्रव ऋज्यन्तो वहेयुर्नू चिन्नु वायोरमृतं विदस्येत् ॥

भरद्वाजस्य । अत्रैकवाक्यतायै यत्तदध्याहारः । आसस्राणासः सर्तेः कानजयम् । आगतवन्तः । शवसानं शवः शब्दात् बलवचनादन्तर्णीतमत्वर्थात् 'उपमानादाचारे । कर्तुः क्यङ् सलोपश्च' इति क्यङ् प्रत्ययः । तदन्तात्ताच्छील्ये शानच् । छान्दसत्वादार्धधातुकत्वम् । अतो लोपयलोपौ । शवसानं बलाचरणशीलम् । तदूं अच्छ अभेरर्थे । अभिप्रतीन्द्रं सुचक्रे रथे योगादात्मन इति । रथ्यासो रथस्य वोळ्हारस्ते । अभिः कर्मप्रवचनीयः प्रतिना समानार्थः। श्रवः सोमाख्यमन्नं प्रति ऋज्यन्तः ऋजु गच्छन्तो वहेयुरिन्द्रम् । किञ्च शुचि नूचिदिति नु शब्दो नववचनः । चिच्छब्दश्चार्थे । अद्याचिन्नूचिदिति यथा । चार्थश्रुतिसामर्थ्याच्च द्वितीयो नुशब्दः पुराणवचनः । यच्चेदानीं गृह्यते तन्नवम् । यत्पूर्वं गृहीतं तत्पुराणम् । तदुभयमपि नवं च पुराणं चास्य वायोर्गन्तुरिन्द्रस्य स्वभूतममृतममृतसदृशं दृष्टं मरणवर्जितं वा सोमाख्यमन्नं विदस्येत् । विशब्दो विगमे दस्यतिः क्षयार्थः । विगतक्षयं भवेत् । प्राक् प्रदानात् क्षयं मा गमदित्यर्थः ।

वायोश्चास्य भक्षो यथा न विदस्येत् तथा वहेयुरित्यस्य विवरणम् । शीघ्रमित्यभिप्रायः एवमिन्द्रप्रधानेयमृगित्येके मन्यन्ते । निहतमात्रत्वेन वायुकर्म वायुरित्यर्थः । न पृथक्कर्मात्मना वायुः स्तुत्य इत्यभिप्रायः । उभयप्राधान्येन परमन्यद्दर्शनम् । अधिष्ठात्रधिष्ठेयभेदेन ।'अपि वा पुरुषविधानामेव सतां कर्मात्मानः' इत्येवं भेदमुररीकृत्याह । वायोश्चास्य

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते
२–[ऋ० ६ । ३७ । ३] 'आसस्राणासः' इत्येव प्रतीकः B. C.
३–'न्तः' इति त्रुटितम् B.
४–दन्तर्णीत C.
५–[पा० ३ । १ । १०-११]
६–बलवदाचरण B. C.
७–तद्दं B. C.
८–'सु' इति त्रुटितम् B.
९–रध्यासः B. C.
१०–सोमाप इदं B. सोमाख इदं C.
११–शुचि नूनुचिदि B. शुचि अनूचिदि C.
१२–नवचनः B. C.
१३–च्छदश्चार्थे C.
१४–चार्थः श्रुति B.
१५–र्थ्याचिदिति यो B.
१६–वावो गन्तु B. वावोः गन्तु C.
१७–'ममृत' इति त्रुटितम् B.
१८–'दृ' इति त्रुटितम् C.
१९–तिक्षयार्थे B. C.
२०–'इत्य०' इति त्रुटितम् B.
२१–वरमन्य० B. ०मन्यदर्शनम् B. C.
२२–[निरु० ७ । ७] 'त्मा' इति त्रुटितम् B. C.
२३–चास्याद्विरू B. C.

द्विरूपोऽपि सोमभक्षः क्षयं मागादिति । श्रूयत इति कर्मणि कारके । अन्नं वर्ण्यमानं श्रूयते[1] ।

वरुणः । अन्तरिक्षे उदकस्यावरणाद्वायुरेव[2] । तस्य वरुणस्य[3] होषा ।

[ इति पञ्चदशस्या- ( दशमस्या- ) ध्यायस्य
तृतीयः खण्डः । ][4]

---

१-पण्यमानं B. C.

२-०स्यावारणायायुरेवम B. C.

३-वरुणात्तस्य B. C.

४-आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते ।

## [ अथ चतुर्थः खण्डः । ]

नीचीनबारं वरुणः कबन्धं प्र ससर्ज रोदसी अन्तरिक्षम् ।
तेन विश्वस्य भुवनस्य राजा यवं न वृष्टिर्व्युनत्ति भूम ॥[2]

नीचीनमधोमुखं बारं द्वारं सदादिलोपेन वर्णव्यापत्त्या च बारमुदकनिर्गमम्[3] । नीचं बारं यस्य स नीचीनबारोऽधोमुखबिलस्तम् । वरुणः कबन्धं कबन्धो[4] मेघः कवतेर्गतिकर्मणः । कवनमुदकं तस्मिन्[5] धीयत इति । द्वितीयाश्रुतेः कृत्वेति शेषः । अधोमुखबिलं कृत्वा वरुणः प्रससर्ज प्रं[6] इत्येष वीत्येतस्य स्थाने विसृजति विक्षिपति । किम् । सामर्थ्यादुदकम् । अथवा कबन्ध इत्येतेनोदकमेवोच्यते । उदकनामसु पाठात्[7] । नीचीनबारमित्येषा द्वितीया पञ्चम्यर्थे नीचीनबारं[8]मेघाद्[9] वरुणः कबन्धमुदकं मुञ्चति[10] । रोदसी द्वितीयाश्रुतेरत्र[11] कर्मप्रवचनीयप्रतिशब्दाध्याहारः । द्यावापृथिव्यौ प्रति । अन्तरिक्षं[12] च । यत्तेन चोदितेन विश्वस्य सर्वस्य भुवनस्य भूतजातस्य राजा ईश्वरो वरुणः । यवं न यवं[13] ग्रहणमत्र यवादिधान्यबीजस्योपलक्षणार्थम्[14] । यथा यवादिधान्यबीजं[15] वृष्टिरेवं व्युनत्ति[16] विविधं क्लेदयति । भूम भूमिशब्दपर्यायोऽयमत्र द्रष्टव्यः । बहुशब्दपर्यायो वा । भूमिं समस्तां बहुधा यावत् किञ्चित् ।

प्रसङ्गात् पठ्यमानस्यैव निर्वचनार्थ उपक्षेपः । उदकमपीति । निभृतो निश्चलः । अतोऽन्यदनिभृतश्चलं[17] । कं च तदनिभृतं चलं चेत्यर्थः । महत्वेनेत्यर्थप्राप्तार्थवचनम् । तस्य महानेतत् शक्नुयात्कर्तुम् । परेति । पराभिधानं किमर्थं[18] यदि वर्षकर्म वरुणाभिधानं चोत्तमे[19]ऽपि दृष्टम् । परस्यां तु व्यक्तं शब्दत एव तमूष्विति मध्यमाभिधानम् ।

[ इति पञ्चदशस्या- ( दशमस्या- ) ध्यायस्य चतुर्थः खण्डः ।[20] ]

---

१—आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।
२—[ऋ० ५ । ८५ । ३] 'नीचीनबारम्' इत्येव प्रतीकः B. C.
३—निर्गमनम् B. C.
४—कवन्दो M.
५—उदकमस्मिन् B. C.
६—प्रकृत्येष वीत्येकस्य B. C.
७—[नि० १ । १२]
८—नीचं बार B. C.
९—'बारान्मेघात्' इति युक्तः स्यात् ।
१०—मुञ्चि B. C
११—श्रुतेः अतः B. श्रुतेरत C.
१२—प्रतीति शेषः ।
१३—'व' इति त्रुटितम B. C.
१४—यवार्धोन्यबी·णार्थः C.
१५—धान्यं बीजं वृष्टिमेवं B.
१६—व्युनक्ति C.
१७—चलकं (चकलं C.) च तटनिभृतं B. C.
१८—'किमर्थम् ! यदि' इत्यारभ्य 'सुष्ठु स्तौमीत्यर्थः' इत्यन्तः पाठस्त्रुटितः B.
१९—धानकोत्तमे C. ०धानको···पि द्रष्टव्यः M.
२०—आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते ।

## [ अथ पञ्चमः खण्डः । ][1]

तमू षु समना गिरा पितॄणां च मन्मभिः ।

नाभाकस्य प्रशस्तिभिर्यः सिन्धूनामुपोदये सप्तस्वसा स मध्यमो नभन्तामन्यके समे ॥[2]

नाभाकस्य[3] । तं प्रकृतं वरुणम् । उ इति पदपूरणः । सुष्ठु अभिष्टौमीति[4] शेषः स्तुतिकर्मा भाष्यकारेण सम्बन्धसौकर्यायाध्याहृतः । सुष्ठु स्तौमीत्यर्थः । समना समान-शब्दात्[5] तृतीयाँ[6] लुक् ह्रस्वत्वं च । समानया योग्यया गिरा स्तुत्या । पितॄणां च मदीयानां योग्यैर्मन्मभिर्महनीयैः[7] पूजनीयैः स्तोमैः । तथैव च नाभाकस्य नाभाकनाम्न[8] ऋषेर्योग्याभिः [ प्रशस्तिभिः[9] ] प्रकृष्टाभिः स्तुतिभिः । यः सिन्धूनामुपोदये सिन्धव आपस्तां[10] उपगम्योद्यन्ति उद्गच्छन्त्युत्पद्यन्ते यस्मिन् [ सं[11] ] सिन्धूनामुपोदयोऽन्तरिक्षं तत्र । सप्तस्वसा स्वसृशब्दो भगिनीपर्यायः । गर्जितलक्षणाभिर्वाग्भिर्भगिनीस्थानीयाभिः[12] सप्तभगिनीकः । कतमः पुनः सः । उच्यते । सं[13] मध्यमः । स्तुतस्य चास्य प्रसादेन नभन्तां न भवन्तु[14] माभूवन्नित्यर्थः । नभंतीति[15] वधकर्मसु पाठात् । नभन्तां हन्यन्ताम् । अन्यके [कुत्सितः] अन्ये [अन्यके[16]] अस्मद्-द्विषः । समशब्दः सर्वपर्यायः सर्वे[17] ।

एनमाह मन्त्रो मन्त्रदृग्वा । निरुच्यते मन्त्रपदेन । असत्यपि लिङ्गे वारुणत्वात्सूर्यस्य[18] वरुण एव मध्यमो भवति । ये[19] नो द्विषन्तीत्यर्थप्राप्तं वचनम् । दुर्धियं[20] इत्यस्य व्याख्यानं[21] पापसंकल्पा इति ।

रुद्रः । रौति स्तनयित्नुलक्षणं शब्दं करोतीति । अत्यर्थं वा शब्दं कुर्वन्मेघोदरस्थो

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।
२–[ऋ० ८ । ४१ । २] 'तमू षु' इत्येव प्रतीकः C.
३–नाभागस्य C.
४–अभिरुह्यामिति शेषः स्त'ति C. ०भिरीह्यामिति M.
५–समानशब्दा M.
६–'या' इति त्रुटितम् C.
७–भिः स्तोमैर्मननीयैः B. भिर्मननीयैः M.
८–नाभागस्य नाभागनाम्न C.
९–'प्रशस्तिभिः' इति नास्ति B. C. M.
१०–आपतता B. C.
११–'स' इति नास्ति B. C. M.
१२–भिर्वा वाग्मि C. भिर्वाभि M.
१३–सुमध्यमः B.
१४–नाभावस्तु B. C.
१५–[निघ० २ । १९] न भवतीति B.
१६–'अन्यके अन्ये अस्मद्द्विषः' इत्येव पाठः M.
१७–'सर्वे' इत्यस्मात्पूर्वं 'सर्वाभिः' इति B. पुस्तके 'सर्वादिः' इति च C. पुस्तके पाठोऽधिक एव ।
१८–त्वात्सर्वस्य M.
१९–यतो द्विषतीय B. C.
२०–'धिय' इति त्रुटितम् B. दुडीय C.
२१–स्य यत् व्या B.C.

द्रवति। रोदयतेर्वा इतीतिहासाश्रयं निर्वचनम्। स हि शत्रुकलत्राणि रोदयति। ब्राह्मणोक्तमपि निर्वचनं दर्शयति। यदरुदद्दिति काठकं प्रवचनम्। यदरोदीदिति हारिद्रविकं मैत्रायणीयानाम्। रुद्रः किल पितरं प्रजापतिमिषुणा चिच्छेद। तमनुशोचन्नरुदत्। लुङि आङि च [अरुदत्]। 'रुद्रश्च पञ्चभ्यः' इति [चेटि] रूपमरोदीदिति। तस्यैषा।

[इति पञ्चदशस्या- (दशमस्या-) ध्यायस्य
पञ्चमः खण्डः।]

१–को कौ (को C) दय B. C.

२–श्रयनिर्व B.

३–मैत्रावरुणीया B. C. द्रवकं मैत्रावरुणी M.

४–तदनु B. C.

५–लुङि आङि C. 'अरुदत्' इति नास्ति M.

६–[पा० ७। ३। ९८]

७–चेति रूपः अरो C. 'चेटी' इति नास्ति M.

८–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते।

## [ अथ षष्ठः खण्डः[1] । ]

इमा रुद्राय स्थिरधन्वने गिरः क्षिप्रेषवे देवाय स्वधाव्ने ।
अषाळ्हाय सहमानाय वेधसे तिग्मायुधाय भरता शृणोतु नः ॥[2]

वसिष्ठस्य । परा च । इमा वक्ष्यमाणा गिरः स्तुतीः । रुद्रायेत्याद्याः सर्वास्तादर्थ्ये-चतुर्थ्यः । रुद्राय रुद्रस्य स्थिरधन्वने दृढधनुषः । क्षिप्रेषवे क्षिप्रेषोर्[3] देवाय देवस्य स्वधाव्ने स्वधा अन्नं [तेन[4]] तद्वान् स्वधावान् ततश्चतुर्थी अन्नवत इत्यर्थः । अषाळ्हाय असोढाय सहिरभिभवे । अनभिभूतस्यान्यैः[5] । सहमानायाभिभवतोऽन्यान् । वेधसे विधातुः । तिग्मायुधाय तीक्ष्णायुधस्य[6] [च[7]] अर्थाय । भरत प्रहरत प्रापयत कुरुतेत्यर्थः । स शृणोतु नोऽस्माकं स्वभूतांः[7] ।

तीक्ष्णं[8] ह्यायुधं योद्धारमुत्साहयति । आभिमुख्येन युध्यतेऽनेनेत्यायुधम् । तस्यैषा-परा[9] किमर्था । पूर्वस्यामृचि विधातुरित्युक्तम् । तत्र कस्य[10] विधातुरित्यपेक्षायां परया रोगाणां भेषजानां[11] चेति प्रतिपाद्यते[12] ।

[इति पञ्चदशस्या-(दशमस्या-) ध्यायस्य
षष्ठः खण्डः । ][13]

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।

२–[ ऋ० ७ । ४६ । १ ] 'इमा रुद्राय' इत्येव प्रतीकः B. C.

३–शीघ्रेषोः M.

४–नास्ति M.

५–स्यान्यैः B.

६–युधाय B. युधस्यार्थाय M.

७–स्वभूताम् B.

८–तीक्ष्णां B. C.

९–'प' इति त्रुटितम् B. C.

१०–तस्य B. ११–भैषजा C.

१२–प्रतिपद्यते C.

१३–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते ।

## [ अथ सप्तमः खण्डः । ][1]

या ते दिद्युदवसृष्टा दिवस्परि क्ष्मया चरति परि सा वृणक्तु नः ।
सहस्रं ते स्वपिवात भेषजा मा नस्तोकेषु तनयेषु रीरिषः ॥[2]

या ते तव स्वभूता दिद्युत् वज्रनामैतत् लुप्तोपमं चात्र द्रष्टव्यं दिद्युदिव वज्रमिव[3] [ ते तव[4] ] प्राणिहननी । कासौ ? पुरस्ताद् भेषजश्रुतेः सामर्थ्याद् रोगजातिः । दिवस्परि दिव उपरि सती अवसृष्टा[5] त्वयैवाधः क्षिप्ता । क्ष्मया सप्तम्यर्थे तृतीया सहार्थे वा पृथिव्यां पृथिव्या वा सह । अथवा 'क्ष्मायी विधूनने'[6] इत्यस्य । क्ष्मा हिंसा तया सह क्ष्मापयती घ्नती प्राणिन इत्यर्थः । चरति परि सा वृणक्तु[7] नः परिर्वर्जने परिवर्जयतु सास्मान् । किञ्च सहस्रं[8] सहस्रसंख्याकानि ते तव स्वभूतानि । स्वपिवात हे स्वाप्तवचन भेषजा भेषजानि औषधानि[9] तान्यस्मभ्यं देहीति शेषः । मा नः मा चास्माकं तोकेषु पुत्रेषु तनयेषु पौत्रेषु च रीरिषो हिंसीः ।

द्यतेः खण्डनार्थस्य द्युतेर्वा उज्ज्वलत्वात् । अपौनरुक्त्याय विषयभेदप्रदर्शनं पुत्रेषु पौत्रेषु चेति । तुद्यते हि[10] तत् तनयमात्मन एव विकाररूपम्[11] । अग्निरपीत्यादि स न मन्येतेत्यादि विचारानुस्मृतये[12] संकरव्युदासाय सिद्धस्तु[13] यस्तु सूक्तमित्येव द्रष्टव्यम् । तस्याग्ने रुद्रशब्दवाच्यत्वे[14] एषा उदाहरम् ।

[ इति पञ्चदशस्या-(दशमस्या-) ध्यायस्य सप्तमः खण्डः । ][15]

---

## [अथ अष्टमः खण्डः ।][15]

जराबोध तद्विविड्ढि विशेविशे यज्ञियाय ।
स्तोमं रुद्राय दृशीकम् ॥[16]

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।

२–[ऋ० ७ । ४६ । ३] 'या ते दिद्युत्' इत्येव प्रतीकः B. C. M.

३–वज्रमिव C.

४–'ते तव' इति पाठोऽत्राधिकः B. C.

५–अपसृष्टा C.

६–[धा० १ । ४८७]

७–वृणत्तु C.

८–'सहस्रं' इति नास्ति B. C.

९–ओषधानि C.

१०–'हि' इति त्रुटितम् B. तद्यते हि M.

११–रूपं सावग्नि (न्हि B.) रपी B. C.

१२–विकारः अस्तृतये B. विकारः नुस्मृतये C.

१३–सिद्धस्तुतयस्तु B.

१४–शब्द एवाद्यत्वे B. C.

१५–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।

१६–[ ऋ० १ । २७ । १० ] 'जराबोध' इत्येव प्रतीकः B. C. M.

शुनःशेपस्य[1]। जरा स्तुतिः[2]। जरतेरर्चतिकर्मसु पाठात्[3]। तां योऽग्निर्बुध्यते बोधयति वा देवान् होतृत्वात् स जराबोधः। तस्य सम्बोधनम्। विशेविशे[4] मनुष्यस्यार्थाय। यज्ञियाय यज्ञसम्पादिने[5] तत् प्रार्थ्यमानं विविड्ढि कुरु, देहीत्यर्थः। तुभ्यं स्तोमं रुद्राय द्रावरूपाय धग्धक्[6]शब्दकारिणे। दृशीकं दर्शनीयं श्रवणीयमित्यर्थः।

तद्बोधकतया बोधयितरिति वेति पाठः। तां बोधतयेत्यपपाठः[7]। तथा बोधयिता देवान्। यजनायेति होतृत्वे वर्तमानोऽग्निरेव यजनो[8] यज्ञसम्पादि तस्मै। बहुलवचनात् कर्तरि ल्युट्।

इन्द्रः कस्मात्। इरा अन्नं तेन सम्बन्धात् तद्धेतुभूतमुदकं लक्ष्यते। लक्षिततलक्षणया तेनापि तदाधारभूतो मेघः[9]। इराहेतुभूतोदकाधार[10]मपर्यन्त[11]धारात्मना दृणाति[12] विदारयति[13] मेघम्। बीजं वाङ्कुरात्मना[14] व्रीह्यादि। तदसौ वृष्टिप्रदानेन विदारयति। अङ्कुरोद्भेदाभिप्रायं च विदारणम्। तेन इरादारः सन्निन्द्रः। एवमुत्तरेष्वपि[15] निर्वचनेषु। इरां ददातीति वा। तदेव पूर्वपदम्। ददातेरुत्तरपदम्। वर्षद्वारेणापीरामन्नं[16] ददाति। सोऽयमिरादः सन्निरादाना-दिन्द्रः। इरां दधातीति वा। तदेव पूर्वपदम्। दधातेर्दानार्थस्य धारणार्थस्य वोत्तरपदम्। सोऽयमिराधः[17] सन्निरादानादिन्द्रः। इरां दारयत[18] इति वा। तदेव पूर्वपदम्। दारयतेरुत्तर-पदम्। सोऽयमिरादारः सन्निरां दारयितेन्द्रः। इन्दवे द्रवति। द्रवतिर्गतिकर्मा। गच्छति सोमं पातुमित्यर्थः। तस्मिन्नेवे[19] वा रमते[20] प्रियत्वान्नवेन[21] इति। इन्धे दीपयति भूतानि शरीर-मध्यवर्ती पञ्चवृत्तिः प्राणो वायुः। शरीरभूतानि तेन विनाशादात्मनो वेपयन्ति। अत इन्धनादिन्द्रः।

अधुनास्यैव धातोर्ब्राह्मणोक्तनिर्वचनं दर्शयति। तद्यदित्यादि। तदित्युपन्यासे। यदित्युद्देशः। इन्धेन एनं मध्यतो वा स्थितं शरीरे मध्यमप्राणभावेन[22] क्षेत्रज्ञसंज्ञकं प्राणैरि-

---

१–शेफस्य M.
२–'स्तुतिः' इत्यस्मात्परं 'आपराधेरिति' इति B. पुस्तके 'अपराधेति' इति च च C. पुस्तके पाठोऽधिक एव प्रतीयते।
३–[निघ० ३। १४]
४–'विशेविशे' इति त्रुटितम् B. C. अत्र 'तद्विविड्ढि' इति पदव्याख्यानमपि त्रुटितम् B. C.
५–पातितैः तुभ्यं B. C. ६–धकधकशब्द० M.
७–तां बोधयतीत्यपि पाठः C. नास्त्येवायं पाठः B.
८–यजमानो B. यजानो C. ९–भूतेन मेघः B.C.
१०–०दकधार० B. C. ११–०मपरयन्त० C.
१२–०धारामना तृणाति B.C. १३–विधारयति C.
१४–बीजं बाहुराव्रीह्यादि B. C.
१५–'पि' इति त्रुटितम् B. ष्वपि C.
१६–०णावीरा B. ०णापि रामन्दाराति C.
१७–०मिकाथः C. १८–'र' इति त्रुटितम् B. C.
१९–'व' इति त्रुटितम् B C.
२०–वानुमते B.
२१–०न्नावत B. अयं सन्दिग्धः पाठः।
२२–भावो क्षेत्र B. C.

तरैर्वागादिभिः । वदन् वाक् पश्यंश्चक्षुः श्रवणात् श्रोत्रमित्यनेकत्वोपासनाभिः[1] माहाभाग्यसम्पादनेन 'यदहं[2] वसिष्ठोऽस्मि त्वं तद्वसिष्ठोऽसि'[3] इत्यादिना समिन्धन् समदीपयन् । आत्मोपासका योगबलेन । सम्यगभिमुख्येन[4] दीपितवन्तो दीपयन्ति वा । सर्वत्रैकत्वेन जातं[5] इत्यर्थः । तच्छब्दप्रतिनिर्देशार्थो यच्छब्दः । यत्समैन्धंस्तदिन्द्रस्येति । एवं विचार्यमाणे विज्ञायते । इदमः करोतेश्चेत्याग्रायण आचार्यो मन्यते । इदं कृत्स्नं जगत् । वृष्टिप्रदानद्वारेण करोतीति[6] [अशितपीतरसपानद्वारान्धनोदिना[7] वा विजृतम्]। दृशेर्वोत्तरपदं[8] लोकपालत्वादस्य । सर्वस्य शुभाशुभकर्मणो दर्शनादेवौपमन्यवो मन्यते । इन्वतेर्वा[9] पूर्वपदम् । ईश्वर इनः[10] । 'दृ भये'[11] इत्यस्य कृदोरपि[12] दरोभयं तत्करोतीति णिच । इनश्चासौ दारयिता चेति । द्रावयतेर्वोत्तरपदम् । आदरयिता[13] वा यज्वनाम् । तस्येन्द्रस्यैषा[14] ।

[इति पञ्चदशस्या-(दशमस्या-) ध्यायस्य अष्टमः खण्डः ।[15]]

---

## [अथ नवमः खण्डः ।][15]

अदर्दरुत्समसृजो वि खानि त्वमर्णवान् बद्बधानाँ अरम्णाः ।
महान्तमिन्द्र पर्वतं वि यद्वः सृजो वि धारा अव दानवं हन् ॥[16]

गातोरार्षम्[17] । अदर्दो दारयसि । उत्सं 'उत्सं दुहन्ति स्तनयन्तम्'[18] इत्यादौ दर्शनादुत्सशब्दोऽपठितमपि मेघनाम । मेघं दारयित्वा चासृजो विसृजसि विवृणोषि[19] छान्दस-

---

१–०त्येन्येकत्वो B.C.
२–चाहं B. C.
३–[छा० उ० ५ । १ । १३]
४–स वृगाभि B. C.
५–'जात इत्यर्थः' इत्यारभ्य 'वा विजृतम्' इत्यन्तः पाठस्त्रुटितः B.
६–'इति' इति नास्ति B. C.
७-अयं पाठः सन्दिग्धः । कदाचिदत्र 'अशितपीतरसदानद्वारेन्धनादिना वापि कृतम्' इति पाठो भवेत् । इदं वाक्यं नास्ति M.
८–शर्वोत्त B. नशेर्वोत्त C.
९–इन्दुतेर्वा B. C.
१०–इनदः B. C.
११–[धा० १ । ८१०]
१२–[पा० ३ । ३ । ५७]
१३–रयिया वा C.
१४–'तस्यैषा' इत्येवं B. अतस्ये० C.
१५–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य न निर्देशो न दृश्यते ।
१६–[ऋ० ५ । ३२ । १] 'अदर्दरुत्सम्' इत्येव प्रतीकः B. C. M.
१७–गातोः क्रावम् B. गातो कावम् C.
१८–[ऋ० १ । ६४ । ६]
१९–अदृणोषि B. C.

त्वात् परो[1] विः पुरस्ताद्द्रष्टव्यः। खानि आकाशानि मेघस्य यैरुदकं निर्गच्छति[2]। उदकनिर्गमनबिलानीत्यर्थः[3]। विवृत्य च त्वमर्णवान् भूम्नि त्वयं मत्वर्थीयो द्रष्टव्यः। 'अर्णसो लोपश्च'[4] इति। अर्णे[5] उदकमवयवभूतं बहुदो येष्वस्ति ते अर्णवाः[6]। के पुनस्ते? मेघाः[7]। ते महार्णा[8] उदकसंघातास्तान्। बद्धधानान्[9] निर्गमननिरोधं कुर्वता मेघेनात्यर्थं बाध्यमानान्। अरम्णा[10] रम्णातिः संयमनकर्माऽन्यत्र 'सविता यन्त्रैः'[11] इत्यादौ। इह तु विसर्जनकर्मा विसर्जयसि क्षारयसीत्यर्थः। महान्तं हे[12] इन्द्र पर्वतं मेघम्। वीत्याख्यातेन[13] सम्बध्यते। यदिति[14] लिङ्गव्यत्ययः। यस्त्वं विवैः[15]: 'मन्त्रे घसह्वर'[16] इत्येवं लेलुकि[17] रलोकरूपम्। पूर्वेष्वपि कालेषु[18] विवृतवानसि। विवृत्य च सृजो विपूर्ववदुपसर्गः[19]। मेघाद् विसर्जितवानसि धारां[20] उदकस्य। अवेत्ययं[21] हनित्येतेन सम्बध्यते। दानवं[22] दनोः पुत्रो दानवोऽसुरो वृत्रोऽन्यो वा कश्चिन्मेघस्य रक्षिता। तं चावहन्[23] हतवानसि। अथवा[24] दानवं दातारं च[25]। उदकस्य महान्तमपि मेघं सर्वमधो हतवान्।

उत्पूर्वात् सदेः[26]। स्यन्दते[27] वा सर्वासां क्रियाणां तत्रोपपत्तेः। किं परा? बलप्रदर्शनार्था।

[ इति पञ्चदशस्या-( दशमस्या- ) ध्यायस्य नवमः खण्डः।[28] ]

---

१-परोऽपि B. परो पिः C.

२-निर्गच्छति B. C. M. 'यैरुदकानि गच्छन्ति' इति वाऽत्रपाठो भवेत्।

३-बिलानित्यर्थः C.

४-[पा० ५। २। १०९ इति सूत्रे वार्तिकम्]

५-अण् उद B.

६-अर्णकपा B.

७-मेघण् स् B. मेघः C.

८-थ (त C) महार्ण उद B. C.

९-बल्वधनान् M.

१०-ना (न B.) त्वर्थं B. C.

११-[ऋ० १०। १४९। १] मन्त्रैः B.

१२-'हे' इति त्रुटितम् B.

१३-विताख्यानेन B. C.

१४-यदि तु B.C.

१५-विवम् B.

१६-[पा० २। ४। ८०] मन्त्रौ B. मन्त्रैः C.

१७-रलाक C. संदिग्धमिदं पदम्। 'रलोप' इति स्यात्।

१८-अपूर्वेष्वकालेषु B. C.

१९-ष्ठयूपः सर्ग B. वष्टयपः सर्गम् C.

२०-धाः उद C.

२१-हन्तीत्ये B. आपेत्यर्ं हन्तीत्ये C.

२२-दानव (प C) दनोः (नो B)पुरो दानवो B.C.

२३-चापाहन् हततवान् C.

२४-'थ' इति त्रुटितम् C. 'अव' इत्येव B.

२५-'च' इति नास्ति M.

२६-सर्तेः B. सतेः C. 'सदेः' इत्यस्मात्परं B. पुस्तके 'सन्दस्य' इति C. पुस्तके च 'सन्देस्य' इत्यनर्थकः पाठोऽधिक एव।

२७-सन्देतर्वा B. C.

२८-आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते।

## [ अथ दशमः खण्डः ][1]

यो जात एव प्रथमो मनस्वान् देवो देवान् क्रतुना पर्यभूषत् ।

यस्य शुष्माद्रोदसी अभ्यसेतां नृम्णस्य मह्ना स जनास इन्द्रः ॥[2]

गृत्समदस्य[3] । गृत्समद[4] ऐन्द्रं रूपमास्थित इन्द्रोऽयमिति मन्यमानैरसुरैर्हन्यमानं[5]स्तानाह । यो[6] जात एव जातमात्र एवेत्यर्थः । प्रथमः उत्कृष्टः । मनस्वान् प्रशंसायां मतुप् मनस्वी मनस्विनां मध्ये कश्चित् प्रत्यनुपनतेन[7] शौर्योत्कर्षविशेषयोगिना मनसा तद्वान्[8] । देवो देवनादिगुणयुक्तः । देवानन्यान् क्रतुना कर्मणा वृत्रवधवृष्टिप्रदानादिना । पर्यभूषत् परिपूर्वो भवतिः परिग्रहे परिरक्षायामतिक्रमे[9] वा । केन परिगृहीतवान् परिरक्षितवान् वातिक्रान्तवान् वा माहात्म्येन । यस्य च शुष्माद् बलाद् रोदसी द्यावापृथिव्यावपि । अभ्यसेतां 'भ्यसते[10] रेजत इति भयवेपनयोः' । [ तथात्र भये धातुः[11] । ] अबिभ्रेताम्[12] । नृम्णस्य नृमनस्य तस्य बलस्य[13] । मह्ना[14] महत्वेन हेतुना । स जनासो जना[15] हे असुरजना इन्द्रः । नाहमिन्द्रः ।

दृष्टार्थस्य न्यग्भूतैर्तन्मन्त्रार्थस्य[16] वृद्ध्या देवतासतत्वस्य भावितान्तःकरणस्य प्रीतिरुत्पद्यते । तद्गुह्यतृणाख्यानसमन्वयात् । यतोऽस्मिन् सूक्ते पुनः पुनराह स जनास इन्द्र इति ।

पर्जन्यस्तृपेः । कथम् । अन्तर्नीत[17]ण्यर्थस्य क्विपि अन्ताद्यक्षर[18]विपर्ययेण । तर्पयति तृप् । ततः परो जनशब्दो हितार्थे यो[19] नामकरणः । छान्दसत्वाद् गुणरेफ[20]परत्वे तकारस्य जकारापत्तिः । तृपेर्जनशब्दस्येत्याह तर्पयिता[21] चासौ जन्यश्चेति जनाय[22] हितो जन्यः । पर शब्दस्याकारलोपे जयतेश्च[23] न्यप्रत्ययः । ईकार[24]स्याकारापत्त्या प्रकृष्टो जनः[25] । जनयिता

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते

२–[ऋ० २ । १२ । १] 'यो जात एव' इत्येव प्रतीकः B. C. M.

३–'गृत्समदस्य' इति त्रुटितम् C. M.

४–'गृत्समद' इति त्रुटितम् B. C.

५–मानांस्ता B. मानास्ता C.

६–येजत एव C.    ७–पनतो शौ B. C.

८–तत्वान् B. C.    ९–रक्षणाया B. C.

१०–[निरु० ३ । २१] अभ्यसते B. C.

११–पातुम् B. अयं कोष्ठकान्तर्गतः पाठो नास्ति M.

१२–अत्र 'अबिभीताम्' इति युक्तः पाठो भवेत् ।

१३–बहुलस्य B.    १४–मवगा C.

१५–'जनाः' इति त्रुटितम् B.

१६–०भूतैस्तन्म० B.    १७–अन्तर्णीत C.

१८–अन्तान्यक्षर C.    १९–टो B. दो C.

२०–गुणपरत्वेन B. C. M.

२१–तर्जयिता B. C.

२२–जनायाय हितं B. जनाः याः यः हितः C. 'जन्यः' नास्ति B. C.

२३–तेश्च प्रत्य B. तेश्च त्य प्रत्य C.

२४–उकारस्य B. C. M.

२५–जना B. C.

वेत्युत्तरपदधातुविकल्पः । यश्च नामकरणः । अथवा प्रेत्यस्य[1] रेफलोपेनार्जयतेश्चाकारयोः पररूपत्वेन न्यप्रत्ययः[2] । एवं तदाह प्रकर्षेणार्जयिता वा[3] संगृहीता[4] वा रसानामिति । तस्यैषा ।

[ इति पञ्चदशस्या-( दशमस्या- ) ध्यायस्य दशमः खण्डः । ][5]

---

## [ अथ एकादशः खण्डः ][5]

वि वृक्षान् हन्त्युत हन्ति रक्षसो विश्वं बिभाय भुवनं महावधात् ।
उतानागा ईषते वृष्ण्यावतो यत्पर्जन्यः स्तनयन्हन्ति दुष्कृतः ॥[6]

वि वृक्षान् विविधं हन्ति । उत[7] अपि च हन्ति[8] रक्षसो रक्षांसि । विश्वं सर्वमस्माद् बिभाय । भुवनं[9] त्रिभुवनं[10][11] भूतजातं न केवलं हन्यमानानि रक्षांसि[12] । स महावधात् महान् दृढो वधः प्रहारो यस्य तस्माद् दृढप्रहारादित्यर्थः । उतशब्दोऽपि चेत्यस्यार्थे । अनागा अनपराधोऽपि चास्माद्[13] ईषते ईषति हनतीति[14] गतिकर्मणो[15] । इह भीतिपूर्विकायां गतौ पलायने वर्तते भीतः सन् पलायते गच्छतीति[16] । वृष्ण्यावतः[17] वृष्ण्यं वर्षकर्म बलं वा तेन तद्वतः । कदैतत्[18] सर्वं भवति ? उच्यते । यत् यदा पर्जन्यः स्तनयन गर्जितलक्षणं शब्दं कुर्वन् अशनिपातैर्हन्ति दुष्कृतः पापकृतः पापकारिणः ।

बृहस्पतिः । बृहतः पाता[19] वाय्वात्मना शोषयिता भौमस्य रक्षिता वान्तरिक्षे रसस्य महतो जगतो वा । पिबतेर्वा ण्यन्तस्य । णिचि युगागमस्मरणादित्यभिप्रायः[20] । अन्यथा धात्वन्यत्वमात्रं स्यात् । तस्यैषा ।

[ इति पञ्चदशस्या- ( दशमस्या- ) ध्यायस्य एकादशः खण्डः ।][21]

---

१–प्रशस्य B. C. २–त्यप्रत्ययः B.C.M.
३–'वा' इति नास्ति B. चा C.
४–हीतसारसा B. C.
५–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।
६–[ ऋ० ५ । ८३ । २ ] 'विवृक्षान्' इत्येव प्रतीकः B.C.
७–'उत' इति त्रुटितम् B. C.
८–हन्तीति B. C.
९–विश्वतः सर्वस्मात् B. विश्वः सर्वस्मान् C.
१०–'भुवनं' इति त्रुटितम् B. C.
११–ति हुवनं C.
१२–रक्षसां स B. रक्षससे C.
१३–चास्मान् B. C.
१४–तीति चेति गति B.
१५–कर्मणः B. C.
१६–'इति' इति नास्ति C.
१७–वृषवन्तः B. वृष्ण्यवन्तः C.
१८–तदैतत् B. C. १९–परता C.
२०–णिचि लुगागमः सरणा B. C.
२१–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेर्निर्देशो न दृश्यते ।

## [ अथ द्वादशः खण्डः । ][1]

अश्नापिनद्धं मधु पर्यपश्यन् मत्स्यं न दीन उदनि क्षियन्तम् ।
निष्टज्जभार चमसं न वृक्षाद् बृहस्पतिर्विरवेणा विकृत्य[2] ॥

अयास्यस्य[3] । अश्ना 'अशूं[4] व्याप्तौ'। केन ? सामर्थ्यान्मेघेन । अपिनद्धम् । मधु उदकम् । परि सर्वतोऽपश्यत् दृष्टवान् । मत्स्यं न मत्स्यमिव यथा मत्स्यं दीने[5] क्षीणे उदनि[6] उदके। उदकस्यायमुदन्नादेशः सप्तम्येकवचने[7] । उदके क्षियन्तं निवसन्तमपश्यत् तच्च दृष्ट्वा निष्टज्जभार निर्जहार निहृतवान् ततो मेघात् । चमसं न चमसमिव यथा तक्षा वृक्षं स्थं[9] चमसं तद्वत्[8] । कोऽसौ ? बृहस्पतिः । विरवेण रवः शब्दो विविधशब्देन[10] शब्दयित्वा । केन? सामर्थ्याद् वज्रेण विकृत्य मेघम् । भाष्ये त्वित्थंभूतलक्षणा तृतीया । विविधेन रवेण शब्देनेत्थं भूतं मेघं चमन्ति भक्षयन्त्यस्मिन्निति चमसः सोमपात्रम् ।

ब्रह्मणस्पतिः । ब्रह्मणोऽन्नस्य वृष्टिप्रदानादिना[11] पाता[12] रक्षिता । धात्वन्यत्वमात्रम् । हविषो वा[13] पाता रक्षिता । तस्यैषा ।

[ इति पञ्चदशस्या- ( दशमस्या- ) ध्यायस्य द्वादशः खण्डः । ][14]

---

## [ अथ त्रयोदशः खण्डः । ][14]

अश्मास्यमवतं ब्रह्मणस्पतिर्मधुधारमभि यमोजसातृणत् ।
तमेव विश्वे पपिरे स्वर्दृशो बहु साकं सिसिचुरुत्समुद्रिणम्[15] ॥

गृत्समदस्य । अश्नोतेराङ्पूर्वस्य वा स्यन्देर्मनिन्[16]डौ भावे औणादिकौ द्रष्टव्यौ ततश्चाकारो मत्वर्थे । तदाह भाष्यकारः । अशनवन्तमास्यन्दनवन्तमिति[17] । व्याप्तारं स्थापितारं चेत्यर्थः । कम् ? वक्ष्यमाणमुत्सम्[18] । अवतं[19] अवतितमधोगतमात्मनोऽधः[20] स्थितमि-

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।
२–[ऋ० १० । ६८ । ८] 'अश्नापिनद्धम्' इत्येव प्रतीकः B. C. M. ३–अयान्यस्य C.
४–[धा० ५ । १८] अश C. आशु M.
५–'दीने' इति त्रुटितम् B. द्रि C.
६–'उदनि' इति त्रुटितम् C. ७–वचनम् B.
८–तद्वत् B.C. ९–'स्थं' इति त्रुटितम् B.C. चसमं B.
१०–'न शब्द' इति त्रुटितम् C.
११–दृष्टि B.C. १२–पान C. १३–पापानां C.
१४–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।
१५–[ऋ० २ । २४ । ४] 'अश्मास्यमवतम्' इत्येव प्रतीकः B. C. १६–मन्धो B. मन् डो C.
१७–'शन' इति त्रुटितम् B. अश्नुवन्त C.
१८–'मू' इति त्रुटितम् B. १९–अवन्तं B. C.
२०–अपातित B.C. २१–मामनोऽधःस्थितः समित्यर्थः C.

त्यर्थः । ब्रह्मणस्पतिर्मधुधारं 'कर्मण्यणं'[1] उदकस्य धारयितारम् । अभीत्ययमतृणदित्येतेन सम्बध्यते । यमोजसा[2] बलेनाभ्यतृणत् । 'तृदिर् हिंसायाम्'[3] । अभिहिंसितवान् । अभिहिनस्ति । तमेव विध्येत्[4] । के ? सामर्थ्याद्रश्मयः । पपिरे[5] पीतवन्तः पिबन्ति वा । स्वर्दृशः स्वरादित्यस्तस्य द्रष्टारः । यच्च तत्प्रवापस्योदकस्य स्वीकरणं तदेव तस्य पानमुच्यते । पीत्वा च वर्षासु बहु उदकं साकं[6] सह सिसिचुः[7] सिञ्चन्ति । उत्सं मेघम् । द्वितीयाश्रुतेः प्रतीति शेषः । उद्रिणमुदकवन्तम् । तेनैवोदकेन भावितवन्तः ।

इति निरुक्तविवरणसमुच्चये पञ्चदशस्या-[दशमस्या-][8] ध्यायस्य प्रथमः पादः[9] ।

---

## अथ द्वितीयः पादः[10] ।

क्षेत्रस्य पतिः । 'प्रविभज्य निर्ब्रूयात्'[11] इत्याह क्षेत्रम् । क्षेत्रं कस्मात् ? क्षियतेः[12] । निवसन्ति हि तेन हेतुभूतेन तत् क्षेत्रम् । तस्य पाता वा पालयिता[13] वेति[14] पतिः[15] । धात्वन्यत्वमात्रम्[16] । तस्यैषा ।

[इति पञ्चदशस्या-(दशमस्या-) ध्यायस्य चतुर्दशः खण्डः ।][17]

---

## [अथ पञ्चदशः खण्डः ।][17]

क्षेत्रस्य पतिना वयं हितेनेव जयामसि ।
गामश्वं पोषयित्न्वा स नो मृळातीदृशे ॥[18]

वामदेवस्य । परा च । आ इत्युपसर्गश्रुतेर्हरेति[19] मध्यमपुरुषैकवचनान्तं क्रिया-

---

१–[पा० ३ । २ । १] ण्यन् B. ण्यणं C.
२–य ओजसा B. C.
३–[धा० ७ । ९] ४–ते B. C.
५–'पिबन्ति' इत्यस्मात्पूर्वं 'के' [illegible]धिकः पाठ आदर्शपुस्तकेषु ।
६–'साकं' इति त्रुटितम् B. ७–सिसिषिचुः C.
८–अयं कोष्ठकान्तर्गतः पाठो नास्त्यादर्शपुस्तकेषु ।
९–'इति पञ्चदशाध्यायस्य प्रथमः पादः' इत्येवं पाठः C.
१०–अयं सर्वोऽप्यध्यायाद्यारम्भात्मकः पाठो नास्ति C
११–[निरु० २ । २] विप्रविन्त्य (ज्य C.) निर्ब्रूयात् B.C. १२–क्षियन्ते B. क्षीयन्ते C.
१३–वाता वा सालयिता C.
१४–'वेति' इति त्रुटितम् B.
१५–'पतिः' इति त्रुटितम् C. १६–यात्वन्यत्व C.
१७–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।
१८–[ऋ० ४।५७।१] 'क्षेत्रस्य पतिना वयम्' इत्येव प्रतीकः B. C.
१९–हरन्ति B. हरति C.

पदमध्याहरता भाष्यकृता युक्तमत्राध्याहरणमिति[1] प्रदर्शितम् । अतो वाक्यैकवाक्यत्वाय या क्षेत्रस्य पतिना सहानुगृह्यमाणा वेति वाक्यशेषाध्याहारः । वयं हितेनेव[2] यथा हितेन केनचिन्मित्रेण[3] कश्चित् तद्वर्जयेम[4] शत्रूनिति । किञ्च गामश्वं गोजातमश्वजातं च पोषयित्नु पोषयतेः कर्म तद्धर्मत्वे इ अं[5] च पोषणधर्मसामर्थ्यात् स्वयञ्च पुष्टमस्माकं च पोषयितृ[6] इत्यर्थः । आ हरेति शेषः । स च नो[7]ऽस्मान् । मृळाति मृडानिरुपदयाकर्मा । उपदया रक्षा । पूजाकर्मा वा । आशिषि लोडर्थे च पञ्चमः रक्षतु[8] । केन? सामर्थ्याद् बलेन स्वेन । पूजयतु[9] वा धनप्रदानेन । ईदृशे[10] ईदृशाय कामाय ईदृशं कामं प्रापयितुमित्यर्थः ।

परां[11] च वर्षकर्मश्रवणेन मध्यमत्वे[12] हेतुर्भवतीत्याह । तस्यैषापरां[13] भवति ।

[इति पञ्चदशस्या-(दशमस्या-) ध्यायस्य पञ्चदशः खण्डः । ][14]

---

## [अथ षोडशः खण्डः ।][14]

क्षेत्रस्य पते मधुमन्तमूर्मिं धेनुरिव पयो अस्मासु धुक्ष्व ।
मधुश्चुतं घृतमिव सुपूतमृतस्य नः पतयो मृळयन्तु ॥[15]

हे क्षेत्रस्य पते मधुमन्तं मधूदकं भूम्नि मतुप् बहुनोदकेन तद्वन्तम् । रसवचनो वा मधु स्वादुतमम्[16] । ऊर्मिमुदकसंघातम् । धेनुरिव[17] यथा धेनुः पयः क्षीरं धार्यते[18] तद्वदस्मासु निमित्तभूतेषु धुक्ष्व क्षारय[19] । कम् ? सामर्थ्यान्मेघम् । द्विकर्मको हि दुहिः । कीदृशम् ? मधुश्चुतं मधु स्वादु[20] स्यात् स्वादूदकस्य क्षरितारम् । कीदृशम् ? घृतमिव याज्ञे कर्मणि । सुपूतं पवित्रं निर्मलं चेति भावः । किञ्च य एते त्वदनुचरा माध्यमिका देवगणा मरुदादय ऋतस्योदकस्य पतयः पातारस्ते च नोऽस्मान्नित्यमेव मृडयन्तु सुखं ददतु सुखयन्त्वित्यर्थः ।

---

१–'युक्तमत्राध्याहरण' इति नास्ति B. C. 'मिति' इत्यपि नास्ति B. २–हितेनैव B.
३–चिन्मन्त्रेण कश्चति B. C. ४–तद्वर्जयेम C.
५–अत्रायं संदिग्धः पाठः । 'इदश्च' इति पाठो भवेत्
६–पोषणयित्र C. ७–'नः' इति त्रुटितम् C.
८–'रक्षतु' इति त्रुटितम् B.
९–प्रजयतु B.
१०–'ईदृशे' इति त्रुटितम् B. C.
११–वराय B.
१२–'मध्यमत्वेन' इति तृतीयान्तपाठः B. C.
१३ पाठा C.
१४–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।
१५–[ऋ० ४ । ५७ । २] 'क्षेत्रस्य पते' इत्येव प्रतीकः B. C.
१६–स्वादुत्तम् B. C.
१७ –'धेनुरिव' इति त्रुटितम् B.C.
१८–'धार्यते' इति क्रियापदमत्रासङ्गतम् ।
१९–कारय B. काय C. 'धारय' इति पाठो भवेत् ।
२०–स्वादुस्वादुदकस्य B. मधुस्वादस्योदकस्य C.

अतः परं मधुश्चुतं मधुमन्तमिति प्रसक्तं पुनरुक्तविचारमाचार्यमतभेदेनारभंते[1]। जामित्वं[2] च त्रिविधं दृश्यते। एकं[3] तावत् शब्दतोऽर्थतश्च 'मन्म रेजति रक्षोहा मन्म रेजति'[4] इति। प्रतिविधानासम्भवाद् यत्रेदमुच्यते 'अभ्यासे भूयांसमर्थं मन्यन्ते'[5] इति। अन्यत्तु शब्दपुनरुक्तम्। तस्य[6] तद्यमक[7]स्थानीयम्। अर्थभेदादपुनरुक्तमेव। 'अंजाश्व श्रवस्यतामंजाश्व'[8] इति यथा। आह च

तुल्यश्रुतीनां[9]...........अभिधेयैः परस्परम्।
वर्णानां यैः[10] पुनर्वादो यमकं तन्निरुच्यते[11][12]॥

इति। यत्र त्वर्थ[13]पुनरुक्तं किञ्चित्समानश्रुतिवर्णं तत्रायं विचारः। तद्यत्सामान्याना[14]मिति प्राप्ते छन्दोवत् कल्पयते[15] भाष्यकारः। एकस्या[16]मृचि समानाभिव्याहारः समानमभिव्याहरत्यर्धर्चभेदेन। यथास्यामृचि। मधुश्चुद्यो मधुमानप्यसौ भवति। न ह्यमधुश्च्योतनमवकल्पते। तज्जामी[17]त्येकं मतम्। तत्समानपाद[18]गतं च जामीत्यपरं मतम्। इतरत्रार्धर्चावसाने पदान्तरव्यवहितै[19]पूर्वपदस्मृत्यनुसन्धानार्थतया सप्रयोजनमेवेत्यपुनरुक्तम्। यत्रैकस्मिन् पादे यत्रैतदपि नास्ति स्मृतिविच्छेद इति तदेव जामीति मतान्तरम्। उदाहरणम् 'हिरण्यरूपैः'[20] इति यथा। यो हिरण्यरूपः सोऽवश्यं हिरण्यमिव सन्दृश्यते।

यथा कथा च शब्दो निपातः 'यथा कथा च हस्ताभ्याम्'[*][21] इति भिन्नप्रकृतित्वेन स्मरणात्। यथा कथञ्चिदित्यल्पो विशेषः। अजाम्यपुनरुक्तं भवतीत्यपरं दर्शनम्। एतदुक्तं भवति। प्रकृतवाक्यार्थपरिसमाप्तौ पुनः श्रुतिर्गत्यन्तराभावात् पदपूरणार्थौ[22] हि कल्प्यते। तत्र सत्यं गतौ[23] च यथा कथा चेति। नास्मात्परं दर्शनमस्तीत्यपरं भाष्यकार उदाहरणेन स्वमतं दर्शयति।

मण्डूका इवोदकान्मण्डूका उदकादिव[24]।

इति। यथाशक्ति सर्वत्र विशेषो वक्तव्य इति भावः।

---

१–रभन्ते B. C. २–जामिमित्वं B. C.
३–एतन्तावत् C. ४–[ऋ० १।१२९।६]
५–[निरु० १०।४२]
६–'तस्य' इति पदमत्र सन्दिग्धमेव।
७–मकास्थानी B. C.
८–[ऋ० १।१३८।४] स्यात्तामजात्वेति B. C.
९–तुलश्रुती B. C. १०–यैः B.
११–'त' इति द्विर्लिखितम् B.
१२–[अनुपलब्धमूलमिदं वचनम्] १३–त्वर्थः B. C.
१४–'समानायामिति प्राप्ते' इति युक्तः स्यात्।
१५–तत्र य इति B. कलय इति C. 'कल्पते' इति वा स्यात्।
१६–एतस्या B. १७–तज्जातिमित्येकमं B. तज्जामित्येकं C.
१८–मानवातगतं B. C. १९–हितः पूर्वं B. C.
२०–[ऋ० २।३५।१०]
* "तेन यथाकथा च हस्ताभ्याम्" पा० ५।१।९८।
२१–हन्ताभ्याम् B. M.
२२–णार्थौ हि B. C. २३–'सत्यामागतौ' इति युक्तः स्यात्।
२४–[ऋ० १०।१६६।५] 'मण्डूका इव' इत्येव B. C.

योगक्षेमं व आदायाहं भूयासमुत्तम आ वो मूर्धानमक्रमीम् ।
अधस्पदान्म उद्वदत मण्डूका इवोदकान्मण्डूका उदकादिव ॥[1]

ऋषभस्य । शत्रव उच्यन्ते । अलब्धलाभो योगः । लब्धस्य रक्षणं क्षेमः । योगक्षेमं च वो युष्माकं स्वभूतमादायात्मानं यत्नीकृत्येत्यर्थः[2] । अहं भूयासमुत्तमः । आकारः क्रमिन[3] सम्बध्यः । पादयोश्च पर्वतां[4] वो युष्माकं मूर्धानमक्रमीम[5] आक्रमिष्यामीत्यर्थः[6] । अधस्पदात् अधश्च पादयोर्मे पर्यः[7] प्रदेशस्तस्मात् प्रसादाकाङ्क्षया मन्मुखं निरीक्षमाणा यूयमुद्वदत ऊर्ध्वं वदत मण्डूका इवोदकात् । मण्डूका उदकादिवेति पुनरुपमानश्रुतेः साकाङ्क्षत्वात्ततो जीवतेति शेषः । यथा मण्डूका उदकाज्जीवन्ति[8]......... वन्यार्थं कुतश्चित्स्वातन्त्र्येणेति । एवमजामित्वं पूर्वयोरपि भवति । कश्चिन्मधुमान्न मधु अण्वपि[9] श्च्योतति[10] । तत्र मधुना बहुना तद्वान् । तथा हिरण्यरूपश्च न प्रियदर्शनः[11] । प्रियदर्शनश्च कश्चन न[12] हिरण्यरूप इति ।

वास्तोष्पतिः । निर्ब्रवीति वास्तुर्वसतेः 'वसेरगारे[13] णिच्च' इति । सामर्थ्याच्च वास्त्वन्तरिक्षम् । तस्य पाता अधिष्ठातृत्वेन[14] ।

[ इति पञ्चदशस्या-( दशमस्या-) ध्यायस्य षोडशः खण्डः । ][15]

---

## [ अथ सप्तदशः खण्डः । ][15]

अमीवहा वास्तोष्पते विश्वा रूपाण्याविशन् ।
सखा सुशेव एधि नः ॥[16]

वसिष्ठस्य । अमीवा हिंसिता सर्पादी रोगो वा तस्य हन्ता 'बहुलं छन्दसि[17]' इति क्विप् । हे वास्तोष्पते विश्वा सर्वाणि रूपाणि यैः सो हन्यते नकुलबिडालादिरूपैः[18] । ओषध्यादि-

---

१–[ऋ० १० । १६६ । ५]'योगक्षेमं व (च B. C.) आदायाहं' इत्येव प्रतीकः B. C.
२–कृत्वेत्यर्थः C. ३–अक्रमिना B. आक्रमिना C.
४–पवततां C. ५–मक्रमिन् B. माक्रमिन् C.
६–आक्रम्यामित्यर्थः C. ७–मयः प्रदे B. C.
८–'उदकात्' इत्यस्मात्पूर्वं B. पुस्तके 'उदकान्' इति, C. पुस्तके च 'उदका' इत्यधिकः पाठः।
९–अटवय B. अटव C.
१०–श्चोतन्ति B.
११–'प्रियदर्शनः' इति नास्ति B. C.
१२–'न' इति त्रुटितम् B. C.
१३–[उणा० १ । ७०] वसेस्तु अगारे B. वसेस्तुगारे C.
१४–निष्मातृत्वेन B. वातानिष्ठातृत्वेन C.
१५–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।
१६–[ऋ० ७ । ५५ । १] 'अमीवहा' इत्येव प्रतीकः B. C.
१७–[पा० ३ । २ । ८८]
१८–बिलानि रूपैः B. बिलाळानि रूपैः C.

रूपैर्वा तानि। आविशन् आविशमानो जहि तमित्यर्थः। सखा[2] चसुशेवः सुसुखः[3]। एधि भव[4]। नोऽस्माकम्।

अमीवाभ्यमनमिति[5] पर्यायवचनम्। शेवः[6] शिष्यतेर्वकारो नामकरणः। शिष इत्यस्य पुनरन्तस्थान्तरोपलिङ्गी। अस्य धातोरन्ते स्थितः षकारस्तस्यान्तरं स्थानं लिङ्गी एवं शीलः। षकारस्थाने वकारः प्रविशतीत्यर्थः। विभाषितगुणत्वाच्च शिवोऽपि सिद्धः। 'सर्वनिघृष्वरिष्वलष्वशिवपद्वप्रह्वेष्वाः[7]' इति निपातनाद्वैयाकरणाः। अन्तस्थशब्दः क्रियावाची न[8] यरलववाची।

विश्वरूपावेशप्रतिपादनायाह[9]। यद्यद्रूपं कामयते तत्तद्देवता[10] ऐश्वर्यवशाद् भवति। तथा च मन्त्रान्तरम्।

> रूपंरूपं मघवा बोभवीति मायाः कृण्वानस्तन्वं परि स्वाम्।
> त्रिर्यद्दिवः परि मुहूर्तमागात् स्वैर्मन्त्रैरनृतुपा ऋतावा॥[11]

विश्वामित्रस्य। यत्किञ्चित् प्राणिनो वा सर्वमिन्द्रो[12] बोभवीति[13] पुनः पुनर्भवति प्रतिपद्यत इत्यर्थः। मायाः प्रज्ञास्ताः[14] कृण्वानः कुर्वन्। यद्वा कृण्वति कृन्ततीति कृतेर्हिंसार्थस्य[15] रूपम्। माया अप्रसत्वीन्नामसुराणां[16] हिंसन्। तन्वं[17] शरीरलक्षणम्। परिः प्रतिना समानार्थः प्रतिस्वामात्मीयां[18] स्वां स्वां तनुमित्यर्थः[19]। त्रिर्यत् व्यत्ययेन नपुंसकं यः। दिवो द्युलोकात्[20]। परि मुहूर्तं[21] प्रत्येकेन मुहूर्तेनेत्यर्थः। स्वभूतां यजमानानां यागसिद्धयर्थमागात् आगच्छति। स्वैर्मन्त्रैराहूयमानः[22] स्तूयमानो वेति[23] शेषः। ऋतुकालो वसन्तादिः। अनृतावकालेपि 'यदहरेनं श्रद्धोपनमति[24]' इत्येव यदैव दीयते[25] तदैव पाता सोमस्य। ऋतावा ऋतं सत्यमुदकं यज्ञो वा तैस्तद्वानिति[26]।

---

१–मानः रूपितमित्यर्थः B. C.
२–'सखा च' इत्यारभ्य 'वकारः प्रविशतीत्यर्थः' इत्यन्तः पाठस्त्रुटितः B.
३–सुसुखसुखं C. ४–भावास्माकम् C.
५–०वाभ्यम० C. ६–वः' इति त्रुटितम् C.
७-[उणा० १। १५३] सर्वे निघृष्वलष्व(ष्व B.) शिवं ह्स्वेति B. C.
८–नयनयरलवाची B. C.
९–वेशवृत्तिवादना B.C. १०–वता यै ऐश्व B.C.
११-[ऋ० ३। ५३। ८] 'रूपंरूपम्' इत्येव प्रतीकः B. C.
१२–सर्वमिन्द्रे B. १३–बोभवतीति C.
१४–प्रज्ञास्तास्ताः C.
१५–'कृवेः [धा० १।५९९]' इति पाठो युक्तः स्यात्
१६–अयं संदिग्धः पाठः। १७–तद्वत् B. C.
१८–प्रतिस्व (स B.) मात्मी B. C.
१९–स्वा वा तद्वेत्यर्थः B. C.
२०–'लो' इति त्रुटितम् B.
२१–'मुहूर्तं' इति द्विर्लिखितम् B.
२२–स्वमन्त्रैरुहूयमानः C. २३–वेति विशेषः B.
२४–[अनुपलब्धमूलमिदं वचनम्]
२५–मीयते २६–तैस्तसा (त्वा C.) नि ति B. C.

वाचस्पतिः प्राणात्मनेन्द्रः । स हि 'तया द्वैपुरुषो वा मनाग्गन्तुं शक्नोति प्राणं तदा वाचि जुहोति' इत्येवं प्राणः । यज्ञेन[1] वाचः सम्भवात् प्राणस्य वाग्रूपतया व्यवस्थानात् प्राणो वाचः पातेति व्यपदिश्यते । तथा च 'वाग्वा[2] इन्द्रः' इति[3] श्रूयते । तस्यैषा ।

[इति पञ्चदशास्या-(दशमस्या-) ध्यायस्य सप्तदशः खण्डः । ][4]

---

## [ अथ अष्टादशः खण्डः । ][4]

पुनरेहि वाचस्पते देवेन मनसा सह ।

वसोष्पते नि रामय मय्येव तन्वं१ मम ॥[5]

कृतपाप्मा[6] अतः सम्बन्धादपगतप्राणमिवात्मानं मन्यमानः कृतनिर्णेजनः[7] सन्नाह । पुनरेवागच्छ हे वाचस्पते प्राण । देवेन[8] द्योतनात् सर्वविशेषाणां[9] द्योतयित्वा मनसा सह । हे वास्तोष्पते धनस्यान्नाख्यस्य स्वामिन् । आह[11] च 'प्राणस्यान्नमिदं सर्वम्'[12] इत्यादि । निरामय नियमेन[13] रमय त्वम् । मय्येव[14] ममान्तरेव निषीद[15] । तन्वं तनुं शरीरं मम स्वभूतं चिरं मा जीवय[16] मा शीघ्रं मिम्मरं[17] इत्यर्थः । इति निगदव्याख्याता[18] ।

अपां नपात् मध्यमः । अद्भ्य आदित्य आदित्यादयम् । अपि च[19] 'यदा वा असावादित्यो न्यङ् रश्मिभिः'[20] इत्येवमस्यादित्याज्जातत्वम्[21] । तत्र मध्यमो जात इति । एवमयं तनूनपात्रा व्याख्यातः[22] तस्यैषा ।

[ इति पञ्चदशास्या-(दशमस्या-) ध्यायस्य अष्टादशः खण्डः । ][23]

---

१—यज्ञेषणवाचा B. C.

२—[कौषी० ब्रा० २।७।१३।५॥ वागिन्द्रः शत० ब्रा० ८।७।२।६]

३—इन्द्रतिः (ति C) श्रू B. C.

४—आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।

५—cf अथर्वसंहिता १ । १ । २ मैत्रायणी संहिता ४ । १२ । १ । 'पुनरेहि' इत्येव प्रतीकः B. C.

६—कृतवास्या B.

७—'प' इति त्रुटितम् B. C.

८—कृतदीर्णजनः C.  ९—देयो न B. C.

१०—शेषयाणां C.  ११—अहं च B. अह च C.

१२—[महाभारते शांति० १५।२२] १३—मेना नामय B. C.

१४—मध्येम मन्तरे B. मध्येम मामन्तरे C.

१५—नियस्त्रीः B. C. १६—'य' इति त्रुटितम् B. C.

१७—मीमरु इत्यर्थः B. C.

१८—व्याख्यानम् B. M.

१९—'च' इति नास्ति B. C. M.

२०—[तै० सं० २।४।१०] २१—'म' इति त्रुटितम् C.

२२—पाता व्याख्याता न (न्न C.) B. C.

२३ आदर्शपुस्तकेष्वत्र खण्डसमाप्तेर्निर्देशो न दृश्यते ।

## [अथ एकोनविंशः खण्डः ।][1]

यो अनिध्मो दीदयदप्स्व १ न्तर्यं विप्रास ईळते अध्वरेषु ।
अपां नपान्मधुमतीरपो दा याभिरिन्द्रो वावृधे वीर्याय ॥[2]

कवषस्य । इन्धनैर्वर्जितो[3] दीदयत् दीप्यते । अप्स्वन्तोऽपां मेघस्थानां[4] मध्ये । यञ्च भवन्तं[5] विप्रासो मेधाविन ईळते स्तुवन्ति अध्वरेषु । यज्ञेषु स त्वं पुनर्हे अपां नपात् अपां पौत्र मधुमतीर्मधुस्वादुयुक्ता वृष्टिलक्षणा[6] अपो दा देहि । याभिर्वसतीर्वैर्यैकधाना[7] लक्षणाभिर्मिश्रिताभिः[8] सोमेन इन्द्रो वावृधे वर्धते वीर्याय वीरकर्मणे वृत्रवधादिकाय । अभिषवायेत्यर्थ-[9] प्राप्तवचनम् ।

यमो मध्यस्थानो वायुरित्युक्तम् । स च शरीरिणां[10] वाय्वादिमहाभूतात्मकत्वात् सर्वजाति प्रति प्राप्तः । सर्वजातिशरीरेषु विद्यत इत्यर्थः । अत उच्यते ।

[इति पञ्चदशस्या-(दशमस्या-) ध्यायस्य एकोनविंशः खण्डः ।][11]

---

## [ अथ विंशः खण्डः । ][11]

परेयिवांसं प्रवतो महीरनु बहुभ्यः पन्थामनुपस्पशानम् ।
वैवस्वतं संगमनं जनानां यमं राजानं हविषा दुवस्य ॥[12]

परेयिवांसं[13] पर्यागतवन्तं प्राप्तवन्तमित्यर्थः । प्रवतः । कान् प्रवतः 'उपसर्गाच्छन्दसि धात्वर्थे'[14] इत्येवं वतिस्ततो बहुवचनम् । प्रकृष्टेन गमनेन तद्वतीः प्रकृष्टगतीरित्यर्थः[15] । पुनस्ता मनुष्यजातीः । प्रदर्शनार्थं ग्रहणम् । उद्गतश्च देवजातीः । निवतश्च तिर्यग्जातीः । मही महतीः । अनुर्लक्षणे[16] कर्मप्रवचनीयः प्रतिना समानार्थः । ताः प्रति । बहुभ्यस्तादर्थ्ये [चतुर्थी][17] । निवृत्त्या च तादर्थ्यम्[18] । मशकार्थो धूम इतिवत् । अतोऽयमर्थः । बहूनां

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।
२–[ऋ० १० । ३० । ४] 'यो अनिध्मः' इत्येव प्रतीकः B. C. M.
३–इन्धवजितं C. वजितं B.
४–'मेघस्थानां' इति त्रुटितम् B.
५–भवतः B. भवतं C.  ६–दृष्टिः C.
७–सती (ति C.) पर्ये B. C. वर्येकधना M.
८–णादिमिश्रि B. मिश्रितोभिः C.
९–त्यर्थः प्राप्त B.  १०–शरीरिणा B C.M.
११–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।
१२–[ऋ० १० । १४ । १]'परोयिवांसम्'इत्येव प्रतीकः B.C
१३–परेजिवांसं M.  १४–[पा० ५ । १ । ११८]
१५–कृष्टनतिरित्य C.  १६–[पा० १ । ४ । ८३]
१७–'चतुर्थी' इति नास्ति B. C. M.
१८–दर्थ्य B. ददर्थ्य C.

प्राणिनां निवृत्त्यर्थं मरणार्थमित्यर्थः[1]। वृथा[2] जीवितलक्षणानांमेषां पन्थानमनुपस्पशानं अनु-निशब्दार्थो निबध्नन्तं निरुध्यन्तमित्यर्थः। वायुर्हि प्राणरूपः शरीरात् स्वयमुत्क्रामन्निरुणद्धि जीवितम्। वैवस्वतं विवस्वत आदित्यस्यापत्यभूतं मध्यमम्। संगमनं सम्यग्गतिं गमयितारं जनानां[3] यमं राजानमीश्वरं हविषा दुवस्य परिचर। आप्नुहि यज्ञान् हे वायो हे अन्तरात्मन् यजमानं[4] वा।

अग्निरपीत्यादिविचारोपन्यासो मन्ये* मनस्यग्न्यादिरूपोऽयमस्य मध्यमस्थानस्य व्यभिचारनिवृत्त्यर्थः। तमग्निमेता वक्ष्यमाणा ऋचः। तासु यजमानत्वाद् यमशब्देनाग्निरुच्यते प्रयच्छति स्तोतृभ्यः कामानिति।

[इति पञ्चदशस्या-(दशमस्या-) ध्यायस्य विंशः खण्डः।][5]

## [अथ एकविंशः खण्डः।][5]

सेनेव सृष्टामं दधात्यस्तुर्न दिद्युत्त्वेषप्रतीका।
यमो ह जातो यमो जनित्वं जारः कनीनां पतिर्जनीनाम्॥
तं वश्चराथा वयं वसत्यास्तं न गावो नक्षन्त इद्धम्[6]॥

पराशरस्य। सेनेव यथा सेना सेनापतिना सृष्टाऽवसृष्टाऽभ्यनुज्ञाता[7] सती यान् प्रति गच्छति तेषां भयं दधाति। एवमभिप्रज्वलितोऽग्निरपि अयं[8] अमशब्दोऽत्र भयवाची। 'न्यांवा जज्ञानः पृथिवी अमेधो' इति यथा। भयं दधाति जनयतीत्यर्थः। ............[9] स्य निर्देशात् कृत्स्नस्य जगतो रक्षसां वा। बलवाची वामशब्दः[10] बलमादधाति। अस्तुर्न दिद्युत् इदमपि भयाधानस्यैव द्वितीयमुपमानम्। दिद्युदिति वज्रनाम[11]। वज्रनामानि त्वायुधमा-म्नवचनान्येव। तेनात्र दिद्युत् शक्तिरभिमता। यथा चास्तुः क्षेपणशीलस्य स्वभूता शक्तिः शत्रौ प्रतिक्षिप्यते तथास्य भयं दधाति तद्वत्। कीदृशी शक्तिः? त्वेषप्रतीका प्रतीकं[12] दर्शन-मुच्यते 'त्विष दीप्तौ'[13] दीप्तदर्शनोज्ज्वलेत्यर्थः। भयवाची[14] वा त्वेषशब्दः। भयदर्शना भया-

---

१–'मरणार्थमित्यर्थः' इति त्रुटितम् P. ०त्यर्थः मर० M. २–पृथा C.

३–'ना' इति नास्ति B. C.

४–यजमानो वा B. *'मन्यते' इति पाठो भवेत्

५–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते।

६–[ऋ० १।६६।४-५] 'सेनेव' इत्येव प्रतीकः B. 'सेनेव सृष्टा' इति प्रतीकः C.

७–'अवसृष्टा' इति नास्ति B. ८–न्यदा B.

९-[अनुपलब्धमूलमिदं वचनम्]

१०–ज्वलवा अपशब्दः बलमाधात C.

११–'वज्रनाम' इति नास्ति B. C.

१२–प्रीतिकं C. १३–[धा० १।१०२६]

१४–भय वा विपास्वेष C.

नकेत्यर्थः । महत्ववचनो वा त्वेषशब्दो महादर्शना । यमो ह जातः युगपज्जातत्वाद्यमोऽग्निरुच्यते । केन पुनः सहाग्निर्युगपज्जातः ? इन्द्रेण । कुत एतत् ? ब्राह्मणमन्त्रनिगमात् । ब्राह्मणं तावत् 'यमो ह जातः' इन्द्रेण सह सङ्गतः । युगपदित्यर्थः । मन्त्रश्च[2] 'यमाविहेह'[3] इत्यस्य शेषः ।

वळित्था महिमा वामिन्द्राग्नी पनिष्ठ आ ।
समानो वां जनिता भ्रातरा युवं यमाविहेह मातरा ॥[4]

भरद्वाजस्य । बळित्येति द्वे अपि सत्यनामनी 'अभ्यासे भूयांसमर्थं मन्यन्ते'[5] इति । अथ भूयस्त्वेनापौनरुक्त्यम् । सत्यम्[6] । महिमा माहात्म्यम् । वां[7] युवां युवयोः । इन्द्राग्नी पनिष्ठ[8] 'पण व्यवहारे स्तुतौ च'[9] अतिशयेन स्तुत्य इत्यर्थः । आकारः[10] पूरकः समुच्चये वा 'देवेभ्यश्च पितृभ्य आ'[11] इति वत् । अर्हरपेक्षया च समुच्चयः । महत्त्वं चातिशयेन स्तुत्यं च । समानश्च[12] वां युवयोर्जनिता जनयिता आदित्यः प्रजापतिर्वा[13] । ततश्च समानपितृकत्वाद् भ्रातरौ युवाम् । न च क्रमजन्मानौ । किन्तर्हि ? यमौ युगपज्जन्मानौ । इहेह[15] मातरौ इहप्रदेशे मातरौ[16] ययोस्ताविहेह मातराविति । इहेह[17] इति च वीप्सा सन्निहिताशेषजगत्प्रदेशप्रतिनिर्देशार्था । सर्वजगत्प्रदेशमातराविति अर्थः । माता चेन्द्राग्न्योर्धाना सर्वजगत्प्रकृतित्वात् । अदितिर्वा देवमातृत्वात् । तौ चोभावपि सर्वत आत्मनः सर्वगतत्वात्, अदितिर्देवमाता अग्नेरिन्द्रेण सह[18] जायमानत्वाद्दर्शनाद्यमोऽग्निः ।

अथवा प्रयच्छति स्तोतृभ्यः कामानिति यमः । हेति विनिग्रहार्थे । यम एव जातो यम एव जनित्वं[19] कृत्यार्थे[20] व्यत्ययेन[21] कर्तरि 'कृत्यार्थे तवैकेन्केन्यत्वनः'[22] इति भविष्यति त्वन्प्रत्ययः । जात जनिष्यमाणं यत्किञ्चित्तत्सर्वमग्न्यायत्तत्वादग्निरेवेत्यर्थः । किञ्च जारः कनीनां जरयिता[23] कन्यानाम् । अग्निसन्निधौ व्यूढानां कन्यात्वं व्यावर्तते । एतदत उच्यते जारः कनीनामिति । पतिर्जनीनां जनयो भार्यास्तासां पतिः । सर्वस्योः[24] स्त्री प्रथममग्निः पश्चान्मनुष्यः । पालयितृवाची वा पालयिता च युद्धयज्ञसंयोगेनावाम् ।······तत्परत्वादग्नेः पतित्वे निगमं दर्शयति

१—[ऋ० १।६६।४]
२—'मन्त्रश्च' इति युक्तः स्यात् । ३—[ऋ० ६।५९।२]
४—[ऋ० ६।५९।२] 'बळित्था' इत्येव प्रतीकः B. 'बळित्था महिमा वां' इति प्रतीकः C.
५—[निरु० १०।४२] ६—'सत्यम्' इति द्विर्लिखितम् C.
७—वो युवां B. वा युवां C. ८—इन्द्राग्निर्वेदिष्टः C.
९—[धा० १।४४०] १०—अकारः B. C.
११—[ऋ० १०।१६।११॥नि० १।४] भ्यश्च आ B. C.
१२—इति यावत् B. C. १३—अय सन्दिग्धः पाठः ।
१४—समानश्च B. C.
१५—इहहे मातरा B. मातरा C. १६—मातरा B. C.
१७—हैहे इति B. हेहे इति C.
१८—संजाय B. संग जाय C. १९—जनितः B.
२०—कृत्यर्थे B. २१—'न' इति नास्ति B. C.
२२—[पा० ३।४।१४] २३—जनयिता B. जयिता C.
२४—अयं संदिग्धः पाठः। 'सर्वाःस्त्रीः' इति पाठो भवेत् ।

सोमः प्रथमो विविदे गन्धर्वो विविद उत्तरः ।
तृतीयो अग्निष्टे पतिस्तुरीयस्ते मनुष्यजाः ॥[1]

सूर्यायाः । वधूरुह्यमानोच्यते । प्रथमोऽनुपजातपुरुषसम्भोगेच्छावस्थां त्वां विविदे विन्नवान्[2] लब्धवान् परिगृहीतवानित्यर्थः । ततो गन्धर्वो विश्वावसुर्नाम विविदे ईषदुपजातपुरुषसम्भोगेच्छावस्थां त्वामुत्तरः[3] सोमात् । तृतीय उद्वाहकाले अग्निः । तत ऊर्ध्वमूढाया सत्या-स्तुरीयश्चतुर्थस्ते पतिर्मनुष्यजाः । यस्मात् पितृमनुष्याज्जातं[4] इति ।

'अग्निर्मह्यमथो इमाम्'[5] इति च पठन्ति । तेषामिदमुदाहरणम् ।

सोमो ददद्गन्धर्वाय गन्धर्वो ददद्ग्नये ।
रयिं च पुत्रांश्चादादग्निर्मह्यमथो इमाम् ॥[6]

सोमः प्रथमं भुक्त्वा ददत् अडभावोह्रस्वत्वे[7] लङि अददात् दत्तवान् गन्धर्वाय विश्वावसवे । स[8] चाग्नये दत्तवान् । रयिश्च पुत्रांश्चादात् दत्तवान् । अग्निरपि[9] मह्यमथो इमामग्निर्वधूम् । एवं मन्त्रदर्शनाज्जायानां भवत्येषाग्नि पतिः स परयोच्यते[10] ।

तं वेश्वराथा[11] य एवमुक्तगुणस्तं[12] व इति व्यत्ययेन त्वामिति त्वां चराथाः । चरतीति चरथः[13] पशुस्तत्प्रभवो[14] हृदयाद्यवदानाहुतिरपि[15] करणधर्मैः कार्याणामपदेशनाच्चरथेत्युच्यते । तृतीयाया आकारः । चराथा चराथया[16] वयं वसत्या वसतीति वसतिः स्थावररूपा व्रीहियवाद्योषधिः । तत्प्रभवा[17] पुरोडाशाद्याहुतिरपि[18] वसतिस्तया[19] च । तदाह भाष्यकृत् । चरन्त्या पश्वाहुत्या वसत्या निवसन्त्यौषध्याहुत्येति[20] । पश्वाहुत्या पुरोडाशाहुत्या[21] चेत्यर्थः । अस्तं न गावोऽस्तमिति गृहनाम । यथा गृहं गावो[22] व्याप्नुवन्ति उपगच्छन्ति वा तद्वत्[23] । नक्षन्ते 'इन्वति नक्षति'[24] इति व्याप्तिकर्मा । उत्तमस्थाने[25] प्रथमः । नक्षेमहि व्याप्नुयाम इत्येतदाशास्महे । अथवा 'तृक्षस्तृक्ष णक्ष गतौ'[26] शुद्धोऽपीह सोपसर्गार्थे द्रष्टव्यः । इद्धं आहवनीया-

१–[ऋ० १०।८५।४०] 'सोमः प्रथमो विविदे गन्धर्वः' इत्येव प्रतीकः B. C.
२–विन्दवान् B. M ३–त्तरे सोमात् B.
४–जातयत् B.C. ५ मधो इमा B मधो इमाम् C.
६–[ऋ० १०।८५।४१] 'सोमो ददत्' इत्येव प्रतीकः B. C.
७–अडभावः ह्रस्वत्वे B. ८–असौ चाग्न C.
९–अत्र 'अग्निः' इत्यधिकमेव भाति ।
१०–स परं याच्यते B.
११–तवेश्वराथा B. तं वश्वराथा C.
१२–मुक्तो गुणोसि तं B.C. १३–चरतः पशुत B.
१४–भवो हृद B C. १५–दानाकृतिरपि B.
१६–चरथया B.C. १७–'भ' इति त्रुटितम् B. C.
१८–शाद्या इतिरपि B. पुराधाषाशाद्या C.
१९–वसती तया B. C. २०–सत्योषध्या B. C.
२१–डाश इत्या चेत्य B.
२२–गां वा B. २३–तन्वत् B. C.
२४–[निघ० २।१८] इन्धती नक्षतीति नक्षतिव्याप्ति B. C. २५–उत्तरस्थाने B.
२६–[धा० १।६६१-६३] तृक्षतक्षणन् (B) क्ष गतौ B.C.

त्मना दीप्तं सन्तम् । भाष्ये तु इद्धमिति गृहविशेषणं भोगसमृद्धं गृहं गोभक्तादिलिङ्गम् । गावो नक्षन्ते । द्विपदा इति वाक्यभेदाभिप्रायम् ।

मित्रः कस्मात् । प्रमीतेः प्रमीतिः प्रमरणं ततः प्रमरणाद् वृष्टिद्वारेण त्रायते । संमिन्वानो द्रवतीति वा 'डुमिञ् प्रक्षेपणे' सम्यक् प्रक्षिपन् वृष्टिम् । विधिमिव सेचेते वा सम्यक् सिञ्चन् द्रवत्यन्तरिक्षे । मेदयतेर्वा स्नेहनार्थस्य सर्वमसावुदकेन स्नेहयति । तस्यैषा ।

[इति पञ्चदशस्या-(दशमस्या-) ध्यायस्य एकविंशः खण्डः ।]

---

## [अथ द्वाविंशः खण्डः ।]

मित्रो जनान्यातयति ब्रुवाणो मित्रो दाधार पृथिवीमुत द्याम् ।
मित्रः कृष्टीरनिमिषाभि चष्टे मित्राय हव्यं घृतवज्जुहोत ॥

मित्रो जनान् कर्षकजनान् यातयति 'यती प्रयत्ने' कृष्यादिकर्मसु प्रयत्नं कारयति । ब्रुवाणः शब्दं स्तनयित्नुलक्षणं कुर्वन् । मित्र एव दाधार वृष्टिप्रदानद्वारेणान्नं यागांश्च जनयन् धारयति पृथिवीं द्युलोकमपि । कृष्टयो मनुष्याः । मित्र एव मनुष्याननिनिमिषा अनिमेषेण सततमित्यर्थः । यत्नानुग्राह्यतयाऽभिचष्टे पश्यति । अत एतज्ज्ञात्वा हे ऋत्विजः पुत्रपौत्रा वा मित्रार्थे हव्यं चर्वादि हविः । घृतवत् घृतसंयुक्तं जुहुत ।

कृष्टय इति मनुष्यनाम । कर्म यतो भवतीति । 'नैव कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत्' इत्याह । कर्मवन्तो भवन्तीति विकृष्टदेहा वा विविधं कृष्टो विक्षिप्तः परिकण्डूयनाद्यभिलषितक्रियानुष्ठानसमर्थो देहो येषाम् । तेन पश्वादयस्तु न कामतः कण्डूयनादिसमर्थाः । तदपेक्षया विकृष्टदेहत्वम् । मित्रायेति व्याख्यातमिति स्वनिगदव्याख्यातमित्यर्थः ।

---

१–'नक्षन्ते द्विपदा' इत्यारभ्य 'स्नेहनार्थस्य सर्वं' इत्यन्तः पाठस्त्रुटितः B.
२–विवदा इति C.
३–प्रमितेः प्रमितः प्रमाणं ततः प्रमाणाद् C.
४–समिन्धानो C.
५–[धा० ५।४] दुमिर्ण प्रक्षे C.
६–अयं सन्दिग्धः पाठः ७–मसा उद B.
८–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।
९–[ऋ० ३।५९।१] मित्रो जनान्' इत्येव प्रतीकः B. C.
१०–कर्षनक जनान् B. C.
११–[धा० १।३०] यति प्र C. १२–यागश्च C.
१३–ष्या अनि B. ष्या मिति C.
१४–मित्रादि B. C.
१५–'घृतवत्' इति नास्ति B. C.
१६-[भ. गी. ३ । ५] मुद्रितपुस्तके '...' इत्येव पाठः ।
१७–कर्मभवन्तो B.
१८–भवतीति C.

कः कस्मात् ? कमनात्[1] । कमनो वेनामितकुगमिति[2] श्रुतेः । 'प्रजापतिरकामयत'[3] इति बहुकामत्वात् कः । क्रमणो वा[4] क्रामत्यन्तरिक्षे । यद्वा कमिति सुखनाम । अत एवाह सुखो वेति । सुखो वा वृष्टिप्रदानादिना । तस्यैषा ।

[इति पञ्चदशस्या-(दशमस्या-)ध्यायस्य द्वाविंशः खण्डः ।][5]

---

## [ अथ त्रयोविंशः खण्डः । ][5]

हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् ।

स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥[6]

हिरण्यगर्भस्य । हिरण्यश्चासौ गर्भश्चेति प्रजापतिस्तत्पुरुषः । अथवा हिरण्यं गर्भोऽस्येति बहुव्रीहिः । हिरण्यगर्भः समवर्तत संवृत्त उत्पन्न इत्यर्थः । अग्रे[7] सर्वस्मादन्यस्मात् प्रथमम् । किं कारणम् ? वृष्टेर्हिरण्यगर्भाधीनत्वात्[8] । वृष्ट्यधीनत्वाच्चान्यस्य सर्वस्य स एव प्रथममजायत[9] । स च भूतजातस्य सर्वस्य जातं[10] उत्पन्नः सन् वृष्टिप्रदानद्वारेण पतिः पालयिता । एकः एक एवासीत् । न केवलमासीदेव[11] । किन्तर्हि ? स एवेदानीमपि दधार[12] द्यावापृथिव्यौ यागांश्च जनयन् धारयति । पृथिवीमित्यन्तरिक्षनाम । द्यां द्युलोकम् । उतेमामिमां च पृथिवीं प्रत्यक्षं साभिनयमपदिशति । अत एतज्ज्ञात्वा कस्मै[13] प्रजापतये देवाय हविषा हविरिति[14] । विदधातिर्दानार्थः । हविः दद्याम[15] । चतुर्थी वा[16] द्वितीयार्थे । विदधातिः[17] परिचर्यायाम् । कं देवं हविषा परिचराम[18] ।

विग्रहप्रसक्तं गर्भशब्दं निराह सामान्येन ग्रहेः[19] । 'ग्रह उपादाने'[20] इति वा कृतसम्प्र-

---

१–क्रमनोत् B. कमनोत C.

२–क्रमणं वेनामितकृत मिति B. अयं पाठः सन्दिग्ध एव ।

३–[ता० ब्रा० ६।१।१] पतिः काम B. C.

४–क्रमेणो या ( प C. ) क्रमयत्यन्त B. C.

५–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।

६–[ऋ० १०।१२१।१] हिरण्यगर्भः' इत्येव प्रतीकम् B. C.

७–अग्रे सर्व B. C.

८–वृष्टिः (ष्टि C.) हिरण्य B. C.

९–'मजा' इति त्रुटितम् B. १०–जगत B.

११–सीदेकं तर्हि B.

१२–'दाधार' इत्यस्मात्परं 'न' इत्यधिकः B. C.

१३–तस्मै B.

१४–'प्रथमार्थे तृतीया' इत्यग्रे पाठः स्यात् । शेषो वार्यं योज्यः । ततः परं 'विधतिर्दानार्थः' इति युक्तः पाठो भवेत ।

१५–'दद्या' इति नास्ति B. C. 'ददाम' इति वा स्यात् ।

१६–या B. C. १७–वा दधतिः B. C.

१८ '०चरेम' इति वा स्यात् । १९–ग्रहणे B.C.

२०–[धा० ९।६१]

सारणस्य । ग्रहणं गर्भः । गृभेरिति गृणात्यर्थे वर्तमानस्येति वर्णव्यापत्त्या गर्भः प्रधानम् । प्राधान्यादेव च स्तुत्यो[1] गर्भः । अनर्थानामलाभहेतुः सन् । इदानीं स्त्रीगर्भं प्रति विशेषमाह । 'यदा हि स्त्री गुणान् गृह्णाति गुणाश्चास्या[2] गृह्यन्ते' नोच्यन्ते[3] । ग्रहणं मिश्रीकरणम् । आत्मना मिश्रीकरोति । गुणाश्चास्यास्त्वगादिभावविकारप्रकृतित्वेनाव-[4] स्थितो अवयवभेदोपहितभेदाः शोणितरूपाः पुरुष[5]बीजेन[6] गृह्यन्ते आत्मना मिश्रीक्रियन्ते । एतदुक्तं भवति । स्त्रीपुंसावयवभूतयो रक्तरेतसोः परस्परसंमूर्च्छनानन्तरं गर्भो भवति । गृहेरेवं[7] गर्भ इति भावः । अथवा गुणा इति प्रथमप्र[8]मोदानुरागवशाद् गुणवत्तया परस्परा-नुध्यानं गुणग्रहणमत्राभिप्रेतम् । तथा प्री[9]तिपूर्वात् तत्प्रमोदाभिगमः[10] । आह च—

यदि हि स्त्री न रोचेत[11] पुमांसं न प्रमोदयेत् ।
अप्रमोदात्पुनः पुंसः प्रजनं[12] न प्रवर्तते ॥[13] इति ।

सरस्वान् व्याख्यातः सरस्वत्या । सर इत्युदकनामेति । लिङ्गभेदः केवलम् । तस्यैषा ।

[ इति पञ्चदशस्या-( दशमस्या-) ध्यायस्य त्रयोविंशः खण्डः ][14]

---

## [ अथ चतुर्विंशः खण्डः ][14]

ये ते सरस्व ऊर्मयो मधुमन्तो घृतश्चुतः ।
तेभिर्नोऽविता भव ॥[15]

वसिष्ठस्य । छान्दसं रूपं हे सरस्व[16]न् ये ते[17] तव ऊर्मयः कल्लोलाः । उदकस्य सामर्थ्यात् । मधुमन्तः[18] स्वादुयुक्ताः[19] । घृतश्चुतः[20] घृतमिव क्षरितारः[21] । अथवा ऊर्णोते[22]रूर्मयो मेघाः । ये ते तव हे सरस्वन्[23] ऊर्मय आच्छादयितारोऽनर्थानामभावहेतवः कृत्स्नस्य नभसो मेघाः ।

---

१–स्तुरो गर्भः B. C. २–चास्य गृ B. C.
३–नोच्यते C. अत्रेदं क्रियापदं न युज्यते । निरुक्ते 'अथ गर्भो भवति' इत्येव पाठः ।
४–विकारि प्रकृतत्वे B. C.
५–अत्र 'च' इत्यधिकः B. C. ६–बणीजेन C.
७–अत्र 'ग्रहेरेव' इति स्यात्
८–थमो प्रमो C. थमः अप्रमो B.
९–तथापीति B. १०–भिगतः B.
११–नरो वेति B. १२–प्रजननं B.
१३–[मनु० ३ । ६१ ॥ महा० अनु० ४६ । ४]
१४–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।
१५–[ऋ० ७ । ९६ । ५] 'ये ते सरस्व ऊर्मयः' इत्येव प्रतीकः B. C.
१६–'न्' इति त्रुटितम् C.
१७–'ते' इति नास्ति B. C.
१८–'मन्तः' इति त्रुटितम् B. C.
१९–युक्त B. युक्तः C. २०–घृतश्च्युतं B.
२१–क्षीरतारं B. C. २२–ऊर्णाति B.
२३–सरस्वः C.

मधुमन्तो[1] मधूदकवन्तः। घृतमित्युदकनाम। उदकस्य। क्षरितारः[2]। तेभिस्तैर्नोऽस्माकमविता वर्षिता रक्षिता वा भवेति। एवं सरस्वान्[3] निगदव्याख्यातौ[4]।

इति निरुक्तविवरणसमुच्चये पञ्चदशस्य [ दशमस्याध्यायस्य[5] ] द्वितीयः पादः।

---

## अथ तृतीयः पादः।[6]

[ विश्वकर्मा सर्वस्य कर्ता। तस्यैषा भवति ][7]

विश्वकर्मा मध्यस्थानो[8] वायुर्वृष्टिद्वारेणावस्थितः शम्बरः। सर्वचेष्टानां तल्लीनत्वात्[9] सर्वस्य कर्ता। तस्यैषा।

[इति पञ्चदशस्या-(दशमस्या-) ध्यायस्य पञ्चविंशः खण्डः।][10]

---

## [अथ षड्विंशः खण्डः।][10]

विश्वकर्मा विमना आद्विहाया धाता विधाता परमोत संदृक्।

तेषामिष्टानि समिषा मदन्ति यत्रा सप्तऋषीन्पर एकमाहुः॥[11]

भौवनस्य[12] विश्वकर्मण आर्षमिदम्[13]। परे च। स हि विश्वकर्मा वृष्टिद्वारेण सर्वस्य कर्ता मध्यमः। विमना[14] विविधं भूतजातमुत्पन्नं[15] मनो यस्य सः। आत् अप्यर्थे। विहाय महन्नामेदम्। अपि च महान् धाता विधाता दधातेर्दानार्थस्य[16] रूपद्वयं दाता वृष्ट्युदकस्य विभागेन च दाता अदृष्टकारितेन[17] च। अथवा वृष्टिद्वारेणोत्पादयिता सर्वस्य। उत्पाद्य च स्थितेरप्यस्य विधाता। प्रथमैकवचनस्याकारः। परम उतापि परमश्च सन्दृक् सम्यक् प्रविभागेन[18] द्रष्टा। परस्तात् तेषामिति तच्छ्रुतेर्येषामध्याहारः। कस्यायमपदेशः? सामर्थ्याज्जनानाम्। येषां भूतानां द्रष्टा तेमिष्टानि प्रियाणि। कानि पुनस्तानि। भौमलक्षणान्युद-

---

१–'मधुमन्तः' इति नास्ति B. C. अस्याग्रे 'मधूदकं तद्वन्तः' इति वा पाठो भवेत्।

२–रक्षितार B. C. ३–सरस्वन C.

४–निगदव्याख्यातः' इति पुल्लिङ्गपाठो भवेत्।

५–अयं कोष्टकान्तर्गतः पाठो नास्ति B. C.

६–अयं सर्वोऽपि पादारम्भात्मकः पाठो नास्ति C.

७–अयं मूलपाठो नास्ति B.C. ८–स्थानेवायु B.C

९–चेष्टान्तर्लीन B. ष्टानान्तल्लीन C. 'चेष्टानां तदन्तर्लीन' इति वा पाठो भवेत्।

१०–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते।

११–[ऋ०१०।८२ २] 'विश्वकर्मा इत्येव प्रतीकः B.C

१२–भौमनस्य C. १३–मियम् C. १४–विमाः C.

१५–भूतं जातमु C. १६–ददाते B.

१७–'अदृष्टकारितेन च' इति द्विर्लिखितम् B. त्रिश्च लिखितम् C. १८–'प्र' इति नास्ति B.

कानि । अथवा इषिर्गत्यर्थोऽनुमानार्थो वा नमेर्वार्थे । तेषां सम्बन्धीनि गतान्यादित्यमण्डलम् । अनुमानानि वादित्येन । प्रह्वीभूतानि वादित्यमण्डलेऽनुप्रविष्टानीत्यर्थः । तानि समिषा मदन्ति[1] सह मोदन्ते एकीभवन्ति[2] । एकेन सुषमिषा[3] अन्नभूतेनादित्यस्य पूर्वस्थितोदकेन[4] सह । क्व ? यत्र यस्मिन्नादित्यमण्डले सप्तर्षीन् ऋषिशब्देनात्र दर्शनाद्रश्मय उच्यन्ते । प्रथमार्थे द्वितीया सप्तसंख्याका ऋषयो रश्मयः । परः परश्चाधिष्ठाता आदित्यः । तच्चैतत्सर्वमुदकमण्डलं रश्मीन् परश्चा[5]दित्यमेकमविभक्तमाहुः[6][7] । के ते ? ब्राह्मणास्तत्त्वविदः । आदित्यस्यवोदकादित्वेनावस्थानात् । तदुक्तम् । 'आत्मैवैषां रथो भवत्यात्माश्वमात्मायुधमात्मैवोत्मा[8][9] सर्वदेवस्य महिमा'[10] इति निरुक्तपक्षः ।

अथाध्यात्मं तु–विश्वकर्मा क्षेत्रं चात्मा स विमनाः । अपि च महान् व्याप्ता सर्वस्य[11] । विधाता विभागेन दाता शुभानामशुभानां च । इन्द्रियशक्तिक्षेपस्य वा । परश्च सम्यग्द्रष्टा शब्दादीनां सुखादीनां च प्रकाशयिता येषामिन्द्रियाणां तेषां वी[12] नी । कानि पुनस्तानि ? प्रकाश्यः शब्दादयः सुखादीनि च सामर्थ्यात्तानीन्द्रियाणामिष्टानीत्यादि पूर्ववद्योज्यम् । तानि इषा[13] अन्नभूतेन शरीरेण योग्येने[14]त्यभिप्रायः । अनेनैव वा सह मोदन्ते । यत्र क्षेत्रज्ञे मतिश्रो[15]त्रत्वक्चक्षुर्जिह्वाघ्राणमनांसि विद्यासप्तमानि[16] । ऋषयो[17] दर्शनात् सप्त । इन्द्रियाणि पञ्च [मनोबुद्धिश्च][18] जगतः कारणभूतः परमात्मा त्वविकारः[19] । सर्वकारणस्य[20] भावात् । क्षेत्रज्ञस्य तद्विकारत्वात् तदेकमाहुः[21] । तच्चैतत्सर्वमविभक्तमाहुर्ब्रह्मविदः । जगतः कारणत्वात् परमात्मनः शब्दादिशरीररूपेणावस्थानादित्यध्यात्मपक्षः ।

ऐतिहासिकास्तु एवमितिहासमाचक्षते । विश्वकर्मा नाम राजा[22]......देकर्षिः भुवनस्य पुत्रः । सर्वमेधे[23] सर्वमेधो नाम दशरात्रः । अग्निस्तुदिन्द्रस्तुद्वै[24]श्वदेवस्तुदित्येव-

---

१–मनन्ति C. २–भवति B.

३–सषमिषा C. अयं सन्दिग्धः पाठः । कदाचित् 'समिषा' इत्येव वा भवेत् ।

४–तोदोदकेन C. 'स्थितेनोदकेन' इति वा स्यात् ।

५–त्व ६–परश्चा B. ७–दित्य एकमपिभक्त B.C.

८–त्माश्वमा B. ९–त्मैवमात्मा B.

१०–[निरु० ७ । ५.]

११–सर्वस्या C. सर्वस्यापि धाता B.

१२–अयं सन्दिग्धः पाठः। अत्र कश्चन भागस्त्रुटितः

१३–उषा B. C.

१४–'ने' इति नास्ति B. C. 'भोग्येन' इति वा स्यात्

१५–मतिः श्रोत्र B. मतिरत्र बुद्धिः ।

१६–अयं सन्दिग्धः पाठः । कदाचिदत्र 'मनांसि हे तानि सप्त तानि ऋषयः' इति पाठः स्यात् ।

१७–यो दर्शया दर्शनात् B. C.

१८–'मनो बुद्धिश्च' इति नास्ति B. C.

१९–स्त्वविकारे B. C.

२०–कारणस्याभावात् B. करणस्य भावात् C.

२१–तदेव मातुः B. तदेवमाहुः C.

२२–अत्र 'आसी' इति त्रुटितं स्यात् ।

२३–'सर्वमेधे' इति त्रुटितम् B.

२४–स्तुद्वैश्च देव B,

मादिरूपः। तस्याप्तोर्यामः सप्तममहर्भवति । तस्मिन् सप्तमेऽहनि 'सर्वस्याप्त्यै सर्वस्या वरुद्ध्यै' इति वचनात् सर्वाणि भूतानि जुहवाञ्चकार । सर्वशब्देन चात्मनोऽपि ग्रहणात् तस्यापि होतव्यत्वात् शरीरान्तरमन्तरेण होतुमशक्तेर्योगैश्वर्यबलाच्च योगिनां युगपच्छरीरग्रहणस्य सम्भवात् योगित्वाच्च तुल्यरूपौ द्वावात्मानौ कृत्वा एकेन परमात्मानमन्ततो जुहवाञ्चकारेति। तत्रैवमृग्व्याख्येया।

विश्वकर्मा राजर्षिर्विभूतमना इत्यादिगुणकः । येषां भूतानां स द्रष्टा ! इष्टानि यजेरयं करणे क्तप्रत्ययश्छान्दसत्वात् । इज्यते एभिरितीष्टानि यागसाधनानि सर्वमेधे यान्याम्नातानीत्यर्थः। तान्यनेनामृताख्येन संमोदन्ते । यत्र सप्त ऋषयः परश्चोत्कृष्टः सर्वस्मादादित्यः। तत्र हि सप्तर्षय आदित्यश्च । कथं पुनस्तानि तत्र संमोदन्ते ? द्यौः स्वर्गः पशुश्च यो यज्ञे मार्यते स स्वर्गं गच्छति एवं हि श्रूयते 'पशुर्वै नीयमानः सन्मृत्युं प्रापश्यत् तं देवा अब्रुवन्नेहि स्वर्गं वै त्वा लोकं गमयिष्याम:' इति। तथा च मन्त्रवर्णः। 'न वा उ एतन्म्रियते' इत्यादि। तच्चैतत्सर्वमविभक्तमाहुः। जगत्कारणभूतस्य परमात्मनः सर्वेणानेन रूपेणावस्थानादिति।

तदभिवादिनी तस्य चेतिहासस्याभिवादिनीयमृग् भवति।

य इमा विश्वा भुवनानि जुह्वदृषिर्होता न्यसीदत् पिता नः।
स आशिषा द्रविणमिच्छमानः प्रथमच्छदवराँ आ विवेश ॥[16]

सर्वमेधे इमानि सर्वाणि भूतजनानि जुह्वत् यथाशास्त्रमग्नौ प्रक्षिपन् । ऋषी राजर्षिर्विश्वकर्मा नाम मदीयोऽन्तरात्मा होता प्रयोजकत्वादाह्वानाच्च देवानाम्। न्यसीदत् निषण्णो वेद्याम्। पिता नो धर्माधर्मोत्पादनद्वारेण शरीरस्य जनकत्वात् पिता पालयिता वास्माकम्। स आशिषा मनसाऽभिलषितार्थप्रार्थना आशीस्तया आशिषा द्रविणं धनं सर्वमेधस्य यत्फलं तदिच्छन् 'यथैवैतद्यजमानः सर्वमेधे सर्वान्मेधान् हुत्वा सर्वा (?) सर्वेषां भूतानां श्रैष्ठ्यं

१-[शा० श्रौ० १६। १५। १२]
२-सर्वव्याप्त्यैव B. C.
३-[अनुपलब्धमूलमिदं वचनम्]
४-'च' इति नास्ति B.
५-तरमा C.
६-'हृ' इति त्रुटितम् C.
७-तत्रैवेयमृग् C.
८-विभूनमना B. विभुहमना C.
९-'द्रष्टा' इति त्रुटितम् B. C.
१०-सर्वोदन्ते B. C.
११-श्रूयन्ते C.
१२-स मृत्यून् B सम्मृत्युत् C.
१३-स देवा अब्रु (ब्रू C.) वन्नेदि B. C.
१४-[ऐ० ब्रा० २। ६] गमिष्यामः C.
१५-वे (पि C.) तन्म्रि (तम्रि B.) यसे B. C.
१६-[ऋ० १०। ८१। १] 'य इमा विश्वा' इत्येव प्रतीकः B. C.
१७-अथर्वमेधे B. धर्वमेधे C.
१८-देवना B. C.
१९-वितानो B. C.
२०-जगतत्वात् B. C.
२१-'सर्वा' इति पदमत्राधिकम्

साम्राज्यमाधिपत्यं पर्येति' इत्येवमादि तत्फलमत्र धनमभिप्रेतम् । तदिच्छमानो व्यत्ययेनात्मनेपदम् । इच्छन् । प्रथमच्छत् प्रथममुत्कृष्टं छादयिता स्तुतिभिर्हविर्भिश्च देवानां व्याप्तेत्यर्थः । अवरान् योऽवर्गिवर्तिनो माहात्म्येन विश्वकर्माणमप्राप्ता विश्वकर्मणः सकाशान्माहात्म्येन न्यूना इत्यर्थः । के ते ? अन्ये सर्वे प्राणिनः । तानाविवेश । आवेशो व्याप्तिः । आधिपत्येन व्याप्तवानित्यर्थः ।

तस्योत्तरा भूयसे निर्वचनाय । सुतरां निश्चयाभिधानाय ।

[ इति पञ्चदशस्या-( दशमस्या-) ध्यायस्य षड्विंशः खण्डः । ]

---

## [ अथ सप्तविंश खण्डः । ]

विश्वकर्मन् हविषा वावृधानः स्वयं यजस्व पृथिवीमुत द्याम् ।

मुह्यन्त्वन्ये अभितो जनास इहास्माकं मघवा सूरिरस्तु ॥

हे विश्वकर्मन् मदीयन्तरात्मन् हविषानेन सर्वमेधिकेन वावृधानो वर्धमानो हविर्वृद्ध्या वर्धमान इत्यर्थः । स्वयं यजस्व पृथिवीमुत द्यां च तात्स्थ्यात्ताच्छब्द्यं पृथिवीस्थां द्युस्थां च देवताम् । यावती काचिद्देवता क्वचित्तां सर्वामित्यर्थः । मुह्यन्त्वन्ये मुह्यन्तु चान्ये । अभित उभयतः । यागतः स्तुतितश्च । मा यागं कर्तुं ज्ञासिषुः । मा च स्तोतुमित्यर्थः । के ? जनासो जनाः परिपन्थिमनुष्याः । इहास्माकमस्मिन् कर्मणि अस्माकं स्वभूतोऽन्तरात्मा मघवा हविर्लक्षणेन धनेन धनवान् । सूरिः स्तोतृनाम । स्तोता देवानाम् ।

अथवाऽनयो ऋचोरधिदैवतमध्यात्मं चोच्यतेऽर्थः । अधिदैवतं तावत्पूर्वस्या ऋचोऽर्थः ।

य इमा विश्वा यो विश्वकर्मा मध्यम इमानि सर्वाणि भुवनानि । भुवनमित्युदकनाम

---

१–[अनुपलब्धमूलमिदं वचनम्]

२–'प्रथमच्छत्' इति त्रुटितम् B. C.

३–प्रथममुद्दिष्टान् कृष्ट घाद B. प्रथम उत्कृष्टच्छान्द C. ४–०र्वान् वृत्तिनः

५–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।

६–[ऋ० १०।८१।६] 'विश्वकर्मन् हविषा वावृधानः' इत्येव प्रतीकः B. C.

७–'हे विश्व' इत्यारभ्य'सर्वमेधिकेन' इत्यन्तः पाठस्त्रुटितः B. 'सार्वमेधिकेन' इति युक्तः पाठः ।

८–हविषा वृद्धया B.

९–घृधा (था C.) स्थां च देवान् B. C.

१०–यावति C. ११–त्ताः सर्वा C.

१२–यागतर ('र' नास्ति C.) स्तुतिश्च B. C. 'यागतः स्तुतेश्च' इति वा स्यात् ।

१३–ज्ञासिष्ठ B. १४–स्तोत्रं B. स्तोतन C.

१५–अथवा योन्म (ऋ० C.) चो परिदैवतमध्यात्मस्य ( स्च C. ) तोऽथः B. C.

उदकानि वृष्टिलक्षणानि जुह्वत् प्रक्षिपन्। ऋषिर्द्रष्टा लोकपालत्वात् कृताकृतस्य लक्षणं[1]:। होता आह्वाता मेघानाम्[2]। आह्वातव्यो वा। न्यसीदत्[3] निषण्णोऽन्तरिक्षे। पिता पितृस्थानीयः पालयिता वा नोऽस्माकम्। स आशिषा जनस्य प्रार्थनया[4] द्रविण सस्यलक्षणं धनमिच्छन्। प्रथमच्छत् उत्कृष्टं छादयित्वा मेघैरन्तरिक्षस्योदकैर्वा भूमेः। अवरान्[5] वृष्टिस्थानादर्वाग्वर्तिनः प्रदेशानन्तरिक्षदेशांश्च। आविवेश वृष्ट्या व्याप्तवानित्यर्थः।

उत्तरस्या अप्यधिदैवतम्।

विश्वकर्मन् हविषा[6] वावृधानः। हे[7] विश्वकर्मन् हविषाऽनेनास्मत्प्रत्तेन उदकनामा[8] हविःशब्दो वृष्टिलक्षणेनोदकेन। वावृधानो वर्धमानस्त्वम्। स्वयं यजस्व पृथिवीमुत द्याम्। द्वितीया चतुर्थ्यर्थे। यजिर्दानार्थः। दिवे च पृथिव्यै च वृष्टिलक्षणमुदकं देहि। अन्तर्नीत[9]ण्यर्थो वा यजिः। द्यावापृथिवीभ्याश्च तत्सुखलक्षणं[10]वृष्टिप्रदानद्वारेण स्वयं[11] याजय पृथिवीस्थान् द्युस्थांश्च यष्टॄन्। यावान् कश्चिद्यष्टा तं सर्वमित्यर्थः। मुह्यन्तु चान्ये। अभित उभयतः। यागतः स्तुतितश्च[12] मा यष्टुं[13] मा च स्तोतुं शासिषुरित्यर्थः। जनासो जनाः मनुष्याः[14] सपत्नभूताः[15]। इह कर्मण्यस्माकं स्वभूतोऽन्तरात्मा यजमानो मघवा[16] हविर्लक्षणेन धनवान् नित्यं सूरिस्तव स्तोता अस्तु।

अध्यात्ममपि पूर्वस्या अर्थः।

प्रलयकाले विश्वकर्माणि जगतः प्रलये सृष्टिकाले च तत एव पुनः सृष्टिरित्येतदुच्यते। यो विश्वकर्मा क्षेत्रज्ञः प्रलयकाले इमानि सर्वाणि[17] भूतजातानि प्रक्षिपन्। क्व? आत्मनि। कुत एतत्? 'ब्रह्म वै स्वयम्भू तपोऽतप्यत तदैक्षत न वै तपस्यान[18]न्त्यमस्ति हन्ताहं भूतेष्वात्मानं जुहवानि भूतानि चात्मनि'[19] इति श्रुतेः सर्वभूतान्यात्मनि प्रलयं नयन्नित्यर्थः[20]। ऋषि[21]र्द्रष्टा विश्वस्य। होता चात्मनि सर्वभूतानि[22]। न्यसीदत् निषण्णः प्रलीन आत्मनापि

---

१—लक्षणं C. अत्र 'कृताकृतलक्षणस्य' इति पाठो युक्तः स्यात्। कृताकृतलक्षणस्य द्रष्टा इत्यन्वयः

२—मेतानाम् B. C. ३—निषीदन् B. C.

४—'न' इति त्रुटितम् C.

५—अपरान् B. ६—'हविषा' इति त्रुटितम् B. C

७—ते विश्वकर्म हवि B. C. ८—कनाममाह C.

९—'अन्तर्नीत' इति त्रुटितम्। अग्रे 'न्यर्थो' इति पाठः B. C.

१०—क्षणं वृष्टि B. क्षणावृष्टि C.

११—स्व याजय B. C.

१२—स्तुतिश्च B. C. 'स्तुतेश्च' इति वा स्यात्।

१३—'मा' इति नास्ति। अग्रे च 'यष्टुर्मा' इति पाठः B. C.

१४—'मनुष्याः' इति नास्ति B. १५—सप्त अभूता C.

१६—'मघ' इति त्रुटितम् B. C.

१७—'सर्वाणि' इति द्विर्लिखितम् C.

१८—०नन्यमस्मि B. C.।

१९—[शत० ब्रा० १३।७।१। १ A fragment is also quoted by Durga]

२०—नयन्तीत्यर्थः B.

२१—'ऋषिर्द्र' इति त्रुटितम् B. C.

२२—'नि' इति त्रुटितम् B. C.

प्राणिनः[1] कारणात्मनावस्थित[2] इत्यर्थः । पिता उत्पादयिता नोऽस्माकम् । स आशिषा आशीः-शब्देनात्राशीःफलत्वादतीतायां सृष्टौ यत्कृतं कर्मानुपभुक्तफलं तदुच्यते । हेतौ तृतीया । तेन[3] हेतुना । फलभोगार्थमित्यर्थः । द्रविणं धनं पुनः सृष्टिरूपमिच्छन् । उत्कृष्ट छादयिता[4] सर्वस्य ! विकारैरवरान्[5] अर्वाग्वर्तिनः[6] । वर्तमानायां सृष्टौ येऽपिहितास्तानित्यर्थः[7] । आविवेश स्वत उत्पादनेन[8] व्याप्तवानित्यर्थः ।

यद्यपि प्रलयकाले परमात्मा सर्वभूतान्यात्मनि प्रलयं नयति । क्षेत्रज्ञं च सृष्टिकाल एव स्वत उत्पादयति । स[9] क्षेत्रज्ञः । तथापि परमात्मविकारत्वात् क्षेत्रज्ञस्य तत्प्रकृतिभूतः परमात्मा यत्करोति तदत्र स एव करोतीत्युच्यते । उक्तं च 'अपि च सत्त्वानां प्रकृतिभूमभिर्ऋषयः[10] स्तुवन्तीत्याहुः[11]' इति । एवमनया तावत् प्रलयकाले विश्वकर्मणि जगतः प्रलयः सृष्टिकाले चैव पुनः सृष्टिरित्येवमुच्यते ।

हे विश्वकर्मन् क्षेत्रज्ञ हविषा वावृधानः[12] । हविःसम्बन्धायागैः[13] कर्मोच्यते । तच्च प्रदर्शनार्थं वृद्धिरपि सामर्थ्यवृद्धिरभिप्रेता न रूपवृद्धिः । अयमर्थः । हविःसम्बन्धयागदानप्रभृतिना ऽतीतसृष्टौ[14] कृतेनानुपभुक्तफलेन स्वफलोपभोगार्थमाविर्भूतसृष्टिसामर्थ्यम् । स्वं यजस्वेति यजिः[15] करणार्थः । 'यज देवपूजासङ्गतिकरणदानेषु[16]' इति । तदयमर्थः । स्वयं कुरूत्पादयेत्यर्थः । यद्यपि परमात्मोत्पादयति न क्षेत्रज्ञः । तथापि प्रकृतिभूतत्वेद विकारस्य पूर्ववद्वचनम् । किं तदुत्पादयामीति चेत् । उच्यते[17] । पृथिवीमुत द्यां द्वयञ्च । मुह्यन्त्वन्ये अभित उभयतः स्वतः परतश्च । मा त्वां स्वयं ज्ञासिषुः[18] । मा चैनान् पर आचार्यादिः कश्चिदजिज्ञपदित्यर्थः । [जनासो[19]] जनाः मनुष्याः सपत्नभूता अस्माकम् । क्व मुह्यन्त्वित्याह । इह त्वन्माहात्म्ये । अस्माकं तु स्वभूतोऽयमन्तरात्मा मघवा योऽन्नेन धनेन धनवान् । अस्य त्वन्माहात्म्यस्य सूरि-रि[20]ति स्तोतृनाम स्तुत्या चात्र सम्बन्धात् प्रज्ञा लक्ष्यते प्रज्ञाता अस्तु ।

---

१–भूतजातस्येत्यर्थः । २–नावास्थित B.
३–'न' इति त्रुटितम् C.
४–जादयिता B. च्छान्दयिता C. उत्कृष्टमित्यस्यो-त्कर्षमित्यर्थः ।
५–रवतात् B. C.
६–अर्वावर्तिनः B. 'अर्वाग्वर्तिनः' इत्यारभ्य 'विकारत्वात् क्षेत्रज्ञस्य तत्' इत्यन्तः पाठस्त्रुटितः C.
७–येऽवि तास्तानि B. योपि तांस्तानि C.
८–'न' नास्ति B. C. ९–'न' B. C.
१०–प्रमृतभूमि (त B.) ऋषयः B. C.
११–[निरु० ७ । ४]
१२–वा प्रधानः M.
१३–योगकर्मो B. C. १४–त हृष्टौ C.
१५–यजकरणा B. C
१६–[धा० १ । १० २७] पूजासहतकरणदानेषु C
१७–'उच्यते' इति त्रुटितम् B.
१८–स्वय ज्ञासिष्ठ B.
१९–जातासो C. 'जनासः' नास्ति M.
२०–'रि' इति त्रुटितम् C.

अत्रोपन्यस्तयोः को विशेषः ? उच्यते । परमात्मा विज्ञानसतत्वमात्रं विज्ञानवतः विशेषविज्ञानप्रसवबीजमिष्यते । क्षेत्रज्ञास्तु तदंशाः[1] प्रच्युता वसन्तोऽविद्याव्यवधानाद्-[2]प्रतीयन्तः प्रतिशरीरं शास्त्रेण तादूभाव्यायानुशिष्यन्ते । एवं च परमात्मनः क्षेत्रज्ञस्य [3]कारणाभावः सर्वोपनिषत्सु गीतासु च गीयते ।

ताक्ष्यो वक्तव्यः । स पुनस्त्वष्ट्रा समनिर्वचनत्वात् तूर्णमश्नुते इत्यादिना [ त्वष्ट्रा[4,5] ] व्याख्यातः । अथर्वा[6] तीर्णेऽन्तरिक्षे क्षियति निवसति । तूर्णमर्थं क्षरतीति वा । तूर्णं वार्थमुदकाख्यं क्षरति[7] । अश्नोतेर्वा[8] तूर्णमर्थमित्यनुषङ्गः[9] । तूर्णशब्दात् पूर्वपदम् । रक्षतेरश्नोतेर्वोत्तरपद-[10]मित्यर्थः । तस्यैषा ।

[इति पञ्चदशस्या-(दशमस्या-) ध्यायस्य सप्तविंशः खण्डः ।][11]

---

## [अथ अष्टाविंशः खण्डः ।][11]

त्यमू षु वाजिनं देवजूतं सहावानं तरुतारं रथानाम् ।
अरिष्टनेमिं पृतनाजमाशुं स्वस्तये ताक्ष्र्यमिहा हुवेम ॥[12]

अरिष्टनेमेरार्षम् । तच्छ्रुतेर्यद्ध्याहार । यमन्येऽपि सर्वे ह्वयन्ति[13] त्यं तम् । उ इत्यनर्थकं वचनम्[14] । सु वाजिनं हविर्लक्षणेन वाजेनान्नेन वोदकजन्येन वा सुष्ठु तद्वन्तम् । देवजूतं जव-[15]तिर्गतौ प्रीतौ वा देवैर्मरुदादिभिर्गतं प्रीतं वा । सहावानं[16] सहो बलं सहस्वन्तमित्यर्थः । तरुतारं तारयितारं गमयितारमित्यर्थः । कान् ? मेघान् प्रति शत्रून् वा । रथानामात्मीयानाम् । अरिष्टनेमिं नेमिरिति वज्रनाम । अरिष्टोऽहिंसितो नेमिर्वज्रो यस्य तमहिंसितवज्रमित्यर्थः । पृतनाजं 'अन्येभ्योऽपि दृश्यन्ते' इत्येवं जयतेर्डप्रत्ययो न जनेः[17,18] । पृतनानां संग्रामाणां जेतारम् । आशुं शीघ्रम् । स्वस्तयेऽविनाशायात्मनः । ताक्ष्र्यं मध्यमस्थानम् । इह हुवेम नित्यमेवं[19] हुवे-मेत्याशास्महे ।

---

१—क्षेत्रज्ञपरमात्मनोः' इत्यर्थः ।

२—दन्यत्वप्रतीयतः B. C.

३—'कार्यकारणभावः' इति वा पाठो भवेत् ।

४—[निरु० ८ । १३] ५—'त्वष्ट्रा' नास्ति M.

६—अथवास्तीर्णे C. M. ७—रचते C.

८—अश्नुते वा M. ९—मित्यौषङ्गः C.

१०—क्षरतेर्वो B. C. 'अश्नोतेः' त्रुटितम B. C.

११—आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।

१२—[ऋ० १० । १७८ । १] 'त्यमू षु वाजिनम्' इत्येव प्रतीकः B.C.M. १३—ह्वयन्ति B. ह्वयनि C.

१४—नर्थके B. C. 'वचनं' इति त्रुटितम् B. C.

१५—जयति C. १६—सभावानं C.

१७—[ पा० ३ । २ । १७८ ॥ ३ । ३ । १३० ]

१८—जयते B. जयतेड् प्र C. जवतेर्ड प्रत्य M.

१९—'एव' इति नास्ति B. C. 'वे' इति त्रुटितम् C.

पृतनाजमित्यस्य पृतना वर्तमानेक्किबन्तप्रदर्शनम् । जयतेः केवलं क्किपि पृतनाजितम् । सोऽयं तार्क्ष्यसाधारणशब्दत्वाद् गरुत्मता सन्दिह्यते । तद्व्युत्पत्त्यर्थमाह । कमन्यं मध्यमादेवमवक्ष्यदिति । बलकृतिः प्रकाशिता । वर्षकर्म प्रदर्शनीयमिति । तस्यैषापरा ।

[ इति पञ्चदशस्या-( दशमस्या-) ध्यायस्य अष्टाविंशः खण्डः ]

---

## [अथ एकोनत्रिंशः खण्डः ।]

सद्यश्चिद्यः शवसा पञ्च कृष्टीः सूर्य इव ज्योतिषापस्ततान ।

सहस्रसाः शतसा अस्य रंहिर्न स्मा वरन्ते युवतिं न शर्याम् ॥

अरिष्टनेमेरार्षम् । सद्यः समानेऽहनि समानेनाह्ना वर्तमानकालो लक्ष्यते चिदप्यर्थे । सद्योऽपि वर्तमानकाले न पुरैव केवलमित्यर्थः । यः शवसा बलेन पञ्च कृष्टीः जात्यपेक्षः स्त्रीलिङ्गनिर्देशः पञ्च मनुष्यजातीः प्रतीति शेषः । निषादपञ्चमान् वर्णान् प्रतीत्यर्थः । सूर्य इव ज्योतिषा द्वितीयार्थे तृतीया । यथा सूर्यस्य [यज्]ज्योतिः सर्वत्र तनुयात् तद्वत् । अपो वृष्टिलक्षणा अपस्ततान तनोति । यच्छ्रुतेस्तदध्याहारः । तस्यास्य सहस्रसाः शतसाः सहस्रशतयोरुपपदयोः' जनसनखनक्रमगमो विट्' । 'विड्वनोरनुनासिकस्यात्' इत्यात्वम् । सहस्रसंख्यानां शतसंख्यानां च मेघानां संभक्त्री । काऽसौ ? रंहिः रंहतेर्गतिकर्मणो रंहितिः । न स्मा वरन्ते सांहितिकं दीर्घत्वं न चैनं वारयन्ति स्म । न च केचिद्वारयितु शक्नुवन्तीत्यर्थः । युवतिं न 'यु मिश्रणे' मिश्रयन्तीमिवात्मानम् । केन ? सामर्थ्याच्छत्रुशरीरैः ।

---

१–पृतनो B.
२–मानमागजिनमिति क्वि B. मानमातगजिनमिति क्वि C.
३–जयन्ते के C. यजतेः M.
४–सन्दीप्यते B. C. सन्निह्यते M.
५–तद्युद्वृत्य C. तद्युद्धृत्य M.
६–तस्यैवा वरा C.
७–आदर्शपुस्तकेऽत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।
८–[ऋ० १० । १७८ । ३] 'सद्यश्चिद्यः' इत्येव प्रतीकः B. M. 'सद्यश्चिद्यः शवसा पञ्च कृष्टीः' इत्येव प्रतीकः C.
९–वपु वै C. खलु वै B.
१०–सूर्य इत B. सूर्यमिव C.
११–अत्र 'सूर्यः स्वज्योतिः' इति 'सूर्यः स्वयं ज्योतिः' इति 'सूर्यः स्वां ज्योतिः' इति वा पाठो युक्तो भवेत् । 'यत्' इति नास्ति M.
१२–तनुयत B.  १३-'स्य' इति त्रुटितम् C.
१४–'शतसाः' इति त्रुटितम् B. C. M.
१५-सहस्रोरुपदयोः B. सहस्रशततोरुपदयोः C.
१६–[पा० ३ । २ । ६७] १७–[पा० ६ । ४ । ४१]
१८–संख्याकानां M.
१९–'शतसंख्यानां' इति त्रुटितम् B.
२०–ईहतिः न स्या परान्ते C. २१–[धा० २।२३

कामं[1] ? शर्या धनुक्षता क्षिप्तां शत्रुशरीरेषु प्रविशन्तीं शरविकारभूतामिषुम् । निर्वचनं निगमं[2]व्याख्यानम् । सूर्य इव ज्योतिषा त्रैलोक्यमिति भाष्यकाराभिप्रायः ।

मन्युः कस्मात् ? मन्यतेर्धातोर्दीप्त्यर्थस्य । क्रोधार्थस्य[3] वा । तस्यैषा ।

[ इति पञ्चदशस्या-( दशमस्या- ) ध्यायस्य एकोनत्रिंशः खण्डः । ][4]

---

## [ अथ त्रिंशः खण्डः । ][4]

त्वया मन्यो सरथमारुजन्तो हर्षमाणासो धृषिता मरुत्वः ।
तिग्मेषव आयुधा संशिशाना अभि प्र यन्तु नरो अग्निरूपाः ॥[5]

तपसः पुत्रो मन्युस्तस्यार्षम् । त्वया हे मन्यो सरथं समानं रथमेकं द्वितीयाश्रुतेरारुह्येति शेषः । त्वदनुग्रहादारुजन्तः......[6]यन्तः । कान् ? शत्रून् । तद्दर्शनाच्च[7] हर्षमाणासो हृष्यन्तः । धृषिताः कर्तरि क्तप्रत्ययः । धर्षितारोऽभिभवितार इत्यर्थः । शत्रूणां बलम् । हे मरुत्वः मरुत्वानिन्द्रस्तस्य सम्बोधनम् । तिग्मेषवस्तिग्मास्तीक्ष्णा इषवो येषां ते । आयुधा आयुधानि खड्गादीनि । संशिशानाः सम्यक् क्लिश्यन्तः[9] । अभिप्रयन्तु प्रकर्षेण गच्छन्तु शत्रून् । नरो मनुष्या अस्मदीया योद्धारः । अग्निरूपाः[10] अग्निसदृशाः सादृश्यं च कर्मणां निर्मूलविनाशनेन[11] दीप्तरूपत्वेन वा । यथाग्निर्भस्मसात्करणान्निर्मूलं विनाशयति तद्वत्[12] । यथा चाग्निर्दीप्तरूपस्तद्वत् । उज्ज्वलैः सन्नहनैः कवचैश्च सन्नद्धा[13] इव दीप्तरूपा इत्यर्थः ।

दधिक्रा व्याख्यातः 'दधत् क्रामति'[14] इत्यादिना । तन्मध्यगतमपि[15] योज्यम् । 'तद्यत्[16] देवतावत्' इति यदुक्तं तस्यावसरः । तस्यैषा ।

[ इति पञ्चदशस्या-( दशमस्या- ) ध्यायस्य त्रिंशः खण्डः । ][17]

---

१—कामशय्या B. C.
२—निगमन C. 'निगद' इति युक्तः स्यात् ।
३—स्यातोधार्थ C.
४—आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।
५—[ऋ० १० । ८४ । १] 'त्वया मन्यो' इत्येव प्रतीकः B. C.
६—अत्र कदाचित् 'अभिवन्तः' इति पाठो भवेत् ।
७—तद्भमाच C. 'तद्भमाश्च' B.
८—मूले 'अधृषिताः' इति पाठो वर्तते ।
९—सम्यक्लिषश्यन्तः C.
१०—'अग्निरूपाः' इति त्रुटितम् B. C.
११—नाशन्देन C.
१२—'वत्' इति त्रुटितम् B.
१३—द्धाश्चादीप्त C. १४—[निरु० २ । २७]
१५—मवीयोज्यं C. १६—[निरु० २।२७] तद्वत् B.
१७—आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।

## [अथ एकत्रिंशः खण्डः ।][1]

आ दधिक्रा शवसा पञ्च कृष्टीः सूर्य इव ज्योतिषापस्ततान ॥
सहस्रसाः शतसा वाज्यर्वा पृणक्तु मध्वा समिमा वचांसि ॥[2]

वामदेवस्य । आकारस्य ततानेत्येतेन सम्बन्धः । दधिक्रा मध्यमस्थानैः[3] । शवसा बलेन स्वसामर्थ्यातिशयलक्षणेन[4] । आततान तनोति । किम् ? वृष्टिलक्षणा अपः । पञ्च कृष्टीः निषादपञ्चमा मनुष्यजातीः प्रनीति शेषः । सूर्य इव ज्योतिषा द्वितीयार्थे तृतीया । यथा सूर्यः स्वज्योतिः[5] सर्वत्रातनुयात् तद्वत् । किञ्च सहस्रसाः शतसाः सनो विट्[6] आत्वे च रूपम् । सहस्रादिसं[7]ख्यानां मेघानां संभक्ता । वाजी हविर्लक्षणेनोदकजन्येन वाजेन[8] तद्वान् । वेजनवान् वा । वाय्वात्मना चलनस्वभावकत्वात् । अर्वा ईरणवान् वृष्टिलक्षणस्योदकस्येरणेन तद्वान् गमयिता प्रेरयितेत्यर्थः । उपरिष्ठस्य[9] समः पृणक्तु इत्येतेन सम्बन्धः । संपृणक्तु मिश्रयतु । मध्वा मधुनोदकेन इमा[10] इमानि स्तुतिलक्षणानि वचांसि स्तुवद्भ्योऽस्मभ्यमुदकं ददात्वि[11]त्यर्थः ।

मधु कस्मात् ? उच्यते । मेघोदरवर्ति सलिलं मध्व[12]भिप्रेतम् । तच्च पुनर्वैद्युदात्मना दह्यमानसरंसवर्णेन[13] तद्गतेनैव वायुना ध्मायमानं[14] धमनि[15] । अतो धात्वर्थसम्बन्धासम्भवाद् धमतेराद्यन्तविपरीतस्येत्याह । नैरुक्तधातुर्वा धमतिर्गतिकर्मान्तर्नीतण्यर्थो[16] निष्कालने द्रष्टव्यः । निर्धाम्यते[17] हि तन्मेघान्[18] निष्काल्यत इत्यर्थः । अर्वेत्यत्रै[19]रन्तर्नीतण्यर्थस्य 'अन्येभ्योऽपि दृश्यन्ते'[20] इति वनिपि रूप न मन्ये[21] । ईरणवानिति भाष्ये[22] त्वर्थप्राप्तवचनं द्रष्टव्यमिति ।

सविता वक्तव्यः । स पुनः 'इममेवाग्निं सवितारमाहुः'[23] इत्यत्राभिधानतो व्याख्यतः । इह त्वर्थात् प्रकरणाच्च मध्यमोऽभिधेयः । केचित् 'सर्वस्य प्रसविता' इत्यत्रापि पठन्ति तस्यैषा ।

[ इति पञ्चदशस्या ( दशमस्या ) ध्यायस्य एकत्रिंशः खण्डः । ][24]

---

१–आदर्शपुस्तकष्वत्र खण्डारम्भनिर्देशो न दृश्यते
२–[ऋ० ४ । ३८ । १०] 'आ दधिक्राः' इत्येव प्रतीकः B. C.
३–स्थानम् B ४–मर्थ्यादतिशः B.
५–सज्योतिः C. ६–लिट् B. C
७–सहस्रसादि B. C. ८–वाम्नेन B. C.
९–ओ वरिष्टस्य B. १०–'इमा' इति त्रुटितम् B C.
११–'त्वि' इति त्रुटितम् C.
१२–लिल मूर्धाभिप्रेत C.
१३–'सरः स्वर्णेन' इति वा पाठः स्यात् ।
१४–ध्यायमानं B. C. १५–वमति B.
१६–न्तर्णीतस्यर्थो C.
१७–'निर्धाम्यते' इति युक्तः स्यात् ।
१८–पञ्चम्यन्तमिदं पदम् । 'न' इति त्रुटितम् C.
१९–'त्रैर' इति त्रुटितम् B. C.
२०–[ पा० ३ । २ । ७५ ]
२१–मन्येरण B. C. 'मन्ये' इति सन्दिग्धः पाठः ।
२२–एष्येत्यर्थः B. एष्येऽर्थ C.
२३–[निरु० ७ । ३१]
२४–आदर्शपुस्तकेष्वत्र खण्डसमाप्तेर्निर्देशो न दृश्यते

## [ अथ द्वात्रिंशः खण्डः । ][1]

सवित् यन्त्रैः पृथिवीमरम्णादस्कम्भने सविता द्यामदृंहत् ।
अश्वमिवाधुक्षद्धुनिमन्तरिक्षमतूर्ते बद्धं सविता समुद्रम् ॥[2]

अर्चन्नामांगिरसस्तस्यार्षम्[3] । सविता मध्यमस्थानः । यन्त्रै यन्त्रस्थानीयैर्वृष्टिप्रदाना-दिभिरुपकारैः कर्मभिः पृथिवीमरम्णात् रम्णातिः संयमनकर्मा संयतवान् बद्धवान् वशे[4] कृतवानित्यर्थः । अथवा यन्त्रैरेव[5] वायुमयैः संयतवान् निबद्धं[6] कृतवानित्यर्थः । अस्कम्भने[7] स्कम्भनं पद्प्रतिबन्धकरमालम्बनं तद्रहिते चान्तरिक्षे । सविता सवितैव च द्यामपि[8] । अदृंहत् दृढीकृतवान्[9] । अश्वमिव यथाश्वं पालयन्नश्ववान्नरः क्लेशयेदायासयेत् तद्वद्धुक्षत् 'धुंक्ष धिक्ष सन्दीपनक्लेशनजीवनेषु'[10] । क्लेशयति वृष्टिवेलायामायासयतीत्यर्थः । धुनिं 'धूञ् कम्पने'[11] कम्पयितव्यं कम्पयितारं वा । अर्थान्मेघम् । अन्तरिक्षमिति प्रथमा सप्त-म्यर्थे अन्तरिक्षे । कीदृशे ? अतूर्ते तुर्वतेस्त्वरतेर्वैतद्रूपम् । अहिंसिते अत्वरिते वा सर्व-गतत्वात् प्राप्तव्याभावात् । बद्धं[12] बद्धं वायुपाशैः सन्ततम् । सविता सवितैव समुद्रं समुदितारं[13] क्लेदयितारमिति ।

कमन्यं मध्यमदेवमवक्ष्यत् मेघबद्धा[14]दिति । कुतो वा संशयः ? अन्योऽपि मध्यमादुच्यते यतः । आशंकाहेतुं स्वयमेवाह । आदित्योऽपि सवितोच्यत इति । यथा चैतदेवं तथा-स्मिन्नेव हैरण्यस्तूपसूक्ते इह यथा स्तुतिस्तत एवोत्प्रेक्षा । कथमेतत् हैरण्यस्तूपमिति चेत् ? अत आह अर्चन्नाम हिरण्यस्तूपपुत्रो हैरण्यस्तूप इदं सूक्तं प्रोवाच । अतश्च हिरण्यस्तूप इत्यपपाठः । तस्यैतस्याभिवादिनी एषा ऋक् ।

[इति पञ्चदशस्या-(दशमस्या-) ध्यायस्य द्वात्रिंशः खण्डः ।][15]

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।
२–[ऋ० १० । १४९ । १] 'सविता यन्त्रैः' इत्येव प्रतीकः B. C.
३–'म' इति त्रुटितम् C.
४–वशं कृत B.
५–रेवावायु B.
६–निबलं C.
७–'स्कम्भने' इति त्रुटितम् B. C. अस्तंभने स्त-म्भनं M.
८–'अपि' इति नास्ति B. अवि C.
९–अदृंहात् B. C.
१०–[धा० १ । ६०३, ६०४] अक्षु धुक्षु B. अक्ष धिक्ष C.
११–[धा० ९।१५॥१०।३०२] धूर्त कम्पने C.
१२–बलं B.
१३–समुभितारं B. मसमृभितारं C.
१४–बद्धाद्धदिति C. बन्धादिति M.
१५–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेर्निर्देशो न दृश्यते ।

## [ अथ त्रयस्त्रिंशः खण्डः । ][1]

हिरण्यस्तूपः सवितर्यथा त्वाङ्गिरसो जुह्वे वाजे अस्मिन् ।
एवा त्वार्चन्नवसे वन्दमानः सोमस्येवांशुं प्रति जागराहम् ॥[2]

मत्पिता हिरण्यस्तूपः । हे सवितर्यथा त्वां[3] त्वामाङ्गिरसोऽङ्गिरसः पुत्रो जुह्वे आहूतवान् । वाजेऽस्मिन्नन्ने हविर्लक्षणेऽस्मिन्नु[4]पकल्पित इति शेषः । एवं त्वा[5] त्वामेवा[6]र्चन्नामाह्मवसे तर्पणाय । वन्दमानः स्तुवन्नाह्वयामीति शेषः । आहूय च सोमस्येवांशुं यथाभूतस्य सोमस्येव । अंशुशब्दोऽन्तर्नीतवीप्सार्थः । अंशुमंशुं[7] प्रति जाग्रति यष्टारः । एवं त्वां प्रति[8] जागराहं जागर्मि । अहं त्वत्परिचर्यायां प्रमादं न करो[9]मीत्यर्थः ।

हिरण्यस्तूपः कस्मात् ? हिरण्यस्तूपो वर्चस्वि[10]तया हिरण्य इव स्तूपः संघातः । तप्तकाञ्चनगौरः प्रियदर्शनो वेत्यर्थः । हिरण्यः स्तूपोऽस्य विद्यत इति वा । हिरण्यविवि[11]त्रितं[12] इत्यर्थः । स्त्यायतिः संघाते ।

त्वष्टा व्याख्यात आप्रीसूक्ते[13] । तस्यैषा ।

[ इति पञ्चदशस्या-(दशमस्या-) ध्यायस्य त्रयस्त्रिंशः खण्डः ।][14]

## [अथ चतुस्त्रिंशः खण्डः ।][14]

देवस्त्वष्टा सविता विश्वरूपः पुपोष प्रजाः पुरुधा जजान ।
इमा च विश्वा भुवनान्यस्य महद्देवानामसुरत्वमेकम् ॥[15]

वैश्वामित्रस्य प्रजापतेरार्षम् । देवो दानादिगुणस्त्वष्टा मध्यमस्थानः । सविता वृष्टिप्रदानद्वारेण सर्वस्य प्रसविता विश्वरूपः । तथा च 'रूपंरूपं मघवा बोभवीति'[16] मन्त्रः । पुपोष

---

१–आदर्शपुस्तकेऽत्र खण्डारम्भनिर्देशो न दृश्यते ।
२–[ऋ० १० । १४९ । ५] 'हिरण्यस्तूपः' इत्येव प्रतीकः B. C. M.
३–'त्वा' इति त्रुटितम् B. अग्रे 'त्वामंगिर' इति पाठः ।
४–स्मिन्नष कल्पि० B. C.
५–एवं त्वां B. एवन्तान्त्वां C.
६–स्वामवमच्चना C. 'त्वमेवमर्चन्न' इति स्यात् ।
७–'अंशुमंशुं' इति नास्ति B. C.
८–ति जागराहं' इति त्रुटितम् B. C.
९–करोतीत्यर्थः C.  १०–वर्चस्वतया C.
११–'त्रि' इति नास्ति C.
१२–स्त्यैधातुः संघाते B.  १३–[निरु० ८ । १३]
१४–आदर्शपुस्तकेऽत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।
१५–[ऋ० ३ । ५५ । १९] 'देवस्त्वष्टा सविता' इत्येव प्रतीकः B. C.
१६–[ऋ० ३ । ५३ । ८] वाश्वोभ B. C.

**वृष्टिप्रदानद्वारेण पुष्णाति** प्रजाः। पुरुधा जजान **बहुधा च जनयति** । इमा च विश्वा भुवनानि **इमानि च सर्वाणि भुवनानि । उदकनामैतत्।** उदकान्यस्य **स्वभूतानि नान्यस्य कस्यचित् ।** महद्देवानामसुरत्वमेकं **महच्चास्य देवानां मध्येऽसुरत्वम् ।**

**असुरिति** प्रज्ञानाम **रो मत्वर्थीयः प्रज्ञावत्त्वम् ।** अनवत्त्वं वाऽनः **पुनः प्राणस्तेन तद्वन्तं बलवन्तमित्यर्थः । अन्नवत्त्वमित्यपपाठः । असुशब्देनान्नस्य वक्तुमशक्यत्वात् । अथवा वसुरत्वमादिलुप्तं वसुवत्त्वं धनवत्त्वमित्यर्थः । धनमसाधारणं नान्यस्य कस्यचिदीदृशमित्यर्थः । अपि वेत्यपपाठः । असुरिति पठ्यमानस्यैव प्रदर्शनार्थ उपन्यासः । अस्यति क्षिपत्यनर्थं अस्ताः क्षिप्ता अस्यामर्था इत्यर्थप्राप्त्यनर्थपरिहारात्मकमुभयमप········तिज्ञातिबन्धनं तदभावेऽप्युभयं न स्यात् । आदिलुप्तं वा ।**

वातो **मध्यमस्थानः । कर्तरि कारके क्तप्रत्यय इति दर्शयति ।** वातो वातीति सत **इति । तस्यैषा ।**

[इति पञ्चदशस्या-(दशमस्या-)ध्यायस्य चतुस्त्रिंशः खण्डः ।][12]

## [अथ पञ्चत्रिंशः खण्डः ।][14]

वात आ वातु भेषजं शंभु मयोभु नो हृदे ।
प्र ण आयूंषि तारिषत् ॥[13]

**उलस्य वातायनस्यार्षम् ।** वात **आभिमुख्येन** वात । **किम् ?** भेषजम् । **कीदृशम् ?** शंभु । **शमिति सुखनाम परेणापौनरुक्त्याय तदात्व इति शेषः ।** मयोभु **सुखस्य भावयितृ आयतित्व इति शेषः ।** नोऽस्माकं हृदे **हृदयाय । किञ्च** प्र तारिषत् **तरतेर्वृद्ध्यर्थस्य पञ्चमः ।**

---

१–'पुष्णाति' इति द्विर्लिखितम् B. C.
२–'ज' इति त्रुटितम् C.
३–'उदकनामैतत्' इति त्रुटितम् C.
४–'प्र' इति त्रुटितम् C. ज्ञाननाम B.
५–'वत्व' इति त्रुटितम् C.
६–'अनः' इति नास्ति B.C. ७–अन्तवत्व B. C.
८–असुरशब्देनान्नस्य वक्तुं शक्यत्वात् B. C.
९–'र' इति नास्ति B C.
१०–त्यवपाठः C.
११–पातो मध्य C.
१२–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।
१३–[ ऋ० १० । १८६ । १ ] 'वात आ वातु' इत्येव प्रतीकः B. C.
१४–उल्बस्य B. १५–'कीदृशम्' इति त्रुटितम् B.C.
१६–हे भेषजभूतं च (प C.) एवयित सुख ( B. 'क' इत्यपि B. ) करं चेत्यर्थः B. C.
१७–भु भूसुख B. १८–भावयितृत् C.
१९–अयात B. C. २०–हृदये B. C.
२१–पञ्चमा B. C.

यश्चैवं स नोऽस्माकमायूंषि प्रवर्धयतु चायुरिति[1]।

अग्निर्व्याख्यातो द्वादशेऽध्याये[2]। इह मध्यमोऽभिधेयः। तस्यैषा।

[ इति पञ्चदशस्या-( दशमस्या- ) ध्यायस्य पञ्चत्रिंशः खण्डः ][3]

---

## [ अथ षट्त्रिंशः खण्डः । ][3]

प्रति त्यं चारुमध्वरं गोपीथाय प्र हूयसे ।
मरुद्भिरग्न आ गहि ॥[4]

मेधातिथेः। त्यच्छब्दश्रुतेर्यच्छब्दाध्याहारः[5]। त्यं तं चारु शोभनमध्वरं यज्ञं प्रति गोपीथाय गोशब्देनात्र सोम उच्यते। पीथं पानं[6] सोमपानाय प्रकर्षेण हूयसे[7]। एतज्ज्ञात्वा मरुद्भिः सह हे अग्ने आगहि आगच्छेति।

सोमपानं[8] मरुद्भिः साहचर्यं चोक्तं मध्यमस्येत्याह। कमन्यमिति। उदाहरणभूयस्त्वेनाग्नेर्मध्यमस्थानत्वं द्रढयन्नाह। तस्यैषापरेति।

[ इति पञ्चदशस्या- ( दशमस्या- ) ध्यायस्य षट्त्रिंशः खण्डः । ][3]

## [ अथ सप्तत्रिंश खण्डः । ][3]

अभि त्वा पूर्वपीतये सृजामि सोम्यं मधु ।
मरुद्भिरग्न आ गहि ॥[9]

मेधातिथेरेव। अभिः[10] कर्मप्रवचनीयः[11] प्रतिना तुल्यार्थः। अभि त्वा[12] त्वां प्रतीत्यर्थः। पूर्वपीतये अनादि[13]कालप्रवृत्ताय पानाय। सृजामि सृजिरन्यार्थोऽत्र उत्सृजामि। सोम्यं सोममयं मधु। एतज्ज्ञात्वा मरुद्भिः सह हे अग्ने अभ्यागच्छेति।

इति निरुक्तविवरणसमुच्चये पञ्चदशस्य ( दशमस्याध्यायस्य ) तृतीयः [पादः][14]

---

१–सतः अस्मा B C. २–[निरु० ७।१४]
३–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।
४–[ऋ० १।१९।१] 'प्रति त्यं चारुमध्वरम्' इत्येव प्रतीकः B. C. M.
५–त्यच्छब्द M. ६–पीथः पानं C. M.
७–प्रभयसे C. ८–सोमपानाय B
९–[ऋ० १।१९।९] 'अभि त्वा' इत्येव प्रतीकः B. C. M.
१०–अद्भिः कर्म B.
११–नीयः ( यं B. ) प्रति न तुल्या B. C.
१२–'त्वा' इति त्रुटितम् C.
१३–अन्वादि C.
१४–अयं कोष्ठकान्तर्गतः पाठो नास्ति B. C.

## अथ चतुर्थः पादः।[1]

वेनो वेनतेः कान्तिकर्मणः। [ तस्यैषा भवति। ][2]

वेनो वेनतीति कान्तिकर्मसु[3] पाठात्। वेनतेः कान्त्यर्थस्य। कान्तो दीप्तो[4] मध्यमस्थानः। तस्यैषा।

[ इति पञ्चदशस्या- ( दशमस्या- ) ध्यायस्य अष्टात्रिंशः खण्डः। ][5]

## [ अथ एकोनचत्वारिंशः खण्डः। ]

अयं वेनश्चोदयत् पृश्निगर्भा ज्योतिर्जरायू रजसो विमाने।
इममपां संगमे सूर्यस्य शिशुं न विप्रा मतिभी रिहन्ति॥[6]

वेनस्य भार्गवस्यार्षम्। अयं वेनो मध्यमस्थानः। चोदयत् चोदयति प्रेरयति। काः? पृश्निगर्भाः पृश्निरादित्यस्तस्य गर्भभूता गर्भत्वमापन्नाः। अथवा प्राप्तोज्ज्वलवर्णा रश्मयः पृश्नीनामन्तः स्थितत्वाद् गर्भभूता आपो वृष्टिलक्षणास्ताः प्रेरयतीति[7]। कीदृशो वेन? ज्योतिर्जरायुः ज्योतिर्वैद्युतं तस्य मेघमनुप्रविष्टस्य[8] वेष्टकत्वाज्जरायुस्थानीयं[9] यस्य ज्योतिर्जरायुः। रजसो विमाने रज उदकं तस्मिन्मीयते उत्पद्यते यस्मिन् तद्रजसो विमानमन्तरिक्षम्। तस्मिन्नायतने[10] स्थितमिति शेषः। इमं वेनमपां संगमे सूर्यस्य वृष्टिलक्षणा आपः सूर्यरश्मिद्वारेण[11] संगच्छन्ते यत्र स[12] संगमस्तस्मिन्। अपां सूर्यस्य च संगमेनेऽन्तरिक्ष[13] इत्यर्थः। सप्तमीश्रुतेः स्थितमिति शेषः। शिशुं न शिशुमिव यथा शिशुं बालकमतिप्रियं बान्धवा देवोरक इत्यादिना प्रियवचनेन स्तुयुस्तद्वत्। विप्रा मेधाविनः। मतिभिर्मतयः स्तुतयो[14] मन्यतेरर्चतिकर्मत्वात्। मतिभिः स्तोत्रशास्त्रलक्षणादिभिः। रिहन्ति पर्यन्ति[15]। रिहतीत्यर्चतिकर्मसु[16] पाठात्। स्तुवन्तीत्यर्थः।

---

१–अयं सर्वोऽपि पादारम्भात्मकः पाठो नास्ति C.
२–'तस्यैषा भवति' इति मूलपाठोऽत्र नास्ति B.C.
३–[निघ० २। ६]
४–कान्तेर्दीप्तो B.
५-आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते।
६–[ऋ० १०।१२३।१] 'अयं वेनः' इत्येत प्रतीकः B, C. M,
७–'इति' इति नास्ति C. M.
८–तन्मेघ B, C.
९–नीयः यस्य B. C.
१०–स्मिन्नन्तायत C.
११–सूर्यस्य रश्मि B.
१२–'स' इति त्रुटितम् C.
१३–सङ्गमेनन्तरि C.
१४–'स्तुतयः' इति त्रुटितम् B.
१५-पयन्तीति क्रियापदमत्र संदिग्धम्। कदाचिदत्र 'पूजयन्ति' इति पाठः स्यात्।
१६–[ निघ० ३। १४ ]

भाष्ये तु रलयोः समानवृत्तित्वप्रदर्शनपरं लिहन्तीति पर्यायवचनम्[1]। स्तुत्यर्थाल्लिहेर्धातोः। स्तुवन्ति वर्धयन्तीत्यर्थः। अर्चनमात्रस्य विवक्षितत्वात् पूजयन्तीत्यर्थः प्राष्टवर्णगर्भा आप[2] इति पाठः। प्रकर्षेणानेनाष्टौ वर्णाः[3]। अश्नोतेरष्टशब्दः। जरायुः कस्मात्? जरया गर्भस्य जरया यूयत इति वा। जरया हेतौ तृतीया। यथा जीर्यति परिणमते उपचयरूपेण गर्भस्तथा तथा जरतीति जरायुर्गर्भस्य वेष्टकः[4]। अथवांगपरिणत्या। यूयते मिश्रीयते परिणममानं गर्भं वेष्टयतीत्यर्थो जराशब्दो यौतेश्च जरायुः[5]। शिशुः शंसनीयः सर्वेणैवोपलाल्यते[6]। शिशीतेर्वा॑नवगतधातोर्दानार्थस्य[7]। दीयते ह्यसौ पुरुषेण स्त्रियै। तथा च प्रवादः स्त्रीणां प्रत्यग्रगृहीतगर्भाणां चिरलब्धो मे गर्भ[8] इति।

असुनीतिर्व्याख्येयः[9]। असूनयतीति निर्वचनम्। स च मध्यमः प्राणः। प्राणश्च वायुः। स हि शरीरादुत्क्रामन्नन्यानसून्नयतीति[10]। विज्ञायते हि 'प्राणमुत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति[11]' इति। तस्यैषा।

[ इति पञ्चदशस्या-( दशमस्या- ) ध्यायस्य एकोनचत्वारिंशः खण्डः ।][12]

## [ अथ चत्वारिंशः खण्डः । ]

असुनीते मनो अस्मासु धारय जीवातवे सु प्र तिरा न आयुः ।
रारन्धि नः सूर्यस्य संदृशि घृतेन त्वं तन्वं वर्धयस्व ॥[13]

श्रुतबन्धोरार्षम्। हे असुनीते प्राण। अस्मदीयं मनोऽस्मासु धारय[14]। किमर्थम्? जीवातवे चिरजीवनाय। सु प्र तिर तिरतिरन्यत्र[15] वधकर्मापि सामर्थ्यादिह वृद्धिकर्मा। तरतेर्वा प्रसिद्धवृद्धिकर्तृस्य[16] च छान्दसमित्वं सुष्ठु प्रवर्धय च। नोऽस्माकमायुः। रारन्धि 'राध साध संसिद्धौ[17]' संसाधय च नोऽस्मान् योग्यानविकलेन्द्रियान् कुर्वित्यर्थः। सूर्यस्य सन्दृशि सप्तमी चतुर्थ्यर्थे। सूर्यस्य सन्दर्शनार्थं। सर्वेन्द्रियविषयप्रदर्शनार्थं[18] चेदम्। स्वविषये

१–वचनस्तुत्यावय (नास्ति C.) वद्धे B. C.
२–प्राष्ट ( ष्ट C. ) ष्ट वर्णा गर्भा B. C. वर्णा गर्भा M.
३–नाष्टो वर्णः B. C. ४–वेष्टकम् B.
५–जरायुशब्दः ज्योतेश्च जरायुः (युम् B.) B. C.
६–लान्येते C. ७–तेर्मानव B.C. ८–मेघगर्भ B.C.
९–तिर्वाच्या B. १०–नयन्तीति B. C.
११–[ बृहदा० उप० ४ । ४ । २ ]
१२–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते।
१३–[ ऋ० १० । ५९ । ५ ] 'असुनीते मनः' इत्येव प्रतीकः B. C.
१४- धारयति C. १५–'रति' इति द्विर्लिखितम् C.
१६–'वृद्धिवत्त्वस्य' इति 'वृद्धिकार्थस्य' इति वा पाठोऽत्र भवेत्।
१७–[ धा० ५ । १६, १७ ] १८–सैनात्सर्वे B.

सर्वेन्द्रियवृत्त्यविच्छेदायेत्यर्थः । घृतेनोदकेन । न[1] हविर्लक्षणस्य वाचकम्[2] । असुनीतेऽहविर्भाक् त्वं वृष्टिलक्षणेन चोदकेन तन्वं शरीरं[3] वर्धयस्वास्मनोऽस्माकं च ।

प्रसङ्गाद्[4] राध्यतेरर्थान्तरम् । रध्यतिर्वशगमनेऽपीति ।

देवीः षळुर्वीरुरु नः कृणोत विश्वे देवास इह वीरयध्वम् ।

मा हास्महि प्रजया मा तनूभिर्मा रधाम द्विषते सोम राजन् ॥[5]

देवीः षडुर्वीरित्युभयत्र द्वितीया प्रथमार्थे । देव्यः षट्संख्याकाः[6] । उर्व्यो विस्तीर्णाः । द्यौश्च पृथिवी चाहश्च रात्रिश्चापश्चौषधयश्चेत्येताः । कुत एतत् ? सामिधेनीनां पुरस्ताज्जपे 'षण्मोर्वीरंहसस्पान्तु'[7] इत्यादौ दर्शनात्[8] । उच्यते । हे देव्यः षट्संख्याका विस्तीर्णा उरु बहु प्रार्थितम् । नोऽस्माकम् । कृणोत कुरुत । हे विश्वेदेवा यूयमिह कर्मणि लोके वा वीरयध्वं तत्करोतीति णिच् वीरान् शूरान् वीरवतो वा पुत्रवतोऽस्मान् कुरुतेत्यर्थः । किञ्च मा हास्महि हानिः क्षयस्तमाप्नुयाम[9] प्रजया । कष्टं हि पुत्रमरणम् । मा च तनूभिः शरीरैः । मा रधाम मा च वशं गच्छाम द्विषते । षष्ठ्यर्थे[10] चतुर्थी । द्विषतः शत्रोः । हे सोम राजन्निति ।

ऋतो वाच्यः । स पुनः पुरस्ताद् व्याख्यातः । 'ऋतमित्युदकनाम प्रत्यृतं भवति' इति[11] । मध्यमोऽभिप्रेतो गन्ताऽन्तरिक्षे । तस्यैषा ।

[ इति पञ्चदशस्या- ( दशमस्या- ) ध्यायस्य चत्वारिंश खण्डः । ][12]

---

## [ अथ एकचत्वारिंशः खण्डः । ][12]

ऋतस्य हि शुरुधः सन्ति पूर्वीर्ऋतस्य धीतिर्वृजिनानि हन्ति ।

ऋतस्य श्लोको बधिरा ततर्द कर्णा बुधानः शुचमान आयोः ॥[13]

वामदेवस्य । ऋतस्य मध्यमस्थानस्य । हीति पदपूरणः । शुरुधो[14] वृष्टिलक्षणा आपः

---

१–'न' इति नास्ति B. C.

२–घृतमितिपदमिति शेष । वाचकः C.

३–तद्वच्छरीरं B. C.

४–प्रसागदृध्यते C.

५–[ ऋ० १० । १२८ । ५ ]

६–संख्याताः C.

७–षण्मूर्वीह B.

८–शत० ब्रा० १ [illegible] । १ । २२ ॥ आ० श्रौ० सू० ६ । २२ । १ ॥ शां० श्रौ० सू० १ । ६ । ४ ॥ आश्व० श्रौ० सू० १ । २ । १ ॥

९–किञ्च व हाति क्षय B. C.

१०–'ष' इति त्रुटितम् C.

११–[निरु० २ । २५] 'इति' इति नास्ति B. C.

१२–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।

१३–[ऋ० ४ । २३ । ८] 'ऋतस्य हि' इत्येव प्रतीकः B. C. M.

१४–शुरुध्वं B. शुरुवः C.

सन्ति पूर्वीः पूर्वाश्चिरन्तन्यः[1]। ऋतस्यैव चैव धीतिः वृष्टिप्रदानविषया[2] प्रज्ञा। वृजिनानि पापानि दुर्भिक्षादीनि[3] इन्ति। ऋतस्यैव श्लोकः स्तनयित्नुलक्षणो[4] बधिरा। षष्ठ्या आकारः। बधिरस्यापि। ततर्द तृदिर्हिंसार्थः[5]। तृणत्ति [ हिनस्ति ][6] स्फोटयतीत्यर्थः। किम् ? कर्णा कर्णौ। बुधानो बोधयन्नात्मानम्। शुचमानो दीप्यमानः। ऋतविशेषणमेतत्। प्रथमा षष्ठ्यर्थे। शुचमानस्य विद्युद्दीप्त्या[7] दीप्यमानस्य। आयोर्मनुष्यनामैतत्। बधिरस्येत्येतेन[8] सामानाधिकरणम्।

अथवा अयनमायुर्ज्योतिरुदकं वा। यदा ज्योतिस्तदा ऋतस्य[9] विशेषणम्। कीदृशस्य ऋतस्य ? आयोरयनस्वभावकस्य ज्योतिरात्मकस्येत्यर्थः। यदोदकं तदा ऋत-[10] स्येत्युदकवचनोपचीयमानव्यतिरेकनिबन्धना षष्ठी। आयोरिति श्लोकसम्बन्धना। ऋतस्य सम्बन्धि यदायुरुदकं तस्योदकस्यायोर्यः श्लोकः[11] सम्बोधयन्नात्मानं बधिरस्यापि[12] कर्णा-वातृणत्तीति[13] सम्बन्धः। निर्वचने तिरोहितमिव[14] किञ्चिन्नास्ति।

इन्दुः कस्मात् ? इन्धतेर्दीप्तिकर्मणः[15]। उनत्तेर्वा[16] क्लेदनार्थस्य। मध्यमस्थानः। तस्यैषा।

[ इति पञ्चदशस्या-(दशमस्या-) ध्यायस्य एकचत्वारिंशः खण्डः। ][17]

## [अथ द्विचत्वारिंशः खण्डः।][17]

प्र तद्वोचेयं भव्यायेन्दवे हव्यो न य इषवान्मन्म रेजति रक्षोहा मन्म रेजति।
स्वयं सो अस्मदा निदो वधैरजेत दुर्मतिम्।
अव स्रवेदघशंसोऽवतरमव क्षुद्रमिव स्रवेत्॥[18]

पैरुच्छेपस्य[19]। प्रवोचेयमिति सम्बन्धः। यच्छुनेस्तदध्याहारः। यदिष्टं स्तुतिरूपं

---

१—सन्निपूर्वः पूर्वाश्चिर C. 'पूर्वाः' नास्ति B.
२—धितिः (विधिः B.) घृष्टि प्रदायविषया B. C.
३—वृजिनादीनि पापादीनि B.
४—श्लोकं तनलक्षणं B. श्लोकः कनल C.
५—तृहिंसार्थः B. तृति हिंसार्थः C. तृदि हिंसायाः M.
६—'णत्ति' इति त्रुटितम् B.C. 'हिनस्ति'नास्ति M.
७—विद्दिप्त्या C. 'विद्युद्दीप्त्या' इति त्रुटितम् B.
८—'स्ये' इति त्रुटितम् C. स्येत्यनेन M.
९—ऋतस्य सामानाधिकरण्यविशेषणं B. C.
१०—तदा जतस्ये B. C.
११—श्लोकं B.
१२—बधिरव्यापि C.
१३—तृणत्विति B.
१४—तिरा (र C.) हित B. C.
१५—'दीप्ति' इति त्रुटितम् B. C.
१६—उन्दतेर्वा B. उनक्तेर्वा M.
१७—आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते।
१८-[ऋ० १। १२९। ६] 'प्र तद्वोचेयम्' इत्येव प्रतीकः B. C. M.
१९—पुरुच्छेपस्य B. C. पुरुच्छेवस्य M.

तत् प्र वोचेयं प्रब्रवीमि । भव्याय एकैकस्याः कलाया वृद्ध्या हान्या वा युक्तेन तेन रूपेण भवितव्यम् । इन्दवे चन्द्रमसे । हवनमर्हतीति हव्य इन्दुः । नशब्द उपमार्थः । हव्य इव यः । अहविर्भक्तित्वादेवमुच्यते । इषयन् छान्दसत्वादिषः इळे स्तुतिं प्रतीच्छन् वा । अन्नं वा इट् अकार आगमश्छान्दसस्तद्वान् स्तोतृभ्यो देयेनान्नेन स्तुतीच्छया तद्वानित्यर्थः । मन्म मन्यतेरर्चतिकर्मण एतद्रूपम् । मननं स्तवनमस्मदीयं प्ररेजति कम्पते चलति गच्छतीत्यर्थः। यश्च रक्षोहा रक्षसां हन्ता । मन्म मननं रक्षसां चेतस्तद्रेजति । अन्तर्नीतण्यर्थोऽत्र रेजतिः। रेजयति कम्पयति । कथं पुनश्चन्द्रमा रक्षसां हन्ता चेतो वा कम्पयति ? उच्यते । रक्षांसि हि तमश्चराणि । चन्द्रमाश्च तमोऽपनयनेन तेषां सञ्चारं निरुन्धन् हन्ता । चेतश्च बलेनोद्यन् कम्पयति । अत उच्यते । रक्षोहा मन्मेति रेजतीति ।

किञ्च स्वयमात्मनैव सः । अस्मदिति । षष्ठ्यर्थे पञ्चमी । अस्माकमिति । आनिदः निन्देः क्विप् । आकारोऽभिशब्दार्थः । अभिनिन्दोऽभिनिन्दितॄन् आभिमुख्येन निन्दितॄन् । वधैः प्रहारैः । अजेत जयेत । दुर्मतिं पापबुद्धिम् । किञ्च त्वत्प्रसादाद्यावस्रवेत् अधोगच्छेत् क्षीयेतेत्यर्थः । अघशंसोऽघं पापं तद्योऽस्माकं जनेभ्यः शंसति कथयति स्फीतं करोति सोऽघशंसः । स चापसृतोऽप्यवतरं स्रवेदवतरां स्रवेत् पुनरपि सुतरामवस्रवेत् । किमिव ? क्षुद्रमिव द्रव्यमुदकादि तद्वदवस्रवेत् ।

अवस्रवेदवस्रवेदित्यभ्यासः । परुच्छेप ऋषिरित्यभिधेयवचनः । स कस्मात् परुच्छेपः ? पर्वर्वन्महच्छेपोऽस्येति । परुषि परुषि वा सर्वाङ्गसन्धिषु शेपस्थानीयानि गड्ढून्यस्येति । शेफांस्येव वा । तथा च कौषीतकिब्राह्मणम् 'असुरीन्द्रं प्रत्यक्रमत पर्वन्पर्वन् मुष्कान् कृत्वा तामिन्द्रः प्रतिजिगीषन् पर्वन् पर्वञ्छेपांस्यकुरुत । इन्द्र उ वै परुच्छेपः' । अत्र ब्राह्मणे मुष्कशब्देन स्त्रीन्द्रियमुच्यते ।

---

१–हव्योय B. हव्याय C.

२–भवनमर्हतीति भव्य इन्दुः B.C. ३–भव्य इवB.

४–अह (भ) विकत्वादेव B. अहवीकत्वादेव C.

५–इल.B. अयं सन्दिग्धः पाठः । अत्र कश्चन पाठस्त्रुटित इति प्रतीयते । कदाचित् 'छान्दसत्वादिष ईडेः स्तुत्यर्थस्य स्तुतिं' इति पाठोऽत्र भवेत् ।

६–मित B. ७–तद्विद्वानित्य B. ८–च तत् तद्रे B.

९–अत्र 'इति' इत्यधिक एव । मस्मेति C.

१०–आदिदः C. ११–कारो हि शब्दा B. C.

१२–नितक् आभि C.

१३–मेघशंसः B. सेघशंसः C.

१४–'व' इति त्रुटितम् B. C. 'पर्ववन्महान् शेपोऽस्येति' इति युक्तः स्यात् ।

१५–'परुषि' इति नास्ति B. C.

१६–गलून्म्यस्येति B. गळून्यस्येति C.

१७–[ कौषी० ब्रा० २३ । ४ ] परुच्छेषः C. 'असुरिन्द्रं प्रत्यक्रत पर्वन् मुष्का कृपा का मित्रः प्रतिजीष पर्वन् पर्वन शेषां (B. C.) स्य कुरुत इन्द्र उपैत् परुच्छेपम्' इति पाठः B.

इतीमानि सप्तविंशतिर्देवतानामधेयान्यनुक्रान्तानि[1]।

इति। वाय्वादीनि इन्दुपर्यन्तानि सप्तविंशतिर्यथा समाम्नायमनुक्रान्तानि। नियमार्थमिदम्। तद्विशेषप्रदर्शनायाह। तेषामेतानि चत्वारि वेनादीनि अहर्विर्भाञ्जि स्तुतिमेव भजन्ते[2] न हविः। मन्त्रस्वभावप्रदर्शनार्थम्[3]।

प्रजा[4]पतिः प्रजानां[5] पाता वा पालयिता वेति धात्वन्यत्वमात्रम्[6]। तस्यैषा।

[ इति पञ्चदशस्या- ( दशमस्या- ) ध्यायस्य द्विचत्वारिंशः खण्डः। ][7]

## [ अथ त्रिचत्वारिंशः खण्डः। ][7]

प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव।
यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो रयीणाम्॥[8]

प्राजापत्यस्य हिरण्यगर्भस्यार्षम्। हे प्रजापते। न[9]शब्दः परिभवतिना सम्बध्यते। त्वत् त्वत्त इत्यर्थः। अन्यः कश्चित्। एतानि भूतानि विश्वा[10] विश्वानि जातान्युत्पन्नानि यानि तानि। परि बभूव परिपूर्वो भवतिः परिग्रहे परिरक्षायां[11] वा। परिगृह्णाति परिगृहीतुं[12] शक्नोति[13] रक्षितुं वेत्यर्थः। त्वमेव परिगृह्णासि रक्षसि वा। यत ईदृशोऽसि अतो ब्रूमः। यत्कामा वयं ते तुभ्यं त्वदर्थमित्यर्थः। जुहुमो होमं कुर्मः[14]। तन्नोऽस्माकमस्तु सर्वदेव। वयं स्याम पतयः स्वामिनो रयीणां धनानामित्याशीर्मन्त्रगतैव। यत्रापि नास्ति तत्राप्येकवाक्यतायै कल्प्येति भाष्यकाराभिप्रायः। अन्यथा किमाशिष आध्यानेन।

अहिर्व्याख्यातः। 'अहिरयनात्। एत्यन्तरिक्षे'[15] इति। इह त्विन्द्रो मध्यमोऽभिधेयः। तस्यैषा

[ इति पञ्चदशस्या- ( दशमस्या- ) ध्यायस्य त्रिचत्वारिंशः खण्डः। ][16]

---

१—नुक्रोशादिर्ति B. C.
२—भज्ञते B. C.  ३ शैनम् B. शैना C.
४—'प्रजा' इति त्रुटितम् C.
५—'प्रजानां' इति त्रुटितम् B. C.
६—धात्वर्थमात्रम् B. त्वन्यत्रमा C.
७—आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते।
८—[ऋ० १०। १२१। १०] 'प्रजापते' इत्येव प्रतीकः B. C.
९- 'न' इति त्रुटितम् B. C.
१०—'विश्वा' इति त्रुटितम्।
११—परीक्षायां B. C.
१२—परिग्रहितुं B.
१३—शक्तेक्राति C.
१४—होमकर्मा B. C.
१५—[ निरु० २। १७ ]
१६—आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेर्निर्देशो न दृश्यते।

## [अथ चतुश्चत्वारिंशः खण्डः ।][1]

अब्जामुक्थैरहिं गृणीषे । बुध्ने नदीनां रजःसु षीदन् ॥[2]

वसिष्ठस्य । अप्शब्द उपपदे जनेः 'जनसनखनक्रमगमः'[3] इति[4] विट्[5] 'विड्वनोरनुनासिकस्यात्' इत्यात्वे द्वितीयैकवचनमब्जामिति । यैः[6] कर्मात्मना वृष्टिलक्षणास्वप्सु जायते तम[8]ब्जाम् । उक्थैः[7] स्तोत्रैः । अहिं[9] मध्यमस्थानमहिं गृणीषे गृणातेः स्तुतिकर्मण आत्मनेपदं म[10]ध्यमो व्यत्ययेन परस्मैपदोत्तमयोः[11] स्थाने । गृणीषे गृणामि स्तौमीत्यर्थः । बुध्ने बन्धने नदीनां नदी[12]शब्देन शब्दकारिणीनामपां स्थानेऽन्तरिक्षे रजःसूदकेषु सीदन् मनसोदकानि ध्यायन् कामयमान इत्यर्थः । बद्धा अस्मिन् धृता आपः । इदमपीतरद् बुध्नं शरीरमु[13]च्यते । बद्धा अस्मिन् धृताः प्राणा इति ।

[अहिर्बुध्न्यः[14]] योऽहिः स एव बुध्न्यः । इयांस्तु विशेषः । बुध्नम[15]न्तरिक्षं तत्र भवो बुध्न्यः । अहिश्चासौ बुध्न्यश्चेति समानाधिकरणावहिर्बुध्न्य[16]शब्दावसमस्तौ । तथा[17]पि अहिं बुध्न्यं[18] शंसतीति श्रुतौ लिङ्गं भवति । बुध्नमन्तरिक्षं[19] तन्निवासादिति भावार्थप्रदर्शनं भाष्ये । तस्यैषा ।

[इति पञ्चदशस्या-(दशमस्या-) ध्यायस्य चतुश्चत्वारिंशः खण्डः ।][20]

---

## [अथ पञ्चचत्वारिंशः खण्डः ।][20]

मा नोऽहिर्बुध्न्यो रिषे धान्मा । यज्ञो अस्य स्रिधदृतायोः ॥[21]

वसिष्ठस्यैव । भिन्नस्तुतित्वादर्धर्चयोरुदाहरणम् । मा[22] नोऽस्मान् । अहिर्बुध्न्य उक्तनिर्वचनः । रिषे रेषणाय हिंसनाय[23] । धात् दात्[24] कस्मैचिदपि मा दादिति सम्बन्धः । मा[25]

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते
२–[ऋ० ७ । ३४ । १६] 'अब्जामुक्थैः' इत्येव प्रतीकः B. C.
३–[पा० ३ । २ । ६७]
४–'इति' इति नास्ति B. C.
५–पिदि C.
६–[पा० ६ । ४ । ४१]
७–लयः कर्मा B. C.
८–'तम्' इति त्रुटितम् B. C.
९–अहिर्मध्य B. C.
१०–पदं मध्यमा (मो C.) B. C.
११–पदमु(यो C.)त्तम B. C.
१२–नद शब्दने M.
१३–शरीरंमन्यते B.
१४–'अहिर्बुध्न्यः' इति नास्ति C. M.
१५–बुध्यमन्त M.
१६–वहिर्बुध्न्यावसमस्तौ B.
१७–'अपि' इति नास्ति B. C.
१८–बुध्नयं B.
१९–०रिक्षभवं नि वा B. ० रिक्ष नि वा C. तन्निवास इति M.
२०–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।
२१–[ऋ० ७ । ३४ । १७] 'मानोऽधिर्बुध्न्यो रिषे धान्मा' इत्येव प्रतीकः B. C.
२२–'मा' इति त्रुटितम् B. म नो C.
२३–नाय धान् दान् C.
२४–'दात्' इति त्रुटितम् B.
२५–वा चास्मा B. C.

चास्माभिः क्रियमाणो यज्ञोऽस्य सम्बन्धी[1] स्रिधत[2] स्रवत् मा विनशदित्यर्थः । कीदृशस्याहेर्बुध्न्यस्य ऋतायोर्यज्ञकामस्य । उखापीकौ[3] यज्ञ एवोखा रूपकमेतत्कल्पितं भाष्ये[4] स्रवतेरौचित्यादिति[5] ।

सुपर्णो व्याख्यातः 'वयः[6] सुपर्णाः' इत्यत्र 'सुपतना आदित्यरश्मयः[7]' इति । इह मध्यमोऽभिधेयः । तस्यैषा ।

[इति पञ्चदशस्या-(दशमस्या-) ध्यायस्य पञ्चचत्वारिंशः खण्डः ।]

---

## [अथ षट्चत्वारिंशः खण्डः ।][8]

एकः सुपर्णः स समुद्रमा विवेश स इदं विश्वं भुवनं वि चष्टे ।
तं पाकेन मनसापश्यमन्तितस्तं माता रेळ्हि स उ रेळ्हि मातरम् ॥[9]

सभेरार्षं धर्मस्य[10] वा।[स समुद्रमिति][11]परस्तात्सच्छ्रुतेर्यदध्याहारः। यो [illegible]णः। एको सहायवान्[12] । असहायो यः[13] सर्वकार्येषु सहायान्तरं नापेक्षत इत्यर्थः । कोऽसौ ? सुपर्णो मध्यमस्थानः । स समुद्रमन्तरिक्षनामैतत् । तदाविवेश आविशति । आविश्य च सः स एव इदं विश्वं सर्वम् । किं पुनस्तत् ? भुवनं भूतजातं वि चष्टे पश्यतिकर्मायम्[14] । अभिपश्यत्यनुग्राह्यतया[15] । तमेनमेवं रूपं पाकेन[16] मनसा परिपक्वेन मनसाऽहमपश्यं दूरस्थमपि सन्तमन्तितोऽन्तिके सन्निधौ । तं च माता निर्मात्री[17] उदकानां माध्यमिका[18] वाक् । रेळ्हि 'लिह आस्वादने'[19] इत्यस्य रूपम् । आस्वादनेन[च][20]अत्रोपजीवनमात्रं लक्ष्यते । वृष्टिप्रदानकर्मणि साहाय्येनोपजीवतीत्यर्थः । स[21] उ रेळ्हि मातरम् । उ इति पदपूरणः । स मातरं तामेव माध्यमिकां वाचमुपजीवति[22] नान्यत् किञ्चित् । सुपतनं वायुमपश्यम्[23]मिति ऋषिर्दृष्टदेवतार्थसतत्वः[24] कस्मैचिदाचष्टे । तदाख्यानाच्चास्य प्रीतिर्भवतीति[25] ।

---

१—'सम्बन्धी' इति त्रुटितम् B. अग्रे 'स्रधत्' इति पाठः C. २—स्रावित् B. C.
३—अयं सन्दिग्धः पाठः । उखापीठकिका B. C.
४—भाष्यं B. ५—स्रवते B.
६—[ऋ० १० । ७३ । ११] ७—[निरु० ४ । ३]
८—आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।
९—[ऋ० १० । ११४ । ४] 'एकः सुपर्णः' इत्येव प्रतीकः B. C. M.
१०—घर्मस्य C. M. ११—'स समुद्रमिति' नास्ति M.
१२—यवाची B. C. १३—'यः' इति त्रुटितम् B.
१४—र्मा योऽभि B. C. १५—श्यता ग्राह्य B. श्यत्वनु C.
१६—वा केन B. C. १७—निर्माति B. C.
१८—मा (म B.) ध्यमिति B. C.
१९—[धा० २ । ६] २०—'च' इति नास्ति M.
२१—सं रेळ्हि C. २२—जीवन्ति B. C.
२३—पश्यदिति M. २४—०वतार्थे सत० B. C.
२५—'भवतीति' इति द्विर्लिखितम् C.

पुरूरवा मध्यमस्थानः । विज्ञायते हि 'वायुः प्राण एव पुरूरवाः'[1] इति । स कस्मात् ? बहुधा रोरूयते । अनेकविधमत्यर्थं स्तनयित्नुलक्षणं शब्दं करोतीति पुरूरवाः । तस्यैषा ॥

[इति पञ्चदशस्या-(दशमस्या-) ध्यायस्य षट्चत्वारिंशः खण्डः ।][2]

---

## [ अथ सप्तचत्वारिंशः खण्डः । ][2]

समस्मिञ्जायमान आसत ग्ना उतेमवर्धन्नद्यः १ स्वगूर्ताः ।
महे यत्त्वा पुरूरवो रणायावर्धयन् दस्युहत्याय देवाः ॥[3]

उर्वश्या आर्षम् । सम्भूयपतने सम्[4] । जायमान आसत आसते[5]ऽस्मिंस्त्वयि वृष्टिप्रदानाय कर्मात्मना जायमाने । काः[6] ? ग्नाः स्त्रिय आपो मेघस्था वा[7] । उतापि[8] चैनं त्वामन्नरसप्रतर्पणेनावर्धयन् वर्धितवत्यः । नद्य इत्युदकसञ्चारणत्वसामर्थ्याद्रश्मय उच्यन्ते ताः । स्वगूर्ताः[9] 'गुरी उद्यमने'[10] ताः प्रतिगन्तुं स्वयमेवोद्यताः[11] स्वयंगामिन्य इत्यर्थः । कदा ? महे[12] महते यत् यदा त्वा त्वां पुरूरवो रणाय मेघेन सह संग्रामाय अवर्धयन्[13] वर्धयन्ति मध्यमस्थानं देवगणाः । दस्युहत्याय दस्युभूतस्य च[14] दुर्भिक्षादेर्हननाय । देवा मध्यमस्थाना मरुदादयः ।

ऐतिहासिकानां तु-पुरूरवा नाम ऐलो राजा । तं प्रत्युर्वश्याह[15] । संभूयासत आसितवत्योऽस्मिंस्त्वयि इलातो जायमाने । ग्नाः[16] स्त्रियो देवानां पत्न्यः । ता एव देवानां पत्न्यो गङ्गाद्या वा नद्यः । स्वगूर्ताः स्वयंगामिन्य[17] इत्यर्थः कदा ? महते यस्मात् त्वां हे पुरूरवः असुरैः सह संग्रामाय सर्ववीर्यैरवर्धयन्[18] वर्धितवन्तः । दस्यूनां हननाय च देवा इन्द्रादयः । 'गच्छन्त्येनाः'[19] इति यदुक्तं तदेवात्रानुसारयति गमना इति । देवा देवा इत्यध्यायपरिसमाप्तिप्रज्ञापनफलोऽभ्यासः सिद्धः ।

इति निरुक्तविवरणभाष्ये पञ्चदशो [ दशमो[20] ] ऽध्यायः ।

१–['पुरूरवा असीति प्राण एव तत्' मैत्रा० सं० ३।९।५]
२–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते । ३–[ऋ०१०।९५।७] 'समस्मिन् जायमाने' इत्येव प्रतीकः B. C. M.
४–'त ने सजा आसत' इत्येवं पाठः B. C.
५–आसते ते स्मिं M. ६–'काः' इति त्रुटितम् B.
७–स्था आपः B. ८–उतापि कम्पार्थे । अपि B. C.
९–स्वद्रर्ता C. १०–[धा० ६ । ११९] गुरि उद्यमाने C. ०मने त्वां प्रति M. ११–यतां स्वयं B. C.
१२–'महे' इति त्रुटितम् B. C. M.
१३–'अवर्धयन्' इति त्रुटितम् B. 'न् वर्धय' इति त्रुटितम् C. १४–'च' इति नास्ति B.
१५–श्या असंभू B. C. १६–न B. ना C.
१७–गामिन्यः कस्मात् ० तस्मात् महे महते B. C.
१८–वीर्यैर्वर्ध B. C. १९–[निरु० ३।२१] नावन्त्येनाः B. C.
२०–अयं कोष्ठकान्तर्गतः पाठो नास्ति B. C. इति निरुक्तविवरणसमुच्चये पञ्चदशोध्यायः समाप्तः M.

## [ अथ षोडशो (एकादशो) ऽध्यायः। प्रथमः पादः। ][1]

श्येनो व्याख्यातः। तस्यैषा भवति।

'श्येनः शंसनीयं गच्छति[2]' इति व्याख्यातः। इह तु मध्यमोऽभिधेयः। तस्यैषा।

[ इति षोडशस्या-( एकादशस्या- ) ध्यायस्य प्रथमः खण्डः। ][3]

## [ अथ द्वितीयः खण्डः। ][3]

आदाय श्येनो अभरत् सोमं सहस्रं सवाँ अयुतं च साकम्।

अत्रा पुरंन्धिरजहादरातीर्मदे सोमस्य मूरा अमूरः॥[4]

**वामदेवस्य।** आदाय **गृहीत्वा** श्येनो **मध्यमस्थानः।** अभरत् **अहरत् स्वमास्यं[5] प्रापितवान् पीतवानित्यर्थः। कम् ?** सोमम्। सहस्रं सवान् **सवशब्दः सुत्यानामह्नामुपलक्षणार्थः। यत्र सहस्रं[6] सुत्याः कुर्वन्तीति शेषः। सहस्रसाव्यसंज्ञके[7] सत्र इत्यर्थः। तत्र हि सहस्रं सुत्याः[8] कुर्वन्ति।** अयुतं च साकं **सह। कस्य ? अयुतमिति सामर्थ्याद् भक्षाणाम्[9]। कथम् ? प्रतिसुत्यं हि दशानां चमसानां भक्षः। दशके सहस्रे सुत्यानामयुतं भवति। दशसहस्राणीत्यर्थः। अथवा अयुतं च साकमित्ययुतं दक्षिणानाम्। कथम् ? सहस्रसाव्ये[10] हि यद्यपि सत्रत्वाद् ऋत्विजां[11] दक्षिणा नास्ति तथापि सदस्यदक्षिणास्ति 'यां सदस्येभ्यो ददाति[12] सोमपीथं तया निष्क्रीणीते[13]' इति सोमपीथार्थवादाद् यावन्तः सोमपीथास्तावत्या भवितव्यम्। ते चायुतम्। अतस्तत्सम्बन्धेन दक्षिणा अप्ययुतम्। बहुत्वमात्रप्रतिपादनार्थो वायुतशब्दः। सहस्रशब्दोऽपि।**

[अत्रा][14] **अत्रशब्दस्तत्रार्थे तत्र तत्रैव च** [पुरंन्धिः][15] **बहुप्रज्ञो बहुकर्मा वा। कोऽसौ ?**

---

१–अयं कोष्ठकान्तर्गतः पाठो नास्ति B. अयं सर्वोप्यध्यायाद्यारम्भात्मकः पाठो नास्ति C.M.

२–[ निरु० ४ । २४ ]

३–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते।

४–[ ऋ० ४ । २६ । ७] 'आदाय श्येनः' इत्येव प्रतीकः B. C M.

५–स्वमात्यसं B. स्वमास्यः C.

६–सहस्रा C.

७–साव्यसनज्ञके नत्र B. C.

८–सुताः B C.

९–भक्षणाम् C. १०–साप्ये हि B. C

११–ऋत्विग्दक्षिणा B. C.

१२–ददानि B. C.

१३–[ मैत्रा० सं० ४.८।३ ] तन्निष्क्री (ष्कि M.) णीथ B.C.

१४–अतस्तत्र शब्दं B. C. 'अत्रा' नास्ति M.

१५–पुरन्धीः C. 'पुरन्धिः' नास्ति M.

प्रकृतः श्येनः । अजहात् हन्तेर्जहातेर्वा ण्यर्थस्य रूपम् । हतवान् त्याजितवान् वा । अरातीः स्त्रीलिंगश्रुतेः शत्रुसेना इति भाव । अथवा रातिर्दानम् । [अरातयो]ऽदानबुद्धयोऽनधिकृतपुरुषजातीः । अजहात् स्वयमेव त्यक्तवान् । मदे सोमस्य सोमसम्बन्धिमदे 'यस्य च भावेन भावलक्षणम्' इति सप्तमी । तच्छ्रुतेश्च लक्षणयोग्यक्रियापदाध्याहारः । मदे सति प्राप्ते मदे । मूरा अरातिविशेषणं मूढा अज्ञाः । अमूरोऽमूढोऽतिरोहितज्ञानः श्येनः । अतिरात्रसहस्र सहस्रसाव्यं नाम सत्रम् । [श्येनः पक्षी अत] ऐन्द्रे [च] सूक्ते इत्यादि । श्येनस्य मध्यमस्थानत्वं युक्तवचनम् ।

सोमो वक्तव्यः । उच्यते । ओषधिरित्यभिधेयवचनम् । सुनोतेरिति धातुनिर्देशः । यदेनमिति तेते साधनत्वप्रदर्शनम् । सूयत इति सोमः । मध्यमस्थानभाक्तया समाम्नातस्य सतः सोमस्य प्रसंगादोषधि [विषय] विशेषविषयत्वं प्रदर्श्यते । अथ तस्यापि मध्यमतया [प्र] योजनं तत्रार्थवादयोजना कार्या । 'यत्ते सोम दिवि ज्योतिः' तथा 'सोमो वै वाजस्तस्य चन्द्रमास्तृतीयमयं यः पवते स तृतीयमिति स तनूकरणे तं सर्वं स्वतनूभूतमाप्याययति' इति तस्यैवैषा स्वतनूश्चन्द्रमा यद्वायुरिति रसात्मकत्वादशोषणाच्च । सोऽयंमध्यास्मापद्यते । [तस्य] नैघण्टुकेन प्राधान्येन निदर्शनार्थमुदाहरामः । निपातभाक्त्वेन तावत् ।

[ इति षोडशस्या-( एकादशस्या- ) ध्यायस्य द्वितीयः खण्डः । ]

---

१-अरातीन् B. २-शब्दसेना B C.
३-अरातिर्दानमदानबुद्धयो M.
४-जातिः C. M.
५-[ पा० २ । ३ । ३७ ]
६-तेच्छल C.
७-दूरात् B. दूराः C.
८-मूरा अज्ञ मः मूरं अमूरः (ढं ?) अतिरोहित ज्ञानं श्येनं B.
९-अतिरात्रसहस्रमहाग्र्यमे सहस्रासाम्यं नाम सत्रंB.C.
१०-'नास्ति' M.
११-'त्वं' इति नास्ति B. C. M.
१२-कर्म साध० B. C.
१३-'सूय' इति त्रुटितम् B. C.
१४-'विषय' नास्ति M.
१५-'प्र' इति नास्ति M.
१६-[ मैत्रा० सं० १ । ३ । ३ ]
१७-[मैत्रा० सं० ४ । ५ । ८] 'सोमो वै वासस्तस्य चन्द्रमाः स्तुतिरियं अयं यः (C.M.) तृतीयतः सर्वस्वतनू (न्त्र B.) भूतया पा (प C.)चयति' B. C. पवते तृतीयः सर्वस्य तनूभूतया पत्रयतीति M.
१८-वैष स्वततुश्चन्द्र M.
१९-सोममयमध्या B. C.
२०-'तस्य' इति नास्ति M.
२१-प्र...न्यन निद C.
२२-त्रावत् B.
२३-आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेर्निर्देशो न दृश्यते ।

## [ अथ तृतीयः खण्डः । ][1]

स्वादिष्ठया मदिष्ठया पवस्व सोम धारया ।
इन्द्राय पातवे सुतः ॥[2]

मधुच्छन्दस आर्षम् । अतिशयेन स्वाद्व्या[3] मदिष्ठया अतिशयेनैव मदयित्र्या[4] । पवस्व[5] क्षर हे सोम धारया सन्ततया । किमर्थम् ? इन्द्राय पातवे[6] इन्द्रार्थं यत्पानं तदर्थम् । कर्तरि[7] वा छान्दसस्तवेत् प्रत्ययः । इन्द्रस्य पातुमर्थायेत्यर्थः । सुतोऽभिषुतः[8] संस्कृतः सन्नित्यर्थः । सोमस्य नैघण्टुकत्वेन योदाहृता सा निगदेनैव व्याख्याता ।

अथैषापरेत्यत्राथशब्दः स्तुत्यतिरेकार्थः । प्राधान्यस्तुतिप्रतिपादनार्था भवति । कस्य ? चन्द्रमसो वा एतस्य[9] [वा] प्रकृतस्यौषधिसोमस्य ।

[ इति षोडशस्या-( एकादशस्या- ) ध्यायस्य तृतीयः खण्डः ।[10] ]

---

## [ अथ चतुर्थः खण्डः । ]

सोमं मन्यते पपिवान् यत् संपिंषन्त्योषधिम् ।
सोमं यं ब्रह्माणो विदुर्न तस्याश्नाति कश्चन ॥[11]

सूर्याया आर्षम् । परे च । परस्ताद्यच्छब्दश्रुतेस्तदध्याहारः । तं[12] सोमत्वेन मन्यते जानाति पपिवान्[13] पाता । यत् व्यत्ययेन यम् । संपिंषन्त्योषधिमोषधिरूपम्[14] । के ? सामर्थ्याद् रासायनिकाः[15] । न च सः[16] सोमः । कस्तर्हि सोमः[17] ? सोमं हितं मन्यन्ते यं ब्रह्माणो[18] ब्राह्मणाः । ब्रह्मशब्दो[19] ब्राह्मणशब्दपर्यायोऽस्ति । कुतः ? अनुचरसि ब्रह्मन्निति प्रयोगाद् ब्राह्मणा इत्यर्थः । ते च ऋत्विग्यजमानाः[20] । यागसाधनभूतं संस्कर्तुं विदुर्जानन्ति । न तस्य षष्ठ्या एकदेशं

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।
२–[ऋ० ९।१।१]‘स्वादिष्ठया’ इत्येव प्रतीकः B.C.M
३–स्वद्वया मधिष्ठया C. ४–मदयत्रिया C. मादयित्र्या B.
५–‘प’ इति त्रुटितम् C. ६–तवे य इन्द्रा C.
७–‘तं’ इति त्रुटितम् B. C.
८–भिष्ठुतः संस्तुतः सन्नि B.
९–एकस्य B. C. ‘वा’ नास्ति M.
१०–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।
११–[ऋ० १० । ८५ । ३] ‘सोमं मन्यते’ इत्येव प्रतीकः B. C. M.
१२–तत् B. त C. १३–पविवान् C.
१४–संपिष B. संविषन्त्योधीमोष C. संविष M.
१५–रसायनिकाः B.C.
१६–‘स’ इति त्रुटितम् B.C.
१७–‘कस्तर्हि सोमः’ इति त्रुटितम् C.
१८–ब्राह्मणं C. ‘ब्राह्मणाः’ इति नास्ति B. C.
१९–ब्रह्मशब्दो B. २०–‘ऋत्विजो यजमानश्च इत्येवं B.C

स्वांशलक्षणम्। द्वितीयार्थे वा तमश्नाति कश्चन न[2] कश्चिदयज्वेति[3] शेषः। यज्वैतद्भक्षितु-मर्हति नान्य इत्यर्थः। एवमौषधे सोमेऽर्थयोजना।

चन्द्रमसि त्वधिदैवतं योज्यते। तं सोमं मन्यते पपिवान्[4] पीतवान् पातो[5] यजमानः[6]। यत् संपिंषन्त्यभिषवग्रावभिः क्षुन्दन्त्योषधि लतारूपं याज्ञे कर्मणि ऋत्विजो यजमानाश्च। न च[7] स सोमः। कस्तर्हि सोमः[8]? सोमं हि तं सत्त्वं मन्यन्ते यत् ब्रह्माणो[9] ब्राह्मणा अधि[10] दैवज्ञा विदुर्जानन्ति चन्द्रमसम्। न च तस्याश्नाति कश्चनादेवो[11] देवेभ्योऽन्यः। देवा ह्यत्र[रश्मयस्त एव][12] रश्मयस्तं क्रमेणाश्नन्ति। यजुःषु[13] न निन्दया इतरस्य स्तुतिः।

अथानन्तरं[14] चैषापरा पूर्ववद्विकल्पेन प्राधान्यस्तुतिप्रतिपादनार्था भवति चन्द्रमस इतरस्य वा। केचित् तां च......[15]र्यप्रतिपादनार्था भवतीति[16] मन्यन्ते।

[ इति षोडशस्या- ( एकादशमस्या- ) ध्यायस्य चतुर्थः खण्डः। ][17]

## [ अथ पञ्चमः खण्डः। ]

यत्त्वा देव प्रपिबन्ति तत आ प्यायसे पुनः।
वायुः सोमस्य रक्षिता समानां मास आकृतिः॥[18]

यत् यदा त्वा त्वां हे देव सोम ओषधिरूपं प्रपिबन्ति सवने सवने प्रकर्षेण पिबन्ति सामर्थ्याद् ऋत्विग्यजमानाः। ततो[19]ऽनन्तरमेव त्वमाप्यायसे आप्यायस्व। 'सं ते पयांसि'[20] इति प्रातः सवने। 'सं ते पयांसि'[21] इत्युत्तरयोः सवनयोराप्यायसे। किञ्च वायुस्तव सोमस्य रक्षिता साहचर्यात् सखिभावादित्यर्थः। रसाहरणाद्वा सति शोषणसामर्थ्ये त्वदीयस्य रसस्याशोषणात्। किञ्च समानां समशब्दः[22] संवत्सरपर्यायः संवत्सराणाम्। मासो मास्-

१-'क्षण' इति त्रुटितम् B.
२-'न' इति नास्ति B.
३ श्चियज्वे B. श्चिदज्वे C.
४-पीविवान् C.
५-पात B. C.
६-मानम् B.
७-'न च' इति त्रुटितम् B.
८-'सोमः' इति नास्ति B. C.
९-ब्राह्मणो B.C.
१०-अपि दैवज्ञा B. C.
११-श्चन देवो B.
१२-'रश्मयस्त एव' नास्ति M.
१३-यजुष्षु न निन्द C.
१४-'अनन्तरा चैषा' इत्येव B. C.
१५-अत्र 'चाश्चर्य' इति स्यात्।
१६-भवन्तीति B. C.
१७-आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते।
१८-[ऋ० १० । ८५ । ५] 'यत्त्वा देव प्र पिबन्ति' इत्येव प्रतीकः B. C. M.
१९-अतो B. नास्त्येवेदं पदम् C.
२०-'सत' इति B. C.
२१-[ऋ० १ । ९१ । १८]
२२-समाशब्दः B.

शब्दात् सकारान्तात् षष्ठी मासस्य च त्वमाकृतिः आभिमुख्येन कर्ता[1] एकैकस्य वर्णस्योपजनेनापगमेन[2] च युक्तै रूपविशेषैः। ओषधिसोमस्य हि प्रत्यहं शुक्लपक्षे एकैकं पर्णमुप[3]जायते दृश्येत इत्यभिप्रायः। अथवा वायुः[5] सोमस्य यानि पात्राणि ग्रहचमसादीनि तेषां रक्षिता[4]। तेषां वानस्पत्यत्वात्। 'वायुगोपा[6] वै वनस्पतयः[7]' इति श्रुतेः। अतोऽस्मिन् व्याख्याने सोमस्येति[8] सम्बन्धे षष्ठी न कर्मणि[9]। कृष्णपक्षे त्वपैति। तदपेक्षया च विशेषैरिति वचनम्। एवमौषधे[10] सोमयोजना।

चन्द्रमसि तु[11]–यदा त्वा त्वां हे देव सोम प्र[12] पिवन्ति रश्मयोऽपरपक्षे[13]। ततोऽनन्तरमेव पूर्वपक्ष आप्यायसे पुनः। तत्[14] 'या एताश्चान्द्रमस्य आगामिन्य आपो भवन्ति[15]' इत्यत्र दर्शितम्। वायुश्च तव सोमस्य रक्षिता साहचर्याद्रसाहरणाद्वेत्युक्तम्। किञ्च समानां संवत्सराणाम्। मासस्य[16] चाकृतिराभिमुख्येन कर्तु[17] प्रत्यहमेकैकस्याः कलाया उपजनेनापगमे[18]। च युक्तै रूपविशेषैः।

नाराशंसानभिप्रत्येति। आप्यायिताः सोमा आज्यादिषु शस्त्रेषु नाराशंसा उच्यन्ते। तदभिप्रायमाप्यायनवचनमोषधिपक्षे। चन्द्रमसः[19] पक्षे तु पूर्वपक्षापरपक्षावभिप्रेत्य। तथा च मन्त्रवर्णः 'यथा देवा अंशुम्[20]' इत्यादि। [रसहरणायेत्यपपाठः[21]] रूपविशेषैरिति। चन्द्रमाः शुक्लकृष्णयोरुपचयापचयाभ्यामुदकस्य[22] कर्ता पौर्णमास्यमावास्ययोः पञ्चदशपर्णत्वाभ्याम्[23]। एवं च रसायनाधिकारे रूपविशेषणमायुर्वेदस्मरणादिति[24]।

चन्द्रमा वक्तव्यः। स कस्मात्? चायन् द्रवति[25] चायन्[26] पश्यन् लोकपालत्वात्। द्रवति

१–अत्र 'वर्णस्य' इति 'पर्णस्य' इति वा स्यात्।
२–नावगमेन B. C. ३–त्पर्णमुप B. C.
४–न (रक्षि) क्षीतेत्य B. त्रक्षितेत्य C.
५–अथवा यः सोम B. अथवायुः C.
६–वायुगो वै B. ७–[अनुपलब्धमूलमिदम्]
८–'इति' त्रुटितम् B. ९–कर्मणि षष्ठी B. C.
१०–षधो सोम B. C.
११–'तु' इत्यत्र 'न' इति पाठः B. C.
१२–'प्र' इति त्रुटितम् B. १३–श्मयः पर B.
१४–तन्म ( न्य C. ) एता B. C.
१५–[निरु० ५। ११] १६–'स' इति त्रुटितम् C.
१७–अत्र 'कर्ता' इति युक्तः स्यात्।
१८–नावगमेन B. C.
१९–'चन्द्रमसः पक्षे' इति त्रुटितम् C. चन्द्रस पक्षे B.
२०–[यजु० ५। ७] अयमधीत्यांशुम्' इति पाठः B. 'यमादित्या अंशुम्' इति पाठः C. M.
२१–अयं पाठो नास्ति M
२२–'पचया' इति त्रुटितम् C.
२३–वर्णत्वा B. C.
२४–तथा चायुर्वेदे स्मरन्ति—

'सर्वेषामेव सोमानां पत्राणि दश पञ्च च।
तानि शुक्ले च कृष्णे च जायन्ते निपतन्ति च॥
एकैकं जायते पत्रं सोमस्याहरहस्तथा।
शुक्लस्य पौर्णमास्यां तु भवेत्पञ्चदशच्छदः॥
शीर्यते पत्रमेकैकं दिवसे दिवसे पुनः।
कृष्णपक्षक्षये चापि लता भवति केवला॥'

[सुश्रु० २९। २०—२२]

२५–द्रमति B. २६–चयत् B. च सत् पश्यत् C.

गच्छति । यद्वा चन्द्रो माता चन्द्रश्चासौ माता च निर्माता वा । यद्वा चन्द्रं मानमस्येति वा । चेन्द्रो[1] ह्लादकं मानं निर्माणमात्मनः कर्मणां वास्येति चन्द्रमाः । यद्वा पाठान्तरं चान्द्रं चन्द्रसम्बन्धि मानं मासस्य युगस्य वा यस्यास्य[2] चन्द्रमाः । स ह्रस्वत्वेन[3] चन्द्रमाः । तथा च श्लोकः—'सोऽप्यसाधनचन्द्राणाम्' इत्यादि । मासयुगपरिमाणप्रसङ्गादाह चन्द्रम । यदि हिरण्यमथापि ह्लादकरं ज्योतिष्मत्वात् सर्वथा चन्दते[4]र्धातोः कान्त्यर्थस्य । कान्तं हि तद् भवति । चन्दशब्दो[5]ऽप्यत एव धातोः प्रसङ्गा[6]दुक्त्वा प्रकृतस्यैव च[7] निर्वचनान्तरमाह । चारु द्रवति शोभनं गच्छति[8] । मन्दगतित्वाद्वा[9] चिरं द्रवति चिरं गच्छति च । चमेर्वा[10] पूर्वं चम्यमानो रश्मिभिरर्ध्यमानो[11] द्रवति । चारुशब्दं प्रसङ्गान्निराह । चारु[12] रुचेर्विपर्ययेण । आकारश्च नामकरणो मध्यानुप्रवेशेन । तस्यैषा ।

[इति षोडशस्या-(एकादशस्या-) ध्यायस्य पञ्चमः खण्डः ।][13]

---

## [अथ षष्ठः खण्डः ।][13]

नवोनवो भवति जायमानोऽह्नां केतुरुषसामेत्यग्रम् ।
भागं देवेभ्यो वि दधात्यायन् प्र चन्द्रमास्तिरते दीर्घमायुः ॥[14]

सूर्याया आर्षम् । नवो नवो भवति जायमानश्चन्द्रमा मासस्य[15] पूर्वपक्षादौ । अपरपक्षान्ते[16] त्वह्नां केतुः केतुरिति चिन्हभूत इत्यर्थः । कर्ता वा । उषसामेति गच्छत्यग्रम्[17] । उषसामिति पूजार्थे बहुवचनम् । उषसः प्रकाशात् प्रथममुदेतीत्यर्थः । एवं पौर्णमासीममावास्यां च निष्पादयन्[18] दर्शपौर्णमासयो[19]र्भागं देवेभ्योऽग्न्यादिभ्यो[20] वि दधाति निष्पादयत्यायन् । प्रशब्दस्तिरतिना वृद्ध्यर्थेन सम्बध्यते । चन्द्रमाः प्रतिरते[21] प्रवर्धयति दीर्घमायुः । कस्य ? सामर्थ्याद् यष्टॄणाम्[22]

---

१–चन्द्रः (न्द्र C.) ह्लादकर्मा न निर्माण B. C.
२–'यस्यासौ' इति युक्तः स्यात् ।
३–अयं सन्दिग्धः पाठः । ४–चन्द्रतेर्धा० M.
५–वनशब्दो B. C. ६–'प्र' इति नास्ति B. C.
७–'च' नास्ति B. C. ८–संगच्छति M.
९–'मन्दगति' इत्यारभ्य 'गच्छति' इत्यन्तः पाठस्त्रुटितः B.
१०–ममेर्वा C.
११–भिरन्यमो ( मा M.) B. C.
१२–चारु चर्वि C.
१३–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।
१४–[ऋ० १० । ८५ । १९] 'नवो नवो भवति' इत्येव प्रतीकः B. C. M.
१५–'मा' इति त्रुटितम् B.
१६–'अ' इति द्विर्लिखितम् C.
१७–'गच्छति' इति त्रुटितम् B.
१८–निष्ठादयन C. १९–दर्शपूर्णमास B. C.
२०–दिभिः विद B. दिभिर्द C. २१–प्रतिरति B.
२२–द्रष्टृणाम् B. C.

यदा त्वादित्यदेवतो द्वितीयः पादः । तदाह्वां केतुरादित्यः । स उषसां गच्छत्यग्रम् । अग्रशब्दोऽन्तवचनः । अन्तं प्रत्युषसामन्त उदेतीत्यर्थः । 'पूर्वापरं चरतो' इति पूर्वस्यामपि ऋच्युभयोः स्तुतिदर्शनादत्राप्यादित्यदेवत इति । यद्यपि चादित्यस्य पुरस्तात् पुराणे चन्द्रमसः स्थानं कथ्यते तथापि रसानुप्रदानसामान्याच्च स्थानवत्वं तावदुपपन्नम् । सर्वस्थानत्वे सति वायोरिव बलकृतिदर्शनात् । अतश्च कर्मप्राधान्यात् पौराणिकस्थानोपलब्धिस्मरणं न दुष्टम् ।

मृत्युर्वक्तव्यः । स कस्मात् ? मारयतीति सत इति म्रियतेरन्तर्नीतण्यर्थस्य 'भुजिमृङ्भ्यां युक्त्युकौ' इत्येवमौणादिकस्त्युक्प्रत्ययः । मृतं च्यावयतीति वा मृतमिति वर्तमानसामीप्ये । आसन्नमृत्युश्च चरमोच्छ्वासकाले शरीराच्च्यावयतीति । शतशब्दो बहुनाम बहुबलान्यक्षाणि यस्य षडिन्द्रिय इत्यर्थः । मुद्गलस्य पुत्रो मौद्गल्यः स मन्यत इति शेषः । च्यावयतेर्वर्णव्यापत्त्या चकारस्य तकार इत्यभिप्रायः । अथवा मृतः क्षीणायुः [संस्कारः] उच्यते । तं मृतं मध्यमः प्राणः शरीराच्च्यावयति । तथा च श्रुतिः 'प्राणमुत्क्रामन्तं सर्वे प्राणा उत्क्रामन्ति' इति । तस्यैषा ।

[इति षोडशस्या-(एकादशस्या-) ध्यायस्य षष्ठः खण्डः ।]

---

## [अथ सप्तमः खण्डः ।]

परं मृत्यो अनु परेहि पन्थां यस्ते स्व इतरो देवयानात् ।
चक्षुष्मते शृण्वते ते ब्रवीमि मा नः प्रजां रीरिषो मोत वीरान् ॥

संकुसुकस्यार्षम् । परशब्दोऽन्यवचनः । परमन्यं हे मृत्यो अनु परेहि अनुपरागच्छ ।

---

१–यद्यत्वादि B.
२–केतुमादित्य स B. C.
३–गच्छन्नग्रे B. गच्छन्त्यग्रं C.
४–[ऋ० १० । ८५ । १८]
५–नादित्यत्राप्यादित्यदेव इति B.
६–[ ब्रह्मपुराणं २३ । ५ ]
७–कस्यते C. वक्ष्यते B.
८–रणं तन्त्रम् B.
९–[उणा० ३ । २१] त्युकामित्येव B.
१०–मृत्युश्च B. C. M.
११–मुतगलस पुत्र मौतगल्य स C.
१२–'संस्कारः' इति नास्ति M.
१३–श्रुतिप्रमाणं उत्क्रामन्तं B. C. प्राणमनूत्का० M. प्राणा अनूत्क्रामन्ति B. C.
१४–[बृहदा० उप० ४ । ४ । २] मन्निति B C.
१५–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।
१६–[ ऋ० १० । १८ । १ ] 'परं मृत्यो' इत्येव प्रतीकः B. C. M.
१७–'अनु' नास्ति M.

पन्थां पन्थानम् । [कतमम्] यस्ते तव स्व आत्मीयः । इतरोऽन्यो देवयानात् पितृयाणं[2] इत्यभिप्रायः । पितृयाणे पथि स्थितास्तां जहसि[3] । देवयाने पथि स्थिता[4] अतो माऽस्मान् जिघांसीरित्यभिप्रायः । न चास्मानेव केवलान् । किन्तर्हि ? चक्षुष्मते शृण्वते ते[5] तुभ्यमित्यर्थः[6] । ब्रवीमि कथयामि मा नोऽस्माकं प्रजां दुहितृप्रभृतिं मा रीरिषो[7] मा हिंसीः । मोत [उत[8]] चार्थे मा च वीरान् पुत्रपौत्रांश्च ।

[इति षोडशस्या-(एकादशस्या-) ध्यायस्य सप्तमः खण्डः ।][9]

---

## [अथ अष्टमः खण्डः ।][9]

त्वेषमित्था समरणं शिमीवतोरिन्द्राविष्णू सुतपा वामुरुष्यति ।
या मर्त्याय प्रतिधीयमानमित्कृशानोरस्तु रसनामुरुष्यथः ॥[10]

निगद्व्याख्याता ।

विश्वानरो व्याख्यातः । विश्वानरः प्रत्यृतः[11] । वाय्वात्मकत्वेन सर्वभूतानीत्यभिप्रायः[12] एवमिह मध्यमोऽभिप्रेतः । तस्यैषा ।

[ इति षोडशस्या-(एकादशस्या-) ध्यायस्य अष्टमः खण्डः । ][9]

---

## [अथ नवमः खण्डः ।][9]

प्र वो महे मन्दमानायान्धसोऽर्चा विश्वानराय विश्वाभुवे ।
इन्द्रस्य यस्य सुमखं सहो महि श्रवो नृम्णं च रोदसी सपर्यतः ॥[13]

वैकुण्ठस्यार्षम् । प्रार्चेति[14] सम्बन्धः । व इति प्रथमास्थाने[15] यूयमित्यर्थः । महे महते ।

---

१–'य' इति त्रुटितम् C. 'कतमम्' नास्ति M.
२–'याण' इति त्रुटितम् B.
३–अत्र 'पथि ये स्थितास्तान् जहसि' इति पाठो युक्तः स्यात् ।
४–स्थिताः अतो B.C.
५–'ते' इति त्रुटितम् B.
६-त्यर्थं ब्रवीमि B.
७–मारिषः B. C.
८–'उत' नास्ति M.
९.–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।
१०–[ऋ० १।१५५।२] इयमृक् व्याख्याकृता महेश्वरेण न व्याख्याता नापि दुर्गेण । 'इति सा निगदव्याख्याता' इत्येतद् वाक्यं तु भाष्ये' परं मृत्यो अनु परेहि' इत्यस्य ऋचोऽनन्तरमेव युक्तम्' संकुसुकस्य' इत्यारभ्य 'रसनामुरुष्यथः' इत्यन्तः पाठो लेखकप्रमादात्, अन्यथा वा भाष्यमध्य आपतित इति ।
११–प्रत्यातः B. विश्वानरः प्रत्यातः C.
१२–भूतानित्य C.
१३–[ऋ०१०।५०।१]'प्र वो महे'इत्येव प्रतीकः B.C.
१४–प्राच्चेति B.C.
१५–प्रथमायाः स्थाने B.C.M.

मन्दमानाय मोदमानाय । शब्दक्रियो वा महिः । शब्दाय्यमानाय । अन्धसोऽन्नस्य दात्रे इति शेषः । अत्र च्छान्दसत्वात्तल्लोपः[2] । [अर्च] बहुवचनस्य वा स्थाने एकवचनम् । सामर्थ्या-च्चात्रार्चेतिरुच्चाणार्थः प्रोच्चारयत ऋत्विजां प्रैषः । किम् ? सामर्थ्यात् स्तुतिम् । विश्वानराय मध्यमस्थानाय । विश्वाभुवे सर्वत्र विविधं भूताय । प्राप्त्यर्थो भवति । विश्वं प्राप्ताय[3] । इन्द्रस्ये-श्वरस्य यस्य सुमखं[4] सुमहत् सहो बलं शरीरम् । महि महत्[5] । श्रवः श्रवणीयं यशः । नृम्णं च सेनालक्षणं बलम् । रोदसी द्यावापृथिव्यौ ते अपि सपर्यतः परिचरतः किमुतान्यः ।

शब्दाय्यमानाय[6] स्तोतृभिः । प्रीतावित्यतिरिक्तः[7] पाठः । नृम्णं नॄन् शत्रुभूतान् [प्रति नमति । अन्तर्णीतण्यर्थो वा नमिः[8]] नमयति प्रह्वीकरोति । यं इत्यतिरिक्तः[9] पाठः । इन्द्रस्य यस्येति प्रत्यवमर्शनान्मध्यमस्थानं[10] निश्चित्य कमन्यमित्याह । एवं पृथिवीस्थानादन्यत्व उक्ते विष्णुर्विश्वानरो वरुणः केशीति द्युस्थानादपि[11] च विश्वानरादवच्छेत्तुम् । परोऽपि[12] भवति ।

[इति षोडशस्या-(एकादशस्या-) ध्यायस्य नवमः खण्डः[13] ।]

---

## [अथ दशमः खण्डः[13] ।]

उदु ज्योतिरमृतं विश्वजन्यं । विश्वानरः सविता देवो अश्रेत् ॥[14]

वसिष्ठस्य [आर्षम्[15]] । उच्छब्दोऽश्रेदित्यनेन सम्बध्यते । उकारः पदपूरणः[16] । ज्योतिरा-दित्याख्यम् । अमृतं मरणवर्जितम् । विश्वजन्यं विश्वस्मै जनाय हितम् । विश्वानरो मध्यमस्थानः सविता स एव सर्वस्याभ्यनुज्ञानात् । देवो दानादियुक्तः । उदश्रेत् उदश्रयदुच्छ्रितं कृतवान् करोति वा । उद्गमयतीत्यर्थः । कुत एतत् ? निष्क्रियत्वात् सर्वज्योतिषां वायुना प्रेर्यमाणा-नामुद्गमनात् । वायोश्च विश्वानरत्वात्[17] । कथं ज्ञायते ? यतः क्रत्वादिकर्मणा देवानां रश्मी-

---

१–शब्दाय्यमानाय B. C.
२–सत्वाल्लोपः B. C. 'अर्च' इति नास्ति M.
३–प्राप्तय C.
४–सुमुखं B. मुसुकं खं C.
५–'ह' इति त्रुटितम् B. C.
६–ब्दाय्य (र्य C.) माना B.C.
७–रिक्तपाठः B. C.
८–अयं कोष्ठकान्तर्गतः पाठो नास्ति M.
९–अत्र 'व' इति युक्तः पाठः ।
१०–स्थानानिश्च B. C.
११–०दपि विश्वानरानयच्छे० B. C.
१२–'अपि' इति नास्ति B. परवि भवति C.
१३–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।
१४–[ऋ० ७ । ७६ । १] 'उदु ज्योतिः' इत्येव प्रतीकः B. C. M.
१५–'आर्षम्' इति नास्ति M.
१६–'पद' इति त्रुटितम् C. M.
१७–'र' इति त्रुटितम C. पीनत्वात् B.

नामजनिष्ट जातम्। किं तत्? उष आख्यं चक्षुर्जनिता आविरक आविष्करोति। भुवनं भूतजातं विश्वं सर्वमुषाः।

धाता मध्यमस्थानो वर्षकर्मणा सर्वस्य विधाता। तस्यैषा।

[इति षोडशस्या-(एकादशस्या-) ध्यायस्य दशमः खण्डः[1]।]

## [अथ एकादशः खण्डः।][1]

धाता ददातु दाशुषे प्राचीं जीवातुमक्षिताम्।

वयं देवस्य धीमहि सुमतिं सत्यधर्मणः॥[2]

वामदेवस्यार्षम् धाता मध्यमो ददातु दाशुषे दत्तवते हवींषि यजमानाय। प्राचीं आगामिनिं[3] प्रवृद्धा[4]मित्यर्थः। कां पुनस्ताम्? जीवातुं जीवनं[5] जीविकामित्यर्थः। कीदृशीम्? अक्षितां[6] क्षयवर्जिताम्। कस्मादेवं ब्रूमः? यदेते[7] वयं तस्य देवस्य धीमहि ध्यायामः कर्तुमिति शेषः। दधातेर्वैतद्रूपं न ध्यायतेः। धारयामस्तद्दीयं कर्मेत्यर्थः[8]। किम्? सुमतिं शोभनां मतिम्। मन्यतेरर्चतिकर्मणो मतिः। स्तुतिरिह [मतिर्[9]] अभिप्रेता। स्तुतिं सत्यकर्मणः।

विधाता धात्रा[10] व्याख्यातः। तस्यैषा। देवतान्तरैः सह स्तुतिसन्निपातो बहुदेवतायामृचि।

[इति षोडशस्या-(एकादशस्या-) ध्यायस्य एकादशः खण्डः]

## [अथ द्वादशः खण्डः।][1]

सोमस्य राज्ञो वरुणस्य धर्मणि बृहस्पतेरनुमत्या उ शर्मणि।

तवाहमद्य मघवन्नुपस्तुतौ धातर्विधातः कलशाँ अभक्षयम्॥[11]

विश्वामित्रजमदग्न्योरार्षम्[12]। सोमस्य राज्ञो दीप्तत्वेन राजत्वेनासंस्तुतस्य वरुणस्य च सम्बन्धिनि धर्मणि यज्ञाख्ये वर्तमान इति शेषः। यागं कुर्वन्नित्यर्थः[13]। बृहस्पतेरनुमत्या[14]। उकारः

१–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते।

२–[अथर्व० ७।१७।२॥ मैत्रा० सं० ४।१२।६] 'धाता ददातु' इत्येव प्रतीकः B.C.M.

३–प्रजामिनीम् B. C. ४–'वृद्धा' इति त्रुटितम् B.

५–जीवनकं B.C. ६–'क्षितां' इत्येव C. 'अ... क्षयवर्जिताम्' इति त्रुटितम् C.

७–यदेवता B. यदेता C.

८–दीया कर्मे B.C. ९–'मतिः' नास्ति M.

१०–धाता C.

११–[ऋ० १०। १६७। ३] 'सोमस्य राज्ञः' इत्येव प्रतीकः B. C. M. १२–'आर्षं' नास्ति B. C.

१३–याग (गः C.) कुर्वन्तीत्यर्थः B.C.

१४–मत्या च B.

[पाद][1] पूरणः। शर्मणि शरण आश्रये वर्तमान आश्रित इत्यर्थः। तथ[2] चाहमद्य हे मघवन् धनवन्[3]। उपस्तुतौ वर्तमानः[4]। त्वां च स्तुवन्नित्यर्थः। युवयोश्च हे धातर्विधातश्च। अभक्षयं भक्षितवान्।

इत्येताभिरिति[5] समस्तार्थवचनम्। चमसाः सोमकलशा इहाभिप्रेताः। कला अवयवाः शेरतेऽवतिष्ठन्ते[6] समुदाये हि अवयवाः समुदायवृत्त्या वर्तन्ते। शब्दसारूप्यात् प्रसक्तस्य कलेर्निर्वचनम्। कलिश्च कलाश्च किरतेः। सर्वशास्त्रव्यवस्थाविक्षेपात् कलिः कलाविशेषः। समुदायाद् विक्षिप्ता मात्राः[7] कला इति[8]।

इति निरुक्तविवरणभाष्ये षोडशस्या-[एकादशस्या-][9] ध्यायस्य प्रथमः पादः[10]।

## अथ द्वितीयः पादः[11]। [ अथ त्रयोदशः खण्डः ][12]

अथातो मध्यस्थाना देवगणाः। तेषां मरुतः प्रथमागामिनो भवन्ति। मरुतो मितराविणो वा मितरोचिनो वा महद्द्रवन्तीति वा। तेषामेषा भवति[13]।

अथेति गणाधिकारः। मरुतां प्रथमगामित्वं वायुवत्। इयांस्तु विशेषः। आश्रित-भेदो वायुर्बहुवचनान्तेन मरुच्छब्देनाभिधीयते। सर्व एव च मध्यमस्थाना देवगणा मरुतः।

सर्वा[14] स्त्री मध्यमस्थाना पुमान्[15]वायुश्च सर्वगः[16]।
गणाश्च सर्वे मरुत इति वृद्धानुशासनम्[17]॥

---

१–'पाद' इति नास्ति B. C. M
२–तथा चाह M.
३–धनवान B. C.
४–मानं त्वां च B.
५-इत्यादिभि B. इत्याभि C.
६-येह्यवय B. तिष्ठते समुदायेंह्यवय C.
७–विक्षिप्त मात्रा B.
८–कल इति C.
९–अयं कोष्ठकान्तर्गतः पाठो नास्ति B. C.
१०–'इति षोडशस्य प्रथमः पादः' इत्येव पाठः। C. इति निरुक्तविवरणसमुच्चये षोडशस्य प्रथमः पादः M.
११–अयं सर्वोऽपि पादाद्यारम्भात्मकः पाठो नास्ति C. M.
१२–नास्ति B. C. M.
१३–'अथातो इत्यादि' इत्येव प्रतीकः B. C. M.
१४–य सर्वा B. य सर्वे C.
१५–'पुमान्' इत्यस्मात्पूर्वं 'वाक्' इत्यधिकः पाठः B. C. M.
१६–सर्वशः B. C. M.
१७–[बृहद्देवता ५ । ४९ ] दुर्गाणात्रैवार्थं पद्यमित्थं पठ्यते-'उक्तं च वार्तिके-
मध्यमा वाक् स्त्रियः सर्वाः पुमान् सर्वश्च मध्यमः।
गणाश्च सर्वे मरुतो ग (गु)णभेदाः पृथक्कृते ॥'
[बृहद्दे० ५ । ४८] पूनामुद्रितपुस्तके तु टिप्पण्यामस्यैव-
'मध्यमा वाक् स्त्रियः सर्वाः पुमान्सार्धं च मध्यमः।
गणाश्च सर्वे मरुतो गुणभेदात्पृथक्पृथक् ॥'
इति पाठान्तरं प्रदर्शितम्। एवं च दुर्गकाले महेश्वर लेकाच बृहद्देवताग्रन्थे भिन्नाः पाठा आसन्निति प्रतीयते।

पौराणिकास्तु मारीचात्काश्यपाद्दित्यां जज्ञिरे मरुतां [सप्त] सप्तका गणा इत्याहुः। मरुतो मितराविणो वा [मरु] मितं प्राप्य च रुवन्ति स्तनयित्नुलक्षणं शब्दं कुर्वन्ति । अमितं वा बहु च । बहु प्रकारं शब्दं कुर्वन्ति । रवणशीलाः । रुचेर्वोत्तरार्थः । विद्युदात्मना पूर्ववन्मितममितं वा महद्रुवन्तीति वा । महद्दुचैर्द्रवन्तीति वा। महदन्तरिक्षं द्रवन्तीति वा। तेषामेषा।

[इति षोडशस्या-(एकादशस्या -) ध्यायस्य त्रयोदशः खण्डः ।]

---

## [अथ चतुर्दशः खण्डः ।]

आ विद्युन्मद्भिर्मरुतः स्वर्कै रथेभिर्यात ऋष्टिमद्भिरश्वपर्णैः ।
आ वर्षिष्ठया न इषा वयो न पप्तता सुमायाः ॥[10]

गौतमस्य । आ यात इति सम्बन्धः । विद्योतनं विद्युत्तया तद्भिर्विद्योतनवद्भिः । हे मरुतः स्वर्कैरञ्जनमर्कः स्वञ्जनैः शोभनगमनैरित्यर्थः । अर्चनं वार्कः स्वर्चनैः सुस्तुतिभिरित्यर्थः । अर्चिर्वार्कः स्वार्चिभिः सुदीप्तिभिरित्यर्थः । कैः ? रथेभी रथैः । आयात अस्मान् प्रति । ऋष्टिमद्भिः । अत्र सर्वाणि तृतीयान्तानि रथविशेषणानि । ऋष्टयः शक्तयः स्थूणा वा तद्भिः। अश्वपर्णैः अश्वाः पतन्ति गच्छन्ति यैस्तैः । अथवा रंहतेर्गतिकर्मणः । रंहितृत्वाद्रथा मेघा उच्यन्ते । विद्युता संयुक्तैर्मेघैः सहायातं । स्वर्कैरिति पूर्ववद्योजना । ऋष्टी रेषणं हिंसा । दुर्भिक्षादीनां हन्तृभिरित्यर्थः । अश्वपर्णैरित्यपि 'अशू व्याप्तौ' नभसो व्याप्तृभिः पतनैः ।

---

१–पादित्यादि जज्ञि B. C.

२–मरुतां सप्तसप्तकत्वमन्यत्रापि- 'सप्तकपाला भवन्ति सप्तसप्त मारुता गणास्तस्मात्सप्तकपाला गणेन गणेन जुहोति गणश एव मरुतः प्रीणाति' [मैत्रा० सं० ३।३।१०] 'सप्तकपालो भवति सप्त हि मरुतः' [मैत्रा० सं० २।१।८] 'मरुतां सप्तका' एवं पाठः M.

३–'मरु' इति नास्ति M. 'च' नास्ति B.C.

४–'अमितं' इत्यारभ्य 'शब्दं कुर्वन्ति' इत्यन्तः पाठस्त्रुठितः B.

५–प्रकारः कुर्वन्ति C.

६–मितिति वा B. C.

७–'महदन्तरिक्षं द्रवन्तीति वा' इति त्रुटितम् B.

८–तेषमेषा B.

९–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।

१०–[ऋ० १ । ८८ । १ ] 'आ विद्युन्मद्भिः'इत्येव प्रतीकः B. C. M.

११–वाक् B. अग्रे 'स्वर्चनैः सुस्तुतिभिरित्यर्थः' इति त्रुटितम् B.

१२–अर्चिर्वाक् B. C.

१३–'पतन्ति' इत्यस्मात्परं 'ये'इत्यधिकः पाठः B.C.

१४–सहायतः (त C.) B. C.

१५–रिष्टिः रेषणा (णः C.) B. C.

१६–[ धा० ५।१८ ]

१७–व्यप्त्र पत B. नहसोर्व्यप्त्र यत C.

आकारः पतंतेत्याख्यातेनान्वीयते । आयातृत्वं वर्षिष्ठया अतिशयेन प्रवृद्धया [बृहत्या] इषा अन्नेन । न[3] एषा चतुर्थी तादर्थ्ये अस्मदर्थेन हेतुभूतेन वृद्धतममन्नमस्मभ्यं दातुमित्यर्थः । वयो न वयांसीव पक्षिण इव शीघ्रं पतता आपतत । सुमायाः मायेति कर्मवचनं प्रज्ञानाम वा सुकर्माणः सुप्रज्ञा वा । विद्युन्मद्भिरिति[6]सत्त्वम् ।

रुद्रा व्याख्याताः । 'रुद्रो रौति[7]' इत्यादिना । वचनकृतो विशेषः । तेषामेषा ।

[ इति षोडशस्या-( एकादशस्या- ) ध्यायस्य चतुर्दशः खण्डः । ][8]

---

## [ अथ पञ्चदशः खण्डः । ][8]

आ रुद्रास इन्द्रवन्तः सजोषसो हिरण्यरथाः सुविताय गन्तन ।

इयं वो अस्मत्प्रति हर्यते मतिस्तृष्णजे न दिव उत्सा उदन्यवे ॥[9]

श्यावाश्वस्य । आ गन्तनेति[10] सम्बन्धः । रुद्रासो हे रुद्राः । इन्द्रवन्त इन्द्रेण संयुक्ता इन्द्रेण सहिता इत्यर्थः । सजोषसः सम्प्रीयमाणाः । तेनैव[11] परस्परतो वा । हिरण्यरथास्ते हिरण्यवर्णरथाः । हितरमणरंहणा[12] वा । सुविताय 'इण् गतौ[13]' अधिकरणेऽत्र क्तप्रत्ययः । सुवितायै[14] सुविगमनाय यज्ञकर्मणे यज्ञसमाप्त्यर्थमित्यर्थः । आगन्तनेति[15] आगच्छत । कस्मादेवमुच्यते आगच्छतेति ? यस्मादियं[16] वो अस्मत् षष्ठ्यर्थे[17] पञ्चमी । अस्माकं स्वभूता मतिः । प्रतिशब्दो धात्वर्थानुवादी । हर्यतिः प्रेप्साकर्मा । प्रतिहर्यते[18] कामयते तृष्णजे न नशब्द उपमार्थीयः । तृष्णा पिपासा यस्मिन् काले जायते[19] तया वा यो जयति स तृष्णजो ग्रीष्मान्तः । तस्मिन्निव काले । दिवः सम्बन्धिन इति शेषः । उत्सा द्वितीयार्थे प्रथमा[20] मेघनामैतद् द्रष्ट-

---

१–तपतेत्या C. २–वहत्या B. C.

३–'न ए' इति त्रुटितम् B. C.

४–'र्थे अस्मद्' इति त्रुटितम् C.

५–सप्रज्ञा B. C.

६–ति त्सत्वम् C. विद्युत्वदिः सत्वम् M. अयं पाठः सन्दिग्धः ।

७–[ निरु० १०।५ ]

८–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।

९–[ ऋ० ५।५७।१ ] 'आ रुद्रासः' इत्येव प्रतीकः B. C. M.

१०–आगन्तेत्यन्ननेनेति B. आगन्ननेति C.

११–तेनैव सपर B. C.

१२–रमण ( णं B. ) रंहणाः या B. C.

१३–[ धा० २।३५ ] ईण् गतौ M.

१४–शोभ सुविताय सुवि B. C.

१५–'न' इति त्रुटितम B.

१६–'पद' B. C. १७–षष्ठ्यत्ये C.

१८–'र्यते कामयते तृष्ण' इत्ययं पाठो नास्ति B. C. अग्रे 'ज न् नश इति पाठः B.C.

१९–'जायते' नास्ति B. C.

२०–'प्रथमा' इति त्रुटितम् B.

व्यम् । उत्सान् मेघान् । उदन्यवे प्रथमार्थे चतुर्थी । उदुन्युरुदकेन्धुः । यथा मेघान् कामयन्ते तद्वत् ।

अथवा उत्सा इति प्रथमा उदन्यव इति चतुर्थीश्रुतेर्व्यवहितस्यागमनस्येदमुपमानं [न कामयमानानाम्[२] ।] यथा ग्रीष्मान्ते दिवो द्युलोकात् । उत्सा मेघा उदन्यवे उदककामस्य जनस्यार्थायाग[३]च्छन्ति तद्वदागच्छते[४] [इति] तृंष्णक्शब्दनिर्वचनात् तृष्णजेशब्दश्च[५]-[६]तुल्यः । उदन्यवे इत्यनेन समानाधिकरणम् । पिपासाशीलस्योदककामस्य जनस्यार्थाय यथा च उत्सा आगच्छेयुस्तद्वदागच्छतेति भाष्यकाराभि-ायः । एवं तु व्याख्यायमाने तृष्ण......हमेतत् तदभिप्राया[७]द् भाष्यम् । शाकल्यस्य तृष्णोपपदस्य जनेरधिकरणसाधनः कर्तृसाधनो वा डप्रत्यय इत्यभिप्रायः । कुत एतत् ? अवग्रहात् । तथा च मन्त्रो व्याख्यातः । उदन्युः '[८]अशनायोदन्य' इति क्वचिदुदकस्य[९] ।

ऋभवो वक्तव्याः । विद्युतप्रकाशनमुरु विस्तीर्णं भान्ति । उरुशब्दात्[१०] ऋकारो रेफो[११]ऽज्भक्तिश्च । भातेराकारलोपः । ऋतेन वोदकेन दीप्यन्ते सश्चिते[१२]न तैः सहाविर्भवन्तीति वा । तेषामेषा ।

[इति षोडशस्या-(एकादशस्या-) ध्यायस्य पञ्चदशः खण्डः[१३] ।]

---

## [अथ षोडशः खण्डः[१३] ।]

विष्ट्वी शमी तरणित्वेन वाघतो मर्तासः सन्तो अमृतत्वमानशुः ।
सौधन्वना ऋभवः सूरचक्षसः संवत्सरे समपृच्यन्त धीतिभिः[१४] ॥

कुत्सस्य । विष्ट्वीति नेदं कर्मनामात्र गृह्यते[१५] । किन्तु विषेर्व्याप्त्यर्थस्य क्रियाशब्दोऽयम् ।

---

१–'चतुर्थी । उदन्युरुदकेन्धुः' इत्येतावान् पाठस्त्रुटितः B. C.

२–'नाम्' इति नास्ति B. C. 'न कामयमानानाम्' नास्ति M.

३–र्थाय गच्छति B. C.

४–'ते' इति नास्ति B. C. 'इति' नास्ति M.

५–'ह' इति त्रुटितम् C. ६–तुल्यन्त B. C.

७–प्रायं तद्भाष्यम् B.

८–[पा० ७।४।३४] उदन्युशनायो B. C.

९–दकस्योद्रा (त्भा C.) त्तेव्याः विद्युत् B. C.

१०–शब्दाः (ब्दा C.) ऋ B. C.

११–'फोऽज्' इति त्रुटितम् B. C. रेफभुक्ति M.

१२–तेन वा।तः सहावि भव B. C.

१३–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।

१४–[ऋ० १।११०।४] 'विष्ट्वी शमी' इत्येव प्रतीकः B. C. M.

१५–'ते । किन्तु विषेर्व्या' इति त्रुटितम् B.C. अग्रे 'स्त्यर्थस्य' इति B. पुस्तके 'प्तर्थस्य' इति च C. पुस्तके पाठः ।

स्नात्व्यादित्वादीकारः[1] । विष्ट्वी विष्ट्वा व्याप्य कृत्वेत्यर्थः । शमीति कर्मनाम कर्माणि प्रख्यातानि । तरणिरिति क्षिप्रनाम[2] क्षिप्रत्वेन शीघ्रमित्यर्थः । वाघतो यद्यप्येतद् ऋत्विङ्नाम तथाप्यत्र सामर्थ्याद्वहेकस्य[3] वोढारः । मेधाविनो वा मर्तासो मरणधर्माणः क्षणविनाशिनः । सन्तोऽमृतत्वमविनाशित्वमानशुराप्तवन्तः । सौधन्वना धन्वान्तरिक्षं शोभनं च धन्व सुधन्व[4] तस्मिन्[5] धन्वनि भवास्ते ऋभवो[6] वैद्युता ज्योतिर्विशेषाः । कीदृशाः ? सूरचक्षसः[7] सूर्यसमानदर्शनाः कृत्स्नस्य प्रकाशकाः । कथं ज्ञायतेऽमृतत्वमानशुरिति । संवत्सरे[8] गते इति शेषः । पुनरपि समपृच्यन्त सम्बध्यन्ते ते धीतिभिः स्वभिरुदकवर्षणैः[9] कर्मभिः । पुनरपि वृष्टिं कुर्वन्त्येवेत्यर्थः । इयं नैरुक्तपक्षयोजना ।

ऐतिहास्यानि वा देवैरुक्तानि 'एकं चमसं चतुरस्कृणोतन[10]' इत्यादीनि कर्माणि । तरणित्वेन शीघ्रम् । वाघतः[11] ऋत्विङ्नामैतत् सामर्थ्याच्चात्रान्तर्नीतमत्वर्थः । यष्टार इत्यर्थः । मर्तासो मनुष्याः । सन्तोऽमृतत्वं देवत्वमानशुः । सौधन्वनाः[12] सुधन्वन आङ्गिरसस्य पुत्राः । ऋभवः ऋभुप्रभृतयः । साहचर्यादृभव उच्यन्ते । 'अर्धर्चाः पुंसि च[13]' इति यथा । ऋभुर्विभ्वा[14] वाज[15] इति । सूर्यसमानदर्शना अत्यन्तं तेजस्विनस्तादृशप्रज्ञा वा । प्राप्य च देवत्वं संवत्सरे या धीतयः ष्विज्यमानत्वाद्भागार्हं[16] प्राप्ता इत्यर्थः ।

तेषां प्रथमोत्तमाभ्यां ऋभु वाजाभ्यां बहुवत् बहुत्वयुक्ता निगमा उदाहरणानि विद्यन्ते न तथा[17] विभ्वना मध्यमेन । तदेतदार्भवानि 'किमु श्रेष्ठ' इत्यस्य[18] सत्कृतस्य संस्तवेन युक्तानि सर्वेर्ग्वेदशाखासु[19] बहूनि सूक्तानि विद्यन्ते । तद्यथा 'इदं तृतीयं सवनं कवीनामृतेन ये चमसमैरयन्त[20]' इति ।

मन्त्रस्वाभाव्यमुपलक्षणीयं मन्त्रव्यभिचारप्रदर्शनायाह[21] 'आदित्यरश्मयोऽप्यृभव उच्यन्ते' इति उदाहरणम् ।

---

१-[पा० ७।१।४९] स्तद्वयादित्यादिकारः B. C.
२-'क्षिप्रनाम' इति द्विर्लिखितम् C.
३-अयं सन्दिग्धः पाठः । कदाचिदत्र 'वहे रूपं यज्ञस्य वोढारः' इति पाठः स्यात् ।
४-धनुः सुधन्वा B. ५-'तस्मिन्' इति त्रुटितम् B.
६-ते ऋभवः' इति द्विर्लिखितम् B. C.
७-'सूरचक्षसः सूर्यस' इति पाठो नास्ति B. C.
८-वरे गते C. 'सं...त्स...' इति त्रुटितम् । C.
९-'धीतिभिः स्वभिरुदकवर्ष' इति त्रुटितम् B. C.
१०-[ऋ० १।१६१।२] ११-वायतः C.
१२-'सौधन्वनाः सुधन्वन आङ्गिरसस्य' इत्ययं पाठो नास्ति B. C.
१३-[पा० २।४।३१] १४-विभवा B. C.
१५-'ज इति' इति नास्ति B. 'वाज इति' नास्ति C.
१६-अत्र कश्चन पाठस्त्रुटित इति प्रतीयते । कदाचित् 'कर्माणि तेष्वि' अयं पाठोऽत्र भवेत् ।
१७-तथापि भुवना B.C. १८-इत्यसस्य C.
१९-सर्ववेदशा B. २०-[तै० सं० ३।१९]
२१-'याह' इत्यारभ्य 'उदाहरणम्' इत्यन्तः पाठस्त्रुटितः B. C.

उद्वत्स्वस्मा अकृणोतना तृणं निवत्स्वपः स्वपस्यया नरः ।
अगोह्यस्य यदसस्तना गृहे तदद्येमृभवो नानु गच्छथ ॥[1]

दीर्घतमसः । उद्वत्सु 'उपसर्गाच्छन्दसि धात्वर्थे'[2] इति वतिः। उद्गतेषु उन्नतेषु[3] । केषु? सामर्थ्यादूर्ध्वप्रदेशेषु । अस्मै जनाय । अकृणोतन छन्दसि सर्वोपाधिव्यभिचारदर्शनात्[4] सेलाटे-दातादिकं[5] । निवत्सु निर्गतेषु पानावगाहनक्षमा[6] अपो उदकानि[7] । स्वपस्यया अप इति कर्मनाम शोभनमपः स्वपस्तत[8] इच्छाक्यजन्तादकारप्रत्ययो भावे ततष्टाप् तृतीया हेतौ । रणेच्छा-हेतुना[9] रश्मीनां च भूतलगतास्याहीन्या व्यभिचरति इत्यार्थवणे[10] व्यापारदर्शनादुपपन्नं तृणादिकरणम् । किञ्च अगोह्यस्य[11] गूहितुमशक्यं स्यादित्यस्य[12] यत् यदा[13] रात्रावित्यभिप्रायः । असस्तन सस्वप्ते[14] । गृहे मण्डलाख्ये । तत् तदा । अद्य रात्रिलक्षणे[15] वर्तमानकाले । इदं जगत् । हे ऋभवो रश्मयः । नानुगच्छथ यावत्तत्र भवथ न तावदत्र[16] । ततश्च युष्मद्विना निरालोको-ऽयं लोकः[17] । एतद्वो माहात्म्यमिति स्तुतिः । [अतत्यतिरिक्तपाठः][18]

अङ्गिरसः 'अङ्गारेष्वङ्गिराः'[19] इति व्याख्याता । वचनकृतो विशेषः ।

[इति षोडशस्या- (एकादशस्या-) ध्यायस्य षोडशः खण्डः ।][20]

---

## [अथ सप्तदशः खण्डः ।][20]

विरूपास इदृषयस्त इद्गम्भीरवेपसः । ते अङ्गिरसः सूनवस्ते अग्नेः परि जज्ञिरे ॥[21]

नाभानेदिष्ठस्य[22] । परस्तात्तच्छ्रुतेर्योगार्थसम्बन्धाय[23] यच्छ्रुतेऽध्यहारः[24] । ये पूर्वास्वृक्षु[25]

---

१—[ऋ० १।१६१।११] 'उद्वत्स्वस्मै' इत्येव प्रतीकः B. C. M.
२—[पा० ५।१।११८]
३—'उन्नतेषु' इति त्रुटितम् C.
४—सर्वोवाधि C. 'सर्वविधि' इति स्यात् ।
५—एतादिकं C. M. अयं पाठः सन्दिग्धः ।
६—नानावगा C. वनावगा B. ७-जलानि B.
८—'स्वपः' इति नास्ति B. C.
९—'रणेच्छा हेतुना' इति त्रुटितम् B. C.
१०—रति चाथ B. C.
११—अंगोभ्यस्य C.
१२—०क्यत्वादि० B. C.
१३—यदारात्रयावित्य B. ययदा रात्रा C.
१४—सस्वप्ने M. १५—राती रक्षणे B. C.
१६—तावतात्र B. १७—लोकं C.
१८—इतीत्यतिरिक्तपाठः' इति युक्तः स्यात् । अयं पाठो नास्ति M. १९—[निरु० ३।१७]
२०—आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।
२१—[ऋ० १०।६२।५] 'विरूपासः' इत्येव प्रतीकः B. C. M. २२—'दि' इति त्रुटितम् C.
२३—योगार्थसम्बन्धात् B.
२४—यच्छब्दाध्या M.
[25] स्वृक्षः प्र B. स्वृक्ष्व प्र C.

प्रकृता विरूपासो विविधरूपाः । इतौ [पाद[1]] पूरणौ । ऋषयो[2] द्रष्टारो मन्त्राणामतिमेधसः । ते गम्भीरवेपसः[3] वेपस् इति कर्मणः प्रज्ञायो[4] नाम वा भाष्ये वचनात् । गम्भीरं दुरवगाहमन्येन [अशक्यमध्यवसातुं[5]] वेपः कर्म प्रज्ञानं वा येषां दुरवगाहकर्माणो[6] दुरवगाहप्रज्ञा वा[7] त अङ्गि-[8]रसोऽङ्गिरा नाम ऋषिस्तस्य सूनवः पुत्रास्ते अग्नेरग्नि[9]तः सकाशात् परिजज्ञिरे पारंपर्येण[10] जाताः । अग्नेःसकाशादङ्गिराः। तस्मादपि ते अङ्गिरसो जाता इत्यग्निजन्म पुरस्तादष्टमे[11] व्याख्यातम् ।

पितरो व्याख्याताः । 'पाता वा पालयिता वेति'[12] । वचनकृतो[13] विशेषः ।

[इति षोडशस्या-(एकादशस्या-) ध्यायस्य सप्तदशः खण्डः ।][14]

---

## [अथ अष्टादशः खण्डः।][14]

उदीरतामवर उत्परास उन्मध्यमाः पितरः सोम्यासः ।
असुं य ईयुरवृका ऋतज्ञास्ते नोऽवन्तु पितरो हवेषु ॥[15]

शङ्खस्यार्षम् । उच्छब्द[16] ऊर्ध्वतायाम् । ईरतां ईरते[17]र्गच्छतिकर्मणो लोणमध्यमपुरुषस्य 'आत्मनेपदेष्वनतः'[18] इति[19]। ऊर्ध्वं पितृलोकमीरतां गच्छन्तु[20] । अवरे[21]ऽवस्थाः पृथिवीस्थाः । उत्परास ऊर्ध्वमेव परे द्युस्था इत्यर्थः । उन्मध्यमा ऊर्ध्वमेव मध्यमा अन्तरिक्षस्थाः । पितरः सोम्यासः 'पैत्रीश्च यामीश्च शंसन्ती'[22] इत्यादि स्तुतिकर्मत्वेन सर्वेऽपि सोमसम्पादिनः । किञ्च असुं प्राणं य ईयुर्गताः । स्थूलं विग्रहं त्यक्त्वा सूक्ष्माः प्राण[23]रूपतामापन्ना इत्यर्थः । अवृका वृकस्य[24]

---

१–'पाद' इति नास्ति B. C. M.
२–ऋग्द्रष्टा B. ऋ श्रष्टा C.
३–वेधसः वेधस् B. वेधः पेध C.
४–'या' इति नास्ति B. C.
५–'अशक्यमध्यवसातुं' नास्ति M. अग्रे 'वेधः' इति B. C. M.
६–'दुरवगाहकर्माणः' इति त्रुटितम् B.
७–प्रज्ञा ह B. C. 'दुरवगाहप्रज्ञा वा' त्रुटितम् M.
८–आंगिर B. C.
९–'अग्नेः' इत्यस्मात्परं 'अग्निकः' इत्यधिकः पाठ उपलभ्यतेB. C.
१०- पराता ('ता' नास्ति C.) त्पर्येण B. C
११–ष्टमो C. व्याख्यातः B.
१२–[निरु० ४।११]
१३–'वच' इति त्रुटितम् B. C.
१४–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।
१५-[ऋ० १० । १५ । १] 'उदीरताम्' इत्येव प्रतीकः B. C. M.
१६–'च्छ' इति त्रुटितम् C. १७–इर्तेर्गतिक M.
१८–[पा० ७ । १ । ५] १९–इतीट् B.
२०–गच्छन्ति B. C.
२१–अपरे पर C.
२२–[अनुपलब्धमूलमिदं वचनम्] मीश्चरं सति C.
२३–प्राणरूपनामाप B.C. त्वक्त्वा सूक्ष्माः प्राण M.
२४–अवृक B. अरीवृक C.

साहश्यादू वृको हिंसकः [शत्रुरिति][1] तद्वर्जिताः । अनुग्राहका[2] इत्यभिप्रायः । तथा च 'अक्रोधनाः शौचपराः'[3] इत्यादि स्मरणम् । ऋतज्ञाः सत्यस्य यज्ञस्य वा ज्ञातारः । ते नोऽस्मान् द्वितीयाश्रुतेः प्रतीति शेषः । अस्मान् प्रति । अवन्तु अवतिर्गतिकर्मा गच्छन्तु[4]। पितरो हवेषु[5] आह्वानेषु सत्सु । आहूताः सन्त इत्यभिप्रायः ।

सोमसम्पादिनः कर्मण्यंगभावं[6] गच्छन्तः सोमं सम्पादयन्ति । अनमित्राः परं सत्यमुपगताः । अपरेषा परेषां च मध्यस्थानत्वप्रतिपादनायाह माध्यमिको[7] यमः । स च तेषां राजा पितृपतिरुच्यते । तत्सम्बन्धात्सर्वानेव मध्यमान्मन्यन्ते नैरुक्ताः ।

अतः परावथर्वाणो भृगव इति द्वौ देवगणौ समाम्नातौ । न च तयोर्व्यस्तयोः समस्तयोर्वा स्तुतिरस्ति । अस्ति त्वंगिरसः[8] पितृसाधारण्येन तत्प्रदर्शनायाथर्वाण इत्यस्यापौनरुक्त्यार्थं[9] [अङ्गिरः प्रभृतीन्] कृत्व्याख्यानाननूद्याथर्वणं निराह । अथनवन्त इति । नैरुक्तधातुश्चरत्यर्थः । तस्याथर्व[10] इत्येवं रूपस्यार्थेणं[11] छान्दसो[12] वकारलोपः । गमनवन्त इत्यर्थः । तत्प्रतिषेधोऽथर्वणमगमनम्[13] । तेनाथर्वणेनागमनेन[14] तद्वन्तोऽथर्ववन्तः[15] सन्तोऽथर्वाणः । अथर्वा अथर्वतेरनिप्रत्ययः[16] । अथर्वाणो गन्तारः । यस्तु भाष्येऽथनशब्दः । असावथर्वशब्दस्यैवार्थविवरणम् । भृगुर्भज्यमानो न देहेन वचनकृतो विशेषः । तेषामेषा समानस्तुतिः ।

[ इति षोडशस्या- (एकादशस्या-) ध्यायस्य अष्टादशः खण्डः ][17]

---

## [ अथ एकोनविंशः खण्डः ।][17]

अङ्गिरसो नः पितरो नवग्वा अथर्वाणो भृगवः सोम्यासः ।
तेषां वयं सुमतौ यज्ञियानामपि भद्रे सौमनसे स्याम ॥[18]

यमस्यार्षम् । अङ्गिरसो नोऽस्माकं च पितरः । कीदृशाः ? नवग्वा मासे मासे पिण्डपितृयज्ञे गतिर्येषाम् । नवनीते वा मनसो गतिरभिलाषो येषां ते । अथर्वाणश्च भृगवश्च सोम्यासो

---

१–शत्रुतिः त B. C. 'शत्रुरिति' नास्ति M.
२–ननुग्राहिका B. अननुग्राहका C.
३–[मनु० ३ । १९२]   ४- अगच्छन्तु M.
५–सवनेषु B.C.   ६–ण्यनभावं B. ण्यनवभागंC.
७–माध्यमिको यमः B.   ८-गिरः पितृ B. C.
९- रुक्त्यम् B. C. अग्रे 'अंगिरः प्रभृतीन्' इति नास्ति M.
१०–तस्या धर्म B. C.   ११–स्यथर्व C.
१२–तच्छान्दसो B. C.
१३–वर्णे गम B.
१४–णेन गम B. C.   १५–'व' इति नास्ति C.M.
१६–अथर्वा थर्वते C.
१७–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारभ्यस्य च निर्देशो न दृश्यते
१८–[ऋ० १० । १४ । ६] 'अंगिरसो नः' इत्येव प्रतीकः B. C. M.

ये सोमसम्पादिनस्तेषां वयं सुमतौ शोभनायामनुग्राहकबुद्धौ यज्ञियानां यज्ञार्हाणाम् । अपि-श्चार्थो भद्रशब्दाच्च परो द्रष्टव्यः । भद्रे च सौमनसे कल्याणे सौमनस्ये प्रीतावित्यर्थः । स्याम भवेमेत्याशास्महे ।

नवनीतगतय इति । विज्ञायते हि 'स्वयं विलीनमाज्यं पितॄणाम्' इति । भन्दनीये स्तुत्ये । भाजनवति वा येन मनसा भाजयन्ति अभिमतैः कामैः सम्बन्धयन्तीत्यर्थः ।

अङ्गिरा इत्यादि मध्यमस्थानो देवगण इति नैरुक्ताः । तदधिकारे समाम्नानात् । पितर इत्याख्यानविदः पौराणिकाः स्मरन्ति । ते सनत्कुमारादयो देवविशेषा एव । तथा चाह 'मेने हैरण्यगर्भस्य' इति । पितृगणा इव ···पसं हरन्नाह य एते गुणमुख्याः पितॄणा-मिति । 'ऋषिभ्यः पितरो जाताः पितृभ्यो देवदानवाः' इति च । प्रसङ्गादाह । अथाप्यृषयः स्तूयन्त इति ।

[इति षोडशस्या-(एकादशस्या-)ध्यायस्य एकोनविंशः खण्डः ।]

## [अथ विंशः खण्डः ।]

सूर्यस्येव वक्षथो ज्योतिरेषां समुद्रस्येव महिमा गभीरः ।
वातस्येव प्रजवो नान्येन स्तोमो वसिष्ठा अन्वेतवे वः ॥

इन्द्रस्यार्षम् । सूर्यस्येव वक्षथो वचनस्य ज्योतिः प्रकाशः । एषां युष्माकं वसिष्ठानाम् । समुद्रस्येव महिमा माहात्म्यम् । महिम्नो विशेषणं गभीर इति । गम्भीरमोजस्वि दुरवगाहार्थे

१–श्चार्थ्यो द्रशब्दा B. C.
२–'न' इति त्रुटितम् C. ३ हवेमे C.
४–[मैत्रा० सं० ३ । ६ । २]
५–भजनीये B. C. M. ६–यतीत्यर्थः B. C.
७–'ख्यम' इति त्रुटितम् B. C.
८–'ना' इति त्रुटितम् C. ९–तेन B. C.
१०–[अनुपलब्धमूलमिदं वचनम्] हैरिण्य C.
११–पितृगणा इव मि......पसंहारं नाह (पसंहार-यन्नाह C.) । य एते गुणमुख्याः पितॄणा-मिति B. C.
१२–[अनुपलब्धमूलमिदं वचनम्]
१३–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।
१४–[ऋ० ७ । ३३ । ८] 'सूर्यस्येव' इत्येव प्रतीकः B. C. M.
१५–यषां C. M.
१६–अत्र 'स्ये' इत्यस्मात्परं 'व' इत्यस्माच्च पूर्वं 'तिपितृगणा इव मि......पसहरन्ना । ये इते गुणमुख्याः पितॄणामि' इति पाठो B. पुस्तके, 'मि पितृगणा इव मि' इति च C. पुस्तके पाठो ऽधिक उपलभ्यते । अयमेतावान् पाठोऽत्राऽ-संगतार्थ एव ।
१७–गभि गम्भीर B. C. १८–जस्विनः दुर B. C.
१९–'हा' इति त्रुटितम् B.

च युष्माकं वचनमित्यर्थः। वातस्येव च प्रजवः प्रकृष्टो जवो वेगो यस्य नान्येन केनचित् स्तोमः हे वसिष्ठा अन्वेतवे आनुपूर्व्येन। तुमर्थे तवेन्[1]प्रत्ययः। अनुगन्तुं शक्यत इति शेषः। किम्? अयं स्तोमः। वो युष्माकं स्वभूतः[2]।

आप्त्या[3] इन्द्रसहचारिमध्यमस्थानो देवगणः। सर्वव्यापित्वादाप्नोतेः। एकतादय इत्याख्यानम्। ऋषीणामेव सताम्[एषां[4]]मन्त्रेषु स्तुतिदर्शनादिन्द्रसाचर्यान्मध्यमे च स्थाने समाम्नातमेतदङ्गिरः प्रभृती ां द्रष्टव्यम्। तेषामेव स्तुतिसन्निपातो भवति ऐन्द्र्यामृचि।

[इति षोडशस्या-(एकादशस्या-) ध्यास्य विंशः खण्डः।][5]

## [अथ एकविंशः खण्डः।][5]

स्तुषेय्यं पुरुवर्पसमृभ्वमिनतममाप्त्यमाप्त्यानाम्।

आ दर्षते शवसा सप्त दानून् प्र साक्षते प्रतिमानानि भूरि॥[6]

बृहद्दिवस्यार्षम्। स्तौतेः कृत्यार्थे सेय्यैक्[7]। स्तुषेय्यं स्तोतव्यमित्यर्थः। अत्र चैकवाक्यत्वाय भाष्यकारेण परस्ताद्यच्छब्दोऽध्याहृतः। यच्छ्रुतेस्तच्छ्रुतिरध्याहार्या। तमिन्द्रमहं स्तौमीति वाक्यशेषः। कीदृशम्? पुरुवर्पसं[9] वर्प[10] इति रूपनाम बहुरूपम्। ऋभ्वं[11] उरुभूतं महान्तमित्यर्थः। इनतमं इनं[12] ईश्वरोऽतिशयेनेश्वरम्। आप्त्यमाप्तव्यं[13][14] च स्तुतिभिः। केषाम्[15]? आप्त्यानामाप्तव्यानामृषीणाम्। 'कृत्यानां कर्तरि वा'[16] इति षष्ठी। आ दर्षते[17] आदारयति। यः शवसा[18] बलेन। किमादारयति[19]? सप्त दानून् दातॄनुदकस्य मेघान्। दानवचनो दानुशब्दः। नमुचिप्रभृतीन् दानवानित्यर्थः। किञ्च प्र साक्षते साक्षतिराप्नोतेरर्थे प्रकर्षेण च व्याप्नोति। प्रतिमानानि[20] उपमानानि[21]। भूरि प्रथमा[22]बहुवचनस्य लुक् 'सुपां सुलुक्'[23] इति। भूरीणि हि बहूनि।

---

१–[पा० ३।४।९]
२–स्वभूतम् B. ३–आप्त्यो B. C.
४–'एषां' इति नास्ति M.
५–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते।
६–[ऋ० १०।१२०।६] 'स्तुषेय्यम्' इत्येव प्रतीकः B. C. M.
७–स्तेयैत् B. सन्दिग्धः पाठः
८–स्तात् ततश M.
९–पुरुवर्चसं B. पुरुषवर्पसं C.
१०–सर्पे B. पर्पे C. ११–ऋभवं C.
१२–इनमीश्वरमति B. १३–आप्य B. C.
१४–'आप्तव्यं' इति द्विर्लिखितम् B. C.
१५–तेषाम् C १६–[पा० २।३।७१]
१७–आददते आदरयति C.
१८–'यः' नास्ति B C. 'श' इति त्रुटितम्। अग्रे 'यसा' इति पाठः C.
१९ दारेति C. २०–'प्रति' इति नास्ति B. C.
२१–'उपमानानि' इति त्रुटितम् B.
२२–प्रथम बहु B. २३–[पा० ७।१।३९]

एतदुक्तं भवति । यान्यस्योपमानान्युपादीयन्ते तेभ्यो[1]ऽधिकतर इन्द्र उर्णः[2] । सप्त दानून् 'दाभाभ्यां नुः[3]' इत्यौणादिको[4] ददातेर्नुः[5] । दानुर्दाता । भाष्ये तु दानानीत्ययमेवार्थो बहुवचनात् कर्तरि ल्युट् प्रदर्शितः[6] । ददातीति दानम्[7] । तद्दानूनित्यर्थः ।

इति निरुक्तविवरणसमुच्चये षोडशस्या-[एकादशस्या-][8]ध्यायस्य द्वितीयः पादः[9] ।

---

## अथ तृतीयः पादः[10] । [अथ द्वाविंशः खण्डः][11]

[अथातो मध्यस्थानाः स्त्रियः । तासामदितिः प्रथमागामिनी भवति ।
अदितिर्व्याख्याता । तस्या एषा भवति ।][11]

**अथातः शब्दावुक्तार्थौ । प्रथमागामित्वं[12] चादितेरदीन[13]त्वाद् देवमातृत्वा[14]च्च । तस्या एषा ।**

**[इति षोडशस्या-(एकादशस्या-) ध्यायस्य द्वाविंशः खण्डः ।][15]**

---

## [अथ त्रयोविंशः खण्डः ।][15]

दक्षस्य वादिते जन्मनि व्रते राजाना मित्रावरुणा विवाससि ।
अतूर्तपन्थाः पुरुरथो अर्यमा सप्तहोता विषुरूपेषु जन्मसु ॥[16]

**गयस्यार्षम् । अ[17]दितिः प्रातस्तनी सन्ध्या । सा चावश्यायलक्षणरसानुप्रदानसम्ब[18]न्धान्मध्यमस्थाना वोच्यते । हे** अदिते दक्षस्य **'दक्ष वृद्धौ[19]' इत्यस्य । दक्षः प्रवृद्धप्रज्ञ इहादित्यो-ऽभिप्रेतस्तस्य । वाशब्दो** जन्मनि व्रते **वे[20]त्यर्थः । उदयोऽत्र जन्माऽभिप्रेतः[21] । व्रतमिति कर्मनाम ।**

---

१-भ्योऽतिक B. C. २-सन्दिग्धमिदं पदम् ।
३-[उणा० ३ । ३२]
४-'दाभाभ्यां नुः । इत्यौणादिको' इति पाठस्त्रुटितः B. C.
५-ददात्यानुः B. ददभ्याभ्यनुः C. ६-र्शिकः C.
७-दानः C. ८-अयं कोष्ठकान्तर्गतः पाठो नास्त्यादर्शपुस्तकेषु ।
९-'इति षोडशस्य द्वितीयः पादः' इत्येव पाठः C.
१०-अयं सर्वोऽपि पादाद्यारम्भात्मकः पाठो नास्ति C.
११-अयं मूल पाठो नास्ति B. C.
१२-मगामि B. मगामीत्वं C.
१३-चातोऽदीB चादितो अदी C. १४-मात्रत्वाB.C.
१५-आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।
१६-[ऋ० १० । ६४ । ५] 'दक्षस्य वा' इत्येव प्रतीकः B. C.
१७-'अदितिः' इति त्रुटितम् B.
१८-प्रधान सम्बन्धा मध्य B. C.
१९-[धा० १ । ६०९] वृ...दित्यस्य B. वृ क्यस्य C.
२०-'वे' इति त्रुटितम् B. 'ि व्रते वेत्यर्थः' इति त्रुटितम् C. २१-भिमतः C.

उदयाख्ये जन्मनि कर्मणि 'यस्य च भावेन भावलक्षणम्'[1] इति द्वे अपि सप्तम्यौ। उदयाख्ये कर्मणि[2] सति उद्यदादित्य इत्यर्थः । वा शब्द[3]श्रुतिसामर्थ्याद्वा दक्षस्य[4] वा जन्मनि त्वत्तस्तव वा जन्मनि दक्षादित्येवमध्याहार्यम् । त्वत्तो जायमान आदित्ये[5] आदित्या[6] त्वयि जाय[7]मान इत्यर्थः । राजाना मित्रावरुणा 'अहर्वै मित्रो रात्रिर्वरुणः'[8] इति श्रुतेरहोरात्रावत्र मित्रावरुणावुच्यते । तौ विवा[9]ससि विवसतिः परिचर्यायां परिचरसि । कथम् ? तदनुप्रवेशेनार्धं[10] हि सन्ध्यायां रात्रिमनुप्रविशति अर्धमहः। लोकेऽपि हि[11] योऽयं परिचरति स तद्भावानुप्रवेशेनैव।

ऐतिहासिकानां त्वदितिर्देवमाता सोच्यते । उद्यत्यादित्ये[12] तं प्रजानामुपकुर्वन्तं दृष्ट्वा दीप्यमानौ मित्रावरुणौ विवाससि । अत्र व्याख्याने विवासतिराशास्तेरर्थे । ततश्चायमर्थः । आशास्से अप्येतावपि प्रजानामेवोपकुर्वतामिति ।

परोऽर्धर्चो दक्षस्य विशेषणार्थः । अतूर्त[13]पन्थास्त्वरतेस्तूर्तोऽतूर्तस्त्वरावर्जितः पन्था यस्य स नियतगतित्वाच्चेदमुच्यते । त्वरमरणो ह्यनियतगतिर्भवति । पुरुरथो रथो रंहतेः । प्रत्यहं भुक्तिभेदात् बहुरंहण[14]ः । अर्यमा अरीणां[15] तमसां यन्ता नियन्ता । सप्तहोता जुहोतेः[16]। सप्त र[17]श्मयो यस्मिन् रसान् जुह्वति प्रक्षिपन्ति सः । अथवा सप्तहोतेति न जुहोतेः । ह्वयतेरर्चतिकर्मण इदं रूपम् । सप्तर्षयो भरद्वाजादयो होतारो यस्य । विषुरूपेषु विषमरूपेषु जन्मसु उदयाख्येषु कर्मसु । सप्त[18]मीश्रुतेर्वर्तत इति शेषः । विषमरूपत्वं चोदयानां दक्षिणायणे उत्तरायणे चानियतगतित्वेन प्रत्यया[19]दन्यस्मिंश्च प्रदेशे नभस उन्मानात्[20] । योऽतूर्तपन्था इत्यादिगुणस्तस्य दक्षस्य जन्मनीत्येवं यत्तदावध्याहृत्यैकवाक्यता योज्या । 'हवि[21]ष्मान् आविवासति' इति परिचर्यायामित्यस्य सिद्धये दृष्टान्तः ।

यो अ॒ग्निं दे॒ववी॑तये ह॒विष्मा॑ँ आ॒विवा॑सति । तस्मै॑ पावक मृळय ॥[22]

मेधातिथेः । यो भवन्तमग्निं[23] देववीतये वीतिर्गतिर्देवान् प्रति वीतये गमनाय । अशनार्थो

---

१–[पा० २ । ३ । ३७]
२–'यस्य च भावेन' इत्यारभ्य 'कर्मणि' इत्यन्तः पाठस्त्रुटितः B.
३–शब्दः श्रुति B. ४–'स्य' इति त्रुटितम् B. C.
५–आदिन्ये C. ६–दित्या वा त्व B. C.
७–'यमा' इति त्रुटितन B. C.
८–[ऐ० ब्रा० ४ । १० । अहर्मित्रः तां० ब्रा० २५।१०।१० मैत्रं वा अहः तै०ब्रा०१।७।१०।१।]
९–विवासति B. C. १०–सन्ध्या च रात्रि B. C.
११–लोकोपि B. C 'हि' इति नास्ति B.
१२–इत्यदादित्ये दं प्रजा C. इत्यादित्ये B.
१३–अरूर्थपन्थाः C.
१४–बहुरहेण B. १५–अरितानां B. C. M.
१६–'जुहोतेः' इत्यस्य च स्थाने 'जुहोता' इति पाठः B. C.
१७–सप्त योयरश्म B. १८–'मी' इति त्रुटितम् B.
१९–प्रत्ययमन्य B.C. २०–इमानात् B. उपमानात् C.
२१–हविष्ठां आवि C.
२२–[ऋ० १ । १२ । ९] 'यो अग्निं देववीतये' इत्येव प्रतीकः B. C. M. २३–मग्निर्देव B. C.

वा वीतिः । देवैर्भक्षणाय । हविष्मान आविवासति परिचरति । तस्मै द्वितीयार्थे चतुर्थी तम । हे पावक पावयितः मृळय[2] सुखय ।

अथ कोऽयं दक्षः ? अदितेः पुत्र आदित्यो दक्ष इत्याहुर्ब्रह्मविदः[3] । आदित्यमध्ये च स्तुत इति । च शब्दो हेतौ । यस्मादादित्यमध्ये स्तुतो दक्षः । 'इमा गिर आदित्येभ्यः'[4] इत्यत्र इदं तर्हि कथं यदैतिहासिका आहुः । अदितिर्दाक्षायणीति । उभयमपि चेदं निगमे श्रूयते । आदित्यो दक्षोऽदितिर्दाक्षायणीति । तद्यथा 'अदितेर्दक्षो अजायत'[5] इत्युदाहरणम् । [6]...

[इति षोडशस्या-(एकादशस्या-) ध्यायस्य त्रयोविंशः खण्डः ।][7]

---

## [ अथ चतुर्विंशः खण्डः । ][7]

यस्मै त्वं सुद्रविणो ददाशोऽनागास्त्वमदिते सर्वताता ।
यं भद्रेण शवसा चोदयासि प्रजावता राधसा ते स्याम ॥[8]

....[9] ।

[इति षोडशस्या-(एकादशस्या-) ध्यायस्य चतुर्विंशः खण्डः ।][7]

---

## [अथ पञ्चविंशः खण्डः ।][7]

किमिच्छन्ती सरमा प्रेदमानड् दूरे ह्यध्वा जगुरिः पराचैः ।
कास्मेहितिः का परितक्म्यासीत् कथं रसाया अतरः पयांसि ॥[10]

[11]......। तीर्णवत्यसि । पयांसि उदकानि । अथवा कथंरसा इत्येतावदेकं पदं प्रथमाबहुवचनान्तम् । या इत्येतदपि पदान्तरं द्वितीयाबहुवचनान्तम्[12] । कथंरसानि किं प्रकाराणि रसानि[13] यानि त्वमतरः[14] उदकानीति शाखान्तरापेक्षमेतद् भाष्यकारस्य व्याख्यानं द्रष्टव्यम् ।

१—ष्मत् सन् आवि C.
२—ळया सु B. C. ३—ब्रह्मवादाः B. C.
४—[ऋ० २ । २७ । १] ५—[ऋ० १० । ७२ । ४]
६—अत्राखण्डपरिसमाप्तेर्भूयान् पाठस्त्रुटित आदर्शपुस्तकेषु ।
७—आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।
८—[ऋ० १ । ९४ । १५]
९—यस्मै त्वमिति ऋचः सर्वमपि व्याख्यानमत्रादर्शपुस्तकेषु त्रुटितम् ।
१०—[ऋ० १० । १०८ । १]
११ अस्यापि मन्त्रस्य भूयान् व्याख्याभागस्त्रुटितः B. C.
१२—इदं वाक्यं त्रुटितम् B.
१३—प्रकार रसानि C.
१४—त्वमन्तर उदकानिति B. C.

अपीत[1] इति पाठः। आचित[2] इति तु प्रमादपाठः। परितक्म्या[3] रात्रिः। कस्मात् ? तकति[4] ईषतीति तकतेर्गतिकर्मणः। सर्वतो गच्छतीति। अथवा तक्मोष्णं[5] तत्परित उभयत एनां[6] परिगृह्य वर्तत इति। तदुक्तं तक्मेत्युष्णनाम[7] तर्कतीति सत इति[8]। तेन परिमितकर्मा स······ परितक्म्येति[9]। अथवा परितक्म्या[10] परितकनं परिभ्रमणम्। कीदृशमासीत् भ्रमणकरणेति[11] ? रसा नदी भवति योजनशतविस्तीर्णा। सव······लक्षणेन रसेन शब्देन शब्दवती। समूदे[12] समुदितवती संवादं कृतवतीत्यर्थः। एवमियमाख्यानपक्षे[13] योजना।

यदा तु माध्यमिकवाक्[14] सरमा तदैवम्। अनावृष्ट्या पीडितो नदन्तं[15] स्तनयित्नुमुपश्रुत्य सासूयं मन्त्रदृगाह। किमिच्छन्ती सरमा[16] मध्यमस्थाना वाक्। इदमस्मच्छ्रोत्रं[17] प्रानट्। समानमन्यत्। परितक्म्या परितकनं[18] अतीते कालेऽस्मान् मुक्त्वा[19] क्वान्यत्र परिभ्रमणम्। तत् किमासीत् ? केन वा कारणेनेत्यर्थः।

सरस्वती नदीवत् 'इमं मे गङ्गे' इत्यत्र[20] व्याख्याता। देवतावद् व्याख्यायते। तथा च 'तत्र सरस्वतीत्येतस्य' इत्यादिनोत्कृष्टस्य देवतापदस्यायमवसरः।

[ इति षोडशस्या-(एकादशस्या-) ध्यायस्य पञ्चविंशः खण्डः।[21] ]

———

## [अथ षाड्विंशः खण्डः।[21]]

पावका नः सरस्वती वाजेभिर्वाजिनीवती। यज्ञं वष्टु धियावसुः ॥[22]

मधुच्छन्दसः। परा च। पावका पवतिरत्र[23] सामर्थ्यात् क्षरणार्थो [ द्रष्टव्यः[24] ] 'सोमः

---

१–आपीत B.
२–साम्प्रतं मुद्रितनिरुक्तपुस्तकेषु 'अचित' इति पाठ उपलभ्यते।
३–परित्यक्ष्या रात्रिं क (त) स्मा B. परितक्ष्या रात्रिः C. ४–'त' इति त्रुटितम् B.
५–त्रा क्वोष्णं B. वा त्वोष्णं C.
६–एनान् B. एना C. ७–तर्के मन्युष्णनाम B.C.
८–साम्प्रतं मुद्रितनिरुक्तपुस्तकेषु 'तकत इति सतः' इति पाठः।
९–तक्ष्येति B. C. १०–परितक्ष्या B. C.
११–अयं पाठः सन्दिग्धः।
१२–'समूदे' इति त्रुटितम् B.
१३–ख्यातपक्षे B. C. १४–मिकवान् B.
१५–नदतः B. नदत C. १६–न्तीति रसमा मध्य B.
१७–च्छेत्रं प्राक् B. च्छ्रेत्रं प्राट् C.
१८–परितक्ष्या परितकनं (त्नं) B. C.
१९–स्मान् दुक्त्वा C.
२०–[निरु० २ । २३]
२१–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते।
२२–[ऋ० १ । ३ । १०] 'पावका नः' इत्येव प्रतीकः B. C. M.
२३–'प' इति त्रुटितम्।
२४–'द्रष्टव्यः' इति नास्ति M.

पवते जनिता मतीनाम्' इति यथा। क्षरित्री उदकानाम्।'नोऽस्माकं स्वभूतं यज्ञमिति सम्बन्धः। सरस्वती मध्यमस्थाना वाक्। कीदृशी? वाजेभिर्वाजिनीवती वाजो बलं वेगो वा तद्वती वाजिनी। कासौ? सरस्वत्याः स्वभूता सेना तद्वती वाजिनीवती सरस्वती। अथवा वाजं हविर्लक्षणमन्नं तद्यस्या अस्ति सा वाजिनी यागसन्ततिस्तद्वती वाजिनीवती सरस्वती। सा यज्ञं वष्टु 'वश कान्तौ' कामयताम्। कामनेन चात्रागमनं सम्भजनं च लक्ष्यते। यो हि यत्कामयते [स] तदागच्छति सम्भजते च। आगच्छतु सम्भजतां चेत्यर्थः। धियावसुः धीरिति कर्मनाम। वस्विति धननाम। कर्म यागलक्षणं [वसु] धनं यस्याः सा कर्मधना प्रज्ञाधना वा।

अथवा वसेराच्छादनार्थस्य वसुशब्दः।'शृस्वृस्निहि'इत्यादिना उप्रत्ययान्तः। धिया कर्मणा वृष्टिलक्षणेन प्रज्ञया वा छादयित्री यार्थानाम्। तस्या एषापरा व्यक्ततरा मध्यमलिङ्गप्रदर्शनार्था। पूर्वस्यां तु पावका पावयित्रीत्यपि स्यात्।

[इति षोडशस्या-(एकादशस्या-) ध्यायस्य षड्विंशः खण्डः।][13]

---

## [अथ सप्तविंशः खण्डः।][13]

महो अर्णः सरस्वती प्र चेतयति केतुना।
धियो विश्वा वि राजति[14]॥

महद् बहु अर्णो मेघस्थमुदकम्। सरस्वती मध्यमस्थाना वाक्। प्र चेतयति प्रज्ञापयति। केतुना कर्मणा गर्जिताख्येन। गम्भीरं हि गर्जितं श्रुत्वा महदत्र मेघ उदकमिति प्रज्ञायते। केतुशब्दोऽपठितोऽपि कर्मनाम प्रज्ञानामेव वा। कुत एतत्? 'वैश्वानरस्य विमितानि चक्षसा' इत्यत्र मन्त्रे प्रयोगदर्शनात्। अत्र हि चक्षसेत्यनेन प्रज्ञाया उपात्तत्वादसन्दिग्धं केतुशब्दस्य कर्मवचनत्वम्। प्रज्ञया वा यया गर्जन्ति वर्षन्ति च। धियः कर्माणि प्रज्ञा वा।

---

१-[ऋ० ९।९६।५]
२-नीवती याग B. C. ३-[धा० २।७०]
४-'स' इति नास्ति M.
५-वा B. C. 'वसु' नास्ति M. ६-यद्वा B.
७-[उणा १।१०] शृ...स्थि नहि B.
८-धिया वा कर्मणा वा लक्षणेन B.
९-वार्थानाम् B. C.
१०-'परा' इति त्रुटितम् B. ११-नार्थः B. C.
१२-पावयतीत्यपि B. C.
१३-आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते।
१४-[ऋ० १।३।१२] 'अहो अर्णः' इत्येव प्रतीकः B. C. M.
१५-पतेयति C. १६-गभित्सहि B. C.
१७-'वा' इति त्रुटितम् B C.
१८-[ऋ० ६।७।६] पक्षसा B. C.
१९-मन्त्रप्रयोग B. C.
२०-ससेत्यनेन B. C. २१-यया वा गर्जन्ति B.

विश्वा सर्वा। वि राजति राजतिर्दीप्त्यर्थः। सामर्थ्याच्चात्रान्तर्णीतण्यर्थः। विविधं दीपयति वृष्टिद्वारेण यागकर्माणि। प्रेक्षां वा दीपयति तृप्तस्योन्मीलयति प्रेज्ञाम्[2]। बुभुक्षितस्य न प्रतिभाति किञ्चित्[3]। अत उच्यते। तस्य निष्पत्तिद्वारेण धियो विराजतीति। अथवा धिय इति तद्वदुपलक्षणम्। धीमन्ति सर्वाणि भूतानि प्रतीत्यर्थः। विराजति विविधं दीप्यते ईष्टे।

कथं पुनरवगम्यते मध्यमस्थाना सरस्वतीति। उच्यते। वागर्थेषु विधीयत इति। वागर्थेषु वाचो मध्यम[4]स्थानाया अर्थेषु साध्येषु वर्षक्षरणस्तनयित्नुलक्षणेषु स्तुतिहेतुभूतेषु सरस्वती साधकत्वेन विधीयन्ते[5] विविधं स्थाप्यते उदाह्रियते। यस्मात्[6] माध्यमिकां वाचं मन्यन्ते नैरुक्ताः।

वाग् व्याख्या[7]ता। 'वाक् कस्मात्[8]? वचेः' इत्यत्र। तस्या एषा।

[इति षोडशस्या-(एकादशस्या-) ध्यायस्य सप्तविंशः खण्डः।][9]

---

## [अथ अष्टाविंशः खण्डः।]

यद्वाग्वदन्त्यविचेतनानि राष्ट्री देवानां निषसाद मन्द्रा।
चतस्र ऊर्जं दुदुहे पयांसि क्व स्विदस्याः परमं जगाम॥[10]

नेमस्य। परा च। यद् यदा वाक् माध्यमिका वदन्ति[11] अविचेतनानि अप्रज्ञातार्थानि स्तनयित्नुलक्षणानि शब्दरूपाणि। राष्ट्री ईश्वरनामैतत् ईश्वराः [प्राहुः[12]] कस्येश्वराः? देवानां माध्यमिकानाम्। निषसाद दिषीदति वर्षितुमन्तरिक्षे। मन्द्रा[13] स्तोतव्या हर्षयित्री वा। यच्छ्रुतेस्तदध्याहारः। तदा[14] चतस्रो दिशः प्रतीति शेषः। ऊर्जं दुदुहे क्षरन्ति। पयांसि उदकानि उदकलक्षणं रसमित्यर्थः। अथवा ऊर्जमित्यन्ननाम[15]। कारणे[16] च कार्यशब्दः। ऊर्जोऽन्न[17]स्य[18] कारणभूतानि पयांसि। क्षरितस्य चेतरस्य अस्याः स्वभूतस्य यत् परमं श्रेष्ठं तत् क्व जगाम क्वापि जगति न दृश्यत इत्यर्थः। तदाह भाष्यकारः। यत्पृथिवीं गच्छति यदादित्यरश्मयो हरन्तीति

---

१—इदं वाक्यं त्रुटितम B.
२—'प्रज्ञा' इत्येव B. C. ३—किञ्च C.
४—थ्यम' इति त्रुटितम् B. C.
५—यन्ते B. अस्मात्परं 'इति वाचो म स्थानया अर्थेषु साध्येषु' इत्यधिकः पाठः B.
६—यस्मान्माध्यमिका नैरुक्ताः B. C.
७—'ख्या' इति त्रुटितम् C.
८—[निरु० २। २३] 'त् व' इति त्रुटितम् C.
९—आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते।
१०—[ऋ० ८। १००। १०] 'यद्वाग्वदन्ती' इत्येव प्रतीकः B. C. M.
११—वदन्ती B. C. १२—'प्राहुः' नास्ति M.
१३—मन्त्रा B. C. १४—'तदा' इति त्रुटितम् M.
१५—ऊर्जीत्यन्न B. 'ऊर्जित्यन्न C. १६—करणे B.C.
१७—ऊज्यो न्यस्य C. १८—जन्म B. C.

वा। मन्द्रा मदना। अनुः प्रतिना समानार्थः।

तस्यैषापरा। किमर्था[1] ? इयमेव[2] माध्यमिका वाक् सर्वप्राण्यन्तर्गता धर्माधर्माभिवादिनी भवतीति[3] विभूत्युपदर्शनार्था भवतीति।

[ इति षोडशस्या- ( एकादशस्या- ) ध्यायस्य अष्टाविंशः खण्डः ][4]

---

## [ अथ एकोनत्रिंशः खण्डः। ][4]

देवीं वाचमजनयन्त देवास्तां विश्वरूपाः पशवो वदन्ति।
सा नो मन्द्रेषमूर्जं दुहाना धेनुर्वागस्मानुप सुष्टुतैतु॥[5]

तच्छ्रुतेर्यदध्याहारः। यां देवीं मध्यमस्थानां वाचमजनयन्त जनयन्ति। के ? देवा माध्यमिकाः। विश्वरूपाः सर्वरूपाः। पशवो[6] वदन्ति ये च व्यक्तवाचो ये चेतरे[7]। तत्पूर्वकत्वाद्[8]-वाक् प्रवृत्तेः[9]। सा नो[10] मन्द्रा मदना स्तुत्या हर्षयित्री वा वृष्टिप्रदानद्वारेण इषमन्नमूर्जं च पयो घृतादिकं च[11] रसं दुहाना क्षरन्ती[12]। धेनुस्थानीया वागस्मानुपैतु उपगच्छतु वर्षितुं प्रवर्ततामित्यर्थः। सुष्टुता सुष्ठु स्तुतास्माभिः।

अनुमतिर्देवता काचिद्द्रष्टव्या। अनुमतिः कस्मात् ? अनुमननात्[13]। अनुमता किलासौ देवैर्ऋषिभिश्च[14] चतुर्दशके पक्षे। चतुर्दश्यपि सत्यस्त्वियं पौर्णमासीति[15] तिथ्यादानविच्छेदकृतं पूर्वोत्तरत्वम्। केचिन्मन्यन्ते। यदा[16] चतुर्दश्या मानं[17] पञ्चदश्यां[18] विच्छेदः। तदा तयोः पूर्वोत्तरत्वम्[19]। परमपि पञ्चदश्या मानं प्रतिपदि विच्छेदः। तदा तयोः। यदोभयं पञ्चदश्यां न पूर्वा नोत्तरा[20]। तदा च 'यां पर्यस्तमयं प्राण उदियात्[21]' इत्यादि लक्षणं पौर्णमास्यमावास्ययोः पूर्वोत्तरत्वे। तदेतत्पूर्वोत्तरं[22] पूर्वोक्तं ऋतुविकारपक्षे पौर्णमास्यमावास्ययोश्चतु-

---

१–किमर्थम् B. २–य इमे वा माध्य C.
३–भवन्तीति B.
४–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते।
५–[ऋ० ८। १००। ११] 'देवीं वाचम्' इत्येवं प्रतीकः B. C. M.
६–'च' इति त्रुटितम B. C.
७–वशं वा B. पशं वा C.
८–तरत्पूर्व B. ९–पूर्वतत्वा C.
१०–'सा नो' इति त्रुटितम् B.
११–'च' इति नास्ति C.
१२–रक्षतीति B. C. १३–अनुमानात् C.
१४–श्चतुर्द B. C. १५–सीनि तिथ्या B. C.
१६–यथा B. १७–मानानं B. C.
१८–पञ्चदश्या B. C. १९–त्तरात्वम् B. C.
२०–'नो इति त्रुटितम् B.
२१–[अनुपलब्धमूलमिदं वचनम्] उद्रियात् B.
२२–'पूर्वोत्तरं' अस्मात्परं 'पूर्वोक्तं पूर्वोतत्वं' इति पाठः C. पुस्तके। B. पुस्तके तु 'पूर्वोक्तत्वं' इत्येव पाठः।

देशीपञ्चदशीप्रतिपद्विषयत्वेन विहितं च[1] प्रसिद्धं च । तस्या एषा ।

[इति षोडशस्या-(एकादशस्या-) ध्यायस्य एकोनत्रिंशः खण्डः ।[2]]

## [अथ त्रिंशः खण्डः ।]

अन्विदनुमते त्वं मन्यासै शं च नस्कृधि ।
क्रत्वे दक्षाय नो हिनु प्र ण आयूंषि तारिषः ॥[3]

वामदेवस्य । इत्[4] पदपूरणः । अनुमन्यासै अनुमन्यस्व यदनुमन्तव्यम् । हे अनुमते त्वं शं [च[5]] सुखं च नोऽस्माकं कृधि । इषमन्नं[6] च तोकायापत्याय नोऽस्माकं स्वभूनाय दधो देहि । प्रतारिष[7] इति सम्बन्धः । तरतिश्च वृद्ध्यर्थः । प्रवर्धय च नोऽस्माकमायूंषि ।

पञ्चदशके पक्षे राकेत्युच्यते[8] पञ्चदशी प्रतिपद्वा । राका[9] कस्मात् ? रातेर्दानार्थस्य । दीयते हि तस्यां[10] देवेभ्यो हविः । तस्या एषा ।

[इति षोडशस्या-(एकादशस्या-) ध्यायस्य त्रिंशः खण्डः ।[2]]

## [अथ एकत्रिंशः खण्डः ।[2]]

राकामहं सुहवां सुष्टुती हुवे शृणोतु नः सुभगा बोधतु त्मना ।
सीव्यत्वपः सूच्याच्छिद्यमानया ददातु वीरं शतदायमुक्थ्यम् ॥[11]

गृत्समदस्य[12] । राकां मध्यमस्थानां कालविशेषाधिदेवतां वा । अहं सुहवां सुह्वानाम्[13] ।

---

१–'हि' इति त्रुटितम् C.
२–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।
३–[तै० सं० ३ । ३ । ११] 'अन्विदनुमते' इत्येव प्रतीकः B. C. M.
४–उत्पद B. C. ५–'च' नास्ति M.
६–'क्रत्वे दक्षाय नो हिनु' इत्यस्य स्थाने 'इषं तोकाय नो दधः' इति पाठः काठकसंहितायां [१३ । १६] वर्तते । अयमेव पाठो भाष्यकारस्याप्यभिमत इति प्रतीमः । यतो भाष्ये यास्काचार्यः 'अन्नं च नो ऽपत्याय धेहि' इति व्याख्याति । दुर्गमहेश्वरावपीममेव पाठं विवृणुतः । एवं च काठकसंहितापाठस्य स्थाने ऽयं सर्वमुद्रितपुस्तकेषु समुपलभ्यमानस्तैत्तिरीयसंहितापाठः कथंचित् प्रमादादन्यथा वात्र सन्निविष्ट इति निश्चितम् । ७–प्रतिरिष B. C.
८–य त नो C. ९–राका C.
१०–तस्या B. तस्या देवेत्यो C.
११–[ऋ० २। ३२।४] 'राकामहम्' इत्येव प्रतीकः B. C. M.
१२–'दस्य' इति त्रुटितम् C.
१३–स्वाह्वानाम् C. स्वाह्वानाम् B.

सुष्टुती तृतीयैकवचनस्य पूर्वसवर्णः शोभनया स्तुत्या। हुवे ह्वयतेर्लटि आत्मनेपदोत्तमैकवचने 'बहुलं छन्दसि' इति सम्प्रसारणे शपश्च लुकि कृत एतत्। हुवे ह्वयामि। सा च ह्वयमाना शृणोतु नोऽस्माकम्। सुभगा सुधना। श्रुत्वा च बोधतु बुध्यतु त्मना आत्मनैव यदस्माकं कर्तव्यम्। किं पुनस्तत्? उच्यते। सीव्यतु सन्तनोतु। अपः कर्मनामैतत्। कर्म प्रजोत्पत्तिलक्षणम्। सूच्या पुत्रपौत्रादिसन्ततिलक्षणया। अच्छिद्यमानया। ददातु वीरं पुत्रं शतदायं शतानां दातारमर्थिभ्यः। उक्थ्यम् वक्तव्या प्रशंसा यस्य तं वक्तव्यप्रशंमनुपक्षीणकीर्तिमित्यर्थः।

सिनीवालीत्यादि पूर्वेण कृतव्याख्यानम्। प्रविभज्य निराह। सिनमन्नम्। सिनाति बध्नाति। विनश्यन्तं धारयतीत्यर्थः। वालं पर्व अमावास्याख्यम्। पर्व कस्मात्? वृणोतेः। वृण्वन्ति हि तत्र देवता हवींषि तस्मिन् पर्वणि। अनेन हविर्लक्षणेनान्नवती वालिनी वा। तस्यां केशश्मश्रुवपनश्रुतेः। वालैस्तद्वती वालिनी। सिनी चासौ वालिनी चेति सिनी वाली देवपत्नी। पक्षे चैतन्निर्वचनम्। पृथुकेशस्तुकत्वादुपमानाद्वा। कथमुपमानम्? वालेनेवेत्यादि। सेवितव्यः सम्बद्धव्यः। दृष्टचन्द्रा चेयम्। तथा चोत्तरस्यां 'गृहपतेः' इत्यादिनिगमोपपत्तिः। तस्या एषा।

[इति षोडशस्या-(एकादशस्या-) ध्यायस्य एकत्रिंशः खण्डः।][18]

---

## [अथ द्वात्रिंशः खण्डः।][19]

सिनीवालि पृथुष्टुके या देवानामसि स्वसा।
जुषस्व हव्यहुतं प्रजां देवि दिदिड्ढि नः[20]॥

गृत्समदस्य। हे सिनीवालि मध्यमस्थाने देवपत्नि पूर्वामावास्याधिदेवते वा। पृथुष्टुके

---

१—'स' इति त्रुटितम् B. C. २—घयते C.
३—[पा० ६ । १ । ३४] ४—शब्लुकि B.
५—मान शृणो B. ६—सन्तनोत C.
७—प्रजोपपत्ति M.
८—'सिनिवा' इति द्विर्लिखितम् C.
९—कुथा विनश्यसति B. C.
१०—'कस्मात्' इति द्विर्लिखितम् C. 'पर्व' इति नास्ति B. C.
११—पृणोतेः C. १२—प्रणवन्ति C. M.
१३—नातवती पालिनि वा C.०णेन तद्वती सिनीवालिनि M.
१४—'वालिनी' नास्ति B. C.
१५—'चेति सिनी' इति त्रुटितम् C.
१६—पक्षेति चेत C.
१७—स्तुकं चादुप B. स्तुतं चादुप C.
१८—[आप० श्रौ० सू० १२ । २७ । ६]
१९—आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते।
२०—[ऋ० २ । ३२ । ६] 'सिनीवालि' इत्येव प्रतीकः B. C. M. २१—देवपत्नी B. C.

स्तुकः स्त्यायतेः संघातो नितम्बः केशपाशरूपो वा । यद्वा स्तुकशब्देन स्तुतिरुच्यते । तेनायमर्थः । पृथुनितम्बे पृथुकेशपाशे पृथुस्तुके । या त्वं देवानामसि स्वसा साहचर्याद् भगिनीस्थानीया । सा त्वं जुषस्व सेवस्व । इदं हव्यं हविः । आहुतं मर्यादया हुतम् । प्रजां प्रजा च हे देवि दिदिड्ढि प्रदिश देहि । नोऽस्मभ्यम् ।

स्वसा कस्मात् ? [सु असा] सुष्ठु पतिकुले क्षेसव्गा । [ इति पाठस्तु ] सुखावबोधनार्थः । स्वेषु सीदतीति वा । सुशब्दः स्वशब्दो वा पूर्वपदम् । अस्यतेः सदेर्वोत्तरपदम् ।

कुहूः कस्मात् । गूहतेर्धातोः । गूढो ह्यदृश्यश्चन्द्रमास्तत्र तत्र भवति । अतश्चन्द्रमसो गूहनाद्वर्णव्यापत्या कुहूः । क्वाभूदिति वा । तस्यामप्रत्यक्षत्वाद्वितर्क्यश्चन्द्रमा भवति । क्व पुनरसावभूदित्येवम् । अतः कुहूः । सैव वा देवतारूपत्वादप्रत्यक्षत्वात् क्व सती वर्तमाना हूयत इति कुहूः । उभयत्र वाक्यार्थे पदवचनम् । नैरुक्तपक्षेऽपि यथासम्भवमनुमत्यादीनां निर्वचनानि योज्यानि । तस्या एषा ।

[ इति षोडशस्या-( एकादशस्या- ) ध्यायस्य द्वाविंशः खण्डः ][11]

---

## [अथ त्रयस्त्रिंशः खण्डः][11]

कुहूमहं सुकृतं विद्मनापसमस्मिन्यज्ञे सुहवां जोहवीमि ।
सा नो ददातु श्रवणं पितॄणां तस्यै ते देवि हविषा विधेम ॥[12]

वामदेवस्य । कुहूं भवतीम् । अहं सुवृतं वर्तनं वृत्त शोभनं वर्तनं यस्याः । शोभनं वर्तते गच्छतीत्यर्थः । शोभनं यां वृणोति ताम् । विद्मनापसं अपः कर्म विद्मनाशब्दो विदितशब्दस्यार्थे विदितकर्माणम् । अस्मिन् प्रकृते यज्ञे । सुहवां सुह्वानाम् । जोहवीमि पुनः पुनर्ह्वयामि । सा च भवंती नोऽस्मभ्यं ददातु । श्रवण श्रवणीयम् । पितॄणां सम्बन्धि पितृभ्य आगतं पित्र्य-

---

१–तिमुच्य C. २–'सा' इति त्रुटितम् B.
३–प्रजाः प्रजां B.
४–दिदी प्रदर्श देहि C. 'प्र' नास्ति B.
५–'सु' इति नास्ति B. C. 'सु असा' नास्ति M.
६–निति…धनार्थं B. C.'इति पाठस्तु' नास्ति M.
७–सुशब्दो C. ८–त्वमभूदिति तस्या B.
९–'वा' इति नास्ति C.
१०–'नैरुक्तपक्षेऽपि' इत्यारभ्य 'विद्मनापसं' इत्यन्तः पाठस्त्रुटितः B.
११–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।
१२–[ मै० सं० ४ । १२ । ६ ] 'कुहूमहं' इत्येव प्रतीकः B. C. M.
१३–'सुकृतं' इत्यस्य स्थाने बहुत्र 'सुवृतं' इति पाठो दृश्यते । अत्र स एव पाठो महेश्वरेणाङ्गीकृत्य व्याख्यातः ।
१४–वर्तिते B. C. १५–शोभनया पृणोति B. C.
१६–शब्दौ B. C. १७–भवति B. C.

मित्यर्थः। किं तत्? सामर्थ्याद्धनं यशो वा। तस्यै ते तुभ्यं हे देवि हविषा द्वितीयार्थे तृतीया हविर्विधेम विदधातिर्दानार्थः[1]। दम्नः[2]।

अथवा तस्यै ते इति द्वे अपि चतुर्थ्यौ द्वितीयार्थे[3]। हविषेति [तु][4] तृतीया स्वार्थ एव। तां त्वां[5] हविषा विधेम परिचरेम। भाष्ये[6] सुष्टुत्या शोभनया स्तुत्या अर्थप्राप्तार्थवचनम्। विदधतिर्दानिकर्मेति[7] व्याख्यातम्।

यमी व्याख्याता यमेन। तस्या एषा।

[इति षोडशस्या-(एकादशस्या-) ध्यायस्य त्रयस्त्रिंशः खण्डः][8]

---

## [अथ चतुस्त्रिंशः खण्डः।][9]

अन्यमू षु त्वं यम्यन्य उ त्वां परि ष्वजाते लिबुजेव वृक्षम्।
तस्य वा त्वं मन इच्छा स वा तवाधा कृणुष्व संविदं सुभद्राम्[10]॥

यमी यमं चकमे। तामसावनया[11] प्रत्याचचक्षे। एवं संवादसूक्तशेषः। ऊ सु पदपूरणौ। एवशब्दस्यार्थे वा। अन्यमेव त्वं[12] हे यमि परिष्वंक्ष्यसे न मामित्यर्थः। अन्य उ त्वामन्यश्च त्वां परिष्वजाते[13] लट्स्थाने पञ्चमः परिष्वंक्ष्यते नाहम्। लिबुजेव[14] वृक्षं व्रततिरिव वृक्षम्। तस्य वा वाशब्दश्चार्थे तस्य च[15]। त्वं मन इच्छा वशवर्तिनी भवेत्यर्थः। स वा तव[16] स च तव। अधा[17] अथानन्तरं च तेन सह कृणुष्व संविदं परस्परावियोगलक्षणपरिभाषां[18] सुभद्रां कल्याणीम्।

यदा नैरुक्तपक्षे मध्यमस्थाना यमी। तदा मध्यमस्थानो यमो वायुर्वैद्युतो वा। वर्षकाले व्यतीते तामाह। प्रागस्माद् वर्षकालादष्टौ[19] मासान्। अन्यमूषु त्वमित्यादि। एवमुभयथा योज्यम्।

इति निरुक्तविवरणसमुच्चये षोडशस्या-[एकादशस्या-][20] ध्यायस्य तृतीयः पादः[21]।

---

१—विदधिर्दानार्थः C. विदधतिर्दा B.
२—दम्नः दम B दध्मः दमः C. ३—द्वितीयात्वे M.
४—'तु' इति नास्ति M. ५—त्वा त्वां B.
६—अत्र खण्डे नेदं भाष्यमस्ति।
७—'इति' इति नास्ति B. 'व्याख्यातम्' नास्ति B.C.
८—[निरु० १०। १९]
९—आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते।
१०—[ऋ० १०। १०। १४] 'अन्यमूषु' इत्येव प्रतीकः B. C. M
११—तमसा B. C.
१२—त्वं विगममि B. त्वा हे यमि C. १३—जादेर्लेट्.
१४—लिजुजेव वृकतीरिव C. वृक्षं' नास्ति B.
१५—तस्य व C. १६—स वा कव C.
१७—'अथ' नास्ति B. 'अधा' नास्ति C.
१८—रापियोगलक्षणं परि C. १९—कालाद्रष्टौ मासान् B.C.
२०—अयं कोष्ठकान्तर्गतः पाठो नास्त्यादर्शपुस्तकेषु।
२१—'इति षोडशस्य तृतीयः पादः' इत्येव पाठः C. 'अध्यायस्य' इति M. पुस्तके नास्ति।

## अथ चतुर्थः पादः ।[1] [अथ पञ्चत्रिंशः खण्डः][2]

उर्वशी व्याख्याता 'उरु अभ्यश्नुते'[3] इत्यादिना । तदिहापि यथासम्भवं योज्यं निर्वचनम् । तस्या एषा ।

[इति षोडशस्या-(एकादशस्या-) ध्यायस्य पञ्चत्रिंशः खण्डः][2]

---

## [अथ षट्त्रिंशः खण्डः ।][2]

विद्युन्न या पतन्ती दविद्योद्भरन्ती मे अप्या काम्यानि ।
जनिष्ठो अपो नर्यः सुजातः प्रोर्वशी तिरत दीर्घमायुः ॥[4]

उर्वशीपुरूरवसोः संवादे[5] पुरूरवा मध्यस्थान ऐळो वा । नैरुक्तपक्षे[6] मध्यमस्थानः स्तनयित्नुलक्षणाया वाचोऽधिष्ठात्री याँ देवता तामाह । विद्युन्न या[7] नशब्द उपमार्थत्वात् सम्प्रत्यर्थे । अथवा स्वार्थ एव । विद्युदिव या स्तनयित्नुलक्षणाया वाचोऽधिदेवता । पतन्ती गच्छन्ती[8] दविद्योत् द्योतते भरन्ती[9] हरन्ती प्रापयन्ती मां प्रति । मे मम । अप्या आप्तव्यानि । काम्यानि कामयितव्यान्युदकानीति शेषः । अपशब्दः समूहवचनो वा ।[10] [अप्या][11] अप्संघातरूपाणीत्यर्थः . यच्छ्रुतेस्तदध्याहारः । तस्याः सकाशात्तत इत्यर्थः । [ जनिष्ठ उ[12] ] जनिष्ट उकारः पदपूरणः । छान्दसत्वाद्वर्तमाने लुङ् अडभावश्च जायते । कः ? सामर्थ्यादुदकसंघातः । अपः अप इत्यन्तरिक्षनाम । बहुवचनस्य स्थाने इदमेकवचनं पञ्चम्याः षष्ठ्या वा । यदा पञ्चम्यास्तदाऽद्भ्योऽन्तरिक्षादित्यर्थः । यदा षष्ठ्यास्तदा अधीति[13] शेषः । अपोऽधि अन्तरिक्षस्योपरीत्यर्थः । तद्भाष्यकार आह । यदा नूनमयं जायेताद्भ्योऽध्यप इति । कीदृशः संघातः ? नर्यो नृभ्यो हितः । सुजातः संजातः सुसम्भृत इत्यर्थः । यदेति भाष्ये श्रुतत्वात् तदेत्यध्याहारः । अथ तदा तेन संघातेन सस्यनिष्पादनद्वारेण प्रतिरतेत्यन्वयः सोर्वशी प्रतिरत प्रवर्धयति दीर्घमायुः सर्वमनुष्याणाम् । यस्मात् 'अन्नमयाः प्राणाः'[14] । 'सर्वमन्ने प्रतीतम्'[15] ।

---

१–अयं सर्वोऽपि पादाद्यारम्भात्मकःपाठो नास्तिC M.
२–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।
३–[निरु० ५ । १३] उर्वध्यन्नुत C.
४–[ऋ० १० । ९५ । १०] विद्युन्न या' इत्येव प्रतीकः B. C M.
५–'उर्वशीपुरूरवसोः संवादे' अयं पाठस्त्रुटितः B.C.
६–मध्यमस्थानस्थावन्नैरुक्तपक्षे B. C.
७–'या' इति नास्तिB.C. ८–पतन्ति गच्छन्तिC.
९–तेर्भवन्तीC. १०–अप्यशब्दो वा समूहवचनःB.C.
११–अप्सा C. 'अप्या' नास्ति M.
१२ इ जनिष्ट इकारः B. C. 'जनिष्ट उ' नास्ति M.
१३–आसीतिB.C. १४–अनुपलब्धमूलमिदं वचनम्
१५–अत्र 'प्रतिष्ठितम्' इति स्यात् । तथा चेदमर्द्धं पद्यस्य भवति 'यस्मादन्नमयाः प्राणाः सर्वमन्ने प्रतिष्ठितम्' इति ।

यदा त्वैतिहासिकपक्षस्तदा[1] उर्वश्यप्सरा[2] पुरूरवाश्चैळः । विद्युदिव योर्वशी[3] पतन्ती गच्छन्ती देविद्योत्[4] विद्योतते । भरन्ती प्रापयन्ती[5] च रतिकाले मे मम[6] । आप्तव्यानि कामानि च मधुरशिञ्जितानीति । अत्रापि यच्छ्रुतेस्तदध्याहारः । तस्याः सकाशादाहितगर्भाया यदा जनिष्टो जनिष्यते[7] आयुर्नाम । अप आप्नोतेः । छान्दसं ह्रस्वत्वम् । आप्नोतीत्यापः पचाद्यचि रूपम् । आप्ता सर्वकर्मणामित्यर्थः । नर्यो नरस्यापत्यं मम । सुजातः सम्पूर्णावयवः । अथ तदास्य सोर्वशी पुत्रस्नेहेन प्रवर्धयिष्यति दीर्घमायुरित्येव योज्यम् ।

नर्यो नृभ्यो हितः । मनुष्य इत्यतिरिक्तपाठः । अन्तरिक्षलोकस्येत्यपि । नरापत्यमिति चेत्यैतिहासिकरक्षाभिप्रायः ।

पृथिवी व्याख्याता 'प्रथनात् पृथिवी' इति[8] । इह तु मध्यमस्थानाभिधेया[9] । तस्या एषा ।

[इति षोडशस्या-(एकादशस्या-) ध्यायस्य षट्त्रिंशः खण्डः ।][10]

---

## [ अथ सप्तत्रिंशः खण्डः । ][10]

बळित्था पर्वतानां खिद्रं बिभर्षि पृथिवि ।

प्र या भूमिं प्रवत्वति मह्ना जिनोषि महिनि ॥[11]

अत्रार्षम् । बळिति सत्यनाम । इत्थाशब्दोऽमुत्रेत्यस्मिन्नर्थे । सत्यममुत्रान्तरिक्षे वर्तमानानां पर्वतानां मेघनामैतत्[12] मेघानाम् । खिद्रं खेदनकरम्[13] । किं तत्? सामर्थ्याद् बलम् । बिभर्षि धारयसि हे पृथिवि[14] विद्युत्स्तनयित्नुलक्षणाया वाचोऽधिदेवते । प्रजिनोषीति[15] सम्बन्धः । या त्वं भूमिं हे प्रवत्वति प्रवर्थस्य[16] प्रवत इति । प्रवद्धात्रोदकम्[17] । प्रवणं[18] चागमनम् । तेन तद्वति हे उदकवति [ गमनवति[19] ] वेत्यर्थः । मह्ना महता उदकेन । जिनोषि जिन्वतेः प्रीतिकर्मण इदं रूपं प्रजिन्वसि[20] प्रकर्षेण प्रीणयसीत्यर्थः । हे महिनि[21] महो महत्व-

---

१—सिकस्तदा B. 'पक्ष' इति त्रुटितमत्र ।
२—प्सरसां B. ३-शीव पत B. C.
४—तविद्योत् द्योतते C. ५—हरन्ति प्रापयन्ति C.
६—मम मे B. ममम C
७—जनिष्ट इतीष्यते B. जनिष्ठो इतिष्यते C.
८—[निरु० १ । १४]
९—स्थायाभिधेया B.
१०—आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।
११-[ऋ०५।८४।१] 'बळित्था' इत्येव प्रतीकः B.C.
१२—मेघानामै (मे B.) तत् B. C.
१३—खीन्द्रं खिदन C.
१४—थिवि द्युस्तन B. थिवी विद्युस्तन C.
१५—व्रजिनो C. १६—अयं पाठः सन्दिग्धः ।
१७—प्रवद्धात्र उदकम् B. C.
१८—णवत्यागम B. प्रवणश्चागम M.
१९—'गमनवति' नास्ति M.
२०—प्रजिद्वसि B. C. २१—महनी C.

मुदकं वा प्रभूतं तेन तद्वति । तदाह भाष्यकारः । महतीत्युदकवती वेति ।

बलमित्यध्याहृतम् । इत्थेत्यस्यामुत्रेत्यर्थवचनम् । प्रवत्वतीत्यस्य[2] व्याख्यानं प्रवणवतीति ।

इन्द्राणी माध्यमिका । इन्द्रस्य वा पत्नी । तस्या एषा ।

[ इति षोडशस्या-( एकादशस्या- ) ध्यायस्य सप्तत्रिंशः खण्डः । ][3]

---

## [ अथ अष्टात्रिंशः खण्डः । ][3]

इन्द्राणीमासु नारिषु सुभगामहमश्रवम् ।

न ह्यस्या अपरं चन जरसा मरते पतिः विश्वस्मादिन्द्र उत्तरः ॥[4]

वृषाकपेरार्षम् । इन्द्राणीं[5] माध्यमिकामिन्द्रस्य वा भार्याम् । आसु नारिषु निर्धारणे सप्तमी । आसां नारीणां मध्ये । सुभगां भगशब्दो धनवचनः[6] । उदकलक्षणेन धनेन सुधनाम् । इन्द्रभार्यापक्षे सौभाग्ययुक्ताम् । अहमश्रवं श्रुतवानस्मि । हि शब्दोऽप्यर्थे । अपरं चन अपरमपि संवत्सरं प्राप्येति शेषः । यो यः संवत्सरो वर्तते ततस्ततः संवत्सरान्तेऽपीत्यर्थः । जरसा वयःपरिणामेन । मरते म्रियत इति प्राप्ते व्यत्ययेन शप्[7] म्रियत इत्यर्थः । पतिर्विश्वस्मात् सर्वस्मादुत्तर इन्द्रः । तमेतमिन्द्रमधिकृत्यैतद्ब्रूम इत्याह भाष्यकारः ।

तस्याः प्रकृताया एषापरा । किमर्थमिति चेत् । उच्यते । नेह प्रसिद्धो वृषाकपिः ऋषिः । किन्तर्हि ? द्युस्थानोऽभिप्रेतः । नैरुक्तानां तु तदुपप्रदर्शनायेन्द्रो ब्रवीति ।

[इति षोडशस्या-( एकादस्या-) ध्यायस्य अष्टात्रिंशः खण्डः][8]

---

## [ अथ एकोनचत्वारिंशः खण्डः ।][8]

नाहमिन्द्राणि रारण सख्युर्वृषाकपेर्ऋते ।

यस्येदमप्यं हविः प्रियं देवेषु गच्छति । विश्वस्मादिन्द्र उत्तरः ॥[9]

नेति प्रतिषेधार्थीयो रारणेति[10] सम्बध्यते । अहं हे इन्द्राणि न रारण रणते रमतेरर्थे वर्ते-

---

१–इत्थेस्थामुत्रे B २–वत्ववतीत्य B.

३–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।

४–[ऋ० १० । ८६ । ११] 'इन्द्राणीमासु' इत्येव प्रतीकः B. C. M.

५–इन्द्राणी...मिका...भार्या B.

६–ब्दोथवचनः C. ब्दोर्थवचनः B.

७–शप् मरते म्रियत M.

८–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।

९–[ऋ० १० । ८६ । १२] 'नाहमिन्द्राणि' इत्येव प्रतीकः B. C. १०–रारणेतीति B. C.

मानाद्[1] वर्तमानकाले लुट्युत्तमैकवचनमेतत्[2] । न रम इत्यर्थः । सख्युर्वृषाकपेर्ऋते सख्या[3] वृषाकपिना आदित्येन ऋषिर्णा[4] विनेत्यर्थः । यस्यादित्यस्य[5] षष्ठीश्रुतेरर्थायेति शेषः[6] । ऋषिपक्षे तु स्वभूतमिच्छति । इदमप्यं अप्सु कृतं च व्याख्यातम् । अद्भिर्वा संस्कृतं सोमाख्यं हविः । प्रियं देवेष्विति षष्ठ्यर्थे देवानां प्रियं गच्छति आहवनीयप्रदेशम् । विश्वस्मात्सर्वस्मादिन्द्र उत्तरः । इन्द्रोऽहं न रमे[7] इति सम्बन्धः ।

अत्र नैरुक्तपक्षप्रदर्शनायोच्यते । किं योऽयमिति[8] वृषाकपिरिति प्रसिद्धो मनुष्येषु । नेत्युच्यते । यस्येदमप्यं हविरिति । देवतायाश्च हविषा[9] सम्बन्ध [इति][10] नैरुक्ताः । ऐतिहासिकपक्षे तु यस्य स्वभूतमिति स्वस्वामिसम्बन्धः प्रदर्शितः । तदेतं[11] ब्रूम इत्याह भाष्यकारः पूर्ववत् ।

गौरी मध्यमस्थाना स्तयित्नुलक्षणा वाग् विद्युद्वा[12] । या दीप्त्या दीप्तत्वाद्रोचते- ज्वलतिकर्मण इत्याह । प्रसंगादाह वर्णोऽपि गौर एतस्मादेव धातोः । स हि प्रशस्यो भवति कृष्णादिभ्यः । तस्या एषा ।

[ इति षोडशस्या-( एकादशस्या-)ध्यायस्य एकोनचत्वारिंशः खण्डः ][13]

---

## [ अथ चत्वारिंशः खण्डः । ][13]

गौरीर्मिमाय सलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पदी ।
अष्टापदी नवपदी बभूवुषी सहस्राक्षरा परमे व्योमन् ॥[14]

दीर्घतमसः । परा च । गौरीः छान्दसत्वात्[15] हल्ङ्यादिलोपाभावः । गौरी मध्यमस्थाना । मिमाय 'माङ् माने'[16] इत्यस्य छान्दस लिटि रूपम् । निर्मिमीत इत्यर्थः । किम् ? सामर्थ्यात् कृत्स्नं जगत् । किं कुर्वती[17] ? उच्यते । वृष्टिलक्षणानि सलिलानि तक्षती करोतिकर्मायं कुर्वती[18] ददतीत्यर्थः । एकपदी पदमाश्रयो[19] वृष्टिकर्मणि सहकारिकारणम् । एकं

---

१–मानः B. मानाः C.
२–मेतन्नामे (म इ C.) त्यर्थः B. C.
३–सखा B.C. ४–अत्र 'ऋते' इति युक्तः स्यात् ।
५ 'स्य' इति त्रुटितम् C.
६–'शेष' इति नास्ति B. C. ७–हन्नरमिति C.
८–अत्र 'इति' इत्ययमधिक एव ।
९–'हविषा' इति द्विर्लिखितम् B.
१०–'इति' इति नास्ति B. C. M.
११–तमेतत् C. तमेतं M.
१२–विधर्वा B. विद्यर्वा C.
१३–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।
१४–[ऋ० १ । १६४ । ४१] 'गौरीर्मिमाय' इत्येव प्रतीकः B. C. M.
१५–गौरीं छान्दसत्वात् हल्यादि M.
१६–[धा० ३ । ६ ॥ ४ । ३६]
१७–कुर्वन्ति C. कुर्वन्ती B.
१८–कुर्वन्ती B. C. १९–श्रयवृष्टि B. C.

पद्मांश्रयः सहकारि कारणमस्याः सा। केनैकेन? मध्यमेनं एकपदीत्युच्यते। द्विपदी द्वाभ्यां सहकारिकारणाभ्यां मध्यमेन चादित्येन द्विपदी। सा चतुष्पदी चतसृभिर्दिग्भिः। दिशोऽपि ह्यवकाशंदानेन सहकारिकारणत्वं प्रपद्यन्ते। अष्टापदी दिग्भिश्च। नवपदी आदित्यमध्यमयोरन्यतरेणं। बभूवुषी एकपद्यात्मना भवन्ती। यद्यद्वृष्टिकर्मणि सहकारिकारणं यदधीनं वृष्टिकर्म यत्र वा तत्सर्वमाश्रयन्तीत्यर्थः। सहस्राक्षरा सहस्रमिति बहुनाम अक्षरमित्युदकनाम बहूदकेत्यर्थः। परमे प्रकृष्टे व्योमन् अन्तरिक्षनाम लुक् सप्तम्याः व्योमन्यन्तरिक्षे सप्तमीश्रुतेः स्थितेति शेषः।

व्योमन्नित्यस्य निर्वचनं व्यवने 'अव गत्यादिषु' विविधमवनं यस्मिन्। तस्या एषापरा अनन्तरा एव। मध्यमैव गौरी न गुणयोगादन्या काचिदित्यर्थः।

[ इति षोडशस्या- ( एकादशस्या- ) ध्यायस्य चत्वारिंशः खण्डः[13] ]

---

## [ अथ एकचत्वारिंशः खण्डः। ][13]

तस्याः समुद्रा अधि वि क्षरन्ति तेन जीवन्ति प्रदिशश्चतस्रः।
ततः क्षरत्यक्षरं तद्विश्वमुप जीवति ॥[14]

तस्या गौर्या अधि उपरि। समुद्राः समुद्र इत्यन्तरिक्षनाम। तात्स्थ्याच्च ताच्छब्द्यम्। समुद्रस्थाः समुन्दनकारिणो वा मेघाः। वि क्षरन्ति विविधं क्षरन्त्युदकम्। तेन च क्षरितेन जीवन्ति। प्रदिशः प्रकृष्टा दिशश्चतस्रः। दिङ्निवासिषु च भूतेषु जीवत्सु दिशो जीवन्तीत्युच्यते। तेन चैतत् सकृदेव भवति। किं तर्हि? ततः क्षरति प्रतिवर्षम्। अक्षरमुदकम्। तद्विश्वं सर्वं जगदुपजीवति। अञ्जनं क्षरतीति भाष्यम्। अञ्जसा वाभिव्यञ्जयन् सर्वम्।

गौर्व्याख्याता। 'गौरिति पृथिव्या नामधेयम्' इत्यादिना। इह तु मध्यमोच्यते। तस्या एषा।

[ इति षोडशस्या-( एकादशस्या- ) ध्यायस्य एकचत्वारिंशः खण्डः।[18] ]

---

१–पदाश्रयः B. C. २–मध्यमेकेन C.
३–अवदानदानेन B. C. ४-स्वहकारिकरणत्वं C.
५–प्रतिपद्यन्ते B. C.
६–'ण' इति नास्ति B. C. अन्येतरे C.
७–पद्यात्मन्यात्मना भवन्ती (न्ति C.) B. C.
८–कर्मणः सह B. ९–'नं व्यव' इति त्रुटितम् B. व्यवमनेC. १०–[धा०१।६०१]अन गत्यादिषुB. C, अयमपि'अम' [धा०१।४६६]इत्यत्र वर्तते।
११–मननं B. C. 'ममनं' इति वा स्यात्।
१२–'अन्तरा' इत्येव B. C.
१३–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते। १४–[ऋ०१।१६४।४२]
'तस्याः समुद्राः' इत्येव प्रतीकः B. C. M.
१५–भवदिति B. १६–अञ्जन B. C.
१७–[निरु० २। ५] पृथिवीनाम B. C.
१८–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते।

## [ अथ द्विचत्वारिंशः खण्डः । ][1]

गौरमीमेदनु वत्सं मिषन्तं मूर्धानं हिङ्ङकृणोन्मातवा उ ।
सृक्वाणं घर्ममभि वावशाना मिमाति मायुं पयते पयोभिः ॥[2]

गौर्मध्यस्थाना वाक् । अभीमेदनु मीयतिः शब्दकर्मा अन्वमीमेत् । स्तनयित्नुलक्षणेन शब्देनानुशब्दयति[3] । वत्सं[4] रसहरणसामान्यादात्मनो वत्सं वत्सभूतमादित्यम् । मिषन्तं पश्यन्तं जगत्सर्वम् । मूर्धानं चास्य रश्म्याख्यं मध्यमस्थानमागतं प्राप्येति शेषः । हिङ्ङकृणोत्[5] हिङ्करोति । मातवा उ[6] उकारः पदपूरणः । मातवै मातुं मन्तुं वा ज्ञातुम् । ज्ञानायोदकस्ये-[7]त्यर्थः । न च[8] सकृदनुशब्दयति । किन्तर्हि ? सृक्वाणं सर्तेरेतद्रूपम् घर्मं हरतेरेतद्रूपम् । हर्तारं च रसानामादित्यम् । अभि वावशाना अत्यर्थमभिशब्दयन्ती[9] । मिमाति पुनः पुनर्मीयते । मायुं स्तनयित्नुलक्षणं शब्दम् । पयते प्यायतेर्वृद्ध्यर्थस्येदं रूपं । प्यायते प्रवर्धयते च । केन ? पयोभिः स्वेन दैवैरुदकैः[10] ।

गौरन्वमीमेद् वत्सं मिषन्तमादित्यमिति पाठः[11] । अनिमिषन्तमित्यपपाठः । प्रप्यायते पयोभिः । वागेषा माध्यमिकेति नैरुक्ताः । घर्मधुगिति याज्ञिकाः । अतस्तदभिप्रायेणान्यथा मन्त्रस्य योजना । गौर्[12] घर्मधुक् सानुशब्दयति वत्सं मिषन्तं तामेव मातरं निरीक्षमाणम् । मूर्धानं चास्य जिघ्रतीति शेषः । हिङ्करोति मातवै ज्ञानायात्मनः । स एवायं मदीय[13] उतान्य इति । सृक्वाणमित्यादि[14] समानयोजनम् । पयते प्यायते वर्धयते च । पयोभिः प्रस्नुतपीवरस्तनी बहुक्षीरा भवन्तीत्यर्थः ।

धेनुर्मध्यमस्थाना धयतेर्वा[15] पानार्थस्य । पीयते हि सा तत्प्रवृत्तवृष्ट्युदकद्वारेण । धिनोतेर्वा प्रीणनार्थस्य । प्रीणयति हि सा कृत्स्नं[16] जगत् । याज्ञिकपक्षे स्वक्षीरक्षरण-द्वारेण । तस्या एषा ।

[ इति षोडशस्या- ( एकादशस्या- ) ध्यायस्य द्विचत्वारिंशः खण्डः ][17]

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भस्य निर्देशो न दृश्यते ।
२–[ऋ० १ । १६४ । २८] 'गौरमीमेत्' इत्येव प्रतीकः B. C. M.
३–शब्दनं(द C.) यति B. C.
४–'वत्सं' इत्यत्र 'कर्मा' इति पाठः B. C.
५–निङ् कृणोत् भिङ् करोति C.
६–'उ' इति त्रुटितम् B. ७–योदयक B. ८–स च B. C.
९–यति B. यन्ति C १०–स्वेन भवेतै B.
११–मायुमादित्यवखुरव पाठः B. C.
१२–दौ घर्म B. C १३–'म' इति त्रुटितम् B.
१४–णं निमित्या B. सृक्षाणि मित्या C.
१५–'धयते' इति द्विर्लिखितम् C.
१६–कृत्स्नस्यजगत् C.
१७–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेर्निर्देशो न दृश्यते ।

# [अथ त्रिचत्वारिंशः खण्डः ।][1]

उप ह्वये सुदुघां धेनुमेतां सुहस्तो गोधुगुत दोहदेनाम् ।
श्रेष्ठं सवं सविता साविषन्नोऽभीद्धो घर्मस्तदु षु प्र वोचम् ॥[2]

अहं तावदुपह्वये । सुदुघां सुदोहनाम् । धेनुमुक्तनिर्वचनामेतां माध्यमिकां वाचं घर्मदुहं वा । सुहस्तः शोभनहस्तः कुशल इत्यर्थः । गोधुक् गोर्माध्यमिकाया दोग्धा इन्द्रः । घर्मदुहो वाध्वर्युः । उतशब्दोऽप्यर्थे । गोधुगपि दोहत् दोग्धु क्षारयत्वेनाम् । किं दोग्धु ? श्रेष्ठमतिशयेन प्रशस्यम् । सवं सूयतेऽभ्यनुज्ञात इति सव उदकलक्षणः पयोलक्षणो वा तम् । अभ्यनुज्ञात इत्यर्थः सविता आदित्यो यजमानो वा । असाविषत् सुवतु अभ्यनुजानातु । नोऽस्माकम् । कस्मात् ? [यस्माद्] अभीद्धोऽतिदीप्तो घर्मो ग्रीष्मसन्तापो महावीरो वा । ततस्तस्माद्हमं । उकारः पादपूरणः । सुप्रवोचं सुष्ठु ब्रवीमि । अभ्यनुजानात्विति स्व उदकम् ।

घर्मधुक्पक्षे पयो यजुर्भिः साविषत् [अभि] सुवतु अभ्यनुजानातु संश्रयमाणं पयो यजुष्मदिति संस्कारेण यजुषा तद्वत् । सुप्रब्रवीमीति पाठः ।

अघ्न्या मध्यमस्थाना । कस्मात् ? अघघ्नी अघस्य दुर्भिक्षादेर्हन्त्री । अहन्तव्या वा । घर्मधुक्पक्षे स्पर्शनेनाघस्य पापस्य हन्त्री । तस्या एषा ।

[ इति षोडशस्या- ( एकादशस्या- ) ध्यायस्य त्रिचत्वारिंशः खण्डः ][22]

---

१-आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते।
२-[ऋ० १ । १६४ । २६] 'उप ह्वये' इत्येव प्रतीकः B. C. M.
३-मुक्तिनि C.
४-'माध्यमिकां' इति त्रुटितम् B.
५-गौर्माध्य B. गौर्मध्य C.
६-दुघो वा B.
७-नेशब्दो C.
८-दोग्धुम् B. C.
९-दोग्धुः B.
१०-आसूयते B.
११-'वा' इति नास्ति B. C.
१२-सुवसु असतु जानातु B. C.
१३-नोऽस्माकम्' इति द्विर्लिखितम् C.
१४-'यस्मात्' नास्ति M.
१५-स्माद्देहं B. स्मादेहं C.
१६-'ष' इति त्रुटितम् C.
१७-विषाडाभिसु B. विषक् भिसुखतु C. 'अभि' नास्ति M.
१८-संस्कारकेण B. C.
१९-अघ्न्यपस्थाना C.
२०-देः (दे C.) अहन्त्री (न्ती C.) B. C.
२१-घर्ममधुक् C. घर्मार्थे या पयो दुग्धे सा घर्मधुक् घर्म इति दर्शयागार्थस्य पयसो नाम ।
२२-आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तिनिर्देशो न दृश्यते ।

## [ अथ चतुश्चत्वारिंशः खण्डः । ][1]

सूयवसाद्भगवती हि भूया अथो वयं भगवन्तः स्याम ।
अद्धि तृणमघ्न्ये विश्वदानीं पिब शुद्धमुदकमाचरन्ती ॥[2]

शोभनं यवसं सुयवसम्[3] । संहितिको[4] दीर्घः । किं तत् ? रश्म्युपहृतमुदकम्[5] । तस्यात्री सुयवसादिनी[6] सुयवसात् । भगवती भगं धनं तेनैव[7] रश्म्युपहृतेनोदकाख्येन धनेन धनवती । हिशब्दः पदपूरणः[8] । भूया भव । अथोऽनन्तरं तेनैव त्वत्प्रवृत्तेन धनेन वयमपि भगवन्तो धनवन्तः । स्याम भवेम । अद्धि[10] भक्षय च । [ संचूर्णय खादेत्यर्थः ] किम् ? तृणं तर्दनीयं मेघम् । अघ्न्ये माध्यमिके वाक् । विश्वदानीं छान्दसत्वाद्विश्वशब्दादपि[11] दानीं सर्वदा । पिब[12] रश्म्युपहृतम् । शुद्धम[13]कलुषम् । हे अघ्न्ये घर्मधुग् विश्वदानीं सर्वदा पिब[14] च शुद्धमकलुषितमुदकम् । आचरन्ती आभिमुख्येन मर्यादया वा चरन्ती[15] गव्यूतौ ।

तस्या एषापरा वसुसम्बन्धत्वान्माध्यमिकत्व[16]प्रदर्शनार्था ।

[ इति षोडशस्या- ( एकादशस्या- ) ध्यायस्य चतुश्चत्वारिंशः खण्डः[17] ]

---

## [ अथ पञ्चचत्वारिंशः खण्डः । ][17]

हिंकृण्वती वसुपत्नी वसूनां वत्समिच्छन्ती मनसाभ्यागात् ।
दुहामश्विभ्यां पयो अघ्न्येयं सा वर्धतां महते सौभगाय ॥[18]

हिङ् इत्येवं रूपं[19] स्तनयित्नुलक्षणं कुर्वती । वसुपत्नी वसु धनं वृष्ट्युदकाख्यं तस्या-

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।
२–[ऋ० १ । १६४ । ४०] 'सूयवसात्' इत्येव प्रतीकः B. C. M.
३–'य' इति त्रुटितम् B.
४–हिति का दीघ B.
५–तमुक्तम् B. C.
६–सादीनि B. C.
७–हृते उद B. C.
८–'व' इति त्रुटितम् C.
९–'पद' इति नास्ति B. C. M.
१०–अपि भक्षय च संचूर्णय वादेत्यर्थः C. 'च' नास्ति B. 'संचूर्णय खादेत्यर्थः' नास्ति M.
११–'अपि' इति नास्ति B.
१२–'ब' इति त्रुटितम् B. C.
१३–द्धमे कलुषः C.
१४–पि च B. C.
१५–वा आचरन्ती B. अस्मात्परमादर्शपुस्तकेषु 'गव्यूतौ' इति पदं दृश्यते। तच्चिन्त्यम् ।
१६–'ध्यमिकत्व' इति B पुस्तके 'ध्यमिक' इति च C. पुस्तके त्रुटितः पाठः ।
१७–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।
१८–[ऋ० १ । १६४ । २७] 'हिंकृण्वती' इत्येव प्रतीकः B. C.
१९–हि इत्येवं कृपस्तन C.

धिपतिभूता । वसूनां वसव आदित्यरश्मयो मरुतो वा तेषाम् । रसंहरणाद्वत्सं वत्सभूतमादित्यमिच्छन्ती मनसा । अभ्यागात् अभ्यागच्छतीति । दुहां दुग्धां दोग्धि वेत्यर्थः । अश्विभ्यां तादर्थ्ये चतुर्थी । अश्विनावत्र द्यावापृथिव्यौ सूर्याचन्द्रमसौ वा उच्येते । कुत एतत् ? कावाश्विनौ' इति प्रकृत्य एवमाद्यर्थप्रदर्शनात् । तयोरश्विनोरर्थायेत्यर्थः । किं दोग्धि । पयः उदकं वृष्टिलक्षणम् । अघ्न्या माध्यमिका वाक् । इयं पश्चात्सा वर्धतामिति तच्छ्रुतेर्यदध्याहारः । या सा रूपेण विद्योतनालक्षणेन वृष्ट्युदकेन वर्धताम् । ततःप्रवृत्योदकजन्याय महते सौभगाय सुभगत्वाय अस्माकमित्यर्थः ।

इतरपक्षे अघ्न्या घर्मधुक् सा हीत्येवं रूपं शब्दं कुर्वती । वसुपत्नी पय आदेर्धेनस्याधिपतिभूता । वसूनां वसवो हविर्भिः स्तुतिभिर्वा देवानामाच्छादयितार ऋत्विग्यजमाना इहाभिमतास्तेषाम् । षष्ठीश्रुतेः स्वभूतं वत्समात्मीयमिच्छन्ती मनसाभिगच्छन्ती दोग्धि च प्रवर्ग्ये अश्विनामश्विभ्यो वार्थाय । किं दोग्धि ? पयः। अघ्न्या घर्मधुक् । इयं गौः सर्वकर्मणि अध्वर्युणा दोहार्थयाहूयमाना पयसा वर्धताम् । महते सौभगाय सुभगत्वायास्माकमिति । पठित्वाह इति सा निगदव्याख्याना ।

पथ्या स्वस्तिः प्रकरणान्मध्यमस्थाना । तन्निवासात् । पथ्यन्तरिक्षे भवा पथ्या स्वस्तिशब्दोऽप्युक्तनिर्वचनः । प्रायणीयायां 'पथ्यां स्वस्ति प्रथमां प्रायणीये यजति' इति यथा दृष्टे द्वे पदे एवं समाम्नाते । स्वस्तिशब्देन अन्तरिक्षविषयपथिशब्दसम्बन्धेन मध्यमस्थानोच्यत इत्युदाहरणम् ।

[ इति षोडशस्या-( एकादशस्या- ) ध्यायस्य पञ्चचत्वारिंशः खण्डः । ][२४]

---

१–पतिभूत्वा B.
२–तो मुदकतेषाम् B. C.
३–संहरणात् संभृत B.
४–'वत्स' इत्येव त्रुटितम् C. ५–गच्छन्ती B.
६–दुग्धा हां दोग्धि C.
७–'अश्विनौ' इति त्रुटितम् B.
८–सौ सा सा उच्यते C. ९–[निरु० १२ । १]
१०–ततः प्रवृत्यो B.
११–'अस्मा' इति त्रुटितम् B. C.
१२–अर्घ्यार्घ्यमधुक् B. C.
१३–'कुर्वती । वसुपत्नी' इति त्रुटितम् C.
१४–अर्घ्यार्घमधुक् B. 'अर्घ्याघ' इत्येव । अग्रे त्रुटितम् C.
१५–'इयं' इति द्विर्लिखितम् B. 'इयं' इति त्रुटितम् C.
१६–मुद्रितपुस्तकेषु 'व्याख्याता' इति पाठः C.
१७–रणमध्य B. रणा मध्य C.
१८–भवत्या B. C. १९–[निरु० ३ । २१]
२०–सोमयागे प्रायणीया नामेष्टिस्तत्र ।
२१–[कौ० ब्रा० ७।८] २२–'यथा' इति नास्ति B. C.
२३–पदमेव समाम्नातं B. C.
२४–आदर्शपुस्तकेष्वत्र खण्डसमाप्ति निर्देशो न दृश्यते ।

## [ अथ षट्चत्वारिंशः खण्डः । ][1]

स्वस्तिरिद्धि प्रपथे श्रेष्ठा रेक्णस्वत्यभि या वाममेति ।
सा नो अमा सो अरणे नि पातु स्वावेशा भवतु देवगोपा[2] ॥

गयस्यार्षम् । स्वस्तिः । इदवधारणे । स्वस्तिरेव नान्या काचिद्देवता । हिशब्दो वाक्यालङ्कारार्थः । प्रपथे प्रकृष्टः पन्था अन्तरिक्षं तस्मिन् प्रपथे । श्रेष्ठा अतिशयेन प्रशस्या । रेक्णस्वती रेक्ण इति धननाम । वृष्टयुदकाख्येन धनेन धनवती । अभ्येतीति सम्बन्धः । अभ्येत्यभिगच्छति च । या वामं या वननीयं सम्भजनीयम् । प्रशस्यनाम वा प्रशस्यम् । किं तत् ? सामर्थ्यात् प्रायणीयं हविः । द्वितीयाश्रुतेः प्रतीति शेषः । स्वकर्म प्रायणीयं हविः प्रति । सा नोऽस्मान् । अमा[3] गृहनामेदं गृहे । सप्तमीश्रुतेर्वर्तमाना मिति शेषः । सा उ सो उकारः पदपूरणः । सैव अरणे अर्तेर्गतिकर्मणः शुद्धस्याप्युपसृष्टार्थे वर्तमानस्येदं रूपम् । निरंरणे[4] निर्गमने गृहाद् बहिश्च गृहादिभ्य इत्यर्थः । निपातु[5] नियमेन रक्षतु । स्वावेशा स्वावेशना सुखोपसर्पणा भवतु । देवगोपा[6] देवी चासौ गोप्त्री च देवानां सा गोप्त्री च । देवा वा गोप्तारो यस्या इत्येवमाशास्यते या सा देवगोपा ।

निरमण इति 'अम गत्यादिषु[7]' इत्यस्येदं रूपम् । निरमण इति पाठान्तरम् ।

उषाः 'उच्छतीति[8]' व्याख्याना । तस्या एषा ।

[इति षोडशस्या-(एकादशस्या-) ध्यायस्य षट्चत्वारिंशः खण्डः ।][9]

---

## [ अथ सप्तचत्वारिंशः खण्डः । ][1]

अपोषा अनसः सरत्संपिष्टादह विभ्युषी । नि यत्सीं शिश्नथद्वृषा[10] ॥

वामदेवस्य । परा च । अपोसरदिति[11] सम्बन्धः । अपसर्पति । कुतः ? अनसः अनितेरनो वायुस्तस्मात्[12] । संपिष्टात्[13] पिषेर्वर्तमानार्थे कर्तरि निष्ठा छान्दसत्वात् । अहेति विनिग्रहा-

---

१—आदर्शपुस्तकेष्वत्र खण्डारम्भस्य च निर्देशो न दृश्यते ।

२—[ऋ० १० । ६३ । १६] 'स्वस्तिरिद्धि' इत्येव प्रतीकः B. C.

३—परमा C. ४—निः करणे B. निकरणे C.

५—निवा उ C.

६—देविगोपाः दवी वासौ श्रेस्तीव देवानां सा गोस्ती च C. ७—[धा० १ । ४६६]

८—[ निरु० २ । १८ ] उच्छन्तीति B.C.

९—आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।

१०—[ ऋ० ४ । ३० । १० ] 'अपोषा' इत्येव प्रतीकः B. C. ११—अपसर C.

१२—तस्याः B.तस्यात् C १३—संविष्टन् विषेर्नैत C.

र्थीयः । संपिषत एवेत्यर्थः । कम् ? सामर्थ्यान्मेघम् । अथवा अनः शकटम् । लुप्तोपमं चात्र द्रष्टव्यम् । संपिष्टादित्यधिकरणे वर्तमाने निष्ठा । अनस इव यथा कश्चिदनस शकटात् स्तेनादिना संपिष्टात् संपिष्यमाणादित्यर्थः । शाकटिकोऽपसर्पेत् तद्वत् । मेघो वा एतस्मादेवानितेरनः । तस्मात् संपिष्यमाणादेव बिभ्युषी वर्तमाने लिटि क्वसावेतद्रूपं बिभ्यति । कदा ? उच्यते । निशिश्नथदिति सम्बन्धः । यत् यदा सीं सर्वतः । निशिश्नथत् श्नथतिर्वधकर्मा निहन्ति मेघम् । वृषा वर्षिता मध्यमो वा । उषा मेघोदरकोटरगोचरा संपिष्यतः संपिष्यमाणाद्वा बिभ्यति नश्यतीति ।

शकटमनः कस्मात् ? आनद्धमस्मिंश्चीवरम् । चीवरशब्दो लोहवचनः । आभिमुख्येन नद्धं बद्धं सुदृढत्वाय । नाभिकण्ठवत् न मण्डलाख्यं चीवरं लोहमस्मिन् स नह्यत इत्यर्थः । अथवा 'संप्रधानेष्वग्निषु अस्मिन् दक्षिणे युक्त उपोह्य चीवरम्' इति वस्त्रं किं परिच्छेदसूत्रचीवरशब्दवाच्यम् । तस्मिन्नानद्धमासिक्तं भवतीति । अनितेर्वा 'अन प्राणने' प्राणनं जीवनम् । उपजीवन्त्येनदित्यनेर्जीवनकर्मण इति । अन आह मेघमपप्युपजीवन्ति सर्वप्राणिनः । तस्या एषापरा । किमर्था ? उत्तमाप्युषा आदित्यसंश्रया । इयं तु मध्यमा मेघसंश्रया इति प्रदर्शनायाह ।

[ इति षोडशस्या-(एकादशस्या-) ध्यायस्य सप्तचत्वारिंशः खण्डः ।][21]

## [ अथ अष्टचत्वारिंश खण्डः । ]

एतदस्या अनः शये सुसंपिष्टं विपाश्या ।
ससार सीं परावतः ॥[22]

एतदिति वृष्ट्युदकं भूमिगतं प्रदर्शयन्नाह । अस्या उषस आधाराधेयसम्बन्धेन

१–अपत्रा B. C.
२–संविष्टानित्य M ३–श्चिदसनस श C.
४–कटस्त्यादिना B. C कटात् स्त्यादिना M.
५–मेघा वा B. C. M. ६–सीत् स B. C.
७–तिर्व्यथाकर्मा B. C ८–विभ्यती B.
९–आनद्धिमत्विग्वीश्वरं चीपरशब्दो C.
१०–नानिकण्ठ B. C.
११–[अनुपलब्धमूलमिदं वचनम्] सपधाने B.
१२–इति वस्त्रं परिच्छेद B. इति पत्रं किं परिच्छेदC.
१३–अत्र 'आनद्धं' इति वा स्यात् १४–वेति M.
१५–[ धा० ४ । ६९, ७० ॥ २ । ५९, ६० ]
१६–प्राण (णि) न स्तीवन उप B.
१७–वन्त्येदमित्यनः B. C.
१८–'अन आ' इत्येव M.
१९–किमर्थम् B. C. २०–उत्तमा C.
२१–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।
२२–[ऋ० ४।३०।११]'एतदस्याः' इत्येव प्रतीकः B.C.M.

सम्बन्धि । अनः शकटं मेघाख्यम् । अर्धर्चान्तर आकारः शय इत्यत्र सम्बध्यते आशये 'शीङ् स्वप्ने' आशेते आभिमुख्येन भूम्यां तिष्ठतीत्यर्थः[2] । सुसंपिष्टमुदकभूतम् । विपाशि पाशि बन्धनं विगतं पाशि यस्मात् तद्विमुक्तपाशं विच्छिन्नसर्वसम्बन्धनमित्यर्थः । ससार यत इति शेषः । यतो वायुना संपिष्यमाणादपसृतवती सीं सर्वत उषाः । परावतः दूरनामेदं दूरात् प्रेरित इति । परावत इत्यस्य निर्वचनं प्रकर्षेणेरितात् परागतात्[4] प्रदेशाद्वा ।

इळा 'ईट्टेः स्तुतिकर्मणः'[5] इत्यत्र व्याख्याता । तस्या एषा ।

[ इति षोडशस्या- ( एकादशस्या- ) ध्यायस्य अष्टचत्वारिंशः खण्डः । ][6]

---

## [ अथ एकोनपञ्चाशत्तमः खण्डः । ][8]

अभि न इळा यूथस्य माता स्मन्नदीभिरुर्वशी वा गृणातु ।
उर्वशी वा बृहद्दिवा गृणानाभ्यूर्ण्वाना प्रभृथस्यायोः ॥
सिषक्तु न ऊर्जव्यस्य पुष्टेः ॥[7]

अभि गृणात्विति सम्बन्धः । नान्ये ईदृशः स्तोतार इत्येवम् । अभिगृणातिः स्तुतिकर्मा[10] । अभिष्टौतु नोऽस्मान् । का गृणातु ? इळा माध्यमिका वाक् । यूथस्य माता गजादेः[9] पशुजातस्य यत्किंचिद् यूथं तस्य सर्वस्य मातृभूता । मेघयूथस्य वा निर्मात्री । स्मच्छब्दः सहार्थे[11] सह नदीभिर्गङ्गाद्याभिः । उर्वशी वा उर्वशीशब्दश्चाश्नोतेः[12] क्रियाशब्द इळाया विशेषणार्थः । वाशब्दः समुच्चये । यूथस्य मातेत्येतदपेक्षश्च समुच्चयः । यूथस्य माता उर्वशीति[13] या बह्वाकाशव्यापिनी चेत्यर्थः । अभिष्टौत्विति[14] दर्शितः सम्बन्धः । न च केवला इळा । किन्तर्हि ? उर्वशी वा अयमपि वाशब्दः[15] समुच्चय एवं[16] । उर्वशी मध्यमस्थाना विद्युत् । बृहद्दिवा दिवाशब्दो दीप्तिवचनः । बृंह[17] इति दीप्तिर्यस्याः[18] सा महादीप्तिरित्यर्थः । गृणाना कर्मणि

---

१–[धा० २ । २२]

२–तिष्ठन्तीत्यर्थः C. ३–इदं वाक्यं त्रुटितम् B.

४–परावगतात् B. C.

५–[निरु० ८ । ७] रादेर्गतिकर्मण: B. C.

६–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।

७–[ऋ० ५ । ४१ । १९, २०] 'अभि न इळा' इत्येव प्रतीकः B. C.

८–'अभि' इत्यस्मात्पूर्वं 'न' इति B. पुस्तके 'अनः' इति C. पुस्तके पाठोऽधिकः ।

९–जगादेः C.

१०–निकर्माती B. C.

११–र्थेन सह B. १२–शब्दस्या श्नोतेः B. C.

१३–शी नियB.शी नेयC. १४–अभिष्टौत्वितिB.C.

१५–'वा' इति नास्ति B. C. १६–एवम् B.

१७–अत्र 'बृहदति' इति 'बृहद्दिवा' इति वा पाठः साधीयान् भवेत् ।

१८–यस्यां सा B.

कर्तृ[1]प्रत्ययः । गीर्यमाणा स्तूयमानो[2]ऽस्माभिः । अभ्यूर्णु[3]ना 'ऊर्णुञ् आच्छादने'[4] आभिमुख्येन छादयन्ती[5] अस्मान् कृत्स्नां[6] वा पृथिवीम् । प्रभृथ[7]स्य पुष्टेः[8] षष्ठी चतुर्थ्यर्थे पुष्ट्यै[9]ऽस्माकमन्नस्य वृद्धय इत्यर्थः ।

रोदसी मध्यमस्थाना । मध्यमस्थानस्यैव रुद्रस्य पत्नी । तस्या एषा ।

[ इति षोडशस्या- ( एकादशस्या- ) ध्यायस्य एकोनपञ्चाशत्तमः खण्डः ][10]

---

## [ अथ पञ्चाशत्तमः खण्डः । ][10]

रथं नु मारुतं वयं श्रवस्युमा हुवामहे ।

आ यस्मिन् तस्थौ सुरणानि बिभ्रती सचा मरुत्सु रोदसी ॥[11]

श्यावाश्वस्य । रंहतेर्[12]गतिकर्मणो रथस्तं[13] मेघम् । नु क्षिप्रम् । मारुतं मरुतां सम्बन्धिनम् । तेन सम्बन्धेन घनं[14] फलफललक्षणेन वयं श्रवस्युं श्रवणीयम् । आहुवामहे ह्वः[15] सम्प्रसारणम् 'बाहुलकेन'[16] गुणाभावेन तत उवङ् आह्वयामहे । आ तस्थाविति सम्बन्धः । यस्मिन् रथे आभिमुख्येन तिष्ठति । सुरणानि[17] सुष्ठु रमणीयानि । कानि ? सामर्थ्यादुदकानि । बिभ्रती[18] धारयन्ती । सचा सह । मरुत्सु सप्तमी तृतीयार्थे मरुद्भिः सह । का ? रोदसी रुद्रस्य पत्नी माध्यमिका वाक् । अध्यायपरिसमाप्तिसूचनार्था[19] द्विरुक्तिरिति सिद्धम् ।

इति निरुक्तविवरणसमुच्चये षोडशो [ एकादशो ][20] ऽध्यायः समाप्तः[21] ।

---

१–अयं पाठः सन्दिग्धः 'कृत्प्रत्ययः' इति स्यात् ।

२–माणः (ण C.) स्तूयमानो B.

३–अभूर्णवाना C. ४–[धा० २ । २९]

५–यतः B. यतः अस्मात् C.

६–कृत्स्नं (त्स्न C.) वा पृथिवी B. C.

७–प्रभृति य (ध C.) स्य B.C. अत्र भूयान् पाठस्त्रुटित इति भाति । अत्र 'स्य' इति 'ऊर्जव्यस्य' इति पदस्यैकदेशः । एवं च 'प्रभृथ··· ·········ऊर्जव्यस्य पुष्टे' इति पाठः स्यात् । अत्र मध्यगतः सर्वोऽपि पाठस्त्रुटितः ।

८–पुष्टिः B. पुष्टि C. ९–पुष्टेये B. C.

१०–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।

११–[ऋ० ५ । ५६ । ८] 'रथं नु मारुतम्' इत्यव प्रतीकः B. C.

१२–इहते C. १३–'तं' इति नास्ति B. C.

१४–'घन' इत्यस्मात्पूर्वं 'यान्' इति B. पुस्तके 'यदत्' इति च C. पुस्तके पाठोऽधिकः ।

१५–[धा० ६ । १ । ३२] हुवः B. भुवः C.

१६–'केन' इत्यस्मात्परं 'गविरा' इत्यधिकःपाठः B.C.

१७–सुगणानि C.

१८–विभ्रन्ती C. १९–सूचनार्थं B. C.

२०–अयं कोष्ठकान्तर्गतः पाठो नास्त्यादर्शपुस्तकेषु

२१–'समाप्तः' इति नास्ति C.

# अथ सप्तदशा-[द्वादशा-][1]ध्याये प्रथमः पादः ।

अथातो द्युस्थानदेवताः ।

अथातो द्युस्थाना देवता[2] मध्यमस्थानानन्तरं समाम्नायक्रमेण लिङ्गवचनविभागेन व्याख्यायन्त इति शेषः ।

तासामश्विनौ प्रथमागामिनौ[3] भवतः ।

कुतः ? तयोर्हि द्युस्थानानां विभागो विवक्षितः । तथा[4] च वक्ष्यति । 'तयोः कालः'[5] इति । तयोश्चैतयोर्द्वन्द्वभावादश्विनौ दस्रौ[6] नासत्याविति येकैकशः स्तुत्य[7]भावात् । ननु[8] यद्यविभक्तस्तुतित्वमश्विनोस्ततः सं[9]विभागे प्राथम्यात् प्रथमस्य स्थाने समाम्नानं प्राप्तम्[10] । उच्यते । तत्काले मध्यमं[11]स्थानस्य हीयमानरूपत्वाद् द्युस्थानस्य[12] च प्रतिक्षणमुपचीयमानरूपत्वात् । तदनन्तरं क्रमेणोपचीयमानप्रकाशद्युस्थानदेवतारूपां[13] तु सन्तानादन्य[14]त्रासंभवसन्निवेशयोरुपचीयमानतयोरूप[15]मध्यमाद्[16]व्यनुरोधेनोपचीयमानज्योतीरूपोत्त[17]माद्व्यनुरोधेन च द्युस्थानएव [वा][18] अश्विनोर्युक्ततरः[19] पाठ इति कृत्वा निश्चित्याह । प्रथमागामिनाविति[20] ।

अश्विनौ[21] यद्व्यश्नुवाते सर्वम् । रसेनान्यः ।
ज्योतिषान्यः । अश्वैरश्विनावित्यौर्णवाभः ]

अश्विनौ कस्मात् । यस्मादश्नुवाते व्याप्नुतः कृत्स्नं जगत् । [केन[22]] रसेनावश्यायरसेनैको मध्यमः तेजसाऽन्य उत्तमः । अश्वैस्तद्वन्ताविति और्णवाभो मन्यत इति शेषः ।

अश्वि[23]शब्दे निरूप्याभिधेयं निरूपयिष्यन्नाह ।

---

१–अयं कोष्ठकान्तर्गतः पाठो नास्ति B. अयं सर्वोप्यध्यापाद्यारम्भात्मकः पाठो नास्ति C.

२–'अथातो द्युस्थाना देवता' इति नास्ति C. अथातो द्युस्थाना देवता B.

३–थमगामि B. C. ४–यथा च B.

५–[ निरु० १२ । १ ]

६–'दस्रौ' इति नास्ति B.

७–स्तुत्यवाक्यम् B. स्तुत्यवान् C.

८–'ननु' इति त्रुटितम् B. ननु यद्यपि भक्त M.

९–सविभा B. सन् विभा C.

१०–'म्' इति त्रुटितम् B. C. M.

११–ध्यमानस्थान C.

१२–'स्य' इति त्रुटितम् C. नस्य प्रतिलक्षण B.

१३–अस्य वाक्यस्य पाठः सन्दिग्धः ।

१४–'दन्यत्रासं' इति त्रुटितम् B.

१५–तनोरूप B. C. 'अपचीयमानतमोरूप' इति पाठो युक्तः स्यात् ।

१६–ध्यमाद्स्यनुरो C. मानुरो B.

१७–पोन्तमान्या ( न्य C. ) नुरो B. C.

१८–'वा' नास्ति M. १९–यततरः B. युततरः C.

२०–थमगामि B. C.

२१–'अश्विनौ' इत्येव B. नास्त्येवायं मूलपाठः C.M.

२२–'केन' इति नास्ति C. M. 'केन वश्यारसेनैको' इति पाठः B. २३–अश्वशब्दं B. C.

[ तत्कावश्विनौ । द्यावापृथिव्यावित्यैके । अहोरात्रावित्येके । सूर्याचन्द्रमसावित्येके । राजानौ पुण्यकृतावित्यैतिहासिकाः । ][1]

तत्कावश्विनाविति । तदिति वाक्योपन्यासे । किं प्रश्ने । द्यावापृथिव्यावश्विनावित्येके आचार्या मन्यन्ते । विज्ञायते हि 'तौ[2] यौ प्रत्यक्षौ[3]वश्विनाविमे एव ते द्यावापृथिव्यौ'[4]। द्यौर्ज्योतिषा व्यश्नुते पृथिवी रसेनान्नलक्षणेन । अहोरात्राविति । अहर्ज्योतिषा रात्रिरवश्यायेन। सूर्याचन्द्रमसौ[5]विति । सूर्यो ज्योतिषा चन्द्रमा रसेन ह्लादिना । राजानावित्यौर्णवा[6]भमतेन ।

तयोः का[7]ल ऊर्ध्वमर्धरात्रात्प्रकाशीभावस्यानविष्टम्भम् ।

इति कालविभागप्रदर्शनं देवताविभाग-[प्रदर्शन-][8] प्रतिपत्तये। विष्टम्भो व्याप्तिभेदः परस्परतो ज्यो[9]तिस्तमसोः ।

[ अनुतमो भागो हि मध्यमो ज्योतिर्भाग आदित्यः । ][10]

अनुर्लक्षणे[11] कर्मप्रवचनीयः । परस्परव्याप्ति[12]मनुविष्टम्भमनु तं प्रतीत्यर्थः । ततश्च कालविभागा[13]द् देवताविभाग इति प्रदर्शितं भवति । तच्चे[14]द्धिति सामर्थ्याद् दुर्नीयते । यत्तत् प्रभृत्याश्विनं स्तोत्र[15]शस्त्रकर्म । आश्विनस्य प्रातरनुवाककालातिदेशात् । प्रातरनुवाकस्य [च] महारात्र[16]कालश्रुतेश्च । 'महारात्रे प्रातरनुवाकायामन्त्रितः[17]' इति । तत्र च कालेऽनुतमो[18] भागो हि ज्योतिषा मध्यमः । ज्योतिर्भाग[19]मेवानुगतस्तमसा उत्तम आदित्योऽश्विशब्द-वाच्यः । एवं च ब्रुवता एकत्र तमो[20]भागस्य प्राधान्यमनुगममन्यत्र[21] ज्योतिषः । अन्यत्रैतदेव विपरीतम । ततश्चाश्विशब्दवाच्याविशेषे सत्यभिधेयगतो विशेषः प्रदर्शितो भवति ।

तत[22]श्चाश्विशब्दयोस्तमोज्योतिर्भागयोरश्विशब्दवाच्ययोरेषा समर्थनाय ऋग्भवति ।

[ इति सप्तदशस्या- ( द्वादशस्या- ) ध्यायस्य प्रथमः खण्डः । ][23]

---

१–अयं मूलपाठो नास्ति B. C. M.
२–'तौ' इति त्रुटितम् C. M.
३–दुर्गवृत्तौ 'प्रत्यक्षदैवतमश्विना' इति पाठः ।
४–[शत० ब्रा० ४।१।५।१६। इमे ह वै द्यावापृथिवी प्रत्यक्षमश्विनाविमे]
५–'सूर्याचन्द्रमसौ' इति द्विर्लिखितम् B.
६–र्णनाभ B. र्णवाह C.
७–'०र्भाग' इत्यादर्शपुस्तकपाठः ।
८–'प्रदर्शन' इति नास्ति M.
९–स्परयोर्ज्योतिस्त० B.
१०–अयं मूलपाठो नास्ति B. C. M.
११–[पा० १।४।८३]
१२–'विष्टम्भमनु परस्परव्याप्तिमनु' इत्यानुपूर्वीकः पाठः M. १३–भागो देवB. भागादेव C.
१४–सचेदिति सामर्थ्यादुन्नियतेB. १५–स्तोत्र शस्त्रB.
१६–'रात्र'इति त्रुटितम् B.कस्य महारात्रकाल श्रुतेश्चM.
१७–[अनुपलब्धमूलमिदम्] वा कायमतीत B. C.
१८–अनुमतो भागो ज्यो० B. C.
१९–भागमेवमेवानु C. २०–एकत तवो भागस्य B.C
२१–गममत्र B. C. २२–'त' इति त्रुटितम् C.
२३–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेर्निर्देशो न दृश्यते ।

# [ अथ द्वितीयः खण्डः । ][1]

वसातिषु स्म चरथोऽसितौ पेत्वाविव ।

कदेदमश्विना युवमभि देवाँ अगच्छतम् ॥[2]

वामदेवस्य । आगच्छन्तावश्विनावदृष्ट्वा[3] आगतौ च सहसैव दृष्ट्वा वामदेव एव-माह[4] । वसातिषु वसन्ति प्राणिनो[5] यासु ता वसातयो[6] रात्रयस्तासु । स्मशब्दः पूरणः[7] । यौ चरथः । असितौ पेत्वाविव कृष्णौ पेत्वशब्दो मेघवचनः[8] । मेघाविव वर्णसारूप्येण केनचिद्दृश्य-मानाविति भावः । तौ कदा[9] इदमस्मत्कर्म हे अश्विनौ [ वां ] युवं[10] अभि देवान् ये चात्रागता-स्तानभ्यगच्छतं[11] आगतवन्तौ स्थः । एवं यत्तदध्याहारेण योजना । निगदव्याख्यातैषा ।

तयोरेतस्या[12]मृच्युपवर्णितयोरूर्ध्वमर्धरात्रादित्येवं समानकालयोस्तथा 'अश्विना वायुना युवं सुदक्षा' 'अयं सोमः सुदानवः'[13] इत्यादिष्वाश्विनेषु सोमविशेषणत्वेन तिरो अह्न्य-दर्शनात् । तार्तीयसवनिकत्वाद्वा[14] । तथा तिरो अह्न्याः सोमे[15] आश्विनः पुरोडाश आश्वि-नेयं[16] इत्येवमादि हविःसाधनं यद्यागकर्म तदपि समानं ययोः संस्तुतप्राययोस्तथा संस्तुतः सहस्तवस्तत्प्राययोः[17] । प्रायोवचनं[18] क्वचिद् व्यभिचारात् । तञ्च[19] व्यभिचारं दर्शयति । असंस्तवेनेति । पृथक्स्तवेनेत्यर्थः[20] । एष वक्ष्यमाणोऽर्धर्चः । तस्य च पूर्वस्मिन्मन्त्रे वसातयो[21] रात्रयो न जनपदाः[22] । अश्विनौ च मध्यमोत्तमौ न राजानौ पुण्यकृताविति । अस्यार्थस्य[23] प्रतिपादनार्थमस्यार्धर्चस्योपादानम्[24] ।

वासात्यो अन्य उच्यते । उषःपुत्रस्तवन्य[25] इति ।

---

१–आदर्शपुस्तकेष्वत्र खण्डस्यारम्भस्य निर्देशो न दृश्यते ।
२–अस्य मूलमद्यापि नोपलब्धम् ।
३–च्छतावश्वि B. C.
४–एव वाह B. C.
५–'प्राणिनः' इति त्रुटितम् M.
६–वसतयो B. पसातयो C. ७–पूरण B. C.
८–पेत्व शब्दो मेघवचनः मेघमिव B. वेत्वशब्दो C
९–केन कदा B.
१०–वां युवं B. 'वा' इति नास्ति M. युवामभि M.
११–गच्छः आग C. च्छतां M.
१२–तस्या (स्य B.) वृच्युपवणि तयो B. C.
१३–[ऋ० ३।५८।७] [ऋ० १।४५।१०]
१४–सवनीकत्वा C. १५–सोमा B. C.
१६–आश्विनोय B.
१७–सहसंस्तवः B. C.
१८–प्रायवचनं B. C. M.
१९–तन्त्र B. 'तन्व' इत्येव C.
२०–स्तुतेनेत्यर्थः B. C.
२१–वासतयो B. C.
२२–जनपदः B. C. M.
२३–'अर्थस्य' इति नास्ति B.
२४–नार्थस्योर्धर्चस्योपादानम् C.
२५–'वासात्यो अन्यः' इत्येव प्रतीकम् B. C.

वसाते[1] रात्रेः पुत्रोऽन्य[2] एक उच्यते जनैर्मध्यमः[3]। उषमः पुत्रोऽन्य उत्तमः। तदनन्तरं जन्मत्वात्। पृथक्स्तुतित्वं च। एकैकस्या[4]भिजनसम्बन्धप्रदर्शनात्। उषसः पुत्रत्वेन[5] सूर्येण सह समानख्यानाद् [वासात्यस्य।][6] असंशयं मध्यमो वासात्यो रात्रे[7]ः पुत्रः[निश्चितः][8]

तयोरेषापरा[9] भवति।

मध्यमोत्तमावश्विनावित्यस्यैव द्रढिम्नः कारणं[10] संस्तवप्रदर्शनाय च।

[ इति सप्तदशस्या-( द्वादशस्या- ) ध्यायस्य द्वितीयः खण्डः। ][11]

---

## [ अथ तृतीयः खण्डः। ][11]

इहेह जाता समवावशीतामरेपसा तन्वा३ नामभिः स्वैः।
जिष्णुर्वामन्यः सुमखस्य सूरिर्दिवो अन्यः सुभगः पुत्र ऊहे॥[12]

अगस्त्यस्यार्षम्[13] इहेहेति वीप्सो[14]द्विर्वचनेनान्तरिक्षं द्यौश्च निर्दिश्यते[15] इह चा[16]न्तरिक्षे इह च दिवि। जाता जातौ भवन्तौ। समवावशीतां सम्यगत्यर्थं पुनः पुनर्वावशेते [शस्येते[17]] स्तूयेत इत्यर्थः। अरेपसा रेपः पापं अपापया[18] तन्वा अपापेन[19] स्वेन शरीरेण नामभिः अश्विनौ नासत्यौ दस्रौ इत्येवमादिभिश्च स्वैःजिष्णुः जयशीलः वां युवयोरन्यः एको मध्यमः। सुमखस्य सुमहतोऽपिशत्रुबलस्य सूरिः सुष्ठु ईरयिता। दिवो अन्यः अन्यस्तु सुभगः सुधनः उत्तमः पुत्रः। ऊहे[20]: कर्मणि प्रथमपुरुषैकवचनस्य स्थाने व्यत्ययेन कर्तरि[21] उत्तमैकवचन-

---

१–वासते B. C.
२–त्रोऽद्य ए B.
३–मध्यमहे उष B.
४–एककैतस्या
५–पुत्रेण B.
६–समाख्यानान्यासत्यस्य B. C. 'वासात्यस्य' इति नास्ति M.
७–मो सत्यो रात्रेः C.
८–निशितः C. 'निश्चितः' इति नास्ति M.
९–'तयोरेषा' इत्येव B. 'तयोरेषापरा' इति C.
१०–'कारणं' इति त्रुटितम् M.
११–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते।
१२–[ ऋ० १। १८१। ४ ] 'इहेह जाता' इत्येव प्रतीकम् B. C.
१३–'०स्यार्षम्। इहे' इति त्रुटितम् M.
१४–ति द्वीप्सा C.
१५–निदिश्यते B. C.
१६–वान्तरि B. C.
१७–गस्त्येते B. 'शस्येते' इति नास्ति M.
१८–अपया B. अपाग्वा C.
१९–'अपापेन' इत्यारभ्य 'उत्तमः पुत्रः' इत्यन्तः पाठस्त्रुटितः B. C.
२०–अपहे B. ऊहे B. C.
२१–कर्तृ उत्त B.C.M.

मेतत्। ऊह्यते वितते: साहचर्यात्। अथवा वहेरेतद्रूपम्। ऊह्यते रथेन स्वैरश्वैर्वायुना वा उदयास्तमयाय। तयोरेषापरा संस्तुतप्रायं दर्शयितुम्।

[इति सप्तदशस्या-(द्वादशस्या-)ध्यायस्य तृतीयः खण्डः।][4]

## [अथ चतुर्थः खण्डः।][4]

प्रातर्युजा वि बोधयाश्विनावेह गच्छताम्।

अस्य सोमस्य पीतये॥[5]

मेधातिथेः। प्रातर्युजौ प्रातर्याविश्विनावश्विनयागेन[6] युज्येते तौ प्रातर्युजौ प्रातर्योजनावित्यर्थः। तौ वि बोधय अमुष्य यजमानस्य यज्ञे गन्तव्यमिति[7]। आत्मन एवान्तरात्मनः प्रैषः[8]। हे अन्तरात्मन्। होतृत्वाच्चैतयोः। हे होतरग्ने। विबोधितौ च सन्तावश्विना विहास्मदीये यज्ञे गृहे वा आ[9] गच्छताम्। किमर्थम्? अस्याश्विनस्य[10] ग्रहाख्यस्य सोमस्य[11] पीतये पानाय। तयोरेवैषापरा। प्रातरेवानयोर्यागोपीति[12] प्रायमेव दर्शयितुम्।

[इति सप्तदशस्या-(द्वादशस्या-)ध्यायस्य चतुर्थः खण्डः।][13]॥

## [अथ पञ्चमः खण्डः।][4]

प्रातर्यजध्वमश्विना हिनोत न सायमस्ति देवया अजुष्टम्।

उतान्यो अस्मद्यजते वि चावः पूर्वःपूर्वो यजमानो वनीयान्॥[14]

अत्रेः[15]। प्रातरेव यजध्व हे ऋत्विजः। कौ[16]? अश्विनौ। तदर्थं च हिनोत 'हि गतौ'[17]

१–वहते रूपम B. २–'या' इति त्रुटितम् M.

३–'परा' इति नास्ति B.

४–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते।

५–[ऋ० १।२२।१]'प्रातर्युजा'इत्येव प्रतीकम् B.C.M

६–योगौर्युज्यते B. योगौ युज्यते C.

७–'गन्तव्य' इति त्रुटितम् B. नन्तव्य B. C.

८–त्मना प्रैषः B.C.

९–'वा आ' इति त्रुटितम् B.C.

१०–'स्य' इति नास्ति M.

११–'स्य' इति त्रुटितम् B. C. 'पीतये' इति त्रुटितम् M. 'पानाय' इति त्रुटितम् B. C.

१२–यागेपीति B. यागोवीति C.

१३–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते।

१४–[ ऋ० ५।७७।२ ] 'प्रातर्यजध्वम्' इत्येव प्रतीकम् B. C.

१५–अत्रैव B. अत्रैः C. अत्रे हे ऋत्विजः प्रातरेव यजध्वम्' इत्यानुपूर्वीकः पाठः M.

१६ [illegible]

१७–[धा० ५।११]

हिनुत गच्छताहवनीयं प्रति मा विलम्बध्वम्। कस्मादेवमुच्यते प्रातर्यजध्वमिति ? यतो न सायं प्रातरस्ति। किम् ? देवया देवावश्विनौ तयोर्या यानं गतिर्देवयाः। यजेर्वा न यातेः। देवयोरश्विनोर्योगो देवयाः। यतः प्रातरश्विनोर्यज्ञं प्रति गतिरिज्या वा नास्तीत्यर्थः। कुत ? यद् अजुष्टं लिङ्गव्यत्ययः। अजुष्टा अप्रियाऽसावश्विनोः। अन्यकालत्वात्। अन्याद्यसेवितपूर्वा वा ताभ्यामित्यर्थः। उतान्योऽन्योपि। अस्मदस्मत्तः। यजते यजत एवाश्विनौ। वि चावः वि च आवः। विविधं चाधितर्पयति सोमेन। बहूनां च यजतां मध्ये पूर्वःपूर्वो यजमानो वनीयान् अश्विनोः संभक्ततरो बहूनां यजमानानां मध्ये यश्च यश्च पूर्वो यजते स चाश्विनौ यजते। सादरत्वाच्च तस्यैव यज्ञमश्विनौ गच्छतो नेतरस्येत्यर्थः। एतदुभयं ज्ञात्वा प्रातरेव यजध्वम्। तयोः कालः प्रागुक्त। ऊर्ध्वमर्धरात्रात्प्रकाशीभावस्यानुविष्टम्भमिति। सम्प्रति तु परावधिप्रदर्शनाय तयोः स्तुतिकाल ऊर्ध्वमर्धरात्राद्यः सूर्योदयपर्यन्तो द्रष्टव्यः। उदितो यागकालः। तत्र वोषसां प्रकाशप्रभृति यावत्सूर्योदयस्तावदन्या देवता आश्विने शस्त्रे स्तुतिं लभन्ते। ता अप्यन्ते। स तासामावापकालः। काः पुनस्ताः ? उषः प्रभृतयः। तत्रोषाः प्रथममुच्यते।

उषाः कस्मात् ? वष्टेः कान्त्यर्थस्य। कान्ता ह्यसौ। उच्छतेर्वा। यथोक्तं 'उषाः कस्मात् उच्छतीति सत्याः' इति द्युस्थानायां विकल्पः। मध्यमस्थाना उच्छतेरेव। तदाह उच्छते-

१–'देवमुच्यते' इति त्रुटितम् M.
२–यजतः न सायं B. यतः न यासं C.
३–'देवा' इति त्रुटितम B. देवायावश्वि C.
४–'ते। देवयो' इति त्रुटितम् M
५-नोर्योगो B. C.
६-यतोः प्रात B. यतो प्रात C.
७–यजुष्टं C. 'यत्' नास्ति B. C.
८–प्रियं स.व B. ९–अश्वकालत्वात् B. C.
१०–अनादिसविता पूर्वा वा B. अनादिसवितपूर्वा पाताभ्यामित्यर्थः C
११–वि च अवः B. विव आपः C.
१२–चाति तर्प B. च आवति तर्प M.
१३–'सोमे' इत्येव 'न' इति त्रुटितम् B. C.
१४–वदीयात् C. १५–'यश्च' इति नास्ति B.
१६–श्विनो यज B. C.
१७–'तस्यै' इत्येव, 'व' इति त्रुटितम् B. C.
१८ गच्छघतः B. C.
१९ [निरु० १२।१] स्यावष्टम्भ B. स्याविष्टम्भ C.
२०–ततो स्तुति C.
२१–तत वोषसां B. C.
२२–तदप्यन्ते B. C.
२३–रा पुन C.
२४–ततोषः B. C.
२५–मोच्यन्ते B. मोप्यते C.
२६–उष्टेः कान्तां ( न्तिः B. ) B.C. उष्टेः का M.
२७–इच्छा वा B. इच्छथेर्वा C.
२८–[ निरु० २। १८ ] 'कस्मात्' इति नास्ति B. C. उच्छन्तीति M.
२९–ना वा विक B. C.
३०–तच्चतेरेव C.

रितेरेति । सा ह्रदकानि विवासयति विवास्यते वा मेघान्मध्यमेन । तस्या एषा प्रकृतत्वात्तस्या उत्तमस्या उत्तमाया एषा ।

[ इति सप्तदशस्या-( द्वादशस्या- ) ध्यायस्य पञ्चमः खण्डः ]

---

## [ अथ षष्ठः खण्डः । ]

उषस्तच्चित्रमा भरास्मभ्यं वाजिनीवति ।
येन तोकं च तनयं च धामहे ॥

गौतमस्य । हे उषः । तच्चित्रं विचित्रं पूजनीयं वा । किं तत् ? सामर्थ्याद्धनमन्नं वा । आभर आहर देहीत्यर्थः । अस्मभ्यं हे वाजिनीवति वाजमन्नं तद्वती वाजिनीवती । कासौ ? अवयवभूतेनान्नेन संहतिर्वाजिनी तया वाजिन्यान्नसंहत्या तद्वती वाजिनीवती उषास्तस्याः सम्बोधनं हे अन्नसंघातवतीत्यर्थः । द्वौ वा एतौ मत्वर्थीयौ । तयोरेकः स्वार्थिकोऽन्यो मत्वर्थीयः । अन्नवतीत्यर्थः । येन धनेनान्नेन वा । तोकं च तनयं चेति द्वे अप्येते अपत्यनामनी । पुत्रविषयमेकं पौत्रविषयमपरम् । पुत्रान् पौत्रांश्च धामहे धारयामः [सम्यक् पुष्यामि इत्यर्थः] तस्या एषापरा उत्तमसम्बन्धलिङ्गप्रदर्शनार्था ।

[ इति सप्तदशस्या-( द्वादशस्या- ) ध्यायस्य षष्ठः खण्डः ]

---

## [ अथ सप्तमः खण्डः । ]

एता उ त्या उषसः केतुमक्रत पूर्वे अर्धे रजसो भानुमञ्जते ।
निष्कृण्वाना आयुधानीव धृष्णवः प्रति गावोऽरुषीर्यन्ति मातरः ॥

गौतमस्यैव । उः पादपूरणः । एतच्छ्रुतेर्योग्यार्थसम्बन्धार्थं यदध्याहारः । याः

---

१–सां ह्रदकादि C. २–इदमधिकं पदं प्रतीयते ।
३–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।
४–[ ऋ० १ । ९२ । १३ ] 'उषस्तत्' इत्येव प्रतीकः B. C. M.
५–'वा' इति नास्ति B. C.
६–'वती' इति त्रुटितम् M.
७–उषस्तस्याः B.C.M. ८–केक स्वा B.C.
९–'अन्यः' इति त्रुटितम् B. C.
१०–अनववती B. अनवती C.
११- पुरीषC. इदं वाक्यं नास्तिM १२–सम्बन्धिB.
१३–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।
१४–[ ऋ० १ । ९२ । १ ] 'एता उ त्या 'इत्येव प्रतीकः B C.
१५–त्तुः पद B. व उ पद C.

पूर्वेष्वप्यहःस्वकार्षुः एतास्ता उषसः। एकस्या एवोषसः पूजार्थं बहुवचनम् । भवन्तो मे गुरव इति यथा। अवयवभेदापेक्षया भिन्नेष्वप्यहस्सूषोभेदाद् बह्व्य एवोषस केतुं क्रतुं प्रज्ञानं प्राणिनाम क्रत अक्रुषत कुर्वन्ति। केन प्रकारेण? पूर्वे अर्धेऽस्मिन् भागे रजसः। रजःशब्दो लोकवचनः। द्युलोकस्य [वा] अन्तरिक्षस्य वा। सप्तमीश्रुतेः स्थिता इति शेषः। भानुमञ्जते भानुमिति द्वितीया तृतीयार्थे। अञ्जिर्व्यक्त्यर्थः। भानुना व्यञ्जयन्ति स्वयं भासा सर्वं व्यक्तीकुर्वन्तीत्यर्थ । कथम्? निष्कृण्वाना आयुधानीव। कृणोतिरत्र सामर्थ्यात् कर्षणार्थः। निष्कर्षन्तं आयुधानीव धृष्णवो धर्षयितारो योद्धारः कोशेभ्यः खड्गादीनि कर्षन्तो व्यक्तीकुर्वन्ति तद्वदित्यर्थः।

अथवा पूर्वे अर्धे रजसो भानुमञ्जत इत्यञ्जतिर्गत्यर्थः सामर्थ्याच्चात्रान्तर्णीतण्यर्थः। पूर्वे अर्धे द्युलोकस्य वान्तरिक्षस्य वा भानुं दीप्तिं गमयन्ति प्राणिनां प्रकाशद्वारेण ज्ञापनं कुर्वन्ति। पूर्वार्धे द्युलोकस्यान्तरिक्षस्य दीप्तिं कुर्वन्तीत्यर्थः। कथम्? निष्कृण्वाना आयुधानीव। निरित्येष समित्येतस्य स्थाने। संस्कुर्वाणा आयुधानीव धृष्णवो यथा भस्मगोमयपरिमार्जनादिभिः संस्कारैः संस्कुर्वन्ति आयुधानि योद्धारो दीप्तमन्ति कुर्वन्ति तद्वदित्यर्थः। कृत्वा चैतत् प्रति गावोऽरुषीर्यन्ति प्रतिर्यन्ति यत आगतास्तत्रैव प्रतिगच्छन्ति। यतं आदित्यादुत्पन्नास्तत्रैव प्रलीयन्त इत्यर्थः। गाव उषसोऽत्र गांवकृष्णा 'यद् गोष्वरुणीषु सीदत्' इति यथा। उषसः कीदृश्यः? अरुषीः। अरुषतिर्गतिकर्मा गमनस्वाभाविकाः। मातरो मातृस्थानीयाः स्वस्या भासो निर्मात्र्योऽर्थवा कृत्स्नस्य जगतः।

उपसर्गव्यत्ययस्य मन्त्रान्तरेऽप्यर्थं दर्शयितुमाह 'एमा देवां निष्कृतं जारिणीव' इति।

---

१–प्य(व्य C) ह्व्य कारुषु B. C.
२–षोभेदात् B. C
३–'द्यु' इति त्रुटितम् B. C.
४–'वा' इति नास्ति M.
५–श्रुतिः B. श्रुति C.
६ 'तृतीया' इति त्रुटितम् B. C.
७–अञ्जिव्य M.
८–व्य(प्य B.) ञ्जन्ति B.C.
९–स्वयं भासा स्वयं दत्ती B.
१०–अत्र 'निष्कर्षन्तः' इति पाठः स्यात्।
११–खड्गादि निकषन्तो ( न्तौ C. ) C. M.
१२–न्तर्नीत B.
१३–भानुदीप्तिं B.C. भानुं दी'''न्ति M.
१४–ज्ञापना C. प्रज्ञापना B.
१५–धानिव B C. १६–संस्कुर्वन्ति आयु B.C.
१७–गाव आकुषीर्य (यB.) न्ति B. C.
१८–'यन्ति' इति त्रुटितम् C. १९–चतः M.
२०–गाः: कृष्णा B. 'गाव' इति त्रुटितम् M.
२१–रुरणी B
२२–[ ऋ० १०।३१।४]
२३–गगन B.
२४–मिमात्रिवो कृत्स्न B. निर्मात्र्ययो वा कृत्स्न C.
२५–सर्गस्य व्यत्य B. C.
२६–[ ऋ० १०।३०।५]

यदादीध्ये न दविषाण्येभिः परायद्भ्योऽव हीये सखिभिः।
न्युप्ताश्च बभ्रवो वाचमक्रतँ एमीदेषां निष्कृतं जारिणीव[1] ॥

**कवषस्य वाक्षस्य वार्षम् ।** यदाक्षैर्जितो हारितसर्वस्वः कुत्स्यमानश्च[2] **स्वैरहमा-** दीध्ये **ध्यायामि**[3] **संकल्पयामीत्यर्थः । कथम्**[4] ? न दविषाणि **न पुनर्देविष्याम्येभिरिति । संकल्प्य च**[5] परायद्भ्य आस्फारदेशं **प्रतिगच्छद्भ्यो**[6]ऽवहीयेऽधोहीये[7]ऽपसर्पामीत्यर्थः । सखिभ्यः **सखिभूतेभ्यः । यच्छ्रुतेस्तदध्याहारः**[8] **।** तदा[9] न्युप्ताश्च **चशब्दो यदेत्यस्यार्थे यदा न्युप्ताः**[10] **सन्तो बभ्रुवर्णा अक्षा** वाचमक्रतँ **शब्दं कुर्वन्तीति तदा तां श्रुत्वाक्षव्यसनेन परिभूयमानः परित्यज्य संकल्पमेमि**[11] **इदेवार्थे एम्येव गच्छाम्येव ।** एषामक्षाणां **सम्बन्धिनं** निष्कृतं **संस्कृतं प्रदेश- मास्फाराख्यं**[12] जारिणीव **यथा जारि [णी स्त्री]**[13] **चारित्ररक्षासंकल्पं परित्यज्य स्त्री संकेतस्थानं प्रतियन्तीति क्रियायोगं**[14] **दर्शयति । गमनादरुषीरिति**[15] **च दर्शितसम्बन्धः । आरोचनाद्वा ।**

**सूर्या । एषैवोषा सूर्या सम्पद्यते आदित्योदयकालं प्रत्यभिसृततमा**[16] **। तस्या एषा ।**

**[ इति सप्तदशस्या-( द्वादशस्या- ) ध्यायस्य सप्तमः खण्डः**[17] **]**

---

## [ अथाष्टमः खण्डः[17] ]

सुकिंशुकं शल्मलिं विश्वरूपं हिरण्यवर्णं सुवृतं सुचक्रम् ।
आ रोह सूर्ये अमृतस्य लोकं स्योनं पत्ये वहतुं कृणुष्व[18] ॥

**सूर्याया आर्षम् । सुष्ठु**[19] **किंशुकं प्रकाशनं दीपनम् ।** शल्मलिं **शलिति शलेर्गत्यर्थस्य**

---

१–[ ऋ० १० । ३४ । ५ ] 'यदादीध्ये' इत्येव प्रतीक आदर्शपुस्तकेषु ।

२–कुत्स्यमदान…स्वैः आदी B. कुत्स्यमदानश्चस्वै आन्दी C.

३–ध्ये स्य ध्याया M.

४–'कथम्' इति त्रुटितम् B. C.

५–'च' इति त्रुटितम् B.

६–परागच्छ B.C.

७–वसीये C. ८–य आतेस्तध्या C.

९–तथा B. १०–यदा ह्युताः C.

११–B. C. पुस्तकयोः 'मि इदे' इति च । M. पुस्तके त्रुटितम् ।

१२–मास्तारा B. 'शमा' इति त्रुटितम् M.

१३–'णी स्त्री' इति नास्ति M. 'यथा' इत्यारभ्य परित्यज्य' इत्यन्तस्य पाठस्य स्थाने केवलं 'स्त्री' इति पदं वर्तते B. C.

१४–योगादर्शं C.

१५–'दरुषी' इति त्रुटितम् B. गमनाः कुषीरित च C.

१६–सृष्टतमा B.

१७–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।

१८–[ऋ० १० । ८५ । २०] 'सुकिंशुकम्' इत्येव प्रतीकः B. C.

१९–सुष्ठु शुक्रं प्रकाशन C. प्रकाशेन B.

रूपम्। छन्नो नष्टो मलो यस्मात् तच्छन्नमलं निर्मलमित्यर्थः। अथवा शल्मलिमिति प्रसिद्धो वृक्षविशेष एवोच्यते। तद्विशेषणं सुकिंशुकमिति। लुप्तोपमं चैतत्। किंशुकमिति यद्यपि पलाशकुसुमं प्रसिद्धं तथापीह लोहितत्वसामान्यात् पुष्पत्वसामान्याच्च किंशुकशब्देन शाल्मलिपुष्पमुच्यते। सुपुष्पितमिव शाल्मलिं लोहितायमानमित्यर्थः। विश्वरूपं विश्वानि सर्वाणि रूपाणि प्रकाश्यतया सम्बन्धीनि यस्य तम्। हिरण्यवर्णं सम्यक् सुवर्णवर्णमित्यर्थः। सुवृतं सुवर्तनं वृद्गमनं सुगमनं शोभनगमनमित्यर्थः। सुचक्रं चक्रं चकनं दीप्तिः सुदीप्ति च। आ रोह अनुप्रविशेत्यर्थः। हे सूर्ये उषसः प्रभैवं। इयमप्युदयादूर्ध्वमेवैवाविष्टकालतमा उपचीयमानतरप्रकाशा प्रागरुणोदयात् सूर्योच्यते तस्याः सम्बोधनमे। अमृतस्य उदकनामैतत्। उदकस्य भौमरसाख्यस्य। लोकं [स्थानवचनः] स्थानमादित्यम्। आरुह्य च स्योनं सुखनामैदं सुखमस्मै पत्ये पतिभूतायादित्याय वहतुं प्रवेशमित्यर्थः। कृणुष्व कुरुष्व। एवं नैरुक्तपक्षे योजना।

अनैरुक्तपक्षे—सविता स्वदुहितरं सूर्यां प्रायच्छत् सोमाय राज्ञे प्रजापतये वा। सोह्यमानोच्यते। सुकिंशुकं शोभनकिंशुकमिव पलाशमें। शल्मलिं 'अथापि ताद्धितेन' इत्येवं शल्मलिशब्दः शाल्मलिविकारभूते रथे वर्तते। विचित्रवर्णारूणं शल्मलिविकारभूतं रथम्। बहुभक्तविचित्रपुत्रिकासनोटकरचनाविशेषयोगाद्विश्वरूपम्। सुवर्णेन खचिततत्वाद्धिरण्यवर्णम्। सुवृतं सुगमनम्। सुचक्रं रथमारोह। हे सूर्ये अमृतस्यामृतात्मकस्य मरणवर्जितस्य सोमस्य राज्ञः प्रजापतेर्वा लोकं रथाख्यं स्थानं समारूढः प्रथमतरः सोमः प्रजापतिर्वा। तत्र च स्योनं सुखं पत्ये भर्त्रे सोमाय राज्ञे प्रजापतये वा वहतुं समुद्वाहं कुरुष्वेति।

---

१-शन्नो यते नष्टो B. C.
२-शश्मली C. शाल्मली पुष्प० B.
३-शश्मलीं C. ४-सुव्रतं सवर्तनं C.
५-दीप्तिं B. चकनं चक्रं दीप्तिः सुदीप्तं च M.
६-'इत्यर्थः' इति नास्ति B.
७-सूर्योच्यत इत्येतेनाग्रिमग्रन्थेन सम्बध्यते।
८-'इवि उदयात्' B.C. ९-कालता उप B.C.
१०-'सम्बोधनम्' अस्मात्परं 'रो' इति पाठ उपलभ्यते B.C. तूर्योद्यते तस्याः सम्बोधनम् M.
११-लोकः स्थानवचनः B. C.
१२-वहतु वशमि० M.
१३-'एवं नैरुक्त०' इति त्रुटितम् M.
१४-सविताया स्वदु B. C.
१५-'सोह्यमानोच्य' इति त्रुटितम् M.
१६-पलाशः B. पलाश C.
१७-शल्मलिः B. शश्मलः C.
१८-[निरु० २।५] अथापि (वि.C.) ताग्भिते B.C.
१९-'लम' इति त्रुटितम् B. C. २०-वर्णाभरणं B.
२१-सहाटक B. C. २२-योगं विश्व B.
२३-कवचित्वा M. २४-सुव्रतं B. C.
२५-'सोमस्य राज्ञः' इति त्रुटितम् B.
२६-यमा B. C. 'रूढः' इति त्रुटितम् B.
२७-'थम' इति त्रुटितम् B.
२८-तस्य च B. २९-वहतुं C.

किंशुकं क्रंशतेरिति। क्रंशतिर्नैरुक्तधातुः प्रकाशनार्थः। शल्मलिः सुशरः सुहिंस्रो मृदुत्वात्। शरवान् वा कण्टकप्रायत्वात्। नैरुक्तपक्षे च सविता सुषुम्नाख्यः सूर्यरश्मिस्तत्कृतां[1] ज्योत्स्नां दुहितृभूतां सोमाय राज्ञे प्रायच्छत्। यदा प्रजापतये तदा मध्यमा योषा उदकप्रत्यन्नो न दीयत इति योजयन्ति केचित्।

वृषाकपायी वृषाकपेरादित्यस्य पत्नी। एषैव सूर्या। अभिसृष्टकालतमा अरुणोदयावस्था[2] उषः प्रभैव सूर्यावस्थानां[3] अभिसृष्टकालतमा पूर्ववद्वृषाकपाय्युच्यते। तस्या एषा।

[ इति सप्तदशस्या- ( द्वादशस्या- ) ध्यायस्याष्टमः खण्डः। ][4]

---

## [ अथ नवमः खण्डः। ][4]

वृषाकपायि रेवति सुपुत्र आदु सुस्नुषे।

घसत्त इन्द्र उक्षणः प्रियं काचित्करं हविर्विश्वस्मादिन्द्र उत्तरः[5]॥

संवादसूक्ते इन्द्र आह[6]। हे वृषाकपायि रेवति रयिशब्दाद्धनवचनान्मतौ 'रयेर्मतौ[7] बहुलम्' इति प्रसारणे[8] मतोर्वत्वे चैतद्रूपं[9] सम्बुद्धौ हे धनवति। सुपुत्रे मध्यममस्याः[10] पुत्रमाह साहचर्याद्रसहरणाद्वा माध्यमिकां च स्नुषां[11] ताभ्यां[12] सुपुत्रे सुस्नुषे च। आ इति पादपूरणः। आङर्थे वा घसदित्यनेन सम्बध्यते। अदेश्चायं घस्लादेशः पञ्चमलकारे छान्दसत्वात्। आघसत् आभिमुख्येन भक्षयतु आपिबतु उद्रस्य शोषयतीत्यर्थः। ते तव[13] स्वभूतान्। कोऽसौ? इन्द्रोऽत्यन्तमीश्वरभूत आदित्यः। कदा पिबतु? उक्षणः[14] छान्दसत्वादल्लोपाभावः। उक्षणः 'उक्ष सेचने'[15] सेक्तॄन् भूमेरेतान्[16] माध्यमिकानुदकसंघातानवश्यायाख्यान्[17]। ये तु तत्कालेऽवश्यायकणाः[18] पतन्ति तानित्यर्थः। त्वमपि काचित्करं कं सुखं तस्याचयनं[19] काचित्

---

१–तद्गतां B. तत्कृतां C.

२–वस्थार्षैः प्रभैव B. C.

३–वस्थानमविसृष्ट B. वस्थानः अविसृष्ट C.

४–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते।

५–[ऋ० १०। ८६। १३] 'वृषाकपायि' इत्येव प्रतीकम् B. C. M.

६–इन्द्रस्य B. 'इन्द्र' इत्येव C.

७–[६।१।३४] इति पाणिनीयसूत्रे वार्तिकम्। रयेयं मतौ B. रयेम्मतौ C.

८–प्रासार M. 'णे मतोर्वत्वे' इति त्रुटितम् M.

९–एतद्रू B. येतद्रू C. १०–मध्यमस्याः B. C.

११–'स्नुषां ता' इति त्रुटितम् M. १२–नव B. C.

१३–उक्षणं B. उष्ण: C.

१४–उष्णं B. उष्णः C.

१५–[धा० १।६५८]

१६–भूतान् मे एमान् B. भूमे एतान् C.

१७–'ता' इति त्रुटितम् B. C.

१८–येतु काले B. येतु कालै C.

१९–तस्य चयनं B.

तस्य कर्तृभूतं सुखाचयंकरं काचित्करं[1] प्रभूतसुखमित्यर्थः। किं पुनस्तत्? हविः[2] उदकनामेदम्। उदकमवश्यायाख्यम्। द्वितीयाश्रुतेः कुरुष्वेति शेषः। विश्वस्मादिन्द्रोऽत्यन्तमीश्वर उत्कृष्टतरश्चान्यैरपि गुणैः।

घसदित्यनेन[3] चास्य व्यवहितेनापि सम्बन्धः। तदेतद् भाष्यकार आह। सर्वस्माद्य इन्द्र उत्तरस्तमेतद् ब्रूम आदित्यमिति[4]। एतच्छब्देनात्र घसदित्येतत् प्रतिनिर्दिशयति घसदित्येतदिति[5] ब्रूम इति व्यवहितेनास्य घसदित्येतेन[6] सम्बन्धः। यदि तु प्रियं काचित्करं हविरिति घसदित्यनेन व्यवहितेन सम्बध्यते। अवश्यायं[7] घसत्। उक्तविशेषलक्षणं हविरुदकं नदीतटाकादिस्थं[8] सोमरसाख्यमिति तद् घसत्[9]। [ततः[10]] तत्कुरुष्वेति वाक्यशेषोऽध्याहर्तव्यो जायते[11]। न च विश्वस्मादिन्द्र उत्तर इति व्यवहितकल्पनया[12]।

स्नुषा कस्मात्[13]। साधुसादिनी [इति[14]] वा साधौ शोभनेऽर्थे[15] श्वशुरस्य[16] सन्तानलक्षणे परिचर्यालक्षणे वा सीदत्येवंशीला। साधुसानिनीति[17] वा [तां वा[18]] संभजत एवंशीला। [स्वपत्यं[19] सन्तनोति वा] अथवा स्नुशब्दो[20] [अपि[21]] अपत्यनाम तत्सनोति। यं प्रति स्नुषाव्यपदेशस्तस्यापत्यं संभजत इति।

उक्षा[22] उक्षतेर्वृद्ध्यर्थस्य। वर्धयन्ति[23] हि त ओषधीरवश्यायाः। अत एव वा बहुत्वाद् वृद्धा भवन्ति[24]। स्वार्थ एवं[25] वा उक्षन्ति[26] सिञ्चन्ति सर्वमधोभागवर्त्युदकेनेति[27]।

---

१–करत् B. C. अग्रे 'काचित्करं' इति पाठो नास्ति B. C.
२–'हविः' इति त्रुटितम् B. C.
३–घसमत्यनेन C. 'घसदित्यनेन' इत्यारभ्य 'इति व्यवहितेनास्य' इत्यन्तः पाठस्त्रुटितः M.
४–[निरु० १२।१०] आदित्य इति C.
५–'घ' इति त्रुटितम् B.
६–घसतीत्यनेन B.
७–अवश्यं B. M. ८–तडागादि B.
९–तदघसत् M. 'तद् घसत्' इति नास्त्येव B. C.
१०–तदस्तत् B. C. 'ततः' इति नास्ति M.
११–जयते B. १२–कल्पनायाः B.
१३–'कस्मात्। साधुसा' इति त्रुटितम् M.
१४–दिनी वा B. M.
१५–शोभनार्थे B.
१६–श्वश्र.........क्षणे M.
१७–सादिनी (नि C.) वा B. M.
१८–'तां वा' इति नास्ति M.
१९–स्तु अपत्यं B. 'सु अपत्यं' इति स्यात्। 'स्वपत्यं सन्तनोति वा' इति नास्ति M. 'सन्तनोति' इत्यस्य स्थाने 'तत्सनोति' इति पाठः स्यात्।
२०–स्तुशब्दो B. C.
२१–०ब्दोव्यप० B. 'अपि' इति नास्ति M.
२२–उक्ष B. C.
२३–वर्धयते वर्धयति हि B.
२४–भवति B. C.
२५–'व' इति त्रुटितम् B. C. M.
२६–उक्षति B. C. 'सिञ्चति' इत्येकवचनान्त एव पाठः B.
२७–०भागवत्योदके B. C.

सरण्यूः । सैव यदा सूर्यं प्रत्यात्मानं सरणेन नयति तद्दोषःप्रभारुणोदयावस्थाभि-[1] भूतकालतमा सरण्यूरुच्यते[2] । तस्या एषा ।

[ इति सप्तदशस्या- ( द्वादशस्या- ) ध्यायस्य नवमः खण्डः । ]

---

## [ अथ दशमः खण्डः । ][3]

अपा॑गूहन्न॒मृतां॒ मर्त्ये॑भ्यः कृ॒त्वी सव॑र्णामददु॒र्विव॑स्वते ।
उ॒ताश्विना॑वभर॒द्यत्तदासी॒दज॑हादु॒ द्वा मि॑थु॒ना स॑र॒ण्यूः ॥[4]

देवश्रवस आर्षम्[5] । अपगूहन्ते रश्मयोऽपनयन्तीत्यर्थः । काम् ? अमृताममरणधर्मिणीं[6] वृषाकपायीशब्दवाच्यामरुणोदयावस्थामुषःप्रभाम्[7] । कुतोऽपागूहन् ? मर्त्येभ्यो मनुष्याणां दृष्टिपर्थादित्यर्थः[8] । कृत्वी कृत्वा[9] वान्यां[10] तत्सवर्णां सरण्यूनाम्नीमुदितेऽरुणे[11] यस्याः[12] प्रभा ताम-ददुर्ददति[13] । विवस्वत उद्यत आदित्यस्य[14] सन्निकृष्टतरां कुर्वन्तीत्यर्थः । सा च दत्ता सती उत अपि च । अश्विनावभरत् बिभर्त्तेरिदं रूपं न भरतेः[15] । अश्विनावात्मनि धारयति तमोभागं ज्योतिर्भागं चेत्यर्थः । यत्तदासीद् वृषाकपाय्यां[16] रक्तं रूपं तच्च[17] क्रमेणोपजायमानप्रकाशप्रकर्षा[18] अजहाज्जहाति[19] । उकारः पादपूरणः । द्वा मिथुना द्वौ मिथुनौ स्त्रीपुंसौ मध्यमञ्च[20] तमोभागं तद-न्तर्गतां च माध्यमिकां वाचं चच्च तदासीद् वृषाकपाय्यां[21] रक्तं रूपं तेन रूपेण सह त्रितयमपीत्यर्थः ।

ऐतिहासिकपक्षे[ तु[22] ]सरण्यूर्नाम त्वष्टुर्दुहिता[23] । तां देवतारूपत्वाद[24]मृताममरणधर्मिणं[25]

---

१—तद्दोषप्रभा B. C.
२—सरण्वुच्यते C. सरण्यूरित्युच्यते B.
३—आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।
४—[ऋ० १० । १७ । २] 'अपा गूहन्' इत्येव प्रतीकम् B. C. M.
५—'आर्षम्' इति नास्ति B. C.
६—धर्माणं B. C.
७—०यायिश० B. C.
८—दृष्टिपातादि B.
९—क्षवि कृत्वा C.
१०—चान्यां B, C.
११—सरण्यूनामानं B. सरख्युनामन C.
१२—यस्यां प्रभा B. १३—ददती M.
१४—'स्य' इति त्रुटितम् B. C.
१५—भवतेः B.C.
१६—कपार्यां C.
१७—'तच्च' इति त्रुटितम् B.
१८—क्रमेण वोप B. C. १९—अजहत् C. M.
२०—मध्यमश्च B. C. २१—कपार्यां C.
२२—'तु' इति नास्ति M.
२३—'ता' इति त्रुटितम् M.
२४—'द' इति त्रुटितम् C.
२५—'धर्मिणीं' इति युक्तः स्यात् ।

मर्त्येभ्यः सर्वमनुष्येभ्यो [देवा] अपागूहन् नाशितवन्त इत्यर्थः। कृत्वा चान्यां तद्वर्णामद्दुर्विवस्वते। सा च तदाश्वं रूपं कृतवत्युत्तरेषु कुरुषु विवस्वतोऽश्वरूपादश्विनावात्मनि गर्भभूतावभरत् धारितवती जनितवतीत्यर्थः। यत्तदासीदाश्वं रूपमस्यास्तत् स्वेन रूपेणाजहात् ['ओहाक् त्यागे'] त्यक्तवती च विवस्वत एव सकाशाद् द्वौ मिथुनौ स्वपुत्रौ यमं च यमीं च सरण्यू इति। इतिहासदर्शनाभिवादिन्येषा ऋग्भवति।

[इति सप्तदशस्या-(द्वादशस्या-) ध्यायस्य दशमः खण्डः।]

---

## [अथैकादशः खण्डः।]

त्वष्टा॑ दुहि॒त्रे व॑ह॒तुं कृ॑णो॒तीती॒दं विश्वं॒ भुव॑नं॒ समे॑ति।
य॒मस्य॑ मा॒ता प॑र्यु॒ह्यमा॑ना म॒हो जा॒या विव॑स्वतो ननाश॥

त्वष्टा देवः। दुहित्रे षष्ठ्यर्थे चतुर्थी स्वस्या दुहितुः सरण्यूनाम्न्याः। वहतुं वहनं विवाहं कृणोति करोतीति। एतेन कारणेन संपरिहाणारार्थम्। इदं विश्वं भुवनं सर्वं भूतजातं समेति समित्येष आ इत्यस्य स्थाने। भूते च लट् समागच्छति स्म। सा च पर्युह्यमाना ऊढा च सती यमस्य यम्याश्च माता महो महतो विवस्वतो जाया भार्या तस्माद् यमं च यमीं च जनयित्वा त्यक्तृ ननाश नष्टा।

नैरुक्तपक्षे त्वस्यामृचि त्वष्टा मध्यमस्तमोभागस्तस्य दुहिता उषाः। तेन रात्रिरूपेण

---

१–'देवा' इति नास्ति M.

२–'अपागूहन् अश्वरूपं कृतवतीमुत्तरेषु नाशीतिवान्त इत्यर्थः ('इत्यर्थः' नास्ति B.) कृत्वा चान्यां तद्वर्णामददुर्विवस्वते सा चादाश्विनौ आत्मनि' इति पाठक्रमः B. C.

३–मस्यास्तेन रूपे B. C.

४–[धा० ३।८] त्यागे इत्युक्तः B. 'ओहाक् त्यागे' इति नास्त्येव M.  ५–साकाशे B. C.

६–यमश्च यमी च B. C.

७–'ऋग्' इति नास्ति B. C.

८–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते।

९–[ ऋ० १० । १७ । १ ] 'त्वष्टा दुहित्रे' इत्येव प्रतीकः B. C.

१०–नाम्ना P. स्वरण्यूनाम्ना C. ११–वहतं वचनं C.

१२–संपरिष्ठाणारार्थ B. C. अयं सन्दिग्धः पाठः। अत्र 'संपरिष्ठाणाद्दारार्थं' इति वा पाठः स्यात्।

१३–सर्वजातं B. C.

१४–'समेति समागच्छति स्म। सा च पर्यु (र्यू C.) ह्यमाना समित्येषादित्येतस्य स्थाने भूते च लट् तेनायमर्थः पर्युह्यमानेति ऊढा च सती' इति पाठक्रमः B. C.

१५–यमश्च यम्या च B.

१६–'च' इति नास्ति B.

१७–त्यक्त B. त्यक्त C. 'ततो' इति स्यात्।

१८–रातिरूपेण B.

स्वैर्[1]उदये जन्यमानत्वात्तस्या वहनं[2] प्रापणमनुप्रवेश आदित्ये तं[3] स मध्यमस्त्वष्टा रात्रिरूप आत्मापगमनेन करोति। एतेन कारणेनेदं[4] सर्वं भूतजातं समेति संगच्छते[5] स्वैः कर्मभिः सम्बध्यते[6]। उदितायां हृशुषसि अपैतीदानीं[7] तम उदेत्यादित्य इत्येवं मन्यमाना सर्वप्राणिनः[8] स्वकर्माणि कर्तुं प्रारभन्त इत्यर्थः। सापि यम आदित्यस्तस्य माता साहचर्याद्रसहरणाद्वा मातृभूता। तं प्रति पर्युह्यमाना च न[9] केवलं मातृभूता। किं तर्हि? महो महतो विवस्वतो ऽभिगमनसामान्याज्जायाभूता विश्वरूपेण ननाश नश्यति । उद्यत्यादित्ये लीयते तदात्मकैवेत्यर्थः। अभिसमागच्छतीति स्वैः कर्मभिरिति वाक्यशेषः। रात्रिरादित्यस्येति च रात्रिशब्देन रात्रेरेकदेशत्वादुषा[10] एवोच्यते सम्बन्धत्वात्। सा च देवधर्मेणादित्यस्य माता। जा[11]···न दानयेन्तर्धीयत इति सिद्धम्।

इति निरुक्तविवरण समुच्चये सप्तदशस्य [द्वादशस्य][12] प्रथमः पादः।

---

## अथ द्वितीय पादः।[13]

सविता व्याख्यातः[14]। सर्वस्य प्रसवितेति। इह तु द्युस्थानोऽभिधेयः। किंमवस्थः[15] उच्यते
तस्य कालो यदा द्यौरपहततमस्काकीर्णरश्मिर्भवति। तस्यैषा भवति[16]।

द्यौरेव न भूमिः। आविर्भूतप्रकाशा उदेष्यता[17]दित्येन कीर्णा रश्मयो यस्यां[18] एवमस्थः। तस्यै[19] सवितुरेषा।

[इति सप्तदशस्या-(द्वादशस्या-) ध्यायस्य द्वादशः खण्डः][20]

---

१–'सूर्योदये' इति पाठः स्यात्

२–हवनं C.   ३–दं C.

४–नेदि सर्वं C.

५–'ते' इति त्रुटितम् B. C.

६–सम्बध्यन्ते C.

७–आत्रैतिदानीं C.

८–सर्वे प्राणिनः B.

९–'न' इति त्रुटितम् B. C. 'केवलं' इत्यत्र 'केवला' इति पाठः B.

१०–रात्रेरेव केवलात्वादुषा B. C.

११–अयं सन्दिग्धः पाठः

१२–'द्वादशस्य' इति नास्ति आदर्शपुस्तकेषु। 'इति सप्तदशस्य प्रथमः पादः' इत्येव पाठः C. M.

१३–C. पुस्तके पादारम्भनिर्देशो नास्ति।

१४–[निरु० ७।३१॥१०।३१]

१५–कमवस्थः C.

१६–'तस्य कालो यदा द्यौः' इत्येव प्रतीकम् B.C.M

१७–उदेष्यता B.

१८–'यस्यां' इति सप्तम्यन्तपाठो युक्तः स्यात्।

१९–तस्या M.

२०–आदर्शपुस्तकेष्वत्र खण्डसमाप्तिर्निर्देशो दृश्यते।

## [अथ त्रयोदशः खण्डः।][1]

विश्वा रूपाणि प्रति मुञ्चते कविः प्रासावीद्भद्रं द्विपदे चतुष्पदे।
वि नाकमख्यत्सविता वरेण्योऽनु प्रयाणमुषसो वि राजति[2]॥

श्यावाश्वस्य। यान्यनेन संगच्छता तमसा पिहिता[3]न्यनुपलभ्यमानत्वादगृहीतानि विश्वा तानि विश्वाणि सर्वाणि रूपाणि घटपटस्तम्भादीनि प्रतिमुञ्चते मनाक्[4] क्रमापनयेनोपलभन्[5] प्रतिमुञ्चतीव। कविर्मेधावी[6]। प्रासावीत् प्रसवो[7]ऽभ्यनुज्ञा अभ्यनुजानाति च। भद्रं[8] स्वं स्वं कर्म। द्विपदे मनुष्याय। चतुष्पदे गवादये। च सर्वेभ्यो द्विपाद्भ्यश्चतुष्पाद्भ्यश्च। सर्वं हि भद्रं कर्मोदिते सवितरि क्रियते नानुदिते तदुदयेनानुजानातीव। किञ्च वि नाकमख्यत् व्यख्यत्[9] ख्यातिरत्रान्तर्णीत[10][11]ण्यर्थः। विख्यापयति प्रकाशयतीत्यर्थः। नाकं दिवम्। कः? सविता वरेण्यो वरणीयः। किञ्च अनु प्रयाणमनु पश्चात् प्रयाणस्योषसः उषसि व्यतीतायामित्यर्थः। विराजति विशेषेण दीप्यते।

भाष्ये सर्वाणि प्रज्ञानानीति[12] घटपटादिरूपाविष्कृतेस्तद्विषयाणि प्रज्ञानानि[13] प्रतिमुञ्चतीत्याह। कविः कस्मात्? क्रान्तदर्शन इत्यादि क्रमतेः। कवतेर्वा[14] गतिकर्मण इदं रूपम्। क्रान्तं दूरं गतं दर्शनं प्रकाशरूपं विज्ञानमस्य[15]। यदा कवतेस्तदा[16] कविर्गन्ता गच्छत्यसौ[17] नित्यम्। अवगन्ता वा सर्वस्य ज्ञाता। क्वचित्तु कवतेः शब्दकर्मणः। अस्मिन्नेव नामकरणे शब्दकारी कविरुच्यते।

विनाकमख्यदि[18]ति सवितुः कालोपलक्षणार्थं मन्त्रलिङ्गम्। तत्पशुगुणसामान्येन समर्थयन्नाह। 'अधोरामः' इत्यादि ब्राह्मणम्[19]। पशुविधानार्थः समाम्नायः पशुसमाम्नायः। तत्र 'अधोरामं[20] सावित्रमालभेत। कृकवाकुं सावित्रमालभेत[21]' इति श्रूयते। तत्

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते।
२–[ऋ० ५।८१।२] 'विश्वारूपाणि' इत्येव प्रतीकम् B. C. M.
३–विहिता B. C. ४–त्रास तानि B. C. M.
५–क्रमणा ( नात् ) क्रममपमये B. मना क्रममपनये C.
६-मेधावि प्रासावित् M.
७-प्रासवो C. ८–भद्रत् C. भद्रः M.
९–व्याख्यत् B. C. १०–ख्यतिर C. M.
११–न्तर्नीत B. १२–प्रज्ञानीति M.
१३–'नि' इति त्रुटितम् M.
१४–क्रमतेर्वा C. 'कवतेः' इति त्रुटितम् M.
१५–नमयस्य B. C. १६–कवेस्तदा B.
१७–कविर्गता गच्छन्त्यसौ B. C.
१८–विनत ( क C. ) मख्य B. C.
१९–[काठक सं० ५।८।२॥ तै० सं० ५।५।२॥ वाज० सं० २९।५८]
२०–रामः सावि B. तन्त्राधोराम सोवि C.
२१–[cf 'वा० सं० २९।५९ अधोरामः सावित्रः ॥२४।३५। कृकवाकुः सावित्रः।]

कस्मा[1]द् गुणसमान्यादिति चेत् । अध[2]स्तात्तद्वेलायां तमो भवतीति । तद्वेलायां तस्यां वेलायाम-धस्ताद् उपरिष्टाज्ज्योतिर्विकीर्णरश्मित्वात् । एतस्मात्सामान्यात् एतस्माद्देवतागुणसामान्यात्प-शुरपि सावित्रस्तद्रूप एवाधोराम इति । अधस्ताद्रामोऽधस्तात्कृष्ण इति स्याद्रामः कृष्णो[3] वर्ण. । कस्मात्सामान्याद्रामः कृष्णवर्ण[4] इति चेत् ? शृणु । विज्ञायते हि[5] 'अग्निं चित्वा[6]' इत्यादि । का[7] तत्र रामा ? शूद्रोच्यते कृष्णजातीया । कृष्णो ह्यप्रशस्तो वर्णः । कस्मा[8]त् सामान्यात् ? पशावपि रामशब्दः प्रवृत्तः ।

एवमेव कृकवाकुरित्यादि । कालानुवादं परीत्य सावित्रं कालं ह्यसौ[9] वदति । परीत्य ज्ञात्वा । तत्सम्बन्धेन सावित्र[10]मित्यर्थः । कृकवाकुशब्दस्य पूर्वं कृक[11] इत्येतत् तच्छब्दा[12]नुकरणनिमित्तम् । वचेरुत्तरम् । कृक[13] इत्येवं ह्यसौ ब्रवी[14]तीति कृकवाकुः । एतदर्थानुवादिन्येव व्याकरणस्मृतिः 'कृके[15] वचः कश्च' इति ।

भगो वक्तव्यः स पुनर्निरुक्त[16]ः । भजनीयो भूतानां स्वकार्यप्रयुक्तानां सावित्रात्कालादनन्तरवर्तिज्योतिर्विशेषो भगाख्योऽत्यन्तभास्वरः प्रकाशः प्रागुपसर्पणादना[17]विर्भूतमण्डल इत्यर्थः । तस्यैषा ।

[इति सप्तदशस्या-(द्वादशस्या-) ध्यायस्य त्रयोदशः खण्डः][18]

---

## [अथ चतुर्दशः खण्डः ।][18]

प्रातर्जितं भगमुग्रं हुवेम वयं पुत्रमदितेर्यो विधर्ता ।
आध्रश्चिद्यं मन्यमानस्तुरश्चिद् राजा चिद्यं भगं भक्षीत्याह ॥[19]

...... ... संपदादित्वात् क्वि[20]प् प्रातस्तमांसि जयति यस्तं प्रातरे... ....... .......

---

१–'कस्मात्' इति त्रुटितम् B. C.
२–अथ तत्तद्वेला B. C.     ३–कृष्णोद्वर्णः
४–कृष्णे वर्षे इति C.
५–'हि अग्निं चित्वा' इति त्रुटितम् B. यतेभ्यधिश्चि C. यतेष्यग्निश्चि M.
६–[काठ० सं० २२।७]
७–कां तक रामा B. C. का० के रामा M.
८–'स्मा' इति त्रुटितम् B. तस्मात् B. C.
९–अन्यसौ B. C.   १०–सावित्रत्व० B. C.
११–कृत इत्ये C. M.  १२–'ब्द' इति त्रुटितम् C.
१३–तुक इत्ये B.
१४–प्रवीति कृक M.
१५–[उणा० १।६] कृके (ते C.) वचकश्च B. C. 'के वचः' इति त्रुटितम् M.
१६–[निरु० ३।१३]
१७–णादाविर्भू B. दाविर्भूः त C.
१८–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।
१९–[ऋ० ७।४१।२] 'प्रातर्जितं' इत्येव प्रतीकम् B. C. M.      २०–क्षि C.

त्यर्थः । भगमुक्तावस्थं ज्योतिः । उग्रमप्रसं[1]ह्यं उद्गूर्णायोत्सर्पणाय ... वयम् । पुत्रमदितेर्देवमातुः प्रातस्तन्यां[2] वा सन्ध्यायाः । कीदृशं भगम् ? यो विधतः ... ा सर्वस्य स्वेनानुग्रहेण । आध्र[3] आढ्यालुराढ्यत्वकामो दरिद्रः। चिच्चार्थे दरिद्रश्च[4] । यं मन्यमानो मन्यतिः कान्तिकर्मा यं कामयमानः[5] । किम् ? सामर्थ्याद्भजनार्थं पर्यागमनम् । तुरश्चित् तूर्णगतिश्च । कोऽसौ? सामर्थ्याद्यम इत्याह प्राणिनामायुषः क्षयार्थम् । राजा चित् राजा च प्रजानां व्यवहारादिदर्शनाद्यर्थम् । यं भगं भक्षी[6]त्याह । भक्षीति भजतेश्छान्दसत्वात् परस्मैपदमध्यमैकवचने[7] भजस्वोदयमित्यलम् । यमो[8] राजा च[9] स्वकार्यप्रसिद्धये समुद्यतमिच्छतीत्यर्थः ।

आढ्यालुर्दरिद्र इति वाक्यार्थे पदवचनमाध्र[10] आढ्यालुरिति 'आढ्याच्चालुच्च उपसंख्यानम्[11]' अस्मादेव वि[12]शिष्टप्रयोगात् । तुरस्त्वरण[13] इत्यस्य तरतेर्वा प्लवनार्थस्य त्वरतेर्वा शीघ्रार्थे वर्तमानस्य तुरः । तुरोऽपि यं भगमाहेति सम्बन्धः । ज्योतिर्भग [उच्यते[14]] इत्यस्यैवार्थस्य द्रढिम्नः कारणमाह । अन्धो भग इत्याहुर्ब्रह्मवादिनः । तत्कथम्[15] ? ना[16]स्मिन् द्रष्टृणां ध्या[17]न्यदर्शनमस्तीत्यर्थः । अनुत्सनः सूर्याभा[18]वमनागतो मण्डलाकारतया न दृश्यत इत्यर्थः ।

अथवा प्राशित्र[19]स्येक्षण[20]भक्षणादीनि मन्त्रवन्ति कर्तव्यानीति । अस्य विधेः स्तुतिपरेऽर्थवादे तद्भगाय परिजहुः[21] । तस्य 'अस्याक्षिणी निर्जघान[22]' इत्यादौ भगस्य सिद्धमन्धत्वमैतिहासिकपक्षे, तत्तु[23] मन्दप्रयोजनम् । 'जनं भगो गच्छति[24]' इत्यादि ब्राह्मणम् । तच्चादित्य एव[25] एवमवस्थो भगशब्द[26]वाच्य इति प्रति[27]पत्त्यर्थम् । तस्य विवरणं जनं गच्छत्यादित्य उदयेनेति ।

---

१–प्रसा (सां C.) ह्यं B. C.
२–प्रातस्त ा (B. C.) वा सन्ध्या वा B.
३–'आध्र आढ्यालुः' इति त्रुटितम् B. C. आध्रु आढया M.
४–'दरिद्रश्च' इति त्रुटितम् M.
५–'कामयमानः' इति स्यात्
६–भक्षित इति आह C. M.
७–वचनं B.
८–मालदरिद्रोयमो B. मालरिन्द्रो यमो C.
९–'च' इति नास्ति B.
१०–नमाढ्य इति B.
११–[अनुपलब्धमूलमिदं वचनम्]
१२–'वि' इति नास्ति B.C.
१३–तुर त्वरण B. C.
१४–'उच्यत' इति नास्ति M.
१५–न कथम् B.
१६–नास्ति द्रष्टृ M.
१७–अत्र 'ध्यानदर्शन' इति पाठो युक्तः स्यात् ।
१८–सूर्याभावमागतो B.C.
१९–प्राशित्रमस्ये० B.
२०–भक्षणानि B. C.
२१–परिबभ्रुः B. C.
२२–[कौषी० ब्रा० ६।१३] 'अस्य' नास्ति B.C.M.
२३–स्वहमन्दप्रजनं B. तत्वमन्द C.
२४–[ मैत्रा० सं० १।६।१२ ]
२५–'एव' इति त्रुटितम् B. C.
२६–शब्दो वाच्य M.
२७–'तिप' इति त्रुटितम् C.

सूर्यो वाच ... पुनः सर्त्तेः प्रागवस्थातः सरणात्[1]। सुवतेर्वा[2] सुकर्मसु जगतः प्रेरणात्। स्वीर्यतेवा ... ग्रयं सुष्ठु सर्वदैवोदयास्तमयौ प्रतीर्यतेऽतः सूर्यः[3]। तस्यैषा।

[इति सप्तदशस्या-(द्वादशस्या-) ध्यायस्य चतुर्दशः खण्डः[4]]

---

## [अथ पञ्चदशः खण्डः।]

उदु त्यं जातवेदसं देवं वहन्ति केतवः।

दृशे विश्वाय सूर्यम्[5] ॥

प्रस्कण्वस्य[6] [आर्षम्]। तच्छब्दसमानार्थत्वाच्छ्नेर्यच्छब्दोऽध्याहार्यः। यं जना नमस्यन्ति तं जातवेदसं जातप्रज्ञानं[7] देवं दानादिगुणम्। वहन्ति आद्य उच्छब्द इह द्रष्टव्यः। उद्वहन्ति ऊर्ध्वं वहन्ति। के[8]? सामर्थ्यादश्वाः। कीदृशाः? केतवः केतुरिति[9] प्रज्ञानम। प्रज्ञानसतत्वाः[10]। सूर्यस्य[11] स्वयं प्रज्ञानस्वभावत्वात्। अश्वैरपि प्रज्ञानसतत्वैर्[एव][12]भवितव्यम्। अथवा केतवो[13] रश्मयः प्रज्ञानसतत्वास्ते[14] उद्वहन्ति। किमर्थम्? दृशे द्रष्टुं दर्शनार्थमित्यर्थः। कस्य? विश्वाय षष्ठ्यर्थेऽत्र चतुर्थी। सर्वस्य भूतजातस्य। उदिते हि सूर्ये सर्वं भूतजातं द्रष्टुं समर्थं भवति नानुदिते। कं वहन्ति[15]? सूर्यं[16] रश्मयो वाय्वाविष्टाः[17]।

सौर्ये सूक्ते जातवेदस्पदसन्निधानशङ्का[18]व्यावृत्त्यर्थमाह कमन्यमिति। परा च यत्र जातवेदःशब्दो[19] [अपि][20] नास्ति।

[इति सप्तदशस्या-(द्वादशस्या-) ध्यायस्य पञ्चदशः खण्डः[21]]

---

१–स्थानः B. C.
२–सुवतेर्वा B. सुपतेर्वे C. मुद्रितनिरुक्तमूलेऽपि 'सुवतेर्वा' इत्येव पाठः। ३–सूर्याः M.
४–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो नास्ति
५–[ऋ० १।५०।१] 'उदु त्यं' इत्येव प्रतीकम् B. M. उदित्यं C.
६–'आर्षम्' नास्ति M. 'प्रस्कण्वः' इत्येव C.
७ जातब्रह्मज्ञानं B. C. ८–केन B. C.
९–ते केतु B. १०–तत्वात् B.
११–सूर्येन्दहि स्वयं B. C.
१२–'एव' इति नास्ति B. M.
१३–केनवो C.
१४–तत्वात् उद्व B.
१५–कर्मकृद्भवति B. कर्मद्वहति C.
१६–'सूर्यं' इति त्रुटितम् B. C.
१७–वायवाविष्टाः (ष्ठाः B.) B. C. वार्याविष्टाः M.
१८–धानाशंत्रा C.
१९–'वेदस्' इति त्रुटितम् B. C.
२०–'अपि' इति नास्ति M.
२१–आदर्शपुस्तकेष्वत्र खण्डसमाप्तेर्निर्देशो न दृश्यते।

## [अथ षोडशः खण्डः ।][1]

चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः ।
आ प्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च ॥[2]

कुत्सस्यार्षम् । चित्रं प्रातर्मध्यन्दिनापराह्णेषु नानारूपत्वाच्चित्रं चायनीयं वा पूज्यं ज्योतिः । उदगात् उदितम् । किं रूपम् ? देवानां रश्मीनामनीकं समूहः [कदम्बं] रश्मिसमूह इत्यर्थः । चक्षुश्चक्षुस्थानीयं च प्रकाशकत्वात् । कस्य चक्षुः ? मित्रस्य वरुणस्याग्नेः । मित्रादिग्रहणं च प्रदर्शनार्थं देवानां मनुष्याणामन्येषु च प्राणिनामित्यर्थः । उद्गम्य च आ प्राः 'प्रा पूरणे' इत्यस्यान्तर्णीतण्यर्थस्य पुरुषव्यत्यय आपूरयति द्यावापृथिव्यावन्तरिक्षं च । केन ? सामर्थ्यान्महत्वेन रश्मीनाम् । महद्भी रश्मिभिरित्यर्थः । कतमदीदृशं ज्योतिः ? उच्यते । सूर्यो योऽयं सूर्यो नामात्मा जगतस्तस्थुषश्च जङ्गमस्य स्थावरस्य चात्मभूतः सर्वानुप्रवेशित्वात् । तथा च विज्ञायते रहस्यब्राह्मणे सर्वानुप्रवेशित्वम् 'सूर्य आत्मा जगतस्तस्थुषश्चेत्येतदुह्वैवोपेक्षेत' इति । उपासीतेत्यर्थः । चक्षुर्मित्रादीनामित्यत्रापि विज्ञायते 'असावादित्यो देवानां चक्षुः' इति ।

[अनन्तरं][11] पूषा वक्तव्यः । स[12] कस्मात् ? यद्रश्मिपोषं पुष्यति । यद्यदा रश्मिभिः परिविष्टो भवति तदा पूषा भवति । तस्यैषा ।

[इति सप्तदशस्या-(द्वादशस्या-) ध्यायस्य षोडशः खण्डः][13]

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।

२–[ऋ० १।११५।१] 'चित्रं देवानाम्' इत्येव प्रतीकम् B. C. M.

३–या C. यत् B.

४–समूहं B. C.

५–'कदम्बं' इति नास्ति M.

६–[धा० २।५१] आ पूरणे B. C.

७–रश्मीनां महत्त्वेन M.

८–यते ह रह B, C.

९–[ऐ० आ० २।२।४] 'त, इ' इति त्रुटितम् B. C.

१०–[Cf. चक्षुरादित्यः शत० ब्रा० ३।२।२।१३॥ जै० उ० ३।२।७ यत्तच्चक्षुरसौ स आदित्यः शत० ब्रा० १०।३।३।७॥ तद्यत्तच्चक्षुरादित्यस्सः जै० उ० १।२८।७]

११–'अनन्तरं' इति नास्ति M.

१२–'सः' इति नास्ति B.

१३–आदर्शपुस्तकेष्वत्र खण्डसमाप्तेर्निर्देशो न दृश्यते ।

## [अथ सप्तदशः खण्डः ।][1]

शुक्रं ते अन्यद्यजतं ते अन्यद् विषुरूपे अहनी द्यौरिवासि ।

विश्वा हि माया अवसि स्वधावो भद्रा ते पूषन्निह रातिरस्तु ॥[2]

भारद्वाजस्य । शुक्रशब्दोऽत्र शुक्लपर्यायः शुक्रं ते तव । अन्यत् एकम् । किं पुनस्तत् ? सामर्थ्याद्रूपम् । यजतं ते अन्यत् । यजतशब्दोऽत्र शुक्लप्रतियोगित्वाल्लोहितपर्यायः । लोहितं ते अन्यदपरं रूपम् । पूषाख्यादित्यः । तस्य मध्यन्दिने शुक्लं रूपं, लोहितमुदयास्तमययोः । अथवा शुचेर्दीप्त्यर्थस्य शुक्रं रो मत्वर्थीयः । शुक्रं दीप्तिमदुच्यते । दीप्तिमदेतत् ते तवैकं रूपं मण्डलाख्यम् । यजतं यष्टव्यमन्यन्मण्डलस्याधिष्ठायकम् । ते चैते विषुरूपे परस्परं भिन्नरूपे शुक्ललोहितत्वरूपेण । ते वा अहनी अहोरात्रे एते त्वमसि । तव चैते कर्मणी यतस्त्वत्कर्तृके एते अतस्त्वमसि । द्यौरिवासि द्यौरिव च त्वमसि यथा द्यौर्व्यापिनी तथा त्वमसीत्यर्थः । विश्वा हि हिरत्र चार्थे सर्वाश्च मायाः । अवसि प्रज्ञाहेतुभूतप्रकाशदानेन त्वं पालयसि । हे स्वधावन् स्वधेत्युदकनाम वा रश्म्याहृतेनोदकेन हविर्लक्षणेनान्नेन वा तद्वत् । किञ्च भद्रा कल्याणी ते तुभ्यं हे पूषन् इहास्मदीये यज्ञे रातिर्हविषो दानमस्तु कृणु ।

अथवा भद्रा ते इति तेशब्दः 'कर्तृकर्मणोः कृति' इति कर्तृलक्षणषष्ठ्यन्तः । कल्याणी ते त्वत्कर्तृका रातिरिहास्तु । कल्याणं दानमिहास्मभ्यं देहीत्यर्थः । द्वितीये व्याख्याने यजतमिह भाष्ये भाजनं स्वपानपात्रं तेन तद्वती ।

'इयं वै पूषा' इति पृथिवीतो व्यवच्छेदाय पथि रक्षितृत्वाधिकारप्रदर्शनाय वा पूष्णः परा च ।

[इति सप्तदशस्या-(द्वादशस्या-) ध्यायस्य सप्तदशः खण्डः][24]

---

१-आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।
२-[ऋ० ६।५८।१] 'शुक्रं ते अन्यत्' इत्येव प्रतीकम् B. C. M.
३-शुक्रः के तत्र C. M.
४-शुक्रप्रति B. C. ५ हित उदया B. C.
६-'य' इति त्रुटितम् C.
७-शुक्लः रो B. शुक्लः रो C.
८-दीप्तिमन्तेन वैकं B. C. ९-यजन्तं C.
१०-ये चैक (के C.) B. C.
११-'त' इति त्रुटितम् M. १२-कर्मणि B. C.
१३-द्यौरिवासी C. द्यौ दिवासि M.
१४-'हि' इति नास्ति B. C.M. १५-स्वधावत् C.
१६-रशयाहृते B. १७-'दा' इति त्रुटितम् M.
१८-'अ' इति त्रुटितम् C. १९-[पा. २।३।६५]
२०-'न्तः' इवि त्रुटितम् C. लक्षणा षष्ठी M.
२१-द्वितीयव्याख्याने B. २२-ह्राजनं C.
२३-[मैत्रा० सं० ४।५.५]
२४-आदर्शपुस्तकेष्वत्र खण्डसमाप्तेर्निर्देशो न दृश्यते ।

## [अथाष्टादशः खण्डः।][1]

पथस्पथः परिपतिं वचस्या कामेन कृतो अभ्यानळर्कम् ।

स नो रासच्छुरुधश्चन्द्राग्रा धियंधियं सीषधाति प्र पूषा ॥[2]

ऋजिश्वन आर्षम्। स नो रासदिति तच्छ्रुतेर्यद्ध्याहारः । यं पथस्पथः[3] परिपतिं यावान् कश्चित् पन्थास्तस्य सर्वस्य। परिपतिं परीत्येषोऽधीत्येतस्य स्थाने, अधिपतिं स्वामिनम्। पूषा हि मर्हति[4] पथि संप्रतीत्यतः[5] पथोऽधिपतिरुच्यते । वचस्या तृतीयैकवचनस्य याजादेशः। स्वार्थिको वा यकारो वच एव वचस्या ततस्तृतीयाया अलुक् तया वचस्यय स्तुतिलक्षणेन वचसेत्यर्थः। कामेन कृतः करोतिः क्रियासामान्यवचनः सामर्थ्यादिह प्रेरणे वर्तते। अभिलाषेच्छया प्रेरितः। अभ्यानट्[6] अभिव्याप्नोति स्तौतीत्यर्थः। अर्कं देवं पूषणम् । स[7] नोऽस्मभ्यम्। रासत् रासतिर्दानकर्मा ददातु। शुरुधोऽन्यत्र[8] शुरुध आपो भवन्ति शुचं सन्धन्तीति। इह तु सामर्थ्याद् धनानि शुरुध उच्यन्ते। तान्यपि हि शुचं मनोदुःखमुपभोगसाधनाभावात्कृतं सुतरां संरुन्धन्तीति[9][10]। कीदृशीः शुरुधः? चन्द्राग्राः चन्द्रं चन्दतेः कान्तिकर्मणः। कान्तं प्रियमग्रं यासां ताश्चन्द्राग्राः। आयत्यामपि[11] हि तानि धनानीत्यर्थः। किञ्च धियंधियं कर्मकर्म[12] ज्योतिष्टोमादिकं तदपि[13] सीषधाति लोडर्थे पञ्चमो लकारो व्यत्ययेन विकरणं[14] प्रसाधयतु पूषा ।

अभ्यानडित्यस्य[15] व्याख्यानमभ्यापन्न इति । वातिरिक्तः[16] पाठः । चन्द्राग्रा इति बहुव्रीहिः। भाष्ये तु समानाधिकरणः प्रदर्शितः । चायनीयान्यग्राणि चायनीयानि च[17] तान्यग्राणि चेति।

अनन्तरं विष्णुर्वक्तव्यः। स[18] किमवस्थः? यद्विपितो भवति यदा विविधं सितो

१–आदर्शपुस्तकेऽत्र खण्डारम्भनिर्देशो न दृश्यते।

२–[ऋ० ६।४९।८] 'पथस्पथः' इत्येव प्रतीकम् B. C. M.

३–पथस्पथं B. पथस्थं C.

४–'ह' इति त्रुटितम् B. C.

५–संप्रतित्यतः C. 'त्यतः' 'इत्येव' अन्यत् त्रुटितम M.

६–अभ्याद् C. अभ्यनट् M.

७–'स' इति त्रुटितम् C.

८–'अन्यत्र शुरुध' इति त्रुटितम् B.

९–रातीति B. राध्नतीति C.

१०–सरुन्धति B. C. संरुन्धतीति M.

११–मपि एतानि B. C.

१२–'कर्म' इति त्रुटितम् B.

१३–ददपि M.

१४–विकरणः B. C.

१५–नधीत्यस्य M.

१६–रिक्तपाठः B.C.

१७–यानि यानि यानि तान्य B. यानि यान्य च तान्य C.

१८–'स' इति नास्ति B.

रश्मिभिर्व्याप्त इत्यर्थः । सर्वत्र चात्र कालविभागो नाम निर्वचनं तदेव द्रष्टव्यम्[1] । विष्णुः कस्मात् ? विशतेस्तीव्ररश्मिद्वारेण[2] सर्वत्र व्यावेशात् । व्यश्नोतेर्वा विश्वं रश्मिभिर्व्यश्नुत[3] इति । तस्यैषा ।

[ इति सप्तदशस्या-(द्वादशस्या-) ध्यायस्याष्टादशः खण्डः ][4]

---

## [अथैकोनविंशः खण्डः ।][4]

इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम् । समूळ्हमस्य पांसुरे ॥[5]

मेधातिथेरार्षम् । विष्णुरादित्यः स इदं सर्वं वि चक्रमे अहन्यहनि विक्रमते । कथम् ? त्रेधा नि दधे[6] पदं स्थानभेदप्रकारेण त्रिप्रकारं निधत्ते पदम् । पृथिव्यामग्न्यात्मना[7] । अन्तरिक्षे विद्युदात्मना । दिव्यादित्यात्मना[8] । एतच्च शाकपूणिमतम् । तथा चैक्रमेतेदं ज्योतिस्त्रेधा विभक्तमित्येतन्मूर्धस्थानमवोचत्[9] 'तमू अकृण्वन्[10] त्रेधा भुवे कम्'[11] इति ।

अथवा त्रेधा निदधे पदमिति प्रातरुदयगिरौ । मध्यन्दिने मध्ये द्युलोकस्य । सायाह्नेऽस्तगिरौ । नैरुक्तपक्षे देवादय एव समारोहणादिभिः शब्दैरुच्यन्ते ।

अथवा बलिबन्धनकाले विष्णोर्भगवतो नारायणस्य यद्विक्रमणं तद[12]प्रोच्यत इत्यैति[13]हासिकाः । समारोहणादीन्[14]यपि तु तत्र[15] यानि पदनिधा[16]नस्थानान्यासन् तान्युच्यन्ते । समूळ्हं[17] 'वह प्रापणे'[18] इत्यस्य रूपम् । तच्च त्रिविधमपि सम्यगूढं प्रापितं सम्यक्प्रतिष्ठापितमित्यर्थः । अस्य भगवतः[19] स्वभूतं पदम्[20] । कथम्[21] ? पांसुरे पांसवो यस्मिन् स सन्ति[22] पांसुरो रो मत्वर्थीयः ।

---

१–द्रष्टव्यः C. M.
२–तेः किल रश्मि B.
३–भिर्वा अत इति B. भिर्व्याश्नुत C.
४–आदर्शपुस्तकेऽत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।
५–[ऋ० १ । २२ । १७] 'इदं विष्णुः' इत्येव प्रतीकम् B. C. M.
६–निदधे B.
७–मह्यात्मना C.
८–'दिव्यादित्यात्मना' इति त्रुटितम् B.
९–मू ( म C. ) र्धन्वानवो B. C. र्धस्थानवो M.
१०–तमुक्त कृण्वन् M.
११–[ऋ० १० । ८८ । १०] त्रेधा वै कम् B. C.
१२–'द' इति त्रुटितम् B. C.
१३–'त्यै' इति त्रुटितम् C.
१४ दीत्यपि B. C.
१५–तु त्रयाणि B. C.
१६–निधान्य C. निधन M.
१७–समूढं M.
१८–[ धा० १ । १० २९ ]
१९–'तः' इति त्रुटितम् C.
२०–भूतपदम् B. C.
२१–'कथम्' इति नास्ति B.
२२–'पांसवो यस्मिन् सन्ति स' इति त्रुटितम् B.

लुप्तोपमं चेदं द्रष्टव्यम । पांसुर इव यथा पांसुर[1]प्रदेशे [2]सुप्रतिष्ठितं पदं भवेत्तद्वदित्यर्थः । अथवा पांसुर[3]शब्दः पृथिवीवचनः । पांसुरे पृथिव्यां यत्समारोहणं नाम तत्र यत्पदमस्य विष्णोस्तत्समूढं सुप्रतिष्ठापितम । अथवा मु[4]हेरेतद्रूपं न वहेः । [5]समूढं विवेकेनाग्राह्यं [6]नं दृश्यत इत्यर्थः ।

अ[7]स्येति प्रथमे व्याख्याने विद्युदात्मकस्यायमन्वादेशः । त्रेधा निदधे पदं यद्विद्यु-दात्मकस्य पदं तत्समूढं छि[8]न्नं नि[9]ऽयं न दृश्यत इत्यर्थः । क ? पांसुरे प्यायने वर्धने वान्तरिक्ष [[10]इत्यभिप्रायः । लुप्तोपमो वा पांसुर[11]शब्दः । यथा पांसु[12]………ति प्रदेश पांसुभिरा…… तं पदं न दृश्यते एवमस्य विद्युदात्मकस्यान्तरिक्षे वा ।

द्वितीये व्याख्याने आदित्यस्या[13]तिभास्वरत्वाद् मध्ये वा दिवः । ऐतिहासिकपक्षे विष्णुपदे यत्पदं तत्र दृश्यतं] इत्यर्थः । पादैः सूयन्ते जन्यन्ते । यत्राः शेरतेऽवतिष्ठन्ति । पिशनीयो[14] ध्वंसनीयाः शि[15]रसो वाससो वा ।

इति निरुक्तविवरणसमुच्चये सप्तदशस्य [द्वादशस्य] द्वितीयः पादः[16] ।

---

## [ अथ तृतीयः पादः । अथ विंशः खण्डः । ][17]

विश्वानरो निरुक्तः 'प्रत्यृतः सर्वाणि भूतानि[18]' इति । इह नृ[19]त्तमोऽभिधेयः । तस्यै[20]षं निपात ऐन्द्र्यामृचि ।

[ इति सप्तदशस्या-( द्वादशस्या- ) ध्यायस्य विंशः खण्डः[21] ]

---

१–रमि [ रामे C. ) ति प्रदे B. C.
२–'सु' इति नास्ति B. स्वप्रति M.
३–पांसुशब्दः B. C. ४–मुभेरेत C.
५–समूहं B. C. ६–'न' इति त्रुटितम् B.
७'अस्य' द्विर्लिखितम् B. C. ८–छिन्नं M.
९सुरप्या ( व्या C. ) य B.C.
१०–'इत्यभिप्रायः' इत्यारभ्य 'विष्णुपदे यत्पदं तत्र दृश्यते' इत्यन्तः पाठो नास्ति M.
११–'र' इति नास्ति B. C.
१२–अत्र 'पांसुरे पांसुमति प्रदेशे पांसुभिराकीर्णे-त्वात्तत्र निहितं पदं' इति पाठः स्यात् ।
१३–स्यादी भास्व C.
१४–वासनिया यंसनीयाः C. 'पांसवीयाः' इत्येव 'ध्वंसनीयाः' इति त्रुटितम् M.
१५–तिरसो B.
१६–इति सप्तदशस्य द्वितीयः पादः C. इति सप्तदशस्याध्यायस्य द्वितीयः पादः M.
१७–पादखण्डारम्भनिर्देशो नास्ति C. M.
१८–[ निरु० ७ । २१ ]
१९–इह रुत्तमो C.
२०–सस्यैष पोत C.
२१–आदर्शपुस्तकेष्वत्र खण्डसमाप्तेनिर्देशो न दृश्यते ।

# [ अथैकविंशः खण्डः ][1]

विश्वानरस्य वस्पतिमनानतस्य शवसः ।
एवैश्च चर्षणीनामूती हुवे रथानाम् ॥[2]

'आ त्वा रथम्'[3] इति ऐन्द्रं सूक्तं प्रैयमेधसं[4] तत्रेयमृक् । विश्वानर आदित्यस्तस्य । वो[5] व्यत्ययेन द्वितीयैकवचनस्य स्थाने षष्ठीबहुवचनं वस्त्वामिन्द्रमिति भावः[6] । पतिमधिपतिं राजानमित्यर्थः । वृष्टिद्वारेण यागनिर्वृत्त्या सर्वस्य स्थिति[7]हेतुत्वात् पतिं पातारमित्यर्थः । न चादित्यस्यैव केवलम्[8] । किं तर्हि ? अनानतस्य कस्यचित्प्रत्यप्रणतपूर्वस्य[9] । शवसः स्वस्य सेनालक्षणस्य बलस्येत्यर्थः । द्वे अप्यनानतस्य शवस इति विश्वानरविशेषणे एते पदे मन्यन्ते । तेन नैघण्टुकत्वं[10] विश्वानरस्य परिहृतम्[11] । शवस इति वान्तर्णीतमत्वर्थो[12] बलवत[13] इत्यर्थः । एवैः अवतेः कान्तिकर्मणो रक्षणकर्मणो[14] वा[15] गतिकर्मणो वा । एवाः[16] काम्यानि पालनानि गमनानि वा तैरेतैर्निमित्तभूतैः । केषाम् ? चर्षणीनां[17] यजमानभूतानां स्वभूतैः । एवैश्चेति चकारादूत्या चेति वाक्यशेषाध्याहारः । अध्याहृतेनोतिशब्देन[18] तर्पणमत्रोच्यते । श्रूयमाणेनोतिशब्देनास्यै[19] प्रयोजनस्य च हेतुत्वेन विवक्षा । तेन काम्यै[20]र्न्यतमार्थं तर्पणार्थं चेत्यर्थः । ऊती ऊतिशब्दात् पथिवचनात् तृतीयैकवचनस्य पूर्वसवर्णादेशः । ऊत्या [ यथा[21] ] हुवे ह्वयतेर्लडात्मनेपदोत्तमपु[22]रुषैकवचने 'बहुलं छन्दसि'[23] इति शब्लुक्प्रसारणोवङा[24]देशेषु रूपम् । अस्मिन् यज्ञे ह्वयामीत्यर्थः । कस्य पथा ? रथानां

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।
२–[ ऋ० ८ । ६८ । ४ ] 'विश्वानरस्य व- (वम BC.) स्पतिम्' इत्येव प्रतीकम् B.C.M.
३–[ ऋ० ८ । ६८ । १ ] आ त्वा रथम् M.
४–प्रियमेधसं B. प्रप्यमेधसं C.
५–'वो' इति त्रुटितम् B. C.
६–'भा' इति त्रुटितम् B.
७–'स्थिति' इति त्रुटितम् B.
८–केवलस्य B. C.
९–प्रवणत ( क M. ) पूर्व C. M.
१०–कत्व B. घण्डुकता M.
११–परिहृतः B. C.
१२–न्तर्नीति B.
१३–बलवति C.
१४–णः क्षण B. कर्मणे क्षण C.
१५–'वा' इति नास्ति B. C.
१६–एत्रा न काम्याः पाल B. C.
१७–चर्षीणां C. यर्षिणीनां M.
१८अतिशब्देनाध्याहृतेन M.
१९–ब्देन व ( प M. ) स्या प्रयो C. M.
२०–कामान्यन्यतमा B. C.
२१–यथा B. C. 'यथा' इति नास्त्येव M.
२२–'पुरुष' इति नास्ति M.
२३–[ पा० २ । ४ । ७३ ॥ ६ । १ । ३४ ]
२४–रणो वसा B. C. M.

युष्मदीयानां रंहितॄणां[1] देवानां यः पन्थास्तेन। अनानतस्येत्यर्थवचनं महत इति। यद्धि महत्तद्नानतमिति।

वरुणो निरुक्तो'वृणोति[3]' इति मध्यमस्थानः। इह तु द्युस्थानोऽभिधेयः। तस्यैषा।

[ इति सप्तदशस्या-( द्वादशस्या- ) ध्यायस्य एकविंशः खण्डः[4] ]

---

## [अथ द्वाविंशः खण्डः।][4]

येना पावक चक्षसा भुरण्यन्तं जनाँ अनु।
त्वं वरुण पश्यसि ॥[5]

प्रस्कण्वस्यार्षम्। भुरण्यतीति गतिकर्मा पठितश्चासौ न केवलं गत्यर्थः। किं तर्हि? शीघ्रकरणार्थोऽपीति। एतत्प्रतिपादनार्थं 'भुरण्युरिति क्षिप्रनाम' इत्यादि भाष्यम्। तस्यार्थः भुरण्युरिति क्षिप्रनामसु पठ्यते। दृश्यते च प्रयोगः। भुरण्युरिति शीघ्रशकुनिरुच्यते। स कस्मात्? भूरिमध्वानं नयति। अतो भूरेरध्वनं आत्मनो नयनात् कतमः शकुनिरित्याह। स्वर्गस्य लोकस्याभिवोढेति। अभिवोढा प्राप्ता गन्तेत्यर्थः। कतमः पुनरसौ? योऽयं लोके सुपर्ण इति प्रसिद्धः। स हि 'सोमो वै राजामुष्मिन् लोके' इत्यादावैतरेयब्राह्मणे। 'अमुतो लोकाद् गायत्री सुपर्णो भूत्वा सोममाहरत्' इति श्रुतेः स्वर्गस्य लोकस्य गन्ता।

अथवा योऽयं स्वर्गकामस्य सुपर्णनामाग्निश्चीयते सोऽत्र शकुनिशब्देनोच्यते। स हि

---

१–इहितॄ C.
२–'त्य' इति त्रुटितम् C. तस्यार्थ B.
३–[ निरु० १० । ३ ]
४–आदर्शपुस्तकेष्वत्र खण्डस्यसमाप्तेरारम्भस्य च निर्देशो न दृश्यते।
५–[ ऋ० १ । ५० । ६ ] 'येना पावक' इत्येव प्रतीकः B. C. M.
६ ०यति गति B. हुरस्यती गति C.
७–हुरण्यु C. अत्र प्रकरणे प्रायः सर्वत्र 'भुरण्यु' इत्यस्य स्थाने 'हुरण्यु' इत्येव पाठः C. पुस्तके।
८–शीघ्रं शकुनि B.
९–'अध्वानं' इति त्रुटितम् B. भूत्रयति C.
१०–रद्धन C. ११–'लो' इति त्रुटितम् B. C.
१२–सुनर्ण C.
१३–प्रसिद्रम् B.
१४–[ ऐ० ब्रा० १ । १३ । यत्सोमो राजा। १ । ८। उत्तरा ह वै सोमो राजा । शत० ब्रा० १४ । १। ३ । १२। राजा वै सोमः। तै०ब्रा० २ । ५ । ७ । ३ । सोमो राजा राजपतिः ]
१५–[ ( गायत्री ) श्येनो भूत्वा दिवः सोममाहरत् शत०ब्रा० १ । ८ । २ । १०। यद्गायत्री श्येनो भूत्वा दिवः सोममाहरत्तेन सा श्येनः शत०ब्रा० ३ । ४ । १ । १२ ॥ तृतीयस्यामितो दिवि सोम आसीत् । तं गायत्र्याहरत् तै० ब्रा० १ । १ । ३ । १० ॥] सुवर्णे C.
१६–नामा निश्री M.

स्वर्गकामस्य विधानात् क्षिप्रं यजमानं स्वर्गलोकमभिवहति । अतः स्वर्गलोकस्याभिवोढे-त्युच्यते । एवं भुरण्युशब्दस्य क्षिप्रनामसु पाठात् शकुनौ च सुपर्णे क्षिप्रे प्रयोगदर्शनादिह । भुरण्युरिति क्षिप्रनामेति । नामानि च सर्वाण्याख्यातजेत्वात् क्रियायोगमनुविधियन्ते । क्षिप्रे च शीघ्रकरणं नाम क्रियास्ति । अतो भुरण्यतिः शीघ्रकरणार्थोऽपि गत्यर्थ एव गम्यते अतः किम् ? इदं भवति । तत्सम्बन्धादितरोऽपि सुपर्ण इव यः शीघ्रकारी पुरुषः सोऽपि भुरण्युरिव भुरण्युः । अतोऽयमर्थः ।

येन हे पावक पावयितः पापनाशन । चक्षसा अनुग्राहकात्मनेन दर्शनेन । भुरण्यन्तं 'भुरण' इति कण्ड्वादिरयमुक्तेन प्रकारेण क्षिप्रकारिवचनः । क्षिप्रं यानं स्तुतीश्च कुर्वन्तं-मित्यर्थः । कम् ? सामर्थ्याद् यजमानम् । जनानतु मनुष्यान् प्रति वर्तमानमिति वाक्यशेषः। मनुष्याणां मध्ये स्थितमित्यर्थः । त्वं हे वरुण ज्योतिषा कृत्स्नस्य जगतः । आ परितः पश्यसि अनुगृह्णासि । येनेति यच्छ्रुतेः साकांक्षत्वात् तं त्वे [ऽत्र] वयं स्तुम इति वाक्यशेषः ।

अथवा येनेत्येनत्समानाधिकरणं तच्छब्दमध्याहृत्य परयचैकवाक्यता योज्यते ।

[ इति सप्तदशस्या-( द्वादशस्या- ) ध्यायस्य द्वाविंशः खण्डः ][18]

---

## [ अथ त्रयोविंशः खण्डः । ][18]

येना पावक चक्षसा भुरण्यन्तं जनाँ अनु ।
त्वं वरुण पश्यसि ॥
वि द्यामेषि रजस्पृथ्वहा मिमानो अक्तुभिः ।
पश्यन् जन्मानि सूर्य ॥[19]

तेन वि द्यामेषि येन चक्षसा भुरण्यन्तं पश्यसि तेन पश्यन्निति सम्बन्धः । व्येषि

---

१–'यजमानं' इति त्रुटितम् B.
२–'स्वर्गलोकं' इति त्रुटितम् M.
३–'इ' इति त्रुटितम् B. C. ४–०जन्यत्व० B.
५–सुवर्णे M. ६–पापयितः पपना C.
७-[ पा० ३ । १ । २७ सूत्रे गणोऽयं द्रष्टव्यः ]
भुरणं भुरणेति B. C. भुरणेति M.
८–वचनं B. C. ९-योगं B. यागं C.
१०–कुर्वन्तीत्यर्थः (र्था C.) B. C.
११–यजमानानतु यजमानं मनु B. C.
१२–मनुष्यं B. १३–पठितः आ (अC.) प B. C.
१४–'नुगृह्णासि, ये' इति त्रुटितम् M.
१५–'तत्' इति त्रुटितम् B.
१६–'अत्र' इति नास्ति B. M.
१७–त्दमात्रमध्या B. C.
१८–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।
१९–[ऋ० १ । ५० । ६, ७]
२०–'न पश्य' इति त्रुटितम् M.

विविधं गच्छसि द्यां द्युलोकम् । रजस्पृथु लोका रजांस्युच्यन्ते लोकं चान्तरिक्षम् । पृथुशब्दाद् द्वितीयैकवचनस्य लुक् । पृथुं महान्तम् । अहा अहानि । मिमानो निर्माणं कुर्वन् । अक्तुभी रात्रिनामैतत् । सहार्थे तृतीया । रात्रिभिः सह । केन निर्मिमानः ? सामर्थ्यादुदयास्तमयाभ्याम् । उदयेन ह्यादित्योऽहानि करोति । अस्तमयेन रात्रिम् । पश्यन् अनुग्राह्यतमाननुगृह्णन्नित्यर्थः । जन्मानि जननधर्माणि । हे सूर्य तेनैव मां व्येषि । अथवा तच्छब्दमात्राध्याहारेण पूर्वेणैकवाक्यता योज्यते ।

[ इति सप्तदशस्या-( द्वादशस्या- ) ध्यायस्य त्रयोविंशः खण्डः[13] ]

---

## [ अथ चतुर्विंशः खण्डः । ][13]

येना पावक चक्षसा भुरण्यन्तं जनाँ अनु ।
त्वं वरुण पश्यसि ॥
प्रत्यङ् देवानां विशः प्रत्यङ्ङुदेषि मानुषान् ।
प्रत्यङ् विश्वं स्वर्दृशे ॥[14]

तेन प्रत्यङ्देवानामुत्तरग्रहणम् । तत्प्रत्यङ्ङित्येतस्य उदेषीत्यनेन सम्बन्धः । उदेतुं चेदं सूर्यस्य विशेषणं नोदयक्रियायाः । कुत एतत् ? पुल्लिङ्गत्वात् । क्रियाविशेषणं हि नपुंसकं स्यात् । प्रतीच्यां दिशि सूर्योदयस्यासम्भवात् तेन प्रत्यङ्ङुदेषि प्राच्यां दिशि प्रत्यङ्मुखः स्थित्वा त्वमुदेषीत्यर्थः । किमर्थम् ? देवानां विशः साकाङ्क्षत्वात् दृशे इत्येतत् परस्ताच्छ्रुतं सर्वत्रानुषक्तव्यम् । दृशेशब्दश्च द्रष्टुमित्यस्यार्थे वर्तते । 'दृशे विख्ये च' इति तुमर्थे निपातनश्रवणात् । देवानां स्वभूता या विशस्ता दृशे द्रष्टुम् । पुरस्तादुदितस्य

---

१–लोको रजां B. C. २–०रिक्षाख्यम् B. C.
३–अहः अहा B. ४–र्माणं कु B. C.
५–'सह' इति त्रुटितम् B.
६–'रात्रिम्' इति त्रुटितम् M. ७–धर्मकाणि B. C.
८–'वा' इति त्रुटितम् B.
९–'मात्र' इति नास्ति B. १०–ध्याहरण M.
११–पूर्ववच्चैक B. C. पूर्वयच्चैक M.
१२–वाक्यतया योज्य B. C.
१३–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।
१४–[ऋ० १ । ५० । ६, ५]
१५–उदेतुं चेदं सूर्यविशेषणं B. C.
१६–'त्व' इति त्रुटितम् C.
१७–प्रान्दिशि C. प्राग्दिशि B.
१८–'प्रत्यङ्मु' इति त्रुटितम् M.
१९–स्थितत्वा त्व M.
२०–'त्रानुषक्त' इति त्रुटितम् M.
२१–[पा० ३ । ४ । ११] पिख्ये B. पिव्ये C.
२२–'निपा' इति त्रुटितम् B.C. २३–स्मरणात् B.C.
२४–'वानां स्वभूता' इति त्रुटितम् M

भगवतः पश्चादवस्थितान् सर्वदेवान् द्रष्टुमित्यर्थः । न देवविश एव केवलाः । किं तर्हि ? प्रत्यङ्ङुदेषि मानुषान् मनुष्यानपि द्रष्टुम् । प्रत्यङ् विश्वं, सर्वं जगत् द्रष्टुम् । स्वर्शब्दश्चात्र द्युर्नाम द्युलोकं च द्रष्टुम् । अथवा दिवश्च यावत् किञ्चित् पश्चादवस्थितमेतद्द्रष्टव्यं द्रष्टुम् । पूर्वपश्चान्मुखस्त्वमुदेषि । उद्गत्य च पश्यसीति समस्तार्थः । अथवाऽत्रैव ।

[ इति सप्तदशस्या-( द्वादशस्या- ) ध्यायस्य चतुर्विंशः खण्डः ][6]

---

## [ अथ पञ्चविंशः खण्डः । ][6]

येना पावक चक्षसा भुरण्यन्तं जनाँ अनु ।
त्वं वरुण पश्यसि ॥[7]

येन भुरण्यन्तं पश्यसि तेनास्मानपि मनुष्यान् पश्यसीत्येतस्यामेवैकस्यामेवैकवाक्यता । तेन नो जनानभिविपश्येताशीरर्थो[8] वाक्यं[9]......इत्यादिनैकवाक्यताप्रकारप्रपञ्चनम् । अन्येषामपि मन्त्राणां साकांक्षत्वे सति प्रदर्शनं द्रष्टव्यम् ।

केशी वाच्यः । स पुनरिहादित्य एव नभसो मध्यमासीन एवमवस्थ उच्यते । कथम् ? केशा रश्मय इत्यादिनिरुक्तेस्तैः प्रकृष्टैस्तद्वान्[10] । प्रकाशनाद्वा[11] तस्यैषा ।

[ इति सप्तदशस्या-( द्वादशस्या- ) ध्यायस्य पञ्चविंशः खण्डः ][12]

---

## [ अथ षड्विंशः खण्डः । ][12]

केश्य१ग्निं केशी विषं केशी बिभर्ति रोदसी ।
केशी विश्वं स्वर्दृशे केशीदं ज्योतिरुच्यते ॥[13]

जूतेरार्षम्[14] । केश्यग्निं बिभर्ति धारयति[15] । दीपकमेतत् । कथं बिभर्ति? अग्नेः स्थितिहेतु-[16]

---

१–तत दे (ए B.) व B.C. विशस्त एव M.
२–'किं तर्हि । प्रत्यङ्ङुदे' इति त्रुटितम् M.
३–यद्वृष्टेसद्व (द्वं C.) श्च श न्द B. C.
४–'दिवं च यावत कि' इति त्रुटितम् M. 'दिवश्च यावत्' इति पाठः स्यात् ।
५–'द्रष्टुम्' इति त्रुटितम् B. C.
६–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।
७–[ऋ० १ । ५० । ६]
८–'पश्येत्याशीरर्थो' इति पाठः स्यात् ।
९–अत्र पाठस्त्रुटित आदर्शपुस्तकेषु ।
१०–तद्वत् B. C. ११–प्रकर्षकाश C.
१२–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य निर्देशो न दृश्यते ।
१३–[ऋ० १० । १३६ । १] 'केश्यग्निं' इत्येव प्रतीकः B. C. । प्रतीको नास्ति M. पुस्तके ।
१४–दूतेरा C. १५–वारयति M.
१६–अनेस्थिनि हेतु C.

भूताश्वैरुपुरोडाशसोमाद्या आहुती रसादानादिपारम्पर्येण येनानुग्रहविशेषेण निष्पादयन्। केशी विषं केश्येव विषमुदकं रश्मिभिराहृतं सत्। केश्येव रोदसी द्यावापृथिव्यौ उक्तेनैव प्रकारेण। केशी विश्वं विश्वमिति बहुनाम बहु प्राणिजातम्। स्वैः स्वशब्दः सर्वपर्यायः केश्येव सर्वं जगत्। दृशे द्रष्टुं अभ्यधाद्रष्टव्यम्। अन्तर्णीतण्यर्थो वा दृशिः। भोग्यतया भोक्तॄणां दर्शयितुमित्यर्थः। कः पुनरसौ? केशीदं ज्योतिरुच्यते इति। इदमादित्याख्यं ज्योतिरुच्यते।

विष्णातेः शौचार्थस्य। तद्धि प्रथमं शौचसाधनम्। विपूर्वस्य सचतेर्वा। तद्धि स्नानपानावगाहार्थिभिः सेव्यते। सर्वमभिद्रष्टुमिति पाठः। सर्वमभिपश्यतीत्यपपाठः।

अथापीति विचारैः। एते इतरे आदित्यादन्ये। धूमेन केशस्थानीयेन पार्थिवोऽग्निः। काशनाद्वा। तेनैव ह्यसौ प्रकाश्यते। अव्यभिचारात्। रजसा मध्यमः। रजसा वृष्टिलक्षणेनोदकेन वैद्युतो गूढो वायुरित्यपरे। तत्स्थं तु ज्योतिरुत्तमं स्थानसामान्यात्। तेषां त्रयाणामेषा

[ इति सप्तदशस्या-( द्वादशस्या- ) ध्यायस्य षड्विंशः खण्डः ][14]

---

## [ अथ सप्तविंशः खण्डः । ][14]

त्र॒यः के॒शिन॑ ऋतु॒था वि च॑क्षते संवत्स॒रे व॑पत॒ एक॑ एषाम्।
विश्व॒मेको॑ अ॒भि च॑ष्टे॒ शची॑भि॒र्ध्राजि॒रेक॑स्य ददृशे॒ न रू॒पम्॥[15]

ऋतुथा ऋतुशब्दः कालवचनः। थाशब्दो वीप्सायाम्। ऋतावृतौ स्वस्मिन् स्वस्मिन् काले स्वेन स्वेनोपकारेण जगत् विचक्षतेऽभिपश्यन्त्यनुगृह्णन्तीत्यर्थः। तेषामेषामेको दावरूपोऽग्निः संवत्सरे संवत्सरे ग्रीष्मकाले पृथिव्या रोमस्थानीयानि तृणानि दाहेन वपते दहती-

---

१–श्वपुरोडाशौ माद्या B. C.
२–'आहुतिरसा'इत्यादर्शपुस्तकेषु पाठः ३- स्वं B.C
४–'यथाभिद्रष्टव्यम्' इति पाठः स्यात्।
५–'तया भो' इति त्रुटितम् M.
६–केशीवज्योत्रिरुच्य C. देशीदं M.
७–ते जौस्वा C. 'विष्णातेः' इति त्रुटितम् M.
८–स्य च सच B. चसतेर्वा C. ९–तद्धितस्नानC.
१०–'सर्वमभिद्रष्टुमि' इति त्रुटितम् M.
११–विचारे B. १२–उत्तरे B. C.
१३–तत्स्थस्त M.
१४–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते।
१५–[ ऋ० १।१६४।४४ ]'त्रयः केशिनः' इत्येव प्रतीकः B. C. M.
१६–'ऋतुथा' इति त्रुटितम् B.
१७-'था' इति त्रुटितम् B.
१८–'ऋता' इति त्रुटितम् B. वृतौ वृतौ C.
१९–यस्मिन B. C.
२०–ग्निः त्रि (ग्रीं C.) संवत्सरः (रो C.) B. C.
२१–पवते C.

त्यर्थः। अग्नेश्च[1] वपनं मन्त्रान्तरेऽपि प्रसिद्धम्। 'वप्तेव[2] श्मश्रु वपसि'[3] इति। विश्वं सर्वम्। एक[4] आदित्यः। अभि चष्टे अभिविपश्यत्यनुगृह्णाति। केन? शचीभिः कर्मनामैतद् प्रकाशनरसादानादिभिः[6] कर्मभिरित्यर्थः। प्राजिर्गतिः[7]। एकस्य[8] वायोस्तृणपर्णधूल्यादिचालनेनानुमानेनार्थापत्त्या[9] वा ददृशे दृश्यत उपलभ्यते[10] न रूपम्।

वृषाकपिर्वाच्यः। तदर्थमाह। अथ यद्रश्मिभिरुपसंहृतैः[11] प्रायभूताभिः प्रकम्पयन्नेति गच्छति[12] तत् तस्माद्[13] वृषाकपिः। वर्षिता चासाववश्यायानाम्[14]। कम्पमानश्च[15] स्वयमेवास्तं गच्छन्[16] कम्पयते। दिवाचारीणि भूतानि भयात्[17] कम्पयति। तस्यैषा।

[इति सप्तदशस्या-(द्वादशस्या-) ध्यायस्य सप्तविंशः खण्डः][18]

---

## [ अथाष्टाविंशः खण्डः । ][18]

पुनरेहि वृषाकपे सुविता कल्पयावहै।

य एष स्वप्नंनशनोऽस्तमेषि पथा पुनर्विश्वस्मादिन्द्र उत्तरः ॥[19]

वृषाकपेरार्षम्[20]। सामि समाप्ते यज्ञे अस्तं यियासुमादित्यं[21] दृष्ट्वा वृषाकपिराह। पुनरेहि आगच्छ उदेषीत्यर्थः। हे वृषाकपे सुविता सुवितानि सुप्रसूतान्यभ्यनुज्ञातानि[22] विहितानीत्यर्थः। कानि? अस्मद् यागादीनि[23] कर्माणि। त्वं चाहं च कल्पयावहै उदिते[24] त्वय्यनुष्ठानेन। किञ्च य एष स्वप्नंनशनः[25] स्वप्नानामुदयेन नाशयिता। यच्छ्रुतेस्तदध्याहारः। सोऽस्तमेषि[26]

---

१-इश्च पवनं B. C. अग्नेश्च वचनं M.

२-सप्तेव B. ३-[ऋ० १०। १४२। ४]पवसि C.

४-एकमादित्यः B. ५-'वि' इति नास्ति B.

६-रसादा······दिभ्य······नी (भी C.) B. C.

७-प्राभिर्ग C. प्राचिर्ग M. ८-एतस्य B. C.

९-मानेन प्लष्टि······प्र (त्र C.)······तेन चानुमानेनार्था B. C.

१०-'ते' इति द्विर्लिखितम्।'रूपम्'इति त्रुटितम्B.C.

११-हृता प्रायभूता अभिप्रक B. अत्र 'संहृतप्रायैर्भूतान्यभिप्रकम्पयन्' इति पाठो युक्तः स्यात्।

१२-'गच्छति तत्' इति त्रुटितम् M.

१३-तस्मादपो B. C. M.

१४-श्यायतां B. वपश्यायतां C. ववश्यायं M.

१५-कम्पयंश्च B. C. 'म्पनश्च स्व' इति त्रुटितम् M.

१६-गच्छतः पयतेर्दिवा B. गच्छ कम्प C.

१७-हयांकं प्रेति B. C.

१८-आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते।

१९-[ऋ० १०। ८६। २१] 'पुनरेहि' इत्येव प्रतीकः B. C. M.

२०-'पेरार्षम् सामि समा' इति त्रुटितः M.

२१-अस्तायिसुरादि B. यासुरादि C.

२२-अप्रसूता B. C. २३-अन्यागादी B. C.

२४-मुदिते B. C.

२५-प्रनाशनः C. M.

२६-'सः' इति त्रुटितम् B.

गच्छसि। पंथा नियतमार्गेण। पुनर्विश्वस्मात् सर्वस्माच्च। उत्तर उत्कृष्टतर इन्द्र इन्द्र इव इन्द्रसदृश इत्यर्थः। अत्यन्तेश्वरो वा।

अथेन्द्रशब्दादपह्नोतुमाख्यानके च वृषाकपिर्ऋषिस्तन्निवृत्त्यर्थं तमेतद् ब्रूम आदित्यमिति। यमो निरुक्तः 'यच्छतीति सतः' इति। इह त्वादित्योऽस्तमयावस्थः सन्नुच्यते। तस्यैषा

[ इति सप्तदशस्या-( द्वादशस्या- ) ध्यायस्याष्टाविंशः खण्डः ]

---

## [ अथैकोनत्रिंशः खण्डः। ]

यस्मिन्वृक्षे सुपलाशे देवैः संपिबते यमः।
अत्रा नो विश्पतिः पिता पुराणाँ अनु वेनति॥

कुमारो नाम यामायनस्तस्यार्षम्। अहोरात्रादिजीवितकालातिगमनेन प्राणिनामायुषो व्रश्चनात् पुण्यकृद्भिर्वा वृतः क्षयो निवासो यस्मिंस्तद्व्रश्चनाद् वृतनिवासत्वाद्वा वृक्षशब्देनात्रादित्यमण्डलमुच्यते। यस्मिन् वृक्षे उदयास्तमयाभ्यामायुषो व्रश्चने वृतनिवासे वादित्यमण्डले। किं विशिष्टे? सुपलाशे सुष्टु पराशीर्णमले। अथवा लुप्तोपममेतत्। वृक्ष इव यथा वृक्षे सुपलाशे शोभनपर्णे कश्चित् पथिकः श्रान्तः पथिकान्तरेण शकुनिर्वा शकुन्यन्तरेण संगच्छते तद्वद् यस्मिन् मण्डले। देवै रश्मिभिः संपिबते पिबतिरत्र सामर्थ्याद् गत्यर्थः। सहार्थे तृतीया सह संगच्छतेऽस्तं गच्छन्। कोऽसौ? यमः आदित्योऽस्तं गच्छन्नेकीभवति। त्रैलोक्यप्रसृतान् रश्मीन् यच्छतीत्यर्थः। यत्तदोर्नित्यसम्बन्धात् यस्मिन्निति यच्छ्रुतेरत्रशब्दस्तत्रशब्दार्थे द्रष्टव्यः। तत्र तस्मिन् मण्डले। नोऽस्मान्। स कः? विश्पतिः सर्वस्याधिपतिः। पिता स्वेनानुग्रहेण पालयिता च। पुराणान् लुप्तोपममेतत् पुराणानिव तन्निवासिनः। अथवा पुराणान् जीर्णान् कृतकृत्यान् प्राप्तप्रापणीयान् दृष्टानुश्रविकविषयवितृष्णा-

---

१–यथा B. C.
२–त्यर्थमेतद् B. त्यर्थ तमेतं विब्रूम M.
३–दित्य इति B. ४–[निरु० १०।१९]
५–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते।
६–[ ऋ० १०।१३५।१ ] 'यस्मिन्वृक्षे' इत्येव प्रतीकः B. C. M. ७–नामुयुषो प्रश्च C.
८–कृति ( भि C. ) र्वा प्रकृतः B. C.
९–व्रश्चनः B. १०–अत्र 'वृत' इति पाठः स्यात्
११–कश्यान्तः C.
१२–'शकुनिर्वा शकुन्यन्तरेण' इति त्रुटितम् C.
१३–'स्मि' इति त्रुटितम् B.
१४–'तत्र तस्मिन्मण्डले। नोऽस्मान्' इत्यत्र 'तत्र ...भिगतान्' इत्येव पाठः। अन्यत् त्रुटितम् B.C.
१५–सतः B. C.
१६–विर्श्पतिः C. विपतिः M.
१७–पुरस्ताल्लुप्तो B. C. १८–दृष्टानु B. C.
१९–'वि' इति नास्त्यादर्शपुस्तकेषु। यन्तृष्णा C.

त्मन इत्यर्थः । अनुवनेति वेनतिः कान्तिकर्मा । लोडर्थे च लट् । अनुमन्यन्तामित्यर्थः ।

अज एकपाद्व्यक्तव्यः । स च किलास्तमितावस्थ आदित्यः । द्वैपदं चैतत् । अजनो गमन एकश्च पादः । कस्य ? ब्रह्मणः । कुत एतत् ? विज्ञायते हि 'अग्निः पादो वायुः पाद आदित्यः पादो दिशः पादः' इति । तेनाजश्चासावेकपाच्चेति । उत्तरपदमनेन विकल्पं दर्शयितुमाह । एकेन पादेन पातीति वा एकेन पादेनांशेन सर्वमिदं जगज्ज्योतिरात्मनानुप्रविश्यान्न पाति । एकेन पादे पिबतीति वा एकेनांशेनोदकं सर्वस्य जगतः पिबति । एकोऽस्य पाद इति वा एकोऽस्य पादो जीवभूतः कृत्स्नं जगदनुप्रविष्ट आस्त इति वा। अस्मिंश्च पक्षे निगमं दर्शयति

एकं पादं नोत्खिदति सलिलाद्धंस उच्चरन् ।
स चेदुदखिदत्पादं न मृत्युर्नामृतं भवेत् ॥

इति । अस्यार्थः । एकमेकः किलादित्यस्य पादो जीव..ः कृत्स्ने जगत्यनुप्रविष्टस्तमयं नोत्खिदति खिदिरत्र हरत्यर्थो नोद्धरति । कुतः ? सलिलात् सामुद्रादुदकात् । कोऽसौ ? हंस आदित्यः । हंससदृशो वा हन्ता वा तमसाम् । उच्चैर्न्नुद्गच्छन् स चेदुदखिदत् पादं स चेज्जीवभूतमुद्धरेत्पादं न मृत्युर्भवेत् प्रतिबन्धीभूतानां मन्तॄणामभावात्। मृत्योश्चाभावात् तत्प्रतिग्रन्थिरूपत्वाच्चामृतत्वस्यामृतत्वमपि नैव भवेदिति । तस्यैष निपातो वैश्वदेव्यामृचि ।

[इति सप्तदशस्या-(द्वादशस्या-) ध्यायस्य एकोनत्रिंशः खण्डः][19]

---

## [अथ त्रिंशः खण्डः ।][19]

पावीरवी तन्यतुरेकपादजो दिवो धर्ता सिन्धुरापः समुद्रियः ।
विश्वे देवासः शृणवन्वचांसि मे सरस्वती सह धीभिः पुरन्ध्या ॥[20]

वसुकर्णस्यार्षम् । अत्र पावीरवीशब्दनिर्वचनप्रसङ्गेन पवीरवानिन्द्र उच्यते यस्मिन्नि-

---

१–वैपदं B. C.
२–'विशः' इत्यादर्शपुस्तकेषु पाठः । [ छा. उप- ३ । १८ । २ ] ३–श्यात्रन C. M.
४–न पादेनोद B. ५–कृत्स्नं स्ने M.) जगत्यनु C.M.
६–लार्धे स C. लान्धं स M. ७–स चेतमुद्धरेदन्न B.
८–[अनुपलब्धमूलमिदम्] ९–एक एकः B.C.
१०–विदिरत्र C. ११ समुद्रोदकात् B.
१२–हंसदृशो B. C. १३–मनसां B. C. M
१४–उच्च M. अतः परं भूयान् पाठस्त्रुटितः M.
१५–मन्त्राणां B. C. १६–त्वाच्च मृत B. C.
१७–'त्व' इति त्रुटितम् B.
१८–तत्वं विनैव B. तत्वं पिनैव C.
१९–आदर्शपुस्तकेष्व खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।
२०–[ ऋ० १० । ६५ । १३ ] 'पावीरवी तन्यतुः' इत्येव प्रतीकः B.C.M. २१–'व' इति त्रुटितम् C.
२२–पावीरशब्द B. वावीरविशब्द C.
२३–पावीर B. वावीर C.

गमे स तावदग्रे व्याख्यायते।

यो जनान्महिषाँ इवातितस्थौ पवीरवान्।

उतापवीरवान् युधा॥

विप्रबन्धोरार्षम्। य इन्द्रो जनान्महिषानिव। इव शब्दः संप्रत्यर्थेऽप्यर्थे वा। महिष इति महन्नाम। महतो महतोऽपि वा। अति तस्थौ अतीत्य तिष्ठति। कीदृश इन्द्रः? पवीरवान् पवीरमायुधं तेन तद्वानायुधवानित्यर्थः। उतापवीरवान् न चावश्यं गृहीतायुध एव सन्। किं तर्हि? अनायुधोऽपि। युधा युध्छब्दात् सप्तम्या आकारः। युधि युद्धे। अनायुध इत्यभिप्रायः यच्छ्रुतेः साकाङ्क्षत्वात् तं स्तुम इति वाक्यशेषः।

एवमिन्द्रस्य पवीरवत्त्व उपपादिते पावीरवीति व्याख्यायते—

पावीरवी पविः शल्यः कण्वादिवर्लैः यद् यस्माद् विपुनाति विभजति विपाटयतीत्यर्थः। भूमिं कायं वा। तेन पविना तद्वत् काण्डभल्लकाद्यायुधं पवीरं रो मत्वर्थे। तद्वानिन्द्रः पवीरवान् वा यस्याः सा [चं] आयुधवत इन्द्रस्य स्वभूतेत्यर्थः। का पुनरसौ? वाक्। भाष्यकार आह। दिव्या वाक् माध्यमिकायाः स्तनयित्नुलक्षणाया अधिष्ठात्री। तन्यतुस्तनित्री स्तनयित्नुलक्षणाया वाचोऽन्यस्याः। स्तनयित्नुलक्षणैव वा पावीरवी दिव्या वाक्। तन्यतुस्तनित्री वाचोऽन्यस्या लौकिक्या वर्णद्वारेण। सा च एकपादज एकपाच्चाज आदित्यः। कीदृशः? दिवो धर्ता स्वेनानुग्रहेण दिवो धारयिता। सिन्धुर्गङ्गाद्या नद्यः। अम्बाद्या वा गगननद्यः। आप आपश्च समुद्रियः समुद्रे भवो वरुणः। विश्वे देवासः सर्वे च देवाः। शृणवन्नै लोडर्थे लेट् शृण्वन्तु। किम्? वचांसि स्तुतिलक्षणानि मे मम स्वभूतानि। किं केवलान्येव शुष्काणि वचांसि? नेत्युच्यते। धीभिः धियः कर्माणि यागाख्यैः कर्मभिः। तृतीयाश्रुतेर्युक्तानीति शेषः। सरस्वती सरस्वती च सह बुद्ध्या बहुप्रज्ञयोषसा।

---

१—स एतावद B. C. २—[ऋ० १० । ६० । ३] 'यो जनान्महिषान' इति प्रतीकः B. 'यो जनान्महिषां इव' 'यो जनाद्' M. ३—द्विप्रबन्धो C
४—अतित्य C. ५—तान् B. तां C.
६-अर्थ संदिग्धः पाठः। अत्र 'काण्डभल्लादिः' इति 'काण्डभल्लादयः यस्मात्' इति वा पाठो युक्तः स्यात्। ७—भूमिकायं (यां B.) वा B.C.
८—काण्वभल्ल B. C. ९—पावीर B. C.
१०—सा ता B.C. 'च' नास्ति M. ११—मिका वा स्तन B.
१२—तुस्तदिति स्तन B. C, तस्यास्तु स्तन M.
१३—णाया पापोद्य स्तन B. C.
१४—क्षणे वा पात्री B. C.
१५—'रवी' इति द्विर्लिखितम् C.
१६—तन्यस्तनिति वाचो B. C.
१७—णेति वो धा B. हेणेनेति वो धा C.
१८—वानेका नद्यः B. C.
१९—शृणुवन् C.
२०—श्रुतिल B.
२१—ती व स M.
२२—अत्र 'पुरन्ध्या' इति युक्तः पाठः स्यात्।

अत्र सुकर्माण आसीदन्त्वित्यतिरिक्तपाठः[1]। तत्र कर्मे तन्यंतु[2]प्रयुक्तानि विहितानि[3] न मुक्तानीत्यभिप्रायः। सह पुरन्ध्येति सम्बन्धः।

पृथिवी वक्तव्या। सा तु प्रथनादिति[4] निरुक्ता। इह तु विशेषणसम्बन्धाद् द्यौरवाभिधीयते। तस्या निपात ऐन्द्र्यां[5]मृचि अभिधेयत्वेनं न स्तुत्यर्थेन[6]।

[इति सप्तदशस्या-(द्वादशस्या-) ध्यायस्य त्रिंशः खण्डः[7]]

---

## [अथैकत्रिंशः खण्डः[7]।]

यदिन्द्राग्नी परमस्यां पृथिव्यां मध्यमस्यामवमस्यामुत स्थः।

अतः परि वृषणावा हि यातमथा सोमस्य पिबतं सुतस्य[8]॥

कुत्सस्य [आर्षम्[9]] यदिन्द्राग्नी परमस्यां[10] परमायामुत्तमायां पृथिव्यां दिवीत्यर्थः। मध्यमस्यां यदि मध्यमायामन्तरिक्षे पृथिव्याम्। यदि वाऽवमस्यां[11] अवम इत्यन्तिकनाम सन्निकृष्टायामवमायां[12]मस्यामेव भूमौ पृथिव्यां स्थो भवथः। अतोऽस्मात्[13] स्थानाच्च [परि[14]] सर्वतो वृषणौ कामानां वर्षितारौ। इहास्मद्यज्ञे आयातमागच्छतम्। अथागमनानन्तरं सोमस्य पिबतं सुतस्य द्वितीयार्थे षष्ठी सोमं पिबतं सुतम्। षष्ठीश्रुतेर्वैकदेशमिति शेषः। सोमस्य सुतस्याभि[15]षुतस्यैकदेशं[16] स्वांशैं[17]लक्षणमित्यर्थः।

योदाहरणत्वेन पठिता सा[18] निगदव्याख्याता।

समुद्रोऽपि[19] प्रदर्शितोऽनेकनिर्वचनः। इह तु द्युस्थानो[20]ऽभिधेयः पावमान्यामृचि।

[इति सप्तदशस्या-(द्वादशस्य-) ध्यायस्य एकत्रिंशः खण्डः[21]]

---

१–रिक्तपाठः B. C.

२–तद्यातु B. तद्यातु युक्ता C.

३–'विहितानि' इति द्विर्लिखितम् B. त्रिर्लिखितम् C.

४–[निरु० १ । १४]

५–'ऐन्द्राग्न्यां' इति युक्तः स्यात्।

६–धेया (य C. M.) केन स्तुत्य B. C. M.

७–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते।

८–[ऋ० १ । १०८ । १०] 'यदिन्द्राग्नी' इत्येव प्रतीकः B.C.M. ९–'आर्षम्' इति नास्ति C.M.

१०–'म' इति त्रुटितम् C. 'मस्यां प' इति त्रुटितम् M.

११–वाममस्यां C. १२–'अवमायां' इति त्रुटितम् M.

१३–'अतोऽस्मात्' इत्यारभ्य 'अथागमनानन्तरं' इत्यन्तः पाठस्त्रुटितः B.C. १४–'परि' इतिनास्ति M.

१५–'सुतस्य' इति त्रुटितम् M. १६–भिष्ठुत B.

१७–स्वं लक्ष B. स्वां लक्ष C.

१८–स एव निगदव्याख्यातः B. C.

१९–द्रः अप्रद B. द्रोः वि प्रद C.

२०–स्थानाभिधे B. C.

२१–आदर्शपुस्तकेष्वत्र खण्डसमाप्तेर्निर्देशो न दृश्यते।

## [अथ द्वात्रिंशः खण्डः ।][1]

पवित्रवन्तः परि वाचमासते पितैषां प्रत्नो अभि रक्षति व्रतम् ।

महः समुद्रं वरुणस्तिरो दधे धीरा इच्छेकुर्धरुणेष्वारभम् ॥[2]

पवित्रस्यार्षम् । अत्रैकवाक्यतायै यदा तदेत्यध्याहार्यम् । पवित्रशब्देनात्र रश्मय उच्यन्ते । यदा उदकं मध्यमायामर्पयितुमन्तरिक्षप्राप्तैः पवित्रै रश्मिभिस्तद्वन्तः । के[3] ? सामर्थ्यान्मरुदादयो माध्यमिका देवगणाः । परि वाचमासतेऽशनि पर्युपासते । पिता चैषां प्रत्नः पुराणोऽभिरक्षति व्रतं स्वकर्म वृष्टिलक्षणं वर्षतीत्यर्थः । महः समुद्रं वरुण आपरीता मध्यमस्थान इन्द्रस्तिरोदधे । तदा धीरा इदेवार्थे तदेवं धीमन्तः । के ? सामर्थ्याद्यजमानाः शेकुः शक्नुवन्ति । धरुणेषु धरुणमित्युदकनाम उदकेषु सत्सु । आरभमारम्भं कर्मण इति शेषः । आरब्धुं वा सोमादि यागकर्म ।

अज एकपादादित्यः । अजस्यैकपदः प्रदर्शितस्तुतेः पृथ्वीसमुद्रयोश्च निपातमात्रभाक्त्वेन प्रदर्शितोदाहरणयोः समाम्नायप्रयोजनं दर्शयितुमेषां त्रयाणां देवतान्तरैः सह स्तुतिसाधारण्येन निपातो भवत्यन्यस्यां बहुदेवतायामृचि ।

[इति सप्तदशस्या-( द्वादशस्या- ) ध्यायस्य द्वात्रिंशः खण्डः][11]

---

## [ अथ त्रयस्त्रिंशः खण्डः । ][11]

उत नोऽहिर्बुध्न्यः शृणोत्वज एकपात्पृथिवी समुद्रः ।

विश्वेदेवा ऋतावृधो हुवानाः स्तुता मन्त्राः कविशस्ता अवन्तु ॥[12]

ऋजिश्वन आर्षम् । उतशब्दोऽप्यर्थे समुच्चयलक्षणे । नोऽस्माकम् । अहिर्बुध्न्यश्च बुध्न्यमन्तरिक्षं तस्मिन् भवः । शृणोत्वाह्वानम् । कुत एतत् ? हुवाना इति परस्ताच्छ्रवणात् । आह्वय मामें । ननु चाह्वानस्य श्रूयमाणत्वान्न च केवलोऽहिर्बुध्न्यः । किं तर्हि ? अज एकपात्

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते

२–[ ऋ० ९ । ७३ । ३ । ] 'पवित्रवन्तः' इत्येव प्रतीकः B. C. M.

३–'केन' इत्यादर्शपुस्तकपाठः ।

४–'सते शिन परि आशित'आशत पिताB.C.M.

५–प्रत्नं पुराणं B. ६–'आवरीता' इति स्यात् ।

७–तदेव B. C. ८–'आरम्भं' इति नास्ति C.

९–आदित्वं C. १०–पदं प्रद B.

११–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।

१२–[ ऋ० ६ । ५० । १४ ] 'उत नोऽहिर्बुध्न्यः' इति प्रतीकः B. 'उत नो'इति C.'उतनोहि'M.

१३–अहिबु् शध्यश्चC. १४–'भुवना'B.C. बहुनाM.

१५–मानेनुचा C. M.

अजश्च एकः पादो यस्य स एकपात् । पृथिवी समुद्रः पृथिवी च समुद्रश्च द्यौश्चादित्यश्चे-त्यर्थः । विश्वे देवाः सर्वे देवाः । कीदृशाः ? ऋतावृधः सत्यस्योदकस्य यज्ञस्य वा वर्धयितारः । हुवाना हूयमानाः । श्रुत्वा चाह्वानमागताः सन्तः स्तुता अस्माभिः । मन्त्रास्तृतीयार्थे प्रथमा मन्त्रैः। कविशस्ता अन्यैरपि मेधाविभिर्नित्यमेव स्तुता अवन्तु पालयन्तु । मन्त्रा इत्यतिरिक्तपाठः।

दध्यङ् कस्मात् ? प्रत्यक्तो ध्यानमिति वा । प्रत्यक्त इत्यञ्चेर्निष्ठान्तत्वे रूपम् । प्रतिगतो ध्यानं रसादानादिस्वकर्माधिकारानुष्ठानादिविषयचिन्ताम् । अथवा ध्यानं लोकस्य कृत्याकृत्यविषयं लोकपालत्वात् । तद्ध्यानं प्रत्यक्तः प्रतिगच्छतः । प्रत्यक्तमस्मिन् ध्यानमिति वा । कारकविन्यासमात्रमेतत् ।

अथर्वा 'थर्वतिश्चरतिकर्मा' इत्यत्र निरुक्तः । इह तु द्युस्थानो वाच्यः । न ह्ययं स्वा-धिकारं व्यभिचरति रसादानादिकम् । नित्यमनुतिष्ठतीत्यर्थः ।

मनुः । मननादिति मनुः । 'शृस्वृस्निहि' इत्यादिस्मरणादुप्रत्ययान्तः । मननाद् बोध-नादर्चनाद्वा आदित्यः । तेषां दध्यङ्ङादीनामेष स्तुतिसाधारण्येन निपात ऐन्द्र्यामृचि ।

[ इति सप्तदशस्या-( द्वादस्या- ) ध्यायस्य त्रयस्त्रिंशः खण्डः ][15]

## [ अथ चतुस्त्रिंशः खण्डः । ][15]

यामथर्वा मनुष्पिता दध्यङ् धियमत्नत ।

तस्मिन् ब्रह्माणि पूर्वथेन्द्र उक्था समग्मताऽर्चन्ननु स्वराज्यम् ॥[16]

गौतमस्यार्षम् यां धियं यत्कर्मेत्यर्थः । अथर्वा मनुश्च पिता पालयिता वा स्वापत्यानां मानवानाम् । दध्यङ् च एते त्रय आदित्यतेजोऽवस्थाविशेषाः । अश्विनावुषस्सूर्येत्यादिवत् । अभिनिर्वृत्तिलक्षणं कर्मोदयास्तमयाभ्याम् अत्नत अतनिषत तन्वन्तो यदिदमहः कृतवन्त

१—य M.
२—'सर्वे देवाः' इति त्रुटितम् B. ३—कीदृशाः C.
४—'ऋतावृधः' इति त्रुटितम् B. ऋतावृद्धः C.
५—यामर्थप्रतिमा B. ६—'त्य' इति त्रुटितम् C.
७—मामिस्वकB. नानिस्वर्गकC. ८—नानिविषB.C.
९—कृताकृत्यC. १०—[निरु० ११।१८]अन्यत्रB.C.
११—'ति' इति त्रुटितम् C.
१२—'ति' इति त्रुटितम् B.
१३ [उणा० १ । १०] शृण्वन्ति हि B. C.
१४—'द' इति त्रुटितम् C.
१५—आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।
१६—[ऋ० १।८०।१६]'यामथर्वा'इत्येव प्रतीकः B.C.
१७—'गोतम' इति स्यात् ।
१८—'पिता' इति नास्ति B. C.
१९—अश्विनापू (वु C.) षस्सू B. C.
२०—निवृत्ति B. C.
२१—महं कृत B. C.

इत्यर्थः । तस्मिन् ब्रह्माणि हविराख्यान्यन्नानि । पूर्वथा पूर्वेष्विवाहस्सु । इन्द्रे उक्था उक्थानि चास्मदीयानि स्तोत्राणि । समग्मत संगच्छन्ते । अथर्वोऽथर्वादय आदित्यसहचारिण ऋषयस्ते यां धियं यत्कर्म यागाख्यमतत ततवन्तः । तस्मिन् हविर्लक्षणान्यन्नान्युक्थानि स्तोत्राणि चेन्द्रे समग्मत संगतान्यभूवन् । कीदृशो य इन्द्रः ? उच्यते । अर्चन् पूजयन् । एकवाक्यता प्रसिद्ध्ये य इति शेषः । अनूषत इति शेषः । किं पूजयन् ? स्वराज्यं स्वमाधिपत्यम् ।

का पुनराधिपत्यस्य पूजा ? या[12] आश्रितोपकारक्रिया । यो ह्याश्रितानामुपकरोति स आत्मन आधिपत्यं पूजयति । यस्तु नोपकरोति । किं तस्यात्मम्भरेराधिपत्यमिति ।

भेदपक्षे चाथर्वादय ऋषय इति व्याख्यानम् । नैरुक्तानां तु पूर्वमिति सिद्धम् ।

इति निरुक्तविवरणसमुच्चये सप्तदशस्या-[द्वादशस्या-][16] ध्यायस्य तृतीयः पादः[17] ।

---

## अथ चतुर्थः पादः[18] ।

[ अथातो द्युस्थाना देवगणाः । तेषामादित्याः प्रथमागामिनो ।
भवन्ति । आदित्या व्याख्याताः । तेषामेषा भवति[19] ॥

अथातो द्युस्थाना देवगणा इति भेदा[20]भेदाभ्यां मन्त्रेषु स्तुतिदर्शनात् भेदेनो[21]क्तं स्तुत्वा सम्प्रत्यभेदेन सर्वावस्थं तुष्टू[22]षमाण आह । अथात[23] इत्यादि । कृतव्याख्यानम् । तेषामादित्याः प्रथमा[24]गामिन इति । प्रत्यक्षत्वेन मुख्यत्वात् । सप्तर्षय इत्यादयस्तु नोच्यन्ते । आदित्या व्याख्याता इति । 'आदत्ते रसान्[25]'इत्यादिना । इह वचनकृतस्तु[26] विशेषः । तेषामेषा ।

[ इति सप्तदशस्या-( द्वादशस्या- ) ध्यायस्य पञ्चत्रिंशः खण्डः ][27]

---

१–न्यन्यानि C.
२–'उक्था' इति त्रुटितम् C. ३–समन्मन्त C.
४–'अथर्वा' इत्येवात्र त्रिर्लिखितम् B. C
५–अक्तन् तपन्तः B. अक्तन्त C. ६–कस्मिन् C.
७–न्युक्ताणि C. ८–संगत्यान्यहूवन C
९–श य B. 'कीदृशः स इन्द्रः' इति स्यात् ।
१०–द्धय इति B. द्धम् य इति C. ११–अनूवास्त C.
१२–यामाश्रि B. १३–वस्तुनोप B. C.
१४–स्यात्मं (त्म B.) हरे B. C. १५–हेदपक्षे C.
१६–कोष्ठकान्तर्गतः पाठो नास्ति B. C. M.
१७–'इति सप्तदशस्य तृतीयः पादः' इत्येव पाठः C.
१८–अयं पादारम्भनिर्देशो नास्त्यादर्शपुस्तकेषु ।
१९–अयं मूलपाठो नास्ति B. C.
२०–'भेदा' इति त्रुटितम् B. C.
२१–नोक्तं स्तुत्वा C. २२–तुष्टुषमा C.
२३–थाति इत्या C.
२४–थमगामि C.
२५–[निरु० २ । १३]
२६–स्तुतिविशे B.
२७–आदर्शपुस्तकेष्वत्र खण्डसमाप्तेर्निर्देशो न दृश्यते

## [ अथ षट्त्रिंशः खण्डः । ][1]

इमा गिर आदित्येभ्यो घृतस्नूः सनाद्राजभ्यो जुह्वा जुहोमि ।
शृणोतु मित्रो अर्यमा भगो नस्तुविजातो वरुणो दक्षो अंशः ॥[2]

गृत्समदस्यार्षम् । तत्पुत्र[3]स्य वा कूर्मस्य । आदित्येभ्यो घृतस्नूः[4] 'स्नु प्रस्रवणे'[5] घृतं स्नुवन्ति प्रस्रवन्ति सारयन्ति संभजन्ति वा यास्ता घृतप्रस्राविण्यः । काः पुनस्ताः ? सामर्थ्यादाहुतयः । सनात् चिरपर्यायोऽयं चिरमित्यर्थः । राजभ्य आदित्यविशेषणमिदं दीप्तेभ्यः । जुह्वा स्रुग्विशेषेण[6] जुहोमि । चिरमिति जुह्वा जुहोमीत्यनेन सम्बध्यते । राजभ्य इत्यनेन वा । चिरं जुहोमि चिरं वा दीप्तेभ्य इति । एतज्ज्ञात्वा इमा गिरः स्तुतीः शृणोतु । मित्रो अर्यमा भगश्च नोऽस्माकं स्वभूताः । तुविजातस्तुविजातं प्रभूतं[7] जातं यस्य सः । बहुजातो बहुप्रज[8] इत्यर्थः । के ते[9] ? सामर्थ्याद् धाता वरुणो दक्षोंऽशश्च । अंशोंऽशुना निरुक्तः[10] । 'अननाय[11] शं भवति' इति ।

प्रत्येकमप्येते मित्रादयो द्युस्थानत्वेनोपलक्षितव्याः । शास्त्रगौरवप्रसङ्गात्तु न समाम्नाताः[12] ।

सप्त ऋषयोऽप्यवयवनिर्वचनेन निरुक्ताः । 'सप्त सृप्ता[13] संख्या' । 'ऋषिर्दर्शनात्[14]' । रश्मयोऽभिधेयाः । इन्द्रियाणि[15] वा । तेषामेषा ।

[इति सप्तदशस्या-(द्वादशस्या-) ध्यायस्य षट्त्रिंशः खण्डः][16]

---

## [अथ सप्तत्रिंशः खण्डः ।][16]

सप्त ऋषयः प्रतिहिताः शरीरे सप्त रक्षन्ति सदमप्रमादम् ।
सप्तापः स्वपतो लोकमीयुस्तत्र जागृतो अस्वप्नजौ सत्रसदौ च देवौ ॥[17]

हिरण्यगर्भस्य । परा च[18] । अत्रैकवाक्यतायै यत्तदध्याहारः । ये सप्तसंख्याका रश्मय

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते
२–[ऋ० २ । २७ । १] 'इमा गि (हि C.) रः' इत्येव प्रतीकः B. C.
३–पुरस्य B. C.
४–घृतस्थः C.
५–[धा० २ । २८]
६–विशेषणं B. C.
७–'प्रभूतं जातं' इति त्रुटितम् B. 'प्र' इति नास्ति 'भूतजातं' इत्येव पाठः C.
८–प्रज्ञ इत्य B.
९–के ता C.
१०–[निरु० २ । ५]
११–अहनाय B. C.
१२– म्नातः B. C.
१३–[निरु० ४।२६] सप्त B. C. 'सृप्ता' इति त्रुटितम् M.
१४–[निरु० २ । ११] ऋषि दर्शना' इत्येव B. C.
१५–इति याणि (नि B.) वा B. C.
१६–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।
१७–[यजु० ३४।५५] 'सप्त ऋषयः' इत्येव प्रतीकः B. C.
१८–'च' इति त्रुटितम् B. C.

ऋषयो द्रष्टृत्वाद् द्रष्टारस्त्रैलोक्यस्य । प्रतिहिताः प्रतिनिहिताः। शरीरे 'शॄ हिंसायाम्' इत्यस्य रूपम्। हिंसितारं तमसामादित्यमण्डलमित्यर्थः। ते सप्तामी आहारभूतभौमरसो विनयद्वारेण रक्षन्ति। सदं सदैव। अप्रमादं क्रियाविशेषणमिदम्। कथं रक्षन्ति? प्रमादवर्जितम्। तथा चोक्तम्। 'ऋतं सिन्धवो वरुणस्य यन्ति न श्राम्यन्ति न विमुच्यन्त्येके' इति। किं रक्षन्ति? भाष्यकार आह। संवत्सरमिति संवत्सरकारिणमादित्यमित्यभिप्रायः। योऽसौ मण्डलान्तरपुरुषो 'हिरण्यश्मश्रुर्हिरण्यकेश' इति विज्ञायते तं [सं] रक्षन्ति। सप्त सप्तापि चैते। आप आप्तारो व्याप्तस्त्रैलोक्यस्य। स्वपतोऽस्तमयादूर्ध्वं शयानस्य अदृश्यमानव्यापारस्येत्यर्थः। कस्य? सामर्थ्यादादित्यस्य। लोकं लोकशब्दः स्थानवाची स्थानं मण्डलाख्यं प्रत्यस्तमयम्। ईयुर्वर्तमाने लिङ् गच्छन्तीत्यर्थः। मण्डलमनुप्रविशन्तीत्यर्थः। गतेषु च तत्र मण्डले जागृतः स्वव्यापारमनुतिष्ठत इत्यर्थः। कौ? अस्वप्नजौ अविद्यमानः स्वप्नो जन्म च ययोस्तौ स्वप्नजन्मवर्जितौ सत्रसदौ च सत्रशब्दः सदापर्यायः सदासादिनौ च। देवौ वायुश्च योन्मण्डलमुदयाय प्राङ्याति। आदित्यश्च यः प्रातरुदेति। इयमाधिदैवयोजना।

अध्यात्मं तु सप्त ऋषयः सप्तसंख्यानि। कानि? अर्षणानि स्वं स्वं विषयं प्रति गन्तॄणि मनष्षष्ठानीन्द्रियाणि विद्यासप्तमानि। विद्या विज्ञानं तत्सप्तमानि। प्रतिहितानि प्रतिनिहितानि शरीरे शरीरात्मनि। तानि सप्तापि स्वविषयप्रकाशनेन तं शरीरात्मानं रक्षन्ति। सर्वदैवाप्रमाद्यन्ति प्रमादवर्जितानीत्यर्थः। सप्तापि चैतानि आप आपनानि स्वस्वविषयस्य व्यापनानि। स्वपत उपसंहृतेन्द्रियप्रवृत्तेः। लोकं स्थानमीयुर्गच्छन्ति। स्वविषयेभ्य उपरम्य शरीरमेवानुप्रविश्य तिष्ठन्तीत्यर्थः।

अन्ये वर्णयन्ति। अस्तमीयुः स्वप्नावस्थायामात्मनो भोक्तर्येव भावनारूपेण लीयन्ते। यद्भावनोपादानं भोक्तुः स्वप्नदर्शनं भवति। तत्र जागृतस्तत्रेति शरीरात्मना सम्बध्यते।

---

१–द्रष्टव्यत्वात् B. C.
२–'ति' इति त्रुटितम् B. C. ३–[धा० ९।१६]
४–सप्तमी C. ५–भूतमौ रसोविनय B. C.
६–सिंध वा B. सिन्धं वा वरु C.
७–[ऋ०२।२८।४]'के' इति नास्ति B. च्यन्ते ते C.
८–[छा० उ० १ । ६ । ६]
९–'सं' इति नास्ति M. १०–'ति' इति त्रुटितम् C.
११–'च' इति त्रुटितम C. १२–यन्मण्ड B. C.
१३–त्यश्च B. आत्यश्च C.
१४–दैवयोजसा B. C. 'दैवतम्' इत्यपि पाठः B.
१५–गन्तॄन् नि मन B.
१६–'विद्याविज्ञानं तत्सप्तमानि' इति त्रुटितम् B.
१७–'प्रतिनिहितानि' इति त्रुटितम् B. 'प्रतिहितानि' इति त्रुटितम् 'प्रतिनिहितानि' इत्येव द्विर्लिखितम् M
१८–'स्वविषय' इति द्विर्लिखितम् M.
१९–अस्तमयं B. C.
२०–स्था (स्थ B.) यात्मनः B. C.
२१–भोक्तव्ये भाव B. C. M.
२२–भावेनो B. भावेना C. M.
२३–त्ता जाग्रतः B. C.

तत्र शरीरात्मनि जागृतः स्वव्यापारमनुतिष्ठत इत्यर्थः[1]। अस्वप्रजौ[2] सत्रसदौ चेति[3] कृत-व्याख्यानमेतत्। देवौ प्राज्ञश्चात्मा[4] चितिमात्रेण यः शरीरं व्याप्य वर्तते। यस्यावेशादेत-[5]च्छरीरं न वुष्यति। तस्य व्यापारो भोगस्तमसौ करोति[6] [एव] तैजसश्च[7] य आहारं पचति।

तेषां [ सप्तर्षीणां[8] ] परा। रश्मय एव सप्तर्षय इति स्फुटतार्थे।

[ इति सप्तदशस्या-( द्वादशस्या- ) ध्यायस्य सप्तत्रिंशः खण्डः ][9]

---

## [ अथाष्टात्रिंशः खण्डः । ]

तिर्यग्बिलश्चमस ऊर्ध्वबुध्नो यस्मिन्यशो निहितं विश्वरूपम्।
अत्रासत ऋषयः सप्त साकं ये अस्य गोपा महतो बभूवुः ॥[10]

तिर्यक् तिरश्चीनानि बिलानि[11] रश्मिच्छिद्राणि मध्वोपूर्णस्येव[12] यस्य सः। चमसः[13] अपां भौमरसलक्षणानां रश्मिभिराहृतानां चमनोश्चमसः[14]। ऊर्ध्वबुध्नः ऊर्ध्वे दिवि बुध्नं बन्धनमधिकारलक्षणं कर्म यस्य। ऊर्ध्वे वोत्थितो बोधयति[15] सुप्तानि ऊर्ध्वबुध्नः। तच्चात्रैवं विशिष्टं मण्डलमभिप्रेतं सामर्थ्यात्। यस्मिन् यशः यशः[16] इत्युदकनाम भौमरसलक्षणमुद-कम्। निहितं विश्वरूपं सर्वप्रकारम्। अत्रासत ऋषयः सप्त अत्रादित्यमण्डले सप्तसंख्याका रश्मयः। साकं सह। ये अस्य गोपा महतो बभूवुः येऽस्य जगतो गोप्तारो महतो भवन्तीत्य-धिदैवतम्।

अथाध्यात्मम्। तिर्यग्बिलश्चमस ऊर्ध्वबुध्नः शिर इहाभिप्रेतम्। तिरश्चीनानि बिलानि[17] चक्षुरादीनि यस्मिन्। आहारस्य[18] चमनात्। ऊर्ध्वं च कायस्य बन्धनस्थानात्। ऊर्ध्व[19] च बोधकं चक्षुरादि यस्मिन्[20]। यस्मिन् यशो निहितमिन्द्रियजन्यं विज्ञानं निहितम्। विश्व-

---

१–तिष्ठन्तीत्यथः B. C.
२–'प्र' इति त्रुटितम् C. ३–वेति B. C.
४–प्रा (प्र C.) ज्ञाश्चत्मा विति B. C.
५–योनावेशा B. C.
६–कारोत्येव त्यैव C. 'एव' नास्ति M.
७–तैजसं च B. ८–'सप्तर्षीणां' इति नास्ति M.
९–आदर्शपुस्तकेष्वत्र खण्डस्यसमाप्तेराम्भरय च निर्देशो न दृश्यते।
१०–[अथर्व० १० । ८ । ९] 'तिर्यग्बिलः' इत्येव प्रतीकः B. C. M.
११–बिलाणि C.
१२–मध्वा आपस्येव B. C.
१३–'चमसः' इति त्रुटितम् B.
१४–चमसाच्चमसः B.
१५–यन्ति C. 'यति' इत्यारभ्य 'तच्चात्रैवं' इत्यन्तः पाठस्त्रुटितः B.
१६–शय C.
१७–'श्च' इति त्रुटितम् C.
१८–बल–B. १९–आइ आहार B. C.
२०–'यस्मिन' इति नास्ति B. C.

रूपं बहुप्रकारम्[1]। अत्रासते ऋषयः सप्तार्षणानि[2] सप्तेन्द्रियाणि। साकं ये अस्य गोपा सह यान्यस्य शरीरस्य शरीरिणो वा गोप्तॄणि महतो भवन्तीति। आत्मगतिमात्मावगमनमाचष्टे मन्त्रो मन्त्रदृग्वा।

देवा व्या[3]ख्याताः 'देवो दानाद्वा'[4] इत्यादिना। वचनकृतो विशेषः। रश्मयश्चाभिधेयाः।

[ इति सप्तदशस्या-( द्वादशस्या- ) ध्यायस्य अष्टात्रिंशः खण्डः ][5]

---

## [अथैकोनचत्वारिंशः खण्डः।][5]

देवानां भद्रा सुमतिर्ऋजूयतां देवानां रातिरभि नो नि वर्तताम्।
देवानां सख्यमुप सेदिमा वयं देवा न आयुः प्र तिरन्तु जीवसे॥[6]

गौतम[7]स्यार्षम्। देवानां भद्रा कल्याणी सुमतिः शोभनाऽनुग्राहिका बुद्धिः। कीदृशानां देवानाम्? ऋजूयतां ऋजुगामिनां[8] वा। अभिनोऽस्मान् प्रति वर्ततामिति सम्बन्धः। देवानां रातिर्देवानामेव च दानम्। अभिनोऽस्मान् प्रति निवर्तताम्। देवानामेव च सख्यं स्तुत्यस्तोतृलक्षणं यष्टृयष्टव्यत्वलक्षणं च। उपसेदिम[9] उपसीदेम उपगच्छेम वयमित्याशास्महे। देवा नोऽस्माकमायुः प्रतिरन्तु जीवसे तिरतिर्वृ[10]द्ध्यर्थः प्रवर्धयन्तु चिरं जीवनाय।

भाष्ये तु देवानां वयं कल्याण्यां[11] मताविति विभक्तिव्यत्ययः। स्यामेति चाध्याहारः। विश्वे देवास्तेषामेषा।

[ इति सप्तदशस्या-( द्वादशस्या- ) ध्यायस्य एकोनचत्वारिंशः खण्डः ][12]

---

१—ब्रह्मप्रकारं B. C.

२—सप्तार्षाणि B.

३—'व्या' इति त्रुटितम् C.

४—[निरु० ७।१५]

५—आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते।

६—[ऋ० १।८९।२] 'देवानां भद्रा' इत्येव प्रतीकः B. C. M

७—'गोतम' इति स्यात्।

८—'वा' इत्यस्मात्पूर्वं 'ऋतुगामिनां' इत्यपि पाठः स्यात्। तथैव वेति विकल्पः संगच्छेत।

९—'उपसेदिम' नास्ति C. 'उपसीदेम' नास्ति B.

१०—'ति' इति त्रुटितम् B. ततिर्वृ C.

११—ल्याणां माता C.

१२—आदर्शपुस्तकेष्वत्र खण्डसमाप्तिनिर्देशो न दृश्यते।

[ अथ चत्वारिंशः खण्डः । ]

ओमासश्चर्षणीधृतो विश्वेदेवास आ गत।

दाश्वांसो दाशुषः सुतम् ॥

मधुच्छन्दसः । ओमासोऽवतेः पालनार्थस्य तर्पणार्थस्य वा कर्तरि कर्मणि वा मन्प्रत्यये 'ज्वरत्वर' इत्यादिना ऊठि सम्प्रसारणे जस्यसुगागमे च रूपम् । अवितारो रक्षितारस्तर्पयितारस्तर्पणीया वा । चर्षणीधृतश्चर्षणयो मनुष्यास्तेषां तैस्तैरुपायैर्धारयितारः । विश्वे देवासः सर्वे देवाः । आगत आगच्छत । दाश्वांसः प्रत्यक्षकृतोऽयं न चेदमामन्त्रितम् । ततो यत्तदोरध्याहारेणैकवाक्यत्वं नेयम् । ये दाश्वांसो दत्तवन्तः सामर्थ्याद्यजमानाय धनादि । ते यूयं दाशुषो हवींषि दत्तवतो यजमानस्य स्वभूतं सुतं सोमं प्रत्यागच्छतेति । भवनीया वेति कर्मसाधनं दर्शयति ।

विश्वान् देवानधिकृत्येदानीं गतमेवाधियज्ञं किञ्चिद् विचारयिष्यन्नुपोद्बलयति। तदेतदेकमेव वैश्वदेवं गायत्रं तृचं दशतयीषु विद्यते इत्यादि । तदिति समाम्नायस्यानुस्मृतये । एतदिति वक्ष्यमाणार्थसन्निधिकरणाय । एकं तृचं याज्ञिकसूक्तं वैश्वदेवं विश्वेदेवदेवत्यं गायत्रच्छन्दोयुक्तं दाशतयीषु सर्वासु शाखासु विद्यते नान्यदस्ति एतस्मिंश्छन्दसि। विश्वलिङ्गत्वेन चैकत्वमात्रमत्राभिप्रेतम् । तथा च देवताकार आह । 'नान्यः षष्ठाद् विश्वलिङ्गाद् गायत्रोऽस्त्यपरस्तृचः' इति । तत् 'विश्वेदेवास आगत' इत्यादि च गायत्रं वैश्वदेवं च विद्यते । तत्र न विश्वलिङ्गं प्रत्यृचम् । अतोऽवधारयत्येकमेवेति। प्रयोजनं च गायत्रच्छन्दोयुक्तैरन्यैरपि बहुभिर्वैश्वदेवैरधियज्ञं गायत्रम् । 'तृतीयसवने एष त्र्यहः' इत्यादिश्रुतेः ।

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते।
२–[ऋ० १।३।७] 'ओमासः' इत्येव प्रतीकः B.C.
३–वसो पाल C.
४–'तर्पणार्थस्य' इति त्रुटितम् B.
५–[उणा० १ । १४२] मत्प्रत्य B. C.
६–[पा० ६ । ४ । २०] ७– चपणिश्च M.
८–णीया मनु B. ९–देवाः B. C.
१०–'आगत' इति नास्ति B. C.
११–मन्त्रकम् M.
१२–'ततः' इति त्रुटितम् B.
१३–'ते' इति त्रुटितम् B.
१४–'सुतं' इति त्रुटितम् B. १५–यज्ञे B.
१६–तृचाशतयिषु C. १७–विश्य C.
१८–कारणाय C. १९–एकां B.
२०–[cf. बृहद्दे० २।१२८ तन्नामा विश्वलिङ्गो वा गायत्रोऽन्यस्तु यस्तृचः ।] षष्ठा द्वर्गाद्विश्वलिङ्गा गायत्र्यो ऽस्त्यप B. C.
२१–'न' इति त्रुटितम् B.
२२–न्यैरपि बहुहि वैश्वC.
२३–[अनुपलब्धमूलमिदम्] सवनं M. त्र्ययहः C.

तत्र किं कर्तव्यमित्यत आह । यत्तु किञ्चिद् बहुदैवतं तद्वैश्वदेवानां स्थाने युज्यत इति । यत् किञ्चिद्बहुदैवतं मन्त्रजातं गायत्रेण छन्दसा युक्तं तद्वैश्वदेवानां मन्त्राणां स्थाने युज्यते न्याय्यमित्यर्थः । यदेव विश्वलिङ्गमिति शाकपूणिरिति । यदेव विश्वलिङ्गं विश्वशब्दोपेतं मन्त्रजातं सूक्तं वा, तदेव वैश्वदेवानां स्थाने युज्यते, न बहुदेवतात्वमात्रेणेति शाकपूणिर्मन्यते ।

तत् किमस्यापि यास्कस्य मतम् । नेति। यत आह । अनत्यन्तगतस्त्वेष उद्देशो भवतीति । आक्षिप्तो[1]पपत्तिश्चायमुपक्षेपः । अनत्यन्तगतो[2]ऽनैकान्तिकः । उद्देशः प्रतिज्ञा । अनैकान्तिकयेषा प्रतिज्ञा । यदेव विश्वलिङ्गोपेतं तदेव वैश्वदेवानां मन्त्राणां स्थाने युज्यत इति । कथमनैकान्तिकमिति चेत् । वैश्वदेवं हि मन्त्रजातं समाम्नाये[3] क्रियार्थमुत्पद्यमानं आम्नायस्य क्रियार्थत्वात् गायत्रे छन्दसि तावदेवोत्पत्तुमर्हति । अन्यच्छन्दो[4]युक्तमन्त्रजात[5]वत् । सर्वकर्मभ्यो वैश्वदेवेभ्यश्छन्दः साध्येभ्योऽलमिति । न च तत्सर्वास्वपि दाशतयीषु गायत्रे छन्दस्यलं कर्मोत्पादने । प्रयोजनं च तच्छन्दो[6]युक्तैरधियज्ञे वैश्व[7]देवैर्मन्त्रैः । न च ते सन्ति । बहुदेवताश्च तस्मिंश्छन्दसि । तत् किमस्तु य[8]स्य कर्मणः प्रहाणम् । उत वा तत्स्थाने बहुदेवता मन्त्रा[9] ओप्यन्तामिति । युक्तं यत्तो[10]न्योप्येरन्निति यास्कः[11] पश्यन्नाह । यत्तु किञ्चिदित्यादि । तथा 'बहुदेवमन्त्रं तु वैश्वदेवं शस्यते' इति देवता[12]कारः पपाठ । सेयमर्थापत्तिर्गायत्रे यदलं कर्मणां वैश्वदेवानां मन्त्राणां बहुविश्वयोरितरेत[13]राभिधानप्रत्यासत्त्या[14]नेकवैश्वदेवकर्मचोदनान्यथानुपपत्त्या इममर्थं गमयति । बहुदेवतान्यपि वैश्वदेवानां स्थाने युज्यन्ते[15] एवेति । एवं चानत्यन्तगत उद्देशः । येन भू[16]तांशः काश्यप आश्विनमेकलिङ्गं सूक्तं[17] ददर्श । भू[18]तांशो नाम काश्यप एकेनाश्विलिङ्गेन युक्तमनेकं ददर्श । तत्र[19] यास्वृक्षु अश्विलिङ्गं नास्ति तासामप्यश्वि[19]नीत्वं तेनैकाश्विलिङ्गेन। यथैकेनापि छत्रिणा सर्वे छत्रि[20]णो भवन्ति । एवमेवाभितष्टीयेप्येकेनै[21]न्द्रलिङ्गेन सर्वमैन्द्रम् । एवमेवा[22]नेनेह वैश्वदेवेन तृचेन यावन्ति सूक्तानि कर्मणि[23] विनियुज्यन्ते बहुदेवतान्यलिङ्गान्यपि तानि तदर्थस्य साधकानीत्युपपद्यन्ते[24] ।

---

१–प्ताप (व B.) पत्ति B. C.
२–त्यन्तशतोऽनै॰ M. ३–साम्नाय B. ४–छब्दोयु B.
५–मन्त्रोजात C. युक्तं मन्त्रजातं वा M.
६–च्छब्दोयु B. ७–'श्व' इति त्रुटितम् C.
८–अत्र 'तस्य' इति पाठः स्यात् ।
९–मन्त्रादप्यन्ता C. १०–यत्तान्यो C.
११–'यास्कः पश्यन्' इति द्विर्लिखितम् B. C.
१२–[cf. बृहद्दे॰ २ । १२८] बहुदैवतमन्यत्तु वैश्वदेवेषु शस्यते ।
१३–तरमभि B. तरभि C.
१४–सत्यनेकः वैश्व C. १५–युक्तन्त B. C.
१६–हूतांशः C. १७–सूत्रं दद B.
१८–हूतांशो C. १९–'तत्र' इति द्विर्लिखितम् B.
१९–'आश्विनीत्वं' इति स्यात् । २०–छत्रणा C.
२१–केनै (न C.) कलि B. C.
२२–एवमेनानेह B. C.
२३–'कर्मणिविनियुज्य' इति त्रुटितम् B.
२४–उपपद्यंते B. C.

**इदानीं यस्यामश्विलिङ्गं यया चर्चा सूक्तमाश्विनं सेयमृग्व्याख्यायते ।**

ऋध्याम स्तोमं सनुयाम वाजमा नो मन्त्रं सरथेहोप यातम् ।

यशो न पक्वं मधु गोष्वन्तरा भूतांशो अश्विनोः काममप्राः ॥

ऋध्याम समृद्धं कुर्याम । कर्म । स्तोमं स्तोत्रम् । उक्तगुणयोर्युवयोः प्रसादेन सनुयाम वाजं संभजेमहि च हविर्लक्षणमन्नं नित्यमेवेत्येतद्द्वयमाशास्महे । एतच्च ज्ञात्वा । आकार उपयातमित्येतेन सम्बध्यते । नोऽस्माकं स्वभूतं मन्त्रं 'मन्त्रिगुप्तभाषणे' एकलिङ्गत्वात् सूक्तेनैव कृतं गुप्तभाषणम् । शृणुतमिति शेषः । श्रुत्वा च सरथा समानरथौ साधारणेन रथेन इह कर्मणि । उपयातमुपगच्छतम् । अथवास्माकमामन्त्रणमुपयातमिति सम्बन्धः । भूतांशो नाम महर्षिर्युवयोरश्विनोर्हविर्भूते तस्मिन् यः काम इच्छा ताम् । आअप्राः 'प्रा पूरणे' लडर्थे लङ् । उत्तमपुरुषस्य स्थाने मध्यमः । आप्रा आपूरयिष्यामि तत्पयो युवाभ्यामागताभ्यां दास्यामीत्यर्थः ।

**अभितष्टीयं चैतल्लिङ्गं भवति ।**

शुनं हुवेम मघवानमिन्द्रमस्मिन भरे नृतमं वाजसातौ ।

शृण्वन्तमुग्रमूतये समत्सु घ्नन्तं वृत्राणि संजितं धनानाम् ॥

विश्वामित्रस्य वैश्वामित्रस्य प्रजापतेर्वा वाच्यस्य वा विश्वामित्रस्य वा । शुनं शुनमिति सुखनाम सुखकरत्वात् कर्तृणामृत्विग्यजमानानाम् । तं शुनं हुवेम आह्वयाम । मघवानं धनवन्तम् । कम् ? इन्द्रम् अस्मिन्नुपस्थिते । भरे संग्रामे । नृतमं प्रकृष्टपुरुषमत्यन्तशूरमित्यर्थः । वाजसातौ अस्यापि संग्रामनामत्वात् क्रियाशब्दत्वं द्रष्टव्यम् । कीदृशे भरे ? शत्रून् हत्वा तदीयं वाजमन्नं संभज्यते यत्र तस्मिन् नृतमम् । शृण्वन्तम् । किम् ? सामर्थ्याद्यज्ञेष्वाह्वानम् । उग्रमप्रसह्यं शूरं वा । किमर्थं ह्वयाम । उच्यते । ऊतये पालनायात्मनः । किं कुर्वन्तम् ? समत्सु संग्रामेषु घ्नन्तं वृत्राणि शत्रुवृन्दाणि । संजितं सम्यग्जेतारं शत्रुधनानामिति ।

---

१–[ऋ० १०।१०६।११] 'ऋध्याम स्तोमं' इत्येव प्रतीकः B. C. M. अस्या ऋच स्तृतीयपादव्याख्यानं नेह व्याख्यायां दृश्यते ।
२–समस्तं B ३–का B. C. ४–युक्त B. C.
५–'स्ये' इति त्रुटितम् C.
६–'ते' इति त्रुटितम् C.
७–'नः' इति त्रुटितम् B.
८–[धा० १०।१४६] मति गुप्त C. M.
९–कृतमिति B. गृतमिति C.
१०–गाममहृषी M.
११–'लडर्थे' इति युक्तः स्यात् ।
१२–'चैकलिंगं' इति युक्तः स्यात् ।
१३–[ऋ० ३।३८।१०] 'शुनं हुवेम' इत्येव प्रतीकः B. C.
१४–वा नास्ति B. C.
१५–'कम्' इति त्रुटितम् M.
१६–किं शृण्वन्तम् B. C.
१७–सञ्जीतं C. सजितं M.

बभ्रुरेक इति दश द्विपदा अलिङ्गा इत्यरिक्तःपाठः[3]। अभियुक्तैरनुपदेशात्।

साध्या इति वाच्याः। देवा रश्मयो वाभिधेयाः। साध्याः कस्मात्? साधनात् स्वव्यापारस्य। कर्तरि कृत्यप्रत्यय इत्यभिप्रायः। ऐतिहासिकानां तु कर्मभिरात्मनः साधनात् पूर्वो देवसमूहः। ते च किल विश्वसृजो नाम ऋषयः सहस्रसंवत्सरेणेदं विश्वमसृजन्त। तेषामेषा।

[इति सप्तदशस्या-(द्वादशस्या-) ध्यायस्य चत्वारिंशः खण्डः][4]

---

## [अथैकचत्वारिंशः खण्डः।][5]

यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्।
ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः॥[6]

अग्निमन्थनीयानामृचां परिधानीयैषा। यज्ञेनेति[7] यज्ञसाधनत्वान्निर्मन्थ्योऽग्निरुच्यते यज्ञसाधनभूतेन[8] निर्मन्थ्येन यज्ञं यज्ञसाधनभूतमेवाग्निमाहवनीयमयजन्त। निर्मन्थमग्निमाहवनीये हुतवन्त इत्यर्थः। अथवा यज्ञेनेति यज्ञसाधनत्वात् पशुभूतोऽग्निरुच्यते। तथा चाग्नेः पशुत्वे ब्राह्मणवादो दर्शितः 'अग्निः पशुरासीत्'[9] इत्यादि भाष्ये। तेन यज्ञेन यज्ञसाधनभूतपं[10]श्वग्निना यज्ञसाधनमेवाग्निं देवताभूतमयजन्त इष्टवन्तः। के? देवा दातारो हविषां यजमानाः। तानि धर्माणि कर्माणि प्रथमानि[11] चिरन्तनान्येवासन् न केनचिदिदानीमेव प्रवर्तितानि। ते ह हशब्दश्चार्थे ते च। नाकं[12] नाकमिति साधारणनाम[13] दिवश्चादित्यस्य च। तेन[14] नाकं दिवमादित्यं वेत्यर्थः। महिमानः महिमा महत्त्वम्। लुप्तमत्वर्थश्चायम्। महत्त्ववन्तो महान्त इत्यर्थः। सचन्ते[15] सेवितवन्तः प्राप्तवन्त इत्यर्थः। यत्र यस्मिन्नाके पूर्वे सर्वतः प्रथमे। साध्याः सन्ति देवा नैरुक्तानां साध्या[16] रश्मय उच्यन्ते। तदाह द्युस्थानो रश्मिर्देवगण इति।

---

१–बह्हुरेक C.

२–अपिंगा C. ३–रिक्तपाठः B. C.

४–रनुरनुप (च B.) सात् B. C.

५–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते।

६-[ऋ० १।१६४।५०॥ १०।९०।१६] 'यज्ञेन यज्ञम्' इत्येत्र प्रतीकः B. C.

७–'इति' इति त्रुटितम् M.

८–'न' इति त्रुटितम् B. C.

९–[तै० सं० ५।७।२६]

१०–इत आरभ्य भूयान् पाठस्त्रुटितः M. आदर्शपुस्तके।

११–'थ' इति त्रुटितम् C.

१२–नाकं प नाक C.

१३–[निघ० १।४॥ निरु० २।१३] नाम नियश्चादि B. C.

१४–'न नाकं' इति त्रुटितम् B. C.

१५–सचन्ते B. १६–'साध्या' इति त्रुटितम् B.

ऐतिहासिकाः पूर्वं देवयुगमिति । पूर्वोक्तदेवसमूह इत्यर्थः । तदा च ऋगेवं व्याख्येया । मानुषावस्थायां यज्ञेन यज्ञमयजन्त देवत्वाय । साध्यास्ते ह नाकं प्रपेदिरे इत्यर्थः । यत्र तेभ्यः पूर्वे प्राप्ता अन्ये साध्या देवा इति ।

वसवो वाच्याः । यद् विवसन्ते सर्वम् यद् यस्माद्विभागेनावस्थितमिदं सर्वमाच्छादयन्तीति स्थानत्वात् । अतस्त्रिस्थानेष्वाच्छादकत्वाद्वसवस्त्रिस्थानाः । यावत् किञ्चित् पृथिवीस्थानमग्निभक्ति तत्सर्वं वसुत्वेनाभिप्रेत्यैतदुच्यते । अग्निर्वसुभिः सम्बन्धाद्वासव इति तदाधिपत्येन समाख्यातत्वादग्निभक्तवसवः पृथिवीस्थानाः, एवमिन्द्रो वासवो मरुद्भिर्वसवः समाख्याताः । तस्मान्मरुतो वसवो मध्यमस्थानाः । तथा वसव आदित्यरश्मयो विवासनात् तमसाम् । तस्माद् द्युस्थानाः । तेषामेवा ।

[ इति सप्तदशस्या-(द्वादशस्या-) ध्यायस्य एकचत्वारिंशः खण्डः ][15]

---

## [ अथ द्विचत्वारिंशः खण्डः । ][15]

सुगा वो देवाः सुपथा अकर्म य आजग्मुः सवनमिदं जुषाणाः ।
जक्षिवांसः पपिवांसश्च विश्वे अस्मे धत्त वसवो वसूनि ॥[16]

परमेष्ठिनः । सुगाः स्वागमनानि शोभनान्यागमनानि पुनः पुनरस्मद्यज्ञे । वो युष्माकं हे देवाः । सुपथा सुपथानि व्यत्ययेन नपुंसकं शोभनाः पन्थानो नित्यमेवास्मद्यज्ञेषु सन्तु भवन्तु । य आजग्मुर्ये यूयमागतवन्तः स्थ । सवनमिदं यज्ञनामेदं सवनमिदमस्मदीयं यज्ञम् । जुषाणाः सेवमानाः प्रीयमाणा वा । आगत्य जक्षिवांसः खादितवन्तो हवींषि । पपिवांसश्च पीत-

१-'दित्यं वेत्यर्थः महिमानः' इत्यारभ्य 'मनुषा' इत्यन्तः पाठो द्विर्लिखितः C.
२-प्रदेवी (वी इ C.) त्यर्थः B. C.
३-'पूर्वे' इति नास्ति B. C.
४-अन्ये साध्येन साध्या B.C. ५-विवसन्ते B.C.
६-'स्थानत्वात्' इत्यधिक एवात्र पाठः ।
७-'त्रिस्थानाः' इति नास्ति B. C.
८-मरुत्तिर्व B. ९-ख्यातः C. १०-वासवो B.
११-स्थानाम् B. C. १२-यथा B.
१३-तमसात B. C. १४-द्युस्थानात् B. C.
१५-आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।
१६-[Cf अथ० सं० ७।९७।४ cf यजु० ८।१८ cf तै० सं० १।४।४४ cf मैत्रा० सं० १।३।४८ cf काठ० सं० ४।१२ cf कपिष्ठलसंहिता ३।१०] 'सुगा वो देवाः' इत्येव प्रतीकः B. C.
१७-सुगावः स्वा B. C.
१८-'सुपथा' इति नास्ति B. C.
१९-'ये यूयं' इति त्रुटितम् B. जग्मे ये युय C.
२०-नामेनं B. C.

वन्तश्च सोमम् । यच्छ्रुतेस्तदध्याहारः । ते[1] विश्वे सर्वे यूयम् । अस्मे अस्मासु धत्त अस्मभ्यं दत्तेत्यर्थः । हे वसवो वसूनि धनानि । भाष्ये तु[2] सुगाव[3] इति शोभनान्या[4]गमनान्यभिप्रेतानि । तद्विशेषणं सुपथा[5]नीति शोभनमार्गाणीति ।

इतरेषां वसूनां त्रिस्थानतां दर्शयितुमाह ।

[ इति सप्तदशस्या-( द्वादशस्या- ) ध्यायस्य द्विचत्वारिंशः खण्डः ][6]

---

## [ अथ त्रिचत्वारिंशः खण्डः । ][6]

ज्मया अत्र वसवो रन्त देवा उरावन्तरिक्षे मर्जयन्त शुभ्राः ।
अर्वाक्पथ उरुज्रयः कृणुध्वं श्रोता दूतस्य जग्मुषो नो अस्य ॥[7]

वसिष्ठस्य । ज्मेति[8] पृथिवीनाम । ज्मये[9]ति तृतीया सप्तम्याः स्थाने । ज्मया[10] ज्मायाम्[11] अत्र अत्रैव पृथिव्याम् । त्रिस्था[12]नानां वसूनां[13] पार्थिवास्तु[14] वसवो [ऽत्रैव पृथिव्याम् । मध्यमस्थाना] उरावन्तरिक्षे उरौ[15] विस्तीर्णो[16]ऽन्तरिक्षे । मर्जयन्त[17] मार्ष्टीति गतिकर्मा[18] रमणार्थे[19] वा । कस्य[20] प्रकृतत्वाद् वृष्टिलक्षणा अपो[21] गमयन्ति । वात्मानमित्यर्थः । शुभ्राः[22] शोभनाः । प्रत्यक्षकृतत्वान्मन्त्रस्यामन्त्रितश्रवणाभावाच्चैकवाक्यतायै यत्तदध्याहारः । ये[23] ईदृग्गुणास्थितास्ते अर्वाक्[24]

---

१–'ते विश्वे' इत्यारभ्यामन्त्रव्याख्यासमाप्तेस्त्रुटितः पाठः B.

२–'तु' इति त्रुटितम् M.

३–अत्र 'सुगा' इति पाठः स्यात् ।

४–शोभाद्यागमC.

५–सुपन्नानीति M. 'तानीति' इत्येव, अन्यत् त्रुटितम् C.

६–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।

७–[ऋ० ७ । ३९ । ३] 'ज्मया अत्र' इत्येव प्रतीकः C. M.

८–ज्योति पृ C. ज्येति पृ M. 'वसिष्ठस्य ज्येति पृथिवीनाम' इति त्रुटितम् B.

९–ज्ययेति C. M.

१०–'ज्मया' इति त्रुटितम् B. ज्यय M.

११–ज्ञायाम् C. ज्ययाम् M. १२–सत्रिस्था B.

१३–व आना B.

१४–'पार्थिवास्तु वसवः' इति त्रुटितम् B. पार्थिवा॰ स्तद्वसवो C. अतः परं 'अत्रैव पृथिव्याम् । मध्यमस्थाना' इति पाठस्तु सर्वेष्वेवादर्शपुस्तकेषु त्रुटितः । C. पुस्तकेऽत्र केवलं 'वसवो... ण···। उरा' एवं वर्तते । अयं पाठश्चास्माभिरेवार्थवशादत्र सन्निवेशितः ।

१५–'उरौ' इति त्रुटितम् B. C.

१६–वास्तीर्णे B. १७–मार्जयन्त C. मजयन्त M.

१८–कर्मणा B. C. १९ -॰णार्थो वाक्यस्य प्रक्र M.

२०–'कस्य' इति पाठोऽत्राधिक एव ।

२१–क्षणा आपो B. C. क्षणापो M.

२२–शुभ्रो शो C. २३–'य' इति त्रुटितम् M.

२४–तार्वाक C. त्वर्वाक् M.

लिङ्गवचनयोर्व्यत्यः अर्वाचोऽस्मदभिमुखान् पथो मार्गान् । उरुज्रयो हे उरुजवाः । कृणुध्वं कुरुत नित्यमस्मद्यज्ञेष्वागच्छत येनास्मान् प्रत्यागमनमार्गाः प्रहृता[1] भवन्तीत्यर्थः । श्रोत शृणुत च यदयं[2] ब्रवीति । दूतस्य जग्मुषो गतवतो युष्मान् प्रति[3] । कस्य दूतस्य ? नोऽस्माकं स्वभूतस्यास्याग्नेः ।

अर्वाक्पथ इत्यादिना त्रिस्थानानामध्येषणा । द्युस्थानो देवगण[4] इत्यादिरपपाठः । केचित्तु श्रोता दूतस्येति[5] चतुर्थेन पादेन द्युस्थानेषु वसुषु भाष्यं योजयन्ति[6] । द्युस्थान इत्यादि तत्प्रकृतं व्याख्यातम् । रश्मयः पूर्वो वा[7] देवसमूह इत्यादि ।

वाजिनो निरुक्ताः । 'वाजी वेजनवान्[8]' इति । केवलं वचनकृतो विशेषः । रश्मयोऽभिधेयाः । देवाश्वा वा । तेषामेषा ।

[इति सप्तदशस्या-(द्वादशस्या-) ध्यायस्य त्रिचत्वारिंशः खण्डः][9]

---

## [अथ चतुश्चत्वारिंशः खण्डः ।][9]

शं नो भवन्तु वाजिनो हवेषु देवताता मितद्रवः स्वर्काः ।
जम्भयन्तोऽहिं वृकं रक्षांसि सनेम्यस्मद् युयवन्नमीवाः ॥[10]

वसिष्ठस्य । शं[11] सुखं नोऽस्माकं भवन्तु । के[12] । वाजिनो रश्मयो देवाश्वौ[13] वा । हवेष्वाह्वानेषु । देवताता यज्ञनाम यज्ञे । मितद्रवो मितं त्रैलोक्यमात्रं शिक्षितत्वात् पथ्यानुदेश एव पदं व्यस्यन्तो[14] द्रवन्ति गच्छन्ति ये ते मितगामिन[15] इत्यर्थः । स्वर्का अश्नतेरर्चतेर्वा । अर्चशब्दाश्चोत्तरपदम्[16] । स्वश्नाः[17] सुगमना इत्यर्थः । स्वर्चना[18] वा सुष्ठु स्तुतयः । स्वर्चिषो वा सुदीप्तयः । जम्भयन्तः[19] [स्तम्भयन्तः] प्रतिबध्नन्तः । हिंसाकर्मा[20] वा जम्भयन्तो हिंसन्तो[21] विना-

---

१ प्रत्याहृता B.
२–यदायं B. C. ३–प्रतीकस्य दूत B. C.
४–द्युस्थाना देवगणा इत्यादिरौरवपाठः B. द्युस्थानो देवगणा इत्यादि खुरख पाठः C.
५–दुरस्येति C. ६–योजयति C.
७–पूर्वे वा C. पूर्वे पादे वस B.
८–[निरु० २। २८]
९–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।
१०–[ऋ० ७ । ३८ । ७] 'शंनो भवन्तु' इत्येव प्रतीकः B. C. M.
११–'शं' इति त्रुटितम् B. C.
१२–केतवो वाजि B. C. १३–देवाश्च वा B.
१४–व्यस्यन्तो B. C. व्याख्यस्यन्तो M.
१५–मिन्य इत्य B. C. १६–ब्दाद्वोत्तर० B. C.
१७–वश्नना: सुगना C.
१८–स्वर्च एव (वाC.) B.C.
१९–जम्भवन्तः M. 'स्तम्भयन्तः' नास्ति M., प्रतिबध्नन्तः B. C. २०–कर्म, वा B. C.
२१–हिंसयन्तो M.

यन्तः। कम्? अहिं सर्पम्। वृकं व्यालं रक्षांसि च। सनेमीति[1] पुराणनामान्यत्र। इह तु पदान्तर-सम्बन्धसामर्थ्यात् क्षिप्रार्थमित्याह क्षिप्रम्। अस्मद् यौतिरत्र पृथग्भावार्थेऽन्तर्णीत[2]णयर्थश्च पृथग्भावयन्तु अस्मत्सका[3]शादपनयन्त्वित्यर्थः। न च सर्पादीनेव केवलान्। किं तर्हि? अमीवा रोगान् हिंसितव्यान्। स्त्रीलिङ्गनिर्देशो जात्यभिप्रायः। रोगजातीश्च[4] हिंसितृजातीश्चेत्यर्थः।

देवपत्न्यो वाच्याः। ताः पुनर्देवानां पालयित्र्यः पालनीया वा। पत्नीसंयाज[5]देवताः। पत्नीसंयाजाश्च तृतीयसवनस्य स्थाने। तच्च द्युभक्तीति[6] द्युस्थानत्वम्। तासामेषा।

[ इति सप्तदशस्या-(द्वादशस्या-) ध्यायस्य चतुश्चत्वारिंशः खण्डः ][7]

---

## [ अथ पञ्चचत्वारिंशः खण्डः। ][7]

देवानां पत्नीरुशतीरवन्तु नः प्रावन्तु नस्तुजये वाजसातये।
याः पार्थिवासो या अपामपि व्रते ता नो देवीः सुहवाः शर्म यच्छत॥[8]

प्रतिक्षत्त्रस्यार्षम्। प्रथमार्थे द्वितीया देवानां पत्न्यो भवत्यः। उशत्यो हविस्तुतीश्च कामयमानाः। अवन्तु[10] अवतिर्गतिकर्मा गच्छन्तु नोऽस्मान् प्रति। गत्वा च प्रावन्तु[11] प्रकर्षेण रक्षन्तु नोऽस्मान्। किमर्थम्? तुजये तुजय इति तुक्[12]शब्दस्यापत्य[13]नाम्नो जने[14]श्च रूपमिदम्। तेनायमर्थः। अपत्यजननाय। वाजसातये सातिर्लाभार्थोऽन्नलाभाय। किञ्च याः पार्थिवासः पृथिव्यां भवाः[15]। यूयं या अपामपि अपिशब्दश्चार्थे अपां वृष्टिलक्षणा[16]नाम्। व्रते कर्मणि जननाख्ये जन्मनीत्यर्थः। सप्तमीश्रुतेर्वर्तध्वं[17] इति शेषः। वृष्टिं कुरुतेत्यर्थः। ता नोऽस्मभ्यं

---

१–सनेमेति C. 'इति' त्रुटितम् M.
२–न्तर्नीत B.
३–अस्मात्सका C.
४–जातींश्च C. जातिं च M.
५–पत्नीःसंयाज M.
६–द्विभक्तीति B. C.
७–आदर्शपुस्तकेऽत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते।
८–[ऋ० ५।४६।७] 'देवानां पत्नीः' इत्येव प्रतीकः B, C, M.
९–क्षेत्र C.
१०–भवन्तु B.
११–प्राप्नुवन्ति (न्तु C.) B. C.
१२–'क्' इति त्रुटितम् B.
१३–पत्यं नाम्नो B. C.
१४–जनयश्च C.
१५–भुक्त्वा P. C.
१६–क्षणां वृते C.
१७–वर्तस्वेति B. C.

हे देवीर्देव्यः सुहवाः सुह्वानाः शर्म गृहं सुखनाम वा यच्छत प्रयच्छत।
सामान्योक्तानां विशेषाभिधित्सया पराऽनन्तरा।
[ इति सप्तदशस्या-(द्वादशस्या-) ध्यायस्य पञ्चचत्वारिंशः खण्डः ]

---

## [षट्चत्वारिंशः खण्डः ।]

उत ग्ना व्यन्तु देवपत्नीरिन्द्राण्य १ ग्नाय्यश्विनी राट्।
आ रोदसी वरुणानी शृणोतु व्यन्तु देवीर्य ऋतुर्जनीनाम् ॥

उतापीत्यर्थे। ग्नाशब्दः स्त्रीवचनः। अपि स्त्रियो व्यन्तु कामयन्ताम्। किम्? सामर्थ्याद् हविः। कतमाः स्त्रियः? देवपत्नीः देवानां पत्न्यः कामयमानाश्च। इन्द्राणी इन्द्रस्य पत्नी। अग्नायी अग्नेः पत्नी। अश्विनी अश्विनोः पत्नी। सा च राट् दीप्तिः। राडित्यस्य प्रत्येकं वा सम्बन्धः। आकारः शृणोत्विति सम्बध्यते। रोदसी रुद्रस्य पत्नी। रोदसीति रुद्रस्य पत्नीवचनो व्याख्यातः। तत् किल नोपपद्यते। यतोऽन्तोदात्तो रोदसीशब्दो रुद्रपत्नीवचनो दृष्टः। 'विषितस्तुका रोदसी'। 'मिम्यक्ष येषु रोदसी' इत्यादावन्तोदात्तस्य दर्शनात्। आद्युदात्तस्तु 'अतप्यमाने अवसावन्ती अनु ष्याम रोदसी देवपुत्रे' इत्यादौ सर्वत्र द्यावापृथिवीवचनः। अस्याद्युदात्तत्वाद् द्यावापृथिवीवचन एव न रुद्रपत्नीवचनः। तथा च पदकारेण द्विवचन-

---

१–देवविद्देव्यः B. C. २- सुनवाः सुह्नाः C.
३–'प्रयच्छत' इत्यतः परमादर्शपुस्तकेष्वयं पाठ उपलभ्यते 'स्वान्तच्छब्द (यत्र त्सां तच्छब्द C. एतावान् पाठो नास्त्येव M.) आद्युदात्त (त:B.) स्वत्रासुवचनः तुत्वं तु जीवग्रहणं तामिन्द्रं तुको (कोः C.) प्रियंगरे तु जयति यथा' B.C. 'आद्युदात्तस्तत्रासुवचनत्वन्तु यत्र तु तुकशब्दः जीवग्रहणं तमिन्द्रन्तुकोः...प्रय...इरेतु जयेति यथा' M.। अयं भ्रष्टविपर्यस्ताक्षरोऽनवगतार्थः पाठ इति कृत्वाधष्टिप्पण्यां निपातितः।
४–:क्तानं विशेषाधिभित्सया C.
५–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते।
६–[ऋ० ५। ४६। ८] 'उत ग्ना व्यन्तु' इत्येव प्रतीकः B. C. M.
७–'स्त्री' इति त्रुटितम् M. ८–उत अपि M.
९–योऽप्यनुकाम B. C. यो प्यन्तु काम M.
१०–'स्य' इति नास्ति B.
११–'अग्नायी' इत्यारभ्य 'रोदसीति रुद्रस्य पत्नी' इत्यन्तः पाठस्त्रुटितः B. C.
१२–राः दीप्ति M.
१३–वचनेऽप्याख्यातः B.
१४–[ऋ० १।१६७।५] विष्टितस्तु B.
१५–[ऋ० ६।५०।५] मीम्यक्षं येषु B.
१६–स्यादर्शे B. स्यान्दर्शे C.
१७–[ऋ० १।१८५।४]
१८–अस्माद्यु C. अस्मादाद्यु M.
१९–'द्वि' इति त्रुटितम् B.

न्त्वं प्रदर्शितमिति । कर्मणां वा दानेन प्रशस्यतास्य दर्शितेति । भाष्यकारस्तु देवपत्नीप्रकरणानुविधानेन पदकारमनवेक्ष्य रोदसीशब्दं रुद्रपत्नीवचनमुदाजहारेति ।

इति निरुक्तटीकायां सप्तदशो [द्वादशो] ऽध्यायः समाप्तः ।

---

## अष्टादशो [ त्रयोदशो ] ऽध्यायः ।

यथा प्रतिज्ञातं समाम्नायो व्याख्यातः । इदानीं पूर्वाचार्याणां मतानुवृत्तितत्परतया–

अथेमा अतिस्तुतय इत्याचक्षते ।

इति । इह 'यस्यां देवतायां' इत्यत्र स्तुतिलक्षणा देवतेति देवतालक्षणमुक्तम् । सा च स्तुतिर्नाम्ना बन्धुभिः कर्मणा च प्रदर्शिता । इहेदानीं कर्मातिक्रमेण गुणभूयस्त्वेन च प्रदर्शनीयेति । अथेत्यनन्तरम् । इमा वक्ष्यमाणा अतिशयवत्यः स्तुत्य इति । स्तुतय इत्येव किं स्तुतिशब्देन पूर्वाचार्या आचक्षते । प्रसिद्धा हीयं तेषां संज्ञेत्यभिप्रायः ।

स्वमतमाह—

अपि वा सम्प्रत्यय एव स्यात् ।

इति । सम्प्रत्येव समा अनतिरिक्तैवं स्यात् । याप्यतिशयवत्यभिमता सापि प्राकृतं इवानतिरिक्तैवेत्यर्थः । कुत एतदित्याह ।

माहाभाग्याद्देवतायाः ।

इति । न गुणानां विभूतेरियत्तास्ति देवतायाः । तथा चोक्तम् 'ऋचीषमः' । 'नार्वागिन्द्रम्' इति ।

नैरुक्तसमयानुवृत्तये त्वतिस्तुतयः प्रदर्श्यन्ते ।

सोऽग्निमेव प्रथममाह ।

सोऽतिस्तोता पूर्वाचार्यो वा । पूर्वक्रमानुवृत्त्यैवाग्निमेव वातिस्तुतिविषयत्वेन प्रथममाह ।

---

१–णापादा B. C. णापाद M.
२–शब्दो रुद्र B. C. ३–दशाध्यायः C.
४–नास्ति B. C.
५–अयमध्यायारम्भनिर्देशोऽपि नास्ति C.
६–नाति B. C.
७–[ निरु० ७ । १ ]
८–०नीयेत्यनत्यन्तमिमा रक्ष्य B. ०नीयेत्यन्तदिमा रक्ष्य C.
९–वतिस्तु C. १०–संप्रत्येव C.
११–रिक्तैन C.
१२–सावि प्रा C. १३–प्रातकृत इवोपितैवेत्यर्थः B. C.
१४–[निरु० ७ । ४]
१५–तेर्यत्रास्ति B. तेर्यत्तास्ति C
१६–[ऋ० १० । २२ । २ ॥ निरु० ६ । २३]
१७–[ऋ० १० । ८९ । ५ ॥ निरु० ५ । १२]
१८–अर्वक् C.

त्वमग्ने द्युभिस्त्वमाशुशुक्षणिस्त्वमद्भ्यस्त्वमश्मनस्परि ।
त्वं वनेभ्यस्त्वमोषधीभ्यस्त्वं नृणां नृपते जायसे शुचिः ॥[1]

अत्र स्वाधिकारातिरेकेण[2] स्तुतिर्व्याख्याता[3]।

'नहि त्वदारे' इति वरुणस्य स्तुतिः ।

अपो सु म्यक्ष वरुण भियसं मत् सम्राळृतावोऽनु मा गृभाय ।
दामेव वत्साद्वि मुमुग्ध्यंहो नहि त्वदारे निमिषश्च नेशे ॥[4]

**कूर्मस्य गार्त्समदस्यार्षम् । गृत्समदस्यैव वा ।** अपो सु[5] म्यक्ष **म्यक्षतिर्गतिकर्मा तेनास्य सम्बन्धः सुम्यक्ष सुष्ठु अपगमय[6]।** हे वरुण भियसं **भयमाधिदैविकमाधिभौतिकमाध्यात्मिकं च दुःखमित्यर्थः ।** मत् **मत्तो मत्सकाशादित्यर्थः ।** सम्राट् **सम्यक् दीप्तः ।** ऋतावः **ऋतं सत्यमुदकं यज्ञो वा तेन तद्वत् । सत्यवदुदकवद् यज्ञवद्वा ।** अनु मा गृभाय **अनुगृहाण मां तैस्तैरनुग्रहविशेषैः । किञ्च** दामेव **दाम बन्धनं यथा कश्चिद्** वत्साद्[8] **विमुञ्चेत्तद्वद्** विमुमुग्धि **विमुञ्च ।** अंहः **जन्मान्तरकृतमपि पापं वत्सस्थानीयादात्मनः । कस्मादेवमुच्यते[9] ? इयमत्रातिस्तुतिः ।** न हि[10] **हिर्यस्मादर्थे यस्मात् ।** त्वत्[11] **त्वत्तोऽन्य इति शेषः ।** आरे **दूरनामैतत् । अपिशब्दलोपश्चात्र द्रष्टव्यः । दूरेऽपि सतो** निमिषश्चनेशे[12] **चनशब्दश्चार्थे निमिषतश्चशब्दादनिमिषतो मनुष्यलोकस्य चेत्यर्थः सर्वदेवमनुष्यजातस्य ।** ईशे **पुरुषव्यत्यय ईष्टे स्वामी भवतीत्यर्थः ।**

**इन्द्रस्यातिस्तुतिः[13] ।**

[इत्यष्टादशस्या-(त्रयोदशस्या-) ध्यायस्य प्रथमः खण्डः][14]

---

## [अथ द्वितीयः खण्डः ।][14]

यद् द्याव इन्द्र ते शतं शतं भूमीरुत स्युः ।
न त्वा वज्रिन्त्सहस्रं सूर्या अनु न जातमष्ट रोदसी ॥[15]

**पुरुहन्मन आर्षम् ।** यत् **यदि द्युवो द्युलोकाः शतं हे इन्द्र** ते **तव उपमा नास्तीति**

---

१–[ऋ० २ । १ । १] 'त्वमग्ने द्युभिः' इत्येव प्रतीकः B. C.
२–सातिकारा B C.
३–[निरु० ६ । १]
४–[ऋ० २ । २८ । ६] 'अपो सु म्यक्ष' इत्येव प्रतीकः B. C.
५–अपः सम्यक्ष B.
६–'म्यक्ष' इति नास्ति B.C.
७–अवगमय B.
८–वत्सान् B. C.
९–च्यते स इय C.
१०–'हि' इति नास्ति B. C.
११–'त्वत्' इति नास्ति B. C.
१२–च नेशे न शब्द B.
१३–स्यादिस्तुतिः B. C.
१४–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।
१५–[ऋ० ८।७०।५] 'यद्द्याव:' इत्येव प्रतीकः B.C.

शेषः । शतं भूमीरुत अपि शतं च भूमयोऽपि स्युर्भवेयुः । सहस्रं सूर्याः सहस्रं च सूर्याः । तथापि न त्वा त्वां हे वज्रिन । अन्वष्ट स्यर्ययेनैकवचनं विकरणलोपश्च अन्वश्नुवीरन् गुणैर्व्याप्नुयुरित्यर्थः । तदेतदुक्तम् 'नार्वागिन्द्रं प्रतिमानानि देभुः' इति । न जातं जातमात्रमेव त्वामन्वष्ट अश्नुवीयातां रोदसी सहिते अपि द्यावापृथिव्योः ।

आदित्यस्यातिस्तुतिः ।

[इत्यष्टादशस्या- (त्रयोदशस्या-) ध्यायस्य द्वितीयः खण्डः]

---

## [अथ तृतीयः खण्डः ।]

यदुदञ्चो वृषाकपे गृहमिन्द्राजगन्तन । क स्य पुल्वघो मृगः कमगञ्जनयोपनो विश्वस्मादिन्द्र उत्तरः ॥

इन्द्रस्यार्षम् । यत् यदाऽस्तमयकाले । उदञ्च उदञ्चितार ऊर्ध्वं गामिनः । के ? सामर्थ्याद्रश्मयः । हे वृषाकपे आदित्य । गृहं स्वमण्डलाख्यम् । हे इन्द्र अत्यन्तेश्वर । अजगन्तन व्यत्ययेन प्रथमस्य स्थाने मध्यमः । अगमन् गतास्त्वदीयमण्डलमनुप्रविष्टा भवन्तीत्यर्थः । यदेति श्रुतेस्तदेत्यध्याहारः । तदा क तिष्ठतीति शेषः । स्यः स भगवान् । प्रत्यक्षकृतत्वादनामन्त्रितश्रवणाच्च भवच्छब्दाध्याहारेण योजना । कीदृशः ? पुल्वघः घसे रूपमिदम् । बहूना भौमरसानामत्ता । मृगः मार्ष्टेर्गतिकर्मण इदं रूपम् । गन्ता गमनशीलः । कमगन कं वा देशं गच्छतीति । जनयोपनः 'युपु विमोहने' तत्रापरिज्ञानादिन्द्रासञ्जननाद्वा सर्वस्य जनस्य मोहयिता । कं स्य इति पुरस्तात् तस्य श्रुतेर्यदध्याहारः । यो विश्वस्मात्सर्वस्मात् । इन्द्रोऽत्यन्तेश्वरः । उत्तर उत्कृष्टतरश्चान्यैरपि गुणैः ।

अस्तमयसमये रश्मिषु मण्डलं प्रविष्टेषु स भवान् क तिष्ठति कं वा देशं गच्छतीत्येवमत्र वाक्ये परिसमाप्ते भाष्यम् । तमेतद् ब्रूम इति । तस्यार्थः । तमेतत् समर्थार्थप्रदर्शनम्। तत्पुनर्वाक्यशेषस्याध्याहारप्रदर्शनम । सर्वस्माच्च इन्द्र इत्यध्याहृतस्य यच्छब्दस्य । क स्य

१—'सहस्रं सूर्याः' इति द्विर्लिखितम् B. C.
२—स्यतयेनैक C. ३—अन्वाश्नु B.
४—[ऋ० १० । ८९ । ५ ॥ निरु० ५ । १२]
५—नवजातमात्र एवत्रामन्वष्ट (ष B.) B. C.
६—आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।
७—[ऋ० १० । ८६ । २२] 'यदुदञ्चः' इत्येव प्रतीकः B. C.
८—अजगन्त अजगन्तन B. C.
९—तदध्याहारः B. १०—वार्ष्टेर्गति C.
११—'इति' इति नास्ति C.
१२—[धा० ४।१२९] युव विमोहने (नः B.)B. C.
१३—कस्येति B. कस्य इति C.
१४—मनसम B. १५—तिष्ठतीति B.

इति पुरस्ताच्छ्रुतिबलादेव यच्छब्दस्याध्याह्रियमाणत्वात्[1]।

आदित्यरश्मीनामतिस्तुतिः—।

[इत्यष्टादशस्या-(त्रयोदशस्या-)ध्यायस्य तृतीयः खण्डः]

---

## [अथ चतुर्थः खण्डः[2]।]

वि हि सोतोरसृक्षत नेन्द्रं देवममंसत। यत्रामदद् वृषाकपिरर्यः पुष्टेषु मत्सखा विश्वस्मादिन्द्र उत्तरः[3]॥

इन्द्रस्येन्द्राण्या वृषाकपेश्च संवादसूक्तमेतत्। तत्रेयमिन्द्रस्य। वृषाकपिश्चेन्द्रस्य पुत्रः सखेत्यैतिहासिकाः। अत्रैकवाक्यतायै यत्तदोरध्याहारः। यदादित्येन रश्मयो व्यसृक्षत विपूर्वस्य सृजेः कर्मणि कारके आत्मनेपदप्रथमपुरुषस्य बहुवचन इदं रूपं विसृष्टा भवन्ती-त्यर्थः[6]। किमर्थम्? सोतोः प्रसवाय प्रकाशद्वारेणा[7]भ्यनुज्ञानाय सर्वप्राणिकर्मणाम्। तदा नेति प्रतिषेधार्थीयममंसतेति सम्बध्यते। इन्द्रमीश्वरमात्मनः। देवमादित्यम्। नामंसत न मन्यन्ते। अनपेक्ष्य तं स्वातन्त्र्येण प्रकाशकरणप्रवृत्तेर्वयमेव[8] प्रकाशयाम इत्याद्यभिमाना इत्यर्थः। कस्मिन् काले? यत्रामदत् यस्मिन् मध्यन्दिनसमये माद्यति अत्यन्तप्रकाशनिर्वृत्तेर्हृष्यती[9]वे-त्यर्थः। वृषाकपिरादित्यः। अर्य ईश्वर। पुष्टेषु पुष्टि प्रकर्षेण वृद्धिः सप्तमी चेयं तद्रश्मिषु सद्वैतद् भाष्यकार आह। रश्मिपोषं पुष्टेषु भूतेष्विति। सामान्यपुषेरत्रा[10]वयवपुषिः कर्मत्वेन[11] निर्दिश्यते। गोपोषं पुष्यतीति[12] यथा। भूतशब्दश्च जातपर्यायः। रश्मीनां ये[13] योग्याः पुष्टि-तया तेषु पुष्टेषु जातेष्विति भाष्यार्थः। कीदृशो वृषाकपिः? मत्सखा[14] अहं मन्त्रदृक्[15] सखा स सखिभूतो[16] यस्य सः। अथवा मदनं मद् हर्षः सखिभूतोऽत्यन्तसहचारी यस्य स हर्षसहा[17]-योऽत्यन्तपुष्ट[18] इत्यर्थः। अथवा मदित्येतेनात्म[19]वचनेन ऋषिरात्मनः सखीभूतान् रश्मीन् लक्षयति[20]। सखिशब्देनापि सामर्थ्यात् सहत्वं लक्ष्यते। तेन य एते मम सखिभूता[21] रश्मयो

---

१—स्याह्रियत्वात् B. C.

२—आदर्शपुस्तकेऽत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते।

३—[ऋ० १०।८६।१] 'वि हि सोतोः' इत्येव प्रतीकः B. C.

४—तमत्र यमि B.

५—'स्य' इति नास्ति C.

६—भवतीत्यर्थः B. C.

७—प्रकारद्वारे B. C.

८—वृत्तेऽप्ययमेव B. C.

९—निवृत्ते हृष्य B.

१०—सामान्युपुरुषैरत्रा B. पुरुषैरत्रा C.

११—पुष्टि कर्म B.

१२—पुपुष्येतीति C.

१३—नां या योग्याः C.

१४—तत्सखा B.

१५—मन्द्रदृक् B.

१६—हृषे सखिभूतं B. सखीभूतः C.

१७—ससर्ष C.

१८—न्तवृष्ट C.

१९—मदित्यनेनात्म C.

२०—लक्षेति B. C.

२१—सखीभूता C.

मच्छब्दवाच्यास्ते सहभूता यस्य सः। तैः[1] सहभूत इत्यर्थः। तस्मात्[2] सखिभूतरश्मिसहभूत इति। तदेतद् भाष्यकारानुरोधेन व्याख्यायते। यतो भाष्यकार आह। ये नः सखायस्तैः सहेति वा। विश्वस्मात् सर्वस्मात्। इन्द्रोऽत्यन्तेश्वरः। उत्तर उत्कृष्टतरश्चान्यैरपि गुणैः।

यच्चात्र भाष्यम्। सर्वस्माद्य इन्द्र उत्तरस्तमेतद् ब्रूम आदित्यमिति। तत्र च समस्तार्थप्रदर्शनपरम्। कुतः एतत्? यत्तच्छब्दयोर्ब्रूम इत्यस्य च विनैवाध्याहारेण ऋचः समर्थितत्वात्। मत्सखा[3] मम सखेति नेदं[4] विगृह्य प्रदर्शनम्। किं तर्हि? अर्थप्रदर्शनं यो हि मम सखा अहमपि तस्य सखेत्यभिप्रायः। तत्पुरुषत्वेपि छान्दसत्वात् समासान्ताभावः।

अथैषा वाचो[5]ऽतिस्तुतिः। अनभिव्यक्तविशिष्टवाक्यार्थप्रवल्हितत्वादेव दर्शनभेदः[6]।

[ इत्यष्टादशस्या- ( त्रयोदशस्या- ) ध्यायस्य चतुर्थः खण्डः ][7]

---

## [अथ नवमः खण्डः।][7]

चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः।
गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति॥[8]

दीर्घतमा वाचस्तत्वमाह। चत्वारि मितानि अव्यक्तपरिमाणानि[9] पदानि[10]। इयती वाक्। तदेतद् भेदेन हि[11] चत्वारि वाचः परि[12]मितानि पदानि न पञ्चमम्। कतमानि तानि[13]? ओंकारमहाव्याहृतय[14]श्चेत्यादीनि। [ तानि[15] ] सर्वाणि विदुर्ब्राह्मणा ये मनीषिणो मेधाविनः। यस्मात्[16] तेषां चतुर्णां पदानां[17] गुहा लुप्त[18]सप्तम्याः। सामर्थ्याल्लुप्तोपमं चेदम्। गुहायामिव[19] त्रीणि निहितानि[20] नेङ्गयन्ति। इङ्गिर्गत्यर्थः[21]। न गमयन्ती[22]त्यर्थः। तुरीयं[23] चतुर्थं वाचो मनुष्या वदन्ति।

---

१–तैः सह C. २–'त' इति नास्ति B. C.
३–समखा C. ४–नेतं C. ५–वाचेति B. C.
६–भोद B.
७–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते। अत्र चतुर्थनवमखण्डयोर्मध्ये पञ्चमषष्ठसप्तमाष्टमखण्डानां माहेश्वरं व्याख्यानं नोपलभ्यते। एष्वेव खण्डेषु दुर्गवृत्तिरपि नास्ति।
८–[ऋ० १। १६४। ४५] 'चत्वारि वाक्' इत्येव प्रतीकः B. C.
९–तानिमव्यक्त C. १०–पादानि C.
११–देनाहि C. 'देनाह' वा स्यात्।
१२–'वाचः परि' इति त्रुटितम् B.
१३–'तानि' इति त्रुटितम् B. १४–महाव्रतय B.C.
१५–'तानि' इति नास्ति B. C.
१६–'यस्मात्' इत्यतः पूर्वं 'तान्येतस्मात्' इत्यधिकः पाठः B. C.
१७–पदानामि C.
१८–'लुप्त' इति त्रुटितम् B. लुप्तसप्तम्याः C.
१९–मिति B मिम C. २०–तानि ये नंग C.
२१–[धा० १। १५३] इङ्गिर्जत्यर्थः C.
२२–'यन्ति' इति त्रुटितम् C. २३–तुर्यं C.

कतमानि तानि ? तत्र ऋषिमते तावद् भूरित्येतां महाव्याहृतिम्[1] । कुत एतत् ? भूरित्येतस्या[2] महाव्याहृतेरर्थोऽयं लोकः । तेन तदर्थस्यास्य[3] लोकस्य प्रत्यक्षत्वात् सर्वमनुष्यैर्ज्ञायमानत्वात् ।

गवादीनि नामानि । कुतः ? तेषां तत्त्वं सर्वमनुष्यैर्ज्ञायमानत्वात् । आख्यातोपसर्गनिपातास्तु [अ[4]] प्रसिद्धार्थत्वान्नार्थं सर्वे वेदयन्ते ।

नैरुक्तयाज्ञिकैतिहासिकमतेषु व्यावहारिकी लौकिकी [या[5]] वाक् तां सर्वे मनुष्या वदन्ति । पशवो गवादयः । तूणवेषु वीणजातिषु वादित्रेष्वित्यर्थः । मृगेषु शबरादिषु[6] । अव्यक्तत्वादेतेषु या वाक्[7]सा गुहायाम् ।

आत्मप्रवादा इति । आत्मानं ये प्रवदन्ति अध्यात्मवादिनस्तन्मते आत्मनि या वाक् सा व्यावहारिकीत्येकां[8] वदन्ति ।

तुरीयं त्वरतेरिति[9] । तद्धि त्वरितमिव निर्गतं त्रिभ्यः । क्षुद्रं सरीसृपमव्यक्तरणनशीलम्[10] ।

अथापि ब्राह्मणम्[11] । अपि ब्राह्मणप्रदर्शनेऽपि मनुष्यसप्तमेषु यत्तुरीयं[12] व्यक्तं व्यक्तवर्णरूपञ्च व्यावहारिकं[13] तद्वदन्ति । येषु लोकेषु यानि तुरीयाणि व्यक्तरूपाणि तानि दर्शयति । तत इति[14] । अथ पशुगताव्यक्ताया या अन्या व्यक्ता तां ब्राह्मणेष्वदधुः[15] । उभयीं वाचं देवानां वैदिकी या च मनुष्याणां लौकिकी इत्यर्थः ।

अक्षरस्यातिस्तुतिः प्रवल्हितेव ।

[ इत्यष्टादशस्या-(त्रयोदशस्या-) ध्यायस्य नवमः खण्डः ][16]

---

१–मनुष्या वदन्तीति शेषः ।

२–तस्य महा B. C.

३–स्याद्य लोक B. C.

४–'अ' इति नास्ति B. C.

५–'या' इति नास्ति B. C.

६–'श' इति नास्ति B. C.

७–'वाक्' इति नास्ति 'यासां' इति पाठः B. C.

८–'त्येतां' इति वा पाठः स्यात् ।

९–तुरते C. 'तुरीयं त्वरतेः' इत्यारभ्य 'रणनशीलम्' इत्यन्तः पाठस्त्रुटितः B.

१०–सृपं व्यक्तरणशीलम् C.

११–ब्राह्मणः C.

१२–यत्तु वीर्यं C.

१३–'कं तद्वदन्ति येषु लोकेषु यानि' इति पाठस्त्रुटितः B. 'कं तद्वदन्ति' इत्यस्मात्परं C. पुस्तके 'गात् यान्यपीत्यादिना' इत्यधिकः पाठः ।

१४–'इति' इत्यस्मात्परं 'स्तनयित्नौ वा' इति B. पुस्तके 'स्तनयित्नु वा' इति च C. पुस्तकेऽधिकः पाठः ।

१५–णे न्यद C.

१६–आदर्शपुस्तकेष्वत्र खण्डसमाप्तेर्निर्देशो न दृश्यते ।

## [अथ दशमः खण्डः।][1]

ऋचो अक्षरे परमे व्योमन् यस्मिन् देवा अधि विश्वे निषेदुः।
यस्तन्न वेद किमृचा करिष्यति य इत्तद्विदुस्त इमे समासते ॥[2]

दीर्घतमसः। अस्मामृचि शाकपूणेस्तावन्मतेन[3] ओङ्कारं कृत्वा ऋचामध्ययनप्रार[4]म्भात् शास्त्रानु[5]वचनादिषु ऋगन्ते प्रणवस्य[6] योगाद्[7] ऋचः सम्बन्ध्येनदक्षरम्[8]। परमं चेदं व्योम स्थानम्। अग्न्यादिनानादेवतानां[9] मन्त्राणां सर्वस्यांश्च[10] त्रय्या विद्यायास्तदध्ययनस्य[11] च ओङ्कारपूर्वकत्वात्।

अथवा परमेदतः[12]। कथम्? वि......मोतत्वात्। इदं प्रणवाख्यं ब्रह्मजगतः[13] कारणमित्युपनिषत्सु वर्णितम्[14]। तस्य किल[15] ओमित्येतस्य ब्रह्मणः प्रथमायां मात्रायां पृथिव्यग्निः[16] ऋग्वेदः पृथिवीनिवासिनो जना इत्येतत्। द्वितीयायां मात्रायामन्तरिक्षं[17] वायुर्यजूंषि अन्तरिक्षनिवासिनो जना इत्येतत्। तृतीयायां द्यौरादित्यः सामानि द्युनिवासिनो जना इत्येतत्। तेनेदं जगतः परं व्योम।

अथवा परमं व्योम मृत्योर्बिभ्यतां[19] देवानाम्। तदेतत् परस्मिन्[20] पादे वक्ष्यते। तस्मिन्नेवंरूपे परमे व्योमन् लुक् सप्तम्याः। यस्मिन् देवा अधि विश्वे निषेदुः। तत्र छन्दोगानामुपनिषदीतिहासः पठ्यते। 'देवा वै मृत्योर्बिभ्यतस्त्रयीं विद्यां प्राविशँस्ते छन्दोभिराच्छादयन् तच्छन्दसां छन्दस्त्वम्। तानु तत्र मृत्युर्यथा मत्स्यमुदके परिपश्येदेवं पर्यपश्यदृचि साम्नि यजुषि। ते नु वित्त्वोर्ध्वा ऋचः साम्नो यजुषः स्वरमेव[21] प्राविशन्। यदा वा ऋचमाप्नोत्योमित्येवातिस्वरत्येवं[22] सामैवं यजुरेष उ स्वरो यदेतदक्षरमेतदमृतमभयं[23] तत्प्रविश्य देवा अमृता

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते
२–[ऋ० १। १६४। ३९] 'ऋचो अक्षरे' इत्येव प्रतीकः B. C.
३–मतं न ओ B. मतं ओ C.
४–मध्येन प्रार B. C. ५–शास्तानु C.
६–प्रणावस्य C. ७–'द्' इति नास्ति B. C.
८–बध्येत तद B. बध्येतद C.
९–अग्नयस्तस्य नाना B. C.
१०–सर्वस्यश्च तैय्या C.
११–'स्य च' इति नास्ति B. C.
१२–परमिदत। कथ। विमोत C. अयं सन्दिग्धः पाठः।
१३–गतः न कार B. C. १४–वर्णीतम् B.
१५–किल इतस्य B. C.
१६–'पृथिव्यग्निः' इत्यारभ्य 'वायुर्यजूंषि' इत्यन्तः पाठस्त्रुटितः B.
१७–ओतं बतीयायम्मात्रा C.
१८–'अन्तरिक्षं वायुर्यजूंषि' इति त्रुटितः पाठः C.
१९–बिभ्रतां B. C. २०–परस्मि वादे C.
२१–परमेव B. C.
२२–त्येव सरस्त्येवं B. C.
२३–भयमेतत् B. C.

अभया अभवन्[1]' इति । तदेतदिहोच्यते यस्मिन देवाः सर्वे मृत्योर्बिभ्यतोऽधिनिषण्णाः प्रविष्टा इत्यर्थः ।

अथवा ऋगादी[3]नामप्यध्ययन[4]मोङ्कारपूर्वकत्वादृगादयः सर्वे मन्त्रा अत्र निषण्णाः । तेन च तेषां या देवतास्ता अपि तद्द्वारेणात्र निषण्णा इत्येतदभिप्रेत्यैतदुच्यते य[5]स्मिन् देवाः सर्वे अधिनिषण्णा इति । यस्तन्न दे[6]वरूपमक्षरं न वेद स ताद्भाव्याप्राप्तेः किमृचा करिष्यति । य इत्तद्विदुः । इच्छब्दस्तुशब्दस्यार्थे । ये तु तद्विदुस्त इमे समासते । य एतदेवं विद्वानक्षरं प्रणौति[8] । एतदेवाक्षरं स्वरममृतमभयं प्रविशति तत्प्रविश्य यदमृतास्तदमृतो भवतीति[9] पूर्वस्येतिहासस्योपसंहारश्रुतेस्ताद्भाव्यापत्त्या प्रणवविग्रहात्मानमनुप्रविश्य ब्रह्मणः साम्यमापन्ना विद्वांस इमे समासते । समित्येकीभावे तेन[10] सह एकीभूता आसते ।

अत्र ऋचश्चे[11] ह्यक्षर इत्यादि यद् भाष्यं तस्यार्थः । यदेतदोमित्येतदक्षरं परमे[12] व्यमनं गमनं स्थानम् । व्यवनामिति[13] येषां पाठस्तेषां विशेषेण[14] रक्षनं स्थानमित्यर्थः । एतास्मिन् सत्येतदक्षरं कृत्वा उच्चार्येत्यर्थः । ततः ऋचोऽधीयतेऽध्येतारः[15] । नानादेवतेषु मन्त्रेष्वेतत् कुर्वन्तीति[16] शेषः । 'एतद्ध वा एतदक्षरम्[17]' इत्यादेश्च ब्राह्मणात् सर्वस्यामेव त्रय्यां विद्यायामेतत् कुर्वन्ति न केवलेषु मन्त्रेषु । तेनेदं मन्त्राणां त्रय्याश्च[18] विद्यायाः परमं व्योम । आत्मीयमन्त्रद्वारेण च देवाः सर्वे अधिनिषण्णा इत्येतदुपपन्नम् । अत एतत्तावच्छाकपूणिमतम्[19][20] । तत्पुत्रस्य तु मतम् —

[इत्यष्टादशस्या-(त्रयोदशस्या-) ध्यायस्य दशमः खण्डः][21]

---

१–'अभया अ' इति त्रुटितम् B. C.

२–[ छा० उ० १।४।२-४ ] भवन्तीति B. C.

३–'दीना' इति त्रुटितम् B.

४–अत्र 'अध्ययनस्य' इति षष्ठ्यन्तपाठो युक्तः स्यात् ।

५–अत्र मूलनिरुक्ते 'यस्मिन् देवा अधिनिषण्णाः सर्वे' इत्यानुपूर्वीकः पाठः । 'यस्मिन्' इत्यस्माच्च पूर्वे B. C. पुस्तकयोः 'आत्मीय म[न्त्र] द्वारेण' इत्यधिकः पाठः ।

६–देवं रूप B. C.

७–'मक्षरं न वेद स ताद्' इति त्रुटितम् B. सत्याद् भाव्या C.

८–प्ररणौति B.

९– भवति' इत्यस्मात्परं 'इति पूर्वस्येतिहासस्योपसंहारश्रुतेस्ताद्भा' इति पाठस्त्रुटितः B.

१०–'तेन सह एकीभूता आसते' इति पाठस्त्रुटितः B.

११–ऋचश्चाक्षर B. ऋतश्च ''क्षर C.

१२-परं न व्यामनं B. C.

१३–व्यमनमिति B. C.

१४–'विशेषेण रक्षणं स्था' इति त्रुटितम् B.

१५–तारु नाना B. C.

१६–कुप्यन्तीति C.

१७–[कौषी० ब्रा० ६।१२] एतदवा एकमक्षम् C.

१८–'त्रय्याश्च' इति त्रुटितम् B.

१९–एव तत्ता B.

२०–पूर्वतम् C.

२१–आदर्शपुस्तकष्वत्र खण्डसमाप्तेर्निर्देशो न दृश्यते

## [ अथैकादशः खण्डः । ][1]

'ऋचो अक्षरे' इति । ऋगित्यादि[2]त्यमण्डलमुच्यते । आदित्यमण्डलं[3] कस्मात् ? ऋग्भवति । यद् यस्मादेनमर्चन्ति । अर्चनादृगित्यर्थः । अथवा रश्मिद्वारेण[4] सर्वाणि भूतानि[5] प्रत्यागतत्वाद् ऋक् । तस्य सम्बन्धि[6] यदन्यन्मात्राभ्यस्तदीयेभ्योऽवयवेभ्यो व्यतिरिक्तमधिष्ठातृभिरध्यात्मकदेवतारूपमादित्याख्यम् । अ[7]क्षरं व्योम स्थानं तेजसो भौमानां वा रसानाम् । तस्मिन्नेवंरूपे[8] यस्मिन् देवा रश्मयो भौमानां रसानामाहरणधारणाभ्यामधिनिषण्णाः सन्ति[9] । आदित्यमेवं[10]मादित्यप्रवादा मन्यन्ते । यस्तन्न[11] वेद किमृचा मण्डलेन करिष्यति । किं करिष्यतीत्यादि पूर्ववद् योज्यम् ?

आत्मवादिनां तु मतम्—

[अथाध्यात्मम् । शरीरमत्र ऋगुच्यते यदेनेनार्चन्ति प्रत्यृचः सर्वाणीन्द्रियाणि तस्य यदविनाशि धर्मं तदक्षरं भवति । इन्द्रियाण्यत्र देवा उच्यन्ते यान्यस्मिन्नात्मन्येकं भवन्तीत्यात्मप्रवादाः । ][12]

अयं पिण्डशरीरमृग्भवति । स्नानोद्वर्तनपरिषेकानुलेपेना[13]र्चनात् । प्रत्यृ[14]तो वा सर्वाणि सर्वेन्द्रियशक्त्यनुगमाद्वेत्यर्थः । तस्य सम्बन्धि[15] यदविनाशधर्मि यदवि[16]नश्वरमक्षरं भोक्तृ आत्मरूपं[17] तत्परं व्योम भोगस्य वा इन्द्रियाणां वा । कृत्स्नस्य जगतः प्रलयावस्थायां यस्मिन् देवा इन्द्रियाणि स्वस्य विषयस्य प्रकाशने निमित्ते निषेदुः । यस्तु[18] विविक्तं न वेद किमृ[19]चा शरीरेण[20] करिष्यति । वृथा जातत्वात् । य इत्तद्विदुरिति पूर्ववद् योज्यम् । समासते[21] आत्मन्यक्षर इत्यात्मप्रवादाः ।

[ इत्यष्टादशस्या-(त्रयोदशस्या-) ध्यायस्य एकादशः खण्डः ][22]

---

१—आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते ।
२—'त्य' इति त्रुटितम् C.
३—मण्डलान्मा च ऋग् B. C.
४—'द्वारेण' इत्यस्मात्परं 'च देवाः सर्वे अधिनिषण्णाः' इत्यधिकः पाठः B. C.
५—भूमानि B. C. ६—सम्बन्धी B. C.
७—'अ' इति त्रुटितम् B. C.
८—न्नेव रूपे B. C. ९—षण्णा हन्ति B. C.
१०—आदित्येवमादि B. C.
११—'न' इति नास्ति B. C. ऋचां मण्डले B.
१२—अयं मूलपाठो नास्त्यादर्शपुस्तकेषु ।
१३—लेपना B. १४—प्रत्युतो C.
१५—न्धिनी यद्विना B. C.
१६—यदपि नश्व C.
१७—रूपक तत् C.
१८—यस्त वितर्क C.
१९—किं वो B. किमृवो C.
२०—'रेण करि' इति त्रुटितम् B. C.
२१—'वासते' इत्येव B. C.
२२—आदर्शपुस्तकेष्वत्रखण्डसमाप्तेर्निर्देशो न दृश्यते

## [अथ द्वादशः खण्डः ।][1]

[ अक्षरं न क्षरति न क्षीयते वाक्क्षयो भवति । वाचोऽक्ष इति वा । अक्षो यानस्याञ्जनात् । तत्प्रकृतीतरद्वर्तनसामान्यादिति । ][2]

अक्षरं न क्षरति न[3] स्रवति न क्षीयते न शुष्यति शरीरादित्यर्थः । वाक्क्षयो वाचः[4] क्षयः । ककाराद्यक्षरमङ्गीकृत्योच्यते[5] प्रसङ्गात्[6] । [वाक्][7]क्षयो[8] निवासो यस्येति वा । अक्षयमक्षरम् । स [वाचोऽक्षः][9] कुतः[10] ? वर्णरूपे पदरूपः शब्दो[11] निवसति स्वरस्य[12] रूपे व्यञ्जनरूपा वाङ्[13] निवसति । स हि स्वरोऽनुप्रविश्याक्षवद् व्यञ्जनचक्रं धारयति । नादो हि वाचो निवासः[14] । नादरूपा वाक् क्षयो[15] निवासो यस्येति[16] वा । एवं[17] त्रय्या लौकिकयाश्च वाचः कृत्स्नाया अक्षरानुवृत्तित्वाद् वाचोऽक्ष इवाक्षरम्[18] । तदेतद् यानाक्ष[19]निर्वचनपुरस्सरं वक्ष्यति तत्प्रकृतीतरदिति[20] । तादर्थ्येनानु[21] च सङ्क्रमता । अक्षो यानरथादेः[22] सम्बन्धी । अभ्यञ्जनाद्धाञ्जेः[23] । अक्ष्णः[24] पुनरश्नोतेरिति[25] वैयाकरणानाम् । अभ्यञ्जनं[26] भ्रमणं तत्प्रकृति अक्षस्वभावोऽयमित्यर्थः । इतरत् स्वराख्यमक्षरम् । वर्तनसामान्यात्[27] स्वरमधि[28]रूढानि व्यञ्जनानि वर्तन्ते । इतिशब्दः समाप्त्यर्थ एवकारार्थो[29] वा ।

---

१–आदर्शपुस्तकेष्वत्र खण्डारम्भनिर्देशो न दृश्यते

२–अयं मूलपाठो नास्त्यादर्शपुस्तकेषु ।

३–'न' इति त्रुटितम् B.

४–वाक्षय वाचक्षयं C.

५–'त्योच्य' इति त्रुटितम् B. कृतोच्यते C.

६–'त्' इति त्रुटितम् C.

७–'वाक्' इति नास्ति B. C.

८–क्षयोन्निवासो यस्योति वा C.

९–'वाचोऽक्षः' इति नास्ति B. C.

१०–कुत B. कतC.

११–वर्णः पद्रूपशब्दो B. C.

१२–स्वरं स्वरूप B. C.

१३–'वाङ् निवसति । स हि स्वरोऽनुप्रविश्याक्षव' इति पाठस्त्रुटितः B.

१४–अस्य वाक्यस्य स्थाने 'नादा नि व्यागवा' इत्येवं पाठः B. C.

१५–क्षियो B. C.

१६–'यस्येति वा' इति त्रुटितम् B. यस्योति C.

१७–'एवं' इति नास्ति B. रे त्रस्या लौकि C

१८–'रम् । तदेतद् यानाक्षनिर्वचनपुरस्स' इति पाठस्त्रुटितः B.

१९–तदेतस्यानाक्ष C. २०–तत् प्रकृतितरमितिB.C.

२१–अयं पाठः संदिग्धः । 'तादर्थ्येन' इत्यतः परं 'स्वभावोऽयमित्यर्थः' इत्यन्तः पाठस्त्रुटितः B.

२२–यन्यरथादे C.

२३–नाद्धाजेः C.

२४–अक्षन पुन C.

२५–रि हि वैया C.

२६–अवर्जनं C.

२७–तनासा B. C.

२८–स्वधिरमधि B.

२९–र्थे वा C.

[अयं मन्त्रार्थचिन्ताभ्यूहोऽभ्यूढोऽपि श्रुतितोऽपि तर्कतो न तु पृथक्त्वेन मन्त्रा निर्वक्तव्याः प्रकरणश एव तु निर्वक्तव्याः । न ह्येषु प्रत्यक्षमस्त्यनृषेरतपसो वा । पारोवर्यवित्सु तु खलु वेदितृषु भूयोविद्यः प्रशस्यो भवतीत्युक्तं पुरस्तात् ][1]

अभ्यूहस्तर्कः[2] । अभ्यूळ्होऽभ्यूढोऽन्तःप्रापित इत्यर्थः । अपिश्चार्थे[3] । श्रुतितश्च[4] मन्त्रब्राह्मणेभ्यो निगमविशेषेभ्यः । अपि तर्कतस्तर्काच्च[5] पदान्तरसम्बन्धसामर्थ्यादिलक्षणादूहात् । सत्यपि[6] चैतस्मिन् निरुक्ताख्ये तर्केणैव देवदैवताधिदैवधिपुष्पफलेतिहासप्रकरणादिनिरपेक्षेण[7] सता मन्त्रा न निर्वक्तव्याः । किं तर्हि ? प्रकरणमपेक्ष्य[8] । कुत एतत् ? यस्मान्न ह्येषु मन्त्रेषु विषयभूतां देवतां प्रति प्रत्यक्षज्ञानमस्ति अनृषेरस्मदादेः । ऋषीणां[9] तु साक्षात्कृतधर्मणां[10] वेदाभ्यासवत्वेन[11] प्रत्यक्षज्ञानं[12] धर्मानुग्रहवशेन स्यात् । पारोवर्यवित्सु[13] त्वित्युक्तम् । अनभिनिर्वृत्तोऽल्पविद्यो[14] वा नालमूहितुं मन्त्रार्थं सम्यक् । तस्माद् भूयोविद्यः प्रशस्यः शास्त्रागमविशुद्धये मनुष्यापेक्षयेत्याह[15] षष्ठेन । प्रदर्शितागमस्य सतः शास्त्रमन्तरेणाप्यागमम्[16]उपोद्बलयितुं पुनरुपन्यासः ।

[ मनुष्या वा ऋषिषूत्क्रामत्सु देवानब्रुवन् को न ऋषिर्भविष्यतीति । तेभ्य एतं तर्कमृषिं प्रायच्छन् मन्त्रार्थचिन्ताभ्यूहमभ्यूढम् । तस्माद्यदेव किंचानूचानोऽभ्यूहत्यार्षं तद् भवति][17]

उत्क्रमः[18] स्वर्गमनम् । ऋषिविवेकः[19] । अनूचानाः[20] प्रवचनसमर्थाः । अनया दिशा[21] शक्यमन्यदप्यूहितुमिति तेभ्यो बहुश्रुतेभ्यः प्रवचनसमर्थेभ्यस्तर्कमूहमात्रमुद्देशभूतग्रन्थात्मकं[22] विद्यास्थानं प्रायच्छन्[23], अपदिष्टवन्तस्तमार्षम्[24] । एवं च दर्शनादृषिः । ऋषिभ्य आगतमार्षं

---

१–अयं मूलपाठो नास्त्यादर्शपुस्तकेषु ।
२–अभ्यूहस्तः B. अभूयहस्तर्क C.
३–अपि वार्थे B. C.
४–'ति' इति त्रुटितम् B. C.
५–तर्कस्तर्का B. अपि तर्कस्तर्का C.
६–'त् सत्यपि' इति त्रुटितम् B.
७–देवताविधि C. 'दैवत' इति पाठोऽत्र युक्तः स्यात्
८–'प्रकरण' इति द्विर्लिखितम् C.
९–'ऋषीणां' इत्यस्मात्पूर्वे 'ऋषिणा तु साक्षात्' इति पाठोऽधिको वर्तते B. C.
१०–कृतधर्मणां B. C.
११–वतेन B. C.
१२–'प्रत्यक्षज्ञा' इति त्रुटितम् B. C. अग्रे 'नां धर्मा' इति पाठः B.
१३–[निरु० १ । १६] वारो पर्यायुक्तश्वक्तं B. C.
१४–निवृत्तो B. C.
१५–व्यापक्षेत्या B. व्यापेक्षेत्या C.
१६–मन्त्रेण C.
१७–अयं मूलपाठो नास्त्यादर्शपुस्तकेषु ।
१८–क्रमसर्ग B.C. १९–अयं संदिग्धः पाठः।
२०–नाः पप्रव C.
२१–दिगा शक्यमन्यदभ्यूहिक्रमिति C.
२२–मूहामात्र C. २३–प्रयचन् C.
२४–'उपदिष्ट' इति वा पाठः स्यात् ।

येज्ज्ञानं[1] तस्मात् श्रद्धातव्यम् । तेऽनूचानाः सुखग्रहणायेमं मन्त्रार्थचिन्तालक्षणं तमुपायमभ्यूहन् ग्रन्थीकृतवन्तः । तस्मादित्युपसंहारवचनम् । अन्यत्वेपि चैतद् द्रष्टव्यम् । अतश्चैतदेवं येन मन्त्रोऽप्याह ।

[इत्यष्टादशस्या-(त्रयोदशस्या-) ध्यायस्य द्वादशः खण्डः][2]

---

## [अथ त्रयोदशः खण्डः।][2]

हृदा तष्टेषु मनसो जवेषु यद् ब्राह्मणाः संयजन्ते सखायः ।
अत्राह त्वं वि जहुर्वेद्याभिरोहब्रह्माणो वि चरन्त्यु त्वे ॥[3]

बृहस्पतेरार्षम् । हृदा हृत् हृदयम् । तक्षतिः करोतिकर्मा । सः[4] क्रियासामान्यवचनत्वादिह परिच्छेदे वर्तते । बुद्धया परिच्छिन्नेषु एवमित्यध्यवसितेषु सत्सु । केषु ? उच्यते । मनसो जवेषु जवतो मनस[5] ऊहापोहाभ्यां[6] ये सम्यगूहन्ते न चा[7]चार्योपदेशमात्रेण तेषु परिच्छिन्नेषु शब्देन मनसा वा[8]वगन्तव्ये तस्यमानार्थत्वाद्[9] मनसावच्छिद्येत्यर्थः । यत् यत्र यदा[10] वा ब्राह्मणाः संयजन्ते । संयजतिरत्र सङ्गते वर्तते सङ्गच्छन्ते । सखायः समानख्याना ऋत्विजोऽन्ये च शास्त्रज्ञाः । यत्रशब्दस्य[11] दृष्टार्थप्रति[12]निर्देशार्थत्वात् । अत्रशब्दस्तत्रशब्दस्यार्थे वर्तते । अहेति च पादपूरणः । अत्र तत्र[13] समाजे काले वा । त्वमेकं[14]मित्यर्थः । कम्? सामर्थ्या[15]दनवगतार्थन्यायं मन्दप्रज्ञमूहापोहयोरसमर्थं तं विजहुस्तेन तेन व्याजेन विविधं त्यजन्ति । वेद्याभिः वाहुलकं[16]त्वात् स्नानीयपूर्णी[17]यादिवत् करणे कृत्यप्रत्ययः । सप्तम्यर्थे च तृतीया । वेद्यते ज्ञायते तं[18]दीयं याभिस्ता वेद्याः प्रश्नप्रतिवचनप्रवृत्तयस्तासु । ते नैनं किञ्चित् पृच्छन्ति नाप्यस्मै[19] प्रति[20]ब्रुवन्तीत्यर्थः । अविगीतत्वात्तं नाद्रियन्त इत्यर्थः। किञ्च[21] ओहब्रह्माण उह एव ब्रह्म[22]

---

[1]–'तज्ज्ञानं' इति युक्तः पाठो भवेत् ।

[2]–आदर्शपुस्तकेष्वत्र खण्डस्य समाप्तेरारम्भस्य च निर्देशो न दृश्यते ।

[3]–[ऋ० १० । ७१ । ८] 'हृदा तष्टेषु' इत्येव प्रतीकः B. C. [4]–सः कर्मा संस्क्रिया B. C.

[5]–जवतः मनसा औहा B. C.

[6]–औभावोभाभ्यां C. [7]–'चा' इति त्रुटितम् B.

[8]–सा वा (व C.) गन्येषु B. C.

[9]–तस्य मानार्थान B. C.

[10]–यदा या ब्राह्मणसमये यजति B. C.

[11]–यत्र शब्दो दृष्टा B. C. शब्ददृष्टा M.

[12]–वृत्तिः निर्दे B. वृत्ति निर्दे C.

[13]–तन्त्र समाजे B. [14]–मेकामि B. C.

[15]–र्थ्यार्थन्योऽदन्योयं मन्दप्रज्ञः ऊहा मर्थस्तं B. C.

[16]–'हुलकत्वात्' इति त्रुटितम् B.

[17]–पूर्णमिवादि B. C. पूर्णमित्यादि M.

[18]–त्वदियं B. त्वद्दियं याभि ता C.

[19]–ताप्यस्मै B. C. [20]–प्रति प्रवन्ती B. C.

[21]–किन्तु दत ब्र B. किन्तु दत ब्राह्मणा C.

[22]–ब्राह्मण एषां B. ब्रह्मण येषा C.

येषाम् । ऊहापोहसमर्था इत्यर्थः । त एवं नानाप्रकारं विचरन्ति । उ इति पादपूरणः । प्रश्नप्रतिवचनाभ्यां विशेषेण यावद् गन्तव्यं तावद् गच्छन्ति । ते एकेऽन्येऽमन्दप्रज्ञा इत्यर्थः।

सेयं निरुक्तविद्या श्रुतिमति वर्तत इति शेषः । श्रुतित उत्कृष्टतरेत्यर्थः । कुतः ? येन इयं बुद्धिर्बुद्धेः कारणम् । कार्यकारणयोरभेदोपचारात् । आयुर्घृतमिति यथा पदवाक्यार्थविज्ञानस्य हेतुरियं विद्या यस्मादित्यर्थगौरवप्रदर्शनं चैतत् । तथा च केवलाध्ययननिन्दा ज्ञानप्रशंसा च दर्शिते । तस्या विद्यायां नाकृतपुण्यः पारं प्राप्नोति । तदिदं विद्यास्थानाभिप्रायं न पुनरर्थः । आत्मनो दीर्घमायुरिच्छता यस्मै कस्मैचिदसूयकादिकार्ये न निर्वक्तव्यम् । आदरार्थः पुनरुपन्यासः । तस्माच्छन्दस्सु तस्या एतस्यां निरुक्तविद्याया निराकांक्षायै ऋक्पादार्धचशेषा उपेक्षितव्याः । अस्माच्चोपदेशात् सर्वत्रोपक्षेपिता एव अथेत्यादिना । पारगमनेनाशेषमन्त्रफलं दर्शयति यां यां देवतामित्यादिना । मन्त्रविषयदेवतातत्त्वाव्यसम्पदनुभवफलमिति सिद्धम् ।

निरुक्तमन्त्रभाष्यार्थपूर्ववृत्तिसमुच्चयः ।
महेश्वरेण रचितः सूनुना पितृशर्मणः ॥
इति महेश्वरविरचिता निरुक्तभाष्यटीका समाप्ता[२४] ।

—:०:—

१–ऊहावोह C.
२–'समर्था इत्यर्थः । त ए' इति त्रुटितम् B.
३–नातः (त C.) प्रका B. C.
४–वद् वक्तव्यं तावत्तमिच्छन्ति B. वद् वन्तव्यं C मन्तव्यं M.
५–ते एने M.
६–ज्ञान इत्य B. C. 'अन्येऽमन्द' इति त्रुटितम् B.
७–येयं B. C. ८–'श्रुतित उ' इति त्रुटितम् B.
९–कुता यात्वयं बुद्धिः B. यतः यं C.
१०–'भेदोपचारात् । आयुर्घृतमिति यथा । पदवाक्यार्थ' इत्ययं पाठस्त्रुटितः B.
११–'ति' इति त्रुटितम् C.
१२–मतवाक्यार्थ C. 'मतिः वाक्यार्थ' इति वा पाठोऽत्र भवेत् ।
१३–त्यर्थः गौर B, C.
१४–स्मान B. स्मानप्रशासा च दशिते C.
१५–विद्यायां B. १६–नाकृतः पुण्यपारं B.C.
१७–च्छान्ता B.
१८–'काय न निर्वक्तव्यम्' इत्ययं पाठस्त्रुटितः B.
१९–स्य निरु B.
२०–क्षाय ऋचा (पा C.) दार्ध B. C.
२१–'वि' इति त्रुटितम् B.
२२–तत्तद्भाव्य B. तत्भाव्यसत्पद C.
२३–भवनमिति C.
२४–'समाप्ता' इत्यनन्तरं केवलं C. पुस्तके 'भूयसा यत्प्रकाशेन सत्यव्यालोकसम्भवे । सन्तः सर्वं विचिन्वन्ति वन्दे तद्वाङ्मयं महः ॥ श्री रामा ॥ श्री गुरुभ्यो नमः ॥ श्री व्यासाय नम' इत्यधिकः पाठो वर्तते ।

# APPENDIX I.

## PARALLEL PASSAGES FROM THE COMMENTARIES OF SKANDA-MAHEŚVARA AND DURGA.

In the case of Skanda's commentary:

I. refers to Chapter I. published separately under the title of Fragments of the Commentaries of Skandasvāmin and Maheśvara on the Nirukta.

II. refers to Chapters II—VI. of the commentary of Skandasvāmin and Maheśvara on the Nirukta.

III. refers to Chapters VII—IX. of the same

IV. refers to Chapters X—XIII. of the same.

The second figure represents the number of the page.

In the case of Durga's commentary, the figure refers to the number of page in Rajwade's edition.

ओ३म्

# प्रथमोऽध्यायः ।

| स्कन्दस्वामी | दुर्ग |
| --- | --- |
| I. 3. पुरुषस्य प्रवृत्त्यर्थं निवृत्त्यर्थश्च प्रत्यक्षादिभिः प्रतिपत्तुमशक्यस्य हितफलस्याग्निहोत्रादेरहितफलस्य च ब्राह्मणवधादेः प्रतिपादनार्थो वेदः। | 1. सर्वकामप्राप्त्यादिर्मोक्षान्तः पुरुषार्थो वक्तव्य इति वेदः प्रवृत्तः । |
| I. 3. व्याकरणम्—अर्थविशेषाश्रयेण प्रकृत्यादिविभागेन साधुशब्दानन्वाचक्षाणं शब्दार्थप्रतिपादनेनोपयुज्यते। क्वचित्तु शब्दार्थप्रतिपादनेनैव । | 2. व्याकरणाद्विभक्त्यादिपरिज्ञानम् । |
| I. 3. शिक्षा तु—अध्ययनकाले कर्मणि च मन्त्राणां प्रयोगकाले द्रुतादिवर्णदोषैर्दुष्टस्य शब्दस्योच्चारणप्रतिपादनेनोपयुज्यते। | 1. शिक्षा तावत्—आत्मा बुद्ध्या समर्थ्यार्थान् (पा० शि० ६) इत्येवमादिना क्रमेण स्वरव्यञ्जनाभिव्यक्तिलक्षणं पूर्वाह्णमध्यंदिनापराह्णेषु यथाध्येयमधीतस्य च स्वरसौष्ठवयुक्तस्य यज्ञकर्मणि प्रयोग इत्येवमाद्यर्थजातं निरुवाच । |
| I. 3. कल्पसूत्राण्यपि–प्रतिशाखं शाखान्तराधीतेन (अपि मन्त्रेण) न्यायप्राप्तरूपेण चाङ्गेनोपेतस्य प्रतिपन्नस्य कर्मणः प्रतिपादनेन । | 2. सम्यगधीतस्य परिज्ञातच्छन्दसोऽमुष्मिन् कर्मणि विनियोग इति कल्प आद्रियते । |
| I. 3. छन्दोविचितिरपि—स्तोत्रादेरङ्गत्वेन श्रुतस्य गायत्रादेश्छन्दसो रूपप्रतिपादनेन । | 1. शिक्षाधिगताध्ययनविधेर्वेदस्याक्षरकोशपादव्यवस्थालक्षणपरिज्ञाने छन्दोविचितिराद्रियते। इयताक्षरकोशेनेयद्भिः पादैर्गायत्रीयद्भिस्त्रिष्टुबिति । |
| I. 3. ज्योतिषमपि–दर्शपौर्णमासाद्यङ्गभूतस्य पौर्णमास्यमावास्यादेः कालस्य स्वरूपप्रतिपादनेन। | 2. श्रुतिचोदितकर्माङ्गभूतं कालपरिज्ञानाय ज्योतिषम् । अनुषङ्गतश्चातोऽपि प्राणिनां शुभाशुभकर्मफलविपाककालपरिज्ञानम् । |
| I. 3. निरुक्तं तु–मन्त्रार्थप्रतिपादनेनेति । एतत्··· सापेक्षसमाधानं वक्ष्यामः। | 2. अतः······एतैरङ्गैर्वेदस्यार्थपरिज्ञानविषये निरुक्तं नामेदमङ्गमारभ्यते । |
| I. 4. तस्य निरुक्तस्य पञ्चाध्यायी "गौर्ग्मा"इत्यादयो निघण्टवः । | 4. तस्यैषा गवाद्या देवपत्न्यन्ता पञ्चाध्यायी सूत्रसङ्ग्रहः |
| I. 4. तेषां व्याख्यानार्थं षष्ठप्रभृति 'समाम्नायः समाम्नातः' इति भगवतो यास्कस्य भाष्यम् । | 5. इयं च तस्या द्वादशाध्यायी भाष्यविस्तरः । तस्या इदमादिवाक्यं 'समाम्नायः समाम्नातः' इति । |

1. 4. समाम्नायः–'सम्' इत्येकीभावे 'आङ्' आभिमुख्ये 'म्ना' अभ्यासे–एकत्र सम्भूयाध्येतृभिर्वेदवादिभिराभिमुख्येनाभ्यस्यमानत्वात् ।

1.4. समाम्नायशब्देनात्र गवादिर्देवपत्न्यन्तः शब्दसमूह उच्यते, न वेदः ।

1.4 समाम्नातः–सम्भूयाभिमुख्येनाम्नातः·अभ्यस्तः ग्रन्थीकृत्य पूर्वाचार्यैः पठित इत्यर्थः ।

1.4. सं व्याख्यातव्यः—अर्हे कृत्यः । व्याख्यानार्ह इत्यर्थः ।

1.4. तमिमं समाम्नायं निघण्टव इत्याचक्षते–पूर्वाचार्याः ।

I. 4. 'निगमा इमे भवन्ति'–नियमेन मन्त्रार्थस्य गमयितार इत्यर्थः ।

I. 5. ते निगमनान्निगन्तवो भवन्ति । ततश्चैवं निगमनान्निगन्तव एव सन्तो निघण्टव उच्यन्ते । वर्णव्यापत्त्या पृषोदरादित्वाद्धि गकार स्थाने घकारः तकारस्थाने टकारः ।

I. 5. एवमौपमन्यव आचार्यो मन्यते ।

I. 5. स्तुत्यर्थं चाचार्यग्रहणम् ।

I. 5. आङ्पूर्वो हन्तिः पाठार्थः ।

I. 5. एतस्मान्निघण्टव एते स्युः, न निगमनात् ।

I. 5. निशब्दोऽत्र व्यत्ययेन (आ) इत्यस्य स्थाने ।

5. सम्-आङ्–पूर्वस्य म्नातेरभ्यासार्थस्य कर्मणि कारके समाम्नायः । समभ्यस्यते मर्यादयाऽयमिति समाम्नायः ।

5. गवादिर्देवपत्न्यन्तः शब्दसमुदायः समाम्नाय उच्यते ।

5. चर्षिभिर्मन्त्रार्थपरिज्ञानायोदाहरणभूतः पञ्चाध्यायीशास्त्रसङ्ग्रहभावेनैकस्मिन्नाम्नाये ग्रन्थीकृत इत्यर्थः ।

6. व्याख्यातव्यो–विभज्येमान्यत्र नामानीमान्याख्यातान्युपसर्गा इमे निपाता इम इदं सामान्यलक्षणमिदं विशेषलक्षणमिमान्येकार्थानीमान्यवगतसंस्कारणीदमभिधानमभिधेयमिदमभिधानस्य निर्वचनमित्येवंविधया मर्यादया परिपाट्या यथासमाम्नात आख्यातेभ्यो निर्वक्तव्य इति ।

6. तमिमं च निघण्टव इत्याचक्षते अन्येपि— आचार्या इति वाक्यशेषः ।

6. 'निगमा इमे भवन्ति'—निश्चयेनाधिकं वा निष्कृष्य निगूढार्था एते परिज्ञाताः सन्तो मन्त्रार्थान्गमयन्ति ज्ञापयन्ति, ततो निगमसंज्ञा ( निघण्टव ) इमे भवन्ति ।

7. अर्थनिगमयितृत्वान्निगन्तव एते सम्पन्नाः सन्तोऽतिपरोक्षवृत्तिना शब्देन गकारस्थाने घकारं कृत्वा, तकारस्थाने टकारं कृत्वा त एते निगन्तवः सन्तो निघण्टव उच्यन्ते ।

8. एवमौपमन्यव आचार्यो मन्यत इति वाक्यशेषः

8. कीर्तिप्रथनार्थमौपमन्यवग्रहणम् ।

8. प्रसिद्धश्च पाठार्थे हन्तेः प्रयोगः ।

8. आहननादेव । न निगमनादित्यभिप्रायः ।

8. समः स्थाने नीत्येष नियुक्तः ।

I. 5. दर्शयिष्यति भाष्यकार उपसर्गव्यत्ययम्—निर् इत्येष समित्येतस्य स्थान इति।

8. दर्शयिष्यति चायमुपसर्गव्यत्ययम्—निरित्येष समित्यस्य स्थाने।

I. 5. घण्टुशब्दोऽपि घ्नन्ति, जघान, जिघांसति, इत्यादौ हन्तेर्हस्य घत्वापत्तिदर्शनाद् हन्तेः रूपम्।

8. वर्णव्यापत्त्यौघशब्दवद्धकारस्य स्थाने घकारस्तकारस्य टकारः।

I. 5. यस्मादर्थज्ञानार्थं छन्दोभ्यः समाहृता एते।

8. यस्माद्ध्येते समाहृता भवन्ति छन्दोभ्यस्तस्मात्समाहरणक्रियायोगात्समाहर्तव एते समाहृताः सन्तः पूर्ववदेवोपसर्गव्यत्ययादिक्रमेण निघण्टव इत्युच्यन्ते।

I. 5. अतः समाहरणान्निघण्टवः, नाहननात्।

8. एतस्मिन्नपि निगमनसमाहननक्रिये निघण्टुषु विद्यमाने अप्यविवक्षिते कृत्वा समाहरणक्रियायोगहेतुको नामधेयप्रतिलम्भः उक्तः।

I 5. अत्रेदं वक्तव्यम्—सर्वत्रैकस्य शब्दस्य कथमनेकस्य निर्वचनस्य सम्भवः। किमर्थं वा तत्प्रदर्शनं निघण्टुशब्दस्य। 'तमिमं समाम्नायं' इति संज्ञात्वकथनं तन्निर्वचनप्रदर्शनञ्च किमर्थमिति।

9. आह किमयं पुनरतिमहान्यत्न एकस्मिन्नभिधानेऽनेकधात्वर्थनिर्वचनकृत इति।

I. 5. एवमेतानि निघण्टुशब्दस्य त्रीणि निर्वचनानि

9. एवमेव निघण्टुशब्दो गमेर्वैकोपसर्गाद्—हन्तिहरतिभ्याम्वा द्व्युपसर्गाभ्यां निरुक्तः।

I. 6. उच्यते—इह (केषुचिच्छब्देषु धातुरूपमविनष्टं तदभिधेया च क्रिया तदर्थेऽस्ति, यथा—पाचकादिषु। तेषु नैवानेकस्य निर्वचनस्य सम्भवः।······) येषु तु धातोरक्षरमात्रं वर्णमात्रं वा (समानं विद्यते) यथा लक्ष्मीशब्दो लभते···तेषु—-अक्षरवर्णसामान्यान्निर्वचनस्य कर्तव्यत्वात्तस्य चाक्षरस्य वर्णस्य सर्वेषु धातुषु सम्भवात्सर्वेषाञ्च तेषामभिधेयानां क्रियाणामर्थे सम्भवात्, अन्यतमावधारणे च कारणाभावात्, एकस्य शब्दस्य अनेकनिर्वचनस्य सम्भवः।

9. उच्यते इह तावत्सर्वाण्याख्यातजानि नामानीति सिद्धान्तः। सत्याख्यातजत्वेऽभिधेयस्था या क्रिया लक्ष्यते तदभिधानसमर्थे परोक्षवृत्तौ तावदभिधायिनि रूढिशब्दे धातुरुत्प्रेक्ष्यते। स च पुनः स्वर-वर्ण-क्रियासामान्येन। तत्रैवं सति रूढिशब्दे यावन्तो धातवः स्वं स्वं लिङ्गं रूढिगतं दर्शयन्ति तावतः संगृह्य स रूढिशब्दो निर्वाच्यः। किं कारणम्? विशेषव्यवस्थाभावात्। नहि तत्र विशेषलक्षणव्यवस्था काचिदस्ति ययैकोऽवतिष्ठेतान्ये च व्यावर्तेरन्।

I. 8. संज्ञा ( निघण्टव:) च कथिता, तन्निर्वचनानि प्रदर्शितानि । इदानीं स्वरूपं कथ्यते तद्यान्येतानीति ।

10. ···निघण्टुशब्दस्य व्युत्पत्तिरुक्ता न तु निघण्टुशब्दस्यार्थतत्त्वमवधारितम्। तदवधार्यते—इति पर्युक्तस्तच्छब्द: ।

I. 8. यान्येतानि लोके चत्वारि पदजातानि पदजातय: पदसमूहा इत्यर्थ: ।

10. यान्येतानि चत्वारि पदजातानि या एताश्च तस्र: पदजातय: । क । लोके वेदे च ।

I. 8. असमाम्नातानाश्च नामाख्यातत्वप्रज्ञापनार्थमेतद्.........

12. तस्मादसमाम्नातार्थोऽयमादितो लक्षणोपदेशो युक्त इत्युपपन्नम् ।

I. 9. भाव: क्रिया तत्प्रधानमाख्यातम् । आख्याते हि क्रिया प्रतीयते—काल:—पुरुष:—उपग्रह:—साधनं—संख्या । एषां क्रिया प्रधानभूता ।

16. भावकालकारकसंख्याश्चत्वार एतेऽर्था आख्यातस्य । तेषां भाव: प्रधानं भवति ।

I. 9. आख्याते हि पचतीत्यादावुच्चारिते क्रिया प्रतीयते पाकादि: ।

12. आख्यायतेऽनेन गुणभावेन वर्तमानानेककारकप्रविभक्ता क्रिया तस्याश्च प्राधान्येन वर्तमानो भाव:,स्वात्मलाभप्रधान इत्याख्यातम् ।

I. 9. नाम्नि हि क्रिया प्रतीयते...कारकशक्तिश्च... च द्रव्यम् । तत्र द्रव्यं प्रधानभूतम् ।

16. नाम्नोऽपि सत्ता द्रव्यं संख्या लिङ्गम् इत्येतेऽर्था: । तेषां द्रव्यं प्रधानम् ।

I. 9. एषां क्रिया प्रधानभूता, गुणभूता इतरे तदर्थत्वात् ।

13. भाव: कर्म क्रिया धात्वर्थ इत्यनर्थान्तरम् । स यत्र प्रधानं गुणभूतानि साधनानि तदिदं भावप्रधानम् ।

I. 9. तत्र द्रव्यं प्रधानभूतं, गुणभूते इतरे क्रियाकारकशक्ती, तदुपलक्षणार्थत्वात् ।

15. तद्येषु प्रधानं गुणभूता क्रिया नामान्येव तानि ।

I. 9. अथ यत्रोभे तत्र कथम्—वाक्यावस्थायां··· तत्र भावप्रधाने भवत:, भावस्य साध्यत्वात् । साध्यसाधनयोश्च साध्यस्य प्राधान्यात् ।

16. अथ पुनर्यत्र ते उभे भवत:······वाक्ये··· भावप्रधाने भवत:, तस्य चिकीर्षितत्वात् । वाक्ये हि आख्यातं प्रधानम्, तदर्थस्य भावनिष्पत्तावङ्गभूतत्वात् ।

I. 9. किं रूपं पुनर्भावं लोक आचष्टे ।

17. अथ पुन: कथमभिनिर्वर्त्यमानो भाव आख्यातेनोच्यते । किम्वा तदाख्यातमिति ।

I. 10. उत्पाद्यते न व्यज्यत इति मन्यन्ते । फलोत्पत्त्या चासावनुमीयते उत्पन्नेति, न स्वयं प्रत्यक्षप्रमाणा ।

12. भावसिद्ध्यैव चानुमीयते क्रिया परोक्षापि सती

I. 11 ये तु...अभिनयणादयस्तेषां [illegible]-

17. अपूर्वमनपरञ्च सन्तमेकत्वात् पूर्वापरीभूतं

| | |
|---|---|
| पूर्वं न परं च सन्तं पूर्वापरीभूतं साध्यसाधनरूपं भावं लोक आख्यातेनाचष्टे व्रजति…इति। | पूर्वापरमिव पार्वापर्येण।[illegible]नेकासु क्रियास्वाश्रितं……अभिनिवर्त्यमानमाचष्टे व्रजतीति। |
| I. 11. सत्त्वभूतं सत्त्वं द्रव्यम्, भूतशब्दः पितृभूत इत्यादिवदुपमायां द्रष्टव्यः। | 18. सत्त्वभूतं सत्त्वरूपिणम्। |
| I. 11. सत्त्वनामभिः–सत्त्वं द्रव्यं लिङ्गसंख्यायुक्तं वस्तु… वैयाकरणैरप्येतदुक्तम्–कृदभिहितो भावो द्रव्यवद्भवतीति। | 18. लिङ्गसंख्यायुक्तैः सत्त्वनामभिः। तत्रोक्तो विशेषः। कृदभिहितो भावो द्रव्यवद्भवति। |
| I. 11. गौरश्वः पुरुषो हस्तीति, गौरश्वः–इत्यादयश्च ये विशेषास्तेषां सर्वेषां सत्त्वानाम् (अदः) इत्ययमुपदेशः। | 18. गौरश्वः पुरुषो हस्तीति सत्त्वानां विशेषोपदेश इति वाक्यशेषः। |
| I. 12. सर्वेषां च सर्वनाम्नां प्रदर्शनार्थम् अदःशब्दस्योपादानम्। अन्यान्यपि हि……सर्वनामानि सर्वत्र वस्तुनि वर्तन्ते न क्वचिदेव। | 18. सर्वेषामपि सत्त्वानामध्ययने प्राप्ते लिङ्गविशिष्टत्वादिदमेवैकमुदाहृतमुपप्रदर्शनार्थम्। |
| I. 12. जायत उत्पद्यते निर्वर्त्तते–इत्यादीनां प्रदर्शनार्थं भवतीत्यस्योपादानं पूर्ववत्। | 18. अत्र हि सर्वेषां सत्तावाचिनामध्ययने प्राप्ते भवतिरेवैक उदाहरणार्थः परिगृहीतः। |
| I. 12. आस्ते शेत इत्यादयश्च विशेषाः पूर्ववदेव। | 19. विशेषनिर्देशः कथमिति उच्यते 'आस्ते शेते व्रजति तिष्ठतीति'। |
| I. 12. भवतीति सर्वस्य भावस्योपदेशः सर्वस्य भावस्य जायमानत्वात् जायमनानस्य च 'भवति' इत्यनेनोपदेशात्। | 19. विद्यमानतामेवानुभवन्तः सर्वे भवतिशब्दस्य वाच्या अन्याभिर्विशेषक्रियाभिरभिसम्बध्यन्ते। तस्माद्भवतीति सर्वक्रियाप्रसवबीजभूतमस्तित्वमात्रमेव निरुपपदेन भवतिशब्देनोच्यते–इत्युपपन्नं भवति सामान्यवाचित्वम्। |
| I. 13 तस्यार्थे केचिदेवं व्याचक्षते—इन्द्रियं वागिन्द्रियं,तत्र यन्नित्यं = नियतम् = अन्यत्र नास्ति, तदिन्द्रियनित्यम्।…यावद्वागिन्द्रियं तदुच्चारणे व्यापृतं तावदेवास्ति, न ततः प्रागूर्ध्वं (वा) इत्यर्थः…वचनं शब्दः। एवमौदुम्बरायणो मन्यते इति वाक्यशेषः…न कालान्तरमवतिष्ठते। अतः शब्दानां नास्ति यौगपद्यम्, | 20. ……इन्द्रियम्। तस्मिन्नित्यम् + इन्द्रियनित्यम्।……वचनं–वाक्यमित्यर्थः।…… औदुम्बरायण आचार्यो मन्यते-इति-वाक्यशेषः। 20. वाक्यमपि समस्तमुहूर्तं तदिन्द्रिये नावतिष्ठते, |

| | |
|---|---|
| युगपदवस्थितानेकार्थविषया चतुष्ट्वसंख्या परस्परापेक्षे नैकस्मिन्वस्तुनि द्वित्वादिसंख्यानां सर्वासां प्रवृत्तेः । अतश्चत्वारि पदजातानि इति यदुक्तं पदचतुष्ट्वं तन्नोपपद्यते । | यक्वयभूतानि पदान्यवस्थितानिप रिसंख्यातुम् । न च विनष्टाविनष्टयोः सह परिसंख्यानमस्ति । तस्माद्वचनानित्यत्वात्पदचतुष्ट्वानुपपत्तिरित्युपपन्नम् । |
| I. 13. एतदुक्तं—वागिन्द्रियव्यापारादुच्चारणादनन्तरं शब्द उपलभ्यते भवति, न ततः प्रागूर्ध्वं च, तस्मादन्यः शब्द इति, अतस्तद्भावे भावात्तदभावे चाभावात् । | 20. यावदेव वक्तुर्वागिन्द्रिये श्रोतुश्च श्रोत्रेन्द्रिये वचनं तावदेव तदस्तीति शक्यते वक्तुं प्रच्युतश्च नास्ति । |
| I. 13. अस्य प्रतिसमाधानार्थमुक्तं युगपदुत्पन्नानामित्यादि । वाशब्दः पक्षव्यावृत्तौ । | 24. एवमाक्षिप्ते परिहारद्वारेणेदमवतार्यते युगपदुत्पन्नानां वा शब्दानामितरेतरोपदेश इति । अत्र समञ्जस एव वाशब्दः । |
| I. 14. अतश्चतुष्ट्वसंख्योपपन्ना । ननु च प्रतिज्ञामात्रमिदं शब्दानां नित्यत्वे सत्येव कल्प्यते । तच्च नित्यत्वं साध्यम् । पूर्वपक्षे हीन्द्रियनित्यत्वेन तद्भावभावित्वमुक्तं कथं प्रतिज्ञामात्रेण व्यवोढुं शक्यम् । | 24. तस्मादुपपद्यते पदचतुष्ट्वमिति । आह—आगमनमात्रमेतत् । हेतुरुच्यतां कथं विनष्टाविनष्टयोः सह परिसंख्यानमवस्थितयोर्वा गुणप्रधानभाव इति । |
| I. 17. एवञ्च नित्यत्वे सति शब्देन संज्ञाकरणं व्यवहारार्थं लोके'''। व्यवहारार्थं व्यवहारप्रयोजनं लोके उपपन्नमिति वाक्यशेषः । | 24. तस्मादणीयस्त्वादिति विशेषहेतूपपत्त्या शब्देनैव संज्ञाकरणं व्यवहारार्थं लोक इत्युपपन्नम् । |
| I. 18. तेषां शब्दानां यथा मनुष्येषु 'देवदत्त पयः पिब, वचः शृणु' इत्यभिधानलक्षणो व्यवहारः, एवं वेदेऽपि 'इन्द्र आगच्छ, पिब सोमम्, शृणोत ग्रावाणः' इति यज्ञाङ्गदेवग्रावादिविषयाणां नामादिशब्दानां व्यवहारोऽविशिष्टः । | 25. यथैव हि मनुष्याः प्रयोजनेषु, नामाख्यातोपसर्गनिपातैर्यथार्थमभिदधत्येवमेव देवानपि । देवेष्वपि शब्दस्याभिधानशक्तिरपरिहीणेत्यभिप्रायः । |
| I. 18. पुरुषाणां यजमानर्त्विजां विद्या ज्ञानम, तच्च प्रक्रान्तकर्मविषयेतिकर्तव्यतास्मरणलक्षणम् । तस्याऽनित्यत्वात्प्रस्मरणस्यापि सम्भवादित्यर्थः। | 25. पुरुषेषु मनुष्येषु विद्याया विज्ञानस्यानित्यत्वम् । |
| I. 50. युगपदुत्पन्नानां वेति शब्दो विकल्पे । युगपदुत्पन्नानाम्वा, न युगपदुत्पन्नानां वा । | 24. अत्र समञ्जस एव वाशब्दः । कथम् । अयुगपदुत्पन्नानां वा युगपदुत्पन्नानां वा नित्यानां वानित्यानां वेत्यर्थः । |

| | |
|---|---|
| I. 20. 'तु' शब्दः पक्षव्यावृत्तौ। | 22. 'तु' शब्दः पक्षव्यावृत्तौ। |
| I. 22. वचनम्—उच्यतेऽनेनेति वचनं वाक्यम्। | 20. वचनम्—उच्यतेऽनेनेति वचनं वाक्यमित्यर्थः |
| I. 25. पाठादेव षट्त्वे सिद्धे षडिति संख्याऽवधारणार्था षडेवेति। | 29. निर्देशत उपलब्धानां षडित्यवधारणं सुखार्थम्। |
| I. 25. तथा चावधारणस्य फलं दर्शयिष्यति—अतोऽन्ये— | 29. वक्ष्यामोऽतोऽन्ये भावविकारा एतेषामेव विकारा भवन्तीति। |
| I. 28. सर्वपूर्वो भावोऽस्तादिभ्यो व्यापारान्तरेभ्यो जन्माख्य आदिरुपक्रमो...जायते शब्दः। | 29. षण्णां भावविकाराणां यदि वान्यो यः पूर्वो भावविकारस्तस्य जायते-इत्यनेन शब्देनादिमाचष्टे। |
| I. 28. पूर्वापरीभूतमाचष्टे जायते शब्दः। | 29. जनिः पूर्वो भावः। |
| | 29. किमादिमेव। नेत्युच्यते। उक्तम्—उपक्रमप्रभृति अपवर्गपर्यन्तमिति। |
| I.28.जातावस्थां नाचष्टे...स ह्यपरो भावोऽस्तेर्विषयः। | 30. अपरभावः......अस्तिशब्दवाच्यः। |
| I. 29. जनेस्तदर्थत्वादपरिसमाप्तिप्रसङ्गादनन्तरभावित्वाच्चायुक्तः प्रतिषेध इति। | 30. अस्तित्वात्मवानपि ह्यसौ जायते अस्तिशब्दवाच्यस्य भावविकारस्यासम्पूर्णत्वात्। उपस्थित एव तस्यावधारणकालः। |
| I. 29. सतो विशेषसत्ताप्रतिलम्भो जन्म। तस्मात्सदेवोत्पद्यते। | 30. तत्रैवं सति जनिशब्दवाच्ये भावविकारेऽस्तेरप्यर्थोऽस्ति विद्यमानता। किं कारणम्? न ह्यविद्यमानो जायते। |
| I. 30. उत्पन्नस्य जनिव्यापारेण प्रतिलब्धात्मलाभस्य जायमानावस्थां प्रत्यनन्तरभाविनः सत्त्वस्य द्रव्यस्य वस्तुनो घटाङ्कुरादेर्निर्लुठितस्य बुद्ध्यावग्रहोऽवधारणं 'अस्ति' शब्द आचष्टे—इत्यनुषङ्गः सर्वत्र। | 30. अस्तीति जातस्य सत्त्वस्यावधारणमात्रं ब्रवीति न विपरिणाममाचष्टेऽपूर्णत्वात्। न प्रतिषेधस्युपस्थितत्वात्। |
| I. 32. विद्यमानमपि विनाशं स्वांशोपनिपातित्वाच्छब्दानां न प्रतिषेधति,स्वार्थोपरोधप्रसङ्गादिति। | 31. स च विनाशं ब्रुवन्न पूर्वभावमाचष्टेऽपक्षीयतेरर्थे विद्यमानमपि तस्मिन्विनाशे। |
| I. 33. एभ्योऽन्ये भावभेदा एतेषामेव षण्णां भेदा इति ह स्माह वार्ष्यायणिरिति सम्बन्धः प्रकृतत्वात्। | 32. अतो भावविकारषट्काद्येऽन्यत्वेन भावविकारा लक्ष्यन्ते न ते पृथगेवात्यन्तभिन्नाः सन्ति। किं तर्हि? एतेषामेव विकारा भवन्ति। |
| I. 33. ये यस्य जन्यादेरर्थस्तेन योग्यास्त आभिमुख्येन तर्कयितव्याः। | 32. त एते जन्यादिशब्दवाच्या विकारा यथावचनं यो यस्मिन्वचने यथावचनमवस्थिताः सन्तः प्रकरणोपपत्तिभ्यां मन्त्रार्थावधारणं प्रत्यभ्यूहितव्या वितर्क्याः प्रयुज्यमाना इति वाक्यशेषः। |

| | |
|---|---|
| I. 33. वृद्धेरुपधीयते पुष्यत इत्यादयः । | 32. तथा वर्धतिशब्दवाच्यो वर्धते पुष्यति उपचीयते आप्यायत इत्येवमादि । |
| I. 33. एवं नामाख्यातलक्षणं सप्रपञ्चमभिधायावसरप्राप्तानुपसर्गानर्थतः स्वरूपतश्चोल्लिख्यितुमाह । | 33. सानुषङ्गमुक्तं नामाख्यातयोर्लक्षणम् ।...प्रतिज्ञाप्रसक्तमेवाधुनोपसर्गलक्षणमुच्यते । |
| I. 34. तुरवधारणे । | 33. तुशब्दोऽवधारणार्थः । |
| I. 34. नामाख्यातयोरेव कर्मणोऽर्थस्योपसंयुज्यत इत्युपसंयोगो विशेषः प्रकर्षादिस्तस्य शब्दगडुमात्रेण सन्निधानाद् द्योतका भवन्तीति । | 33. नामाख्यातयोरेव योऽर्थः कर्म तत्रैव विशेषं कञ्चिदुपसंयुज्य द्योतयन्ति । |
| I. 34. उपेत्य नामाख्यातयोरर्थस्य विशेषं सृजन्त्युत्पादयन्तीत्युपसर्गाः । | 33. आख्यातमुपगृह्यार्थविशेषमिमे तस्यैव सृजन्तीत्युपसर्गाः । |
| I. 35. उच्चावचा बहुप्रकाराः पदस्योपसर्गाख्यस्यार्था अभिधेयाः प्रकर्षादयः सन्ति ।......एवं गार्ग्यो नाम नैरुक्तविशेष आहेति वाक्यशेषः । | 33. एषामुपसर्गपदानामर्थाः पदार्था भवन्ति वियुक्तानामपि नामाख्याताभ्यामिति गार्ग्य आचार्यो मन्यत इति वाक्यशेषः । |
| I. 35 अपि च यत्र केवलादप्यर्थप्रतीतिर्दृश्यते, तत्र केवलस्यापि प्रयोगः । | 33. एकैकोऽप्येषां प्रादीनां नामाख्यातवियोगेऽप्यनेकार्थ इत्यभिप्रायः । |
| | 33. उच्चाश्चावचाश्च उच्चावचा बहुप्रकारा इत्यर्थः । |
| I. 36 तस्माद्य एषु पदेषूपसर्गेषु नामाख्यातेषु वा प्रयुज्यमानेषु पदार्थः प्रकर्षादिरर्थः प्रतीयते, प्राहुरिमे-उपसर्गास्तमीदृशं नामाख्यातयोरर्थस्य विशेषणम्'''विकारकमित्यर्थः । | 34. य एषूपसर्गेषु स्वोऽनेकप्रकारोऽर्थ इति प्राहुरेव तमिमे उपसर्गाः पदविशेषाः पृथगपि सन्त। कः पुनरसावित्युच्यते—<br>नामाख्यातयोरर्थविकरणमर्थविक्रियामित्यर्थः । |
| I. 36. प्रदर्शनं चेदम् कर्मप्रवचनीयत्वे हि सति''' मर्यादादिष्वपि दर्शनात् । निपातत्वे च समुच्चयादिष्वपि । | 34. अनेकार्थत्वेऽपि सत्युपसर्गाणामेकैकोऽर्थ उदाहरणत्वेनोच्यतेऽर्थवत्त्वप्रकाशनार्थम् । |
| I. 37. प्रपरेत्येतस्य प्रातिलोम्यम् । एतस्यैव सन्निकर्षलक्षणस्यार्वागर्थस्य प्रातिलोम्यं विप्रकर्षमाहतुः | 35. प्रपरा—इत्येतावुपसर्गौ एतस्यैवाङोऽर्थस्य प्रातिलोम्यमाहतुः । |
| I 38. प्रतीत्येतस्य प्रातिलोम्यम् । एतस्याभिमुख्यस्य वैपरीत्यम् । | 35. प्रतीत्येतस्य एवाभेः 'प्रातिलोम्यम्' आह—प्रतिगत इति । |
| I. 43. अपरभावः पश्चाद्भावस्तमाह। अनुरूपमस्येदमिति सादृश्यम् । अनुगच्छतीत्यपरभावः । | 35. अनुरूपमस्येदमिति सादृश्यम् । अनुगच्छतीत्यपरभावः । |
| I, 44. अधीत्युपरिभावम् । अधितिष्ठति । अध्यास्ते । | 35. अधीत्युपरिभावमाह, ऐश्वर्ये वाधितिष्ठति, अधिपतिरिति । |

| | |
|---|---|
| I. 46. त उच्चावचेष्वनेकप्रकारेषु प्रतिपाद्येष्वर्थेषु प्रतिपादकत्वेन निपतन्ति वर्तन्ते इत्यर्थः। | 36. उच्चावचेष्वनेकप्रकारेष्वर्थेषु निपतन्ति--इति निपाताः। |
| I. 46. तेषाम्–इव, न, चित्, नु, इत्येते चत्वार उपमार्थे भवन्ति। | 37. तेषां सर्वेषां मध्य ऐत एव चत्वार इवनचिन्नवः प्रायोवृत्त्योपमार्थे भवन्ति। |
| I. 46. उभयत्रोदाहरणे। लोके--अग्निरिव दीप्तः, इन्द्र इव विक्रान्त इति। | 40. भाषायां प्रसिद्धमेवेति कृत्वा नोदाहरणं पठति अथवैते एव । अग्निरिव तीक्ष्णः, इन्द्र इव विक्रान्तः। |
| I. 47. ध्रुवस्यार्षम् । राजाभिषिक्त उच्यते। इहैव राज्ये एधि भव। | 40. अनया चानुष्टुभा ध्रुव आङ्गिरसो राजानमभिषिषेच। इहैव राष्ट्रे त्वमेधि भव। |
| I. 48. कर्मशब्दोऽत्र निरुक्ते सर्वत्रार्थपर्यायः। | 37. कर्मशब्दो हि प्रायेणार्थपर्यायवचनोऽस्मिञ्शास्त्रे। |
| I. 48. जरन्ते स्तुवन्ति । कम् ? सामर्थ्याद्दातारं यजमानं दातारमिन्द्रं वा। | 40. तमेव यजमानं जरन्ते स्तुवन्ति। |
| I. 55. योऽग्निः कव्यवाहनः, कव्यं पितृदेवत्यं हविस्तस्य वोढा, पितॄन् यक्षत् यजतु । | 43. योऽग्निः कव्यस्य वोढा यस्यायमधिकारः कव्यानि वोढव्यानीति स इहास्माकं पितृयज्ञे होतृत्वेन व्यवस्थितः पितॄनाहूय यक्षत्पूजयत्वित्यर्थः। |
| I. 56. निदधानीह वेह वा। एकेनेहशब्देनान्तरिक्षं प्रतिनिर्दिश्यतेऽन्येन द्यौः। हस्तौ वा सव्यो दक्षिणश्च स्कन्धौ वा। | 43. अहमिमां पृथिवीमिह वान्तरिक्षे, इह वा द्युलोके, अथवेह दक्षिणे स्कन्धे इह वा सव्ये निदधानि। |
| I. 57. अह इति च ह इति च विनिग्रहार्थीयौ, विनिग्रहो नियमः, नियमार्थीयौ, एवं समानार्थीयौ पूर्वेण संप्रयुज्येते। | 45. अह इति च ह इति च द्वावप्येतौ विनिग्रहार्थीयौ, तयोः पुनरेतयोरेतत्प्रयोगस्वाभाव्यम्। द्वयोरर्थयोरेककाले प्रकृतयोः पूर्ववाक्यगतेनार्थेन संयुक्तौ प्रयुज्येते। |
| I. 59. अथाप्युकार एतस्मिन्नेव विनिग्रहार्थे उत्तरेण संप्रयुज्यते। | 45. अथाप्युकार एतस्मिन्नेव विनिग्रहार्थे भवति। स पुनरुत्तरेण द्वितीयवाक्यगतेनार्थेन संयुक्तः प्रयुज्यते। |
| I. 60. एकस्या एव पूजनार्थे बहुवचनं व्यत्ययेन वा। | 45. एकस्या एव पूजनार्थे बहुवचनम्। |
| I. 62. कथं हि व्याकरिष्यतीत्यसूयायाम्। असूया-अक्षमा अमर्षः। देवदत्तः सभायां प्रश्नान्व्याकरिष्यतीत्युक्त अक्षममाणः कश्चिदाह-कथं हि व्याकरिष्यत्यकृतविद्य इति। | 46. कथं व्याकरिष्यतीत्यसूयायाम्। 'कथमयं व्याकरिष्यति' इति अकृतप्रयत्नोऽयमित्यभिप्रायः। अमर्षादसाक्षाच्छब्दपूर्वकोऽभिप्रायः परीवादोऽसूयेत्युच्यते परगुणानभ्यनुज्ञेत्यर्थः। |

I. 62. किलेति विद्याप्रकर्षे । विद्या ज्ञानम् । तस्य प्रकर्षो नामातिशयः । किं तर्हि विद्याप्रकर्षः? अन्यस्थत्वमन्यैरेतदुपलब्धं मया तेभ्यः श्रुतं न स्वयमुपलब्धमित्ययमर्थो विद्याप्रकर्षः ।

47. किलेति विद्याप्रकर्षे । विज्ञानातिशये इत्यर्थः । अन्यत उपश्रुत्यातिशयेनावधार्यान्यस्मा आचष्टे कश्चित् ।

I. 63. खल्वित्ययं च निपातः प्रतिषेधे ।...खलु कृत्वा खलु कृतम्–इत्युदाहरणे । अकृत्वा, अकृतमित्यर्थः ।

47. अयं प्रतिषेधार्थीय एव । 'खल्विति च' तद्यथा एवं 'खलु कृत्वा' । अकृत्वेत्यर्थः ।

I. 65. वेदे तु शश्वदिति बहुनाम पठितम् । नित्यत्वे च प्रयुज्यमानं दृश्यते ।

47. छन्दसि पुनः (शश्वद्) अन्येष्वर्थेषु भवति ।

I. 65. विचिकित्सेति यद्यपि लोके सन्देह उच्यते, धर्मे न विचिकित्सा कार्या,...न सन्देहो विचिकित्सोच्यते । किं तर्हि ? निश्चयः ।

47. विचिकित्सा नाम––विवेकपूर्वकोऽवधारणाभिप्रायः ।

I. 66. यस्यामृचि विचिकित्सार्थीयस्तामुदाहरिष्यन्नर्थाभिव्यक्त्यर्थमस्याः पूर्वं तावदितिहासमाचष्टे- 'अगस्त्य इन्द्राय' इत्यादि ।

47. उदाहरणमत्र निर्विविक्षुर्निदानमेवाह । 'अगस्त्य इन्द्राय' इत्यादि ।

I. 66. सम्प्रदित्सांचकार । सम्प्रदित्सा सम्यक्प्रदातुमिच्छा, तया तत्पूर्वकत्वात्सम्प्रदानं लक्ष्यते, मरुद्भ्यः संप्रददावित्यर्थः ।

48. सम्प्रदित्सांचकार सम्प्रदातुमैच्छदित्यर्थः ।

I. 67. द्योतते इत्येवं सतः कर्तृकारकेण युक्तस्य सतः कर्तृकारके, न कारकान्तर इत्यर्थः ।

49. द्योतते तदिति द्युरिति कर्तृकारकम् । सदिति यत्र ब्रूयात्तत्र तत्रोच्चारित एव कारकनियमो द्रष्टव्यः ।

I. 68. मा चातिधक्...माऽस्मानतिहाय–अन्येभ्यो दाः, प्रथमस्मभ्यं देहि पश्चादन्येभ्य इत्यर्थः ।

50. मातिधक्–माऽस्मानतिहायातीत्यान्येभ्यो देहीति मा दा इत्यर्थः । अस्मभ्यन्तावद्देहि ततोऽन्येभ्योऽपि दास्यसि चेत्यभिप्रायः ।

I. 68. सुवीराः सुपुत्राश्च स्यामेति वाक्यशेषः । यदि पुत्रा न सन्ति, ततः शोभनत्वविशिष्टानां तेषामपीयं प्रार्थना । अथ यदि सन्ति ततः शोभनमात्रस्य ।

50. किञ्च युष्मदनुग्रहाच्च सुवीरा वीरवन्तो भवेम पुत्रवन्तो यद्यपुत्राः । एवमयं मत्वर्थीय सुः । अथ पुनः पुत्रवन्त एव ततः कल्याणवीरा इति समस्तार्थः ।

I. 68,69. का व्यृद्धिः ? कर्मणः परार्थत्वात् ऋत्विजां तत्राप्रवृत्तिः, तां दक्षिणा व्यावर्तयति, तत्तृष्णया तेषां तत्र प्रवृत्तेः ।

51. यज्ञे हि यत्किञ्चिद्विगतर्द्धिकं भवति तदियं समर्धयति विशिष्टं हि यज्ञस्य साधनमेतदिति ।

I. 66. अपि वा दानकाले दक्षिणस्यां वेदिश्रोण्यामग्रेण गार्हपत्यं जघनेन सदो दक्षिणा आनीयन्ते। ततः प्रदक्षिणागमनाद् दिशं दक्षिणामभिप्रेत्य तत्सम्बन्धाद्दक्षिणेति।

51. सा हि दक्षिणस्यां वेदिश्रोणावग्रेण गार्हपत्यं जघनेन सदो दक्षिणेनाग्नीध्रं गत्वान्तर्वेदि स्थित्वान्तरेण चात्वालमाग्नीध्रं चोत्सृज्यमाना गच्छति।

I. 69. प्रजापतेर्हि प्रजाः सृष्ट्वा प्राङ्मुखस्य दक्षिणो हस्तो यतो बभूव सा दक्षिणहस्तसम्बन्धाद्दक्षिणा।

51. प्राङ्मुखस्य प्रजापतेर्यतो दक्षिणो हस्तो बभूव, सा दक्षिणा दिगभवत्।

I. 69. स हि उत्साहवत्तरः सव्यात्।

51. स ह्युत्साहवान्भवति कर्मसु न तथा सव्यः।

I. 69. स हि प्राशुः क्षिप्रो हननेऽन्यस्मादङ्गात्।

51. तेन हि हन्यते।...अन्येनापि केनचिदङ्गेन हन्यत एव...। अयमेव तु प्राशुः शीघ्रः।

I. 72. ऋचां पोषं पुपुष्वान्कुर्वन्, ऋचो यथाविधि कर्मणि प्रयुञ्जानः इत्यर्थः।

54. ऋचां पोषं पुष्टिं पुपुष्वान्पुनः पुनः भृशं वा देवतायाथात्म्यानुचिन्तनसन्तानगर्भस्थानकरणानुप्रदानवतीर्यथाकालमृचोऽधीयान आस्ते।

I. 72. 'अर्धनामेत्येके' तदुपरिष्टाद्वक्ष्यामः 'त्वो नेम इत्यर्धस्य' इत्यत्र मन्त्रे युक्तविनिग्रहार्थीयः।

53 'अर्धनामेत्येके'। अर्धस्यैतन्नामेत्येवमेक आचार्या मन्यन्ते। वक्ष्यति चायमपि 'त्व-नेम इत्यर्धस्य' इति।

I. 74. तत्कथमनुदात्तप्रकृति, अनुदात्तस्वभावकं नाम स्यात्।

56. तदेतच्छब्दरूपमनुदात्तमनुदात्तस्वभावं सत्कथं नाम स्यात्।

I. 74. तदयुक्तम् 'नेमत्वसमसिमेत्येतान्यनुदात्तानि' इत्यपवादस्मृतेः।

56. स एषोऽपवादः 'त्वत्वनेमसमसिमेत्यनुदात्तानि' इति।

I. 74. तत्तु निपातत्वेऽपि तुल्यम्, निपातानां ह्याद्युदात्तत्वमौत्सर्गिकं स्मरन्ति-'निपाता आद्युदात्ताः' इति

57. निपातत्वेऽपि कल्प्यमानेऽस्य स्वरसामञ्जस्यं न भवत्येव निपाता अप्याद्युदात्ता भवन्ति।

I. 75. तद्ध्युज्ज्वलतरत्वाद्-व्यक्ततरमन्येभ्योऽङ्गेभ्य इति।

59. एते अक्षिणी इतरेभ्योऽङ्गेभ्यः व्यक्ततरे स्पष्टतरे प्रकाशतरे भवतः।

I. 76. आस्यमस्यतेः क्षेपणार्थस्य, क्षिप्यते हि तत्रान्नं क्षिपति वा वर्णान्।

59. 'आस्यमस्यतेः' क्षेपार्थस्य। क्षिप्यते ह्येतदाभिमुख्येनान्नम्।

I. 76. आस्यन्दते स्रवति द्रवीभवति शुष्कमपि एतदन्नं प्राप्येति वाक्यशेषः। अन्तर्हितण्यर्थो वा स्यन्दिः, आस्यन्दयति द्रावयत्येतदन्नमित्यर्थः। शुष्कमप्यन्नमास्यं द्रावयति।

59. स्यन्दतेर्वा स्यादाङ्पूर्वस्यैव स्रवणार्थस्य। शुष्केऽपि ह्येतदन्ने आगते स्रवत्येव श्लेष्माणं येन तदार्द्रीभूतं ग्रसितुं शक्यते।

I. 77. एवमुक्ताः कर्मोपसंग्रहार्थीयाः, प्रसङ्गेन च निपातान्तराणि, यथाप्रतिज्ञातमिदानीं पदपूरणा उच्यन्ते।

60. व्याख्याताः कर्मोपसंग्रहार्थीयाः। तत्प्रसङ्गेन 'हि' इत्येनमादयोऽन्यार्था अप्युक्ताः। प्रतिज्ञाप्रसक्तानेवाधुना पदपूरणान्वक्ष्यामः।

| | |
|---|---|
| I. 78. ननु 'व' इत्येतस्य पुरस्तादेवोक्तं पदपूरणत्वम्—अथापि पदपूरणे इदमु, तदु, इत्यत्र ? सत्यमुक्तं तत्र प्रासङ्गिकम्। इह तु पदपूरणेमध्येऽसति वचने निपातोदाहरणविषयं विज्ञायेत। तत्तर्ह्यनर्थकम्, विनिग्रहार्थीयत्वस्य च तुल्यकक्ष्यप्रतिपादनार्थत्वादसति हि तस्मिन्वचने-इदं पदपूरणत्ववचनं विनिग्रहार्थीयत्वस्यापवादो विज्ञायते। | 60,61. उकारो न निर्देष्टव्यः।...स हि पुरस्तान्निर्दिष्ट एव, अथापि पदपूरण-'इदमु-तदु'-इति। उच्यते, सत्यं निर्दिष्टः। प्रासङ्गिकस्तु स तस्य निर्देशः। अयमेवात्रोकारस्य पदपूरणत्वे मुख्यो निर्देशः स्वप्रकरणत्वात्। आह—तत्र तर्ह्यकिञ्चित्कर इति। उच्यते, नाकिञ्चित्करः··· यदि ह्ययमुकारस्तत्र पदपूरणत्वेन नोच्येतेहैवोच्येत ततः पूर्वोक्तस्य विनिग्रहार्थीयत्वस्यायमपवाद इति गम्येत। |
| I. 78. त्वक्त्राणकारणत्वात्त्वक्त्रं वासः तद्रहिता निष्ट्वक्त्रा दरिद्राः। | 63. निष्ट्वक्त्रा एव निष्ट्वक्त्रासः। निर्वसना इत्यर्थः। |
| I. 79. हिंस्यते हि तत्र दिवोष्णेन हेमन्तजं यवादिसस्यं दावाग्निना तृणौषध्यादि। | 63. हिनस्ति हि तस्मिन्कालेऽप्रतिबध्यमानोऽतिशयेन दावाग्निः शुष्कानोषधिवनस्पतीन्। |
| I. 80. शुनःशेपो यूपे बद्ध इन्द्रमाह। | 65. शुनःशेपो यूपे नियुक्त आत्मानं मोचयितुमिच्छन्ननया गायत्र्येन्द्रं तुष्टाव। |
| I. 81. घादयोऽपि दृश्यन्ते—आ घा ता गच्छान्। | 61. अन्येऽपि चानर्थकाः सन्ति, तद्यथा 'आ घा ता गच्छानुत्तरा। |
| I. 81. नारदेन किल विप्रलभ्यमाना असुरस्त्रिय आहुः। | 67. नारदेन किल विप्रलभ्यमाना असुरपत्न्यो भर्तॄन्प्रति तमनेन मन्त्रेण प्रत्यूचुः। |
| I. 83. एवं शाकटायनो वैयाकरणविशेषो मन्यत इति वाक्यशेषः। अयमेव च नैरुक्तानां समयः सिद्धान्तः। | 68. एवं शाकटायन आचार्यो ब्रवीति—इति वाक्यशेषः। नैरुक्तानां चैषः समयः सिद्धान्तः सर्वेषामविशेषेण। |
| I. 83. संविज्ञातानि—अख्यातजत्वेनैषां नास्ति विप्रतिपत्तिरित्यर्थः। | 69. समं विज्ञातान्यैकमत्येन विज्ञातानीत्यर्थः। तेषु तावदविप्रतिपत्तिरेवास्माकमाख्यातजानि तानीति। |
| I. 84. तत्रैवं सति स्थूणा—दरे शेते व्यवतिष्ठत—इति दरशया वा। | 72. तत्रैवं सति स्थूणैवैव सती दरे शेते इति दरशया—इत्युच्यते। |
| I. 85. पुरुषमात्मानं पूः शरीरं तस्मिन् परिभोक्तृत्वेन शयानं पुरिशय इत्याचक्षीन्। | 73. पुरि ह्यसौ शेते इति पुरिशयः प्राप्नोति। |
| I. 86. पदेभ्यः......पदावयवभूतेभ्यो धातुभ्यः। | 75. पदेभ्य आख्यापदेभ्यः। |

| | |
|---|---|
| I. 86. तदप्ययुक्तं को ह्येनामप्रथयिष्यत, प्रथयन्वा क्किमाधार आसीत, सर्वस्य स्थावरजङ्गमस्यै-तदाधारत्वात् । | 74. अथापि कश्चिदस्या अपृथिव्याः सत्याः प्रथनकर्ताभ्युपगम्येत ततोऽपि च वयमिदमपरं पृच्छेम 'क्किमाधरश्चेति । चशब्दः समुच्चयार्थः । सर्वस्य प्राणिजातस्येयमेवाधारः प्रतिष्ठा |
| I. 88. यथा तक्षा इति शिल्प्येवोच्यते, न तक्ष्णुवन्नप्यन्यः । | 79. तक्षन्कश्चित्तक्षेत्युच्यते । अन्यस्तक्षन्नपि न तचेत्युच्यते । |
| I. 90. इहैकः प्रयोजकस्य प्रथयितुर्व्यापारः, अपरः प्रयोज्यस्य प्रथितुः प्रथनम, न तयोः प्रथनात् पृथिवीत्युच्यते । किं तर्हि ? प्रत्यक्षेण चेयं पृथुः दृश्यते । | 81. न वयमेवं ब्रूमः प्रथितेयं केनाचिदतः पृथिवीयमिति । आह—कथमियमप्रथिता सती पृथिवीत्वमापेति ?........यद्यप्यप्रथिता कैश्चिदन्यैस्तथापीयं पृथुदर्शनक्रियायोगात् पृथिव्येव । |
| I. 90. व्रततिः वरणाद्व्रततिः स तु वल्ल्यां प्रासिद्धः । दमनाद्दमूना इत्यग्निरतिथिर्वा । | 81. व्रततिर्व्रीणातेः । वल्ली । दमूना दममना वेत्येवमादि अग्निरतिथिर्वा । |
| I. 90. सैषा पुरुषस्य शाकटायनस्य गर्हा न नाम्नामाख्यातजत्वस्य । | 82 एष पुरुषदोषो न शास्त्रदोषो यदनुगमयितुं धातुशब्दैरर्थो न शक्यते ।...... |
| I. 91. एवमन्वित एवार्थे संचस्कार शाकटायनः । | ८2. अनुगत एवार्थे—संचस्कार शाकटायनः । |
| 1. 92. प्रसक्तस्य बिल्वशब्दस्य निर्वचनम् । बिल्वं हि बिभर्ति दुर्भिक्षादौ भक्ष्यमाणम, भिद्यते हि भक्षार्थिभिः । | ८3. बिभर्ति वा दुर्भिक्षादौ भक्ष्यमाणं जनम् । भेदनाद्वा । भिद्यते हि तदवश्यं भक्षणायेति । |
| I. 93. अथापीदमन्तरेणेत्यादिना शास्त्रारम्भस्य प्रयोजनानि पञ्चोच्यन्ते । | 85. अथशब्दोऽधिकारार्थे द्वितीयं शास्त्रारम्भप्रयोजनमधिकरोतीति । |
| अपि चेदमन्तमरेण मन्त्रेष्वर्थप्रत्ययोऽर्थावगमो न विद्यते-इति । | अपीदं शास्त्रमन्तरेण पदार्थे प्रत्ययो नास्ति । |
| स्वरसंस्कारोपदेशस्यार्थविशेषाधीनत्वात्ताभ्यामेव हि स्वरसंस्काराभ्यां युक्तः शब्दः क्वचिदर्थे साधुः क्वचिदसाधुः । | अर्थवशेन हि स्वरसंस्काराववतिष्ठेते । |
| 1. 93. तदिदं निरुक्ताख्यं विद्यास्थानं व्याकरणस्य कार्त्स्न्यं करोतीति वाक्यशेषः । | 86. व्याकरणस्य कार्त्स्न्यं कृत्स्नभावं करोतीति वाक्यशेषः । |
| I. 93. मन्त्राणां यदानर्थक्यं तदेतेनोपेक्षितव्यम, एतेन नैरुक्तेनोपगम्येक्षितव्यम् । किं साध्वसाध्विति । | 86. 'तत्' एतदेवमुच्यमानं कौत्सेनानेन नैरुक्तेन उपेक्षितव्यम् । उपगम्य वेदं शास्त्रं चेक्षितव्यं किमसौ सत्यमाचष्टे वृथेति वा परीक्ष्यम् । |

| | |
|---|---|
| I. 94. यथा—'ओषधे त्रायस्वैनम्' इति न ह्योषधिस्त्रातुं समर्था। | 88. तद्यथा—'ओषधे त्रायस्वैनम्' इत्याह । न चौषधिरात्मानमपि त्रातुं समर्था किमुत वृक्षम्। |
| I. 97. अपि च —अग्नये समिध्यमानायानुवक्तव्यामिति जानन्तमेव होतारमध्वर्युः संप्रेष्यति। | 91. 'अथापि अयमपरो' हेतुर्मन्त्राणामानर्थक्ये। कतम इति उच्यते। 'जानन्तं संप्रेष्यति' इति। अध्वर्युर्होतारम्। |
| I. 98. कथं ह्येकादितिर्द्यौश्चान्तारिक्षं च माता च पिता पुत्रश्च स्यात्। | कथं यैव द्यौः सान्तरिक्षं यैव माता स एव पुत्रः स एव च पितेत्येवमादि। |
| य एव लोके शब्दास्त एव मन्त्रेषु। ते यथैव लोके पदार्थान् प्रत्याययन्ति तथैव मन्त्रेष्वपि। | 92. समान एव हि शब्दो लोके मन्त्रेषु च। |
| I. 100. यदुक्तं—वाचोयुक्तेर्नियमान्नियतानुपूर्वीकत्वाच्चानर्थका मन्त्राः इति। तन्न, लोकेऽपि तयोर्दर्शनात्। | 94. यत्पुनरेतदुक्तं 'नियतवाचोयुक्तयो नियतानुपूर्व्या भवन्तीति' अत्र ब्रूमः। 'लौकिकेष्वपि' नियतवाचोयुक्तित्वं नियतानुपूर्व्यत्वं च दृष्टमेव। |
| I. 101. न हि कस्यचित् सपत्ना मित्राणि वा न सन्ति। | 96. न हि कश्चिदसपत्नोऽस्ति लोके। उक्तं च। |
| 'मुनेरपि वनस्थस्य स्वानि कर्माणि कुर्वतः। उत्पद्यन्ते त्रयः पक्षा मित्रोदासीनशत्रवः॥' इति। | 'मुनेरपि वनस्थस्य स्वानि कर्माणि कुर्वतः। उत्पद्यन्ते त्रयः पक्षा मित्रोदासीनशत्रवः॥' इति। |
| I. 102 यथा लोके—त्वमेव मन्माता त्वमेव पिता त्वमेव च भ्रातेति।......इति व्यपदेपदेशस्तद्वत्। | 97. यथा कश्चिद् ब्रूयात्कंचिदनेकोपकारे प्रवृत्तं 'त्वमेव मे माता त्वं पिता' एवमेतदपि द्रष्टव्यम्। |
| I.102. एवमग्न्यगादीनामर्थस्य ज्ञेयस्यायमपराधः, यदेनं भवान्न जानाति, ज्ञातुर्भवतोऽयमपराधः | 97. एवमिहापि नैष मन्त्राणामपराधो यदशिक्षितेन भवता न विज्ञायन्ते। भवत एवापराधोऽस्ति। |
| I.104 अथापि—इत्यादि प्रयोजनानन्तरं वचनम्। | 99. अथेदमपरमारम्भप्रयोजनमित्येवं विशेषाधिकारार्थोऽयमथशब्दः। |
| I.104. अपि चेदमन्तरेण पदविभागः—पदविभागेनात्र ज्ञानं लक्ष्यते, इदं निरवग्रहमिदं सावग्रहमिति......तस्य ज्ञानं न विद्यते तस्यार्थज्ञानाधीनत्वात्। | 100 किं पुनस्तद्वक्ष्यमाणमिति। उच्यते। पदविभागः। एवं पदानि वक्तव्यानीत्येतत्पदविभागपरिज्ञानं नास्तीत्यर्थः किं कारणम्। अर्थवशेन पदान्यवतिष्ठन्ते। |
| I. 106 नैर्ऋतस्य कपोतस्यार्षम्। कपोतनिलयनो होमोऽनया क्रियते। | 102. प्रचेता नामाङ्गिरसः। तेनेयं कपोतसूक्ते दृष्टा। कपोतनिलयनशान्त्यै कपोतपदनिर्हरण एतत्सूक्तम्। |

| | |
|---|---|
| I. 106. प्रचेतस आर्षम् । दुःस्वप्रदर्शने विनियुक्ता ऋक् । मन इति विज्ञानमुच्यते बुद्ध्यादि तस्य पतिर्मनसस्पतिरात्मा, इह पुनर्मृत्युर्व्याधिर्वा मनसस्पतिः, उभावपि स्वकृतकर्मापेक्षया प्राणिनां बुद्ध्यादिविज्ञानोपसंहारस्येशाते,तयोरन्यतरः संबोध्यते । | 103. प्रचेता आङ्गिरस एतामनुष्टुभमपश्यत् । दुःस्वप्रदर्शने विनियुक्ता । मन इति हि विज्ञानमुच्यते बुद्ध्यादि । तस्य पतिर्मनसस्पतिरात्मा । इह पुनर्मृत्युर्व्याधिर्वा मनसस्पतिः । उभावपि स्वकृतकर्मापेक्षया प्राणिनां बुद्ध्यादिविज्ञानोपसंहारस्येशाते । तयोरन्यतरः संबोध्यते । |
| I. 107. 'परः संनिकर्षः संहिता'—परः प्रकृष्टो यः सन्निकर्षः संश्लेषः परस्परेण स्वराणां स्वरारूढानां व्यञ्जनानां सा संहितेत्युच्यते न वस्त्वन्तरम् । पदानि प्रकृतिरस्याः सेयं पदप्रकृतिः । | 104. 'परः संनिकर्षः संहिता' इति । परः प्रकृष्टो यः सन्निकर्षः संश्लेषः परस्परेण स्वराणां स्वराधिरूढानां व्यञ्जनानां सा संहितेत्युच्यते ।... पदानि प्रकृतिरस्याः सेयं पदप्रकृतिरिति । |
| I. 108. अथापीति प्रयोजनान्तरकथनम् । | 105. अथेदमपरमारम्भप्रयोजनमस्य शास्त्रस्येत्येवं विशेषाधिकारार्थोऽयमथशब्दः । |
| I. 109. अथापीति प्रयोजनान्तरवचनम् । | 107. 'अथापि' इदमपरमारम्भप्रयोजनमस्य । |
| I. 109. पूर्वाचार्यस्मृतश्लोकयो...वेदार्थज्ञानस्य प्रशंसा भवत्यज्ञाननिन्दा च । | 109. शिष्टानुगमस्मृतौ ज्ञानं प्रशस्यतेऽज्ञानं च निन्द्यते । |
| I. 109. 'स्थाणुः' इति छिन्नशाखं वृक्षमूलमुच्यते ।... यथा स्थाणुः केनचिदारोपितस्य भारस्य धारयितैव केवलं भवति, न तज्जेनोपकारेण युज्यते । | 108. स्थाणुर्वृक्षः । स यथा पत्रपुष्पफलानामात्मीयानां धारणमात्रेणैव सम्बध्यते, न तज्जैः—गन्धरसरूपस्पर्शोपभोगसुखैः ।......वेदस्याध्ययनभारमात्रमेव ह्यसौ बिभर्ति । |
| | 108. अथवा स्थाणुर्गर्दभः स यथा चन्दनभारं वहत्येव न तदुपभोगेनाभिसम्बध्यते ।... |
| I. 110. यस्तावच्छब्दस्यार्थः स तस्माद्गम्यते । यो हिरण्यादिः सोऽप्यनादिना व्यवहारेणान्यस्मात्पुरुषादन्यं गच्छति । | 109. अर्यते ह्यसावर्थिभिः । |
| I. 110. अरणं गमनं, शब्दस्य तावदुच्चरितस्य तिरोधानं तस्मिन्नर्थस्तिष्ठति, न शब्देन सह तिरोधीयते । इतरत्रापि गमनम्-अरणं स्वामिनस्तस्मिन् हिरण्यादिरर्थस्तिष्ठति, न स्वामिना सह गच्छतीति । | 109. यदा ह्यस्य स्वाम्यरति गच्छतीतो लोकाद्-अमुं लोकं तदायमिहैव तिष्ठति । नानेनैव सहामुं लोकं गच्छति दीनारादिरर्थः । तत्सामान्यादितरोऽपि शब्दार्थोऽर्थ उच्यते । |
| I. 112. वाजिनेषु वागिनेषु, वागिना ईश्वरी येषां वाचो ये आयत्तार्था वाचा ये ज्ञेया इत्यर्थः, ते वाजिनस्तेषु | 112. वाजिनेषु वाग्ज्ञेयष्वर्थेषु बलवत्स्वपि दुर्ज्ञेयेषु...। |

I. 113. धर्मस्यातीन्द्रियत्वात्साक्षात्करणस्यासम्भवाद् धर्मशब्देनात्र तदर्थं मन्त्रब्राह्मणमुच्यते ।

I. 113. अध्ययनमात्रादप्यवश्यकर्तव्यत्वादध्ययनस्य कियतोऽपि फलस्यावश्यंभावात्, नासौ परिश्रमो व्यर्थ एवेति भाष्यकाराभिप्रायः ।

I.114.साक्षात्कृतो धर्मो यैस्ते साक्षात्कृतधर्माण ऋषयः ।

I. 115. साक्षात्-धर्मवचनोपदेशनिरपेक्षं कृतः प्रतिपन्नो धर्मो यैस्ते साक्षात्कृतधर्माणः ।

I. 116. इमं ग्रन्थं गवादिदेवपत्न्यन्तं समाम्नातवन्तः, वेदं धर्मप्रतिपत्त्यर्थम्, वेदाङ्गानि चान्यान्यपि वेदार्थप्रतिपत्त्यर्थम् ।

I. 117. निरुक्तस्य त्रीणि प्रकरणानि, तस्य परेण ।

I. 121. इहेहेति द्विर्वचनं ब्राह्मणाध्यायान्ते दृष्टत्वात्तदनुकरणेनाध्यायान्तप्रतिपत्त्यर्थम् ।

II. 1. नैघण्टुकानां नैगमानाञ्च व्याख्या प्रतिज्ञाता । 'नैघण्टुकानि नैगमानीहेह' इति ।

II. 2. अविनष्टरूपस्य वा विनष्टरूपस्य वा तस्मात्पदान्निष्कृष्याविनष्टरूपेण धातुना प्रातिपदिकेन वा यदर्थस्य वचनं तन्निर्वचनम् ।

विकारशब्देन क्रियाभिधीयते षष्ठे गुणशब्देन याभिहिता । यत्र शब्दः क्रियामभिधातुं शक्नोति सा च क्रियाभिधेये विद्यत इति ।

II. 3. अर्थे नियतोऽर्थनित्यः यस्तस्य शब्दस्य-निर्वचननिमित्तमवयवार्थो यश्च समुदायार्थस्तमजहदित्यर्थः ।

केनचिद्वृत्तिसामान्येन वर्तते तत्र शब्द इति वृत्तिरर्थ उच्यते । एतदुक्तं भवति—शब्दस्य निर्वचननिमित्तार्थमवयवार्थभूता या क्रिया सा यत्र नास्ति शब्दार्थे, यत्र च शब्दार्थेऽस्ति, तयोरर्थयोर्यत्सामान्यं तेन तत्र प्रवृत्तिं प्रतीयात् ।

114. ...कर्मणः साक्षात्फलविपरिणामदर्शनमौपचारिकया वृत्त्योक्तं साक्षात्कृतधर्माण इति । नहि धर्मस्य दर्शनमस्ति। अत्यन्तापूर्वो हि धर्मः।

113. अस्ति हि–अध्ययनमात्रेऽपि किंचिदल्पं फलम्, नासौ परिश्रमो व्यर्थ एवेति भाष्यकाराभिप्रायः ।

114. साक्षात्कृतो यैर्धर्मः साक्षाद्दृष्टः प्रतिविशिष्टेन तपसा त इमे साक्षात्कृतधर्माणः...ऋषयः ।

115. इमं ग्रन्थं गवादिदेवपत्न्यन्तं समाम्नातवन्तः किमेतमेव । नेत्युच्यते । वेदं च वेदाङ्गानि चेतराणि–इति ।

116. अनेन प्रकरणत्रयविभागप्रपञ्चेनेदमवस्थितं निरुक्तशास्त्रमिति ।

120. अध्यायपरिसमाप्तिलक्षणार्थः परितोषार्थो वा द्विरभ्यास इति ।

121. नैघण्टुकनैगमे प्रकरणे पुरस्कृते 'नैघण्टुकानि नैगमानीह' इति ।

अपि हि तस्यार्थस्य परोक्षवृत्तावतिपरोक्षवृत्तौ वा शब्दे निष्कृष्य विगृह्य वचनं निर्वचनम् ।

121. प्रदेशाभिधायिना धातुरूपेणान्वितौ सम्बद्धावनुगतावभिधेयस्थे धातुरूपे स्याताम् ।

122. उच्यते तत्रैवं सत्यर्थनित्यो भूतार्थप्रधानः ।

122. ततस्तदभिधानं बुद्ध्वा केनचिदर्थवृत्तिसामान्येन क्रियागुणसामान्येनेत्यर्थः । कतमस्य धातोरर्थसामान्यमिहास्तीति । ततस्तर्कयित्वा सामान्यं तेन निर्ब्रूयात । अर्थो हि प्रधानं तद्गुणभूतः शब्दः तस्मादर्थसामान्यं बलीयः शब्दसामान्यात्।

II. 4. सामान्यमत्र प्रकृतत्वादर्थसामान्यं गृह्यते, तस्मिन्नविद्यमाने। क्व पुनस्तन्नास्ति ? यत्र स शब्दो नैव क्वचिदन्यत्रार्थे प्रसिद्धः।...तत्र अक्षरवर्णसामान्यान्निर्ब्रूयात्।

122. एवमविद्यमानेऽर्थसामान्ये स्वरवर्णसामान्यमात्रेणापि निर्ब्रूयादेव।

II. 5. वैयाकरणोक्तं संस्कारं नाद्रियेत, अक्षरवर्णसामान्यादेव निर्ब्रूयात्। अयञ्च संस्कारप्रतिषेधो यत्रैव व्याकरणोक्तः संस्कारो नार्थान्वितस्तत्रैव, नान्यत्रेति।

122. नत्वेव न निर्ब्रूयात्। इतरथा ह्यनर्थकमेव निरुक्तशास्त्रं स्यात्। तन्मा भूदित्यत उच्यते लक्षणपराङ्मुखेषु शब्देषु 'न संस्कारमाद्रियेत'।

II. 6. विशयः संशयः, स च किमयं स्थाणुः किं पुरुष इत्यनेकार्थविषयत्वात्, अनेकस्य चार्थस्यानेकप्रकारत्वात्तद्वंतेनानेकप्रकारत्वेन संबन्धः। अतः सम्बन्धात् विशयेनात्रानेकप्रकारत्वं लक्ष्यते। अनेकप्रकारा वृत्तयः शब्दानामर्थेषु भवन्ति।

124. यस्माद्विशेयवत्यो बहुसंशयवत्यः शब्दानामर्थेषु वृत्तयो भवन्ति। नानाभावेनार्थेष्ववस्थिता प्रवृत्तिरित्येवं स्यान्नैवं स्यादिति विचारयन्तः सन्तः प्रतिपक्षसम्मोहाच्छेरत इवास्मिन्निति विशयः संशय इति।

II. 7. यथा च—'अभि प्रेहि निर्दह हृत्सु शोकैः' इत्यत्र 'हृत्सु' इति सप्तमी द्वितीयार्थे। तत्र यथार्थं विभक्तीः सन्नमयेत् सन्नामो विपरिणामः। यथार्थं विभक्तिविपरिणामं कुर्यात्।

124. अतो विभक्तीरपि यथार्थमेव सन्नमयेद्विपरिणमयेत्पूर्वोत्तरपदप्रकरणाविरोधेन।...दर्शयिष्यति चायमपि विभक्तिविपरिणामम्। तद्यथा। 'हृत्सु शोकैर्हृदयानि शोकैः' इत्येवमादि।

II. 8. प्रत्तमित्यत्र धातुः 'डुदाञ् दाने' इति। अवत्तमिति 'दो अवखण्डने' इति। एतयोरादिभूतो दकार एव शिष्यते, त आकारस्यान्त्यस्य लोपः, 'अच उपसर्गात्तः' इत्यनेन निर्वर्त्तमानत्वात्।

124. 'डुदाञ् दाने' तस्य प्रपूर्वस्य प्रत्तमिति। अत्र दकार आकारश्च धातुः। परो निष्ठाप्रत्ययस्तकारः। तत्रैवं सति 'दो दध्दोः' इति वर्तमाने 'अच उपसर्गात्तः' इत्याकारस्य तकारो भवति।

II. 9. गुणवृद्ध्योर्निवृत्तिस्थानानि यानि, तानि निवृत्तिस्थानानीत्युच्यन्ते, ङित्स्वित्यर्थः। तेषु ङित्सु प्रत्ययेषु 'श्नसोरल्लोपः' इति आदेरकारस्य लोपो भवति, स्तः, सन्तीति।

125. 'अस भुवि'—इत्यस्य निवृत्तिस्थानेषु गुणवृद्धिनिवृत्तिस्थानेषु 'क्ङिति' इति वर्तमाने 'श्नसोरल्लोपः' इत्यादिलोपो भवति। योऽयं धात्वादावकार एष लुप्यते, तस्मिन् लुप्ते कथं प्रयोगः। स्तः सन्तीति।

II. 9. गमेः 'अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति' इति गत्वा गतमिति।

125. अत्र गमेः क्त्वाप्रत्यये निष्ठाप्रत्यये च परतोऽनुनासिकलोपो भवति, 'अनुदात्तोपदेश' इत्यधिकृत्य 'क्ङिति' इति।

II. 9. 'गमहनजनखनघसां लोपः' इति। जग्मतु-
।

125. अत्र गमेरलोपः। 'अलोन्त्यात्पूर्व उपधा' इत्यकारस्योपधासंज्ञा। तस्य 'गमहनजनखनघसां लोपः'-इत्युपधालोपः।

| | |
|---|---|
| II. 10. दीर्घत्वम्, राजा दण्डीति । राजेत्यत्र 'नोपधायाः' 'सर्वनामस्थाने चासम्बुद्धौ' । दण्डीत्यत्र 'इन्हन्पूषार्यम्णां शौ' 'सौ च' इति । | 126. राजन् दण्डिन्–इति स्थिते 'नोपधायाः'–'सर्वनामस्थाने चासम्बुद्धौ–' इति दीर्घत्वम् । 126. दण्डिन्नित्यत्रापि—'इन्हन्पूषार्यम्णां शौ' 'सौ च' इति दीर्घत्वम् । |
| II.10. शुनः शेपो यूपे बद्धो वरुणमाह । | 126. अनया त्रिष्टुभोपाकृतः शुनःशेपो वरुणं तुष्टाव । |
| II.10. अत्र केचिद्व्याचक्षते–यामीत्यत्र याचामीति चकारस्य वर्णस्य लोप इति । | 126. अत्र चकारलोपः । याचामीत्येवमेतद्द्रष्टव्यम् । |
| II.10. हे उरुशंस ! बहुस्तुत ! मा नः 'अस्मदो द्वयोश्च' इति द्वित्वे बहुवचनम्, आवयोर्जीवितं मा प्रमोषीः माऽपहार्षीरित्यर्थः । | 126. हे उरुशंस बहुस्तुत्य ! वरुण मा नोऽस्माकं याचमानानामायुः प्रमोषीः । कुरु नोऽभिप्रेतार्थसिद्धिमित्यभिप्रायः । |
| II.11 अत्र हि 'ऋचि त्रेरुत्तरपदादिलोपश्छन्दसि' इति त्रिशब्दस्य सम्प्रसारणमुत्तरपदादिलोपश्च । तत्रैकस्य सम्प्रसारणपरपूर्वत्वेनेकारस्य लोपः, अपर ऋक्शब्दस्य ऋकारस्य । | 127. अत्र ऋवर्णरेफयोर्लोपः । रेफ एक ऋवर्णोदरं कृमिवदनुप्रविष्टो द्रष्टव्यः । स लुप्यते ऋवर्णेन साकम् । |
| II.12. स्तोका इति श्च्युतेर्यकारमपनीय श्चुच्छब्दस्याद्यन्तवर्णयोर्विपर्ययः । 'स्तोकान्तिकदूरार्थ' इत्यादिनिपातनाच्चकारस्य च कुत्वम् । | 127. 'श्चुतिर् क्षरणे' तस्याद्यन्तविपर्ययेण स्तोकाः । |
| सिकता इति, 'कसेः' आद्यन्तयोः ककारसकारयोर्विपर्ययः । अकारस्य चेत्वम् । कसन्तीति सिकताः । | 127. 'कस विकसने' तस्य सिकताः । |
| ज्योतिरिति, 'द्युतेः' दकारस्य व्यापत्तिर्जकारेण, 'द्युतेरिसिन्नादेश्च जः' इति । | 127. 'द्युत दीप्तौ' तस्यादिव्यापत्त्या ज्योतिः । |
| II.13. बिन्दुरिति, भिदेर्भकारस्य व्यापत्तिर्बकारेण । | 127. 'भिदिर्विदारणे' तस्य बिन्दुः । |
| II.14. ओघ इति, 'वह प्रापणे' वहेर्हकारस्य व्यापत्तिर्घकारेण, वकारस्य सम्प्रसारणमुपधायाश्च गुणः । | 128. 'वह प्रापणे' तस्यान्तव्यापत्त्या ओघः । |
| नाध इति, 'णह बन्धने' 'नहो धः' इति नहेर्हकारस्य व्यापत्तिर्धकारेण । | 128. 'णह बन्धने' तस्य नाधः । |
| वधूरिति, 'वहेः' उकारप्रत्यये हकारस्य व्यापत्तिर्धकारेण । | 128. 'वह प्रापणे' तस्य वधूः । |
| II.15. आस्थदिति, 'अस्यतिवक्तिख्यातिभ्योऽङ्' इत्यङि 'अस्यतेस्थुक्' इति थकार उपजनः । | 128. 'असु क्षेपणे' तस्य आस्थत् । |

II.16. आसां सम्भव आभिनिर्वचनं कर्तव्यम्, नाक्षरवर्णसामान्येनेत्युक्तम् ।

129. एवमयमादिमध्यान्तलोपः····छन्दसि भाषायां च द्रष्टव्यः। दृष्ट्वा च यथासम्भवमनुविधेयः ।

II.17. तदिति वाक्योपन्यासे । यत्र धातौ स्वरस्याकारादेः पुरस्ताद्वा परस्ताद्वा । अनन्तरा अन्तस्था । यवरलानामन्यतमोऽन्तर्धातु धातुमध्ये भवति धातुस्थ इत्यर्थः । तत् शब्दरूपं द्विप्रकृतीनां स्थानम् । ते द्विप्रकृतयः । एवमुपदिशन्ति पूर्वाचार्याः ।

129. 'यत्र' यस्मिन्धातौ 'स्वरात्' अकारादेः 'अनन्तरा' अनन्तर्हितान्येन व्यञ्जनेन, परा वा पूर्वा वा 'अन्तस्था' यरलवानामन्यतमो वर्णः 'अन्तर्धातु' धातुमध्ये भवति । किं तत्र ? एतदेवंलक्षणं धातुरूपं 'द्विप्रकृतीनां' द्विस्वभावानां शब्दानां स्थानम्—आश्रय इति, एवमाचार्याः प्रविभागेनोपदिशन्ति ।

II.17. एवमितरेतरप्रकृतित्वाद् द्विप्रकृतित्वम् । उदाहरणम्—इष्टम, यष्टा, उप्तम, वप्तेत्यादि लौकिकम् ।

129. अत्र द्वे शब्दप्रकृती भवतः । सम्प्रसारणपक्षे तावत्—इष्टवान्, इष्टः, इष्टिः, इष्ट्वा, एताः शब्दप्रकृतयो भवन्ति । असम्प्रसारणपक्षे पुनः—यष्टा, यष्टुं, यष्टव्यमित्येताः ।

II.20. तत्रेत्यादि, तेषु द्विप्रकृतिषु सिद्धायां व्याकरणे प्रत्ययलक्षणेनानुपपद्यमानायामसम्भवन्त्यां सम्प्रसारणवृत्ताविति शेषः । इतरया परोक्षया तदसम्भवेऽप्यतिपरोक्षया उपपिपादयिषेत्, उपपादयितुमिच्छेत्—उपपादयेदित्यर्थः ।

129. 'तत्र' एवं सत्येकप्रकारेण 'सिद्धायाम्' अर्थसिद्धावनुपपद्यमानायामितरयोपपिपादयिषेत्, उपपादयितुमिच्छेदर्थम् । द्वयोः सम्प्रसारणासम्प्रसारणप्रकृत्योर्यथैवोपपद्यतेऽर्थस्तथैवोपपादयेत् ।

II.20,21. तेष्वपि सम्प्रसारणविषयेष्वेके धातवोऽल्पनिष्पत्तयो भवन्ति । अल्पा प्रसारणनिष्पत्तिर्येषां त इमे । अल्पप्रसारणविषया इत्यर्थः ।

130. एतस्मिन्नपि सम्प्रसारणलक्षणे सति 'एके' धातवः 'अल्पनिष्पत्तयो भवन्ति' । अल्पेषु शब्दरूपेषु सम्प्रसारणप्रकृतिरभिनिष्पद्यते । तद्यथा—एतदुदाहरणजातम्—ऊतिः···

II. 21. तद्यथैतदुदाहरणजातम्—ऊतिरित्यादि ।······ अपि चैतद्वैचित्र्यम् । भाषिकेभ्यो भाषाविषयेभ्यो धातुभ्यो नैगमाश्छान्दसाः कृतः प्रत्यया भाष्यन्ते ।

अथापि इदमपरमुपेक्षितव्यमनेन शब्दान् निर्ब्रुवता । आह किमिति ? उच्यते— भाषिकेभ्यो धातुभ्यः । भाषायां येषां प्रायेण प्रसिद्धप्रयोगास्ते भाषिकास्तेभ्यः । नैगमाः छन्दोविषयाः । कृतः कृत्प्रत्ययान्ताः शब्दाः । भाष्यन्ते विक्रियन्ते निरुच्यन्त इत्यर्थः ।

II. 22. 'क्षेत्रसाधाः' इत्यस्योदाहरणम्····'मित्रं न क्षेत्रसाधसम्' ।···मित्रं न—मित्रमिव । यथा मित्रं क्षेत्रस्य साधयितृ क्षेत्रस्य सम्पादयितृ इत्यर्थः ।

131. एवमेव साध्यतेर्भाषाप्रायोवृत्तेः 'मित्रं न क्षेत्रसाधसम्'—इत्येवमादयो मित्रमिव क्षेत्रसाधयितारमित्येवमादिना प्रकारेण निर्वक्तव्याः।

II.22. अथापि नैगमेभ्यो धातुभ्यो भाषिकाः कृतः, पूर्वेण कृतव्याख्यानमेतत् ।

131. निगमे छन्दसि ये प्रायोवृत्त्या प्रसिद्धास्तेभ्यः सामान्यं गृहीत्वा भाषिकाः कृत्प्रत्ययान्ता भाष्यन्ते विव्रियन्ते ।

II.22,23. उषिर्घिघर्त्ती छान्दसौ धातू…'प्रत्युष्टं रक्षः'-'जिघर्म्यग्निं हविषा' इति छन्दसि प्रयोगदर्शनाच् छान्दसौ धातू ।

131. 'उष दाहे' एष प्रायेण छन्दसि प्रसिद्धः । 'प्रत्युष्ट९ रक्षः प्रत्युष्टा अरातयः' इत्येवमादि ।

II.23. अथापीत्यादि । प्रकृतय एवेति, प्रकृतिशब्द आख्यातवचन इहाभिप्रेतः । नाम्नामाख्यातजत्वस्य प्रतिज्ञानात्, तेनाख्यातान्येवैकेषु देशेषु भाष्यन्ते, विकृतयस्तज्जत्वान्नामानि, तान्येवैकेषु।… उदाहरणं दर्शयति—शवतिर्गत्यर्थ आख्यातप्रत्ययान्तः शवतीति प्रकृतिः ।…… जीवतो विकार्यं मृतमार्येषु भाषन्ते, शवशब्दं मृते प्रयुञ्जत इत्यर्थः ।

131. एकेषु देशेषु प्रकृतय एव धातुशब्दानां भाष्यन्ते, विकृतय एकेषु । धातोराख्यातपदभावेन यः प्रयोगः सा प्रकृतिः । नामीभूतस्य तस्यैव यः प्रयोगः सा विकृतिः ।

132. म्लेच्छेषु प्रकृत्या प्रयुज्यते, आख्यातपदभावेन शवति गच्छतीत्यर्थः ।… आर्येषु जनपदेष्वस्यैव शवतेर्विकारं भाषन्ते । मृतकनामधेयभूतमेतं प्रयुञ्जते । कथम् ? शव इति ।

II.24. प्रसङ्गात् कम्बोजशब्दं निराह ।…… अनुप्रसक्तं कम्बलशब्दं निराह कमनीयः शीतार्दितैः प्रार्थनीयो भवति ।

132. उदाहरणविशेषप्रसक्तः कम्बोजशब्दो निरुच्यते…कम्बलशब्दं विग्रहप्रसक्तं निर्ब्रवीति, 'कम्बलः कमनीयो भवति' । प्रार्थनीयो हि स शीतार्त्तैर्भवति ।

II.24. एवम् 'अथ निर्वचनम्' इत्येतत्प्रभृति देशभाषाव्यवस्थापर्यन्तेनानेनोक्तेन प्रकारेण वैचित्र्येण, एकपदान्यवृत्तिजानीयर्थः ।

132. अनेनैकप्रकारेणैकपदानि निर्ब्रूयात,—भाषानि गमव्यवस्थया रुढिव्यवस्थया वा देशभाषाप्रसिद्धि विभागेन वा ।

II.25. अनन्तरं तद्धितेषु समासेषु च विशेषं वक्ष्याम इति शेषः ।

132. आह……अथ पुनर्यानि तद्धितयुक्तानि समासयुक्तानि च पदानि, तानि कथं निर्वक्तव्यानि ।

II.27. दण्ड्यः पुरुष इति, अभिधेयवचनम् । दण्डमर्हतीति समुदायार्थकथनम् । तद्विकल्पेन सम्पद्यते इति तद्धितार्थान्तरप्रदर्शनम् ।…… अवयवार्थे निराह-दण्डो ददतेः, दा इत्यस्य धारयत्यर्थे वर्तमानस्य । धारयति ह्यसौ निरुणद्धि पश्वादिकमपि ।

134. दण्ड्य इत्येष तद्धितः पुरुषशब्दविशेषणम् । पूर्वं तावत्तद्धितार्थं निर्वक्ष्यति ततः पदार्थं निर्वक्ष्यति ।

134. अधुना पदार्थनिर्वचनम्—'दण्डो ददतेः' धारयत्यर्थे वर्तमानस्य, धार्यते ह्यसोऽपराधेषु राजभिः ।

II.27. अक्रूरो नाम वृष्ण्यन्धकाधिपतिः स ददते धारयते मणिं मस्तकेन स्यमन्तकं नाम । एवं भाष्यते लोके ।

134. तथा [लोके 'अक्रूरो ददते मणिम्' । अक्रूरो नाम राजा वृष्ण्यन्धकाधिपतिः, स ददते मणिं स्यमन्तकनामानं शिरसा ।

II.28. अपिशब्दाच्छन्दसि च—'चतुरश्चिद्ददमानात्'–'विश्वे देवाः पुष्करे त्वाददन्त' धारयन्तेत्युपरिष्टान्मन्त्रौ व्याख्यास्येते ।

134. वेदे तावत् 'विश्वेदेवाः पुष्करे त्वाददन्त' इति ।

उपनमनहेतुत्वाद्दमनाद्दण्ड इत्यौपमन्यवो मन्यते ।

134. एवं च दमनाद्दण्ड इत्यौपमन्यव आचार्यो मन्यते ।

II.28. कक्षं सेवत इति समुदायार्थनिर्वचनम् । सेवत इति तद्धितार्थवचनम् ।......तेन कक्षे भवा कक्ष्या ।

134. एवं कक्ष्याशब्दस्य तत्त्वमुक्त्वाधुना तद्धितार्थं ब्रवीति । 'कक्षं सेवते' । सा हि कक्षं सेवते, कक्षसंयुक्ता भवति । कक्षे भवा वा कक्ष्या ।

II.29. अथवा किमस्मिन् ख्यानमिति । किमः ख्यातेश्च । गहनत्वान्न किञ्चित्कस्यचित् ख्यानं दर्शनमस्मिन्निति वा कक्षः ।

135. एवं किमस्मिन्ख्यापनीयमस्ति? न किञ्चिदपि, अदर्शनीयत्वात् । गूहनीयोऽयमित्यर्थः । स एष एवं कृत्वा किंख्यः सन्कक्षः इत्युच्यते ।...

II.29. तत्र हि कपिकच्छतृणादिभिश्च पाट्यमानस्य कण्डूरुत्पद्यते, अतः कषणात् कक्षः ।

नित्यकालं ह्यसौ स्वेदशीलत्वात्कण्डूं ददाति, ततो नखैः कष्यते यतस्तस्मात्कषणक्रियायोगात् कक्षः ।

II.30. एकसन्धिसमासोदाहरणम्—राज्ञः पुरुषो राजपुरुष इति ।

135. अधुना समासोदाहरणमुच्यते ।

एतज्ज्ञापयति राजपुरुषशब्दे न राजशब्दो न पुरुषशब्दोऽस्ति । किं तर्हि? अन्यदेवेदं पृथक् ......नित्यं विशिष्टार्थवृत्ति शब्दान्तरम् ।

136. अथेदानीं राजपुरुष आनीयतामित्युक्ते न राजानमानयन्ति नापि पुरुषमात्रं नाप्युभयम्, किं तर्हि ? राजस्वामिकं पुरुषमानयन्ति ।

II.31. दीप्यते ह्यसावष्टानां लोकपालानां वपुषो धारणादिति तेजस्वितया ।

137. 'राजा राजतेः' दीप्त्यर्थस्य । दीप्यते ह्यसौ पञ्चानां लोकपालानां वपुषा ।

II.32. पुरिशयः, अथवा पुरि पूरयितव्येऽन्नादिना शरीरे शेते तिष्ठति उपलभ्य इत्यर्थः । तथा-च प्रयोगः—पुरि पुरुषः शेत इति ।

137. 'पुरिशयः'—अथवा तयोरसौ शेते विशेषेणास्ते इति पुरिशयः सन्पुरुष इत्युच्यते ।

यस्मान्नाणीयो यस्मान्न सूक्ष्मतरं न ज्यायो वृद्धतरश्च किञ्चिदस्ति ।......दिव्यन्तरिक्षे भुवि च य एक एव । तेनेदं चतुर्दशसंस्थं भुवनं पूर्णं पुरुषेण सर्वं कृत्स्नम् ।

137. यस्माच्च न किञ्चिदप्यणीयो नापि ज्यायोऽन्यदस्ति स एव सर्वमित्यभिप्रायः ।......पूर्णमनेन पुरुषेण सर्वंगतत्वाज्जगदिति पुरुषः ।

| | |
|---|---|
| II. 33. श्वानो गतिर्यस्य शुनां वा गतिराश्रयः, मृगयाशीलः कश्चित् श्वागणिकः पुरुषः, तस्मिन् भाष्यते । | 137. श्वभिः साकं यो गच्छति मनुष्यस्तस्मिन्भाष्यते । |
| II. 33. एवंरूपस्य सतो भवतः शब्दरूपस्यानर्थको निर्निमित्तकोऽभ्यासः, शब्दोपजननमात्रमित्यर्थः। | 138. अथेदानीं च इत्येष कद्रातीत्येवमेव सतः शब्दस्वरूपस्यानर्थक एवाभ्यासः ।······ |
| II. 33. तं रज्ज्वा गले बद्धमाकर्षतीति विश्वकद्राकर्षः। | तमपराधे कस्मिंश्चिद्वर्तमानमन्यो य आकर्षति स विश्वकद्राकर्षः । |
| II. 34. विशब्दो मत्वर्थे । | 138. वीत्युभयोरर्थयोर्मत्वर्थः । |
| II. 34, 35. कल्याणो वर्णोऽस्येति कल्याणवर्णः। मण्यादिरन्यपदार्थः । कल्याणवर्णरूपमिति षष्ठीसमासः । कल्याणवर्णरूपमिव रूपमस्येति । | 138. कल्याणवर्णं सुवर्णम् , तस्येव यस्य रूपं स कल्याणवर्णरूपः । अग्निरन्यो वा कश्चित् । |
| II. 35. प्रार्थनीयं हि तत् ।······ | 138. प्रार्थ्यते हि तत्सर्वैणैव । |
| आच्छादयति ह्यसौ तदाश्रयम् ।······ | 138. आवृणोति हि स आश्रयम् । |
| केनचिच्छिद्रान्वेषिणा दुष्टाशयेनोपन्यस्तानि जह्रादीनि, जहातेर्हन्तेर्वेति सन्दिह्यमानानि । 'मा न एकस्मिन्नागसि' इति प्रकरणसव्यपेक्षार्थविशेषनिश्चयानि । | 138. केवलान्येव परेणाभिद्रोहबुद्ध्या पृच्छ्यमानानि न निर्ब्रूयान्न निर्वक्तव्यानीति ।······ तत्पुनरेतत्–'मा न एकस्मिन्'···इत्येतस्यां पूर्वस्यामृचि यदेतन्मा वधीरिति पदम्, एतस्माद्गम्यते हन्तेः स्यादिति । |
| II. 36. एवं शेषपदलक्षणमभिधायेदानीमिदं विद्यास्थानं यस्मै कस्मैचिन्न वक्तव्यम् । तदर्थमाह । | 139. उक्तं निर्वचनलक्षणम् । अधुना यस्मै निर्वक्तव्योऽयमुक्तनिर्वचनलक्षणः समाम्नायस्तस्य लक्षणं वक्तव्यमिति तदर्थमिदमारभ्यते । |
| II. 37. ततश्चासावसकृदपि विविक्तमुच्यमानोऽपरिगच्छन्नसूयकत्वात् स्वाबोधमुपाध्याये न्यस्येत् । यदयमेव न बुध्यते तत्कथमन्यान्बोधयिष्यतीति । तथा च सत्यस्यायशः श्रमवैयर्थ्यञ्च स्यात् । | 140. स ह्यनवबुद्ध्यमान आत्मीयदोषमाचार्य एवासजति स्वयमेव तावदयं नावबुध्यते किमस्मान् बोधयिष्यतीति । एतस्मात्कारणादश्रुतपूर्वान्यशास्त्रायाखिन्नमनसे नेदं निर्ब्रूयात् । |
| II. 37. यो वा मेधावी सकृच्छ्रुतग्रन्थग्रहणसामर्थ्यसमन्वितः । स ह्युच्यमानमवधारयेत्।······ तस्मात्पूर्वोक्तगुणाभावेऽपि निर्ब्रूयात् । | 140. यो वान्यः कश्चिदलं पर्याप्तो विज्ञातुमेतच्छास्त्रं भवेद् दृढग्राही स्थिरबुद्धिस्तस्मै निर्ब्रूयादेव सर्वथा । |
| II. 38. चतुर्दशानां विद्यास्थानानामधिष्ठात्री देवता स्वयमेव वा विद्या विग्रहिणी यथादर्शनं शिष्यानध्यापयन्तं कञ्चिद् ब्राह्मणमुपाध्यायमाजगाम। | 141 विद्या किल कामरूपिणी भूत्वा विद्याधिदेवता वा संयतात्मानं विदितवेदाङ्गवेदार्थं ब्राह्मणं प्रति कञ्चिदाजगाम । तमेत्य प्रह्वीभूतोवाच । |

II.38. परतः श्रोतुरुपदेशः।

II.39. गुर्वनुवृत्तिमकुर्वतः परिनिन्दावचनम्।······
दृष्टे चादृष्टे च तत्कृतफलाभावान्नानुह्लाति श्रुतं तत्।

II.40. सम्प्रति यस्मै वक्तव्या, तं दर्शयति।

II. 41. अथ निर्वचनमित्यत्र गवादीनां सामान्येन निर्वचनलक्षणमुक्तम्, इहेदानीं क्रमप्राप्तविशेषनिर्वचनविवक्षया आह।······
यतः सामान्यलक्षण उक्ते विशेषं प्रत्याकाङ्क्षास्तीत्यत आनुपूर्व्येण क्रमिष्यामः,विशेषलक्षणं व्याख्यास्याम इत्यर्थः।······
का पुनरसौ विशेषव्याख्या? उच्यते। अभिधानाभिधेयतन्निर्वचनगौणनियमप्रसक्तानुप्रसक्त तदुदाहरणसंदिग्धनिर्णयसंख्यादिप्रदर्शनम्।

II. 42. 'गातेः' वा स्तुत्यर्थस्य, औकारप्रत्ययः।

II.42,43.अपि चायं गोशब्दः पशुनामेह लोके वेदे च भवति एतस्मादेव धातुद्वयात्।

II.43. तद्धितार्थेन विकारावयवलक्षणेन संयुक्ताः सम्बन्धाः,कृत्स्नवत् कृत्स्नेनेव प्रकृत्यर्थेनेव गोशब्देनेवेत्यर्थः,निगमा भवन्ति। तेषां प्रदर्शनार्थमुदाहरणम्—'गोभिः श्रीणीत मत्सरम्' इति॥

II.44. प्रकृत्या गोद्रव्येण पृथिव्यादिभिश्च मिश्रणस्यासम्भवात् पयसश्च श्रुतत्वात् निश्चित्याह—पयस इति।······
तृप्यति हि देवता मन्त्रेण।······
धनमभिमत्तो मूढ एतेन भवतीति।······
विकारप्रसङ्गेनाह—पयः पिबतेर्वा पीयते हि तत्।

II. 45 वर्धन्ते तेन पीतेन प्राणिनः।

141. अधुना शिष्योपदेशमाह।

142. अधुनेतरान् दुष्टशिष्यान् विद्याभिशपन्त्याह।

142. तच्छ्रुतमपि न भुनक्ति न पालयति। श्रुतफलेन न संयुनक्तीत्यर्थः।
अधुना यस्मै वक्तव्या, तस्य लक्षणं ब्रवीति।

143. अथेदानीं विशेषव्याख्यया प्रतिपदमयं समाम्नायो व्याख्यातव्यस्तदधिकारार्थोऽयम्—'अथ' शब्दः।

143. यस्मात्सामान्यतः समाम्नायो व्याख्यातोऽत इदानीं विशेषतः 'अनुक्रमिष्यामः'आनुपूर्व्येण क्रमिष्यामो वर्णयिष्यामः। व्याख्ययेति शेषः। आह-किंलक्षणा पुनरसौ व्याख्येति उच्यते तत्त्वपर्यायभेदसंख्यासंदिग्धोदाहरणतन्निर्वचनविभागेन यदाख्यानं सा व्याख्या नैघण्टुके प्रकरणे।

144. 'गातेर्वा' 'गाङ्गतौ'—इत्यस्य धातोः। 'ओंकारो नामकरणः' प्रत्ययः।
'अथापि' गौरित्येतत् 'पशुनाम भवतीह' एव कारकद्वये तस्मादेव धातुद्वयाद्—गमेर्गातेर्वा।
'अथाप्यस्याम्' एव पशुगवि ताद्धितेन प्रयोगेणाकृत्स्नायां सत्यां कृत्स्नवन्निगमा भवन्ति।
तद्यथा—'गोभिः श्रीणीत मत्सरमिति' गोरेकदेशस्य पयसः कृत्स्नवत् प्रयोगः।

145. एवमत्र विधानादशक्यत्वाच्च गोभिः श्रयणस्य गव्येन पयसेति गम्यते।

145. तृप्यन्ति ह्यनेन देवताः।······
तेन ह्याविष्टो धनाभिमुख्येन मत्तो भवति।
पर्यायाख्यानप्रसक्तं निरुच्यते। पयः पिबतेर्वा, पानार्थस्य। पीयते हि तत्।

145. तेन हि वर्धन्ते प्राणिनः।

II.45. पर्यायप्रसक्तं निराह—क्षीरं क्षरतेः । क्षरति हि तदूधसः ।······
वशेः ईरकि कृतसम्प्रसारणस्येदं रूपम् । काम्यते हि तत, सुगन्धितत्वात् ।······
कृतस्नवन्निगमा इति बहुवचननिर्देशादनेकोदाहरणप्रदर्शनम् ।

145. प्रसक्तानुप्रसक्तं निरुच्यते । 'क्षीरं क्षरतेः' इच्योतनार्थस्य, इच्योतते हि तदूधसः ।······
'वश कान्तौ' तस्य कृतसम्प्रसारणस्येरप्रत्ययेनोशीरमिति भवति ।······
कृत्स्नवदभिधायकः ।

II.46. एवमभिषवव्यापारद्वारेण अंशुं सोमं दुहन्तो अध्यासते गवि अधिषवणचर्मण उपरीत्यर्थः ।

146. अंशुं सोमांशुमभिषुत्य दुहन्तः प्रपूरयन्तो गव्यधि गोरुपरि गोरवयवेऽधिषवणचर्मणि एतत्कर्म कुर्वाणा इन्द्रं प्रतीक्षमाणा आसते ।

II.46. शमष्टमात्रो व्याप्तमात्रः पीतमात्रः सुखो भवतीत्यर्थः ।

146. व्याप्तमात्रो हि स यजमानेन तस्यैव शं भवति, सुखो भवति ।

II.47. चरितं हि तच्छरीरे भवति ।
अत्रापि चर्मभिर्ग्रथितः श्लेष्मणा च संश्लेषितो न वर्धेत इत्यर्थः ।

146. चरितं हि तत्सर्वस्मिञ्छरीरे गतमित्यर्थः ।

146. स हि चर्मणावनद्धो भवति, श्लेष्मणा च तस्यादयः संश्लेषिता भवन्ति ।

II.49. वय इव पक्षिण इव गन्तारो वा इषवः ।

148. अथवा ततस्ततो धनुषो वयः पक्ष्यवयवपत्रसम्बन्धादिषवो वयः पक्षिणः । अथव 'वेतेर्गतिकर्मणः' । साक्षादेव इषवो 'वयो' न गुणवृत्त्या ।

II.49. वृक्षो व्रश्चनात् । यदा कदाचिच्छिद्यतेऽसाविन्धनार्थम् ।

148. निगमप्रसक्तं निराह—'वृक्षो व्रश्चनात्' इति । स हि वृश्च्यते छिद्यत इन्धनार्थम् ।

II.50. अद इत्यपि द्वितीया सप्तम्यर्थे । अप्यमुष्मिन्स्वैरवयवैः पर्वभिः, कालपर्वभ्यां वा तच्छ्रुताभ्यामहोरात्राभ्यां वा पर्ववति, भास्वरे वा, गवि गन्तरि आदित्यमण्डले स्थित इत्यर्थः ।
कोऽसौ ? सूरः ।

148. अदः अमुष्मिन्नादित्यमण्डले परुषे पर्ववति । अहोरात्रादिपर्वभिस्द्वति । अथवा भास्वति । भासा तद्वतीत्यौपमन्यवः । गवि गमनशीले मुहूर्तमप्यनवस्थायिनि सूरः सूर्योऽवस्थितः ।

II. 51. अथाप्यस्यादित्यस्य एको रश्मिश्चन्द्रमसं प्रति विशेषेण दीप्यते । स्वयं चन्द्रमण्डलमनुप्रविश्य दीप्तिं करोति ।······
आदित्यतोऽस्य दीप्तिर्भवति न स्वत इति ।

149. 'अथाप्यस्यैको रश्मिश्चन्द्रमसं प्रति दीप्यते' एको रश्मिरादित्यस्य सुषुम्नो नाम चन्द्रमसि प्रत्यवस्थितो दीप्यते ।

149. अम्मयं हि चन्द्रमसो मण्डलं तत्तेजःसम्बन्धाद्दीप्तिमद् भवति । ततः सर्वा दिशः प्रकाशयति ।

II. 52. सोऽपि सुषुम्नोऽपि यथा गौरुच्यते तथेद-

150. सोऽपि सुषुम्नो रश्मिरेक एव 'गौः' इति

मुदाहरणम्—'अत्राह' इति । तदुपरिष्टादैकपदिके व्याख्यास्यामः ।

150. उच्यते । यथासौ गौस्तथेदमुदाहरणम् 'अत्राह गोरमन्वतेति' तत्पुनरेतत् 'उपरिष्टाद्' ऐकपदिके व्याख्यास्यामः ।···
सर्वेऽपि रश्मयो गाव उच्यन्ते । यथैतदेवं तथेयमृगुदाह्रियते ।

II. 53. अन्येषां सामान्येन गोशब्दाभिधानीयत्वम् ।

II. 54. वृष्णः वर्षितुः, विषेर्वा एतद्रूपम्, ऋकारोपजनेन । व्याप्तिरित्यर्थः । विष्णोः स्वभूतं परमं पदं प्रकृष्टं स्थानमादित्यमण्डलाख्यम् । अवभाति-अग्रे भाति, अग्रे दीप्यते । अर्वागिदं सर्वं कृत्वा भातीत्यर्थः । भूरि प्रभूतम् ।

151. विष्णोः परमं पदमादित्यमण्डलस्थानम् । स्थाने हि पदसञ्ज्ञा । पदस्थ इति लोकेऽपि वक्तारो भवन्ति । अवभाति अर्वागिदं सर्वं कृत्व भाति दीप्यते । भूरि बह्वित्यर्थः ।

II.55. प्रभवति हि तत्सर्वस्यानुग्रहाय ।···
पादः–पद्यतेर्गत्यर्थस्य । गम्यतेऽनेनेत्युक्तम् ।

151. प्रभवति हि तद् बहुधापि दीयमानम् ।

152. 'पादः पद्यतेः' गत्यर्थस्य, पद्यते हि तेन ।···

II.56. ग्रन्थपदेषु कथम् ? इत्याह, प्रभागपादसामान्यादित्यादि ।···

प्रभागपादसामान्यादितराणि ग्रन्थपदानि क्षेत्रपदानि वा ।

अन्ये त्वाहुः–अनुक्रान्ते गोशब्दे ग्मादीनामवसर आह एवम् । यथा गौरित्यस्याभिधेयं प्रति सन्देहः, तद्वदन्येषामपि ग्मादीनां सत्त्वानां गमनसम्बन्धसामान्यादित्यर्थः ।

152. अधुनोपसंहरति—एवमन्येषामपि सत्त्वानां यानि नामानि तेषु सन्देहा विद्यन्ते । न केवलं गोशब्दे पदशब्दे वा । तेषु त्वेतदौत्सर्गिकं निर्वचनलक्षणं द्रष्टव्यम् ।

II.59. तानि चेद्ग्मादीनि समानकर्माणि समानक्रियाणि समाननिर्वचनानि यथैकं तथान्यान्यपि नानाक्रियाविषयाणि ।

'तानि' यदि सामान्यक्रियया युक्तानि ततः समाननिर्वचनान्येव कर्तव्यानि ।

II.60. नानाकर्माणि नानाक्रियाणि चेन्नाना । नैवं निर्वक्तव्यानि, ग्मा ज्मा क्ष्मा इति । यथार्थम् अर्थानुरूपेण वाक्यप्रकरणसामर्थ्यान्निर्वाच्यानि ।···

152. अथ पुनर्नानाकर्माणि ततो नानानिर्वचनानि । एवं यथार्थं निर्वक्तव्यानीति ।

सन्देहा विद्यन्ते–इत्युक्तस्य सन्देहस्य स्वयमेव प्रदर्शनार्थमाह—···
तत्र तेषु पृथिवीनामसु निर्ऋतिः पठ्यते ।

152. अधुनैवमुक्तोदाहरणैरेव तत्र तत्र सन्देहपदान्यनुक्रम्य मन्त्रेष्वेव दर्शयन्नाह ।···
तत्रैतस्मिन्नेकविंशके नामगणे 'निर्ऋतिः' इत्येतदभिधानम् ।

II.60. अस्याः पृथिव्या वा एषा निर्वाचिका ऋक् ।

153. तस्याः कृच्छ्रापत्तेः पृथिव्या एषा निर्वाचिका ऋग् भवति ।

II. 61. परिवीतः जराय्वादिभिर्व्याप्त इत्यर्थः । यथा-

154. ततः परिवीतो जरायुणा परिवेष्टितो यथा-

II.61. कालं जायते। बहुप्रजा बहुप्रजननः आत्मज्ञानाभावान्मोक्षमप्राप्नुवन्संसारे पुनः पुनर्जायमान इत्यर्थः।

154. कालं जायते। अथैवं बहुशः प्रजायमानः स गर्भकर्ता गर्भतत्त्वमजानानो निर्ऋतिं दुःखमाविवेश, आविशतीत्यर्थः।

II.61. एष परिव्राजकानामात्मविदां दर्शने चास्या ऋचोऽर्थः।

154. एवमस्यामृचि निर्ऋतिर्देवतेत्येष परिव्राजकार्थः।

II.61. नैरुक्तानां तु—य एनं वर्षलक्षणमुदकसंस्त्यायं पूर्ववत् करोति किरति वा।

154. एवं नैरुक्ता मन्यन्ते। यः करोति वर्षं यो वा किरति क्षिपति। कः पुनरसौ ? मेघः।

II.62. बहुप्रजा बहुप्रजननोऽपर्यन्तधारात्मना व्यवस्थित इत्यर्थः। अथवा जनिरन्तर्नीतण्यर्थः। बहूनां धाराणां सस्यानां वा, सस्यनिष्पादनद्वारेण प्राणिनां प्रजनयिता। निर्ऋतिं भूमिमाविवेश आविशतीत्यर्थः।

155. प्रावृट्काले वर्षभावेनाभिव्यक्तो बहुप्रजा

155. बहुशः प्रजायमानो निर्ऋतिं भूमिमाविशतीति समस्तार्थः।

II.63. इतरः स्त्रीयोनिरेतस्मादेव रूपसामान्यात्प्रसक्तो निरुच्यते।···

155. 'अयमपीतरः' स्त्रीयोनिः 'एतस्मादेव'।

इतरः प्रजननेन मिश्रीयते, मिश्रितो वा रक्तमांसादिभिः।

155. असावपि परियुत एव भवति स्नाना मांसेन च।

II.64. शाकपूर्णिर्नैरुक्ताचार्यः। संकल्पयाञ्चक्रे संकल्पितवान्।

156. शाकानि यः पूणयति संहन्ति स शाकपूणः। तस्यापत्यं शाकपूणिराचार्यः। स सङ्कल्पयाञ्चक्रे सङ्कल्पं कृतवान्।

II.64,65. तत्तस्य ज्ञानोत्सेधमाक्षिपन्ती काचिदभिमानिनी देवता स्त्रीलिङ्गपुँल्लिङ्गयुक्ता, मन्त्रे स्त्रीपुँल्लिङ्गशब्ददर्शनादेवमुच्यते। अथवा मध्यमद्युस्थानलिङ्गयोगादुभयलिङ्गत्वमुच्यते। प्रादुर्भूता स्वप्ने प्रत्यक्षं वा तां न ज्ञातवान्।

156. देवतोभयलिङ्गा द्विलिङ्गा स्त्रीपुँल्लिङ्गा, अथवा मध्यस्थानलिङ्गा द्युस्थानलिङ्गा च प्रादुर्बभूव प्रादुर्भूतवती।

II.65. सा देवतास्मै वक्ष्यमाणामृचमादिष्टवती—एषा मद्देवतेति। तव च देवताज्ञानाभिमानः, मां जानीहि अनयेति।

156. सा एवं पृष्टा सती 'अस्मै' शाकपूणये एतामृचमादिदेश-आदिष्टवती। किम् ? इति। एषा मद्देवतेति। अस्यामृच्यहं देवतेति, त्वञ्च नैरुक्तो मामेतस्या ऋचः सकाशादर्थगत्यावधारयेति।

II.67. अयं स मेघः शब्दं करोति। येन गौरभीवृता येन मेघेन माध्यमिका वागभीवृता अभिव्याप्ता, अभीत्येष परीत्येतस्य स्थाने परिवृता। मिमाति

157. स एव शब्दं करोतीति। येन मेघेन किं कृतम्? इति। येन गौरभीवृता। येन माध्यमिका वागभिप्रच्छादिता सती मिमाति मायुं निर्मि-

II.67. निर्मिमीते करोति मायुं मायुरिति वाङ्नाम, वाचं स्तनयित्नुलक्षणाम् ।

II.67,68. एकमेवेदं ज्योतिस्त्रेधा कृतमिति । एतत् 'तमू अकृण्वन् त्रेधा भुवे कम्' इत्यत्र वक्ष्यते । तेन मध्यमस्यैवादित्यात्मनावस्थानात् अविरुद्धोऽयं रसादानव्यपदेश इति ।

II.69. आनुपूर्व्येण क्रमशोऽस्य प्रातिज्ञातत्वात् पृथिवीनामानन्तरं तत्प्रभवति, तत्प्रभवत्वात् हिरण्यनामान्युच्यन्ते ।

II.69. अपठितन्यपि द्रष्टव्यानि, हाटकशातकुम्भचामीकरकलधौतादीनि ।

II.69. शिल्पिभिर्वा पत्रकटकादिभावेनायम्यमानं विस्तीर्यमाणमित्यर्थः ।

II.69. द्रव्यस्वभावत्वान्निकत्रावस्थायित्वम्, तस्य सर्वस्य सर्वथा हरतेर्हिरण्यम् ।

II.69. हितश्च तदापदि दुर्भिक्षादौ, रमयति च सर्वदा सर्वमित्यतो हिरण्यम् । तेन गृहीतेन मूषकोऽपि रमते, किमुत मनुष्यः ।

II.70. अन्तरा इमे रोदस्यौ द्यावापृथिव्यौ क्षियतीति वा ।······

शरीरेष्वित्यादि—अन्तराशब्दात् पूर्वपदम्, अक्षयशब्दादुत्तरपदमिति विशेषः । विनाशिष्वप्यविनाशीत्यर्थः ।······

तुल्यश्रुतित्वादविशिष्टे सन्देहपदत्वे किञ्चित्प्रदर्शनीयमिति समुद्रशब्दः प्रदर्शितः ।

II.71. तयोर्विभागो यस्मिन्मन्त्रे तत्र सुखप्रतिपत्त्यर्थमितिहासमाचक्षत आचार्याः । निदानभूतम्-इति ह एवमासीत्-यः कथ्यते स इतिहासः ।

मीते निर्वर्तयति मायुम् । शब्दं करोति-इत्यर्थः

158. किन्त्वेतावद्विवक्षितम् । मेघाश्रया शब्दवती भूत्वा माध्यमिका वाग्विद्युदात्मना स्थित्वा वर्षेण प्रच्छाद्य पृथिवीं तद्वर्षमुदकरूपभूतं जलाशयेभ्य आदित्यात्मना स्थित्वा पुनरादत्ते विद्युदात्मना मध्यस्थाने स्थित्वा वर्षति, आदित्यात्मना द्युस्थाने स्थित्वा पुनरादत्त इत्यभिप्रायः ।

160. प्रकृतेभ्यः पृथिवीनामभ्यः । पृथिव्यामेव हिरण्यमुत्पद्यते । अतः पृथिव्याभिधानानन्तरं हिरण्यनामानि समाम्नातानि ।

160. असमाम्नातान्यपि सन्ति हाटकसुवर्णचामीकरशातकुम्भादीनि ।

160. आयम्यमानं ह्रियत एव शिल्पिभिः कटकरुचकस्वस्तिकादिभावेन विस्तीर्यमाणम् ।······ तेन हि व्यवहारः क्रियते ततस्तन्नैकत्रावतिष्ठते ह्रियत एव सर्वदा ।

160. यस्य हि तद्भवति, तस्य हितश्च दुर्भिक्षादिषु तद्भवति रमणश्चेति । तेन हि गृहीतेन मूषिकोऽपि रमते, किमुत मनुष्यः ।

160,161. अन्तरा द्यावापृथिव्यौ इमे क्षियति निवसति 'इति' अन्तरिक्षम् ।

161. अथ 'वा शरीरेषु' एतदेव 'अन्तर्' मध्येऽवस्थितम् 'अक्षयम्' इतराणि पृथिव्यादीनि भूतानि क्षीयन्ते तस्मादक्षयत्वादन्तरिक्षम् ।

161. 'समुद्रः' इत्येतदभिधानमुभयाभिधायित्वात पार्थिवेन समुद्रेण एतेन जलाशयेन सन्दिह्यते । एतदत्र सन्देहपदम् ।

161. यस्मिन्नुदाहरणे लक्ष्यते, तत्रेतिहासमाचक्षत आचार्या निदानभूतम् । 'इति हैवमासीत्-' इति यः कथ्यते स इतिहासः ।

| | |
|---|---|
| II.71. देवापिः शन्तनुश्च कौरव्यौ कुरुवंशप्रभवौ भीमसेनपुत्रौ भ्रातरौ बभूवतुः । | 161. 'देवापिश्चार्ष्टिषेणः शन्तनुश्च' आर्ष्टिषेण एव कौरव्यौ कुरुवंशप्रभवौ भ्रातरौ बभूवतुः । |
| II.71. स च किल च्यवननामापरनाम्नि ऋष्टिषेणे ब्रह्मचर्यमुवास । स गुर्वनुग्रहात्तेनैव शरीरेण वीतहव्यवद् विश्वामित्रवच्च ब्राह्मणो बभूव । | 161. स किल तीव्रेण तपसा ब्राह्मणत्वमापेदे, विश्वामित्रवत् । |
| II.73. आर्ष्टिषेणः, ऋष्टिसेनस्य पुत्र ऋषिः ।...... ऋष्टिप्रधाना सेना यस्य, इषिता वा सेना शत्रून्प्रति प्रेषिता नित्यं सेना यस्य, कान्ता वा इष्टा सेना यस्य । | 163. आर्ष्टिषेण ऋष्टिषेणस्य पुत्र इषितसेनस्येति वा ।.. ऋष्टिरायुधविशेषः । तद्बहुला सेना यस्य सो ऽयमृष्टिषेणः । इषितसेनो वा नित्यमेव प्रेषितसेनः शत्रून्प्रति । |
| II.74. निपरणाद्वा । निपरणं पिण्डपितृयज्ञश्राद्धादौ पिण्डदानम्, तेन त्रायते शास्त्रसामर्थ्यात् पितॄन्,अकरणप्रत्यवायपरिहारेण चात्मानम् ।... | 163. निपरणाद्वा, निपृणाति ददाति ह्यसौ पिण्डान्पितृभ्य इति पुत्रः । |
| ब्राह्मणमप्यस्मिन्नर्थे सामान्येन दर्शयति- तद्यदेनान् । | 163. ब्राह्मणमपि चैतस्मिन्नर्थे दर्शयति 'तद्यदेनां-स्तपस्यमानान् ब्रह्म' इत्येवमादि । |
| II.75. तस्यैवैकस्यार्थस्य उत्तरा ऋक् भूयसे बहुतराय निर्वचनाय, निर्विविच्य वचनाय । भूयस्त्वञ्च पौरोहित्यार्त्विज्याभ्युपगमलिङ्गभूतवृष्ट्यर्थवाग्लाभादिना । | 164. तस्यैवार्थस्य प्रकृतस्य यथोत्तरस्मात्समुद्राद्वृष्टिमयाचत देवेभ्यो देवापिर्यथा च पौरोहित्यमकरोत्, यथा वायाजयच्छन्तनुम् । वर्षार्थीयेन कर्मणा । भूयसे बहुतराय निर्वचनाय । |
| II.76. यत् यदा यस्माद्वा देवापिः शन्तनवे शन्तन्वर्थे पुरोहितः सन् होत्राय वृतः वार्षिके कर्मणि, कृपयन् कृपायमाणः । अनावृष्टिहतं लोकमनुकम्पमानः । अदीधेत् अन्वध्यायत् ध्यातवान् । | 164. यद् यस्माद् देवापिः शन्तनवे राज्ञे पुरोहितः । पुरोहितो ह्येवाग्निकर्मणि व्याप्रियते । सः पुरोहितः सन् देवापिर्होत्राय होतृकर्मणे वर्षार्थीये कर्मणि वृतः सन् कृपायमाणो राज्ञोऽदिधेत् अन्वध्यायत्, वृष्टिर्भवेदिति । |
| II.76. शमस्मै तन्वै शरीराय वास्तु-इति वा, इति रोगिणं कश्चिद् दृष्ट्वा एवमाह, स च तदैवारोगः सम्पद्यते । | 165. स हि कश्चिद्रोगार्त्तं दृष्ट्वा ब्रवीति 'तनो शं' तवास्त्विति । ततोऽसावगदो भवति । |
| II.76. शान्तिकपौष्टिकाभिचारिकेषु कर्मसु पुर एनं दधति राजानः पुरस्कुर्वन्तीत्यर्थः । | 165. पुरोहितः शान्तिकपौष्टिकाभिचारिकेषु कर्मसु 'पुर एनं दधति' राजानः । पुरस्कुर्वन्तीत्यर्थः । |
| II.77. नित्यपक्षे ऋग्द्वयस्यान्यदर्थयोजना-आर्ष्टिषेणः- ऋष्टिषेणो मध्यमं तत्र भवत्वाच्चार्ष्टिषेणो वैद्युतः, तस्य पार्थिवात्मावस्थितस्य होतृत्वेन देवापित्वम् । शिष्टो मन्त्रः पूर्ववद्योज्यः । | 165. नैरुक्तपक्षे-ऋष्टिषेणो मध्यमस्तदपत्यमयमग्निः पार्थिव आर्ष्टिषेणो देवापिः शन्तनवे सर्वस्मै यजमानायेति योज्यम् । |

| | |
|---|---|
| II.77. मध्यमो बृहस्पतिः, ददद्वाचं गर्जितलक्षणामस्मै अयच्छत् । | 165. बृहस्पतिर्वाचस्पतिरिति मध्यमः । स्तनयित्नुलक्षणां वाचमित्यर्थः । |
| II.79. लोकक्रमादाह–साधारणानीत्यादि । | 166. लोकाभिधानाधिकारेणेदमुच्यते । 'साधारणान्युत्तराणि षड् दिवश्चादित्यस्य च' इति ।··· |
| II.80. यानि त्वस्य आदित्यस्य प्राधान्येन मन्त्रेषु सूक्तहविर्भाञ्जि सवितृसूर्यादीनि तान्युपरिष्टात् दैवते काण्डे व्याख्यास्यामः । स्वरादीनि तु षडपि उभयोर्हविःसूक्तभाञ्जि भवन्ति, अतो नैघण्टुके प्रकरणे इह व्याख्यास्यन्ते । | यान्यस्य आदित्यस्य प्राधान्येन वर्तन्ते प्रधानस्तुतिभाञ्जि नामानि,······तान्युपरिष्टाद्व्याख्यास्यामः सप्तदशेऽध्याये । इमानि तु नैघण्टुकानि संसृष्टरूपाणि च द्युनामभिः साकमित्यत इह नैघण्टुकप्रकरणे निरुच्यन्ते । |
| II.80. आदत्ते भासं,तदुदयेऽन्तर्धानादादानव्यपदेशः। ज्योतिषां चन्द्रनक्षत्रग्रहादीनाम् । | 166. तदुदये हि आदत्ते भासं ज्योतिषाम् । चन्द्रादीनां प्रभानाशो भवति । अन्यग्रहापेक्षमेतत् । |
| II.81. आदितेयमिति वेदे प्रयुक्तं दृश्यते किन्त्वल्पप्रयोगविषयोऽस्य । तुशब्दो विशेषणार्थः । | 167. अल्पप्रयोगविषयम् । तुशब्दो विशेषणार्थः । |
| II.82. सूक्तभाग्भवति, सूक्तं स्तुतिः तामेव भजते । क्व ? 'सूर्यमादितेयम्' इति । न हविर्भाक्, सूर्यपदसामानाधिकरण्यादेतद् गम्यते । गुणाभिधानमेतत्, नानेन नाम्ना हविश्चोदना क्वचिदस्तीति । | 167. 'आदितेयः' इति सूक्तभागेव चैतदभिधानं न हविर्भाक् । न ह्यादितेय इत्यनेन नाम्ना हविराध्वर्यवे चोदितपूर्वमस्ति । यथा चैतत्सूक्तमेव नैघण्टुकवृत्त्या भजते, तथेदमुदाहरणम्–'सूर्यमादितेयम्' इति । |
| II.82. अन्येऽल्पप्रयोगमित्यादित्यस्यैव वेद एकवचनान्तस्यादित्यादिविषयस्याल्पप्रयोगतां सूक्तभाक्त्वं चाहुः । | 167. अन्ये तु मन्यन्ते- आदित्य इत्येतदेवाल्पप्रयोगमिति। तत्र त्वेतद् विरुद्ध्यते–सूक्तभागिति । हविरपि ह्यनेनाभिधानेन चोद्यते । |
| II.83. पृथगर्थमिदं दर्शयति–अथापि मित्रावरुणयोः, आदित्यशब्देन हि स्तुतिः । आदित्या दानुनस्पती दानपती । | 168. अथापि मित्रावरुणयोरादित्यप्रवादाः स्तुतयो भवन्ति । तद्यथा––'आदित्या दानुनस्पती दानपती । |
| II.83. अथापि मित्रस्यैकस्यादित्यप्रवादा स्तुतिः। | 168. अथापि मित्रस्यैकस्य आदित्यप्रवादा स्तुतिर्भवतीति । |
| II.84. अथापि वरुणस्यैकस्य । 'अथा वयम्' इति नियमः । | 169. अथापि वरुणस्यैकस्यादित्यप्रवादा स्तुतिर्भवति । तद्यथा–'अथा वयमादित्य व्रते तव'–इति । |
| II.84. शुनःशेपो यूपे बद्धो वरुणमाह । | 169,170. अनया त्रिष्टुभोपाकृतः शुनःशेपो वरुणं स्तुतवानात्मानं मोचयिष्यन् । |

II.84. निगमप्रसङ्गादाह–व्रतमिति कर्मनाम,वृणोतीति। कर्तरि सत इति कृतव्याख्यानम्। तद्धि शुभमशुभं वा वृणोति बध्नाति कर्तारम्।

170. निगमप्रसक्तमुच्यते—व्रतमिति कर्मनाम, वृणोतीति। एवं कर्तरि कारके सतो वृणोतेः। तद्धि कर्म शुभमशुभम्वा कृतं सदावृणोति कर्तारम्।

II.85. इदमपीतरद्व्रतम्–गुडलवणस्त्र्यादिविषयनिवृत्तिरूपं कर्म। एतस्मादेव रूपसामान्यात्।

इदमपीतरद् व्रतमेतस्मादेव निवृत्तिकर्म, यमनियमाख्यं बाहिर्वैदिकमान्तर्वैदिकं वा,यदग्निसन्निधावुपेयते।

II.86.उक्तं प्रासङ्गिकम्। प्रकृतमभिधीयते-स्वरादित्यः... सुष्ठु वा ऋतो गतो रश्मिभि रसानादातुम्।... एतेन द्यौर्व्याख्याता। तुल्यनिमित्तत्वात्। तानि चेत् समानकर्माणि समाननिर्वचनानि इत्यस्याः परिभाषाया उदाहरणान्येतानि,अल्पत्वात् स्वयमेव प्रदर्शयति–साऽपि सुष्ठु गता।

170,171.अधुना प्रकृतमेवोच्यते-स्वरादित्यो भवतीति

171. सुष्ठु रसानादातुमृतो गतो भौमानान्तरिक्षांश्च।

172. एतेन द्यौर्व्याख्याता। उक्तं हि 'तानि चेत्समानकर्माणि समाननिर्वचनानि'–इति। सापि हि सु अरणा शोभनगमना भवति। शोभनं वा अस्यामर्यत इत्येवमादि यथासम्भवं योज्यम्।

II.87. अथ द्यौः संस्पृष्टा व्याप्ता ज्योतिर्भिः पुण्यकृद्भिश्च। 'सुकृतां वा एतानि ज्योतींषि यन्नक्षत्राणि' इति श्रुतेः।

172. आह। 'अथ द्यौः' कस्मात् पृश्निरिति। उच्यते। सापि हि संस्पृष्टा ज्योतिर्भिः पुण्यकृद्भिश्च।

II.88. अथ द्यौः। कमिति सुखनाम, तत्प्रतिषिद्धमकं दुःखं पुनः प्रतिषिध्यते, सुखमेवेत्यर्थः। सुखस्थानत्वाच्च सुखमित्युच्यते। प्रतिषेधद्वयोपनिपाते प्रकृत एव गम्यत इति। अस्मिन्नर्थे ब्राह्मणं पठित्वा व्याचष्टे।

172. 'अथ द्यौः'कस्मान्नाकः इति। उच्यते।कमिति सुखनाम। आह, ततः किम्? इति। श्रुणु तत्प्रतिषिद्धं सत्पुनरपि प्रतिषिध्यते। आह। किम्? इति। उच्यते, तत्प्रतिषिद्धयमानम 'अकम्' भवति, असुखमित्यर्थः। पुनरपि च प्रतिषिद्धयमानं नाकं भवति। ततो द्विः प्रतिषेधः प्रकृतिमापादयति। नाकमित्युक्ते सुखमिति प्रतीयते। ब्राह्मणमपि चैतस्मिन्नर्थे भवति।

II.89. विष्टबादित्यो भवति। आविष्टो रसान्। विष्टबादित्यः पृथिव्या रसानादातुमाविष्टोऽभिनिविष्ट इत्यर्थः।

173. 'विष्टबादित्यो भवति'। आह कस्मात्? उच्यते, आभिमुख्येन ह्येष रसान्भौमानान्तरिक्षांश्च विष्टः प्रविष्टो रश्मिभिरादातुम्।

II.89. भासनः सन्नाकारस्य ह्रस्वत्वेन सलोपेन च भनः, भनः सन् नभः।
न न भातीति वा, नकारलोपेन नभः। न न भाति, भात्येवेत्यर्थः।

173. अपि वा भन एव स्याद्विपरीतः। भनो भासनः सन् नभ इत्युक्तो विपर्ययेण।
'न न भातीति वा' न न भाति भात्येवेति नभः।

II. 90. बन्धनप्रतीतेर्यमनादित्याह—एकत्रोदकस्यापरत्राश्वानाम् ।

आदित्यसम्बन्धित्वेनैव दिङ्नियमादाह-दिङ्नामान्युत्तराण्यष्टौ ।

174. रश्मिर्यमनात्, उदकस्याश्वानां वा ।

आदित्योपलक्षणा एव हि दिश इत्यादित्यनामभ्य उत्तराणि दिङ्नामानि ।

II.91. आज्यन्तः शरपथपर्यन्तः काष्ठोच्यते ।

175. आज्यन्तोऽपि शरपथान्तः काष्ठोच्यते । असावपि स्वप्रदेशं क्रान्त्वा स्थितो भवति ।

II.92. शरीरं सामान्येन निराह—शृणातेः हिंस्यते हि तत् ।

176. 'शरीरं शृणातेः' हिंसार्थस्य, हिंस्यते हि तत् ।

II.93. वृत्रशब्दस्य निगमप्रसक्तस्याभिधेयं प्रति विप्रतिपत्तिः, तन्निर्णिनीषया प्रश्नयति तत् को वृत्र इति ।

इह मन्त्रे वृत्र इत्येतच्छ्रुतम् तदेतन्निगमानुप्रसक्तं विचार्यत इत्युपयुक्तस्तच्छब्दः । आह—'को वृत्रः' ।

कथं तर्हि मन्त्रेषु ब्राह्मणेषु च सलिलसंघातमात्रात्मकेन वृत्रेण सह युद्धप्रवादाः ?

अपां रश्मिभिराहृतानां घनीभूतानां वायुनावष्टब्धानामभिहन्यमानानां परस्परसंघर्षे तरुशाखयोरिवाग्निरुपजायते, ततस्तेनोपतप्तानां विलयनं भवति ।

177. यदि मेघो वृत्रो य एषु मन्त्रेषु संग्रामः श्रूयते तत्र तत्र कः समाधिरिति ।

तेन हि वैद्युतेन ज्योतिषा वाय्वावेष्टितेनेन्द्राख्येनोपताप्यमाना आपः प्रस्यन्दन्ते वर्षभावाय प्रकल्पन्ते ।

तस्मादसति युद्धे कल्पनैषा । तथा च कल्पितरूपा मन्त्रवर्णा मन्त्रलिङ्गाः ।

नह्यत्र यथाभूतं युद्धमस्ति । न हीन्द्रस्य शत्रवः केचन सन्ति । मन्त्रोऽपि चैतस्मिन्नर्थेऽस्ति नेन्द्रस्य शत्रवः ।

II.94. यानि युद्धान्यैतिहासिका आहुः, तान्यपि मायैव ।

178. यानि च युद्धान्याहुरैतिहासिका नानारूपाण्युपप्रदर्शयन्तः सापि च तव मायैव ।

II.95. अहिरयनात् गमनात्, एति गच्छत्यन्तरिक्षे । अयमपीतरोऽहिः सर्प एतस्मादेव एतेः । असावपि हि भूम्यामेति ।

179. अहिः कस्मात् ? उच्यते, अयनात् । एति ह्यसावन्तरिक्षे । शब्दसामान्यान्निरुच्यते—'अयमपीतरोऽहिः' सर्प एतस्मादेव । असावपि ह्येति ।

पण्यं नेनेक्ति शोधयति, क्रयविक्रयः स्यादिति ।

180. तदसौ नेनेक्ति नित्यकालं शुचि करोति मूल्यार्हं स्यादिति ।

II.96. ब्राह्मणदृष्टाख्योऽपि निर्वचनप्रकारा इति दर्शयति—'यदिमांल्लोकानावृणोत् तद्वृत्रस्य वृत्रत्वमिति विज्ञायते ।

इत्येषां धातूनामन्यतमस्य । ब्राह्मणमपि चैतस्मिन्नर्थे भवति । 'यदवृणोत्' अन्तरिक्षमुदकं वा महत्त्वात् 'तद्वृत्रस्य वृत्रत्वमिति ।' एवं ...ज्ञायते ।

II.97. रात्रिनामान्युत्तराणि दिङ्नामभ्यस्त्रयोविंशतिः। आदित्यनिमित्तत्वसम्बन्धात् । दिक्सम्बन्धाः श्यामवर्णाः ।

अवश्यमायन्तीत्यवश्यायास्तुषारा इत्यर्थः । ते हि रात्रौ निपतन्ति ।

रात्रेरपरः काल इत्यभिधेयकथनम्'। नास्मात्परं रात्र्यवयवोऽस्ति पञ्चदशो मुहूर्तः ।

II.98. आदित्यो हि तापकः प्रकाशकश्च, चन्द्रमास्तु शीतः प्रकाशकश्च । इदं पुनर्नात्युष्णं नातिशीतं प्रकाशकश्चेत्येवमादित्यादीनामिदमेव श्रेष्ठमागच्छतीत्यर्थः ।

II.98,99.यथा प्रसूता उत्पन्ना उषाः सवितुः सवाय जन्मने, उषसो ह्युत्पत्त्यनन्तरं सविता जायते, तेनेयं तदर्थमेवोत्पन्ना इत्युच्यते । एवमेव रात्रिः प्रसूता उषसे, उषसो जन्मार्थमुत्पन्नेत्यर्थः ।

II.99. तस्या एवोक्तविभागाया उषस एषापरा, अनन्तरा ऋग्भवति ।

II.100. सूर्य उषसो वत्स उच्यते ।

यथा हि वत्सो मात्रा सह चरत्येवं सूर्य उषसा सह ।

यथा वा वत्सो मातुरूधसः पय आख्यं रसं पिबन्नपहरति, एवं सूर्य उषसोऽवश्यायाख्यं रसमुदितो रश्मिभिः शोषयन्नपहरति । अतोऽसावस्या वत्स उच्यते ।

II.101. उपाहरन्त्यनुतिष्ठन्त्यस्मिन् कर्माणि, न तु रात्रावपि कुर्वन्त्येव कर्मकाराः ।

181. रात्रेर्नामानि उत्तराणि-इति प्रकृतेभ्यो दिङ्नामभ्यः । तमःसतत्त्वा हि रात्रिः । तस्य च तमसो दिक्ष्वेवात्मलाभो भवति । अतो दिङ्नामभ्य उत्तराणि रात्रिनामानि ।

अवश्यमायन्तीत्यवश्यायास्तुषारा इत्यर्थः । ते हि रात्रौ निपतन्ति ।

रात्रेरेव ह्यपरः काल उषआख्यो भवतीति रात्रिनामभ्य उत्तराणि उषोनामानि ।

182 आदित्यो हि तापकः प्रकाशकः । चन्द्रमा अप्यतिशीतः प्रकाशकश्च । इदं पुनर्नात्युष्णं नातिशीतं प्रकाशकश्च, इत्येवमादित्यादीनामिदमेव श्रेष्ठम । आगादागच्छतीत्यर्थः ।

183. यथोषा आदित्यस्य जन्मनो हेतुस्तदनन्तरजन्मत्वादेवं रात्रिरुषसो जन्मनो हेतुः, इत्येवमस्यामृचि रात्रेरेवापरः काल उषःसंज्ञित इति गम्यते ।

तस्या उषस एषापरा ऋग् भवति अस्यैवार्थस्य दृढतायै रात्रेरपरः काल उषा उच्यत इति ।

184. सूर्यो हि रोचिष्णुः । तम् 'अस्या वत्समाह' मन्त्रदृक् ।

मातृसहचरो हि वत्सो भवति । अयमपि चानयोषसा सह चरतीत्येतस्मात्सामान्याद् वत्स इत्युच्यते ।

यथा हि मातुरूधसः क्षीराख्यस्य रसस्याहर्ता भवति वत्स एवमेषोऽप्यौषसिकानामवश्यायाख्यानां रसानामाहर्ता भवति रश्मिभिरित्येतस्मात्सामान्याद्वत्सत्वम् ।

185. उपाहरन्त्यस्मिन्कर्माणि, न हि तथा रात्रावनुतिष्ठन्ति कर्माणि कर्मकरा यथाहनि ।

II.101. तस्याहः शब्दस्यैष निपातो नैघण्टुकत्वेन वैश्वानरदेवतायामृचि ।

185. तस्य अन्हः 'एष निपातो भवति' नैघण्टुकवृत्त्या वैश्वानरीयायां वैश्वानरदेवतायामृचि ।

II.103. आ उपरादीनीति वक्तव्ये उभयोरुपादानं रलयोरविशेषत्वप्रदर्शनार्थम् ।

186. 'आ उपर इत्येतस्मात्' इति वक्तव्ये 'आ उपर उपल इत्येताभ्यां' इत्युक्तम् । उभावपि ह्येतौ समाननिर्वचनौ शब्दावेकस्मिन्निरुक्ते निरुक्तौ भविष्यते इति, रलोश्चाविशेषख्यापनार्थम् ।

II.104. तेषां मेघानामुपरशब्दवाच्यत्वे एषा ऋक् । पर्वतनामत्वेऽन्वेष्या ।

187. तेषां मेघानामुपरशब्दवाच्यत्वे विशेषलिङ्गवाचिका एषा ऋग् भवति ।

II.105. सामर्थ्याद् वृष्टिलक्षणान्युदकानि, तदधीना च सृष्टानां देवादीनां स्थितिरिति स्थित्यर्थं प्रथमं मेघाः सृष्टाः ।

188. मेघाभावे हि सर्वमेवेदं जगद्वर्षाभावान्न स्यात् । तस्मादेत···एवाग्रे सृष्टा इत्यभिप्रायः ।

II.106. सारूप्यप्रसक्तमनूपशब्दं निराह-अयमपीत्यादि । इतरो नदीकच्छः समुद्रकक्षो वा देशविशेषोऽनूप उच्यते वपेरेव, अनूप्यतेऽनुप्रकीर्यते ऽनुगृह्यते उदकेन ।

'अयमपीतरः' नद्यनूपः समुद्रानूपो वा । एतस्मादेव वपतेर्धातोः, असावपि अनूप्यते प्रकीर्यते नित्यकालम् 'उदकेन' ।

II.107. प्रसिद्धनदीलिङ्गयोगाद् नद्या इव, प्रसिद्धदेवतालिङ्गयोगाच्च क्वचिद्देवताया इव निगमा दृश्यन्ते ।

तस्य यद्देवतावन्निगमजातं तदुपरिष्टाद् द्वादशे 'पावका नः सरस्वती' इत्यत्र व्याख्यास्यामः ।

189. तत्र तस्मिन्सप्तपञ्चाशत्के वाङ्नामगणे सरस्वतीत्येतस्य नाम्नो 'नदीवद्देवतावच्च निगमा भवन्ति' । नद्यर्थयुक्ताश्च देवतार्थयुक्ताश्चेत्यर्थः । तत्रैवं सति यदभिधानं देवतावत् तदधिकृत्य उपरिष्टाद्-व्याख्यास्यामः षोडशेऽध्याये 'पावका नः सरस्वती' इत्येतस्मिन्मन्त्रे ।

II.109. माध्यमिकाभिधानपक्षे—गिरयो मेघाः, ऊर्मयः स्तनयित्नवः, पारावते द्यावापृथिव्यौ । हन्तिर्गतिकर्मा । गमनेन पूरणं लक्ष्यते । द्यावापृथिव्यौ शब्देन पूरयित्रीम् । शेषं समानम् ।

मेघेभ्यो वाक् तदनन्तरमुदकमिति वाङ्नामभ्य उत्तराण्युदकनामानि एकशतम् ।

192. देवतापक्षे विनियोगानुविधानाभिप्रायेण सरस्वती माध्यमिका वाक् । सा गिरीणां मेघानां सानूनि भजत्यूर्मिभिः स्तनयित्नुभिः पारावारे द्यावापृथिव्यौ हन्तीति योज्यम् ।

मेघाश्रया हि वाक्, मेघोत्थं चोदकं स्तनयित्नुशब्दपूर्वकश्चेति वाङ्नामभ्य उत्तराण्युदकनामानि ।

II.110. तत्सम्बन्धार्थमाख्यानं तावत् प्रस्तौति ।

193. यस्मिन्सूक्ते प्रधाना नद्य एव, तत्रेमं निदानभूतमितिहासमाचक्षते वदन्त्याचार्याः ।

II.110. इतरे धनस्य वोढारो विश्वामित्रस्यानुचराः, तस्करा वा । पिजवनपक्षे सैनिकाः ।

193. इतरे तदनुयायिनस्तस्करा वा ।

II 111. उपोपसर्गो रमिणा सम्बध्यते, तत्पूर्वकश्च रमिरुपसंहारे वर्तते । उपरमध्वं महतो वेगादगाधोदकत्वाच्च ।

194. 'उपरमध्वं मे' उपेत्ययमुपसर्गो मन्त्रस्य मध्यादाकृष्य भाष्यकारेण रमध्वमित्यनेन क्रियापदेन योजितः ।

सामान्येन नदीषूच्यमानासु समीहितं प्रयोजनमकुर्वतीषु प्राधान्याद् विशेषेण सिन्धुमाह ।

195. यदैवमविशेषेणोच्यमाना न शुश्रुवुस्तदैकामुद्दिश्य प्रवर्तते वक्तुम् । प्रसिन्धुमच्छ ।...

II.112. कुशिको राजा इत्यभिधेयवचनम् । क्रोशतेः शब्दार्थस्येति निर्वचनम् । विहितं कुरुत प्रतिषिद्धं मा कार्ष्ट-इत्येवं सर्वदा शब्दं करोत्यनुशास्तीत्यर्थः ।

'कुशिको राजा' इति तत्त्ववचनम् । 'क्रोशतेः' वा शब्दार्थस्य, स हि साध्वेव क्रियतामित्येवं नित्यकालमेव क्रोशयति ।

II.113. तस्मिन् हते आपः पतिताः, ताभिर्गच्छन्तीभिर्वयं खाताः । एवं मेघहननद्वारेणास्मानखनत् ।

196. स हि निपतन्तीरपो निरुणद्धि । तमिन्द्रो वज्रेण हन्ति, तस्मिन्हते पृथिवीं प्राप्यापो यथा निम्नानुसारिण्यः खातानि कुर्वत्यो वहन्ति । तैः खातैर्वयं गच्छामः ।

II.115. यथा वा मर्यायेव मनुष्यस्य पितुर्वाऽर्थाय कन्या कुमारी कन्यला, शश्वचै ते, स्वजेरेतद्रूपम्, परिष्वजनार्थे प्रह्वीभवेत् तथा वयमपीति । ते तवार्थायेत्युक्तार्थम् ।

198. मर्याय मनुष्याय कन्या नवोढा 'शश्वचै ते' परिष्वजनाय । कथं नाम परिष्वजेत मामयमित्यभिप्रायेण यथा सा निनमेदेवं वयं तव निनमाम ।

II.116. अश्वं निराह—अश्नोतेः, व्याप्नोति ह्यध्वानमन्येभ्यः शीघ्रम् ।

आह 'अश्वः कस्मात्' ? उच्यते, स हि 'अश्नुतेऽध्वानं' व्याप्नोतीत्यर्थः ।

दधदाकारी भवति-अधिष्ठित ईषदवनतमध्यभागः, उद्धृतकन्धरः कुञ्चितघोणः, स्तिमितचक्षुः, कर्णशुक्तिस्वकारो भवति ।

स ह्यधिरूढेऽश्वारोहे आकुञ्चितग्रीवो विपुष्पितसर्वगात्र आकृतिमान् भवति ।

II.118. आपनीफणत् 'फण गतौ' इत्यस्य चर्करीतवृत्तं यङ्लुगन्तमिति, क्रियाभ्यासविषयमित्यर्थः ।

200. आपनीफणादिति फणतेः, गत्यर्थस्य चर्करीतान्तत्वेन वृत्तम् ।

अश्वसम्बन्धेनोच्यते—'दशैतेभ्य उत्तराण्यादिष्टोपयोजनानि' । आदिष्टा निर्दिष्टा उपयुज्यन्तेऽस्मिन्ननेन वेत्युपयोजनम्, इन्द्रादिर्देवताविशेषोऽनिर्दिष्टसम्बन्धीत्यर्थः ।

दश यानि उत्तराणि नामानि, तान्यश्वनामसम्बन्धेनैवोच्यन्ते । तान्यपि ह्यश्वानामेव । तानि पुनः 'आदिष्टोपयोजनानि' इति एवमाचक्षत आचार्याः । इदमिन्द्रस्याश्वानां नामेदमग्नेरिदमादित्यस्य,—इत्येवमादिष्टोपयोजनानि ।

II.119. अध्यायपरिसमाप्तिसूचनाय सर्वत्राभ्यासः श्रुतौ तथा दर्शनात् ।

201. अध्यायपरिसमाप्त्यर्थो द्विरभ्यासः ।

II.120. ज्वलनधर्मसम्बन्धादाह–कर्मनामान्युत्तराण्येभ्यः षड्विंशतिः ।
कर्मणो हि प्रधानं दृष्टादृष्टार्थत्वादपत्यलक्षणं फलम्, अतस्तदनन्तरमपत्यनामान्याह ।

203. ज्वलत्येव ह्यग्नौ कर्माणि क्रियन्त इति ज्वलन्नामभ्य उत्तराणि कर्मनामानि ।
सर्वकर्मणां ह्यपत्योत्पादनकर्मैव प्रधानमृणापाकरणद्वारेणेति कर्मनामभ्य उत्तराण्यपत्यनामानि ।

II.121. पुरा वसिष्ठो हतपुत्रः पुत्रं याचमानः कृतकादीनामन्यतमं पुत्रं कुर्वित्यग्निनोक्तस्तं प्रत्याह ।

204. वसिष्ठाग्निसंवादे वसिष्ठेन हतपुत्रेणाग्निरभ्यर्थितः, पुत्रं मे देहीति । तेन किलासौ प्रत्युक्तः, क्रीतक-कृत्रिम-दत्तकादीनां पुत्राणामन्यतमं कुरुष्व पुत्रमिति । स एवमुक्त एताभ्यामृग्भ्यामन्यजान्पुत्रान्निन्दन्नौरसं पुत्रं ययाचे ।

II.123. अभीषाट्–अभिभविता च सपत्नानाम्, त्वत्प्रसादात्, एतु–आगच्छतु नव्यः–नवजातः, औरसः पुत्र इत्येतद् वयमाशास्महे ।

206,207. अभीषाट् अभिषहमाणःअभिभवन् सपत्नान् नव्यो नवजातः । शिशुरित्यर्थः'स एव पुत्रः' आगच्छतु । किं नः परकीयैः पुत्रैः सङ्कल्पितैरित्यर्थः ।

II.124. एतां वक्ष्यमाणामृचं दुहितुर्दायादत्व उदाहरन्ति केचिदाचार्याः ।
एतस्मिन्नर्थे पुत्रदायाद्य इत्येके ।

एतामृचं शासद्वह्निरित्यादि या वक्ष्यमाणा ताम्, दुहितृदायाद्येऽर्थे उदाहरन्ति धर्मविदः ।······
पुत्रदायाद्य इत्येके । एके पुनर्धर्मविदो मन्यन्ते यत्पैतृकं वित्तं तत्पुत्रस्यैव दायाद्यं न दुहितुरिति।

II.126. दोग्धेर्वा, सुखितापि सती सर्वदा दोग्धि वस्त्रालङ्कारादि पितृकुलम् ।
उक्तस्यैवार्थस्य द्रढिम्नः कारणमाह–तदेतदृचा श्लोकेन चाभ्युक्तमिति ।

208. 'दोग्धेर्वा' सा हि नित्यमेव पितुः सकाशाद् द्रव्यं दोग्धि प्रार्थनापरत्वात् ।

210. तदेतदनेनापि स्पष्टार्थतरेण मन्त्रेणोच्यत इति पूर्वस्यास्पष्टार्थतायां स्पष्टार्थीकरणार्थोऽयं मन्त्रः"
न दुहितरो दायाद्यमर्हन्तीत्येवमेके धर्मविदो मन्यन्ते ।

II.127. दुहितरो दायं नार्हन्ति । कस्मात ? अपत्यकार्याभावात् । अनपत्या एव स्त्रिय इति ।···
तस्मात्पुमान् दायादो दायार्हः, अदायार्हा स्त्रीत्येतस्मिन् ब्राह्मणे विचार्यमाणे ज्ञायते ।

एतस्मिन् ब्राह्मणे विचार्यमाणे ज्ञायते, न दुहितरो दायाद्यमर्हन्ति, पुमानेवार्हतीति ।

II.127,128. विक्रयो वैवाहिकेन शुल्केन ।'नाल्पो वा बहुर्वा पुत्रे विक्रयः । तावदेव सः' इति स्मरणात् ।

211. स्त्री विक्रीयते च वैवाहिकेन शुल्केन ।
"विक्रयं चाप्यपत्यस्य मतिमान्कोऽनुमंस्यते स्वल्पो वाथ बहुर्वापि विक्रयस्तावदेव सः ।"
इति भगवता वासुदेवेनोक्तं सुभद्राहरणे ।

II.128. अतिसर्गोऽपि विश्वामित्रेण कृतः श्रूयते ज्यायसो मधुच्छन्दसः ।
अतः शासनवचनात् अभ्रातृकाविषये पुत्राभावे तत्स्थाने स्त्र्यपि पुत्रः स्यादित्याशास्यम् ।

II.129. अस्मिंश्च पक्षे निगममपि दर्शयति ।
'…अभ्रातर इव योषास्तिष्ठन्ति हतवर्त्मनः॥'
अयमाथर्वणे वेदे मन्त्रः ।
स्त्रीणां लोहितवाहकव्याधिव्यावृत्त्यर्थं कर्मणि विनियुक्तः ।

II.130. गर्तारुगिव-यथा दक्षिणापथे क्वापि प्रदेशे अपुत्रा अपतिका वा अपस्मारा रोहिणी स्त्री, सनये लाभाय धनानाम्, भर्तुः स्वभूतानां, सर्वलोकप्रकाशमास्फारं गच्छति तद्वत् ।

II.131. सत्यं हि तत्र संगीर्यते । कथम् ? पुनर्देविष्यामीति कृतमातृहस्तग्रहणादिना कृतशपथेऽपि व्यसनेनैवाकृष्यमाणो गीत्य शपथं खादयित्वा दीव्यत्येव कितवः, सङ्कर इत्यन्ये पठन्ति. संकीर्यते हि तत्र सत्यमनृतेनानेकविधेन ।
श्मशानस्य गर्तवाच्यत्वे निगमः ।

II.132. अथवा नाभ्रात्रीमुपयच्छेत, अपत्यलिप्सया। उक्तकारणत्वाद् दृष्टार्थत्वेन प्रतिषिध्यते ।

ततश्च 'शासद् वन्हिः'इत्ययमर्धर्चोऽभ्रातृमतीविषय एव व्याख्येयो न दुहितृमात्रविषय इति निश्चयः ।

II.133. प्रथमकृतायां तु पुत्रिकायां यदौरस उत्पद्येत, तदा तत्रापि ज्येष्ठांशभागित्वं पुत्रिकाया इत्येके स्मरन्ति ।

II.134. न, जामये भगिन्यै, तान्वः तनुभवः औरसः पुत्र इत्यर्थः । रिक्थं पित्र्यं धनम्, आरैक् प्रारिचत् प्रादात् ददातीत्यर्थः ।

212. तथा च परित्यागोऽपि दृष्टो यथा विश्वामित्रेण मधुच्छन्दआदीनाम् ।
यैवाभ्रातृका भवति कन्या, सैव पित्र्यं धनमर्हति, नेतरा सभ्रातृका ।
निगममप्येतस्मिन्नर्थे उदाहरन्ति, 'अभ्रातर इव योषास्तिष्ठन्ति हतवर्त्मनः' इति ।

प्रसवमार्गवहनरोगिणी या स्त्री भवति तस्यास्तत्प्रतीकारकर्मणि विनियुज्यते ।

214. गर्तारोहिणीव काचिद्दाक्षिणात्या स्त्री, सा यथा गर्तः सभास्थाणुस्तमारोहति………सनये लब्धये धनानाम् ।

215. स हि 'सत्यसङ्करो भवति' । सङ्कीर्यते हि तत्र सत्यमिदमत्र पतितमिदमत्र न पतितमित्येवम् । प्रायेण कितवास्तत्रानृतं ब्रुवते ।

216. निगममपि चात्रोदाहरन्ति 'श्मशानसञ्चयोपि गर्त उच्यत' इति ।

217. अयमस्मिन्वाक्ये' नाभ्रातृकामुपयच्छेत' इति प्रत्यक्ष एवोपयमनप्रतिषेधो विवाहार्थे पाणिग्रहणप्रतिषेध इत्यर्थः ।

218. अधुना योऽसौ शासद्वन्हिरित्यस्या ऋच उत्तरोऽधर्च उत्कृष्टः, स एवाभ्रातृकावादपक्षेणैव निरुच्यते ।

219. यदोत्सृष्टायां पुत्रिकायां पुत्रिकापितुरन्ये पुत्रा जायेरंस्तदा विभागकाले ज्येष्ठं भागं पुत्रिकायै च दद्यात् ।

220. न जामये भगिन्यै तान्व आत्मजः । आत्मनो धियो जातः स आत्मजः । स किं करोति ? इति । 'रिक्थमारैक्' रिक्थं पैतृकं धनं न प्रादान्न प्रददाविति

II.136. अपत्यसम्बन्धादाह—'मनुष्यनामान्युत्तराणि पञ्चविंशतिः'–मनुष्या नर इत्यादीनि ।

II.137. तत्र पञ्चजना इत्येतस्य सन्दिग्धस्य विवेकार्थे निगमाः ।

II.138. सौचीकस्याग्नेर्विश्वेषां देवानां संवादः । होतृजपश्चायम् ।

II.138,139. अस्ता वा क्षिप्ताः स्थानेभ्यो लोकेभ्यः । 'ते देवा असुरान प्राणुदन्त'–इति श्रुतेः ।

II.139. एवम्, असोः अप्रशस्ताद्देशादसुरान् । 'जघनादसृजत' इति विज्ञायते । ऊर्ध्वश्च नाभेः पुरुषस्य मेध्यत्वस्मरणात् ।

निषादः कस्मात् ? निषद्य हन्तीति निषादः, प्राणिवधजीवकः, प्रतिलोमजन्मा कश्चित् । सौधन्वना रथकारा निषादशब्दवाच्या इत्यन्ये । 'वर्षासु रथकारस्य' 'एतया निषादस्थपतिं याजयेत्' इत्येवमादिदर्शनात् । 'सौधन्वना ऋभवः' इति मन्त्रवर्णात् ।

II.140. सम्प्रत्यसाधारणं मनुष्यमात्रनामत्व एव निगमं दर्शयति ।

पञ्च–इति निर्वाच्यम्, पृक्ता इति निर्वचनम्, संख्या इति विषयकथनम्, सम्बन्धात्सर्वलिङ्गैरित्याह—लिङ्गत्रययोगेऽप्यविशिष्टेति ।

II.141. मनुष्यसम्बन्धादुच्यते–अथ बाहुनामान्युत्तराणि द्वादश आयती,च्यावाना,इत्येवमादीनि।

II.142. इयमपीतरेति सारूप्यप्रज्ञादाह युग दिसम्बन्धीनि । विहन्ति वहं स्कन्धमनडुहोऽश्वस्य वा ।

II.143. कान्तमप्यङ्गुलीभिरेव क्रियत इत्याह–कान्तिकर्माण इच्छार्था धातव आख्यातान्यष्टादश ।

221. मनुष्याणां नामानि मनुष्यनामानि । उत्तराणि प्रकृतेभ्योऽपत्यनामभ्यः, अपत्यान्येव हि विवृद्धानि सन्ति मनुष्या इत्युच्यन्ते ।
तत्र पञ्चजना इत्येतस्य निगमा भवन्ति सन्दिग्धाः । तत्रेयमृगुदाहरणम् ।

222. सौचीकस्याग्नेरार्षम् । तस्य विश्वैर्देवैः संवादः । तत्रेयं होतृजपे विनियुक्ता ।

223. अथ'वा अस्ताः स्थानेभ्यः' प्रच्याविता देवैरित्यर्थः ।
एवमेव प्रातिलोम्येन । 'असोरसुरानसृजत' असुरिति प्रशस्तप्रतिषेधः । अप्रशस्तादात्मनः प्रदेशात् प्रजापतिरसुरानसृजत ।
निषद्य हन्तीति प्राणिवधजीवनः ।

223,224. निषादः सौधन्वना इत्येके मन्यन्ते । स च रथकारः । तस्य हि भिन्नकालमाधानं श्रूयते । 'वर्षासु रथकारः' । 'ऋभूणां त्वा' इति रथकारस्येति च मन्त्रभेदः । 'सौधन्वना ऋभवः' इति च मन्त्रलिङ्गात् ।

224. यथा तु पञ्चजनशब्देन मनुष्या एव निषादपञ्चमा वर्णा उच्यन्ते, तथैष निगमः ।

225. तद्यथा–पञ्च स्त्रियः, पञ्च पुरुषाः,पञ्च कुलानीति । एवं पञ्चशब्दे स्त्रीपुन्नपुंसकेषु विशेषो नास्ति ।
मनुष्याणामेव हि बाहवो भवन्तीति मनुष्यनामभ्य उत्तराणि बाहुनामानि ।

227. 'इयमपीतरा धूः' अनुडुदादिसम्बन्धिनी । एतस्मादेव धातोर्वधकर्मणः । सापि हि 'विहन्ति वहम्' अनडुहोऽश्वस्य वा ।
यदपि ह्यकान्तं भवति तदप्यङ्गुलीभिरेव कान्तं क्रियत इत्यतोऽङ्गुलीनामभ्य उत्तरे कान्तिकर्माणः समाम्नाताः ।

II.143. बलवतां धनसम्बन्धादाह धननामान्युत्तराण्यष्टाविंशतिरेव ।

228. य एव हि बलवन्तो भवन्ति त एव धनं प्राप्नुवन्ति—इति बलनामभ्य उत्तराणि धननामानि ।

II.144. गोमिनां धनवतां च क्रोधः सम्भवतीत्याह—क्रुध्यतिकर्माणो धातवो दश ।

229. धनार्थमेव हि गवार्थे च क्रोधो भवतीति गोनामभ्य उत्तरे क्रुध्यर्थाः समाम्नाताः ।

क्षिप्रसम्बन्धादन्तिकत्वम्याह—अन्तिकनामान्युत्तराण्येकादश ।

230. य एव हि क्षिप्रं गच्छति स एवाभिप्रेतस्यार्थस्यान्तिके समीपे भवतीति क्षिप्रनामभ्य उत्तराणि अन्तिकनामानि ।

सन्निकृष्टानामेव संग्रामो भवतीत्याह-संग्रामनामानि षट्चत्वारिंशत् ।

अन्तिकीभूतानामेव हि संग्रामो भवतीत्यन्तिकनामभ्य उत्तराणि सङ्ग्रामनामानि ।

II.146. खले न पर्षान्-यथा खले पर्षान्, 'पॄ पालनपूरणयोः' इत्यस्येदं रूपम् । कर्षस्य पूरयितॄन गोधूमादीन बलीवर्दः पादैः, एवं प्रतिहन्मि भूरि बहूनपि ।

232. 'खले न पर्षान्' गाह्यमाने हन्यमाने । गम्यमानोऽत्र एकः खलशब्द उपमानमुपमासम्बन्धात् । यथा खले खलस्थाने कर्षकेण पर्षान्बहूनपि सञ्चितान्पूलानप्रतिबन्धेन क्षुद्येरन्, एवमहमपि भूरीनपि शत्रून्'''हन्मि ।

II.147. सम्प्रति प्रसङ्गादाह—चत्वारश्चलिततमा, पूर्वापेक्षया ।

233. प्रसक्तानुप्रसक्तमुच्यते'चत्वारश्चलिततमा संख्या' त्रिभ्यः सकाशात् ।

II.148. नव न वननीया, असंभजनीया, अमङ्गल्या हि सा, यतो लोकस्तां परिहरति ।

'नव' इति या संख्या, सा न वननीया न सम्भजनीया भवति । नवसंख्यायुक्तायां हि तिथौ न कश्चिदप्यारम्भः क्रियते ।

सम्प्रत्यर्बुदशब्दनिर्विवक्षया सारूप्यादम्बुदशब्दं निराह ।

अथार्बुदशब्दनिर्विवक्षया अम्बुशब्दं निर्वक्ति ।

II.149. तत्रापि हि संमथ्यन्ते क्षुद्यन्ते सस्यानि । स्खलन्तीति वा स्खलन्ति त्वरमाणास्तत्र कर्षकाः ।

233,234. अयमपीतरः खलो धान्यखल एतस्मादेव । तत्रापि हि भ्रश्यन्ति चूर्ण्यमानानि धान्यानि । हिंस्यन्ते वा, चूर्ण्यन्त इत्यर्थः ।

संग्रामे परस्परं व्याप्तेः व्याप्तिकर्माण उत्तरे धातवो दश ।

234. संग्रामे हीतरेतरं व्याप्नुवन्ति योधा इति संग्रामनामभ्य उत्तरे व्याप्तिकर्माणः ।'''

II.150. तत्राखण्डलशब्दस्यात्र वक्तव्यस्य तडिच्छब्दात् पूर्वं निगमेन नामत्वं दर्शयति ।

'आखण्डलः' इत्येतदपि नामैव । निगममपि चात्र दर्शयति ।

यतश्चैतदेवमतोऽन्तिकवधलक्षणे कर्मणि अस्य तत्संसृष्टकर्म ।

235. तडिदित्येतच्छब्दरूपमन्तिकाभिधायि वधाभिधायि चेत्येकमेव ह्येतदुभाभ्यामर्थाभ्यां सम्प्रयुज्यते ।

II.152. वधसाधनत्वाद् वज्रस्य तन्नामान्यष्टादशेत्याह ।

237. यो हि हन्यते स वज्रेणैवेति वधकर्मभ्य उत्तराणि वज्रनामानि ।

वर्जयतीति सतः । वर्जयति प्राणैरिति केचिद् वाक्यशेषमध्याहरन्ति ।

238. वर्जयति वियोजयति प्राणैः प्राणिनः ।

II.153. तदृषिसहित इन्द्रः शुष्णं शोषयितारमसुरं मेघं वोदकाप्रदानेन सस्यं, हतवान । स च स्तुत्या वीर्यविवृद्धिं कुर्वन् मेघवधे साहाय्य-कर्म प्रतिपद्यते ।

तेन स्तूयमानो विवृद्धबलः शुष्णं शोषयितारं रसानामसुरं मेघं वा जघान । मेघो हि शुष्णः, तदुदये हि धान्यान्युदकग्राहनिमित्तेन शुष्यन्ति ।

II.154. तत्र स्थित इन ईश्वरो विश्वस्य सर्वस्य भुवनस्य भूतजातस्य, गोपा गोपायिता च ।

240. इन ईश्वरः, इनो ह्यसावादित्य ऐश्वर्येण भवति । विश्वस्य भुवनस्य भूतस्य भवति । किञ्च गोपा गोपायिता ।

II.155. अथवोपनिषद्वर्णता ।

यद्विज्ञानमुपगतस्य सतो गर्भजन्मजरामृत्यवो विनिश्चयेन सीदन्ति सा रहस्या विद्योपनिषदि-त्युच्यते । उपनिषद्भावेन वर्ण्यत इति उप-निषद्वर्णः ।

II.156. ईश्वराणामेव बह्वित्याह—'बहुनामान्युत्तराणि द्वादश' ।

242. ईश्वराणामेव बहु भवतीति—ईश्वरनामभ्य उत्तराणि बहुनामानि ।

ह्रस्वविपर्यप्रसङ्गादाह—महन्नामानि पञ्च-विंशतिः ।

243. ह्रस्वसम्बन्धेनैव—'महन्नामान्युत्तराणि पञ्च-विंशतिः' ।

II.158. यावद्वा प्रक्षिप्यते तत्सर्वं गृह्णन्ति दुष्पूरत्वात् ।

ते हि यावदेव किञ्चिदाह्रियते, तत्सर्वमेव गृह्णन्ति दुःपूरत्वात् ।

II.159. सुखिनामेव प्रायेण रूपवत्त्वाद् रूपनामा-न्याह ।

244. य एव हि सुखिनस्त एव रूपवन्तो भवन्तीति सुखनामभ्य उत्तराणि रूपनामानि ।

प्रज्ञावतां प्रायेण सत्यमित्याह—सत्यनामानि षट्-बट्-श्रत्-इत्यादीनि ।

245. य एव हि प्रज्ञावन्तस्त एव हि सत्यवादिनो भवन्तीति प्रज्ञानामभ्य उत्तराणि सत्यनामानि

II.162. लोके वेदे च गवादिरर्थः प्रसिद्धः, अप्र-सिद्धस्य गवयमन्युप्रभृतेरवयवक्रियागुणसा-मान्येन परिच्छेदाय पारार्थ्येनोपादीयमान उपमीयते ।

246. 'तदासां कर्म' स आसामुपमानामर्थो यद-प्रसिद्धतरगुणस्य कस्यचित्प्रसिद्धतरगुणेनान्येन गुणप्रकाशनम् ।

II.163. अतिशयप्रशस्तेनोत्कृष्टगुणेन प्रदर्शनमेतत् क्रियादौ कनीयांसमतिशयेनाल्पं निकृष्टमित्यर्थः ।

ज्यायसा उत्कृष्टेन गुणेन यो यस्मिन्द्रव्य उत्कृष्टो गुणस्तेन कनीयांसमनुत्कृष्टगुणमुपमि-मीते ।

II.165. सन्ततं कर्म स्तेयमस्येति, तनोतेः कर्मशब्दाच्च तस्करः । तच्च सन्ततकर्मत्वं दर्शयति-'अहोरात्रकर्मेति' । अहनि पथि मोषणेन, रात्रौ सन्धिच्छेदनेन ।

II.166. अत्रापि निकृष्टनियोगकर्मणा देवरेण प्रशस्तावाश्विनौ, विधवया चाप्रशस्तया प्रशस्तकर्माणं यजमानम्, कनीयसा ज्यायांसमुपमिमीत इति ।

विधवनाद्वा—'धूञ् कम्पने' पतिमरणदुःखादितत्वादसौ वेपते ।

II.168. दीक्षितस्योपतापे शीतोष्णा अपः समानीय एकविंशतिमासु यवान् प्रक्षिप्य कुशपिञ्जूलांश्चावधाय ताभिराप्लावनेऽस्या विनियोगः ।

आत्मशब्दं निगमप्रसक्तं निराह—'आत्मा अततेर्वा,' अतनं गतिः, तननात् सर्वं हि तेन ततम्, विभुत्वात् सर्वग इत्यर्थः ।

II.169. 'अग्निर्न ये' समाम्नायक्रमान्न शब्दस्योपमार्थत्वमिह प्रकरणे । पूर्वत्र 'दुर्मदासो न सुरायाम्' इति प्रसङ्गादुक्तम् ।

II.170. 'चतुरश्चिद्ददमानात्' अत्र चिच्छब्द उपमायाम् । पौनरुक्त्यं चोदितं परिहृतश्च ।

II.171. यथा चतुरोऽक्षान् ददमानाद्धारयतः कितवादितरः कितवः किमयं तत् पातयिष्यति येन मामयं जेष्यतीति एवं बिभेति ।

हविर्धानस्यार्षम् । अग्निरुच्यते ।

II.172. स एव भासाम्–नक्षत्रप्रदोषःप्रभृतीनां जरयितृत्वाज्जार आदित्यः । तथाप्येष निगमः ।

248. स हि 'सन्ततकर्मा भवति' । रात्रौ ग्रामे मुष्णाति, दिवाऽरण्य एवम्–'अहोरात्रकर्मा' एतदेव च तत्सन्ततकर्मत्वम् ।

249. एवमस्यामृचि देवरेण कनीयसा ज्यायांसावश्विनावुपमीयेते, विधवया च यजमानः ।

250. 'विधवनाद्वा' सा हि भर्तृमरणेन विधूता कम्पितेव भवति ।

251. एतेन पुनरुपतप्तो दीक्षित एकविंशतिभिर्यवदर्भपिञ्जूलमिश्राभिरद्भिरभिषिच्यत उपतापशान्त्यर्थम् । अनेनैव सूक्तेनाग्निचयनक्षेत्रं ग्राम्यारण्याभिरोषधिभिर्व्युप्यते ।

252. निगमप्रसक्तमुच्यते–'आत्माततेर्वा' सर्वमेव हि तेनाततं भवति सर्वगतत्वात् ।

अत्र 'अग्निर्न य'—इत्यस्य निघण्टुसूत्रस्य 'दुर्मदासो न सुरायाम्' इत्यनेनैव गतार्थतेति मन्यमानाः केचिदत्र निगमं नाधीयते ।

253. चिदित्ययमपरो निपात उपमार्थीयो भवति । पुरस्तादप्ययमुक्तः—'दधिचिदित्युपमार्थे' ।

254. चतुरोऽक्षान् धारयमाणात् कितवात् कितवो बिभीयात् किमपि पतिष्यते तदन्यद्वा किञ्चिद्येन मामयं जेष्यतीति । निहितेषु न तथा भयम्भवति यथा कितवस्य प्राङ् निधानात् ।

255. अङ्गपुत्रो हविर्धान एतया जगत्या अग्निमस्तौत् ।

256. यथादित्यो जारशब्देनोच्यते, 'तथापि' अयं निगमो भवति ।

II.173. यद्यपि पौष्णे सूक्ते पठ्यमानत्वात् पौष्णीयमृक्, तथाप्यादित्य एवोत्तरावस्थः पूषा न वस्त्वन्तरमित्यविरोधः।

मेष इत्यादि । भूतशब्देनोपमोच्यत इति भूतोपमा।

II.174. प्रसङ्गात् सामान्येन पशुं निराह तेनैवोक्तेन प्रकारेण पशुः पश्यतेः, पश्यत्येव, निर्बुद्धिरित्यभिप्रायः।

II.175. था इत्यस्योपमायामुदाहरणम्।

II.176. इमथेति निगमप्रसक्तस्य प्रकृतिं निराह—अयमेततरः—आगततरः, आगततर इव भवति।

II.177. असावित्यप्रसङ्गेनाह—अमुथेत्यादि।

वदिति सिद्धोपमा। सिद्धा प्रसिद्धा उपमा—ब्राह्मणवदधीयते तेजस्विनः, अक्रोधना वा। वृषलवत् परिचरन्तीति लौकिकमुदाहरणम्।

II.179. प्रस्कण्वः कण्वस्य पुत्र इत्यर्थकथनम्। प्रोऽपत्यार्थेऽत्र प्रयुक्तः।

"ब्रह्मणोऽप्सरसं दृष्ट्वा रेतश्चस्कन्द कर्हिचित्॥
तत्परीक्ष्य सवर्णो न स जुहाव विभावसौ।
ततोऽर्चिषोऽभूद् भगवान् भृगुरङ्गारतोऽङ्गिराः॥"

II.180. उत्पत्तिप्रसङ्गादाह—विखननादग्निस्थानस्य वैखानसः।

II.181. लुप्तोपमानि—लुप्ता उपमा येषु तानि पदानि वाक्यानि व्याख्यायन्त इति शेषः। तानि चार्थोपमानीत्याचक्षते आचार्या लौकिका वा।...

अथवा—अर्थ एवोपमा येषु तान्यर्थोपमानि।

II.182. यथा श्वा काको वा आहारार्थमातुर इतश्चेतश्च धावति, तद्वदिति प्रतीयते।

257. आदित्यो हि पूषा। 'अथ यद्रश्मिपोषं पुष्यति, तत्पूषा भवति' इति हि वक्ष्यति।

258. 'मेष इति भूतोपमा'—मेष इत्येषा भूतशब्देनोपमा।

पर्यायप्रसक्तमुच्यते। 'तथा पशुः पश्यतेः' इति, पश्यति ह्यसौ।

260. था—इत्ययं चोपमाशब्दः।

262. इमथेत्येतस्मात्प्रसक्तमुच्यते। अयम्, इत्यस्य शब्दस्य का व्युत्पत्तिरिति। 'एततरः' ह्यागततरः—आसन्नतरः।

असावित्येतस्मात्प्रसक्तमुच्यते—'अमुथा...'।

'वदिति' एषा सिद्धोपमा। सिद्धैवैषोपमा लोके। आह—कथं कृत्वा। उच्यते—ब्राह्मणवद् वृषलवत्। ब्राह्मणवदधीते, वृषलवच्चाक्रोशतीति।

263. 'प्रस्कण्वः कण्वस्य पुत्रः। प्रशब्दस्य तद्धितार्थत्वं निराह, 'कण्वप्रभवः'। कण्वस्यापत्यमित्यर्थः।

प्रजापतिना किल शुक्रमात्मीयमादायाग्नौ हुतम्। ततः 'अर्चिषि' ज्वालायां भृगुर्नाम महर्षिः सम्बभूव।...

व्युदुह्याग्निं तस्मिन्नग्निस्थाने खाते य उत्पन्नः सः 'विखननाद्वैखानसः' एवं नाम्ना अभूत् बभूव।

264. अथेदानीं येषु पदेषु लुप्यन्त उपमाशब्दा इवादयस्तान्यवसरप्राप्तानि व्याख्यास्यामः। तानि पुनरेतान्यर्थोपमानीत्येवमाचक्षत आचार्याः।

265. अर्थतो लिङ्ग्यन्त इत्यर्थोपमा इत्युच्यन्ते।...

यो हि लौल्यादिदोषसमन्वयेन कुत्सनीयो भवति स एवमुच्यते—'श्वायमिति'।

| | |
|---|---|
| II.182. काक इति शब्दानुकृतिः, तदीयशब्दानुकरणनिमित्तमेवास्यैतन्नामधेयमिति दर्शयति-एवमपीति । | 265. अनुकरणमनुकृतिः। शब्दस्यानुकृतिः शब्दानुकृतिः। यादृशमेवासौ शब्दं करोति तयैवानुकृत्या तस्य नामापि भवति । |
| II.183. श्वा शुयायी, शु इति क्षिप्रनाम, शुपूर्वस्यायतेर्णिनिः, शीघ्रगामीत्यर्थः । व्यादाय वा-विवृत्यास्यं विविधं वादायाकृष्य हन्तीति । | 266. 'श्वा शुयायी'। शु इति क्षिप्रनाम। क्षिप्रमसौ शीघ्रत्वादेतीति श्वा । 'व्यादाय हन्तीति वा' स किल व्यादाय वक्त्रं विवृतं कृत्वा ततो हन्ति । |
| II.184. प्रायेणार्चित उपमीयत इत्युपमानानन्तरमर्चतिकर्माणः। मेधाविन एव स्तोतुं समर्था इत्याह—स्तोतृनामानि । | 268.पूजायामवश्यंभाविन्युपमेत्युपमाशब्देभ्योऽनन्तरमर्चतिकर्माणः समाम्नाताः । य एव मेधाविनस्त एव स्तोतुं शक्नुवन्तीति मेधाविनामभ्य उत्तराणि स्तोतृनामानि |
| II.185. ऋत्विग्भिर्यजतीति वा याज्याभिप्रायः। स्तेनः संस्त्यानमस्मिन आश्यानं संघातं पिण्डीभूतं बह्वित्यर्थः। पापकं हननहरणादिनिमित्तमिति नैरुक्ताः। | 269. ऋग्भिर्ह्यसौ यजतीति ऋत्विक् । 270. 'संस्त्यानम्' संहतम् 'अस्मिन्पापकं कर्म भवतीति' एवं नैरुक्ता मन्यन्ते। वैयाकरणानामन्यथापि स्यादित्यभिप्रायः। |
| II.188. दभ्रम्, दभ्नोतेर्वधार्थस्य, तद्धि सुदम्भं सुच्छेदं भवति, अल्पत्वात्। | 274. 'दभ्रं दभ्नोतेः' वधार्थस्य तद्धि 'सुदम्भं भवति' सुच्छेदं भवत्यल्पत्वात्। |
| II.189. शुनः शेपो यूपे बद्धो विश्वान् देवानाह—नमो महद्भ्यः—वृद्धेभ्यो युष्मभ्यं नमः, अर्भकेभ्यः—बालेभ्यो नमः, युवभ्यः—तरुणेभ्यो नमः । | शुनः शेपस्यार्षम्। होतृजपे विनियोगः। नमो महद्भ्यः नमो महत्परिमाणेभ्यो देवेभ्यः। 'नमोऽर्भकेभ्यः' अल्पपरिमाणेभ्यः । नमो युवभ्यो यौवनवद्भ्यः । |
| II.192. स्वेनात्मना भूतग्रामं धारयत इति स्वधे । | 288. सर्वस्यास्य भूतग्रामस्य धारयित्र्यौ स्वधे। |
| II.193. स हि पूर्वमेव संसाररूपे दृष्ट्वैवमवोचत, कतरा पूर्वा-पूर्वकाला, तत् कतरा अपरकाला, अयोः अनयोर्द्यावापृथिव्योर्मध्ये। | 289. स्वयमेव तावद्वितर्कन्नुत्पन्नसंशयो मन्त्रदृगब्रवीति। कतरानयोर्द्यावापृथिव्योः पूर्वा कतरा तु अपरा। न हि पौर्वापर्यमनयोः स्फुटं लक्षयितुं शक्यते । |
| II.195. एकः पृथिव्यादिरर्थो यस्मिन् तदेकार्थम्। अनेको वाचकः शब्दो गवादिर्यस्मिन् तदनेकशब्दम् । | 292. एकोऽर्थः पृथिव्यादिरनेकेषां गवादिशब्दानां यत्र तत्त्वभूतः कथ्यतेऽनेके च गवादिशब्दाः पृथिव्यादेरेकस्यार्थस्य यत्राभिधायिनः कथ्यन्ते तदिदमेकार्थमनेकशब्दं प्रकरणम्। |
| उक्तोपसंहारत्वाच्च, एकोऽर्थोऽनेकशब्दस्य, अनेकश्च शब्द एकार्थस्य, इत्येतदुक्तं गम्यते। | 291. समासतो यदुक्तं तच्च वक्तव्यम्। एकार्थमनेकशब्दमिति—एतत्पुरस्तात्सूचितम्— एता- |

II.195. कथम् ? पुरस्तात्—'एतावन्तः समानकर्माणो धातवः, एतावन्त्यस्य सत्वस्य नामधेयानि'—इत्यस्यार्थस्य नैघण्टुकस्य प्रतिज्ञातत्वात् । यथा प्रतिज्ञातं चोक्तत्वात् ।

II.196. सा चेयं पूर्वाचार्यैः प्रदर्शिता । "तत्त्वं पर्यायशब्देन व्युत्पत्तिश्च द्वयोरपि । निगमो निर्णयश्चेति व्याख्येयं निगमे पदे ॥"

II.197. अत्र हि एकैकमेव जह्रादि पदं व्याख्यायते ।

तदनवगतम्, तत् किं हन्तेर्जिहातेर्जिहीतेरिति । धातुस्तावद् विशेषेणानवगतः ।

II.198. माशब्दो वधीरित्येतेन सम्बध्यते ।

II.199. यद् यस्मिन्निधीयते स्थाप्यते मृगपक्षिग्रहणाय इति निर्वचनम् ।

पाश्या जालम्, पाश्यानुप्रसङ्गात् पाशं निराह—पाशः पाशयतेर्बन्धनार्थाद् विपाशनात् । तेन विविधं मृगः पक्षी वा बध्यते ।

II.200. शिताम—इत्यनवगतसंस्कारमनेकार्थश्च । आचार्यविप्रतिपत्तेः पूर्वपूर्वपदोत्तरपदाद्विप्रतिपत्तिनिमित्ता च विप्रतिपत्तिरुपन्यस्ता निगमे सुप्रतिपादिता भवतीति भाष्यकारो निगमेनैवोपक्रमते—'पार्श्वतः श्रोणित' इत्यादिना ।

II.201. पशोर्हविः प्रदानस्य प्रैषोऽयम् ।

II.202. अथवा योनिः शिताम···अनवदानीयत्वाच्च सामीप्याद् गुदः प्रतिपद्यत । तेन शितामतो गुदादित्यर्थः ।

II.203. गुदो हि पुरीषोत्सर्गवेलायां विकसति । संकुचत्यन्यदा ।

मांसे हि मनः प्रायेण सर्वस्य सीदति भक्षयेयमेतदिति ।

I.204. तत्राथीनवगतत्वे उदाहरणम्-त्व-इति । इदं हि नामत्वेन चोपम्यासात् पदजात्यनवगतं

291. वन्तः समानकर्माणो धातव एतावन्त्यस्य सत्त्वस्य नामधेयानि' इत्यनेन वाक्येन ।··· स एष नैघण्टुकस्य प्रकरणस्य निगमव्याजेन सर्वथाप्यर्थः सङ्क्षेपत उक्तः ।

292. किंलक्षणा पुनरिह व्याख्येति । तदुच्यते—"तत्त्वं पर्यायशब्देन व्युत्पत्तिश्च द्वयोरपि । निगमो निर्णयश्चेति व्याख्येयं नैगमे पदे ॥"

293. अत्र ह्येकैकमेव पदं समाम्नातम् । तद्यथा—'जह्रा, निधा'—इत्येवमादीनि ।

अत्र हन्तेर्जहातेश्च सन्देह इति भाष्यकारेणावधृतं 'जघानेत्यर्थः' इति ।

294. मा न एकस्मिन्नागसि वधीः ।

296. यो वालमयः स्नायुमयो वा पाशसमूहः पक्षिग्रहणार्थः स पाद्येत्युच्यते ।

अधुना पदार्थं निर्वक्ति । 'पाशः पाशयतेर्विपाशनात्' तेन हि विविधमतिशयेन पाश्यते, बध्यत इत्यर्थः ।

298. शिताम—इत्येतदनवगतम् । अनुपन्यस्यैव पदमभिधेयं चानुक्त्वैव निगमेव प्रथमं पठत्याचार्यो विप्रतिपत्त्यानेकार्थत्वमस्येति । 'पार्श्वतः श्रोणितः शितामतः' इति निगमः ।

पशुहविषः प्रैषोऽयं मन्त्रशेषः ।

300. तत्र योनिरनवदानीयैव । योनिसमानदेशस्तु गुदो नामावदानमस्ति स योनिशब्देनोच्यते । स च गुदो विषितो भवति । व्याप्तः स पुरीषेण भवति ।

301. सर्वस्यैव हि मांसे मनः सीदति ।

पदजात्यनवगतम्—"त्व" इति यथा, नाम, निपातो वेति ।

II.204. केचिन्नामत्वेन प्रतियन्ति । अन्ये निपात इति षष्ठे विचारितम् ।

तथा स्वरानवगतम् । 'वने न वायो' इति ।

302. स्वरानवगतम्,–'वने न वायो' इति यथा ।

II.207. दमे मनो यस्य स दमूना अक्रूर इत्यर्थः ।

304. 'दममनाः' दमूनाः स्यात् ।दमे हि नित्यमस्य मनः' अक्रूरमना इत्यर्थः ।

II.208. मूष इत्यनवगतम् । मुषेः क्विपि दीर्घत्वं द्रष्टव्यम् । मुष्णन्तीति मुषः मूषिका इत्यर्थावगमश्च ।

306. मूषः–इत्यनवगतम् । बहुवचनं चैतत्, मूट्, मूषौ, मूषः–इत्येवम् ।

II.210 त्रितं कूपेऽवहितं पतितमित्यर्थः । एतत्सूक्तं यत्रेयमृक प्रतिबभौ प्रतिभ.तम् । त्रितस्य कूपे पतितस्येदं सूक्तमार्षमित्यर्थः ।

308. अत एव सूक्तगताद्विशेषालिङ्गादुपलभ्य 'त्रितं कूपेऽवहितमेतत्सूक्तं प्रतिबभौ' यत्रेयमृक् तस्मात्कूपपर्शव एता इति ।

अपि वा सङ्ख्यनिमित्तमेवेदं नामाभिप्रेतं स्यात् । एते हि भ्रातर एतेन क्रमेण एकतो द्वितस्त्रित इति त्रयो बभूवुः ।

309. एकतो द्वितस्त्रित इति त्रयो हि ते भ्रातरो बभूवुः । तस्मात्संख्यानिमित्तमप्युपपद्यत एव ।

II.211. उदाहरणे मनसा समानाधिकरण्यदर्शनात् मनोविशेषणमेतत् इत्यभिधेयप्रतीतेर्निगमेनैवोपक्रमते ।

'इथिरेण ते मनसा' इति समानविभक्त्यन्तत्वादिथिरशब्दस्य प्रतीयत एव मनोविशेषणत्वमित्यभिधेयमनुक्त्वा निगममेव पठति ।

II.214. सुपिप्पलाः पिप्पलं फलं सुखफला ओषधीः कर्तन द्विवचनस्य स्थाने व्यत्ययेनेदं बहुवचनम् । कुरुतमस्मै अस्मदर्थम् ।

310. सुपिप्पलाः सुफला एता ओषधीः कर्तन कुरुतम् अस्मे । अस्मभ्यमित्यर्थः ।

II.215. बद्धश्च सन्तं तपिष्ठेन अतिशयेन तापयित्रा दुःखयित्रेत्यर्थः । हन्मना अनेन आयुधेन हन्तन हत आ यूयम् ।

311. पाशैरेनं बद्ध्वा तपिष्ठेन तापयितृतमेन हन्मना हननेन वधेन हन्तना हन्तेत्यर्थः ।

अगस्त्येन्द्रमरुतां संवादे सूक्ते कयाशुभीये अगस्त्यस्यार्षम् ।

इन्द्रागस्त्यमरुतां संवादः । कयाशुभीयं सूक्तम् । तत्रेयमगस्त्यस्यार्षम् ।

II.216. जग्धं भक्षितमन्नमस्मिन् ध्रियते तिष्ठति धीयते वा प्रक्षिप्यत इत्यक्षरवर्णसामान्यान्निर्वचनम् ।

312. 'जग्धम्' भुक्तमन्नम् 'अस्मिन्' अवस्थितं ध्रियत इति जठरम् । अन्नं वा जग्धमस्मिन् 'धीयते' इति जग्धधानं वा स्यात् एते शब्दसमाधी ।

II.219. तितउ इत्यनवगतम् । परिपवनमभिधेयम् । परिपूयते अनेनेति ।

313. 'तितउ' इत्यनवगतम् । परिपवनं भवति — इत्यभिधेयवचनम् । सक्तवः परिपूयन्ते येन द्रव्येण, तत्परिपवनमुच्यते ।

II.220. बृहस्पतेर्विद्यासूक्ते ज्ञानप्रशंसैषा ।

314. विद्यासूक्ते बृहस्पतेरार्षम् ।

II.221. लक्ष्मीवान् य उत्तमः स लज्जित इव तया न श्लाघते ।

मध्या इत्यनवगतम् । मध्यशब्दात्-'सुपां सुलुक्' इत्येवमयमकारः सप्तम्याः स्थाने छान्दसत्वात्, मध्ये इत्यवगमः ।

यथोपमार्थे तथा निगमो भवति ।

315. ये हि लक्ष्मीवन्तो भवन्ति, ते स्वयमात्मानं न श्लाघन्ते ।

'मध्या' इत्येतदनवगतम् । मध्य इत्यवगमः ।

316. यथा चोपमार्थोऽपि युज्यते, तथा च निगमोऽप्ययं भवति ।

II.224. मन्दू इत्यनवगतम् ।...मदिष्णू मदिष्णूना वेत्यवगमः ।

II.225.मन्दुना मदिष्णुना मरुद्गणेनेति । समानवर्चसा इत्येतेन व्याख्यातम् । द्विवचनान्तं वा तृतीयैकवचनान्तं वा ।

318. 'मन्दू'-इत्यनवगततम् मदिष्णू मन्दुनेति वा शब्दसमाधी ।

'समानवर्चसा' इत्येतत्पदं मन्दुनेति 'एतेन' पदेन व्याख्यातम् । यथैव हि मन्दू इत्येतद् द्विवचनमेकवचनं वैवमेतदपि ।

II.227. अस्त्यादित्यप्रभवत्वेन स्तुतिरश्वस्येत्यर्थः । यत 'आदित्यादश्वो निस्तष्ट' आवृत्येत्यर्थः ।

II.227. आदित्यप्रभवत्वेन स्तुतेरुदाहरणम् ।

321. 'आदित्यादश्वो निस्तष्ट इति' अनयोपपत्त्या सूर्यात्मनाश्वः स्तूयते ।

एवमेतस्मिन् मन्त्रे सूर्यप्रभवोऽश्व इति स्तूयते ।

II.228. लोधमित्यनवगतम् । लुब्धमित्यवगमः ।

322. 'लोधम्' इत्यनवगतम् । लुब्धमित्यवगमः ।

II.229. शीरमित्यनवगतम् । अनुशायिनं वाशिनं वेत्यवगमः । अग्निरभिधेयः ।

323. 'शीरम्'-इत्यनवगतम् अग्निरभिधेयः । 'अनुशायिनमिति वा' इति । अनुप्रविश्य सर्वभूतानि शेत इत्यनुशायी, तमनुशायिनम् । अश्नोति व्याप्नोति वा सर्वभूतानीति'आशिनम्'।...

II.230. विद्रधे द्रुपदे इत्यनवगते । तयोर्मतभेदेनानेकार्थत्वमवगमं च लाघवान्निगमेनैव दर्शयिष्यामीत्युपन्यासाद् द्वयोरप्येकमुदाहरणम् ।

'विद्रधे, द्रुपदे' इत्येते पदे एकनिगमे । द्वे अप्यनवगते, पक्षेण चानेकार्थे ।

II.231. कन्या कमनीया प्रार्थनीया भवति सर्वस्य ।

II.231,232. प्राक् प्रदानकालात् कन्यायाः पितुरेवं चिन्ता भवति । उद्वाहलक्षणेन नयनेन केयं मया नेतव्या केनोद्वाहयितव्येत्यर्थः ।

324. 'कन्या कमनीया भवति' सर्वे एव हि तां प्रार्थयन्त एव ।... दानायेत्येवं तां प्रति पिता चिन्तयतीति कन्या ।

II.232. 'सुवास्त्वा अधि तुग्वनि' अत्र सुवास्तुर्नदी तस्यास्तुग्व तीर्थं तस्य तीर्णमेनत् इत्यादि निर्वचनम् । तीर्थं पानायावगाहनाय वा क्षिप्रमागच्छन्ति ।

325. 'तूर्णमेतदायन्ति'-इति शब्दसमाधिः । तीर्थमभिधेयम् । 'सुवास्त्वा अधि तुग्वनि'-इति निगमः ।

II.232. अत्र सौभराख्याने।…इतिहासः। सौभरिर्नाम ऋषिः।

II.233. नंसन्ते इत्यनवगतम् नसन्ते इति प्राप्ते नमतेर्मकारात्परं सकारागमः।

II.234. नसन्ते–इत्यनवगतम्। तदुपरिष्टाद् द्वादशे 'घृतस्य धाराः समिधो नसन्ते' इत्यत्र व्याख्यास्यामः।

आहनस इत्यनवगतम्। आहननवन्त इत्यवगमः।

II.236. 'शुन्ध्युरादित्यो भवति शोधनात्' स हि तमसा व्याप्तं कृत्स्नं रश्मिभिः शोधयति। तमोऽस्मादपनयतीत्यर्थः। अथवा अशुद्धमशुचितः शुचीकरोति।

II.237. गौतमस्य राहूगणपुत्रस्यार्षम्।

II.238. वाह इत्यनवगतार्थम्। कल्पनाभेदाच्चानेकार्थम्।

विश्वामित्रस्य। होताध्वर्युमाह।

II.239. परितक्म्या इत्युपरिष्टाद् व्याख्यास्यामः। 'परितक्म्या रात्रिः परित एनां तक्म' इत्यत्र प्रसङ्गाद् व्याख्यास्यामो लाघवार्थम्।

II.240. सुविते इत्यनवगतम्। अनेकार्थविकल्पं च। सु इति इते सूते इत्यवगमौ।

तानूनप्त्रं करिष्यन्नाज्यमभिमृशन्नाह।

II.241. दयते। दयतिरनेककर्मैव नत्वनवगतोऽपि सुवितादिवत्।

'दुर्वर्तुर्भीमो दयते वनानि' इति दहतिकर्मा।

II.242. मां विहायस इत्यत्र विहायोगतिकर्मणा

325. सोभरेः काण्वस्येयमार्षम्, परा च। दानप्रशंसा।

326. 'नंसन्ते'–इत्यनवगतम् 'नमन्ते' इत्यवगमः। 'कुविन्नंसन्ते' इति निगमः।

327. नसन्त इत्येतदुपरिष्टाद् द्वादशाध्याये व्याख्यास्यामः। 'अभि प्रवन्त समनेव योषाः' इति व्याख्याने।

'आहनसः' इत्यनवगतम्। आहननवन्तः—इत्यवगमः।

329. 'शुन्ध्युवः' शोधयितुरादित्यस्य। आदित्यो हि यदप्यशुचिर्भवति, तदपि रश्मिभिः स्पृष्ट्वा शुचीकरोति। 'सूर्यः पवित्रमुच्यते' इति वक्ष्यति। तमांसि वा शोधयतीति शुन्ध्युः, तस्य शुन्ध्युवः।

330. राहूगणस्य गोतमस्येयमार्षम्।

331. 'वाहः' इत्यनवगतम्। पक्षेण चानेकार्थम्।

विश्वामित्रस्येयमार्षम्। त्रिष्टुप्। होता ब्रवीति हे अध्वर्यः।

332. 'परितक्म्या' इति एतत् उपरिष्टाद् व्याख्यास्यामः षोडशाध्याये तत्र ह्येतत् 'किमिच्छन्ती सरमा प्रेदमानट्' इत्येतस्मिन्मन्त्रे प्रसक्तमायास्यतीति लाघवार्थमुत्कृष्टमिति।

'सुविते' इत्यनवगतमनेकार्थश्च। 'सु इते सूते' इति वा शब्दसमाधी।

333. अनेन तानूनप्त्रं संस्पृश्यते।

333,334.'दयति'–इत्येष शब्दः'अनेककर्मा'कनेकार्थः। न त्वनेकविकल्पप्रकृतिः। यथा सुवितेशब्दस्यान्येनान्येन धातुना विगृह्यानेकार्थत्वमुक्तम्।

335. 'दुर्वर्तुर्भीमो दयते वनानि'–इति दहनकर्मा। एतस्मिन्मन्त्रे दहतिकर्मा।

336. 'दयमान इति'। अत्र दयतिर्गत्यर्थः। दय-

दयतिनार्थमाह–ड्यमान इति । 'मा वायस' इत्यस्य शेषः ।

II.243. अनेकार्थत्वाच्च इहैकपदिके प्रकरणे समाम्नातः । नानवगतत्वात् । नहि निपातानां व्याकरणे प्रकृत्यादिविभागोऽस्ति ।

II.244. दावने इत्यनवगतम् । ददातेः ।···दानस्य दानं वेत्यवगमः ।

II.245. तथा अकूपारस्य इत्यनवगतमनेकार्थं च । तस्याप्यकुपरणस्य इत्यवगमः । यथा मन्त्रव्याख्याने तथा दर्शयिष्यते । तयोश्चैकमेवोदाहरणम् ।

II.246. समुद्रोऽपीत्यादि सोऽपि ह्यकूपारो भवति यतो महापारः । अत्रापि पारशब्देन पालनमुच्यते पूरणं वा ।

II.247. कच्छपः कस्मात् कच्छं पातीत्यादि । कच्छपस्य पृष्ठे यत् कच्छ उच्यते तमसौ कलया तटाकादिप्रक्षिप्तलोष्टवधादेरधोनिमज्जत्वाद् रक्षति ।

II.249. च्यवन इत्यनवगतम् । च्यावन इत्येव न्याय्यम् । ऋषिरभिधेयः ।
प्रसिद्धत्वात् च्यवनस्य ऋषित्वे न निगमो दर्शितः ।
कक्षीवतो दुहिता कक्षीवत इत्यश्विनावाह ।

II.250. युवा तारुण्यात शीघ्रं कुर्वन् प्रयौति प्रकर्षेण मिश्रयतीव कर्माणि ।
रज इति । रजः शब्दस्यानेकार्थत्वेनोपन्यासः ।
रजतेरिति धातुनिर्देशो न तु रजेः ।···
तां चानेकार्थतां दर्शयति ज्योती रज उच्यते ।
तद्धि स्वभासा सर्वमनुरञ्जयति प्रकाश्यम् ।···
**प्रसिद्धत्वाद् भाष्ये न पठिता निगमाः ।**

मानो डीयमानः काकोऽन्तरिक्षेणाधस्तान्मां सुप्तं 'दोषा' दोषायामबोधयत् । मृग्योऽत्र शेषः

337. 'नूचित्' इति एष निपातः अनेकार्थत्वेनेह समाम्नातः । न हि निपातानां प्रकृतिप्रत्ययादिः संस्कारोऽस्ति यस्यानवगमः स्यात् ।

338. 'दावने' इत्यनवगतम्, 'दानस्य' इत्यवगमः ।

'अकूपारस्य' इत्यनवगतमनेकार्थं च । 'अकुत्सितपरणस्य' इत्यवगमः । द्वयोरप्येतयोरेक एव निगमः ।

340. 'समुद्रोऽप्यकूपार उच्यते' । असावपि ह्यकुत्सितपार आत्मनैव भवति ।

आख्यानप्रसक्तमुच्यते । 'कच्छपः, कच्छम्' आत्मनो मुखसम्पुटं 'पाति' रक्षति । स हि किञ्चिद् दृष्ट्वा शरीर एव मुखसम्पुटं प्रवेशयति । सम्पुटे हि कच्छशब्दः प्रसिद्धः । 'प्राणिवाच्यः कच्छपुटः' इति च ।

345. 'च्यवनः' इत्यनवगतम् । 'च्यावनः'–इत्येवमर्थप्रतीतिः । 'ऋषिर्भवति' इत्यभिधेयवचनम् ।··· च्यवन इति प्रसिद्धमेवेति कृत्वा निगमं न पठति ।

346. काक्षीवत्या घोषाया इयमार्षम् । प्रातरनुवाकाश्विनयोः शस्यते । आश्विनावुच्येते ।
निगमप्रसक्तमुच्यते । युवा प्रयौति कर्माणि मिश्रयति ।
'रजः' इत्यनेकार्थम् । 'रजतेः' इति व्युत्पत्तिः ।

'ज्योती रज उच्यते ।' तद्धि–अनुरञ्जयति द्रव्याणि स्वेन प्रकाशेन ।

347. भाष्यकारस्तु प्रचुरत्वादेतेषु निगमान्न पठति ।

II.252. हर इत्यनेकार्थम् । हरतेरिति धातुनिर्देशः । ज्योतिर्हरः । तद्धि हरति तमः ।

348. 'हरः' इत्येतदप्यनेकार्थम् । 'हरतेः'–इति व्युत्पत्तिः । 'ज्योतिर्हर उच्यते । तद्धि ह्रियते हरति वा स्नेहं विरूक्षीकरोति हरति वा तम इति हरः ।

II.253. व्यन्त इत्येषोऽनेककर्मा । व्यन्त इत्यत्र य एष धातुः स दयतिवदनेकार्थ इत्यर्थः ।

'व्यन्तः' इत्येषोऽनेककर्मा । यस्माद्धातोरयं शब्दोऽभिनिष्पद्यते स धातुरनेककर्मानेकार्थः ।

II.254. 'वीतं पातं पयसः' इत्यत्राश्नातिकर्मा ।··· क्राणा इत्यनवगतम् । कुर्वाणा इत्यवगमः ।

350. 'वीतं पातं पयसः' इत्यत्राशनार्थः ।

351. 'क्राणाः' इत्यनवगतम् । कुर्वाणाः–इत्यर्थ-प्रतीतिः ।

II.256. विषुण इत्यनवगतम् । विषम इत्यवगमः ।

353. विषुणस्य–इत्येतदनवगतम् । विषमस्य इत्यवगमः ।

II.257. जामिरित्यनवगतम् । अनेकार्थं च । अतीरे बालिशसमानजातीयविषयत्वात् ।

354. 'जामिः'–इत्येतदनेकार्थम् । 'भगिनी,बालिशः, पुनरुक्तं' चास्याभिधेयानि ।

II.258.यमीयमसंवादे यमी यमं चकमे । तां सोऽनया प्रत्याचष्टे ।

355. यमी किल यमं प्रार्थयाञ्चकार–'एहि मैथुनाय सङ्गच्छावहा' इति । तामकामयमानोऽसावन-यर्चा प्रत्युवाच ।

बालिशस्य वा अश्नतिकार्येषु मुग्धः शेत इति बालिशो मूर्खस्तस्य वा नाम । स हि जात एव केवलं न कस्मैचित् पुरुषार्थायालम् । तत्र निगमः पर्येष्यः ।

355,356. 'बालिशस्य वा । बालिशस्यैतदेव नाम । बालिशो मूर्खः । स हि बाल इव शेते प्रमा-दित्वाद्धर्मकार्येषु । एतस्यापि पर्येष्यो निगमः ।

II.259. सा स्त्रीत्वादेव भगिनी भ्रातुरसमानजातीया इत्युच्यत इति व्याचक्षते ।

356. सा हि स्त्रीत्वादेवातुल्यजातीयैव पुरुषस्य भवति ।

II.261. शंयोरिति द्वैपदमेतदनवगतम् । द्वे नास्म-नस्ततः शमित्येकमनवगतम् । शमनमित्यव-गमः । योरिति द्वितीयम् । अन्यस्यापि यावन-मिति ।

358. एवं पञ्चम्यर्थासम्भवं षष्ठ्यर्थासम्भवं च पश्यन् भाष्यकारः 'शंयोरित्येकं पदं द्वितीयान्ते द्वे पदे चकार, 'शम्'इति,'योः' इति च । शमि-त्यस्य 'शमनम्' इत्यर्थं निराह योरित्यस्य यावनमिति ।

शंयुर्नाम बृहस्पतेः पुत्र इति सोऽपि शंयो-रित्यनेनोच्यते 'तच्छंयोरावृणीमहे' इत्यत्र ।

359. अपि यथावस्थितेनैवाविभक्तेन बार्हस्पत्यो बृहस्पतेः पुत्र उच्यते । तस्याप्येतदेव नामे-त्यपिशब्दः ।

II.262. बार्हस्पत्यः शंयुराह ।

इयं शक्वरी । शंयोरेव बृहस्पतिपुत्रस्यार्षम् । शंयोर्वाके विनियुक्ता ।

II.263. अदितिरित्यनवगतम् । अनेकार्थत्वश्च दर्शन-भेदेन । कथम् ? ऐतिहासिकानां देवानां माता उच्यते । नैरुक्तानामदीनादिगुणः । अध्यात्मपक्षे प्रकृतिः ।

II.264. अदीनपर्यायो वा नैरुक्तपक्षे ऽदितिशब्दो न देवमातृवचनः । अत आह । एतान्यदीनानीति वा इति । अक्षीणा द्यौः । तथान्तरिक्षादीनि । अध्यात्ममपि अदितिः प्रकृतिः कारणं ब्रह्म । प्रकृतिसार्वनाम्न्याच्च तत्प्रभवत्वे सति सर्वमदितिरिति व्याख्येयम् ।

II.266. वस्त्रं वस्तेराच्छादनार्थस्य । आच्छाद्यते हि तत् ।

उपक्षीणो ह्यसाविह लोके आयुषा यदा राज्ञा मारयिष्यमाणत्वात् । परलोकेऽपि धर्मेण अधर्म-कारित्वात् ।

II.267. यूथं यौतेः । समायुतं भवति । समायुतं 'संमिश्रं' स्त्रिभिः पुंभिर्बालैर्वृद्धैः पशुभिः । मन्दिने इत्यनवगतम् । मन्दतेः स्तुतिकर्मणो घञि मदनं मन्दः स्तुतिस्तद्वान् मन्दी ।

II.268. गौरित्यनेकार्थः । स निर्वचनतोऽभिधेय तश्च पुरस्तात् सप्तमे व्याख्यातः ।

II.269. दंसय इत्यनवगतम् । कर्माणीत्यभिधेय-वचनम् ।⋯दर्शयन्ति हि तानि तत्कारिणो दृश्यन्त इति वा दंसयः । अथवा 'तसूपक्षये दसु च' इत्यस्य । उपक्षेतव्यानि हि तानि अन्तक्षेतव्यानीति ।

II.270. यस्मै त्वं यस्यार्थाय त्वमायजसे । आङ् मर्यादायाम् । यथाशास्त्रं यजसि देवान् दैव्ये होतृत्वे वर्तमानः । स साधति साधयत्यात्मनो-ऽभिप्रेतानि । अनर्वा अप्रत्यृतोऽपराश्रितश्च ।

360. 'अदितिः' इत्यनवगतम् । 'अदीना' इत्यव-गमः । 'देवमाता' अभिधेयैतिहासिकपक्षेण । नैरुक्तपक्षेण पुनर्यान्येतस्यामृचि वक्ष्यमाणायां द्यौरित्येवमादीनि पदानि श्रूयन्त एतान्येवादि-तिशब्देनोच्यन्ते ।

361. एवमनेन मन्त्रेण मन्त्रदृग् 'अदितेर्विभूतिमा-चेष्टे' देवमातुस्तदेतत्सर्वमप्युपपद्यत एव माहा-भाग्याद्देवतायाः । तदुत्तरत्र वक्ष्यामः । एवमैति-हासिकपक्षेण । नरुक्तपक्षेण पुनः 'एतानि' द्युलोकादीनि सर्वाणि 'अदीनानि' अनुपक्षी-णानीति योज्यम्, न ह्येषां क्षयोऽस्तीति ।

363. 'वस्त्रं वस्तेः' आच्छादनार्थस्य,तद्ध्याच्छाद्यते ।

364. उपक्षीणो ह्यसौ भवत्यधार्मिकत्वात् । परलो-कमनपेक्ष्य कल्पयति कर्माणि ।

'यूथं यौतेः' तद्धि समायुतं भवति । एकत्र मिश्रीभूतं स्त्रीपुरुषबालवृद्धैः पशुभिः । मन्दिने-इत्यनवगतम् । मन्दतेः स्तुत्यर्थस्य मन्दनीयः स्तुतिमान् वेत्यर्थप्रतीतिः । 'मन्दति शंसति' इति स्तुतिकर्मसु पठितम् ।

365. 'गौः' इत्येतदनेकार्थत्वादिह समाम्नातम् । यथा चैतदनेकार्थं तथा पुरस्ताद् व्याख्यातम् ।

367. 'दंसयः'—इत्येतदनेकेषां कर्मणामभिधानम् । तानि हि दंसयन्त्युपक्षयन्ति कर्मकराः ।

368. हे भगवन्नग्ने ! यस्मै यजमानाय त्वमाहूय यजसे देवान् होतृत्वेऽवस्थितः स एव साधति साधयत्यात्मनोऽभिप्रेतार्थम् । किञ्च । स एव अनर्वा अप्रत्यृतः अनाश्रितः कश्चि-

क्षेति क्षियति निवसति यस्मिन स्थाने ।

II.271. वियुते ।···द्यावापृथिव्यावभिधेये । वियवना-दिति निर्वचनम । विमिश्रणं सह सत्योः पृथक्पृथग्भवनम् ।

II.272. ऋधगित्यनवगतम् । अनेकार्थं चावगतम् । अनेकार्थं दर्शयति पृथग्भावस्येत्यादिना । पृथग्भावोऽनुप्रोच्यते येन तत् पृथग्भावस्यानुप्रवचनम् । वाचकमित्यर्थः ।

II.274. अपरे वर्णयन्ति । प्रथमं प्रधानं तस्यादेशः प्रथमादेशस्तद्विषयमुदात्तम । गुणोपदेश-विषयमनुदात्तम् । अगुणभूतस्य पश्चादादेशाद् इति ।

II.275. यथा 'अस्या ऊ षु ण' इत्यर्थसातेः प्रथमा-देशत्वादस्या इति तद्विषयत्वादुदात्तम ।

तीव्रः स्फुटोऽर्थः प्रयोजनं यस्य तत् तीव्रार्थ-मतिशयेन तीव्रार्थतरं यदुदात्तं तदतिशयेन स्फुटप्रयोजनम ।

II.277. अथानुदात्तमुदाह्रियते-"पुनः पत्नीमग्निः··· शरदः शतम् ।"

II.278. अस्येति अस्या इत्येतेन व्याख्यातम् । उदा-हरणमत्र व्याख्यातं तदुच्यते ।

II.279. एवमत्र अस्यत्येतद्-'अस्य वामस्य' इत्यु-दात्तत्वं प्रथमादेशे वर्ण्यते । 'तृतीयो भ्राता घृतपृष्ठो अस्य' इत्येतदनुदात्तमन्वादेशे तेनै-

दन्यम,स्वेनैव महिम्ना युक्तः। क्षेति निवसति युष्मदनुग्रहात् ।

369. 'वियुते'—इत्येतदेकमेव समस्तयोर्द्वयोरपि द्यावापृथिव्योरभिधानम् । वियवनादिति निर्वचनम् । यौतिर्मिश्रणार्थः । तस्योपसर्ग-सामर्थ्याद्विपर्ययेणार्थो भवति । विमिश्रीभूते इत्यर्थः ।

370. 'ऋधक्'इत्यनेकार्थम् । 'ऋधगिति पृथग्भावस्य प्रवचनं भवति'पृथक्त्वमेव पृथग्भावः । तस्येदं प्रवचनं भवति, सोऽनेन प्रोच्यत इत्यर्थः ।

372. 'उदात्तं प्रथमादेशे'। प्रथम इति मुख्यनाम, मुख्यश्च प्रधानमित्युच्यते । प्रधानं कञ्चिदर्थम-भिदधदेतत्पदद्वयमुदात्तं भवति । 'अनुदात्त-मन्वादेशे'। प्रधानमर्थमनु यो वर्तते गुणभा-वेन तस्यैतत्पदद्वयमन्वादेशे वर्तमानमनुदात्तं भवति ।

374. एवमत्र सातिः प्रधानेति कृत्वा 'अस्याः' इत्येतत्पदमन्तोदात्तम् । अन्तोदात्तमपि च सदुदात्तमित्युक्तं भाष्यकारेणैकदेशस्योदात्त-त्वात् ।

373. उच्यते—लोकेऽपि हि यत् 'तीव्रार्थतरम्' उत्कृष्टार्थं प्रधानतरं तत् 'उदात्तम इति प्रसिद्धम् ।

374. अथ पुनर्यस्मिन 'अनुदात्तम्' एतत्पदं गुण-भूतार्थाभिधायि भवति तस्यैष निगमः— 'पुनः-पत्नीमग्नि···शरदः शतम् ।"··· 'अस्येति' एतत्पदं पुंविषयं षष्ठ्यन्तम्'अस्याः-इत्यनेनैव स्त्रीविषयेण पदेन व्याख्यातम् ।

375. तस्मात् 'अस्य वामस्य'—इत्येषः'अस्य'शब्दो-ऽन्तोदात्तः। वायुरत्राप्रधानम् । तस्मात्'तृतीयो भ्राता घृतपृष्ठो 'अस्य' इत्येषः 'अस्य'-शब्दो-

तयोरप्युदात्तानुदात्तयोरेकमेवोदाहरणम् ।

II.280. सप्त सप्ता संख्या गता षड्भ्यः सकाशात् । सप्तपुत्रमित्यस्य सप्तसंख्याका रश्मयः पुत्रा यस्येति यदुक्तं निर्वचनं तस्यापवादेनार्थमाह सप्तादित्यरश्मय इति वदन्ति ।

II.281. त्रिनाभि नाभित्रयं ग्रीष्मो वर्षा हेमन्त इत्येते ऋतवो नाभिस्थानं यस्य तत् त्रिनाभि ।

II.282. संवत्सरः संवसन्तेऽस्मिन् भूतानि संवासो मैथुनं तद् भूतानि संवत्सरे कुर्वन्ति तान्यत्र संवत्सरादन्यस्य कालस्याभावात् ।
कथं पुनर्ज्ञायेते संवत्सरप्रधान—उत्तरोऽर्धर्चे इति, यावता त्रिनाभीत्यादिरुपकल्पनयाऽन्यस्यापि कस्यचित् सम्भवत्येवेयं स्तुतिः ?
इत्यत्र तावत् पञ्चर्तुतया ।

II.283.'षडर आहुरर्पितम्' इति षड्ऋतुतया ।
पञ्चर्तवः पादा यस्य स पञ्चपादस्तं पितरं पातारं वा सर्वस्य । द्वादशाकृतिं द्वादश मासा आकृतिराकारो यस्य स द्वादशाकृतिस्तम् ।

II.285. अत्र यदन्ननाम तस्याध्यानीयं भवतीत्यवगमः । आभिमुख्येन हि ध्यातव्यं सर्वेणान्नं प्रीतेः शरीरस्थितेश्च तदायत्तत्वात् ।

II.286. अमा पुनरमत्रं भवत्यपरिमाणम्, न हि यत्पात्रे दत्तं तस्य परिमाणमस्ति ।

स्त्रियः सतीस्तमोपनयनान्नापक्त्यादिना कृत्स्नस्य जगत इत्यर्थः ।

II.287. आदित्यान्तरपुरुषो हि बुद्ध्यधिदेवतं तदवयवभूताश्च रश्मयः ।

ऽनुदात्तः । एवमेकस्मिन्मन्त्र उदात्तानुदात्तावेतौ 'अस्य' शब्दौ प्रधानाप्रधानविषयावित्येकमेवोदाहरणम् ।

377. 'सप्त सप्ता संख्या' षड्भ्यः सकाशात् । एवं सप्तसंख्योपेताः, सर्पणक्रियायोगिनो वैत एव 'आदित्यरश्मयः' अस्यादित्यस्य पुत्रा इति मन्त्रविदो मन्यन्ते ।

378. 'त्रिनाभिचक्रम्' 'त्र्यृतुः' हि 'संवत्सरो ग्रीष्मो वर्षा हेमन्त इति'—अनेन ऋतुप्रविभागेन । एतदेवास्य त्रिनाभित्वमभिप्रेतम् ।

379. 'संवत्सरः संवसन्त्यस्मिन्'—इति प्रसक्तानुप्रसक्तम् । समस्तानि हि भूतानि एतस्मिन् संवसन्ति। मैथुनाभिप्रायो वा स्यात् संवासः।···
आह—कथं गम्यते संवत्सरप्रधान उत्तरोऽर्धर्चे इति, न हि संवत्सरग्रहणमत्रास्ति ।

380. इति पञ्चर्तुतया संवत्सरस्य स्तुतिः ।

381.'षडर आहुरर्पितमिति षड्ऋतुतया'संवत्सरस्य स्तुतिः
पञ्चपादं संवत्सरम् । ऋतवो हि संवत्सरस्य पादाः । तैरसौ पतति गच्छति । पितरं पालकं सर्वभूतानामुत्पादयितारं वा । द्वादशाकृतिं द्वादशमासप्रविभक्तविग्रहम् ।

389. 'आध्यानीयम्' इत्यर्थप्रतीतिः । प्रार्थनीयमन्नं भवति सर्वस्यैव ।
'अमा'—शब्देन पुनर्यद् 'अनिर्मितिम्' अपरिमाणं किञ्चिद् भवति, तदुच्यते, न हि तेषां परिमाणमस्ति, यावन्तस्तस्मिन्नदन्ति ।

390. एत एवान्नपक्त्यादिनोपकारेणोपकुर्वन्ति जगत्त्रायन्ते । एत एव बुद्धेः सर्वार्थप्रकाशित्वे नोपकुर्वन्तीत्यभिप्रायः ।
आदित्यान्तरपुरुषो हि बुद्ध्यधिदेवता । तदवयवभूताश्च रश्मयः ।

असश्चन्तीत्यनवगतम् । उदाहरणे रोदस्यादिसमानाधिकरण्याद् द्यावापृथिवीविशेषणम् ।

392. 'असश्चन्ती'-इति द्यावापृथिवीविशेषणमित्येतदुपपद्यते । असज्यमाने इति । न हि ते सज्येते परस्परतः ।

II.288. वनुष्यतीत्यनवगतम् । हन्तिकर्मेत्यर्थावगमं दर्शयति । यतो नायं हन्त्यर्थत्वे तु प्रसिद्धः । अनवगतसंस्कार इत्यनेन शब्दावगमः ।

'वनुष्यतिः'-हन्तिकर्मा हन्त्यर्थे वर्तमानः, अनवगतसंस्कारो भवति ।

II.289. संग्रामे ह्यभिभवनव्यतिरेकेण वध एव संभवतीति सामर्थ्याद् हन्तिकर्मेत्युक्तम् ।

393. एवमेतस्मिन्मन्त्रे-'सासह्याम पृतन्यतः'-इत्येतस्मिन्संग्रामाधिकारे वनुष्यतेर्हन्त्यर्थत्वमुपपद्यते। न हि संग्राममेत्य हननादन्यत्कर्तव्यमस्ति, यत् क्रियते ।

II.290. पापत्यमानः, अथवा विषयासक्त्याऽत्यर्थं पात्यमानः । अवाङेव अधो नरकमेव पतति प्रायश्चित्ताकरणाद् नोर्ध्वमिति पापः । अधोभावविष्ठाक पततेः पाप इत्यर्थः ।

394. 'पापत्यमानः' पुनः पुनः पात्यमानः, तेनैव पापेन कर्मणा 'अवाङेव' नरकमेव प्रति पतति-असौ तस्माद् वा पापः ।

II.291. भन्दना··· भन्दतेः स्तुत्यर्थत्वमप्रसिद्धमिति अर्चतिकर्मसु पाठं दर्शयन्नाह-भन्दतेः स्तुति कर्मणः स्तुत्यर्थे वर्तमानस्येति ।

'भन्दना'-भन्दतेः स्तुतिकर्मणः स्तुत्यर्थे वर्तमानस्य ।

II.293. आहन इत्यनवगतार्थरूपस्य-'अन्येन मदाहन' इत्युदाहरणोपक्षेपः । आहंसीवेत्यादि समाधिप्रदर्शनम् । आहन्तीति समाधिः । संवादसूक्ते-'को अस्य वेद प्रथमस्याह्नः' 'जायेव पत्ये तन्वं रिरिच्यां' इत्येवं यम्या यः समायोगं प्रत्यभियोगस्तां प्रत्याह ।

396. 'आहनः' इत्येतदसतः सम्बोधनमनवगतमप्रतीयमानार्थत्वात् । 'आहंसि' इत्यर्थप्रतीतिः।

यमस्य यम्याश्च संवादसूक्तं तत्र यमस्येयमार्षम् । स यमीं मैथुनाय प्रार्थयमानां ब्रवीति ।

II.296. विश्वामित्ररेणोरिन्द्रस्तुतिः ।

399. रेणुर्नाम विश्वामित्रस्य पुत्रस्तस्येयमार्षम् । ऐन्द्रे सूक्ते सूर्यस्तुत्रामैकाहस्तत्रेयं निष्केवल्यशस्त्रे निविद्धानीये शस्यते ।

एवमश्नोतेरक्षा इत्येके आचार्या मन्यन्त इति शेषः ।

400. एवमेतस्मिन्मन्त्रे व्याप्त्यर्थस्य 'अश्नोतेः' अक्षा इत्येष शब्दो निरुच्यत इत्येवमेके मन्त्रार्थविदो मन्यन्ते ।

II.297. एवं चायं क्षियतिनिगमः पूर्वः क्षरतिनिगम इति द्वितीयः पक्षः । यदा तु शाकपूणिपक्षः समे क्षियतिनिगमा इति तृतीयः ।

401. एवमेतस्मिन्मन्त्रे-'क्षियतिनिगमः पूर्वः'··· 'चरति-निगम उत्तरः'···एवमेके मन्त्रार्थविदो मन्यन्ते । तच्चैतत्तथैवोपव्याख्यातम् । सर्वे एवैते त्रयोऽपि 'क्षियतिनिगमाः' निवासार्था इति शाकपूणिराचार्यो मन्यते ।

II.297,298. श्वात्रमित्यनवगतम्। क्षिप्रनामेत्यभिधेयवचनम्। आश्वतनमिति प्रातिवचनम्। आश्वतनमेततराकारस्य मध्यमानुप्रवेशेन वर्णलोपव्यापत्यादिना आश्वतनः क्षिप्रगमनश्च।

401. 'श्वात्रम'–इत्यनवगतम् 'आशु अतनं भवति'–इति शब्दसमाधिः। क्षिप्रनाम इत्यभिधेयवचनम।

II.299. हासमाने इत्यनवगतम्। तदुपरिष्टात्'प्र पर्वतानाम्' इति चतुर्दशे प्रसङ्गाद् व्याख्यास्यामः।

402. हासमाने–इत्येतत्पदमुपरिष्टाद्व्याख्यास्यामः 'प्र पर्वतानामुशती उपस्थात्' इत्यत्र।

II.300. किञ्च तत्रोपसर्पन्तं ससं न स्वप्नं यथा एतदष्टौ मासान् स्वपनशीलं निर्व्यापारमनभिव्यक्तं क्वापि निलीनं वर्षासु पक्वं सदभिव्यक्तमित्यर्थः। किं पुनस्तत्। भाष्यकार आह। माध्यमिकं ज्योतिर्विद्युदाख्यम्। सर्वदा अदर्शनादनित्यं दृष्टनष्टस्वभावकं वा।

404. 'ससं न पक्वमविदत्, यथैव स्वपनशीलं 'माध्यमिकं ज्योतिर्वैद्युताख्यं पक्वमभिव्यक्तं वर्षासूपर्यवस्थानादयत्नेनैव दृश्यते,...तस्माद्नित्यदर्शनात् 'स्वपनम'–इत्युच्यते। पक्तिर्नामाभिव्यक्तिरित्युच्यते।

II.302. मृगमिव यथा मृगं महता यत्नेन व्रा वरणा वरितारो नेष्टारो ऽङ्गतिकृतत्वसामान्यं वा। व्रा व्रात्यस्थानीया लुब्धकादय इहाभिप्रेताः। तद्वदिन्द्रं मृगयन्ते।

405. व्रात्याः प्रैषाः युष्मत्संस्तवयुक्तास्त्वां प्रति प्रहिता, मृगमिव इतरे लुब्धका व्रा व्रात्याः। मृगयन्ते मार्गयन्ते त्वाम्।

वरदमुकलक्षणमाहारो यस्येति वा वरमुदकमाहरतीति वा कर्मोपपदे वराहारः सन वराहः।

406. 'मेघः' तावद् वराह उच्यते, स हि वराहारो भवति। तस्य हि वरमुदकमाहारः।

II.303. अयमपीतरोऽसुरवराहः पशुवराहो वा एतस्मादेव वराहारत्वाद् वराहरणत्वाद् वा।

407. 'अयमपीतरो वराह एतस्मादेव' असावपि हि वरं मूलाख्यमाहारमाहरत्येव।'वरं वरं मूलं बृहति' उद्यच्छतीत्यर्थः।

तत्रासुरवराहस्य श्रुत्या निर्वचनं प्रदर्शयति–'वरमाहारमाहार्षीदिति'।

यथायमपीतरो वराहशब्दश्छन्दसि वराह इत्युच्यते, तथैव निगमः।

II.306. अत्रोच्यते। कथं पुनरसत्यङ्गिरःशब्देनाङ्गिरसोऽत्र वराहा उच्यन्त इति गम्यते?उच्यते। सखिभिरित्यनेन तेषामुपादानात्। अङ्गिरसो हि बृहस्पतेः सखायः। तथाहि अत्रैव सूक्ते जागते बृहस्पतेः सखिव्यपदेशोऽङ्गिरसां दृश्यते।

408. एतस्यामृचि-अङ्गिरसां विशेषलिङ्गं नास्ति वराहशब्दवाच्यत्वे। सूक्ते त्वेतस्मिन्नङ्गिरसो लिङ्गमस्ति।

II.307. अङ्गिरसां च मध्यमदेवगणत्वेऽपि ऋषित्वात्पृथग् ग्रहणम्।

409. अङ्गिरसो ऋषिसमाख्यामपि लभन्ते। तस्मान्माध्यमकत्वेऽपि सति पृथगुक्त्योक्ताः।

II.308. स्वसराणीत्यनवगतम् । अहानीत्यभिधेयवचनम् । स्वयं सारीणीत्यर्थावगमः । स्वयमेव तानि गच्छन्ति नहि कश्चित् सारयन् दृश्यते । अपि वा स्वरादित्य एनानि सारयति । तदुदयास्तमयाभ्यां तानि गमयति ।

410. 'स्वसराणि' इत्यनवगतम् । 'स्वयंसारीणि'-इत्यवगमः । 'अहानि'-इत्यभिधेयवचनम् तानि हि स्वयमेव सरन्ति गच्छन्ति । 'अपि वा स्वरादित्यः'अत्रोच्यते-'स एनानि सारयति' गमयति । तेनैतानि स्वसराणीत्युच्यन्ते ।

II.309. शर्या इत्यनवगतम् । इषव इत्यभिधेयवचनम् । शरमय्य इत्यवगमः । शरविकारश्चात्र संस्कारविशेषोऽभिप्रेतः ।

411. 'शर्या'-इत्यनवगतम् । 'शरमय्यः'-इत्यवगमः । 'इषवः'- अभिधेयाः ।

II.310. अर्क इत्यनेकार्थम् । अर्चतेरौणादिकः कर्मसाधनः । यस्माद्देवमर्चन्ति । मन्त्रैः करणसाधनः ।

412. 'अर्कः' इत्यनेकार्थम् 'देवः' तावत्सर्व एवार्क इत्युच्यते । आह-किं कारणम् ? इति । उच्यते-यस्मात् 'एनम्' देवम् 'अर्चन्ति' स्तोतारः ।

II.311. पविरित्यनवगतमनेकार्थं च । रथनेमिरित्यभिधेयवचनम् । रथश्चक्रधारेत्यर्थः ।··· यद् यस्माद् विपुनाति विपाटयति भूमिम् ।

413. 'पविः'-इत्यनवगतम् । 'रथनेमिर्भवति' इत्यभिधेयवचनम् ।

414. सा हि विपुनाति भमिमिति पविः ।

II.312. ब्राह्मणमप्यस्मिन्नर्थे उदाहरन्ति । सान्तपनीयं हविः प्रकृत्य श्रूयते—'देवा वै वृत्रस्य मर्म नाविन्दन्···' ।

ब्राह्मणमपि चैतस्मिन्नेवार्थे चातुर्मास्येषु सान्तपनं हविरधिकृत्य—'देवा वै वृत्रस्य मर्म नाविन्दन्···' इति ।

II.313. धन्वेत्यनवगतम् । अन्तरिक्षमित्यभिधेयवचनम् । धन्वन्ति गच्छन्ति धवं सन्ति अस्मादाप इति निर्वचनम्। धन्वना इत्यवगमः।· सिनमित्यनवगतम् । अन्नमित्यभिधेयवचनम्। सिनाति भूतानीति धातुदर्शनम् ।

415. 'धन्व' इत्यनवगतम्। 'धन्वनम्'-इत्यवगमः। 'अन्तरिक्षम्' इत्यभिधेयवचनम् । 'धन्वन्त्यस्मादापः' इति नामप्राप्तौ हेतुनिर्देशः ।··· 'सिनम्'—इत्यनवगतम् । 'सिनाति'-इति शब्दयुक्तिः । 'अन्नं भवति' इत्यभिधेयवचनम् । 'सिनाति भूतानि'-बध्नातीत्यर्थः । अन्नेन हि सर्वाणि भूतानि बध्यन्ते ।

II.314. सचा-इत्यनवगतो निपातः । सहेत्यर्थः ।

416. 'सचा'इत्यप्रतीतार्थो निपातः । 'सह'-इत्यर्थप्रतीतिः ।

II.316. आ इत्याकार उपसर्गो यः पुरस्तादेव 'आ इत्यर्वागित्यर्थे'—इत्यत्र व्याख्यातः । पुनश्च अथाप्युपमार्थे दृश्यत इति निपात इत्युक्तः ।

417. 'आ'-इत्याकार उपसर्गः पुरस्तादेव व्याख्यातः, 'आ इत्यर्वागर्थे' इति । 'अथापि चोपमार्थे दृश्यते' निपातत्वेन 'जार आ भगम्' इति ।

| | |
|---|---|
| II.317. द्युम्नमित्यनवगतम् । द्योततेरिति धातुनिर्देशः द्योतनमित्यवगमः । यशो वा अन्नं वेत्यभिधेयवचनम् । | 419. 'द्युम्नम्'–इत्यनेकार्थम् । 'यशो वान्नं वा' इत्यभिधेयवचनम् । |
| II.318. एवं तर्ह्यनेकार्थत्वादुपन्यासः । स च मन्त्रादिषु करणसाधनः । अग्न्यादिषु कर्मसाधनः। तदेतत् 'पवित्रं पुनातेः, मन्त्रः पवित्रम्'–इत्यादिना भाष्यकारेण दर्शितम् । | 420. 'पवित्रम्'-इत्यनेकार्थम । 'पुनातेः'-इति धातुनिर्देशो निर्वचनाभिप्रायः । 'मन्त्रः पवित्रमुच्यते'-इत्यभिधेयवचनम् । |
| II.320. ननु मन्त्रद्वये रश्मीनां पवमानसम्बन्धमात्रं गम्यते नाभिधानं पवित्रशब्देन । एवञ्च 'पवित्रवन्तः परि वाचमासते' इत्युदाहरणम् । तच्चोपरिष्टाद् व्याख्यास्यते । अग्न्यादयोऽपि पवित्रमुच्यन्ते तेऽपि हि पावयन्ति जगत् स्वेन स्वेन स्पर्शनादिद्वारेण। | 422. एवमत्र 'गभस्तिपूतः' इति तस्मात्पावनसम्बन्धाद्रश्मीनां पवित्रत्वमुपपद्यते । कश्चित् 'पवित्रवन्तः परि वाचमासते' इत्येष निगमो विधीयते । अग्न्यादयोऽपि ह्यनेनोच्यन्ते । एतेऽपि हि सर्व एव पावयन्ति । |
| II.322. यद् यस्माद् अन्यदेवत्या अप्यग्नावाहुतयो हूयन्ते सवनीयादिदेवेभ्यो विभजन्ते भृत्यजनेभ्य इत्येवमेतद् दृष्ट्वा उपलभ्य पतित्वं सर्वहविषामित्येवमवक्ष्यद् मन्त्रदृक् । | 424. यस्मादन्यदेवत्याश्चान्यदेवत्याश्चापरिसंख्येया अग्नावाहुतयो हूयन्ते,न चाग्नेस्तासां ग्रहणशक्तिपरिहाणमस्ति, न च ज्ञायते श्वभ्रबिल इव निषिक्ता आपः क्वापि गच्छन्ति ता आहुतय इत्येतत्सामान्यं दृष्ट्वैमवोचन्मन्त्रदृक् । |
| II.323. स्वश्चा इत्यनवगतम् । सुगमन इत्यर्थः । तयोः पूर्वं कुत्सितार्थीयमौपमन्यवो मन्यते । | 'स्वश्चाः'-इत्यनवगतम् ।'सु-अञ्चनः'-इत्यवगमः। 425. अनयोर्द्वयोरपि नाम्नोर्यत् 'पूर्वं' तत् 'कुत्सितार्थीयं भवतीत्यौपमन्यवः' आचार्यो मन्यते । |
| II.324. आचार्यमतेन यदा तु शिपयो बालरश्मय उच्यन्ते तैराविष्ट इति, एवमेतत् प्रशंसानामैवाभिप्रेतं स्यात् । | 426. अपि वा प्रशंसागुणयुक्तमेवैतन्नाम स्यात् । 'शिपिविष्टः' इति । आह कथम् ? इति । उच्यते-शिपयोऽत्र-अस्मिन् प्रशंसानामपक्षे रश्मय उच्यन्ते । |
| II.326. आघृणिरित्यनवगमः । आहृतदीप्तिरागतक्रोधो वेत्यर्थः । अतश्चानेकार्थमपि । | 428. 'आघृणिः' इत्यनवगतम् । 'आगतहृणिः' इत्यवगमः। आगतदीप्तिरागतक्रोधो वाभिधेयः। |
| II.327. अथर्युमित्यनवगतम । अतनवन्तमित्यवगमः । अततेरथरादेशः । युर्नामकरणः । | 429. 'अथर्युम्'–इत्यनवगतम् 'अतनवान्'–इत्यवगमः । |
| II.328. काणुकेत्यनवगतमनेकार्थं च । कान्तकानीत्यादयोऽवगमाः । | 430. 'काणुका'–इत्यनवगतम्, अनेकार्थं च । 'कान्तकानीति वा, क्रान्तकानीति वा' इत्येवमाद्याः शब्दसमाधयः । |

II.329. तत्रैतस्मिन् सन्देहे एतद् याज्ञिकाः स्वमतं वेदयन्ते ज्ञापयन्ति। याज्ञिकानां तावदेतन्मतमित्यर्थः। माध्यन्दिने सवने त्रय उक्थविशेषः।

432. तत्रैतस्मिन्–त्रिंशच्छब्द एतदभिधेयमर्थवस्तु याज्ञिया वेदयन्ते कथयन्ति। 'त्रिंशदुक्थपात्राणि माध्यन्दिने सवन एकदेवतानि' इति। तत्र हि माध्यन्दिने सवन उक्थपर्यायास्त्रयोऽथैन्द्रा एव भवन्ति।

II.331. तच्छब्देन चोभयस्यापि प्रतिनिर्देशाद् यस्मिन् प्रैष उपदेश उभयमस्ति अध्रिगुशब्दः प्रैषं च तयोरेवोपन्यस्यति 'अध्रिगो शमीध्वम्' इत्यादिना।

434. अध्रिगुर्नाम कश्चिदस्ति दैव्यः शमिता। तस्यैतत्प्रशासनं स्यात्। सम्प्रेषणमित्यर्थः। किं कारणम्। 'तच्छब्दवत्त्वात्'। तथा ह्यस्य मन्त्रस्याध्रिगुशब्दवत्त्वम्। तदेतदुपपद्यते। तद्गतेनैव निगमेन–'अध्रिगो शमीध्वम्' इति।

II.333. प्रैषस्तु सर्वेषां देवानां शमितॄणां चेति तच्छब्दपरत्वादेवास्य मन्त्रस्य अध्रिगुशब्देनाभिधानमित्युक्तम्।

437. एवमेतस्मिन् दैव्यस्य शमितुरध्रिगोः प्रशासनमित्येतदुपपद्यते, तस्य सम्बोध्यत्वादस्मिन् प्रैषे बहूनि। अस्मिंश्च प्रैषे यथासम्भवं प्रशासनानि द्रष्टव्यानि 'प्रास्मा अग्निं भरत' इत्येवमादीनि।

II.334. एवमत्र अध्रिगो, शचीवः, अग्ने इति सामानाधिकरण्यादधृतगमन इत्युपपन्नमग्नेर्विशेषणमिति।

इन्द्रोऽप्यध्रिगुरुच्यत एव। न तस्यापि कश्चिद् गमनं प्रतिबन्धुमुत्सहते।

438. एवमत्र 'अध्रिगो' इत्यग्निरुक्तः, तस्मादग्नेरध्रिगुत्वमुपपद्यते।

'इन्द्रोऽप्यध्रिगुरुच्यते'। तस्यापि न कश्चिद् गमनधारयितास्ति।

II.335. आपान्तमन्युरित्यनवगतमनेकार्थं च आपातितमन्युरित्यवगमः। सोमो वेन्द्रो वाभिधेयः।

439. 'आपान्तमन्युः'–इत्यनवगतम्, पक्षेण चानेकार्थम्। 'आपातितमन्युः' इत्यवगमः।

II.337. अथेन्द्रस्य कथमृजीषित्वमित्याह–अथाप्ययमैन्द्रो निगम इन्द्रस्यापि ऋजीषित्वे लिङ्गं भवति।

441. अथ यस्मिन्पक्षे ऐन्द्रः एषोऽर्धर्चो भवति, तस्मिन्पक्षे इन्द्रस्य ऋजीषित्वाभिधायक एष 'मन्त्रो भवति'। इन्द्रस्य ऋजीषित्वमनुपपन्नं मन्यमानो निगमं पठति।

II.338. हर्योरश्वयोरस्येन्द्रस्य स्वभूतयोः स भाग ऋजीषं धानाश्च।

अस्ति तृतीयसवने हारियोजनो नाम ग्रहः। तस्यैष प्रैषः।

442. हर्योरेवाश्वयोरस्येन्द्रस्य स भागो यदृजीषम्। धानाश्च। प्रसङ्गादत्र धाना उक्ताः।

443. हारियोजनास्यायं प्रैषः।

II.339. श्मशेत्यनवगतमनेकार्थं च । श्म शरीरं तस्य व्यापिनी श्माशिनीत्यवगमः । कुल्या नदी वाभिधेया ।

444. 'श्मशा'–इत्यनवगतम् । 'श्वाशिनी' इत्यवगमः । 'श्माशिनीति वा' । श्वाशिनी-शीघ्राशिनी शीघ्रव्यापिनी कुल्या नदी वा । श्माशिनी पुनर्नाडी । सा हि श्म शरीरं व्याप्नोति । एवमेतदिह विगृह्यमाणमनेकार्थमपि भवत्येव ।

II.341. उर्वश्यश्नुत इत्यादि व्युत्पत्तिकथनम् । उरु महत् स्थानं यशो वा व्याप्नोतीति उर्वशीत्यवगमः ।

445. 'उर्वभ्यश्नुते'–इति व्युत्पत्तिः । उरु महद् यशोऽभिव्याप्नोतीति ।

अप्सारिणीत्यप्सराः, अन्तरिक्षे वा विचरन्ती उदके वा तत्प्रभवत्वस्मरणात् । स्त्रीजलक्रीडाभिप्रायेणाप्सरः ।

सा हि 'अप्सारिणी' भवति । अपः प्रति नित्यमेव सरति तत्प्रभवत्वात् । तदेव तस्याः प्रियमुदकम्, तस्मादप्सराः ।

II.342. करम्भपात्रहोमे दम्पत्योर्यजमानयोरयं मन्त्रः।

वरुणप्रघासेषु करम्भपात्रहवने पत्नीयजमानयोर्मन्त्रः ।

अस्मिन्निगमेऽप्सशब्दोऽभक्ष्ये दृष्ट इत्येतदवष्टम्भादप्सातेरप्सो नाम इति ।

446. 'अप्सः' इत्येष शब्दोऽभक्षस्याभिधायको दृष्टस्तस्मात्साधूक्तम्—'अपि वाप्स इति रूपनामाप्सातेः' इति ।

II.345. भक्षणेन चात्र सम्भोगहेतुत्वं लक्ष्यते सम्भोगहेतुमित्यर्थः । भक्षणीय एव वा स्त्रीयोन्याः ।

449. स हि रेतःसंज्ञको रसः पुरुषस्याङ्गादङ्गात् सम्भृतः स्त्रीयोनेः 'प्सानीयो भवति'भक्षणीयो भरणीयश्च ।

II.348. वाजगन्ध्यमित्यनवगतम् । गध्यत्युत्तरपदं वाच्यमत्रापि गन्ध्यमित्येवात्रानवगतमित्यर्थः । अत्र च मन्त्रक्रममनादृत्य निगमसमाम्नायक्रमेणैवोपन्यासः ।

451. 'वाजगन्ध्यम्'-इत्येतदपि पदमेकस्मिन्नेव निगमे निरुक्तम् । केवलं समाम्नायानुक्रमविपर्यासः, । 'वाजपस्त्यम्, वाजगन्ध्यम्' इत्येष समाम्नायानुक्रमः ।

II.351. स तौरयाण उपयाहि उपगच्छ अस्मद् यज्ञम् । न च केवल एव किं तर्हि ? मरुद्भिः सह । इन्द्र । सखिभिः सह । सजोषाः संप्रीयमाणः ।

453,454. स त्वं हे पुरुहूत ! इन्द्र ! तौरयाणस्त्वरितयानो भूत्वा उपयाहि उपगच्छैनं यज्ञं मरुद्भिः सखिभिः सह सम्प्रीयमाणः ।

II.352. हरयाण इत्यनवगतम् । हरमाणयान इत्यवगमः । शत्रूणां जीवनस्य हरणमेवं शीलं यानं यस्य स हरमाणयानः । शत्रुजीवितानां हन्तेत्यर्थः ।

454. 'हरयाणः'–इत्यनवगतम्, 'हरमाणयानः' इत्यवगमः ।

II.354. व्रन्दीत्यनवगतम । रूपतश्चार्थतोऽपि । तदुभयं दर्शयति-व्रन्दी व्रन्दतेर्मृदुभावार्थस्येति ।

456. 'व्रन्दी'–इत्यनवगतम् । 'व्रन्दतेर्मृदुभावार्थस्य' धातुरेवायमप्रतीत: ।

II.355. इदानीं व्रन्दीत्यस्य मृदुभावार्थतां प्रतियोगिपदान्तरसमवधानेन स्पष्टयिष्यन्नुदाहरणान्तरं दर्शयति ।

457. ततो निगमाद् व्रन्दतेर्हि मृदुभावार्थता स्पष्टतरेति दर्शयति ।

II 356. निष्षपीत्यनवगतम् । स्त्रीकाम इत्यभिधेयवचनम् । पुंश्चल्य इत्यर्थः । विनिर्गतपसा इत्यवगमः । विनिर्गतं नित्योत्थितं पसः शेपो यस्येति बहुब्रीहिः ।

458. 'निष्षपी' इत्यनवगतम । 'विनिर्गतपसा:' इति शब्दसमाधिः । स्त्रीकाम: पुंश्चलोऽभिधेय: । स हि नित्यं निर्गतशेप एव भवति ।

II.358. क्षुम्पमित्यनवगतम् । अहिच्छत्रकमभिधेयम् । यत क्षुभ्यत इति हेतुवचनम् । यद्यस्मादयत्नेनैव शक्यं क्षोभयितुम् । क्षोभ्यमिति न्याय्यम् ।

460. 'क्षुम्पम्'—इत्यनवगतम् । 'अहिच्छत्रकं भवति'–इत्यभिधेयवचनम् । यस्मात्तत्स्पृष्टमात्रं क्षुभ्यते चलति, तस्मात्क्षुपं क्षोभणमिति न्याय्यम् ।

II.359. निचान्तो भक्षितः प्रीणातीति निचमनेन प्रीणातीति निचुम्पुणशब्दस्यार्थवचनम् । भक्षणेन तर्पयतीति ।

462. स हि निचान्तो भक्षितः प्रीणाति ।

II.360. अनेकार्थतां दर्शयितुमाह–समुद्रोऽपीत्यादि । निचमनेन नियमेनाचम्यत इति निचमनमुदकं तेन पूर्यते । पर्येष्यो निगमः ।.... सोमपात्राण्यनेन मन्त्रेणाप्सु प्रह्रियन्ते ।

463. 'समुद्रोऽपि निचुम्पुण उच्यते' । स हि निचमनेन उदकेन पूर्यते । उदकं हि निचम्यत इति निचमनम् । मृग्योऽत्र निगमः ।.... अनेनाभिसाद्याप्सु प्रह्रियन्ते सोमपात्राणि ।...

II.361. यस्मादसौ नियमाकाशे पद्यते गच्छति । तदिह गमिधासीश्येवं तत प्रत्ययान्तोयं गन्त्यं गन्तेत्यर्थः। पदान्तरसम्बन्धाच्चात्र पक्ष्यभिधेय: ।

'यत्पद्यते' यस्मादसौ पद्यते, गच्छतीत्यर्थ: । अभिधेय: पक्षी । स हि नित्यकालमेव पतितो भवति ।

II.364. वृक इत्यनवगतमनेकार्थे च । चन्द्रमा इत्यभिधेयः । विवृतज्योतिष्क इत्यादयोऽवगमा: । विवृतं स्पष्टं व्यक्तं ज्योत्स्नारूपं ज्योतिरस्य न नक्षत्राणामिवाव्यक्तम् ।

466. 'वृक:' इत्यनवगतमनेकार्थश्च । वृकस्तावत 'चन्द्रमा भवति' । स हि विवृतज्योतिष्कः प्रकाशितज्योतिष्को भवति, तस्माद् वृक: ।

II.365. त्रितस्य कूपे पतितस्यैतदार्षम् ।

467. त्रितस्येयमाप्त्यस्य कूपे पतितस्य कुत्सस्य वार्षम्।

II.366. अनेकार्थतां दर्शयन्नाह-आदित्योऽपीत्यादि । यद्यस्मादावृङ्क्ते आवृणोति जगत् प्रकाशनेन । अथवा वृणक्तीति वधकर्मसु पाठाद् यस्माद् विनाशयति तमांसीत्यर्थः ।

468. आदित्योऽपि वृक उच्यते । यदावृङ्क्ते'.... तस्माद्वृकः ।

II.367. विविधमसौ कृन्ततीति वृङ्क्ते. तस्माद् वृकः ।
ऊर्णा पुनर्वृणोतेर्व्रीयन्ते हि ता शीतार्थे-ऽच्छादितो वा ताभिर्मेषः ।

469. विविधमसौ कृन्तति तस्माद् वृकः ।

470. 'ऊर्णा पुनर्वृणोतेः' इति विग्रहप्रसक्तम् । ता अपि शीतत्राणार्थे विव्रियन्ते । 'ऊर्णोतेर्वा' आच्छादनार्थस्य । ताभिराच्छन्न उरणो भवति ।

II.369. जोषवाकमित्यनवगतम् । प्रविभज्य निगाह— जोषमित्यविज्ञातस्य अस्पष्टस्य नामधेयम् । तद्धि जोषयितव्यं संस्कर्तव्यं सेवितव्यं वा ज्ञानाय स्पष्टतायै ।

471. 'जोषवाकम्' इत्यनवगतम्–अविज्ञातनामधेय-वचनम् । 'जोषयितव्यं भवति' इति शब्द-समाधिः । जोषयितव्यं विज्ञापयितव्यं परस्मै तद्भवत्यस्पष्टत्वात् ।

II.370. यशो हि द्विषतः कृन्तति । दुर्भुक्तं वान्नं माषादि । कर्तनमित्यर्थः

472. यशो हि द्विषतां मर्माणि कृन्तति । अन्नमप्य-सम्यगुपयुक्तमायुरेव कृन्तति ।

II.371. यदा सूत्रमयी तदोपमार्थे कृत्तजरद्वस्त्रखण्ड-प्रथितत्वात् कर्तनसामान्यात् कृत्तिरिव कृत्तिः कन्थोच्यते ।

473. 'उपमार्थे वा' चर्मापि कृत्तिरित्युच्यते । तयेतरा सूत्रमयी–उपमीयते, विकर्तनसामान्यात् । कृत्तिरिव कृत्तिः कन्था ।

II.372. पर्यायप्रसक्तं कितवमाह, किं तवास्तीति पृच्छयते किमतश्च तदनुकरणनिमित्तकमेवा-स्यैतन्नामधेयमित्यर्थः ।

474. स हि नित्यकालमेव दिदेविषुः प्रतिदेवितृभिः कितवैः पृच्छयते किं तवास्तीति । तस्माच्छ-ब्दानुकरणात्कितव एव स बभूव ।

II.373. विरूपो नामाङ्गिरसस्तस्यार्षम् ।
ऊर्मिरूर्णोतेराच्छादनार्थस्य । सा हि च्छादयति नावम् ।

475. विरूप आङ्गिरस एतामाग्नेयं सूक्तं ददर्श ।

476. 'ऊर्मिः, ऊर्णोतेः' आच्छादनार्थस्य, सा ह्याच्छादयति तीरमुदकमध्ये वा यदन्यद् भवति ।

II.374. कुटस्य चर्षणिरिति चानवगते । कृतस्य चायितेति चावगमः । द्वयोरप्येकमुदाहरणम् ।

477. 'कुटस्य' 'चर्षणिः'–इत्येते अनवगते । कृतस्य, चायिता–इत्येतौ शब्दसमाधी । एक एव निगमः ।

II.376. कपूयं कमिति च पूयमिति च कर्मोच्यते । तेन च पुनातिकर्मणोः कर्मविशेषेण कर्म-सामान्यं लक्ष्यते ।

479. आह—'कपूयम्'—इति किमुक्तं भवति ? उच्यते–यदेतत्पापकारी प्रायश्चित्तेन, 'पुनाति कर्म कुत्सितम्' यच्च तत् 'दुःपूयं' दुष्पावं भवति पूयमानमपि एतत्कपूयमित्युच्यते ।

II.377. शब्दसारूप्यप्रसङ्गादाह–ईर्म इति बाहुरुच्यते । स ह्यङ्गान्तरेभ्यो विक्षिप्ततमो भवति ।

480. शब्दसारूप्यप्रसङ्गादुच्यत, 'ईर्म इति बाहुनाम' इति । स हि 'समीरिततरो भवति' अन्येभ्यो-ऽङ्गेभ्यः ।

II.378. तद्धि स्वभावकुटिलमिति । कवचं काहत्सेति चेत् कौटिल्यमेव । ईषदर्थे वा कुः । ततश्च काञ्चितं सत् कवचम् ।

482. आख्यानप्रसक्तमुच्यते,–'कवचं, कु-अञ्चितं भवति' कुटिलमञ्चितम् । स हि तस्य स्वभावः । अथवा 'काञ्चितम्'–ईषदञ्चितं कुटिलीकृतं भवति ।

II.380. आहूयन्ते तत्रस्थैर्योद्धारः, ऊह्यन्ते वा जित्वानेन परधनानीति ।

483. ततः 'आहाव आह्वानात्'–इत्येतद्यथावस्थितस्यैव मन्त्रपदस्य निर्वचनम् । आहूयतेऽस्मिन्नित्याहावः ।

तालुपर्यायप्रसक्तमाह–तरतेः कुणिप्रत्यये रेफलकारापत्त्या । विस्तीर्णतमं हि तदास्यान्तर्गतेभ्योऽङ्गान्तरेभ्यः ।

484. अथ 'तालुः' कस्मात् ? उच्यते । तद्धि 'तीर्णतरम्' इतरेभ्योऽङ्गेभ्यो विस्तीर्णत्वेन भवति ।

II.382. समस्तमन्त्रपाठे प्रयोजनं मृग्यम् ।······ अनालम्बनान्तारिक्षे भीतिः कस्य न जायते ।

485. दुर्वचनत्वं सर्वस्य मन्त्रस्य कृत्स्नाध्ययने प्रयोजनम्···भीरस्मिंस्तन्यत इति भीतननम्, अन्तरिक्षम् । निरालम्बनत्वात्सर्व एव बिभेति ।

II.384. सरणाद् गमनात् सरणः सन् सृणिः । पर्यायप्रसक्तमङ्कुशं निराह-अञ्चतेरञ्चति ह्यसौ हस्तिपकहस्तात् हस्तिमस्तकं नित्यम् ।

488. 'सरणात्' इति व्युत्पत्तिः । 'सरणः' इति न्याय्यम् । सरति गच्छति ह्यसौ हस्तिशिरसि ।

II.385. द्विरभ्यासोऽध्यायपरिसमाप्तिज्ञापनार्थ इति सिद्धम् ।

489. अध्यायसमाप्त्युपप्रदर्शनार्थाय द्विरभ्यास इति

II.387. किं पुनः कारणं प्रथमैषा सती पञ्चमीत्वेन विपरिणम्यत इति ? उच्यते । तथाहि वाक्यसंयोगः । तेन हि प्रकारेण पञ्चमीत्वेन विपरिणतस्यास्य शब्दस्यानेन वाक्येनार्थसंगतिर्भवति नेतरथा यथावस्थितस्य ।

491. आह–किं पुनः कारणं प्रथमैषा सती पञ्चमीत्वेन विपरिणम्यत इति । उच्यते-तथाहि वाक्यसंयोगः । तेन प्रकारेण पञ्चमीत्वेन विपरिणतस्यास्य शब्दस्यानेन वाक्येन संयोगोऽर्थसङ्गतिर्भवति न यथावस्थितस्य ।

निष्षिचेर्नैरुक्ता इत्याह । निःक्षारितं कात्स्न्र्येनापनीतमस्मात् पापकम् । सिचेः शुचिरित्याह ।

492. नैरुक्ताः पुनर्निःपूर्वात् सिञ्चतेरितरः शुचिरित्येवं मन्यन्ते । निष्कृष्य हि तस्मात् 'पापकम्' अशुचित्वमन्यस्मिन् सिक्तं भवतीत्येवम् ।

II.388. मोषणाद्वा मुष्टिर्मुषितमिव तदन्तर्गतादर्शनसामान्यात् ! मोहनाद्वा किमत्रेत्यज्ञान् मोहयतीति मुष्टिः ।

493. 'मोषणाद्वा' तेन हि मुष्यते 'मोहनाद्वा' तत्र हि मुह्यति परः किमप्येतस्मिन्मुष्टाविति ।

II.390. वाणीशब्दस्यार्थनिर्वचनम् । आपो वा वहनादित्यादि । आपो वाणीशब्देनोक्तास्ता हि वहनाद्वाणिरित्युच्यन्ते ।

495. एवमापो वाणीशब्देनोक्ताः । ता हि 'वहनात्' वाणीरित्युच्यन्ते । वाच्यो वा वदनात् वाणीशब्देनोच्यन्ते ।

| | |
|---|---|
| II.392. सल्लूकं संलुभितमत्यन्तमूढं मूर्च्छायुक्तमित्यर्थः। सरणशीलं वा अत्यन्तं दूरं नष्टमित्यर्थः। चकर्थ कुर्विति। | 497. तथा चैतदुद्धृत्य संलूकं संलुब्धं संमूढमप्रतिपक्षं कुरु। |
| II.393. कत्पयमित्यनवगतम्। कमिति सुखनाम तस्येयं मकारस्य तकारेण व्यापत्तिः। छान्दसत्वात् पयसश्च सलोपः। कंपयसमित्यवगमः। सुखमस्य पय इति निर्वचनम्। मेघोऽभिधेयः। | 'कत्पयम्'–इत्यनवगतम्। कपयमित्यवगमः। 'सुखपयसम्'–इति पर्यायेणाभिधेयवचनम्। मधुरोदको यो मेघः सोऽभिधेयः। किं कारणम्? 'सुखं' हि सुखोत्पादनम 'अस्य पयः' मधुरत्वात्। |
| II 395. कथं पुनरपां सप्तसंख्याकत्वम्? उच्यते–आधारभेदात् प्रधानभूता गङ्गाद्याः सप्त नद्यः, तासां समुद्राणां सप्तसंख्याकत्वं प्राधान्याच्च। | 499. 'सप्त' शब्देनापि समुद्रानेव केचिद्वर्णयन्ति। ते हि पृथिव्याः शाखा इव लक्ष्यन्ते विस्रवन्ति च। |
| II.397. किञ्च योऽस्क्रधोयुर्दीर्घायुर्जरावर्जितः सर्वान् सर्वैश्च गुणैस्तद्वान् तद्वतः पुत्रमाहरेति समानम्। | 501. एवमत्र 'अस्क्रधोयुः' इत्यनेन दीर्घायुरुच्यते तस्याभीष्टत्वाच्छब्दसारूप्याच्च। |
| II.399. ऋदूपे इत्येतत्पदमनेनैव सादृश्यादिह समाम्नातम्। तत् पुनः प्रसङ्गेनोपरिष्टाद् व्याख्यास्यामः। | 504. 'ऋदूपे' इति, उपरिष्टाद् व्याख्यास्यामः, 'ऋदूपे चिददूवृधा' इत्यत्र। |
| अगस्त्यलोपामुद्राब्रह्मचारिसंवादे ब्रह्मचारिणः। | अगस्त्यलोपामुद्रासंवादे। |
| II.400. वैश्वानरस्याग्नेः सौचीकस्य वा ऋषेर्वाजम्भरस्यार्षम्। | 504,505. वैश्वानरस्याग्नेः सौचीकस्य वा वाजम्भरस्य वा सप्तेरार्षम्। |
| क्रमयोऽभिधेयाः। ते हि वृक्षं निस्सारीकुर्वन्तः कम्पयन्ति। स्वयं वावलम्बनस्वभावत्वादेव मुच्यन्ते। | 506. एवमत्र वृक्षसम्बन्धात् 'क्रमयः कल्पनाः' ते हि वृक्षं मुष्णन्ति मोषयन्ति कम्पयन्ति च यं खादन्ति, स्वयमेव वा कम्पन्ते चलनस्वाभाव्यात्। |
| II.402. तच्च दर्शयति रुजन्ति कूलानीति रुजाना नद्यः। रुजन्त एवेत्यवगमः। | 507. 'रुजत्यः' इत्यवगमः। 'नद्यो भवन्ति' इत्यभिधेयवचनम्। 'रुजन्ति कूलानि'–इति हेतुनिर्देशः। |
| II.405. उपलप्रक्षिणीत्यनवगतम्। उपलेषु श्लक्ष्णेषु वालुकासु यवान प्रक्षिणाति। क्षि हिंसायां हिनस्ति रुजतीत्यर्थः। | 510. 'उपलप्रक्षिणी'–इत्यनवगतम्। 'सक्तुकारिका' अभिधेया, सा हि उपलेषु यवान् प्रक्षिणोति हिनस्ति। |
| II.406. शिशुराङ्गिरसस्तस्यार्षम्। स हि दुर्भिक्षानन्तरं प्रवृत्तसोमयागः सन् दशापवित्रान् | 510,511. शिशुराङ्गिरसस्तस्यार्षम पंक्तिः। ऐन्द्री। स्वदुष्कृताशङ्कया किलापरिस्रवति सोमे पाप- |

II.406. क्षरति सोमे निरुक्तं श्येनः कनीयो भवति श्रुतं प्रतिबन्धकनीयो भवति पापानुत्तये दुश्चरितानुकीर्तनपुरस्सरमनेन किलाध्येषणा चक्रे ।

II.407. स हि कला मानोन्मानप्रतिमानादिविषयाः प्रकलाश्च गणितरत्नपरीक्षादिका वेद विजानाति ।

II.408. अभ्यर्धयज्वा इत्यनवगतम् । ऋधु वृद्धौ यजिर्दानार्थः । अभ्यर्धयन् यजतीत्यस्य वाक्यस्यार्थः ।

II.410. 'अस्मे' इत्येतत प्रकृत्यर्थाभेदेऽपि प्रत्ययार्थभेदादनेकार्थम । सर्वविभक्त्यर्थेषु वृत्तेः ।

II.411. 'अस्मे ते बन्धुरिति । प्रथमान्तेन बन्धुशब्देन सामानाधिकरण्यात प्रथमां निश्चित्य आह्वयामीत्यर्थः ।

II.413. पाथ इत्यनवगतमनेकार्थे च । तत् पुनरेतद् यथा व्याख्यातम्, 'पन्थाः पथतेर्वा' इत्यादौ । अन्तरिक्षं तावदुच्यते ।

II.415. हे अग्ने सप्रथाः सर्वतः प्रथुरसि प्रियश्च होता वरेण्यो वरणीयः ।

अग्नीषोमीयप्रणयनेऽग्निरुच्यते ।

II.417. ओजश्शब्दं निगमप्रसक्तं निराह । ओजतेर्वा नैरुक्तस्य धातोः सामर्थ्यकर्मणो वा उब्जतेर्वा न्यग्भावार्थस्य ओजो हि सामर्थ्यं वृद्धिर्वा तेजसा न्यग्भावयति विश्वम ।

II.420. देवो देवाच्या कृपा इत्येते अनवगते । देवशब्दस्योपादानमनयोरेव सम्प्रतिपत्त्यर्थम ।

II.422. तदसौ अन्नपानभोगादिना निर्मिमीते एवं शीलः संभोगेन हि सम्पूर्णो भवति । अतोऽसौ पितुः कन्यापितुर्जामाता भवति ।

511. कीर्तनादात्मशुद्धिर्भविष्यतीति मन्यमान आत्मानमेव निर्दिशन्नाह ।

513. स हि 'कलाश्च वेद प्रकलाश्च' कलासम्बन्धेनैवेह प्रकला उच्यन्ते, कला एव ह्यपेक्ष्य प्रकला भवन्तीति ।
'अभ्यर्धयज्वा' इत्यनवगतम । अभ्यर्द्धयन् अभिवर्धयन यो यजति । यजतिरत्र दानार्थः।

515. 'अस्मे'इत्येतत्पदं सर्वविभक्त्यन्तम । तस्मादनेकार्थम ।
प्रथमायास्तावत्-'अस्मे ते बन्धुः'-वयमित्यर्थः ।

520. पाथ इत्यनवगतमनेकार्थे च । 'अन्तरिक्षम्' तावत् पाथ उच्यते । तत्पुनरेतत् 'पथा व्याख्यातम्' 'पन्थाः पततेर्वा'इत्यत्र ।

522. हे अग्ने ! त्वमेव सप्रथाः सर्वतः प्रथुः विस्तीर्णो जुष्टश्च आसेवितो यजमानैः । होता आह्वाता देवानां भवसि । वरेण्यो वरणीयः सर्वथापि ।

523. अग्नीषोमप्रणयने विनियुक्ता ।

525 'ओजः' ओजतेर्वा वृद्ध्यर्थस्य । उब्जतेर्वा न्यग्भावार्थस्य ।

528. देवो देवाच्या कृपा'—इत्येते अनवगते । देवशब्दोऽनयोरेवोपलक्षणार्थोऽत्र समाम्नातः ।

530. स्त्रीत्वं हि मैथुनेन व्यवहारेणासौ निर्मिणोति । तेनासौ दुहितुः पतिर्जामाता भवति ।

II.424. परस्य किमिदानीं कस्य किं छिद्रमिति चरति किमिदं वर्तत इति वा चरति यः स उच्यते। साधुजनवैरी सदा विद्धबुद्धिः पिशुनोऽभिधेयः।

533. किमीदी च पिशुनः। स हि 'किमिदानीम्' वर्तत इति, एवमन्वेषमाणः 'चरति'। अथवा किमिदं वर्तत इति एवमन्वेषमाणश्चरति। स हि तस्य स्वभावः।

II.427. अमीवेत्यनवगतम्। हिंसितारो गौर्वाभिधेयाः। ततश्च पूर्वमन्त्रोक्तेन अभ्यमनेन एतत् पदं व्याख्यातम्। अतोऽभ्यमनवान इत्यवगमः।

535. 'अमीवा' इत्यनवगतम्। अभ्यमनवान्' -इति यदुक्तमाधस्त्ये मन्त्रेऽनेनैव तत् व्याख्यातम्।

II.428. रक्षोहा नाम ब्रह्मणः पुत्रस्तस्यार्षम्। गर्भरक्षणार्थे कर्मणि विनियोगः। स्त्री उच्यते।

रक्षोहा नाम ब्राह्मणस्तस्येयमार्षम्। पुत्रकामस्य षडाहुतो नाम स्थालीपाकस्तत्रेयं विनियुक्ता।

II.430. श्रुष्टी पुरन्धिः इत्येते अनवगते अनेकार्थे। श्रुष्टीवरीरित्यर्थः। सुखमभिधेयम्। सुखवत्यो भवत' इति वचनात्। रोचश्रुषिरिति च। इह तु क्षिप्रनाम निगमपदान्तरसम्बन्धसामर्थ्याद् गम्यते तेनानेकार्थत्वमपि।

538. पुरन्धि च यज। एवमत्र यागस्य विघ्नभयाक्षिप्रस्येष्टत्वात् 'श्रुष्टीति क्षिप्रनाम' इत्युपपद्यते। अन्यत्र हि वक्ष्यति 'श्रुष्टीवरीः सुखवरीः' इति, तस्मादेतदनेकार्थमपि भवति।

II.432. वरुण इत्यपरं दर्शनम्। धीशब्दोऽत्र प्रज्ञावचनं दर्शयति। यस्मात् प्रज्ञया गुणेन स्तौमि मन्त्रो वा मन्त्रदृग्वा अत्रिः।

'वरुणः' पुरन्धिशब्देनोच्यते, इत्यपरं मतम्।

539. किं कारणम्? तं ह्यन्यत्रापि मन्त्रदृक् प्रज्ञया बुद्ध्या स्तौति।

II.435. सुविदत्र इत्यनवगतम्। वेत्तेः सुविद्यत इत्यवगमः। प्रशस्तज्ञान इत्यर्थः। महाकल्याणविद्य इति।

541. 'सुविदत्रः' इत्यनवगतम्। 'सुविद्यः' इत्यवगमः। कल्याणविद्य इत्यभिधेयवचनम्।

II.436. इन्द्रस्य सव्यतामापन्नस्येदमार्षम्।

543. इन्द्रस्य सव्यत्वमापन्नस्येयमार्षम्।···

II.437. गिर्वणा देव इत्येतेनार्थमुक्त्वाह गीर्भिरेनं वनयन्तीत्यर्थनिर्वचनम्। भाजयति सेवयति स्थापयतीत्यर्थः।

'गीर्भिः'-स्तुतिभिः 'एनं वनयन्ति' इत्यर्थवचनम्।

II.438. असुः प्राणः प्राणश्च वायुः। तत्स्पष्टतरं भाष्यकार आह सुसमीरितस्त्वसमीरिते। असुसमीरिता इत्यस्य व्याख्यानं वातसमीरिता इति।

545. 'असूर्ताः' असुः प्राणः, प्राणश्च वायुः। 'योऽयं वायुः पवन एष प्राणः' इति ह्युक्तम्, तेन समस्ता ईरिता असुसमीरिताः। वातसमीरिता इत्यर्थः।

II.439. नित्यं शत्रून् प्रत्यभिगन्ता शत्रुशरीरलग्नेव दृश्यत इत्यर्थः। आयुधाख्या शक्तिरभिधेया।

'ऋष्टिः' अभिधेया। तां हि संग्रामे शत्रवो मन्यन्ते मामेवा प्रत्यश्रिता क्षिप्ता मामेवा प्रत्यश्रितेति।

II.441. ततश्च जारयायि अजायतेत्यवगमः।

547. एवमत्र 'जारजायि'—इत्यस्य 'अजायि'—इत्यर्थप्रतीतिः।

II.443. चन इत्यनवगतम्। अन्नमभिधेयम्। पचता इत्युभयं चेदं पचेर्धातोः। अत आह—'पचतिर्नामीभूत' इति।

549. 'चनः' इत्यन्ननाम। 'पचता' इत्यनवगतम्। एतद्ध्येकवचनं द्विवचनं बहुवचनं वा भवति प्रकरणविशेषात्। आख्यातस्वरूपं चैतन्नाम। पचतिर्नामीभूतः'—इति भाष्यकारो ब्रवीति।··· इयमग्नियुतस्य वाग्नियूपस्य वार्षम्।

II.444. अग्नियुतस्याग्नियूपस्य वा स्थूरपुत्रस्यार्षम्।

II.445. अमिन इत्यनवगतम्। अमितमात्र इत्यवगमः। अपरिमाण इत्यर्थः। अपरिगणितकालो वा महानित्यर्थः।

551. 'अमिनः' इत्यनवगतम्। 'अमितमात्रः' इत्यवगमः। न यस्य मात्राणां मानमस्ति, सोऽमिन इत्युच्यते।

II.446. जज्झतीरित्यनवगतम्। आपोऽभिधेयाः। शब्दकारिण्य इति मेघात् पतन्त्यो जज्झतीरित्येवंरूपं शब्दं कुर्वन्तीत्येवंरूपशीलधर्माः।

552. 'जज्झतीः' इत्यनवगतम्। शब्दानुकरणात् 'आपः' इति प्रतीयन्ते।

II.449. सुशिप्र इत्यनवगतम्। तत्पुनरेतेन सृप्रेण व्याख्याताम्। सृपेरेवादिव्यापत्त्यादिना सुशिप्रशब्दो द्रष्टव्य इत्यर्थः।

555. 'सुशिप्रः' इत्यनवगतम्। तत्पुनरेतत् एतेन' एव सृप्रशब्देन व्याख्यातम्। सर्पतेरेवैतदपि।

II.451. विपरिवृढ इत्यवगमः, एकमेवेदं ज्योतिरिति कृत्वा मध्यमे वैद्युतात्मना उत्तमे आदित्यात्मना।

556. 'द्विपरिवृढः' इति न्याय्यम्। मध्यमे च स्थाने वैद्युतात्मना, उत्तमे च सूर्यात्मना।

II.455. अवगमस्तु जरणं गरणमिति वा द्रष्टव्यम्। स्तोत्राभिधेयम्।

560. एवमत्र जरतेः स्तुत्यर्थस्य शब्दसारूप्यादर्थाविरोधाच्च 'जरूथम्-स्तोत्रम्' उपपद्यते।

II.456. तेनास्य दानार्थत्वं गमयति।

561. एवमत्र स्तोमसम्बन्धात् 'तुञ्ज'-शब्दो दानपर्यायवचनस्तुञ्जतेश्च दानार्थस्य दर्शनात्।

II.458. उष्टिशब्दो वशेः कान्तिकर्मणः। भोगसन्तानं वष्टीति ततनुष्टिः। विषयभोगसन्तानकाम इत्यर्थः।

563. एवमत्र 'ततनुष्टि' शब्देन विषयोपभोगप्रधान उच्यते शब्दार्थाविरोधादित्युपपत्तिः।

II.460. इलो बलमन्नं तन्निष्पत्तिहेतुभूतमुदकमत्रेलाशब्दवमायेण इलाशब्देनोच्यते। बिले उदके शेते इति बिलेशयः सन् वर्णव्यापत्तिलोपादिना इलीबिशः। मेघोऽभिधेयः।··· कियदप्यपरिमितं स्वबलं धारयति।

564. 'इलाबिलशयः' इत्यवगमः। मेघोऽभिधेयः। स हि इलाहेतोरुदकस्यात्मीयानि निर्गमनबिलानि संरुध्य शेते। तस्यैव वा बिलेषु-इलाहेतुरुदकं शेत इति इलीबिशः।

565. कियदप्युदकमपरिमाणं धाः धारयतीति कियद्धा मेघः।

II.462. मर्त्यानां त्वदायत्तौ च संसारमोचौ । त्वं च पितृवत् सर्वयजमानानामनुग्रहपरः । नोऽस्मान् सम्यग्ज्ञानोपादानेन मोचयास्मात् संसारादिति ।

566. सर्वविज्ञानप्रकाशेनानुगृह्यास्मान्मोचयस्वास्मात्संसारादित्यभिप्रायः ।

II.464. मेघोऽभिधेयः । उच्चार्यमाणेन स्तोत्रेण स्तोता वा ।

569. एवमत्र 'रास्पिर'-शब्देनोदकं स्तोता वाभिधीयते, शब्दसारूप्यादर्थाविरोधाच्च ।···

II.465,466. अस्य च भाऋजीक इत्येतेन गतार्थत मन्यमानो भाष्यकारो निगमं नाध्यगीष्ट ।

'भाऋजीकः'-इत्यनेन गतार्थतामस्य मन्यमानो भाष्यकारो निगमं नाधीते ।

II. 466. हिनोत इत्यनवगतम् । प्रहिणुत इत्यवगमः ।

570. 'हिनोत' इत्यनवगतम् । 'प्रहिणुत'-इत्यवगमः ।

II. 467. शनैर्वा तकति गच्छति गन्तव्यशात्तु शब्देन वेत्यंभूतेन तकति ।

572. 'शनकैस्तकतीति वा' । तद्धि भाराक्रान्तं शनकैर्गच्छति, 'शब्देन तकतीति वा' । तद्धि शब्देन गच्छति ।

II.469. सुमदित्यनवगतम् । स्वयमित्यवगम ।

574. 'सुमत्'-इत्यनवगतम् । 'स्वयम्' इत्यवगमः ।

II.470. आश्वमेधिक इति प्रकरणमनुसारयति । प्रकरणमप्यर्थाभिव्यक्तावलमित्यभिप्रायः ।

575. 'आश्वमेधिको मन्त्रः' इति प्रकरणोपप्रदर्शनार्थमाह-मन्त्रार्थं निर्ब्रुवता प्रकरणमप्युपेक्षितव्यमिति, एतदेतेन प्रदर्शितं भवति ।···

स्थूलप्रतियोगिप्रसङ्गेन अणुपरिमाणं निराह ।

स्थूलप्रसङ्गेनैव अणुशब्दो निरुच्यते ।···

II.471. कुरुं निराह-कुरूनसौ पुत्रत्वे गतवान् ।

कुरुङ्गः, स हि कुरून् प्रति पुत्रत्वेन गतो जेतुं वा ।···'कुरुः कृन्ततेः'

प्रसङ्गादाह कुरुः कृन्ततेः शत्रूनसौ छिनत्ति वा पापाचारानसाधून्वा ।

576. स हि शत्रून् कृन्तति ।

II.472. अमत्र इत्यनवगतम् । अमात्र इत्यवगमः । मात्रा परिमाणम् । अपरिमाणो महानित्यर्थप्राप्तवचनम् ।

577. 'अमत्रः' इत्यनवगतम् । 'अमात्रः' इति शब्दसमाधिः । 'महान् भवति' इत्यर्थवचनम् । यो हि महान्भवति न तस्य मात्राः प्रमातुं शक्यन्ते, अतोऽसावमत्र इत्युच्यते ।

II.473. अनर्शरातिरित्यनवगतम् । अनश्लीलदानमित्यवगमः । अर्शसशब्दोऽश्लीलवाची । अश्लीलं किम् ? पापकम् ।

578. 'अनर्शरातिम्'-इत्यनवगतम् । 'अनश्लीलदानम्' इत्यवगमः । विग्रहप्रसक्तस्याश्लीलशब्दस्यार्थमाह, 'अश्लीलं पापकम्' इति ।···

II.474. तथा चाह-अप्रत्यृतोऽप्रतिगतोऽन्यस्मिन् अन्यमनाश्रितः स्वतन्त्र इत्यर्थः ।

'अप्रत्यृतः' इत्यवगमः । यः 'अन्यस्मिन्' नाश्रितो भवति स्वप्रधान एव सोऽनर्वा- इत्युच्यते ।

II.475. तेन सामि समाप्तम् असमाप्तं चोच्यते तस्या नञ् प्रतिषेधस्ततश्चासामि असमाप्तैः ।

579. सामीति समाप्तमुच्यते, तस्य प्रतिषेधोऽसामि ।

II.476. अस्यैव च पूरणार्थत्वं पूर्यमाणधमनीयसम्बन्धात् स्पष्टयिष्यन्नुदाहरणान्तरमुपन्यस्यति स्म वामदेवस्य ।

581. 'गल्दा धमनिर्भवति' इत्यस्य भाष्यकारवाक्यस्य मन्त्रे नात्र धमनिलिङ्गं विशिष्टमस्तीत्यतो विशिष्टलिङ्गमन्यदुदाहरणं ब्रवीति ।

II.479. ज्योतिषा चोदकेन वेति । केचिद् वा शब्दं चार्थे वर्णयन्ति ज्योतिषा चोदकेनेति च ।

584. 'बकुरेण' जलसमूहेन ज्योति समूहेन, वा।

II.482. ऋषेः समन्दपुत्रस्य मत्स्यरूपस्यार्षम् । मत्स्यनामैव वा । यत धीवरेण जालेन गृहीता आदित्यानित्थमाहुः ।

585. ऋषेर्वा मत्स्यवधकारुण्याभिभूतस्यैतदार्षम् । मत्स्यानां वेचिन्मन्यन्ते ।

एतत्समानार्थस्य सारूप्यप्रसङ्गाद् अंहूरणशब्दस्य तावन्निगमं दर्शयति कृण्वन्नंहूरणादिति ।

586. 'अंहूरणम्-इत्यप्यस्य भवतीति प्रासङ्गिकम् । एवमपि हि प्रयोगो भवतीति ।

II.484. अन्यस्तु बतेति निपातोऽसत्त्ववचनोऽव्ययम । यत आह-निपातः खेदानुकम्पयोरिति ।

588. एवमत्र प्रकरणाविरोधात् बत'-इत्येष निपातः खेदानुकम्पयोः ।

II.485. वातः पुरोवात एतद् वृष्ट्युदकमाप्याययति ।

'वातो' ह्युदकम आप्याययति शीतीकरोति ।

II.487. वेः पुत्रो वाय इत्येवमेकपदत्वेन वायशब्दं व्याख्याय भाष्यकारः शाकल्यमुपालभते स्म वा इति य इति च पदद्वयं चकार । तत्तु न युक्तम् ।

590. एतस्मिन्निगमे पदविभागतः कश्चिद् विचारोऽस्ति, तमाह भाष्यकारः,-'वेति च, य इति च चकार शाकल्यः'-इति । वा इति य इति च पदे चकार शाकल्यः पदकारः । तदेतद् विचार्यमाणं न साधु भवति ।

तस्मान्न द्वे पदमेतत । स्वरूपानुपपत्तेरानर्थक्यप्रसङ्गाच्चेति भाष्यकारस्य निश्चयः ।

591. तस्मादाख्यातस्यानुदात्तत्वादर्थासम्भवाच्च द्विपदत्वे 'वायः'इत्येतदेकपदमेव । 'शकुनिपुत्रः' एव चास्याभिधेय उपपद्यते ।

II.490. भरद्वाजस्य । हिशब्दो यस्मादर्थे । पुरु बहु वां युवयोः पुरुभुजा हे पुरुभुजौ बहूनां हविषामभ्यवहर्तारौ पालयितारौ वा यजमानानाम् । देष्णं दानं यस्मात् प्रभूतदायिनौ युवां तस्माद् धेनुं दोग्ध्रीं गां नोऽस्मभ्यम । इषम अन्नं च पिन्वत क्षारयतं दत्तमित्यर्थः ।

592. भरद्वाजस्यार्षम् । प्रातरनुवाकाश्विनयोः शस्यते । पुरु हि वां बहु देष्णं दानं युवाभ्यां यज्ञे यस्मात् हे पुरुभुजा बहुभोजिनौ! अश्विनौ ! तस्माद्युवां ब्रूमः । धेनुं नः तर्पयन्तीमस्मभ्यम इषम अन्नलक्षणम पिन्वतम् प्रक्षारयतम् ।

II.494. अद्यत्वेपि कृतकृच्छ्रादिपुरश्चरण आस्यदघ्ने उदके सूक्तमेतज्जपन् अलक्ष्मीं नाशयेत् ।

II.596. अद्यापि योऽलक्ष्म्याभिभूतो भवति स आस्यदघ्न उदकेऽवतीर्य सूक्तमेतज्जपति । तस्य लक्ष्मीर्निर्नश्यति ।

II.294,295. पराशरः पराशरश्च शतयातुर्बहूनां शातयिता तेन रक्षोघ्नं शस्त्रमाहृतमासीदिति स्मर्यते इतिहासे। वसिष्ठश्च एवमादयः।

596. पराशरश्च शतयातुर्बहूनां रक्षसां यातयिता। तेन हि रक्षोघ्नं सत्रमाहृतमासीदिति भारते श्रूयते। वसिष्ठश्चेत्येवमादयः।

II.497. प्राशित्रब्राह्मणे पूष्णोऽदन्तकत्वश्रवणात्। 'तत् पूष्णे पर्याजहुः'।

598. प्राशित्रभागब्राह्मणे हि श्रूयते 'तत्पूष्णे पर्याजहु.......'-इति।

II.498. मामयमिन्द्राणी इन्द्रेण।

599. इन्द्रपत्न्येवं ब्रवीति।...

II.499. प्रत्ययस्यार्थभेदादिदं कामयमान उच्यते कर्मेदं सामान्येन प्रदर्शिते यथाभिलषितं धानादि द्रव्यमिच्छति स इदंयुः।

'इदंयुः' इत्यनवगतमनेकार्थं च। इदमिति यत्किञ्चिदभिप्रेतं निर्दिश्यते। तद्यः कामयते स इदंयुरित्युच्यते।

II.501,502. अथवा यागदानादिभिः किंकृताभिः किं पिबतखादतेत्येवंप्राया एव प्रेप्सा प्रेक्षा येषां तेऽश्रद्दधाना नास्तिकाः किंक्रियाः सन्तः कीकटाः।

602. अथ वा किं क्रियाभिरिति एवं प्रेप्सान्ते नास्तिका एवमभिप्राया इत्यर्थः। एतस्माच्छब्दसारूप्यादर्थोपपत्तेश्च कीकटा अनार्यदेशनिवासिन इत्युपपद्यते।

II 505. वृन्दमित्यनवगतम्। समुदायोऽभिधेयः। तत्पुनरेतेन बुन्देन व्याख्यातः, क्रियायोगसमवायसम्भवात्।

604. 'वृन्दम्'–इति, एतत्पदम् 'बुन्देन' एव व्याख्यातम्। अस्यापि हि ता एव व्युत्पत्तयो या बुन्दशब्दस्य।

II.506. सौन्धीकस्याग्नेर्विश्वेषां च देवानां संवादे देवानामिदमार्षम्।

605. सौचीकस्याग्नेर्विश्वेषां देवानां संवादसूक्तम्, तत्रेयं विश्वेदेवानामार्षम्।

वृणोतेर्वा वकारस्योकारो बश्च प्रत्ययः। गर्भस्याच्छादनमभिधेयम्।

'वृणोतेर्वा' स्यात्, तेन हि गर्भ आवृतो भवति।

II.507. ऋबीसमित्यनवगतम्। पृथिव्यभिधेया। अपगतभासमित्येवमाद्याः शब्दसमाधय उपपद्यन्ते।

606. 'ऋबीसम'–इत्यनवगतम। अपगतभासमित्येवमाद्याः शब्दसमाधयः। पृथिवी अभिधेया। सा हि कृष्णच्छाया तस्मादपगतभासमित्येवमाद्याः शब्दसमाधय उपपद्यन्ते।

स्कन्दस्वामी

III.1. यत्समाम्नायक्रमेण यथा प्रतिज्ञातं नैघण्टुकैकपदिकप्रकरणद्वयं निरुक्तम् । इदानीं यत् पुरस्तादुत्क्रुष्टं 'तदुपरिष्टाद् व्याख्यास्यामः' इति तृतीयं प्रकरणं तस्य प्राप्तोऽवसर इत्याह ।··· अग्न्यादिगणसमूहात्मकस्य प्रकरणस्य शेषतया गुणपदसमवायात्मकं प्रकरणद्वयं व्याख्याय तच्छेषितयावस्थितं दैवतं व्याख्यायत इति वाक्यशेषः ।

III.2. प्राधान्यस्तुतीनां प्राधान्येन स्तुतिर्यासां देवतानां तासां यानि नामान्यग्न्यादीनि देवपत्न्यन्तानि ।···दैवतं प्रकरणमाचक्षते पूर्वाचार्याः ।··· रूढिरिति पूर्वाचार्यप्रसिद्ध्या दर्शयति ।··· उपगम्योपगम्य सर्वप्रकारमीक्षा ईक्षणं निश्चयाधानं प्रकरेणैव करिष्यत इति शेषः ।··· यस्यां देवतायां विषयभूतायां स्तुतिं प्रयुङ्क्ते आर्थपत्यमर्थपतित्वमिच्छन् अर्थस्यैश्वर्यादेः पतिः स्यामिति तद्दैवतः स मन्त्रो भवति । सा तस्य मन्त्रस्य देवता ।

III.3. तास्त्रिविधा ऋचो वक्ष्यमाणं त्रैविध्यं तद्दैवतः स मन्त्र इतिमात्रं प्रस्तुत्य यदृच्छां त्रैविध्यप्रदर्शनं बाहुल्यात्तिरोहितार्थतरत्वाच्च । उक्तं त्रिप्रकारत्वमाचष्टे ।

विभक्तियोगस्य क्रमेणोदाहरणानि दर्शयति स्म ।

III.4. इन्द्रो दिव इन्द्र एव पृथिव्या ईशे···ईष्टे । इन्द्र एवापाम्—आप इत्यन्तरिक्षनाम अन्तरिक्षस्य । इन्द्र एव पर्वतानाम्, इत् पदपूरणः । इन्द्र एव वृधां वृद्धानां महतां यज्ञानामन्येषां वा केषांचित् ।

दुर्गः

609. समाप्तं चैकपदिकं प्रकरणम् । अस्यानु दैवतं तद्भवति यस्यायमादिः 'अथातो दैवतम्' इति ।······गुणपदानि···व्याख्यातानि द्वयोः प्रकरणयोर्नैघण्टुकैकपदिकयोः ।

प्रकरणद्वयादनन्तरमिदमवश्यं समाम्नायानुक्रमप्राप्तं व्याख्यातव्यमित्येवं क्रमे ।···देवतापरिज्ञानानुबद्धस्त्वखिलः पुरुषार्थ इत्यतो दैवतं

610. प्रकरणं व्याख्यास्याम इति वाक्यशेषः ।

610. तद्यानि नामानि प्राधान्यस्तुतीनामग्न्यादीनां देवपत्न्यन्तानां तद्दैवतं प्रकरणमित्येवमाचार्या व्याचक्षते ।

निरूढा हीयमेतस्मिन् प्रकरणे संज्ञेत्यभिप्रायः । उपगम्योपगम्य परीक्षा वर्तिष्यत इति वाक्यशेषः ।

यस्यां देवतायामभिष्टुतायाम् आर्थपत्यम् अर्थपतिभावमात्मन इच्छन् अमुष्या देवतायाः प्रसादेनाहममुष्यार्थस्य पतिर्भविष्यामीत्येतां बुद्धिं पुरोधाय स्तुतिं प्रयुङ्क्ते तद्दैवत एव स मन्त्रोऽर्थाद् भवति । एतन्मन्त्रे देवतालक्षणम्

611 ऋच एव हि प्रायेणातितरामपिहितार्थाः ।··· याः काश्चन सर्ववेदेष्वृचस्ता एताः सर्वा अपि त्रिविधा एव भवन्ति ।

तत्त्रैविध्यं सामान्यत उद्दिश्याधुना प्रत्येकं लक्षणतो ब्रवीत्युदाहरणैश्च दर्शयति ।

612. तद्यथैतान्युदाहरणान्यानुपूर्व्येणैव सप्तस्वपि विभक्तिषु इन्द्रो दिव इत्येवमादीनि ।···

इन्द्रो दिवः ईशे ईष्टे । इन्द्र एव पृथिव्या ईष्टे । इन्द्र एव अपाम् ईष्टे वर्षकर्मादिना । इन्द्र एव पर्वतानां मेघानाम् ईष्टे । इन्द्र एव वृधाम् अतिप्रवृद्धानामपि भूतानामीष्टे ।

III.5. इन्द्रमेवार्केभिः, अर्कैर्मन्त्रैः, ऋगात्मकैः । अर्किणो मन्त्रवन्तो होतार इत्यभिप्रायः ।··· 'इन्द्रेणैते'···पुरस्ताद्व्याख्यातम् ।

'इन्द्राय साम गायत' हे उद्गातारः । कीदृशाय विप्राय···वृष्टया विविधमापूरयित्रे, बृहते महते ।

III.6. नेन्द्रात् न चेन्द्रात् ऋते इन्द्रमुक्त्वा पवतेर्बहुवचनस्य स्थान एकवचनम् । पवन्ते क्षरन्ति धाम स्थानं किञ्चन किञ्चित्प्रति पीयमानानां सोमानां स्थानं पात्री देवता नान्यं प्रति देवतान्तरमित्यर्थः । इन्द्रमेव गच्छन्तीत्यर्थः ।

III.7. इन्द्रस्य नु इति क्षिप्रनाम क्षिप्रं वीर्याणि वीरकर्माणि प्रवोचं प्रब्रवीमि । यानि चकार कृतवान् करोति वा प्रथमानि अन्येनाकृतपूर्वाणि उत्कृष्टानि वा ।

अथवा वक्षणाः पर्वतानां प्राभिनत् । पर्वतानां मेघानाम् ।

III.8. ये दिव्या दिवि भवा ये च पार्थिवाः ।···ते सर्वे इन्द्रे कामा अयंसत यमिर्बन्धनार्थः । इन्द्र निबद्धा इन्द्र आयत्ता इत्यर्थः ।

परोक्षकृतानन्तरं प्रत्यक्षकृतानां लक्षणमाह ।

III.9. इन्द्रमातरो देवजामयश्च तासामार्षम् ।

त्वं हे इन्द्र बलात् । किं विशिष्टात् ? सहसोऽभिभवितुं जात उत्पन्नः ।···ओजसः बलस्यैवैतद् विशेषणम् ।

विविधं नोऽस्माकं हे इन्द्र मृधो मृधं करोतीत्याद्युक्तनिर्वचनम् । संग्रामकारिण इत्यर्थः ।

III.10. तमधरं कुलोत्सादलक्षणिं गमया तमः सांहितिकं दीर्घत्वं गमय तमः ।

III.11. अन्यदेवतं मनसापि मा शंसिष्ट । इन्द्रं इदेवार्थे

613. यूयमपि हे होतारः, अर्किणः अर्केभिः अर्कैः ऋङ्मयैर्मन्त्रैः इन्द्रमेवाभिष्टुत ।···

'इन्द्रेणैते' इति तृतीयस्या उदाहरणम् । व्याख्यातः शेषस्तृतीयायाः ।···

हे उद्गातारः,इन्द्राय बृहत्साम गायत,विप्राय मेधाविने, बृहते महते ।

इतो यस्मान्नेन्द्रादृते सोमः प्रातः सवनादीनां सोमसवनस्थानानां किंचिदपि प्रतिपवते पूयते । तस्मादेवं ब्रूमह इन्द्रमेवैते व्याप्नुवन्तीति । पञ्चम्या एतदुदाहरणम् ।

614. इन्द्रस्य अहं वीर्याणि वीरकर्माणि प्रवोचं यानि चकार प्रथमानि अकृतपूर्वाण्यन्यैः ।

प्राभिनत् वक्षणा उदकवहनशिराः पर्वतानां मेघानाम् ।

हे स्तोतारः ये दिव्याः कामाः ये च पार्थिवाः त इन्द्र एव उपनिबद्धाः ।

उक्तं सोदाहरणं परोक्षकृतलक्षणम् । अधुना प्रत्यक्षकृतलक्षणमुच्यते ।

615. देवजामयः सूक्तं ददृशुः ।

हे इन्द्र त्वं बलादधि जायसे सहसोऽभिभवनसमर्थात् ओजसश्च तेजसः ।

हे इन्द्र विजहि न एतान् मृधः मृधकर्तॄन् शत्रून् ।

तमधरं गमय तमः । नाशयेत्यर्थः ।

616. मा च रिषण्यत चेतसा मा गच्छतान्यदेवता-

इन्द्रमेव स्तोता···कं स्तुनेत्यर्थः। कीदृशम्? वृषणं वर्षितारम्। सचा सह सुते अभिष्टुते सोमे मुहुर्मुहुः पौनःपुन्ये पुनः प्राप्ते काले उक्था च उक्थानि चास्य शंसत।

रथेशुभं रथेनैकस्मिन् स्थितं शोभितं। कण्वाः कण्वस्य पुत्राः पौत्राश्च। अभिप्रगायत प्रकर्षेणाभिष्टुतेत्यर्थः। अथवा कण्व इति मेधाविनाम। कण्वा मेधाविन ऋत्विज उच्यन्ते। प्रकर्षेणाभिष्टुत इति।

III.12. उप प्र इत उपस्थाय प्रकर्षेण इत गच्छत। कौशिका मम पितामहस्य कुशिकस्यापत्यभूता यदीयाः पुत्राः पौत्राश्च। अथवा क्रोशतेः शब्दकर्मणः कुशिका ऋत्विजः। चेतयध्वं मा विक्षिप्तचेतसो भवत।

सुदासः सुदा इत्येवं नामकस्य कल्याणदानस्य वां राज्ञः।

उत्तमेत्यादि, उत्तमत्रिकेण योगो यासाम्। अहमिति चैतेन सर्वनाम्ना इत्युक्तार्थम्।

III.13. यथैतदिन्द्रो वैकुण्ठो लबसूक्तं वागाम्भृणीयमिति।

विकुण्ठनामा काचिदिन्द्रादधिकबलं सुतमन्वेषमाणा उग्रेण तपसा ब्रह्माणमाराध्य तस्माल्लब्धवरा कृतमङ्गलस्वस्त्ययना भर्त्रा संबभूव। विदित्वैतद्वृत्तान्तं चेन्द्रस्तस्याः स्वयमेवापत्यतां जगाम। तस्येदं वैकुण्ठस्य ब्रह्म प्रादुरासीत्।···

अहं दाशुषे अहमेव हवींषि दत्तवत्ते यजमानाय सर्वस्मै विभजामि भागशो ददामि भोजनं धनम्। लबसूक्तम्· लबरूप इन्द्रस्तस्मात् त्वयाल्पेन सता बहुसोमः पीत इत्यृषिभिरुक्तः सन् तान् प्रत्याह—

616. न्तरम्। किं तर्हि? इन्द्रमेव वृषणं वर्षितारं स्तुत सचा सहभूताः एतस्मिन् सुते सोमे। मुहुर्मुहुश्च हे होताः उक्थानि च शंसत।

रथेशुभं रथस्थितं शोभिष्ठं हे कण्वा मेधाविन ऋत्विज एतदभिप्रगायत। एतद्वो ब्रवीमि।

हे कुशिकाः स्तुतिक्रोष्टार ऋत्विजः उपप्रागच्छत। चेतयध्वं विजानीध्वम्।

सुदासे कल्याणदाने यजमाने वर्तेते।

617. उत्तमेन पुरुषेण या ऋचो युक्तास्ता आध्यात्मिक्यः। 'अहमिति चैतेन सर्वनाम्ना' या युक्तास्ताश्चाध्यात्मिक्यः।
'यथैतत्' उदाहरणत्रयमाध्यात्मिकम् 'इन्द्रो वैकुण्ठमिति' एवमादि एवमप्यन्येऽप्याध्यात्मिका मन्त्रा उपेक्षितव्याः।
विकुण्ठा नामासुरी बभूव। तस्याः किल तपसः प्रभावेणापत्यमिन्द्र आजगाम। वैकुण्ठो नाम बभूव। तस्यात्मस्तुतिप्रयुक्तमेवमादि ब्रह्म प्रादुरभूत्।

अहमेव दाशुषे दत्तवते हवींषि यजमानाय विभजामि यथार्हं भोजनम्। धनमित्यर्थः।··· लबसूक्ते स एव लबो ब्रवीति। एवं चैवं च मे मनो वर्तते।

III.14. वागाम्भृणी आत्मनो महिमानमाचष्टे ।

618. वागाम्भृणीये वागेव ब्रवीति ।

III.15. अल्पश: क्वचित् क्वचिदाध्यात्मिका: प्रत्युक्त-विषयत्वेन ये के अभिप्रेता: ।

619. 'अल्पश' क्वचित् क्वचित्–'आध्यात्मिका:' लक्ष्यन्ते । आत्मानमेव स्तोतव्यमधिकृत्य येऽभिव्यक्तास्त इह शास्त्रे आध्यात्मिका उच्यन्ते ।

अशीरेव न स्तुतिः । आशीरेवेत्यस्यैवावधारणार्थं कथनं न स्तुतिरिति । उदाहरणम् ।

'अथापि' क्वचित् 'आशीरेव न स्तुति:' । तद्यथा ।

III.16. तदेतदाशी: प्रायस्त्वं बाहुल्येनाध्वर्युवेदे याज्ञेषु च करणमन्त्रेषु ।

'तदेतत्' एवंलक्षणं मन्त्रजातं 'आध्वर्यवे' वेदे 'बहुलं' प्रायेण पठ्यते । 'याज्ञेषु च मन्त्रेषु' कर्मकरणेषु ।

अथापि अपि च शपथाभिशापौ । एकमेवोदाहरणम् ।

विश्वामित्रप्रयुक्तै: कैश्चिद् राक्षसस्त्वमित्यभिप्रयुक्तो वसिष्ठ आह ।

'अथापि शपथाभिशापौ' भवतः । 'अद्या मुरीय' इत्येकमुदाहरणं द्वयोरपि ।

वसिष्ठः किल राक्षसस्त्वमित्यभियुक्त: । सोऽनयर्चा शपथं प्रतिपेदे परं चाभिशशाप ।

III.17. अथापि कस्यचिद् भावस्य वस्तुत: पदार्थस्यात्यन्तपरोक्षस्याख्यातुमिच्छा ।

अवान्तरप्रलयादूर्ध्वं प्राग् जगत् सृष्टेर्वावस्था । तामियमृक् पराचष्टे । न मृत्युरादितः मर्तृणामभावान्मृत्योश्चाभावात् ।

620. अथापि कस्यचिदर्थस्याचिख्यासा मन्त्रेषु भवति ।

प्रागुत्पत्तेरस्य जगतो नापि मृत्युरित्ययं व्यपदेश आसीन्मर्त्यस्याभावात् ।

III.18. तन्महिम्ना माहात्म्येन कालान्तरावस्थायिना फलप्रसवसामर्थ्येनेत्यर्थ: । अजायत जातं स्वेन विश्वरूपेण विकारात्मना कार्यरूपेण परिणतमित्यर्थ: । एकं सत् प्राक्परिणामात् कारणात्मना एकतामापन्नं सदित्यर्थ: ।

621. महिना महिम्ना माहाभाग्येन कारणावस्थायाम एकम् अपि सद् अनेकधा उपस्थिते सर्गकाले प्रतिनियतकर्मोपभोगार्थम् अजायत इति ।

अथवा आभ्विति महन्नाम्ना महदाख्यं प्रथमं बुद्धितत्वमुच्यते । यत् सांख्यैरहङ्कागणां तन्मात्राणां च कारणत्वेन प्रतिज्ञायते तदेकमजायत नान्यत् किञ्चित् । तमश्चास्मिन् पक्षे प्रकृत्यव्यक्तादिपर्यायं प्रधानमुच्यते ।

सांख्यास्तु प्रधानं तम:–शब्देनोपादानमुच्यमानमिच्छन्ति । ते हि पारमर्षं सूत्रमधीयते । 'तम एव खल्विदमग्र आसीत्तस्मिंस्तमसि क्षेत्रज्ञ एव प्रथमोऽध्यवर्तत' इति ।

III.19.उर्वश्या वियुक्तस्य पुरूरवस: परिदेवनैषा ।··· निर्ऋते: पृथिव्या उपस्थे अवयवभूते स्थाने । अथानन्तरं च एवं वृका रभसासो महन्नामैतद्

पुरूरवस: ···प्रियया वियुक्त उर्वश्या निर्ऋते: भूमे: उपस्थे उपरि । अथैनं तामवस्थामापन्नं वृकाः विकर्तितारश्च शृगालादय:

महान्तो वेगवन्तो वा अक्षाः भक्षयेयुः ।

III.20. संसारे परिवर्तमानस्य गर्भवासजन्मजराव्याधिमरणदुःखाभिभवनिमित्तस्यानुज्ञानाभावमोक्षं प्राप्तवतो दीर्घतमसः परिदेवना ।

III.21. भिक्षुर्नामाङ्गिरसस्तस्यार्षम् ।···

नापि सखायं समानाख्यानं मनुष्यं यो देवताभ्यो नाप्यतिथिभ्यो ददातीत्यर्थः । केवलाघः केवलपापो भवति केवलादी केवलभोजी ।···

प्रजापतेर्दुहिता दक्षिणा नाम तस्या आर्षम् ।

III.22. एवमेवाक्षसूक्ते 'प्रावेपाम्' इत्येतस्मिन् द्यूतनिन्दा कृषेश्च प्रशंसा यस्मिन् मन्त्रे तमुदाहरिष्यामः ।

तन्मे मर्यो वि चष्टे विविधमाचष्टे सवितायमर्यः ईश्वरः ।

III.23. एवमुच्चावचैर्बहुप्रकारैः कामक्रोधभयहर्षादिभिर्निमित्तैर्ऋषीणां द्रष्टॄणां मन्त्रदृष्टयो मन्त्रविषयाणि दर्शनानि भवन्ति । तदेतत् 'साक्षात्कृतधर्माणः' इत्यत्र सप्रपञ्चं मन्त्रदर्शनं नित्यत्वाविरोधेन प्रदर्शितम् ।

श्रूयमाणदेवतासंविज्ञानपदेषु मन्त्रेषु देवतालक्षणमुक्तम् । येषु कृतं नास्ति तदर्थमाह ।

अनादिष्टा अप्रदिष्टस्तुत्यदेवतालिङ्गा मन्त्रा यस्मिन् अग्निष्टोमादौ यज्ञे श्रुत्यादिविनियुक्ता अग्न्यादिदेवता एव विज्ञेयाः । तथा च वक्ष्यति 'प्रकरणश एव निर्वक्तव्याः' इति प्राकारणिकी देवता कल्प्यत इति युक्तम् ।···

ननु अविनियुक्तो मन्त्रो नैवास्ति । वाचःस्तोमे हि सर्वा ऋचः प्रयुज्यन्त इति ऋगा-

रभसाः रभस्वन्तो वेगवन्तः अक्षाः भक्षयेयुः ।

622. दीर्घतमस इयमार्षम् ।

भिक्षोराङ्गिरसस्येयमार्षम् ।

623. आत्मनैव केवलं योऽन्नमत्ति न देवपितृमनुष्येभ्यो ददाति स केवलमघमेव प्राप्नोति ।

दक्षिणा नाम प्रजापतेर्दुहिता । तया सूक्तमात्मनः स्तुतिसंबद्धं दृष्टम् ।

624. यथैवमिह मन्त्रद्वये निन्दा च प्रशंसा च 'एवमक्षसूक्ते द्यूतनिन्दा च कृषिप्रशंसा च' भवतीति विषयोपप्रदर्शनार्थमाह ।

तत्पुनर्ममैतत्सविता देवः अर्यः ईश्वरः श्रुतिस्मृत्यनुशासनद्वारेण विविधमनेकप्रकारमाचष्टे ।

625. विद्यमानानामेव मन्त्राणामृषयो येन केनचिन्निमित्तेन निदानभूतेन हर्षशोकनिन्दाप्रशंसादिना मन्त्राणां द्रष्टारो भवन्ति न तु कर्त्तार इत्यभिप्रायः ।

626. तदेतत्प्रकटदेवतालक्षणेषु मन्त्रेषु मन्त्रदेवतालक्षणमुपपद्यते । ये त्वनादिष्टदेवतालिङ्गा मन्त्रास्तेषु देवता कथमन्वेष्येति तदेतद्विचार्यते··· ।

'आग्नेयोऽग्निष्टोमः' इति श्रूयते । तत्र योऽनाविष्कृतदेवतालिङ्गो मन्त्रः स्यात्स आग्नेय एव स्यात् । प्रकरणाद्धि संदिग्धदेवतेषु देवतानियम इति न्यायः ।

तेषूत्सन्नप्रकरणप्रयोगेषु वाचस्तोमप्रयोगविनियोगकल्पेषु 'किं ब्राह्मणस्य पितरं पृच्छसि

दीनां सर्वेषां प्रयोगः श्रूयते।

किं नु मातरम्। 'श्रुतविदस्मिन् वेध्य स पितामहः' इत्यादिषु कथमन्वेष्या देवतेति।

III.24. अथान्यत्र यज्ञात् प्राजापत्या इति याज्ञिका मन्यन्ते। अतिरिक्तो वै प्रजापतिः। अज्ञातलिङ्गश्च मन्त्रोऽप्यनुक्त इति। अतो निरुक्तसामान्यात् प्राजापत्या भवितुमर्हन्ति।

नाराशंसं च यज्ञ इति कोऽर्थः। यज्ञश्च विष्णुः 'यज्ञो वै विष्णुः' इति संस्तवात्। अग्निरिति शाकपूणिः। अग्निरिति भूयिष्ठभाग् देवतानाम्। 'अग्निः सर्वा देवताः' संस्तुतेः। तेनास्य श्रेयस्त्वम्। उभयथापि नैरुक्तपक्षः।

अपि वा एतस्य मन्त्रस्य कामत इच्छातो या इष्टा देवता सा स्यात्।

प्राय इति प्रकरणमभिप्रेतम्। प्रायिकी प्राकरणिकी तस्य मन्त्रस्य देवता सा ऋक्।

627. शृणु 'प्राजापत्याः' ते मन्त्राः 'इति याज्ञिकाः' मन्यन्ते। किं कारणम्। 'अनिरुक्तो हि प्रजापतिः, अनिरुक्तदेवतालिङ्गाश्च मन्त्रा इत्येतस्मात्सामान्यात्।

नराशंसोऽग्निर्यज्ञो वा···यज्ञशब्देन च विष्णुरुच्यते। विष्णुर्वै यज्ञः' इति हि विज्ञायते। अग्निर्हि भूयिष्ठभाग्देवतानाम्' इति। अतोऽनाविष्कृतदेवतालिङ्गो मन्त्र आग्नेयः स्यात्। सर्वदेवताश्रयणाच्च 'अग्निर्वै सर्वा देवताः'··· इति विज्ञायते।

अपि वैवमन्यथा स्यात्। सा ऋक् स मन्त्रो योऽनाविष्कृतलिङ्गः स कामदेवतः स्यात्।

628. यद्देवताधिकारे ध्यध्ययनपाठानुक्रमे योऽनाविष्कृतदेवतालिङ्गो मन्त्रो भवति स तद्देवत एवेति बोद्धव्यम्।

III.25. एवं विशेषेणानुद्दिष्टदेवताको मन्त्रोऽपि वैश्वदेवो भवितुमर्हतीति द्वितीये व्याख्या दृष्टान्तयोजना।

अथैकस्मिन्ननेकविकल्पे देवताकल्पे कः स्थितः पक्ष इत्याह।

याज्ञदैवत एवेत्यर्थः। यज्ञो विष्णुः स चादित्यः।

एवमिहाप्यादिष्टदेवतालिङ्गान्मन्त्रराशेर्योऽन्योऽनाविष्कृतदेवतालिङ्गो मन्त्रराशिः स्यात्साधारण्याद्बहुदेवतो विश्वदेव एव स्यादिति।

कः पुनरेतस्मिन्विचारे निश्चयः उच्यते।

योऽनाविष्कृतदेवतालिङ्गो मन्त्रः स याज्ञो वा स्याद्दैवतो वा। 'विष्णुर्वै यज्ञः'इति हि विज्ञायते। विष्णुश्च पुनरादित्य एव नैरुक्तानां द्युस्थाने समाम्नानात्।

देवता देवता यस्य स देवदैवतः। देवताशब्देनाग्निरुच्यते। तस्य सर्वदेवतासंस्तुतेः। आग्नेयो वेत्यर्थः।

629. अथवा दैवतः स मन्त्रः। देवतास्मिन् देवतेति दैवतः। अविशिष्टं हि देवतात्वमग्नावेव सर्वदेवताभिवादात्।

III.26. यथाश्वप्रभृतीनि चेतनावन्ति। अचेतनानि चाक्षादीन्योषधिपर्यन्तानि देवताधिकारे च समाम्नातानि।

630. एतस्मिन्वर्गे कानिचित्सत्त्वानि कानिचिद् द्रव्याणि। अश्वादीनि सत्त्वान्यक्षादीनि द्रव्याणि।

III.26. देवता चाणिमादिगुणा स्तोतुर्यथाभिलषितार्थसम्पादनसमर्थेष्यते । अश्वादयश्चात्मनो विसंवादनेन समर्थाः । किं पुनः परस्यापि वाश्वादयः ससंज्ञाः । अक्षादिष्वेतदपि नास्ति ।··· यथा पुरुषस्य गवाश्वरासभादय उपकरणभूता अपायिन उपायिनश्च । एवमेव अर्थानश्वादीन देवतानामनित्यानुपकरणभूतांश्च प्रतीत्य स्वतन्त्रा एतास्तुत्या देवता इति न मन्येत नावबुध्येत न श्रद्दधीतेति यावत् ।

III.27. भज्यतेऽसाविति भागः पुण्यानुभावः कश्चित् ।

देवताया एक आत्मा बहुधा वैश्वरूप्येण परिणतोऽग्न्यादिभावेनावस्थितः सन्नित्यर्थः । स्तूयते मन्त्रैः ।

III.28. एवमेकस्माद्देवतात्मनोऽन्ये देवा अव्यतिरिक्ता इत्यभिप्रायः । तथा च 'इन्द्रं मित्रं वरुणम्' इत्यत्रैकमात्मानं बहुधा मेधाविनो वदन्तीत्यनन्यत्वं वक्ष्यति ।

न च केवलदेवतात्मन एव माहाभाग्यादन्ये देवाः प्रत्यङ्गानि भवन्ति । किं तर्हि ?

अपि च सत्त्वानामन्ये देवाः प्रत्यङ्गानि भवन्ति ।···ऋषयो मन्त्राः । 'द्यौस्ते पृष्ठम्' इत्यादयः । मन्त्रद्रशो वा स्तुवन्तीत्येवमाहुरन्येऽपि ब्रह्मवादिनः ।

एतदुक्तं भवति । माहाभाग्यं सार्वनाम्न्ये हेतुः । सार्वनाम्न्यं बहुधा स्तुतः । तच्चैतत् सार्वनाम्न्यं 'आत्मैवैषां रथः' इत्यादिना स्पष्टं दर्शयिष्यति ।

III.29. इतरेतरप्रकृतयः परस्परप्रकृतयः । आदित्यादग्निः सायं जायते । अग्नेरप्यादित्यः प्रातरिति । तथा अदितेर्दक्षो दक्षाच्चादितिः । 'अदितिर्द्यौः' इत्यादि च । सोऽयं देवधर्मः ।

कर्मजन्मानो विशिष्टकर्मनिमित्तजन्मानः ।

तानि कथमभिष्टुतानि स्तोतुरभिमतस्यार्थस्य

631. पतित्वं करिष्यन्ति । न हि तानि स्तुतिनिन्दे विशेषतो विदुः । अपि चाश्वादिषु चित्तिरपि काचिदस्ति । न त्वक्षादिष्वसावस्ति ।

631. लोके तावदेते मनुष्याणामनित्यानामश्वादयोऽर्था आगन्तवोऽपायिनश्चानित्याः । तद्यदि देवतानामप्येवमेव ततस्तासां तेषां चानित्यत्वात्स्तुतिरनर्थिका ।

भज्यत इति भागः । सेव्यत इत्यर्थः तच्च पुनरैश्वर्यं महत् ।

एकोऽपि सन्देवतात्मा बहुधा स्तूयते प्रकृतिभेदेनाप्रकृतिभेदेन वा वर्धमानः ।

632. तथा चैकात्म्यम् 'इन्द्रं मित्रं वरुणमग्निमाहुः' इत्येवमादयो गमयन्ति निगमाः ।

न ह्यङ्गिनमङ्गानि व्यतिरिच्यन्ते भेदेनाग्रहणात् ।

न वाङ्गान्यनपेक्ष्य प्रत्यङ्गानि भवन्ति ।

633. कार्यकारणयोरनन्यत्वात्कारणमहिमभिस्तान्यश्वादीन्यभिष्टुवन्तीत्याहुरात्मविदः । तद्यथा— 'द्यौस्ते पृष्ठं पृथिवी सधस्थमात्मान्तरिक्षम्' इत्येवमादीनि ।

यस्मान्माहाभाग्ययुक्ता देवता प्रकृतिर्यस्माच्च सर्वत्वेन नता तस्माद्धेतोर्नैता अदेवता देवतावत्स्तूयन्ते ।

634. इतरेतरप्रकृतयो देवा ऐश्वर्यात् । न मनुष्याणामियं शक्तिरस्त्यनैश्वर्यात् ।···तस्मात्सूर्यस्याग्निः प्रकृतिः । सूर्याच्चाग्निः सायं जायते । तस्मादग्नेः सूर्यः प्रकृतिः । अदितेर्दक्षो दक्षाच्चादितिरिति ।

कर्मफलसिद्धये लोकस्याग्निवायुसूर्या जायन्ते ।

III.29. एतदुक्तं भवति । ईदृशं तेषामत्यन्तविशिष्टं कर्म येन यस्मिन् काले यथादर्शं न कार्यकरणमिच्छन्ति तस्मिंस्तथा तादृशमेवोत्पद्यते यो नावयोर्नौ च ।

635. यदेषामिच्छतां संकल्पानुविधायिकर्मानुरूपं यथाकालमात्मनः कार्यकारणमुत्पद्यते तदेषां जन्म । तदनीश्वराणां नास्ति ।

III.31. तत्राध्यात्मविदामेकैव देवता । तच्च दर्शनमुक्तं माहाभाग्यादेकस्यात्मन इति ।

636. माहाभाग्याद्देवताया एक आत्मा बहुधा स्तूयते' इत्येवमादिना···सामर्थ्यमुन्नीयात्मवित्पक्षेणात्मवेदं सर्वमित्यैकात्म्यमुक्तम् ।

तिस्र एव देवता इत्यादि । एवशब्दोऽवधारणे।

637. तिस्र इति संख्या । एवेत्यवधारणमितरौ पक्षावपेक्ष्य ।

तिस्रः । कुत एतत् ? तिसृणां प्राधान्येन 'सूर्यो नो दिवस्पातु'···इत्याद्यनेकत्र लिङ्गप्रतिपादितस्थानत्रयाभिसम्बन्धात् ।

कयोपपत्त्या त्रित्वं परिजगृहुः । स्थानभेदात्प्रत्यक्षलिङ्गादन्यार्थदर्शनाच्च ।

तस्मादेकस्यैव देवतात्मनो मध्यमस्थानस्य पर्यायावेताविति निश्चयः ।

639. तस्मादाचार्यस्य मध्यमपर्यायवचनावेतौ शब्दाविति ।

सत्यपि तु पर्यायत्वे क्वचित्तु काचित् प्रसततरा भवति । इन्द्रशब्देनैवात्राभिधानं मध्यमस्थानस्य प्रसिद्धतरत्वात् ।

सत्यपि पर्यायवचनत्वे मुख्यतरः सम्बन्धो मध्यमस्येन्द्रशब्देन न तथा वायुवरुणरुद्रादिभिः ।

III.32. यथा चेन्द्रशब्देन मध्यमस्थानस्य सम्बन्धो मुख्यः । एवमग्निसूर्यशब्दाभ्यां पृथिवीद्युस्थानयोः ।

यथास्य मध्यमस्य ज्योतिषो मुख्यः सम्बन्ध इन्द्रशब्देन तथेतरयोरपि पार्थिवोत्तमयोरग्निसूर्यशब्दाभ्याम् ।

यदि तिस्र एव देवताः किमग्न्यादिसाहचर्येण जातवेदोवरुणाश्विप्रभृतीनां समाम्नानम् ।···

640 यदिदमभिधानबहुत्वं जातवेदो वैश्वानर इत्येवमादि त्रित्वे सत्येतत् किं कृतमिति ।···

तासां माहाभाग्यात् कारणादेकैकस्या जातवेदा वैश्वानरो वरुणो रुद्रोऽश्विना उषा इत्यादीनि बहूनि नामधेयानि भवन्ति ।

तासामेव तिसृणामग्न्यादीनां माहाभाग्यादैश्वर्ययोगेनैकात्मानमनेकधा विकुर्वतीनामेकैकस्यां प्रतिविकारं जातवेदो वैश्वानरो वरुणो रुद्रोऽश्विनावुषा इत्येवमादीनि बहूनि नामधेयानि भवन्ति ।

ऐश्वर्ययोगादिविकरणधर्मत्वे सति ।

641. अपि वैवं विकरणधर्मित्वादभिन्नप्रकृतीनां बहुनामता ।

III.33. एकत्वेऽपि सति कर्मनिमित्तानि बहूनि नामधेयानि ।

यथा कौण्डपायिनामयने गृहपतिसप्तदशा दीक्षन्ते।

अपि वा स्वं स्वमात्मानमविकुर्वतीनामेवानेककर्मयोगात्पृथक्कर्महेतुको नामधेयलाभः स्यात् । को दृष्टान्तः । 'यथा होताध्वर्युर्ब्रह्मोद्गातेत्यप्ये-

641. कस्य सतः' कुण्डपायिनामयने । तत्र हि सप्त दीक्षन्ते ।

III.33. यथा च लोके एको देवदत्तः पचन् पाचको, लुनन् लावकः, स्तुवन् स्तावक उच्यते ।...
एवं स्वपक्षे त्रित्वमभिधाय याज्ञिकपक्षे प्रदर्शनायाह—'अथवा पृथगेव स्युः'—अग्नेर्जातवेद आदयोऽन्ये वेद्याः ।
अतस्तेषां भिन्नरूपता एव भवति । तथा हि-'अग्निमीळे' इत्याग्नेयमेवोपदिश्यते । 'प्र नूनं जातवेदसम्' इति जातवेदसीयम् ।

यथा लोके लावकाः पावकादयः ।

अपि वा पृथक्पृथगत्यन्तभिन्ना एवौत्पत्तिकेन भेदेन स्युरिति याज्ञिका आहुः ।

641. यस्मात्पृथक्पृथगग्न्यादीनां स्तुतयो भवन्ति । पृथगग्नेः—'अग्निमीळे' इत्येवमाद्याः । पृथग्जातवेदसोऽनग्निलिङ्गं सूक्तं 'प्रनूनं जातवेदसम्' इति ।

III.34. तथाश्विनमुषस्यं सौर्यमिति प्रतिनियता स्तुतिचोदना । स्तुतिभेदाच्च स्तुत्यभेदेन भवितव्यम् ।
अभिधानादिचोदना हविर्भाजो देवताया 'आग्नेयोऽष्टाकपालः'...इति व्यवस्थितैव । चोदनाव्यतिरेके हि प्रायश्चित्तश्रवणात् ।

642. स्तुतिव्यभिचारे च प्रायश्चित्तम् । तदनुपपन्नं च पर्यायवचनत्वे । ते वयं स्तुतिनियमात् पश्यामः पृथक्पृथगग्निवैश्वानरप्रभृतय इति ।... स्तुतिष्वेव ह्यभिधानभेद इति समानार्थता हेत्वोरिति चेन्न विधावप्यभिधाननियमदर्शनात्। 'आग्नेयमष्टाकपालं निर्वपेत्' इति येनैवाभिधानेन चोद्यते तेनैव निर्वपणादारभ्य समाप्यते तस्मादसमानार्थतेति ।

III.37. तस्मिन् भेदपक्षे स्थानैकत्वं पृथिव्यादिस्थानगतमेकत्वं स्थानिषूपचारेणोपेक्षितम् । न च केवलं स्थानैकत्मेव सम्भोगैकत्वं च ।...
एनमेवोत्तरयोरपि स्थानयोर्योजनीयम् ।

643. तत्र तस्मिन्पृथक्त्वे सति स्थानैकत्वं सम्भोगकत्वं चोपपत्तित ईक्षितव्यम् ।

एवमितरयोरपि स्थानयोरेकत्वम् ।

III.38. यथा पृथिव्या धृत्यादिस्वव्यापारं कुर्वन्त्याः पर्जन्यादिभिः स्वव्यापारेण द्वारेण ।
अग्निना चेतरस्यान्तरिक्षस्य लोकस्य च सम्भोगः।
यथा वक्ष्यति 'अग्निर्वा इतो वृष्टिम्' इति । 'भूमिं पर्जन्या जिन्वन्ति दिवं जिन्वन्त्यग्नयः' इति च ।

पृथिव्योषध्युत्पत्तौ स्वकार्यारम्भे पर्जन्यवाय्वादित्यकृतमुपकारमपेक्षते ।
'अग्निना चेतरस्य लोकस्य' । तदप्युक्तम् 'अग्निर्वा इतो वृष्टिं समीरयति' 'दिवं जिन्वन्त्यग्नयः' इति च ।

इदानीं यथोक्तस्य भेदाभेददर्शनस्य दृष्टान्तमाह ।

कः पुनरत्राविरोधी भेदाभेदे दृष्टान्त इति ।

नरशब्दोऽमात्यजनपदादिप्रकृत्युपलक्षणार्थः ।

644. यथा राष्ट्रमित्यभेदो नरा इति भेदश्च एवं पृथि-

पृथा देवा इति । तदेवार्थवस्तु भेदेनाभिधीयते राष्ट्रमित्यभेदेन । एवमुक्तेषु भेदेनैकस्याभेदेन चानेकस्य । तत्रैतद् भेदाभेददर्शनं यथायोगमभिधानं द्रष्टव्यमिति ।

व्यग्निरित्यभेदो जातवेदा वैश्वानर इति भेदः।··· सर्वत्रैव सामान्यविशेषधर्मौ द्रष्टव्यः ।

आनन्तर्याद् याज्ञिकपक्ष एष विचार इति केचिन् मन्यन्ते ।

646. एवमयमस्याश्चिन्ताया याज्ञिकपक्षो विषयः । 'अपि वा पृथगेव स्युः' इत्यत एव याज्ञिकपक्षादनन्तरमिदमारब्धम् 'अथाकारचिन्तनम्' इति ।

III.39. विकारधर्मत्वाद् भाक्तस्य भेदस्याभ्युपगमात् प्रकृतिभूतस्य च विकारभूतस्य च देवतात्मनोऽत्यन्तपारार्थ्याद् इदमाकारचिन्तनं युक्तम् ।

645. माहाभाग्याद्देवताया विकरणधर्मित्वादनियम आकारे ।···अथवा निराकारत्वमिति सतत्त्वपरिज्ञानाय चिन्त्यते ।

पुरुषविधा अस्मदादिरूपाः स्युरित्येकं दर्शनम् ।

647. 'पुरुषविधाः स्युरित्येकम्' मन्त्रेषु दर्शनमिति वाक्यशेषः । पुरुषविधाः पुरुषाकाराः । पुरुष विग्रहा इत्यर्थः ।

चैतन्येन चेतनावद्भिस्तुल्यं यस्मात् स्तुतयो गुणगुण्यभिधानरूपा मन्त्राः चाटुश्लोका इव राजादीनां भवन्ति ।

यस्माच्चेतनावतामिव स्तुतयो मन्त्रा अभिधायका भवन्ति ।

तस्माद् विशिष्टपुरुषविधा इति ।

तस्मात्पुरुषाकारविग्रहा इति ।

यथा प्रकृष्टचैतन्यविशिष्टानां पुरुषाणां परस्परस्याभिधानानि तथेन्द्रमरुदादीनामपि कयाशुभीयादिषु संवादेषु भवन्ति । अतोऽपि पुरुषविधाः ।

648. यथैव पौरुषविध्ये स्तुतिः कारणं भवति तथैव संवादसूक्तेषु परस्परमभिधानान्युक्तप्रत्युक्तानि संबद्धार्थानि परस्परतः कयाशुभीयादिषु 'कुतस्त्वमिन्द्र' इत्येवमादीनि । तस्मात् पौरुषविध्यं देवतानाम् ।

III.40. तथाहि पौरुषविधिकैः पुरुषविधेयस्तुतिभावानि बाहुमुष्ट्यादीन्यङ्गानि तैः स्तूयन्ते ।

648. पौरुषविधित्वे यान्यङ्गानि तैः संस्तूयन्ते । तद्यथा—'ऋष्वा त इन्द्र स्थविरस्य बाहू' ।

III.41. तथा चेत्यर्थः । पुरुषप्रकारेषु ये द्रव्यसंयोगास्तैः सांयोगिकैरश्वजायादिभिर्भोग्यैर्द्रव्यैः सम्बन्धाः स्तूयन्त इत्यनुषङ्गः ।

649. 'अथापि' अयमप्यपरो हेतुः पौरुषविध्ये देवतानाम् । 'पौरुषविधिकैर्द्रव्यसंयोगैः ।

किमर्थमुच्यते आयाहीति । यस्मादयं सुतः सोमः हे सुमख सुयज्ञ आगच्छ । अन्तरा कैश्चित् सह मा मृधः संग्रामान् कः मा कार्षीरित्यर्थः । अविलम्बितमित्यभिप्रायः ।

किमित्येवं ब्रूमहे । अयं सुतः सोमः अभिषुतस्त्वदर्थम् । स त्वं हे सुमख सुध न मा अन्तरा केनचिन्मृधः संग्रामं कार्षीः । अविलम्बितमागच्छेत्यभिप्रायः ।

III.42. अपाः पीतवानसि सोममाभि । अस्तं गृहं हे

649. हे भगवन् इन्द्र पीतवानसि सोमम् एतस्मिन्

इन्द्र प्रयाहि । कस्मादेवमुच्यते । यस्मात् '''कल्याणीः प्रशस्तरूपा जाया सुरणं सुष्ठु रमणीयं यत् परिभोगयोग्यं पर्यंकास्तरणादि गृहे ते तव ।

अथापीत्यादि । अथवोक्तविशेषणैरेव कर्मभिः।

III.43. आभिमुख्येन श्रोतारौ कर्णौ यस्य तस्य सम्बोधनं हे आश्रुतकर्ण श्रुधी श्रृणु हवमाह्वानम् ।

एवमुक्ताभिर्युक्तिभिः पौरुषविध्यं प्रसाध्यार्थान्तरमुपन्यस्यति स्म ।

पुरुषाकारेभ्योऽन्याः स्युर्देवताः । न पुरुषसद्भावं देवता इत्यभिप्रायः । तथा चोक्तम् 'तत्रोपमार्थेन वा' इत्युपप्रतिज्ञाय प्रत्यक्षेण प्रसिद्धदेवत्वेनापुरुषाकारेण अग्न्यादिदेवतानां पूर्वोक्तं पौरुषविध्यत्वं व्यभिचरितुमाह ।

III.44. यथो एतच्चेतनावद्वादिति । अस्य समीकरणमचेतनात्मन्यपि द्रव्याण्यक्षादीन्योषधिपर्यन्तानि 'मित्रं कृणुध्वम्'इति चेतनावद्भिस्तुल्यं स्तूयन्ते।'' एतत्पौरुषविधिकैरङ्गैरिति । अस्य समीकरणमचेतनेष्वप्येतद् भवति ।

III.45. ग्रावाणः सुकृतः शोभनकर्मकारिणः । सुकृत्यया शोभनक्रिययाभिष्वाख्यया । होतुश्चित् होतुरपि सकाशात् पूर्वं हविरग्रमदनीयं सोमाख्यमाशत आशितवन्तः । ग्राव्णः स्तुतिरिति सुप्रसिद्धम् ।

पौरुषविधिकैर्द्रव्यसंयोगैरित्येतदपि पूर्ववत कल्पितोपमारूपमित्याह ।

कर्मणि । स त्वं पुनः अस्तं गृहं प्रयाहि ।

650. यस्मात्तव कल्याणीर्जाया तत्र ।'''अन्यदपि यद्यद्रमणीयं तत्तत्सर्वं तव गृहे वर्तते । तस्मात्पुनरस्तं प्रयाहि ।

'अथापि' अयमपरो हेतुः पौरुषविध्ये । कतमः । पौरुषविधिकैः कर्मभिः' संस्तूयन्ते देवताः ।

651. श्रोतारौ यस्य कर्णौ अप्रतिहतश्रवणौ सर्वत्र स भवति श्रुत्कर्णः । तस्य सम्बोधनम् । हे श्रुत्कर्ण आभिमुख्येन श्रुधि शृणु त्वमाह्वानमस्माकम् ।

तदेवमेतेभ्ये मन्त्रदर्शनेभ्यः स्थितं पौरुषविध्यं मन्त्रे देवतानामिति ।

'अपुरुषविधा स्युरित्यपरम् । दर्शनमिति वाक्यशेषः । तदुक्तम् । 'अपां च ज्योतिषश्च मिश्रीभावकर्मणो वर्षकर्म जायते तत्रोपमार्थेन युद्धवर्णा भवन्ति' इति ।

652. तस्माच्चेतनावत्स्तुतिमस्त्वमहेतुः पौरुषविध्ये देवतानामचेतनेष्वप्यक्षादिषु चेतनावत्स्तुतेर्दृष्टत्वादिति ।

'यथो एतत्पौरुषविधिकैरङ्गैः संस्तूयन्त इति' । अयमप्यहेतुर्व्यभिचारितत्वात । अचेतनेष्वप्येतद्भवति ।

653. सुकृत्या शोभनया क्रियया एते सुकृतः शोभनस्य कर्मणः कर्तारो होतुश्चित्पूर्वे होतुरप्यग्नेः मनुष्यहोतुर्वा पूर्वे प्रथमतरं हविः एतत्सोमाख्यम् अग्रम् अदनीयम् आशत अश्नन्ति । अभिषवे सोमसंयोगमात्रमशनमुपचर्यते ग्राव्णाम् । तस्मादपौरुषविध्यमिति ।

'यथो एतत्पौरुषविधिकैर्द्रव्यसंयोगैरिति । एतदपि तादृशमेव'''रूपकमात्रं स्तुत्यर्थम् संक-

ल्पतो बाह्वादिकार्यसिद्धिः ।

III.46. अथवा उभयविधा द्विप्रकारा अपि स्युः । उभयथापि मन्त्रदर्शनात् ।

तत्रैते कर्मात्मानः पृथिव्यादयो धृतिसंग्रहपक्त्यादि शीतोष्णवर्षादि च विदधानाः कृत्स्नं जगत् त्रायन्ते । अन्ये त्वधिष्ठातारः पुरुषविधास्तेषामेव पृथिव्यादीनां स्युः ।···

अस्य च द्व्यात्मकत्वस्य दृष्टान्तं दर्शयितुमाह 'यथा यज्ञो यजमानस्य' यथा यज्ञः कर्मरूप आत्मा यजमानस्य कर्मणामनुष्ठातुः ।

654. 'अपि वोभयविधाः स्युः' उभयहेतुप्रामाण्यात् ।

पृथिव्यादीनां 'कर्मात्मन एते स्युः' । अपुरुषविधाः क्षितिजलादयः । परे त्वधिष्ठातारः पुरुषविग्रहाः ।

एवमुभयोः प्रत्यक्षागमयोरप्यनुग्रहः कृतो भविष्यति । 'यथा यज्ञो यजमानस्य' कर्मात्मा ।

III.47. एष चेत्यादि । इतिहासपुराणादिष्वाख्यानेषु समयः सिद्धान्तः प्रसिद्ध इति ।

655. भारते चाख्यानसमयः। एष एव सिद्धान्त इत्यर्थः। पृथिवी स्त्रीरूपेण भारावतरणाय ब्रह्माणं ययाचे ।

III.48. किञ्चिद् वक्तव्यमवशिष्यते । तद्विवक्षया स्वपक्षेणोपक्षेपः ।

तासां तिसृणां देवतानाम् । भक्तिसाहचर्यं भज्यतेऽसाविति···भक्तिः। सहचरभावः साहचर्यं भक्तिश्च साहचर्यं चेत्यर्थः ।

येन च यस्य स्तुतौ हविषि वा सहभावोपगमनलक्षणं साहचर्यम् ।

656. यः पुनस्तत्र विशेषो विवक्षितः स उच्यते ।

तासामेव तिसृणाम् । भक्तिश्च साहचर्यं च भक्तिकृतं वा साहचर्यमिति ।

सहचरभावः साहचर्यम् ।

III.49. ये च देवगणा देवा जातवेद आदयो देवगणाश्चाक्षादयः पठिताः प्रथमे पृथिव्याख्येऽस्मिन् स्थाने ।

इळायाः पुनः प्रत्यक्षमपठिताया अपि आप्रीषु 'तिस्रो देवीः' इत्यनेन सामान्यशब्देनोपात्तायाः पृथिवीस्थानत्वविशेषणं लिंगतो दर्शयितुम् । तथा चोदाहरिष्यति—'आ नो यज्ञं भारती' इत्यत्र 'इळा मनुष्वदिह' इति प्रत्यक्षस्थाननिर्देशात् ।

तथा 'ग्नां भारत्यादित्यैरस्पृक्षत् सरस्वतीमं रुद्रैर्यज्ञमावीदिहैवेळया वसुमत्या' इति । इहेति भूस्थाननिर्देशाद् वसुमत्या इति चाग्निः ।

657. 'ये च देवगणाः समाम्नाताः प्रथमे स्थाने' तद्यथा 'आप्रियः अक्षाः ग्रावाणोऽभीशवः' इत्येवमादीनि ।

आप्रीमध्ये 'तिस्रो देवीः' इत्यत्र इळा भारत्या द्युस्थानाया अनन्तरं श्रूयमाणा 'आ नो यज्ञं भारती तूयमेत्विळा मनुष्वत्' इति ।

'ग्नां भारत्यादित्यैरस्पृक्षत् सरस्वतीमं रुद्रैर्यज्ञमावीदिहैवेळया वसुमत्या' इत्यतः सामर्थ्यमुन्नीय वसुसाहचर्यात 'इहैवेळया' इति चाग्नि-

'प्रथमो वसुभिर्नोऽव्यात्' इत्यादिलिङ्गादग्निः। वसुभिर्वा वसव इति समाख्या।

III.50. तत्र यथादित्यैः सम्बन्धाद् भारत्या द्युस्थानत्वम्। सरस्वत्याश्च रुद्रैर्मध्यस्थानत्वम्। एवमिळायाः पृथिवीस्थानत्वं सिद्धम्।

यत्तु दृष्टविषयभवं वा दृष्टविषयप्रयोजनं वा वक्ति सन्तमसापनोदनादि तद्दार्ष्टिविषयिकमग्निकर्मैव तत् तदपि।

अनन्तरमस्याग्नेः संस्तविकाः सह स्तवनं संस्तवस्तत्प्रयुक्ता देवा यक्ष्यन्त इति शेषः।

III.51. दाशुषो दत्तवतो हवींषि यजमानस्य स्वभूते दुरोणे हविर्धानलक्षणे यज्ञगृहे।

हे अग्नीषोमौ इमं सु मे सुष्ठु मे मम शृणुतम्। वृषणौ हे वर्षितारौ हवमाह्वानम्। प्रतिधात्वर्थानुवादी। सूक्तानि च स्तुतिरूपाणि हर्यतं···प्रेप्सतं कामयेथाः। किञ्च भवतं दाशुषे हवींषि दत्तवते यजमानाय मयः सुखौ।

III.52. हे अग्नीपर्जन्यौ। अवतं गच्छतम्। धियं कर्मनामैतत् कर्म मे मम श्रुतम्। अस्मिन् हवे आह्वाने सुहवा स्वाह्वानौ।

III. 53. न त्वृक् संस्तवप्रयोजना शाखानुवचनगता दशतयीषु दश मण्डलाख्या अवयवो यासां ता दशतय्यः, ऋग्वेदस्य शाखास्तासु विद्यते।

अग्नेः पूष्णा सह हविरेव केवलं न तु संस्तवः।

III.54. तत्र तस्मिन्नपि पूष्णा सह हविस्सापर्ये प्रदर्शनायोदाहरन्तो विभक्तस्तुतिमेतां वक्ष्यमाणामृचमुदाहरन्त्यभियुक्ताः।

भक्तिरिळेत्याह।

रुद्रैः साहचर्यात्सरस्वती मध्यस्थाना। आदित्यैः साहचर्याद्भारती द्युस्थानेति।

'दार्ष्टिविषयिकम्'–दृष्ट्यनुग्रहो यस्य विषयस्तद् दार्ष्टिविषयिकम्। प्रकाशादि कर्मेत्यर्थः।

658. अथास्य संस्तविका देवा यैः सहाग्निः स्तूयते।

अस्य दाशुषो दत्तवते हवींषि यजमानस्य दुरोणे यज्ञगृहे।

हे अग्नीषोमौ युवामुच्येथे। इमं हवम् आह्वानं मे मम सुष्ठु शृणुतं वृषणौ वर्षितारौ। श्रुत्वा चागच्छतमागत्य च प्रतिहर्यतं प्रतिप्रेप्सतम्। मया पूर्वं प्रेप्सितौ प्रतिकामयेथामिमानि सूक्तानि श्रोतुम्। श्रुत्वा चेमानि भवतं दाशुषे युवां हविर्दात्रे मयः। सुखावित्यर्थः।

659. हे अग्नीपर्जन्यौ युवामुच्येथे अवतम् आगच्छतम् इमां धियम् इदं कर्म प्रति मे मम अस्मिन हवे अस्मिन्नाह्वाने सुहवौ स्वाह्वानौ।

660. दशतयीषु। दशमण्डलावयवप्रविभागेन तायत इति दशतयः ऋग्वेदः तस्य शाखाः दशतय्यः तासु तासु सर्वास्वपि शाखासु एकापि हविषि अविनियुक्ता शस्त्रमध्यपातिनी ऋगग्नाविष्ण्वोः सस्ताविकी नास्ति।

661. अथाप्ययमपर उत्सर्गः। 'अथाप्याग्नापौष्णं हविः' एव न तु संस्तवः। तस्मिंस्तु हविषि किंतु पृथक्पृथगेवाग्निः स्तूयते पूषा च।

'तत्र' तस्मिन् संस्तवे अग्नापूष्णोः 'एतां विभक्तस्तुतिमृचमुदाहरन्ति' नैरुक्ताः।

शुनः कर्णस्तोमे प्रमीयमानोऽनयाऽभिमन्त्रयते प्रमितस्य शाचीः ।

शवस्य कर्णे प्रमीतानुमन्त्रणे विनियोगः । प्रमीत उच्यते ।

III.55. अथवा स त्वैतेभ्य इत्यनेन तच्छब्देन उपरिष्टान्निर्देक्ष्यमाणोऽग्निरेवोच्यते पूष्णा प्रच्यावितं त्वामग्निः स त्वामेतेभ्यः परिददातु पितृभ्यः ।

अस्मिन् व्याख्याने पूर्वार्धे पौष्णम् । उत्तरार्धमाग्नेयमिति विभक्तस्तुतित्वम् । व्याख्यातॄणां संशयमापन्नस्तृतीयः पादः। पौष्णस्तदन्वादेशादित्येकं दर्शनम्। अग्नेः प्रकीर्तनमित्यपरम्।...

वृत्रवधो मेघवधः । या च का च बलकृतिः यावत् किञ्चिद् बलेन क्रियते कीटपतङ्गादिभिरपि कर्म इन्द्रकर्मैव तत् । कुतः । बलं हि प्राणः प्राणश्च वायुर्वायुश्चेन्द्रः ।

III.57. इन्द्रापूषणौ नु क्षिप्रं युवां वयं सख्याय स्तुत्यस्तोतृत्वलक्षणाय स्वस्तये अविनाशाय हुवेम नित्यमाह्वयेमेत्याशास्महे। वाजसातये वाजमन्नं सातिः संभजनम् । अन्नसंभजनाय चात्मनः युवयोर्वा ।

III.58. हे इन्द्राबृहस्पती हविर्नोऽस्माकं स्वभूतमन्नं योग्याशनादि युजेव यथा युजौ सहयोगिनौ वाजिनावश्वौ । एवमभिजिगातमभिगच्छतम् ।

III.59. हे इन्द्राकुत्सौ वहमाना वहमानौ प्रापयन्तौ रथेनात्मानम् । आ इत्युपसर्गो वहन्त्वित्येतेन सम्बध्यते । वामत्या अश्वा अपि कर्णे अपठितमपि कर्मनामैतत् । करणमित्यस्य वा कर्मनाम्नश्छान्दसोऽकारलोपः कर्मण्यस्मदीये आवहन्तु ।

III. 60. ननु नैरुक्तपक्षे इन्द्रस्य वायुना संस्तवानुपपत्तिरभिधेयस्याभेदात् । उच्यते । द्वावात्मानौ । अन्तरात्मा शरीरात्मा चेति । अनेन

662. अथवा द्वावुत्तरावाग्नेयौ । तत्रार्थयोजना । पूष्णा प्रच्यावितं सन्तं सोऽग्निर्वक्ष्यमाणस्त्वामेतेभ्यः पितृभ्यो देवेभ्यः सुविदत्रियेभ्यः परिददातु ।

संशयोऽस्मिन्नस्तीति सांशयिकः तृतीयः पादोऽस्या ऋचः । कथं कृत्वा । यथा 'पूषा पुरस्तात्' पूषा त्वेतश्च्यावयतु इति । तस्यान्वादेश इत्येकं सामर्थ्याद्दर्शनम। तथा व्याख्यातमेव।

663. वृत्रवधो मेघवधः । 'या च का च बलकृतिः' अन्यापि 'इन्द्रकर्मैव तत्' इत्यादरार्थं पुनर्वचनम् । अपि कीटपिपीलिकादिषु यद्बलेन क्रियते सर्वमिन्द्रकर्मैव तदिति ।

664. हे इन्द्रापूषणौ सख्याय समानख्यानाय स्वस्तये स्वस्त्ययनाय च वाजसातये च वाजस्यान्नस्य सननाय हुवेम आह्वयामहे युवां वयम् । नित्यं यज्ञेष्विदमाशास्महे इति ।

665. यौ युवामेवमतिमहानुभावौ तौ अस्माकम आभिमुख्येन इदं हविः जिगातम् आगच्छतं भोक्तु युजाविव सहचारिणौ वाजिनौ रथाद्विमुक्तौ बुभुक्षू स्वम् अन्नम् । इत्येतदाशास्महे ।

666. हे इन्द्राकुत्सौ वहमानौ उह्यमानौ रथेन युवां ब्रुवे । आवहन्तु वाम् अत्याः अश्वाः अपि कर्णे नित्यं कर्मणे ।

667. उपात्तद्विकर्मात्मनो हि मध्यमस्य एकस्यापि वाग्विन्द्रभावेन विकरणधर्मित्वाद् द्वित्वं बिभ्रतो नैरुक्तपक्षेऽपि द्विवचनसंस्तुतिरविरुद्धा यथे-

प्रकारेणाधिष्ठात्रधिष्ठेयभेदाददविरोधः ।······
आ इत्युपसर्ग उक्षतमित्यनेन सम्बध्यते । नोऽस्माकं स्वभूतम् । मित्रावरुणा हे मित्रावरुणौ । घृतैरुदकैः। गव्यूतिं गावो येन मार्गेण चरन्ति तमुक्षतम् । आसिञ्चतमित्यर्थः । न च केवलं गव्यूतिमेव । किं तर्हि ? मध्वा उदकेन वृष्टिलक्षणेन । रजांसि सर्वानेव लोकान् । हे सुक्रतू सुकर्माणौ ।

III.61. हे सोमारुद्रौ युवं युवाम् । एतान्यस्मे अस्माकम् । विश्वा विश्वानि सर्वाणि । तनूषु शरीरेषु रोगोपशमकराणि भेषजानि औषधानि धत्तम् । अरोगशरीरानस्मान् कुरुतमित्यर्थः ।

III.62. 'अग्निना च पूषा' इत्यपपाठः । 'न तु संस्तवः' इति प्रतिषेधविरोधात् ।

III.63. उदकदानप्रकाशकरणादिना केनापि स्वेनोपकारेण धर्तारो धारयितारो दिवः । ऋभवो देवविशेषाः । सुहस्ताः शोभनहस्ताः । वातापर्जन्या वातापर्जन्यौ च । महिषस्य महतः । तन्यतोः स्तनयित्नुलक्षणस्य शब्दस्य । नित्यं धनं धर्तारावित्यनुषङ्गः ।......यन्तु गच्छन्तु मे मम हवमाह्वानम् ।

III.64. सूर्यभक्तीति वक्तव्ये आदित्यभक्तीति वचनं स्वे पक्षे सूर्यपर्यायतामादित्यस्य दर्शयितुम् ।

याश्च स्त्रियः—उषाः सूर्या वृषाकपायीत्यादयः ।

अल्पत्वादथास्येत्यादिना प्रपञ्चो न कृतः ।

III.65. विश्वानि सर्वाणि । अन्य एको भुवनानि भूतजातानि । अभिचष्टे अभिदर्शयति प्रकाशकरणेन सूर्यः । ऋतूनन्यश्चन्द्रमा

कस्योदकस्य द्विपात्रस्थस्य द्विवचनेनोक्तिः ।

668. हे मित्रावरुणौ सुक्रतू शोभनकर्माणौ युवामुच्येथे । गव्यूतिं गोयूतिं यवसोदकोत्पत्तये रजांसि च गोयूतेर्यान्यन्यानि व्रीह्यादिधान्योत्पत्तिक्षेत्राणि तानि च व्रीह्याद्युत्पत्तये मध्वा मधुरेण सस्यसंपत्करेण उदकेन अस्माकं उक्षतम् आ सिंचतमित्येतदाशास्महे ।

669. हे सोमारुद्रौ युवामुच्येथे । एतानि सर्वाणि भेषजानि अस्मे अस्माकं तनूषु शरीरेषु धत्तम् ।

'अग्निना च पूषा' । मध्यमेन च द्युस्थानेन च संस्तव इति पार्थिवेन प्रतिषेधात् । ऋचं नोदाहरन्ति । मृग्यमुदाहरणम् ।

धर्तारो दिव इति ऋभव शोभनहस्ताः वातापर्जन्यौ च आपश्च ओषधयश्च भगश्च रातिः दाता वाजिनश्च धारयितारो द्योतनवन्तो ये उक्ताः अस्य उदकस्य महिषस्य महतः । तन्यतोः सर्वार्थतनितुः हवं आह्वानम् अस्माकम् आयन्तु आगच्छन्तु ।

670. 'सूर्यो द्युस्थानः' इति पूर्वमधिकृत्य 'आदित्यभक्तीनि' इहाब्रवीद्विशेषतः स्वपक्षो द्योतनानुस्मृतये ।

'याश्च स्त्रियः' उषाः सूर्या वृषाकपायी सरण्यूः ।

अल्पत्वात्स्वशब्दैरेव ब्रवीति नाधिकारवचनं करोति 'अथास्य' इति ।

671. विश्वान्यन्यो भुवनाभिचष्टे । विश्वानि भुवनानि भूतानि अन्यः अभिचष्टे अभिपश्यति आदित्यः । यथत [illegible]व्यानि उपकार-

आत्मानो वृद्धिक्षयाभ्यां विदधत् कुर्वन् जायते। पुनः भूयो भूयो मासि मासीत्यभिप्रायः।

कत्वेन तथा स एव तानि पश्यति। ऋतूँरन्यः चन्द्रमाः विदधत् अभिनिष्पादयन् स्वगत्या पुनः पुनः प्रतिमासं जायमान उदेत्यस्तमेति च।

वायुना संस्तुतिं वक्ष्यति–'सप्तऋषयः···' इत्यत्र। तत्र जागृतो अस्वप्नजौ सत्रसदौ च देवौ वाय्वादित्याविति।

वायुना संस्तवः। सप्त ऋषयः प्रतिहिताः इत्यत्र। तत्र 'जागृतो अस्वप्नजौ' इत्यस्मिंन्पादे वाय्वादित्यौ इति वक्ष्यति।

एतेष्वेवोक्तेषु 'अयं लोक' आदिस्थानसम्बन्धेन व्यूढेषु प्रातस्सवनवसन्तादि रचनाविशेषेषु ऋतुशब्द इत्यादि द्वन्द्वैकवद्भावः। भक्तिशेषं यदत्रानुक्तभक्ति तदानुपूर्व्येण कल्पयेत्।

672. ऋतवश्च छन्दांसि च स्तोमाश्च पृष्ठानि च ऋतुच्छन्दः स्तोमपृष्ठम्। तस्य ऋतुच्छन्दः स्तोमपृष्ठस्य। ऋतुभक्तिशेषं छन्दोभक्तिशेषं स्तोमभक्तिशेषं पृष्ठभक्तिशेषं च।

III.66. असंविज्ञानपदेषु च मन्त्रेषु उक्तान्यतमसाहचर्येण देवतासंविज्ञानायेत्युक्तं पुरस्तात्।

अनग्निलिङ्गेऽपि चेन्मन्त्र एनेषामन्यतमं स्यात्स आग्नेय इति प्रतिपत्तव्यः। एवमेवोत्तरयोरपि स्थानव्यूहयोः।

कथं नामान्यत्र मन्त्राणां मन्त्रत्वम्–'तस्माद्यज्ञात् सर्वहुत ऋचः सामानि' इत्यादावुक्त निर्वचना एते स्युरिति।

सर्वमेतन्मन्त्राश्रयमुक्तम्। त एव तावन्मन्त्राः कस्मान्मन्त्रा इति उच्यन्ते।

मन्तव्या हि ते, मन्यन्ते तैरधिदैवादिविषया इति मन्त्राः।

673. एभ्यो ह्यध्यात्माधिदैवाधियज्ञादि मन्तारो मन्यन्ते। तदेषां मन्त्रत्वम्।

आवरणार्थस्यैव वा ब्राह्मणोक्तनिर्वचनम्–'यदेभिरात्मानमाच्छादयन् देवा मृत्योर्बिभ्यतस्तच्छन्दसां छन्दस्त्वम्' इति विज्ञायते।

अथ 'छन्दांसि' कस्मात्। छादनात्। 'यदेभिरात्मानमाच्छादयन् देवा मृत्योर्बिभ्यतस्तच्छन्दसां छन्दस्त्वम्' इति विज्ञायते।

III.67. प्रायेण हि याजुष्या होममन्त्राः।

तेन हि विशेषत इज्यते सर्वत्र याज्यान्ते वषट्कारविधानात्।

क्षिप्तं हि तदृगक्षरेषु। 'ऋच्यध्यूढं साम गायति' इति श्रुतेः।

प्रक्षिप्तमिव हि तदृचि भवति। विज्ञायते च 'तस्मादृच्यध्यूढं साम गीयते'।

ऋचा समं मेने ज्ञातवान् प्रजापतिः सोमैवमात्मानं तत्साम्नः सामत्वमिति। एवमादीनां नामग्रन्थस्तद्विदो मन्यन्त इति शेषः।

ऋचा एतत् समम् इत्येवं प्रजापतिर्मेने ज्ञातवान् अथवा। आत्मानमेव ऋचा समं मेने ज्ञातवान्। तस्मात्साम्नः सामत्वमित्येवं नैदाना मन्यन्ते। निदानमिति ग्रन्थः। तद्विदो नैदानाः।···

गायत्री गायतेः स्तुत्यर्थस्य। स्तूयते हि तया देवता।

'गायत्री गायतेः स्तुतिकर्मणः'। तया हि गीयन्ते स्तूयन्ते देवताः।

III.68. उष्णिगुत्स्नाता 'ष्णै वेष्टने' गायत्रीतश्चतुर्भिरक्षरैः पूर्वं वेष्टितेव । आह च 'उष्णिग्गायत्रौ जागतश्च' इति ।

कान्तमेतद्देवानां च्छन्दः ।

एतदप्यौपमिकम् । मध्यमस्य जागतत्वात् । चतुरक्षरं ककुदस्थानीयमस्याम । तेन तद्वती ककुदिनी भवति ।

III.69. बृहिर्वृद्ध्यर्थः । सर्वपादेष्वेकाक्षरवर्धनादिर्थः ।

पूर्वपदस्य त्रिशब्दस्य किं प्रवृत्तिनिमितमिति पृच्छति । का पुनस्त्रितेति ।

अनवस्थितत्वाद्वा जलतरङ्गचला गतिः प्रस्तारो यस्याः । बहुप्रकारप्रस्तारेत्यभिप्रायः ।

III.70. अत्यर्थं ग्लायन् प्रजापतिर्निर्विण्णः सन् सृष्टवानिति ब्राह्मणमाह ।

पिपीलिकामध्येत्युपमाप्रयुक्तं नाम । अल्पाक्षरमध्यमपादत्वात् । पिपीलिकामध्यमिव मध्यं यस्या इत्युत्तरपदलोपी समासः ।

एवमनेन प्रकारेण इमा अग्न्याद्या देवता देवपत्न्यन्ताः सामान्येन लक्षणेनानुक्रान्ताः ।

चशब्दादर्धर्चभाजः पादभाजश्च ।

अयमपि च वक्ष्यति 'आदित्यदैवतो द्वितीयः पादः' इति ।

III.71. तथा च वक्ष्यति । 'विधाता धात्रा व्याख्यातः । तस्यैष निपातो भवति बहुदेवतायामृचि । सोमस्य राज्ञः' इति ।

अभिधानैर्गुणानामिति शेषः । वृत्रहादिभिर्गुणपदैरित्यर्थः । संयोगैर्गुणिनं हविश्चोदयति श्रुतिः।" तान्यपि गुणाभिधानानि एके नैरुक्ताः पठन्ति । इन्द्रो वृत्रहा इन्द्रोऽहोमुगिति ।

673,674. तत्र तावत् 'उष्णिगुत्स्नाता' गायत्रीतश्चतुर्भिरक्षरैरधिकैरुद्वेष्टितेव भवति । 'उष्णिग्गायत्रौ जागतश्च' इति ।

स्निग्धम् इष्टं देवतानां कान्तमेतच्छन्दः ।

सैवोष्णिग्जागतेन पादेनोपहितेन मध्यतः ककुबित्युच्यते । स तस्याः ककुबिव मध्यतो भवति तेन ककुभिनीव ककुप् ।

बृहती परिबर्हणात' । परिवृद्धासौ भवत्यनुष्टुभश्चतुर्भिरक्षरैः ।

अथ पुनः पूर्वपदे येयं त्रिता त्रित्वं श्रूयते 'त्रि' इति एतत्किमर्थमिति ।

675. जलोर्मिप्रकारो हि तस्याः प्रस्तारः ।

क्षीणहर्ष इव किलैतां प्रजापतिः ससृजे । ददर्शेत्यर्थः । न हि छन्दांसि क्रियन्ते नित्यत्वादेव छन्दसाम् ।

676. मध्याल्पाक्षरपादा या सा पिपीलिकमध्येव भवति पिपीलिकसरूपा ।

एवमनेन प्रकारेण यथापरिभाषितेन 'यत्काम ऋषिः'इत्येवमादिना इमा देवता अनुक्रान्ताः ।" अर्धर्चभाजोऽपि क्वचिदुपेक्षितव्याः ।... पादभाजोऽपि क्वचिदुपेक्षितव्याः ।

677. 'नवो नवो भवति जायमानः' इत्यस्या आदित्यदैवतो द्वितीयः पादो भवति ।

677. तद्यथा–'विधाता धात्रा व्याख्यातस्तस्यैष निपातो भवति बहुदेवतायामृचि । 'सोमस्य राज्ञो वरुणस्य' इत्यस्या सोमप्रभृतिभिः सह विधाता स्तूयते साधारण्येन ।

678. अभिधानैः संयोज्य विशेषणशब्दैस्तैस्तैस्तदभिधानमिन्द्रादि संविज्ञानाद्रूढमिन्द्रादौ देवतार्थे आम्नायविधौ प्रयोगे च हविश्चोदयति ।...

एके नैरुक्तास्तान्यपि गुणपदानि वृत्रहांहोमुक्-

यस्मात् भूयांसि प्रभूतान्यपर्यन्तानि तेषां समाम्नानात् स्युः । ऐश्वर्याद् गुणिनि गुणविशिष्टानां संख्यानासम्भवात् । ततश्चानवस्थाप्रसङ्गादध्येतारः शास्त्रात पराभज्येरन् ।

III.72. तस्माद् यदेव संविज्ञानभूतं रूढितामापन्नं स्यात् प्राधान्यस्तुति च ।

एवमत्रापि क्रियापदर्निमित्तपदसमाम्नानात् भूयस्त्वमेव केवलं स्यात् ।

यतोऽर्थविशेषस्याभिव्यञ्जनमात्रं गुणकर्मोपनिधानमात्रेण हि तत्तस्य संविज्ञानभूतस्येन्द्रादेरभिधानस्य भवति ।

III.73. एवं तावत् सामान्येन सर्वदेवातानां लक्षणं सप्रपञ्चममिधायानन्तरं प्रतिपदं विशेषेण वक्तव्याकांक्षास्तीति । अतस्ताद्विवक्षयानुपूर्व्येण यथासमाम्नायमनुक्रमिष्यामो व्याख्यानेनेति शेषः ।

'स न मन्येत' इत्यादिविचारः । 'यस्तु सूक्तं भजते' इत्यादि । 'अयमेव' इत्यवधारणम् । एवं प्रकारया ।

अग्निरग्रणीः प्रधानो देवतानाम् । मुख्यसंस्तुतः । सेनानीत्वाद्वा । 'अग्निर्देवतानां सेनानीः' इति हि विज्ञायते ।

III.74. तदङ्गं नयति आत्मसात्करोति अधिकरोतीति यावत् । एवमर्थस्यान्यत्वं व्युत्पत्तिः सैव ।

स्थूलाष्ठीवः कश्चित् । स च बाह्वादिषु द्रष्टव्यः तदपत्यं स्थौलाष्ठीविराचार्यो मन्यते ।

प्रभृतीनि अग्न्यादौ देवतापदसमाम्नाये पृथक्पृथक्समामनन्ति ।

679. भूयांस्येव तेषां समाम्नानात् समाम्नातानि स्युः। न किंचिदतिरिक्तं प्रयोजनं वचनात् । केवलं गुरु शास्त्रं संपद्यते । तन्मा भूदित्यर्थः ।

यदेतत्संविज्ञानभूतं रूढमगौणं केवलमपि निर्विशेषणं लब्धप्रधानस्तुति देवतापदमग्न्यादि तत् समामने न गौणं व्रतभृद्व्रतपत्यादि ।

'भूयांसि तु समाम्नानात्' इति स एव दोषः ।

वृत्रहा पुरन्दर इति यदेवमादि गुणपदं तत्तस्येवेन्द्रादेः संविज्ञानपदस्य व्यञ्जनमात्रं विशेषणमात्रं भवति ।

680. सामान्यतः परीक्षितोऽग्न्यादिर्देवपत्न्यन्तो देवतापदसमाम्नायः । विशेषत इदानीं प्रतिपदमनुव्याख्यास्यते । तदर्थमधिकारवचनम् 'अथ' इति ।

'स न मन्येतायमेवाग्निः' इति च विचारः ।

681. 'यस्तु सूक्तं भजते यस्मै हविर्निरुप्यते' इतीयमुपपत्तिः । 'अयमेव सोऽग्निः' इत्यवधारणाम् । एवंप्रकारया व्याख्यया प्रतिपदमनुक्रमिष्यामः ।

682. अग्रशब्दः प्रधानवाची । स एव चाग्रं नयति सेनां वाग्रे नयति सैनापत्येऽवस्थित इत्येके । विज्ञायते । हि'अग्निर्वै देवानां सेनानीः'इति ।··· तृणे काष्ठे वा यत्र संनमत्याश्रयनि तदात्मनोऽङ्गतां नयति । आत्मसात्करोतीत्यर्थः ।

स्थूलाष्ठीवतः पुत्रः स्थौलाष्ठीविराचार्यः स एवं मन्यते ।

III.75. न स्नेहयति । नञ्विशिष्टस्नेहयतेः स्नेहनविपरीतं विरूक्षणं लक्ष्यते । विरूक्षयतीत्यर्थः । दग्धव्यस्यैधादेः शोषणादक्नोपनो विरूक्षण इत्यर्थः ।

अतः पुनर्ब्रवीति प्रसिद्धेनार्थेन 'न स्नेहयति' विरूक्षीकरोतीत्यर्थः । स हि तस्य स्वभावः ।

तत्र वाच्यक्रियाक्षरानुगमादित्याभिप्रायः ।

683. त्रयाणामाख्यातानामभिधेयाः क्रिया अत्र लक्ष्यन्ते ।

एतेः अयनमित्यादिरूपत्वेन परिणतस्याकारमादत्ते ।

नन्वेतेर्धातोरकार एव नास्ति । अतः किमादत्ते । सत्यं नास्ति । वर्णसामान्येन तद्विकारमादाय इणोऽर्थदर्शनादग्नौ शब्दार्थसंबन्धनित्यत्वादर्थे च गुणभूतत्वाच्छब्दस्य । ततस्तं व्यापादयत्याकारत्वेन ।

III.76. 'इड् स्तुतौ' याच्ञायां वा । यद्वा अध्येषणायाम् । स्तौमि याचे । अध्येषणायामिति । पूजाकर्मा वा ।

684. 'ईडिः' धातुः अध्येषणाकर्मा याच्ञाकर्मेह । अन्यत्र 'पूजाकर्मा' अपि ।

द्युस्थानसामान्येन वा देवशब्दस्य निर्वचनादविरोधः । हविर्वहनकर्मणा वा पृथिवीस्थानत्वम् । अधिष्ठात्रात्मना द्युस्थानत्वमित्याभिप्रायः ।

सामान्यं हि द्यौः स्थानं देवतानाम् । तयोस्तु कर्माधिकारस्थाने विशिष्टे पृथिव्यन्तरिक्षे ।

परा अनन्तरा सर्वाग्नेयीत्वादुदाहरणं भवति ।

समानसंहितत्वादपरेति वा । द्वितीयेत्यर्थः । सा पुनः किमर्थमिति । अमुना प्रकारेण सर्वा

685 एतस्यामुदाहरणं तत्कर्मयुक्ता ऋच उपेक्ष्या इत्युपप्रदर्शनार्थम् ।

III.77. सर्वत्र यत्तदोर्नित्यसम्बन्धसूचनाय स देवताग्निः परस्तात् प्रतिनिर्देशार्थतच्छब्दश्रुतेर्भाष्यकार उद्देशार्थं यच्छब्दमध्याजहार ।

685. तद्वृत्तमुत्तरत्रापेक्ष्य यद्वृत्तमध्याजहार भाष्यकारो यत्तदोर्नित्यः सम्बन्ध इति दर्शयन् ।

उत्तरे ज्योतिषी विद्युदादित्याख्ये अग्नी ।

686. 'अप्येते उत्तरे ज्योतिषी' मध्यमं चोत्तमं च 'अग्नी उच्येते ।

III.78. कस्मात् पुनरत्र पार्थिव एवाग्निर्न गृह्यते । घृतं वाहुतिलक्षणम् । आज्यमाहवनीयम् । आहुतिलक्षणस्याज्यस्य धारा अभिगच्छन्ति । उच्यते । बह्वीनां धाराणां युगपदभिगमनवचनात् । क्रमत्वाच्चाहुतीनां घृतधाराणां युगपदग्निं प्रत्यभिगमनस्यासम्भवात् । वैद्युते तु सम्भवति ।

687. एवमेतस्मिन् मन्त्रे युगपदविधानात्पार्थिवे घृताहुतिहवनस्योपमानोपमेयवैधर्म्याच्च युगपत् सम्भवाच्चोदकधाराणां वैद्युते तत्रोपमानोपमेयसामञ्जस्याच्च सामर्थ्यादप्रसिद्धिमुपरुन्ध्य 'घृतस्य धारा' शब्द उदकधारावचनः सम्पद्यते

III.79. अत्रापि चेदमेवोदाहरणमित्यनेनाभिप्रायेण । 'समुद्रादूर्मिः''' इत्युपन्यासः ।

अंशुना चन्द्रमसाहारभूतेनामृतत्वमानट् 'अशू-व्याप्तौ' अश्नुते उपसंव्याप्नोतीत्यर्थः । कुत एतत् । 'यमाक्षीतिमक्षितयः पिबन्ति' इति मन्त्रान्तरे दर्शनात् ।

III.80. न केवलमुत्तरे ज्योतिषी अग्निः । किं तर्हि । सर्वा देवता अग्निशब्देनोच्यन्ते । तथा च ब्राह्मणम्—अग्निः सर्वा देवताः' इत्यादि ।

तस्य ब्राह्मणोक्तस्यार्थस्य उत्तरा ऋक् भूयसे अभिव्यक्तावत्र भूयस्त्वम् । विशेषेणाभिव्यक्ततरायेत्यर्थः ।

इन्द्रं मित्रं वरुणं चाग्निमाहुः । अग्निशब्देन ब्रुवन्तीत्यर्थः ।

III.82. तद्यदा मध्यमोऽग्निरादित्यो देवतेति पक्षः । तदाग्निशब्दस्य गौणी वृत्तिः ।

निपातमेव न स्तुतिर्न हविरित्यर्थः ।

III.83. जातानि सर्वाणि भूतानि वेद लोकपालत्वात् ।

जातानि वा तिर्यगादीन्यप्येनं विदुः । कारकभेदः केवलम् ।

ब्राह्मणोक्तमपि जनेर्विन्दतेश्च निर्वचनमिति दर्शयति ।

III.84. सर्वानृतून् सर्वकालमित्यर्थः । 'स्वामित्वादग्निमभि मुख्येन सर्पन्ति' इति च ब्राह्मणम् ।

तस्य जातवेदसः प्राधान्यस्तुत्युदाहरणमेषा भवति ।

अश्वं 'अशू व्याप्तौ' व्यापारमन्नपक्त्यादिना स्वकर्मणा कृत्स्नस्य जगतः । लुप्तोपमो वाश्वशब्दः । अश्वमिव शीघ्रकारित्वात् ।

688. अथ खलु यथोक्तममपि ज्योतिर्भवस्याग्निस्तथोदाहरिष्यामः । 'समुद्रादूर्मिः'... ।

अंशुना चन्द्रमसा उपसमानट् उपसंव्याप्नोति । सोऽस्यान्नं तेन न म्रियते । 'यमाक्षितिमक्षितयः पिबन्ति'—इत्युक्तम् ।

689. अथ खल्वयमपरः संकरोऽग्निशब्दस्य । ब्राह्मणं हि भवति 'अग्निः सर्वा देवताः' इति ।

अस्य च ब्राह्मणस्य 'उत्तरा' ऋक् भूयसे बहुतराय निर्वचनाय ।

690 इन्द्रं मित्रं वरुणम् इत्येतैरभिधानैरग्निमाहुः सतत्त्वविदः ।

अत्र प्रतिसमाधानम् । सत्यमेतत्सर्वं एतेऽग्निशब्देन स्तूयन्ते । न तु प्रधानतः । किं तर्हि? गुणतः स्तूयन्ते ।

691. निपातो नाम अप्राधान्यं भक्तिरित्येव ।

692. स हि जातानि वेद । न हि तदस्ति जातमस्मिंल्लोके यदसौ न वेद सर्वज्ञ इत्यर्थः ।

'जातानि वा एनं विदुः' स एव धातुः । कारकान्यत्वं केवलम् ।

'ब्राह्मणम्' अपि भवति जनेर्विदेश्च जातवेदा इति ।

यतश्चैतदेवं तस्मात् अद्यत्वेऽपि स्वाम्ययमस्माकमिति मन्यमानाः 'पशवः सर्वानृतून्' प्रति अपि ग्रीष्मे 'अग्निमभिसर्पन्ति' ।

तस्य जातवेदसः प्राधान्यस्तुत्युदाहरणम् 'एषा' ऋग् भवति ।

693. अश्वं कर्मभिः सर्वमेतज्जगत् अश्नुवानं व्यापयन्तं'''। अथवा अश्वमिव इति वा लुप्तोपमं [illegible]त्वात् ।

III.85. कथं नामायं जातवेदाः। 'वेदिस्तरं बर्हिरासीदेत' इति प्रसङ्गात्। सुहृद्भूत्वाह स्वपक्षे वा पर्यायत्वं दर्शयितुम्।

यत्तु किञ्चिदाग्नेयं गायत्रं तज्जातवेदस्य शास्तीति चोदनासम्पादनार्थं जातवेदःशब्दसम्बन्धिनां सूक्तानां प्रसङ्गे प्रयुज्यते। नान्यच्छन्दोयुक्तं जातवेदोलिङ्गमपि। एवं च ब्रुवता पर्यायत्वं दर्शितं भवति।

इदम् अस्मत्कर्म बर्हिषोपलक्षितं बर्हिः कथं नामास्मदभिमतार्थसिद्ध्यर्थमाभिमुख्येन सीदेदित्येवमर्थं प्रहिणुत।

694. बहुभिरेतैर्गायत्रच्छन्दोयुक्तैर्जातवेदसैर्मन्त्रैरधियज्ञे प्रयोजनमस्ति। न चैते बहवः सन्ति सर्वास्वपि दशतयीष्वेतदेवैकं तृचं मुक्त्वा। तत्र किं कर्तव्यमिति। यत्तु किंचिदाग्नेयं मन्त्रजातं गायत्रच्छन्दस्यजातवेदोलिङ्गमपि तज्जातवेदसानां मन्त्राणां स्थाने विनियुज्यते शस्त्रेण। ...अग्निरेव जातवेदा इति कर्मपृथक्त्वान्माहाभाग्याद्वेति।

तथेदमपरमुदाहरणं 'उदु त्यं जातवेदसम्' इति। तदुपरिष्टात् सप्तदशे व्याख्यास्यामः।

तथेह 'अथासावादित्य उदु त्यं जातवेदसमिति' जातवेदस्त्वोपपत्तौ। तदेतत्प्रतिपदमुदाहरणम् उपरिष्टाद् व्याख्यास्यामः।

III.86. सर्वान् नरानितो लोकान्तरं नयति।... अपि वा विश्वान् जन्तून् अरः......सर्वाणि भूतानि अरः प्रत्यृतः प्रविष्ट इति वैश्वानरः। इयमेव व्युत्पत्तिः। स च सामर्थ्यात् प्राणाख्यो वायुः। तेन जन्यमानत्वात् तस्यापत्यं वैश्वानरः।

695. विश्वान्नरान् इतो लोकादमुं लोकं नयति।

696. प्रत्यृतः सर्वाणि भूतानि। विश्वानि ह्यसौ भूतानि प्रत्यृतः। प्रविष्ट इत्यर्थः। 'तस्य' अपत्यं विश्वानरस्य वैश्वानरस्य वैश्वानरः।

III.87. तस्य प्राधान्यस्तुत्युदाहरणमेषा।

'तस्य' वैश्वानरस्य 'एषा' प्राधान्यस्तुतिः 'भवति'।

अत्रैकवाक्यतायै यत्तच्छब्दाध्याहारः।

697. अनेकतिङि चैतस्मिन् मन्त्रे प्रतितिङ् वाक्यभेदे प्राप्ते यत्तदोरध्याहारेण।

भाष्यकारेण लोकवच्च स्तुतिपूर्वकत्वाद् याच्ञायाः प्रथमः पादः पश्चाद् योजितः।

696. लोकेऽपि हि स्तूयते एव पूर्वं पश्चात्प्रार्थ्यत इत्याचार्यः पश्यन्मन्त्रेऽप्ययमेव न्याय इत्युपदर्शनार्थं पदानां क्रमं बिभेद।

सूर्यस्य रश्मयः पृथिवीमागच्छन्ति। अग्नेरप्यर्चिष ऊर्ध्वं गच्छन्ति। तयोर्भासोर्यः संसर्गस्तदभिप्रायमिदं सङ्गतवचनम्।

696. संयतते सूर्येण संगच्छते स्वेन भासा।

III.88. तदिति वाक्योपन्यासे।

क: सन्देहः ? आचार्यविप्रतिपत्तेरात्मेति वैश्वानरविद्यायामात्मविदः।

697. तदिति वाक्योपादाने।

कुतः संशयः। आगमविप्रतिपत्तेः। वैश्वानरविद्यायां तावदात्मेत्यात्मविदः।

'मध्यम इत्याचार्याः' पूर्वे नैरुक्ता मन्यन्त इति शेषः ।

वर्षकर्मणा यस्मादेनं वैश्वानरं स्तौति ।

III 89. पूर्ववचनात् षाष्ठिकानां साक्षात्कृतधर्माणामुपलक्षणार्थं वा । ते हि चोदनाल...सवनक्रमं शास्त्रक्रमं च दृष्ट्वा वैश्वानरशब्दस्यादित्यविषयामूहां चक्रिरे ।

एषामग्न्यादिभक्तीनां पृथिव्यादीनां लोकानां रोहेण । रोह उपर्युपरिभावः पृथिवीलोकस्तस्योपर्यन्तरिक्षलोकस्तस्योपरि द्युलोकः । एतेन रोहेण तुल्य एवमेवोक्तभक्तीनां सवनानां रोह उपर्युपरिभाव आम्नातो ब्राह्मणपठितः ।

III.90. तस्य प्रत्यवरोहस्यानुकरणमनुकृतिर्या तां होता आग्निमारुतसंज्ञके शस्त्रे चिकीर्षन्निति शेषः । वैश्वानरदेवत्येन सूक्तेन प्रथमे प्रतिपद्यते प्रवर्तत इत्यर्थः । 'वैश्वानराय पृथुपाजसे विपः' इत्येतेन ।

तस्मान्मन्यामहे वैश्वानर आदित्यः ।

अतो यथायतनं स्तुतिदर्शनादसावादित्य इति याज्ञिकदर्शनम् ।

III.91. एतस्यादित्यस्य यस्माद् द्वादशविधमुदयास्तमयाभ्यामहोरात्रादिक्रमेण द्वादशमासप्रविभागप्रकारं कर्म ।

अपि च ब्राह्मणं वक्तव्यमेवास्यार्थस्य प्रतिपादकं भवति । 'असौ वा आदित्योऽग्निर्वैश्वानरः' इत्यादि ।

निविदिति केषाञ्चिन्मन्त्राणां समाख्या ।

III.92. दिवि द्युलोके पृष्टः स्पर्शनेन स्थानं लक्ष्यते । तत्र स्थित इत्यर्थः । अरोचत अद्योतिष्ट रोचते वा दीप्यते । को असौ ? अग्निर्वैश्वानर आदित्यः । बृहन् महान् रोचमानश्च ज्योतिषा बाधते तमः । एष

अपि च मध्यमो वैश्वानर इति नैरुक्ता. केचित् 'आचार्याः' मन्यन्ते ।

वर्षकर्मणैनं वैश्वानरं यस्मान्मन्त्रदृक् स्तौति ।

700. पूर्व इति विधिमन्त्रार्थवादेभ्यो यज्ञसतत्त्वमुन्नीयैनं यज्ञं प्रयोगतः प्रथमं ये चक्रुस्ते पूर्वे याज्ञिकाः । साक्षात्कृतधर्माण इत्यर्थः । त एनमेवमाहुः असावादित्य इति ।

य एवं हि लोकानामारोहणक्रमः पृथिव्यन्तरिक्षं द्यौरिति स एव सवनानामपि क्रमः प्रातः सवनं माध्यंदिनं तृतीयसवनमिति ।

सोऽग्निष्टोमसाम्नि यज्ञायज्ञिये यच्छस्त्रमाग्निमारुतं तत्सवनलोकप्रत्यवरोहानुकृतिं चिकीर्षञ्छस्त्रं वैश्वानरीयेण सूक्तेन प्रतिपद्यते प्रारभते । तद्यथा 'वैश्वानराय पृथुपाजसे' इति ।

701. तेन ज्ञायते आदित्यो वैश्वानर इति । तदेवमेतस्माद्विध्यनुकरणात्पश्याम आदित्यो वैश्वानर इति ।

702. एतस्य च द्वादशविधं द्वादशमासविभागाधिकारलक्षणं कर्म ।

अथापि स्फुटमेव ब्राह्मणं भवति 'असौ वा आदित्योऽग्निर्वैश्वानरः' इति ।

निविदित्याकृतिविशिष्टो मन्त्रः शस्त्रमध्यपाती ।...न च पुनरादित्यादन्यो दिवि पृष्टो रोचते । यत उच्यते'एष हि दिवि पृष्टो रोचते'। दिवि स्पृष्टः । द्युलोके स्पृष्टः । अवस्थित इत्यर्थः । अरोचत रोचते दीप्यते । कोऽसाविति । अग्निर्वैश्वानरः । बृहन् । महानि·

हीत्यादिनोक्तार्थविषयं सामर्थ्यमुपदर्शयति।

III.93. एवमङ्गं कर्तृत्वमादित्य एवोपशेते नाग्नाविति। अतोऽसावादित्यो वैश्वानरो नाग्निरिति याज्ञिकः पक्षः।

आयत इत्यलक्षणतद्धितार्थनिर्देशः।

III.94. शरणमाश्रयमात्मनः काष्ठादि हिंसितव्यं वा हन्तिर्गतिकर्मा अधिगच्छति।
उदकमिन्धनमस्योदकेन दीप्यते। शरीरं काष्ठादि। उपशमनं निर्वापणम्।

अथादित्यात् कथं जन्मेत्याह।
स आदित्यादयमेव पार्थिवः सम्पद्यते।

III 95. एवं तावद् विषयभेदादादित्यादस्यात्वे हेतुमभिधाय हेत्वन्तरमप्याह।
इतः काष्ठोदेरिमं पार्थिवं पृथिव्यामादधाति। अमुतो द्युलोकादादित्यरश्मयः। इतो (पृथिवी) लोकादस्याग्नेरर्चिषः प्रादुर्भवन्तीत्यनुषज्यते। अवक्ष्यन्मन्त्रो मन्त्रदृग्वा।

III.96. अत उक्तविपर्ययादन्यो वैश्वानर आदित्यादिति सिद्धम्।
एवं युक्तिभिः स्वपक्षमवस्थाप्य परपक्षोक्तयुक्तिसमीकरणायाह।

त्यर्थः। स रोचमानः किं करोति। ज्योतिषा स्वेन बाधते तमः। नाशयत इत्यर्थः।

703. वैश्वानरं केतुं कर्तारमह्नामकृण्वन्निति। नैव तावदादित्यादन्यस्याह्नां कर्तृत्वमुपपद्यते पार्थिवे मध्यमे वा। आदित्य एव ह्युदयास्तमयाभ्यामहानि करोति। तेन वयमेतैर्हेतुभिः पश्यामः सूर्यो वैश्वानर इति।
तस्मात्ताद्धितेन व्यपदेशेन पार्थिवोऽग्निर्वैश्वानर इति।
'शरणमभिहन्ति'—आश्रयमात्मनो दारु अन्यद्वा अभिहन्ति निहन्ति अभिगच्छति। प्राप्नोतीत्यर्थः ...उदकेनेध्यते दीप्यते रसस्वभावकेन। शरीरेण काष्ठेनान्येन वा प्रतिहतमूर्तिस्वभावकेन पार्थिवधातुबहुलेनोपशाम्यति।

704. अथ पुनरादित्यात्कथं जायते। आह।
यः शुष्कगोमयेऽग्निर्जायते एवमयमादित्यादपि कंसाद्वा मणेर्वा जायते। असावपि च विश्वानर इत्याचक्षते। तदपत्यापेक्षयाप्यस्य वैश्वानरत्वमुपपद्यते।
तद्धितविग्रहव्यपदेशात्तावदेवमुपपद्यते। अन्य आदित्यात्तावद्वैश्वानरः।

705. 'अमुतो' मण्डलात् कर्मात्मनः 'अमुष्य' च आदित्यमण्डलाधिष्ठातुः स्वभूता रश्मयः प्रादुर्भवन्ति। 'इतः' तेजःपिण्डात् 'अस्य' तदधिष्ठातुः 'अर्चिष' प्रादुर्भवन्तीति वर्तते। तयोर्भासोः संसक्तं दृष्ट्वैवमवक्ष्यत् मन्त्रदृक् वैश्वानरो यतते सूर्येण इति।

706. तस्मादग्निरेव वैश्वानर इति स्थितम्।

तत्पुनरेतदग्नेर्वैश्वानरत्वं स्थितमप्यस्थितमिव परपक्षे[illegible]तेषु। [illegible] प्रस्तौति।

तत्परिणमत्वात्तद्रूपतामापन्नेन तेनैवोदकेन दिवं जिन्वन्ति प्रीणयन्त्यग्नय······ 'प्राप्ताहुतिः' इति च स्मृतेः।

707. एवं च सुतरामयमपि वर्षवानाहुतिभूतत्वात् सर्वस्य वर्षस्य। स्मर्यते च-'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते' इति।

III.97. यथा चाग्नेरेवमादित्यस्यापि वर्षकर्मस्तुतिं दर्शयति पूर्वपक्षस्य सुतरामनैकान्तिकत्व-प्रसिद्धये।

अपि चायमपरो मन्त्रो यस्मिन्नग्निरादित्यो वर्षकर्मणा स्तूयते। तस्मात्सुतरामनैकान्तो वर्षकर्माभिष्टवो मध्यमस्येति।

III.99. अथापि ब्राह्मणमुक्तमन्त्रद्वयार्थानुवादी भवति।

709. अथापि ब्राह्मणम् एतस्मिन्प्रकरणे यस्मिन्नयं मन्त्रो विनियुज्यते 'अग्निर्वा इतो वृष्टिं समीरयति' इत्येवमादि।

यद्वा दग्धद्रव्यान्तर्गता आपो दह्यमाना धूम-रूपतामापन्ना ऊर्ध्वं गच्छन्ति। तदुक्तम्-'अ-ग्नेर्वै धूमोऽभ्रम्' इति विज्ञायते।

धूमभूता आप ओषधिवनस्पतिभ्यो निवर्त्य-माना आहुतिभूताश्चामुं लोकमाविशन्ति। 'अग्नेर्वै धूमो जायते धूमादभ्रमभ्राद्वृष्टिः' इति ह विज्ञायते।

III.100. यदि सूर्यो वैश्वानरः स्याद् वैश्वानरीयवत् सौर्योऽपि द्वादशकपालः स्याद् द्वादशविध-कर्मत्वात्। यतस्तत् सव्यभिचारमेककपालत्वा-दिना तस्मादयमप्यहेतुः।

710. द्वादशविधमस्य कर्म तस्माद् द्वादशकपाल इति नन्वेवं सति सौर्योऽपि द्वादशकपाल एवाभविष्यदभिधानमात्रं भिद्यते न कर्मेति।

बहुभक्त्या उपचारेण वदन्ति एवंस्वभावानि।

यस्माद्बहुभक्तिवादीनि हि ब्राह्मणानि भवन्ति। भक्तिर्नाम गुणकल्पना।

III.101. यो विड्भ्यो मनुष्यजातिभ्यस्तासामर्था-येत्यर्थः। किम्? अदीदेत् दीप्यते।

711. यश्च विड्भ्यो मानुषीभ्यो दीदेत् देदीप्यते।

III.102. अस्यैव पार्थिवस्य तद्वैश्वानरत्वे यथालिङ्गं भाष्यकारेण प्रदर्शितं तथा व्याचक्ष्महे।

712. तत्र ह्येतद्विशिष्टं पार्थिवाग्नेर्वाचकं लिङ्गं भवति।

III.103. सूक्तादस्य मन्त्रस्याग्नेयत्वात् पराचीना-नामप्याग्नेयत्वमेव। वैश्वानरश्रुतिश्चाग्नेरेव विशेषणं प्रकरणान्न सूर्यस्येति दर्शयति।

यतस्तस्य सूक्तस्य या प्रथमा ऋक् सा यथा-ग्नेयी भवति न सौरी तथा निराह। इदमा-ग्नेयं सूक्तं न सौर्यमित्युपप्रदर्शनार्थम्।

III.104. स्वधयान्नेन प्रयाजानुयाजहविराख्येन इम-मेव पार्थिवमग्निं पप्रथन्त क्षीणं सन्तं वीर्येण प्रथितवन्तः।

713. इमम् एव अग्निं पृथिवीस्थानं साधयतेः स्वधया अन्नेन हविषा आज्येन पुरोडाशेन च। यदुक्तं निगमे—'घृतं चापां पुरुषं चौषधीनाम्' इति तदेतत् अपप्रथन्त। अवर्धयन्तेत्यर्थः।

III.105. आह्रियमाणस्य चाग्नेर्वैश्वानरत्वविशिष्ट-

715. एवमेतस्मिन्मन्त्रे यत आह्रियते येन चाह्रि-

स्य यतश्चाह्रियते विवस्वतस्तेषामन्यत्वमाह मन्त्रः । अतश्च मध्यमोत्तमाभ्यामन्यत्वं सिद्धं वायुरित्यभिधेयवचनम् ।

यते यश्चाह्रियते सर्वे ते पृथग् व्यपदिष्टाः । तत्र विवस्वत आह्रियते मातरिश्वना वैश्वानर इति । तस्मादेतयोर्विवस्वन्मातरिश्वनोः संनिधानव्यपदेशे सति साक्षाद्वैश्वानरशब्देन पार्थिव उक्त इति व्यवतिष्ठते पार्थिवो वैश्वानर इति ।

इदानीं द्युस्थानस्य वैश्वानरत्वे यदुक्तं लिङ्गम् 'वैश्वानरं केतुमह्नामकृण्वन्' इति । तदप्यव्यभिचारप्रदर्शनायाह ।

716. अथ पुनर्यदङ्गीकृत्य सूर्यादिसम्बन्धि विशेषलिङ्गं हविष्पान्तीयस्य सौर्यवैश्वानरत्वमुक्तं ...'वैश्वानरं केतुमह्नामकृण्वन्' इति नान्यः सूर्यादह्नां कर्ता तस्मात्सूर्योऽत्र वैश्वानर इति । अत्र ब्रूमः ।

III.106. पार्थिवमग्निं एताभ्यां वक्ष्यमाणाभ्यामृग्भ्याम् । सर्वाणि पृथिव्यादीनि स्थानानि । अभ्यापादं·········सर्वस्थानाभ्यापादनविशिष्टं स्तवनमित्यर्थः ।

एताभ्यां ये एते वक्ष्यमाणे । सर्वाणि स्थानानि पृथिव्यन्तरिक्षद्युलक्षणानि अभ्यापाद्य अभ्यापादं स्तौति मन्त्रदृक् ।

III.107. अपो यत् अप इति कर्मनाम । यदिति यस्मादर्थे । यस्मादसौ अस्मिन् काले इदं कर्तव्यमस्मिन्निदमिति कर्म, आत्मीयं । लोकस्य वा प्राजानन्निति व्यवहितेन सम्बन्धः । तूर्णिः क्षिप्रनामैतत् । क्षिप्रं चरति पृथिवीतो दिवं दिवश्च पृथिवीम् । अन्यानि च सर्वाणि स्थानानि मूर्धायं मस्तकवचनः ।

717. अपो यत्कर्म स्वाधिकारप्रयुक्तमादित्यात्मनाग्न्यात्मना च कर्तव्यं प्रजानन् प्रकर्षेण जानन सर्वाणि स्थानान्यनुसञ्चरते तूर्णिः त्वरमाणः । कर्मकालमपरिहापयन्नित्यभिप्रायः ।

भूयस्त्वं स्थानत्रयसम्बन्धात् ।

अथ पुनरुत्तरया स्थानत्रयमभिसंपन्नः स्फुटतरं स्तूयत इत्येतद् भूयस्त्वम् ।

III.108. शाकपूणिग्रहणमस्यैव पक्षस्य दृढीकरणम् । अस्मिन्नर्थे ब्राह्मणमपि दर्शयति ।

718. प्रकृतस्यैव शाकपूणेः पुनर्ग्रहणं स्वपक्षानुस्मृतये ।

यदस्याग्नेः पार्थिवस्य दिवि तृतीयं कृतवन्तः । तदसौ तदेवासावादित्यः । न ततो व्यतिरिक्तः एवं ब्राह्मणमाह ।

719. ब्राह्मणमपि चैतमेवार्थं ब्रवीत्ययमेवाग्निरादित्यो भवतीति । 'यदस्य दिवि तृतीयं तदसावादित्य इति ब्राह्मणम्' ।

अग्निरूपतामापाद्य स्तौति । अयमेव 'तमू अकृण्वन्' इति मन्त्रो मन्त्रदृग्वा ।

अस्मिन् सूक्ते सर्वास्वृक्षु 'हविष्पान्तम्' इत्येवमाद्यास्वग्नीकृत्य मन्त्रदृक् स्तौति ।

अथैनमग्निमेतया वक्ष्यमाणया ऋचा आदित्यीकृत्य स्तौति ।

III.109. एतौ द्वावपि मिथुनौ समाश्रयन्तौ स्त्रीपुंसौ चरिष्णू चरणशीलौ । अभूतां प्रादुर्भूतौ । नभसा गन्तुं प्रवृत्तावित्यर्थः । आदित्यवधौ ततः प्रभृति तत्कृतेन प्रकाशेन प्रापश्यन् प्रपश्यन्ति भुवनानि भूतानि विश्वा सर्वाणि । 'डुमिञ् प्रक्षेपणे' इत्येतस्मात् श्रयत्यर्थात् थु इति प्रत्ययः ।

III.110. अर्थमाह समाश्रितौ संसेवमानावन्योऽन्यं नयतः कालम् । वनुतो वा सम्भजतः प्राचीम् । तथा च 'पूर्वे अर्धेरजसः' इति मन्त्रवर्णात् ।··· यत्र वदेते । आत्मनेपददर्शनाद् विप्रलापो गम्यते । विवदेते । अवरोऽयं पार्थिवोऽग्निः, परश्च ( मध्यमः )। एतौ द्वौ दैव्यौ होतारौ (यज्ञस्य नेतारौ यज्ञन्यौ) तयोर्यज्ञन्योः, यज्ञस्य नेत्रोः ।

III.111. अस्यामृचि मध्यमसाधारण्येन स्तुतिः । उत्तरस्यां केवलस्यैवेति भूयस्त्वम् ।

III.112. तावत्परिमाणं हेतुज्ञानमत्यन्ताल्पमित्यर्थः । तस्मिन् प्रयोगो लोकेऽस्ति उपमानस्येवादेः 'इहेव निधेहि' इति ।

हविष्पान्तीयस्याग्निवैश्वानरीयत्वमुपपाद्य अग्नेर्वैश्वानरत्वमुपदर्शयितुं मन्त्रान्तरमुपन्यस्यति । होतृजप इत्यादि ।

सह पित्रेतिभेदोपदेशाद् मध्यमं वा वैश्वानरं पितरमाह मन्त्रः ।

शाकपूणिमतेन प्रतिसमाधत्ते ।

अथैनमेतया पुनः आदित्यीकृत्य स्तौति ।

719,720. यदा चैतौ चारिष्णू सर्वदा सहचरणशीलौ मिथुनौ प्रादुरभूताम् उषाश्चादित्यश्च आत् अथ तदा प्रापश्यन् प्रकर्षेणापश्यन् भुवनानि भूतानि विश्वा सर्वाणि ।

मिनोतिः तावदत्र 'श्रयतिकर्मा' मिथुनशब्दे पूर्वपदं 'मि' इति । 'थु' इति नामकरणः प्रत्ययः ।

समाश्रितौ अन्योन्यं प्रति आत्मानं 'नयतः' कालं वा । समाश्रितौ भवतः परस्परं संभक्तौ ।

721.'यत्रा वदेते' इति यत्र यस्मिन् कर्मणि विवदेते । वेरुपसर्गस्यापकृष्य यत्र क्रियापदेन सामर्थ्यं तत्रानयनम् । कौ पुनस्तौ विवदेते । अवरः परश्च दैव्यौ होतारौ । अयं चाग्निः पार्थिवः असौ च मध्यमो वायुः । कथं विवदेते । यज्ञन्योः यज्ञनेत्रोः ।

अस्यां हि विभज्य वायोः केवलोऽग्निरेव स्तूयते । पूर्वस्यामुभावपि भूयोविदावित्युक्तम् ।

722. अत्र नकारः संप्रत्यर्थे एवोपमानासंभवात् । लोकेऽपि च 'अस्त्युपमानस्य संप्रत्यर्थे प्रयोगः इहेव निधेहीति यथा' । इह संप्रति निधेहीत्यर्थः ।

723. तदेतदेवं कृत्वा सूक्तमग्निप्रधानकर्मत्वाद्वैश्वानरीयम् । येऽत्र वैश्वानरशब्दास्तेऽग्निं भजन्ति विशेषणत्वेन । 'होतृजपस्त्वनग्निवैश्वानरीयो भवति' ।

एवं द्वौ पितापुत्राविति व्यपदेशात्पार्थिवादन्यो वैश्वानरः । स च पुनर्मध्यमो वोत्तमो वेत्येवमेवमयमनग्निवैश्वानरो होतृजपः ।

एवं परपक्षोक्तसमीकरणात् स्वपक्षोक्ताभि-रुपपत्तिभिरयमेवाग्निर्वैश्वानर उच्यत इति सिद्धम् ।

सर्वत्राध्यायान्ते द्विरुक्तिः पदस्य वाक्यस्य वा॥

III.113. प्रविभज्य निर्ब्रूयादित्याह ।

तस्य धनस्य बलस्य वा दाता ।

तस्य प्राधान्यस्तुत्यर्थैषा ।

अत्र यथाश्रुतसम्बन्धानुपपत्तेरेकवाक्यतायै यच्छब्दाध्याहारः प्रदर्शितो भाष्यकारेण ।···

अथवा सकारान्त एव धनवचनः । ततश्च द्रविणस इति पञ्चमी । तच्छ्रुतेश्च पिबत्विति शेषः ।

III.114. क इति प्रश्ने । द्रविणोदश्शब्दस्याभिधेयं विचार्यते । किं प्रकृतोऽग्निरेव अहोस्विद्देवतान्तरमिति ।

स बलस्य धनस्य चातिशयेन दाता ।

इन्द्रविषयत्वेनैव द्रविणोदःशब्दस्योक्तनिर्वचन-सामञ्जस्यादिन्द्रो द्रविणोदा इत्युक्तफलसम्बन्धेनापि दर्शयति । 'ओजसो जातम्' इति चेन्द्रमाह मन्त्रः ।

तदिन्द्र एवात्मजन्मनस्तत्वं वेद नान्यो वेदितुमर्हति ।

अथापि चायमपरो हेतुरिन्द्रस्य द्रविणोदस्त्वे ।···

उदाहरणं मृग्यम् । अथवा 'द्रविणोदाः पिबतु द्राविणोदसः' इत्येतदुदाहरणमुक्तं कल्प्यम् ।

III.115. यस्यापत्यं द्राविणोदसोऽग्निः स द्रविणोदा इत्यर्थः । एतस्य चायमपत्यम् । यत आह एष पुनरग्निरेतस्मादिन्द्राज्जायते । कुत एतदितिचेत् ? 'यो अश्मनोरन्तः' इति मन्त्रवर्णनात् ।

शाकपूणिपक्षेणाव्यभिचारिणा समीभवति ।

724. तस्माद्विशेषहेतुबाहुल्यादयमेव पार्थिवः सूक्तभाग्घविर्भाक् च ।

द्विरभ्यासोऽध्यायपरिसमाप्त्यर्थः ।

725. तत्र पूर्वपदमेव तावत्प्रथमं विगृह्य निराह ।···

तस्य धनस्य बलस्य वा दाता यो भवति स द्रविणोदाः ।

तस्य प्राधान्यस्तुतियुक्ता एषा ऋक् भवति ।

726. 'द्रविणोदाः' इत्यस्य···यद्वृत्तमध्याहृत्य··· एकवाक्यतायां···कर्मत्वेन नमयांचकार ।

727. द्रविणस इत्यस्य पञ्चम्येकवचनत्वेन सोमाभिधानत्वे सामर्थ्यमुन्नीय पिबत्वित्याख्यातमध्याहृत्यात्रैव समापयांचकार भाष्यकार एवमप्यस्ति सामर्थ्यमित्युपप्रदर्शनार्थम् ।

'तत्को द्रविणोदाः' इत्येवमादिविचारः ।

'स बलधनयोः' अतिशयेन दाति ।

अधिपतित्वकृत एवास्य बलेनाभिसंबन्धः ।

तस्माद्युक्तं यत्तस्य दाता स्यात् । कथमिति । यतो मन्त्र एव निर्वर्ण्यते-····'ओजसो जातम्'।

728. यतः अयम् इन्द्रः प्रजज्ञे इन्द्र एव अस्य स्वजन्मनस्तत्त्वं वेद । न कोऽप्यन्यो ज्ञास्यतीत्यभिप्रायः।

'अथापि' अयमपरो हेतुरिन्द्रस्य द्रविणोदस्त्वे ।···

स मन्त्रो मृग्यः । केचित्तु 'द्रविणोदाः पिबतु द्राविणोदसः' इत्येतमेव मन्यन्ते ।

यस्यापत्यं द्रविणोदसोऽग्निः स द्रविणोदा इति ।

कस्य च पुनरयमपत्यमिति । अत आह 'एष पुनः' अग्निः 'एतस्माज्जायते' इन्द्रात् । कुत एतत् । ऐन्द्रे हि निगमे श्रूयते 'यो अश्मनोरन्तरग्निं जजान' इति ।

गृत्समद आह ऐन्द्रं रूपमास्थितः । इन्द्रोऽयमिति मन्यमानैरसुरैर्हन्यमानस्तानाह स्मेत्याख्यानम् ।

III.116. ऋतुयाजेषु द्रविणोदःशब्दसम्बन्धो द्राविणोदसः पात्र्या देवतायाः प्रवादाः सन्ति ।······
'ऋतुभिः प्रेष्य' इति अध्वर्युणा प्रेषितो मैत्रावरुण अच्छवाकं प्रति प्रैषमाह :
त्वमपि हे अच्छावाक यज मा विलम्बिष्ठाः ।

III.117. अपि चायमन्यो हेतुः ।
सोमपानं चेन्द्रस्योचितम् । सोमाप्यायनमन्त्रेषु 'अंशुरंशुस्ते' इत्यादिषु इन्द्रार्थतयैव सोमस्य प्रतीतौ सामान्येन चेन्द्रः सोमो मीयते गृह्यते चेति सोमसम्बन्धश्रवणात् ।

III.118. अयमेव पार्थिवोऽग्निः ।
आग्नेयेष्वैवैन्द्रा द्राविणोदसाः प्रवादाः सन्ति ।

III.119. एवं स्वपक्षहेतुमभिधायाधुना परपक्षोक्तहेतुसमीकरणायाह ।

दातृतम इत्यनेकान्तम् । यतः सर्वा ईश्वरा दातारश्च देवताः ।

III.120. ऋत्विजोऽत्राधिकारके लोके समन्त्रदशो वा हविर्लक्षणस्य धनस्य दातृत्वादुच्यन्ते ।
ते चैनं विधिसामर्थ्याज्जनयन्ति यथा तथैष निगमः ।

III.121. भक्तिमात्रं तत् गुणवादन्यायेन समाख्यामात्रम् । दुर्बला च समाख्या ।

गृत्समदो ब्रवीति ऐन्द्रं रूपमस्थितोऽसुरैर्हन्यमानः ।

729. ऋतवो यैर्मन्त्रैरिज्यन्ते ते भवन्त्यृतुयाजाः ।

तेषु ऋतुयाजेषु द्राविणोदसा द्रविणोदःशब्दयुक्ताः प्रवादा भवन्ति ।
मैत्रावरुणो ब्रवीति अध्वर्युणा 'ऋतुभिः प्रेष्य' इति प्रेषितः ।

730. हे अच्छावाक त्वमप्येतदेवं ज्ञात्वा यज ।•••
अथापि अयमपरो हेतुरिन्द्रस्य द्रविणोदस्त्वे।•••
न ह्यन्य इन्द्रात्सोमपानेन स्तूयते तदर्थत्वात्सोमसंस्कारस्य । भवति हि सोमाप्यायने तत्संस्कारप्रधानो मन्त्रः । तद्यथा । 'अंशुरंशुष्टे देव' ।

731. अयमेव यस्य पृथिवीस्थाने समाम्नानम् ।
यस्मादाग्नेयेष्वेव सूक्तेषु द्राविणोदसाः प्रवादा विशेषणत्वेनाग्नेरेव भवन्ति ।

732. अयमेवाग्निर्द्राविणोदा इति स्थितः पक्षः ।
स पुनरयं परपक्षहेतुष्वनिराकृतेषु अनवस्थित एव । यतस्तन्निराकराय 'यथो एतत्' इत्येवमाद्युच्यते ।
ता ऐश्वर्यात् सर्वा एव बलधनयोर्दात्र्यो भवन्ति तस्मादवैशेषिकमेतदिन्द्रस्य कारणां द्रविणोदस्त्वे ।

734. 'ऋत्विजो एतस्मिन् द्राविणोदसत्वेऽग्नेः 'उच्यन्ते' ।
निगमोऽपि हि भवति ऋत्विजामयमग्निः पुत्र इति ।

735. 'भक्तिमात्रं भवति तत्' । गुणतः संवादः ।
दुर्बला हि समाख्या ।

यतः कुतश्चिद् गुणात् प्रवर्तते । यथा वायव्यानीति 'वायव्यान्युपतिष्ठते' इति सर्वसोमपात्राणां समाख्या भवत्या ।

III.122. ततश्चास्यैवाग्नेर्द्रविणोदस्त्वे लिङ्गं तद् भवति। न च तदेव केवलम् । किन्तर्हि ? वनस्पतेरग्निस्त्वादिदं च ।

धृष्णो हे धर्षितः । तमसामभिगूर्या अभ्युद्यम्य च त्वं नेष्ट्रात् नेष्टृस्वभूतात् पात्रात् सोमं हे द्रविणोदः धनस्य बलस्य वा दातः पिब ऋतुभिः सह ।

III.123. स धिषणशब्द 'धिषेः' इत्यस्य दधात्यर्थे वर्तमानस्य । सा ह्यर्थान् धारयति । सम्बन्धस्य नित्यत्वात् ।

यद्वा धीरिति प्रज्ञा कर्म वा तया संभजति ।

वनस्पत इत्येनमाहुः प्रकृतं द्राविणोदस्याः । तस्मादग्निरित्यभिप्रायः ।

अतः सूक्तहविर्भाक्त्वेनाग्निर्द्रविणोदाः । निपातभाक्त्वेन क्वचिन्मध्यम (इति) सिद्धम् ।

तदेतदृचां देवतानां च साधारणं गुणाभिधानमिति । अत एतेनाध्वादिदेवता निर्विवक्षयोपक्रमत इति ।

III.124. अतः शब्द आनन्तर्ये । आप्रियोऽधीता अनन्तरं वक्ष्यन्त इति शेषः ।

प्रथमं श्रुतिपथमागच्छत्येवंशीलः ।

III.125. योऽयमधीयते प्रतिप्रवणमिध्मो यज्ञे स एवायमिति ।

समिच्छब्दस्य समिद्भिः प्रेष्यसमित्वसमित्सुमना इत्यादिष्विध्मपर्यायत्वात् ।

यतः असामर्थ्यात्कुतश्चित् गुणानुवादः 'यथा वायव्यानीति सर्वेषां सोमपात्राणां' नानादेवतानामपि सताम् ।

अस्य एव अग्नेस्तद्भवति अग्नेरपि सोमभागित्वादृतुयाजेषु । भवति हि तेषु–'वनस्पते··· द्रविणोदः पिब ऋतुभिः' इति ।

737. हे धृष्णो शत्रूणां धर्षयितः अभिगूर्य अभ्युद्यम्य ततो नेष्ट्रीयाद् धिष्ण्याद् सोमं नेष्ट्रा वषट्कृतं पिब ऋतुभिः कालैः सहेत्येतद्ब्रूमहे ।

738. धिषणा कस्मात् । 'धिषेः' धातोर्दधात्यर्थे वर्तमानस्य । सा हि वागर्थं धारयति शब्दार्थयोः सम्बन्धनित्यत्वात् ।

धीः प्रज्ञा कर्म वा । सा एतस्यां सीदति सनोति वा । संभजते इयं वा ।

'वनस्पत इत्येनमाह' द्रविणोदसम् । तस्मादग्निरित्यभिप्रायः ।

एवमयमग्निर्द्रविणोदाः सूक्तभाग्घविर्भाक्च । निपातमेवैतन्मध्यमं ज्योतिरेतेन नामधेयेन भजेतेति ।

एष देवतापदविचारन्यायः सर्वत्र देवतापदविचारार्थे यथासंभवमुपादेयः प्रज्ञावृद्धये शिष्यस्येति ।

740. 'अतः' इत्यानन्तर्ये । आप्रियो वक्ष्यन्त इति वाक्यशेषः ।

प्रथममागन्तुमस्याप्रीदेवतापदसमाम्नाये शीलमिति प्रथमागामी ।

742. योऽयमिध्म आधीयते प्रतिप्रणवमिध्मो यज्ञे स एवायमिति ।

प्रैषे तु 'समिद्भ्यः प्रेष्या' इति श्रूयते । युक्तं च यदर्थमेव प्रेष्यते स एवेज्यते ।

III.126. यदा तावदाज्यं तनूनपात् तदैवं व्याख्येयम् । हे तनूनपात् !

यदा त्वग्निस्तनूनपात् तदैवं योजना । हे तनूनपादग्ने ।

745. हे तनूनपात् आज्य त्वमुच्यसे ।

746. 'अग्निरिति शाकपूणिः' । हे भगवन्नग्ने तनूनपात् ।

III.127. नरो होतृप्रभृतयोऽस्मिन् प्रकृते आसीनाः शंसन्तीति यज्ञोऽन्यपदार्थः ।

अग्निर्वा ऋत्विग्यजमानैर्नरैः प्रशस्यत्वान्नाराशंसानि ।

नराः मनुष्याः अस्मिन्नासीना उपविष्टाः शंसन्ति इति नराशंसः ।

'अग्निरिति शाकपूणिः' । स कस्मात् ? 'नरैः प्रशस्यः' स्तुत्यो 'भवति'। तस्य नराशंसस्य ।

ईळ ईट्टेः स्तुत्यर्थस्य । इन्धतेर्वा दीपनार्थस्य । इळोऽग्निः ।

748. 'ईळः अग्निः' । स पुनरयम् 'ईट्टेः स्तुतिःकर्मणः' । स्तूयते ह्यसौ । 'इन्धतेर्वा' दीपनार्थस्य । तत्क्रियायुक्तो ह्यसौ ।

III.128. बर्हिः परिबर्हणात् । उद्यच्छमाना ।

749. 'बर्हिः' इति वक्तव्यम् । तत्पुनरेतत्प्रसिद्धमेव कुशमयं यज्ञाङ्गम् । तत्कस्माद्बर्हिरित्युच्यते । 'परिबर्हणात्' परिच्छेदनात् । लूनं हि तद् भवति परिवृद्धं वा ।

प्राचीनं प्रागञ्चितं प्राङ्मुखमित्यर्थः ।

प्राच्यां दिशि यदञ्चितं गतं जातं प्रागग्रं वा यत्स्तीर्यते तद् भवति प्राचीनम् ।

स्वस्यार्थस्य प्रदेशकत्वात् प्रदिशति वाक्यम्—'प्रागुदग्वा बर्हिरास्तीर्यते' इत्यादि । मन्त्रो वा 'ऊर्णम्रदा वि' इत्यादिः ।

750. स्तरणपक्षेऽपि 'प्राचीनं बर्हिः स्तृणाति' इति विधिवाक्यम् । 'ऊर्णम्रदा वि प्रथस्व' इति मन्त्रः ।

III.129. स्योनं स्यतेः । अवस्यन्ति अन्तादनुभवन्तः ।

आग्नेयस्तुतिपक्षे (अग्निपक्षे) बर्हिरग्निः परिवृद्धत्वात् प्राच्यां दिशि प्रणयनात् प्राञ्चिः प्रणयनार्थः ।

751. स्योनमिति सुखनाम । स्यतेः धातोरवपूर्वात् । तदेव हि अवस्यन्ति निवसन्ति प्राणिनः ।

750. अपरे पुनरग्नित्वदपि योजयन्ति मन्त्रार्थदृशः । तत्पक्षे बर्हिरित्यग्न्यभिधानम् । प्रागञ्च्यते प्रणीयते इति प्राचीनम् । बर्हिः प्रवृद्धमाहवनीयाख्य ज्योतिः प्रवृज्यते प्रणीयते ।

वारयतेर्वा दकार उपजनः । अनभिमतो हि तास्वेव निवार्यते ।

751. 'वारयतेर्वा' । वारणीया हि द्वारादेव निवार्यन्ते ।

III.130. उर्विया उरुशब्दोऽत्रान्तर्णीतप्रकर्षार्थः । …विस्तीर्णतरम् । भाष्य उरुत्वेनेत्यर्थः । विवरणं, उरुत्वेन युक्ता विवृततरमित्यर्थः ।

उर्विया उरुत्वेन महत्त्वेन विश्रयन्तां विप्रियन्ताम् ।

अग्निपक्षे ज्वाला द्वारो हविषां सुप्रायणा इति ।

752. 'अग्निरिति शाकपूणिः' तत्पक्षे योजना । अग्न्यर्चिषो द्वारो जवनाद् द्रवणाद्वा । हविर्वा । ताभिर्जवति द्रवति वारयन्ति वा रक्षःप्रभृतीनीति द्वारः ।

उषासानक्ता देवता द्वयमिति दर्शयति । उषाश्च नक्ता चेति ।

उषासानक्ता इत्येतत्पदम् । अस्य विग्रहः 'उषाश्च नक्ता च' ।

III.131. अग्निपक्षे दीप्तिरुषास्तमसो विवासनात् । आहुतिर्नक्ता अनक्त्यग्निमिति स्मयतेः ।

754. अपरे पुनर्वर्णयन्ति । उषा अग्नेर्दीप्तिः नक्ता आहुतिः । दीप्तिर्विवासयति तमः । आहुतिर्नक्ताज्येन ।

दैव्या होतारा आकारो द्विवचनस्य स्थाने । पार्थिवमध्यमावभिधेयौ ।

'दैव्यौ होतारौ' इति शब्दसमाधिः । 'अयं चाग्निरसौ च मध्यमः' इत्यभिधेयवचनम् ।

तिस्रो देवीः प्रथमार्थे द्वितीयेति दर्शयति तिस्रो देव्यः ।

755. 'तिस्रो देवीः' इति पदम् । ताः पुनरेताः तिस्र एव देव्यः' । प्रथमया ता निराह । तिस्र इति देवीशब्दस्य विशेषणम् ।

III.132. त्वष्टा मध्यमस्थान आप्रीत्वादिह समाम्नातः। तूर्णशब्दादश्नोतेश्च त्विषेर्वा स्याद्दीप्त्यर्थस्य ।

757. त्वष्टा इति वक्तव्यम् । अत्र तूर्णशब्दात्क्षिप्रवाचिनः पूर्ववदमश्नोतेरुत्तरपदम् । क्षिप्रं व्याप्नोति यदनेन व्याप्तव्यं भवति । त्विषेर्वा धातोर्वृद्ध्यर्थस्य ।

देवताद्वन्द्वे दिवो द्यावादेशो द्विवचनस्य पूर्वसवर्णादेशो द्यावापृथिव्यौ । जनित्री जनयित्र्यौ सर्वस्य (कस्य) रूपैर्नानाप्रकारैर्युक्तः । अपिंशत् पिंशतिरत्र करोत्यर्थे अकरोत् करोति वृष्टिप्रदानेन भुवनानि भूतजातानि च विश्वा सर्वाणि ।

यः त्वष्टा इमे द्यावापृथिव्यौ सर्वेषां भूतानां जनयित्र्यौ रूपैः नानाविधैः अकरोत् भूतानि च सर्वाणि ।

III.133. माध्यमकस्त्वष्टेत्याहुर्नैरुक्ताः ।

758. तत्र तावत् 'माध्यमिकस्त्वष्टेत्याहुः' आचार्याः। केचिन्नैरुक्ता एवं मन्यन्ते ।

तथा मन्त्रे वाक्यार्थोपपत्तेः । मध्यमस्थाने चाम्नानात् ।

'मध्यमे च स्थाने समाम्नातः' इति । किञ्च एतस्मिन्नेव मन्त्रे व्यपदेशात् ।

पार्थिवोऽग्निरिति शाकपूणिः ।

अयमेव 'अग्निरिति शाकपूणिः' ।

तस्याग्नेः पार्थिवस्य त्वष्टृशब्द-(त्व)-प्रदर्शनार्थैषापरा ।

759. यथा चाग्निरेव नान्यस्तथा विशिष्टतरलिङ्गा 'अपरा' ऋग् भवति ।

उभे द्यावापृथिव्यौ वाहोरात्रे वारणी वा ।

III.134. वनस्पतिरवसरप्राप्तः । स पुनरयमभिधेयतोऽभिधानतश्च व्याख्यातः 'एष हि वनानाम्' इति ।

III.135. वनस्पतिः शमिता–शमिता च शामित्रोऽग्निः । देवोदेवश्चाग्निराहवनीयाख्यः । त्रयोऽप्येते स्वेन स्वेनानुग्राहकेण स्वदन्तु स्वादुकुर्वन्तु । हव्यं हविर्मधुनोदकेन च प्रोक्षणादिगतेन घृतेन चोपस्तरणादिगतेन ।

III.136. एवमयं यूपः स्तुतः । ।
अग्निरिति शाकपूणिः ।

III.137. यज्ञाङ्गभावोपगमनेन यूपस्य हविर्वहनप्रयोजनम् ।
मन्त्रवाक्यसङ्गतिर्न तथा यूपे यथाग्नाविति शाकपूणिः ।

III.138. स्वाहाकारस्य सम्प्रदानत्वेन मन्त्रान्तेऽवश्यंभावित्वादयमर्थो यस्यान्ते श्रूयते स होममन्त्रः शोभनमर्थमाह ।
स्वाहुतमित्यादि । अथवा यदनेन स्वाहाकारेण जुह्वोति तदेव सुष्ठु मर्यादया जुह्वोतीति ।

III.139. एवमिमा आप्रीणामृचां देवतानिर्वचनोदाहरणविचारयुक्तमानुपूर्व्येण यथासमाम्नायं व्याख्याता इत्युक्तोपसंहारवचनम् ।
इह (हि) क्वचित् समुदायावयवविसम्बन्धित्वेनाश्रयता द्रष्टव्या ।

760. 'द्यावापृथिव्याविति' । यथायमतिमहान्वर्धते अवश्यमयमावां धक्ष्यतीति । 'अहोरात्रे इति वा' ।···'अरणी इति वा' ।
'वनस्पतिः' अवसरप्राप्तः । स पुनरयमभिधेयतोऽभिधानतश्च 'व्याख्यातः' । 'एष हि वनानां पाता वा पालयिता वा' इति ।

761. वनस्पतिः शमिता देवो अग्निरित्येते त्रयः । त्रिग्रहणाद्देवशब्दोऽग्निविशेषणमिति दर्शयति । वनस्पतिश्च शमिता चाप्रत्यक्षदेवते असंदिग्धश्च देवोऽग्निरित्येते त्रयः स्वदयन्तु स्वादुतामापादयन्तु । मधुना च उदकेन । प्रोक्षणाद्यभिप्रायम् । घृतेन च एतदस्माभिः संस्कृतं पाथ इत्येतदाशास्महे ।

763. एवमस्मिन् समञ्जने यूपे वनस्पतिशब्दः प्रयुक्तः । तस्माद्यूपो वनस्पतिरिति ।
'अग्निरिति शाकपूणिः' ।

764. एवमेतस्मिन्मन्त्रे हविर्वहनयोगाद्वनस्पतिशब्दस्याग्निरभिधेयः ।

765. अग्निरेवासौ यूपान्तर्गतो यूपात्मना वर्तमानो यूपाञ्जनीयायां वनस्पतिशब्देनोच्यते ।···अपरे पुनः···शाकपूणिमतेनाग्निपरत्वमेव वर्णयन्ति

767. स्तुतिमन्ते 'स्वाहाकृतं हविरदन्तु देवाः' इति सम्प्रदानम् । तत्र देवताः सम्प्रदानमिति स्वाहाकृतयः समाम्नाता नाग्निरिति ।
'स्वाहुतं हविर्जुहोतीति' । यदनेनैव हविर्जुहोतीति तदेव सुष्ठ्वापाद्य यथाभिधानमग्नौ जुहोति ।

768. इतिकरणोऽधिकारसमाप्त्यर्थः प्रदर्शनार्थो वा। एता एवैकादश आप्रीदेवता अनुक्रान्ता इध्माद्याः ।
अयं तु सामान्यप्रकरणगत आसामेव विचारोऽनिश्चितानां निश्चयावधारणार्थः ।

एवं तर्हि यज्ञ इति कात्थक्य इत्यादिप्रदर्शिताचार्यविप्रतिपत्तेः । 'छन्दोदेवता इत्यपरम् ।'

III.140. संवादसूक्तमेतत् । सौचकमग्निं देवा ऊचुः । हव्यं नो वहेति । स ताननयर्चा भागं ययाचे ।

एवं याचिते भागे तं देवाः परयर्चा प्रत्यूचुः ।

III.141. आग्नेया इत्येषा स्थितिः पक्ष इत्यर्थः ।

भक्तिमात्रमितरत् छन्दांसि वा इत्येवमादिब्राह्मणम् ।

यानि वेदे पठ्यन्ते तान्येतान्येकादश । संख्यावधारणमृग्वेदाभिप्रायम् ।

III.142. एतानि चत्वारि नाराशंसवन्ति ।

एतानि त्रीणि तनूनपाता नाराशंसेन चोभयवन्ति ।

अतोऽन्यानि चत्वारि ।

वसिष्ठादिव्यतिरिक्तानां तनूनपाद्याजिनाम् ।

III.143. आप्रीदेवतापदं समाम्नायानन्तरं यानि तानि ।

तेषां चैतन्यान्मनुष्येभ्यश्चानन्तरमश्वानामुत्पत्तिः श्रूयते ।

'प्रजापतिः प्रथमामाहुतिमजुहोत् । तत एतस्या आहुतेः पुरुषोऽजायत । स द्वितीयामजुहोत् ततोऽश्वा अजायन्त' इत्येवमश्वस्येतरेभ्यः प्राधान्यात् प्रथमगामित्वम् ।

III.144. न स्वत्राश्वशब्दोऽस्ति । मा भूत् । तस्य पर्यायो वाजिन्शब्दोऽस्ति । परासु च बहुशोऽश्वशब्दोऽपि ।

यद्वयं वाजिनोऽश्वस्य देवजातस्य '(स)प्रथमामाहुतिमजुहोत् ततो मनुष्या अजायन्त । स

769. एव सति विप्रतिपत्तिराचार्ययोः कात्थक्यशाकपूण्योः ।

770. एवमुक्तास्तेऽनयोत्तरयर्चानुजज्ञिरे तस्य तं भागम् ।

771. तत्कोऽत्र निश्चयः । 'आग्नेया इति तु स्थितिः' तुशब्दोऽन्यप्रवादनिवृत्त्यर्थः ।

अथ किमन्यदनृतमेवेति । भक्तिमात्रमितरत्' छन्दोदेवता इत्येवमादि ।

772. 'इतीमान्येकादशाप्रीसूक्तानि' अनुक्रान्तानि । दशधा दशतयीषु । तेषामेकादशं प्रैषिकमिति । 'इति' एतानि 'नाराशंसवन्ति' ।

एतानि उभयवन्ति ।

अतोऽन्यानि यानि चत्वारि अवशिष्यन्ते तानि 'तनूनपात्वन्ति' ।

अत्र नाराशंसयाजिनो वसिष्ठादयः । तेभ्योऽन्ये

773. तनूनपाद्याजिनः ।

776. पूर्वस्मादाप्रीगणाद्विलक्षणोऽयमश्वादिगण इति पृथगधिकारवचनम् ।

तेषामश्वः प्रथमागामी भवतीति । स पुनः किमर्थः प्रथमागामी । पुरुषानन्तरजन्मेति हि विज्ञायते ।

'तस्या आहुत्याः पुरुषोऽजायत द्वितीयामजुहोत्ततोऽश्वोऽजायत' । विशिष्टे चाश्वमेधलक्षणे कर्मणि विशिष्टोऽस्याङ्गभाव इति ।

777. अश्व एवाहूयतेऽनेन सूक्तेन यद्वाजिन इति ।

यत् यानि वाजिनः अस्याश्वस्य देवजातस्य देवैर्जनितस्य वसुभिरादित्यात् । 'सूरादश्व

द्वितीयामजुहोत् ततोऽश्वः' इति श्रुतेर्देवादग्नेराहुत्या जातस्य । अथवा 'सूरादश्वं वसवो निरतष्ट' इति दर्शनात् ।

वसवो निरतष्ट' इति । अग्नेर्वा प्रजापतिना । 'द्वितीयामजुहोत्ततोऽश्वोऽजायत' इति ।

III.145. प्रायेण शकुनिनाम्नां शब्दानुकृतिनिमित्तत्वात् तस्य शब्दस्य तन्नाम्नश्च सादृश्यात् ते जातिमात्मीयां प्रब्रुवाणा इव ।

779. 'यथास्य शब्दस्तथा नाम' इति । तदिदं शकुनिषु बहुलमित्यत्रोक्तम् ।

मङ्गलं निराह । गिरतेः गृणातिः स्तुतिकर्मा तदर्थे वर्तमानस्य । भाविनो हि कल्याणस्य प्रसूचकं निमित्तं मङ्गलमुच्यते । अतः स्तुत्यं तद् भवति ।

'मङ्गलं' कस्मात् ? 'गिरतेः' धातोः 'गृणात्यर्थे' वर्तमानस्य । स्तुत्यं हि तद्भवति ।

III.146. अथवा स्तुतस्य वा भक्षयति नाशयति गोरोचनादधिमध्वक्षतादिभिर्वावयवैस्तद्वदङ्गं रेफस्य च लत्वेनाङ्गलं सन् मकारोपजनेन मङ्गलम् ।

वा 'अङ्गलम्' एतन्मकारोपजनेन मङ्गलम् । कोऽर्थः । मङ्गवत् । अङ्गैरवयवैर्दधिमध्वक्षतादिभिस्तद्वत् । रो मत्वर्थे । व्यत्ययश्च रलोः ।

गृत्समदमृषिमर्थं प्राप्तुमभ्युत्थितमभिप्रस्थितं कपिञ्जलः शकुनिविशेषोऽभिशब्दितवान् । शब्देनोत्साहितवानित्यर्थः । तस्यार्थस्याभिवादिनी ।

गृत्समदमर्थमभ्युत्थितम्'''स किल कंचिदर्थं सिसाधयिषुरभ्युत्तस्थौ । तमभ्युत्थितं कपिञ्जलः शकुनिरभिववाशे तत्सिद्धिमावेदयत् ।

III.147. नित्यमदत्वान्नित्यतृप्तत्वान्नित्यहृष्टत्वाद्वा मण्डूकाः ।

780. नित्यप्रमुदिता हि ते ।'''नित्यतृप्ता हि ते प्रचुरोदकत्वात् ।

रेखाभक्तिविचित्रकत्वान्मण्डिता इव ।

ते हि भक्तिभिर्नानाचित्राभिर्विधात्रा मण्डिता भवन्ति ।

मण्ड उदकम् । तस्मिन्नोको निवास एषामिति वा ।

मंण्डे उदके एषामोको निवास इति वा मण्डूकाः ।

ये संवत्सरं शयितवन्तस्ते यथा ब्राह्मणाः कृतस्वाध्यायोपकरणा व्रतचारिणः स्वाध्यायमेवं वाचं पर्जन्येन प्रीतां मण्डूकाः प्रवदन्तीति ।

781. यथा ब्राह्मणा उपाकृत्य प्रावृषि पवित्रपाणयो मेखलिनो नियतकालास्तां वैदिकीं वाचं वदन्त्येवं प्रावादिषुरिति ।

अनावृष्ट्युपहते किल जीवलोके वसिष्ठो वर्षार्थी पर्जन्यमस्तौषीत् ।

स किल वर्षन्तं पर्जन्यं तुष्टाव ।

तत्प्रमोदश्च भाविनो वर्षस्य सूचक इति कृत्वा ।

'स' तान् अनुमोदमानान् वाश्यमानान् दृष्ट्वा लब्धं वर्षनिमित्तमिति'''तानेव तुष्टाव ।

III.148. अक्षाः । अश्नोतेः कर्मभूता व्याप्नुवन्ति गृह्णन्त्येनां देवितारः ।

III.149. इषीकया कथम् ? ईषतेर्गतिकर्मणः । सा हि निर्गता भवति मुञ्जात् । इयमपीषीका अपरेषीका तस्मादेव ।

ग्रावाणोऽभिषवपाषाणाः । हन्तेर्वर्णव्यापत्त्या । हन्यते हि तैः सोमः ।

III.150. अथ राजानः । नरा इति वा सामान्येन स्तुत्यसम्भवादुदाहरणाभावः ।

III.151. नाराशंसशब्द एव मन्त्रवचनः समाम्नातः । तस्य च सामान्येन च विशेषेण च राजोपस्तुतिविषयाः सर्वमन्त्रा एवोदाहरणम् ।

III.152. नाराशंसशब्देनोपक्षिप्तस्य सतः सामान्येन स्तुत्यतया राज्ञः संप्रति स्तुतिलाभहेतुमाचष्टे।··· यज्ञेन संयोगात् । यज्ञोऽश्वमेधः । तत्संयोगाद्राजा सर्वयुद्धोपकरणोपेतं रथमधिरूढः । स इद्धो राजा जीमूतस्येति स्तूयते ।

III.153. एष यज्ञाभिसम्बन्धात् स्तुतिसंक्रमः पूर्वाचार्यैः प्रदर्शितः ।

अन्ये तु उपकरणानि राजसम्बन्धात् । राजा यज्ञसम्बन्धात् । यज्ञो देवतासम्बन्धात् । देवतात्मसम्बन्धात् । सोऽयमात्मैव सर्वावस्थः स्तूयत इति मन्यन्ते ।

तथा चोक्तम्—"स्थाने स्थाने स्तुतिः सर्वा स्थानाधिपतिभागिनी । आत्मप्रतिष्ठा बोद्धव्या तथोपकरणस्तुतिः" । इति स्तुतिसंक्रमन्यायमिमं मन्यन्तेऽध्यात्मचिन्तकाः ।

तेषामाधारभूतत्वाद् रथः प्रथममाम्नातः ।

III.154. दुन्दुभिः शब्दानुकरणनिमित्तमेतन्नाम ।

782. 'अक्षाः' प्रथमं निर्वक्तव्याः । ते कस्मात् । अश्नुवत एनानिति वा । दीव्यन्तः कितवा एतानक्षान् पाणिभिः अश्नुवते व्याप्नुवन्ति ।

783. अथ 'ईषीका' कस्मात् । ईषतेर्गतिकर्मणः । सा हि निर्गता भवति मुञ्जात् । इयमपीतरेषीकैतस्मादेव ।

'ग्रावाणः' कस्मात् ? हन्तेर्वा । तदर्थोपपत्तेः । वर्णव्यापत्त्युपजनाभ्याम् ।

784. एवं तर्हि नराणामेव समाम्नानं प्राप्तमासीत् । न तेषां सामान्यस्तुत्यभावाद्राज्ञां च स्तुत्युपपत्तेः ।

786. तत्पूर्वप्रकृतस्यैव भावयव्यस्य स्तुतिलाभनिमित्तमेव मन्त्रगतमनूद्यते ।

अश्वमेधे हि—'जीमूतस्येव भवति प्रतीकम्' इत्यनेन सर्वयुद्धोपकरणोपेतं रथमधिरूढः सन्नद्धकवचो राजा स्तूयते ।

स एष हि व्यापी स्तुतिसंक्रमन्याय आचार्येणोपप्रदर्शितः ।

युद्धोपकरणानि राजसंयोगात्स्तुतिं लभन्ते । तस्य तान्यङ्गानीति तत्सम्बन्धात्स्तूयन्ते । राजापि यज्ञसंयोगाद्यज्ञोऽपि देवतासम्बन्धाद्देवता अप्यात्मसम्बन्धात् । सोऽयमेवमात्मैवाङ्गप्रत्यङ्गभावेनावस्थितः सर्वावस्थातः स्तूयते ।

तदुक्तम्—'स्थाने स्थाने स्तुति सर्वा स्थानाधिपतिभागिनी । आत्मप्रतिष्ठा बोधव्या तथोपकरणस्तुतिः । इति । एष स्तुतिसंक्रमन्यायः सर्वत्रोपसंधेयः ।

787. तदाधारत्वादितरेषां युद्धोपकरणानाम् ।

788. 'दुन्दुभिः' इत्यस्य योऽभिधेयस्तस्य 'शब्दानुकरणम्' आत्मनो नामधेयप्रतिलम्भनिमित्तम् ।

III.155. इषुधिः कस्मात् ? इषवो निधीयन्ते यस्मिन् । 'कर्मण्याधिकरणे च' इति किः ।

बह्वीनामिषूणां पिता पितृस्थानीयः पालयिता वा । यस्य चास्य । बहुरिषुगणः पुत्रः पुत्रस्थानीयः पुत्रवद्रक्ष्यत इत्यर्थः ।

III.156. हस्तघ्नः कलापी गोधेति प्रसिद्धः । हस्ते हस्तसमीपे स्थितो हन्यते ज्यया शरपुङ्खेन ।

पुंसतेर्वा पौरुषार्थस्य । तथा च पुंसतेः । पौंस्यं बलम् ।

III.157. धनुः । धन्वतेर्गत्यर्थस्य वधार्थस्य वा । उभयार्थोपपत्तेः । तथा च दर्शयति । 'धन्वन्त्यस्मादपयन्ति अस्मात् । अपयन्तश्च घ्नन्तीषवः । अपादानत्वाच्चास्योभयोपपत्तित्वम् ।···

संपूर्वादत्तेः सम्पदादि क्विपि । संभक्षणात् परस्परस्यायुषाम् ।

III.158. ज्या वक्तव्या । जयतेर्जयसाधनत्वात् । जिनातेर्वा 'ज्या वयोहानौ' इत्यस्य । साभिप्रायेण हेतुभावं प्रतिपद्यमाना वयो भावयति।···

या वक्ष्यन्तीव यथा वदिष्यन्ती । इत् पादपूरणः । कश्चित् काचित् स्त्री आगच्छेत् तद्वत् ।

इषुरिषतेः । इषति हन्तीति गतिकर्मणो वधार्थस्य वा । उभयार्थोपपत्तेः ।

III.159. अश्वाजनी वक्तव्या । सुबोधत्वादनिर्वचनम् ।

खशया मुखाकाशे शेते तत उपलब्धेः ।

III.160. तानेतान् हे अश्वाजनि प्रचेतसः प्रकृष्ट-

यथैवासावभिहन्यमानः शब्दं करोति दुन्दुभिरिति तदेव तस्य नाम ।

789. 'इषुधिः' इषूणां निधानं तूणः । तस्मिन्निषवो निधीयन्ते ।

योऽयमिषुधिः बह्वीनां बहूनामिषूणां पाता रक्षिता तदर्थत्वात् । यस्य चेषुधेः बहुः इषुकलापः पुत्रः पुरुणो बहुनः पापात् त्राता । तदर्थं ह्यसौ रक्ष्यत इत्येवं व्युत्पाद्यम् ।

790. 'हस्तघ्नः'–कलापीपट्टको गोधेति च यमाहुः । स कस्मात् । 'हस्ते' ह्यवस्थितोऽसौ ज्यया 'हन्यते' ।

'पुंसतेर्वा' पौरुषार्थस्य पौंस्यमिति यस्य बलनाम भवति ।

791. 'धनुः' धन्वतेः गत्यर्थस्य ।···। 'वधकर्मणो वा' । शत्रुवधाय तदुत्पद्यते ।

792. संपूर्वस्य अत्तेः भक्षार्थस्य। भक्षत इव हि तत्र परस्परतः ।

792. 'ज्या' इति वक्तव्यम् । सा पुनरियं 'जयतेर्वा जिनातेर्वा' धात्वन्यत्वमर्थैकत्वम् । तद्बलेन हि जीयते । स पुनरेष धनुर्गुणः ।

793. येयं योषिदिव काचित्कस्मैचिदिष्टाय पुरुषाय किंचिद्रहस्यं वक्ष्यन्तीव कथयिष्यन्तीव ज्या ।

'इषुः' इत्येतत् इषतेर्गतिकर्मणः । तदर्थमेवासावुत्पाद्यते । वधार्थस्य वा । तदर्थमेव ह्यसौ गच्छति ।

794. अश्वाजनीत्येतन्न निर्वक्तव्यं प्रत्यक्षवृत्तित्वादस्य ।

वाक् खे मुखाकाशे शेत इति ।

795. हे अश्वाजनि या त्वमेवमभिहंसि सा त्वमेतान्

प्रज्ञानान् गृहीतशालिहोत्रोपदिष्टनयानित्यर्थः ।

अश्वान प्रवृद्धचेतसः प्रकृष्टचेतसो गमनं प्रति समुत्सुकान् समत्सु समरणेषु संग्रामेषु तथा चोदय यथा जयेयमित्येतदाशास्महे ।

III.161. तस्मादनुकरणनिमित्तकमेवाङ्गीकृत्य ब्राह्मणमपि दर्शयति । 'उरु मे कुरु' इति । एवमुरुकरमेतत् । ततश्च ब्राह्मणोक्तनिर्वचनं ज्ञात्वा वर्णव्यापत्त्यादिकृतेन परोक्षेण वृत्तेन तदुलूखलमित्याचक्षते लौकिकाः ।

796. अथवा । 'उरु मे कुर्वित्यब्रवीत्तदुलूखलमभवत्' । तत्किल क्रियमाणमुरु मे खं कुर्वित्य-ब्रवीदिव तथागुणयुक्तत्वात्तस्य । तदुलूखलमभवत् ।···तत्पुनरेतद्रलोर्व्यत्ययेन व्यवहितगुणमुच्यते उलूखलमिति ।

III.162. प्रजां प्रजाहेतुभूतं बीजं वर्षति सिञ्चति ।

797. स हि 'प्रजां वर्षति' । प्रजोत्पत्तिकारणं रेतः सिञ्चति योनौ ।

बृहेर्वातिशयेन (रेतः) सेक्तुं बृहति उद्यच्छत्यात्मानम् ।

रेतः सेक्तुमतिशयेनासावात्मानमुद्यच्छति ।

अस्मिन् सूक्ते द्रुघणस्य वृषभस्य च स्तुतिलाभहेतुमितिहासं वक्ष्यति । मुद्गल आह ।

799. 'तत्रेतिहासमाचक्षते' इति स्तुतिलाभनिमित्तमुभयोरप्येकमेव वृषभद्रुघणयोः ।

III.163. तत्र द्रुघणः । स्तुतिप्रकरणे द्रुघणश्च योगबन्धेन प्रविश्योक्तलक्षणे संग्रामे व्यवहृत्य पणं कृत्वा जिज्ञाय जितवान् ।

स किल द्वितीयस्य गोरभावाद्राज्ञा सह प्रतिस्पर्धमानः ऐश्वर्यादिन्वादिश्य 'द्रुघणं' वृषभेण सह युक्त्वा राज्ञा सहाजिं ससर्प । स च तं 'जिगाय' जितवान् ।

तदर्थाभिधायिन्येषा ऋक् ।

यथा चैतदेवं तस्यार्थस्य अभिवादिन्येषर्ग्भवति

एकस्तव वृषभस्तस्य कः सहायो येन त्वमजैषीरीति पृष्टः सन्नाह ।

जितायामाजावविसिताजिसरणमाज्यन्त एवाप-

800. विश्वमुद्गरो मुद्गलः केनचित्पृष्टः केन सह युक्त्वा वृषभेणेमं राजानमजैषीरिति । स··· अनयर्चा तस्मै प्रत्याचचक्षे ।

पृतनाः सेनास्तासां गमनार्थम् । यत्र योद्धुं संगच्छन्ते ।

800. पृतनाः मनुष्याः । ते यस्मिन्नजन्ति गच्छन्ति । पृतनाशब्दात्पूर्वपदमजतेरुत्तरपदम् ।

III.164. मदनः कामस्तं गिलति नियच्छति ।

मदनः कामः । तमसौ गिलति वशीकरोति । जितेन्द्रिय इत्यर्थः ।

बिभर्ति वा अश्वान् । ततः ऋष्यण् ।

बिभर्त्ति वा असावश्वान् ।

पितुरित्यस्रेऽप्रसिद्धत्वादभिधेयवचनम् ।

'पितुः' इत्येतद्वक्तव्यम् । तत्पुनरेतत् 'अन्ननाम' ।

नद्यो व्याख्याताः 'नदना भवन्ति शब्दवत्यः' इत्यत्र ।

801. 'नद्यः' अवसरप्राप्ताः । ताः पुनरेताः 'व्याख्याताः' 'नदना भवन्ति शब्दवत्यः' इति ।

III.165. गङ्गा गमनादिति । गमयति वा प्राणिनो

802. 'गङ्गा गमनात्' । सा हि विशिष्टं स्थानं

विशिष्टं स्थानमिति ।

प्रकर्षेण मिश्रयन्ती आप्लावयन्ती नद्यन्तराणि ।

अप्रसिद्धां परुष्णीं प्रसिद्धेनाह । तां च इरावतीमृजुत्वादतिक्रम्य परुष्णीं निराह ।

परूंषि चास्याः कुटिलानीत्यभिप्रायः ।

मरुद्वृध इति सर्वासां विशेषणम् । तुल्यकारणत्वात् ।

III.166. ऋजीकः पर्वतस्तत्प्रभवा ।

विपाशनादित्युक्तस्योपपत्तिवचनं व्यपाश्यन्त व्यपास्ता विक्षिप्ता हतपुत्रस्यो[illegible]वृत्तेर्वसिष्ठस्येतिहासः ।

यस्मादेनामभिप्रसुवन्ति आत्मानं प्रेरयन्ति गच्छन्ति पतन्तीत्यर्थः । अन्या नद्यः पर्वतस्यन्दनात् ।

आपः कस्मात् ? आप्नोतेः कृत्स्नं ताभिर्व्याप्तिम्

ओषद् दाहं क्षुधं धयन्ति पिबन्ति नाशयन्तीत्यर्थः ।

III.167. ओषतेः पूर्वपदं धयतेरुत्तरपदं कर्तरि कारके ।

दोषं वातपित्तादिकं वा ।

स्थानानि वा धामानि यानि पुरुषस्य शरीरे वर्माणि तेषु सुखार्थं दुःखोपशमनार्थं वैनाः सं[illegible]रूपत्वेन ।

गच्छति । गमयति वा प्राणिनो विशिष्टं स्थानमिति गङ्गा ।

प्रकर्षेण मिश्रयन्त्यन्याभिर्नदीभिः स्वान्युदकानि गच्छति ।

येयमिरावतीति लोके प्रसिद्धा तामिमामेतस्मिन्मन्त्रे मन्त्रार्थविदः परुष्णीत्याहुः ।

803. तदस्याः पर्वतवत्त्वं यानि कुटिलानि तानि पर्वाणीव तस्यास्तैस्तद्वतीति ।

तस्मात्प्रत्येकं नद्यभिधानमनुषज्यते विशेषणत्वेन हे मरुद्वृधे गङ्गे हे मरुद्वृधे यमुने इति ।

ऋजीको नाम पर्वतस्तस्मात् प्रभवतीति तद्वितेन ।

वसिष्ठः किल ममज्जास्यां मुमूर्षुः पुत्रमरणशोकार्तः पाशैरात्मानं बद्ध्वा । तस्य किल ते पाशा अस्यां व्यपाश्यन्त । व्यमुच्यन्तोदकेन । ततः प्रभृति सा विपाडभवत् ।

'यदेनामभिप्रसुवन्ति' अभिगच्छन्त्यन्याः प्रभूता नद्यः ।

'आपः' इत्येतत्पदम् । ताः पुनरेताः 'आप्नोतेः' सर्वमाभिराप्तमिति ।

804. यत्किंचिदोषच्छरीरे दहद् रोगजातं भवति क्षयादि तदेता अताः सत्यो धयन्ति पिबन्ति नाशयन्ति ।

तदेवमोषतेः पूर्वपदं धयतेरुत्तरपदं कर्तरि कारके ।

यः कश्चिदुपजायते दोषो वातादिकृतः शरीरे ।

805. अथवा । 'सप्तशतं पुरुषस्य मर्मणां तेष्वेना दधतीति वा' । अस्मिन् पक्षे धामानि स्थानानि ।

III.168. अरण्यानी अरण्यस्य पालयित्री अधिदेवता काचिदिति नैरुक्ताः ।

III.169. श्रद्धा कस्मात् ? श्रद्धानात् श्रत सत्यं तस्मिन् धीयते ।

सा च धर्मार्थसुखादिवर्गे यथाशास्त्रमधिकृतपुरुषस्य कर्मानुष्ठानहेतुभावप्रदा बुद्ध्यधिदेवता श्रद्धा ।

श्रद्धयैव च यदेव सत्यं हूयते हविर्नेतरत् । अथ च 'यः श्रद्दधानो जायते तस्येष्टं न क्षीयते' 'श्रद्धयेष्टं च पूर्तं च' इति श्रुतिस्मृतिदर्शनम् ।

III.170. अप्वा व्याख्याता 'व्याधिर्वा भयं वा यदेनया विद्धोऽपवीयते' इति ।

अग्नायी सा पुनरग्नेः पत्नी ।

III.171. यथैव चाग्नेः सोमपानसम्बन्धः। एवं तत्पत्न्या अपि । मन्त्रलिङ्गा देवताऽग्नायी । तत्स्तुत्यर्था या सा निगदेन पाठेनैव व्याख्याता ।

अथशब्दो द्वन्द्वविशेषाधिकारार्थः ।

अष्टौ पाठादेव निर्ज्ञातायां संख्यायामष्टावित्यवधारणार्थं संख्यापदम् ।

उलूखलमुसलयोः क्षोदनकरणत्वेन सन्निपत्योपकारकत्वे सति मुख्यत्वात् प्रथमकारित्वं भाष्यकारेणानुक्तमपि द्रष्टव्यम् ।

मुसलं मुहुर्मुहुः सरणात् । उत्क्षिप्योत्क्षिप्य निपातनान्मुहुः सरणम् ।

III.172. हविर्धाने । शकटे सोमलक्षणानि हवींषि निधीयन्ते ययोः । सामीपिकं चाधिकरणम् ।

III.173. द्यावापृथिव्यौ नोऽस्माकं स्वभूतम् । सिध्रं साधनं फलानाम् । अद्य अस्मिन्नहनि सादृगुण्या दिविस्पृशं दिवः स्प्रष्टारं गन्तारमित्यर्थः । यज्ञं देवेषु यच्छतां प्रापयतामि-

807. 'अरण्यानी' इत्येतत्पदम् । सा पुनः 'अरण्यस्य पत्नी' पालयित्री देवता ।

808. 'श्रद्धा' इत्येतत्पदम् । अत्र 'श्रत' इति सत्यनाम पूर्वपदम् । तत्सत्यमस्यां धीयत इति श्रद्धा ।

धर्मार्थकाममोक्षेष्वविपर्ययेणैवमेतदिति या बुद्धिरुत्पद्यते तदधिदेवता भावाख्या श्रद्धेत्युच्यते ।

यदेव श्रद्धया हूयते हविस्तदेव साधु हूयतेऽन्यस्याफलत्वात् । उक्तं च । 'नाश्रद्दधानाय हविर्जुषन्ति देवाः' इति ।

810. 'अप्वा' व्याख्याता । 'अप्वा यदेनया विद्धोऽपवीयते व्याधिर्वा भयं वा' इत्यत्र ।

'अग्नायी' अग्नेः पत्नी ।

811. असाधारण्येन । इन्द्राणीं च वरुणानीं च अग्नायीं च इह कर्मण्युपह्वये सोमपानाय स्वस्तये चेत्येवं सति 'तस्या एषा भवति' इति । भाष्यवचनं नोपपद्यते ।

812. अयमपरो द्वन्द्ववर्ग इति पृथगधिकारवचनम्।···

अष्टाविति निर्देशतोऽपि सिद्धे द्वित्वे नियमार्थमष्टग्रहणम् ।

उलूखलमुसलयोर्द्रव्यत्वात् प्रथमं समाम्नानम् । तयोः पृथिव्यायतनस्य निरुपचारप्रसिद्धेः । प्रचुरत्वाच्च तयोः ।

मुसलं कस्मात् ? तद्धि मुहुर्मुहुः सरति व्रीह्यादिषु ।

813. 'हविर्धाने हविषां निधाने' । सोमास्तयोर्निधीयन्ते ।

814. द्यावापृथिव्यौ अस्माकं सिध्रं साधनम् इमं यज्ञं योऽयस्मान्साधयति अद्य एतस्मिन्नहनि वर्तमानं दिविस्पृशं द्यां यः स्पृशति आपूरयति तमेवंगुणयज्ञं देवेषु नियच्छतां

मित्यर्थः ।

III.174. आर्त्नी धनुषः कोटी । आर्तन्यौ 'ऋ' गतौ इत्यस्य । ते हि ज्ययाकृष्यमाणे सङ्गच्छतः।

III.175. शुनासीरौ । अप्रसिद्धत्वादभिधेयस्याह शुनो वायुः । क्षिप्रं वातीति निर्वचनम् । अन्तरिक्ष इत्यर्थप्राप्तार्थवचनम् ।

सस्यं व्रीह्यादि । समा संवत्सरः । एतद्देवी-जोष्ट्रीशब्दवाच्यमिति कात्थक्यो नैरुक्तविशेषो मन्यत इति शेषः ।

तयोर्देव्योरेष संप्रैषः प्राधान्यस्तुत्युदाहरणं न ऋक् न यजुर्न सामास्ति ।

III.176. ते वीतां पिबेतां कामयेतां वा । इदं हविः । त्वमपि हे होतर्यज मा विलम्बिष्ठाः ।

III.177. ऊर्जाहुती ऊर्जे प्रत्याह्वातव्ये । ऊर्जयमाने बलं कुर्वन्त्यौ । अधातां दत्तामस्मभ्यम् ।... वीतां पिबतां कामयेतां वा । इदं हविः । त्वमपि होतर्यज मा विलम्बिष्ठाः ।

देवेभ्यो दत्तमित्येतदाशास्महे ।

815. 'आर्त्नी' धनुः प्रान्ते । ते कस्मात् ? 'अर्तन्यौ वा' । ऋतेर्धातोर्गत्यर्थस्य ।

816. 'शुनासीरौ' इत्यत्र शुनो वायुः । स हि क्षिप्रमेत्यप्रतिबध्यमानोऽन्तरिक्षे ।

817. सस्यं च समा चेति कात्थक्यः । सस्यं व्रीह्यादि समेति संवत्सरः ।

'तयोरेष संप्रैषो भवति' ।

818. ते देव्यौ जोषयित्र्यौ अस्य पृषदाज्यस्य स्वमंशं वीतां पिबेतां कामयेतां वा । यजेति संप्रैषः ।

819. ऊर्जाहुती ऊर्जयमाने बलवतीमूर्जतां च कुर्वाणे अधातां दत्तां...वीतां पिबेतां कामयेतां वा ।

| | |
|---|---|
| IV.1. समाम्नायक्रमेणैवानन्तरं मध्यस्थाना देवता: । | 821. अधुना समाम्नायानुक्रमेणैव मध्यमस्थानदेवतापदानि वक्तव्यानि । |
| वायुः पुनर्वातेः । वेतेर्वाऽनेकार्थत्वाद् गतिकर्मण: । | 822. "वायुः" कस्मात् । 'वातेः' । वा 'गतिगन्धनयोः' ।··· अनेकार्थो वेतिः । तस्य वा गतिकर्मणो गत्यर्थस्य । |
| तस्य वायोरेषा । | तस्यैषा भवति । |
| IV.2. मधुच्छन्दस आर्षम् । | मधुच्छन्दस आर्षम् । |
| श्रयणैरलङ्करणैरलंकृता भूषिता इत्यर्थः । | 'अलङ्कृताः" । पर्याप्ताः अरंकृताः । पातुं संस्कृताः । |
| पाहि पिबतेरेतद्रूपं न पातेः । | पाहि पिबेत्येतदाशास्महे । |
| यत इन्द्रस्योचितं सोमपानम् । तस्मादिन्द्र एव वायुः । | 823. प्रसिद्धं हीन्द्रस्य मध्यमस्य सोमपानम्,··· तस्मादिन्द्र एव वायुः । |
| तस्य वा एषा । ऐन्द्र एव सूक्ते इन्द्रपर्यायत्वप्रतिपादनार्था परा । | 'तस्य' इन्द्रस्य वायोरैन्द्र एव सूक्ते यस्यामिन्द्रस्य विशेषणत्वेन वायुशब्दस्तथा 'एषापरा' ऋक् 'भवति' । |
| IV.3. शवसानं बलाचरणशीलम् । | अधिकबलमात्मानं मन्यमानम् । |
| एवमिन्द्रप्रधानेयमृगित्येके मन्यन्ते । | 824. एवमेतस्मिन्मन्त्रे ऐन्द्रसूक्तमध्यपातित्वात्··· 'इत्येके' । |
| उभयप्राधान्येन परममन्यद्दर्शनम् । | 'अपरे' पुनः 'उभयप्रधाना'—इयमृक् इति मन्यन्ते । |
| IV.4. वरुणः । अन्तरिक्षे उदकस्यावरणाद्वायुरेव । | 'वरुणः' कस्मात् ? 'वृणोतीति सतः' स हि वियद्वृणोति मेघजालेन । |
| IV.5. नीचं बारं यस्य स नीचीनबारोऽधोमुखबिलस्तम् । | न्यक् अच्यते द्वारं यस्य स भवति नीचीनद्वारः अधोद्वारः । तं नीचीनद्वारं अधोबिलम् । |
| कवन्धो मेघः कवतेर्गतिकर्मण: । | 825. 'कबन्धः' इति मेघ उच्यते । कस्मात्सः । 'कबनमुदकं' कवतेर्गत्यर्थस्य । |
| IV.6. सुष्टु स्तौमीत्यर्थः । | 826. सुष्टु तमभिष्टौमि । |
| समानया योग्यया गिरा स्तुत्या । | समना । तत्समानया, तद्योग्यया गिरा स्तुत्या । |
| अन्यके [कुत्सिताः] अन्ये (अन्यके) अस्मद्द्विषः । | अन्ये एव अन्यके । शत्रवः । |
| रुद्रः । रौति स्तनयित्नुलक्षणं शब्दं करोतीति । | 'रुद्रः' कस्मात् ? रौतीति सतः । स हि स्तनयित्नुशब्दं करोति । |

| | |
|---|---|
| IV.6,7. अत्यर्थे वा शब्दं कुर्वन्मेघोदरस्थो द्रवति । | शब्दं कुर्वाणो मेघोदरस्थो द्रवतीति । |
| ···हारिद्रविकं मैत्रायणीयानाम् । | हारिद्रवो नाम मैत्रायणीयानां शाखाभेदः । |
| IV.8. सहमानायाभिभवतोऽन्यान् । | 827. 'सहमानाय'–नित्यमभिभवते शत्रून् । |
| IV.9. क्ष्मया सप्तम्यर्थे तृतीया सहार्थे वा पृथिव्यां पृथिव्या वा सह । | 828. क्ष्मया पृथिव्या व्रीह्यादिभावमुपगतया । तस्यां वा...पृथिव्याम् । |
| चरति परि सा वृणक्तु नः परिवर्जने परिवर्जयतु सास्मान । | सा घ्नती प्राणिनः अस्मान् परिवृणक्तु परिवर्जयतु नः । |
| स्वपिवात हे स्वाप्तवचन भेषजा भेषजानि औषधानि तान्यस्मभ्यं देहीति शेषः । | हे स्वापिवात स्वाप्तवचन...यानि तव सहस्रं भेषजानि...तान्यस्मान् प्रति सन्तु । |
| द्यतेः खण्डनार्थस्य द्युतेर्वा उज्ज्वलत्वात् । | 'दिद्युत द्यतेर्वा' अवखण्डनार्थस्य 'द्युतेर्वा' दीप्त्यर्थस्य । |
| अग्निरपीत्यादि स न मन्येतेत्यादिविचारानुस्मृतये संकरव्युदासाय । | 829. 'अग्निरपि रुद्र उच्यते' इति । विचारानुस्मृतये संकरोपप्रदर्शनम् । |
| IV.10. शुनः शेपस्य । | शुनः शेपस्यार्षम् । |
| तां योऽग्निर्बुध्यते बोधयति वा देवान होतृत्वात् स जराबोधः । | स हि जरया स्तुत्या होतृत्वे वर्तमानोऽभिमतमर्थं यजमानानां सम्पादयन् देवान् बोधयति । |
| विशेविशे मनुष्यस्यार्थाय । | विशेविशे मनुष्याय । |
| दृशीकं दर्शनीयं श्रवणीयमित्यर्थः । | दृशीकं दर्शनीयं श्रवणीयं श्रवणार्हं व्यपगतदोषं स्तोत्रमुच्चारयिष्यति । |
| इरा अन्नं तेन सम्बन्धात् तद्धेतुभूतमुदकं लक्ष्यते । | 830. इराम् अन्नं व्रीह्यादि दृणाति विदारयति । |
| वर्षद्वारेणापीरामन्नं ददाति । | वर्षक्लेदितमंकुरं बीजं भिनत्ति । |
| सोऽयमिरादः सन्निरादानादिन्द्रः । | 'यो वर्षद्वारेणासाविरामन्नं ददाति सोऽयम् इरादः इरादाता इन्द्रः । |
| तदेव पूर्वपदम् । दधातेर्दानार्थस्य धारणार्थस्य वोत्तरपदम् । | तदेव पूर्वपदं दधातेर्दानार्थस्य धारणार्थस्य वोत्तरपदम् । |
| सोऽयमिरादारः सन्निरां दारयितेन्द्रः । | सोऽयम् इरादारयिता इन्द्रः । |
| द्रवतिर्गतिकर्मा । | द्रवतिर्गत्यर्थः । |
| गच्छति सोमं पातुमित्यर्थः । | सोमपानार्थमसौ द्रवति । |
| अत इन्धनादिन्द्रः । | सोऽयम् इन्धः इन्द्रः । |
| IV.11. सर्वस्य शुभाशुभकर्मणो दर्शनादेवौपमन्यवो | 831. 'इदं दर्शनादित्यौपमन्यवः' |

| | |
|---|---|
| मन्यते । | |
| ईश्वर इनः,...इनश्चासौ दारयिता चेति ।... | ईश्वरश्चासौ दारयिता च शत्रूणामितीन्द्रः । |
| आदरयिता वा यज्वानाम् । | अथवा । ईश्वरश्चासौ आदरयिता च यज्वनाम् । |
| गातोरार्षम् । | 832. गातोरात्रेयस्यार्षम् । |
| अदर्दो दारयसि । | अदर्दः । दारितवानसि त्वम् । |
| उत्सशब्दोऽपठितमपि मेघनाम । | उत्सं मेघम् । |
| IV.12. उदकनिर्गमनबिलानीत्यर्थः । | वि खानि । बिलानि विवृतानि त्वमकरोरुदकनिर्गमनद्वाराणि । |
| अथवा दानवं दातारं च । | दानवम् उदकदातारं मेघम् । |
| IV.13. गृत्समद ऐन्द्रं रूपमास्थितः । | 833. गृत्समदमिन्द्रवरप्रदानादैन्द्रं रूपं बिभ्रतम् । |
| यस्य च शुष्माद् बलाद् । | यस्य शुष्मात् बलात् । |
| नृम्णस्य नृमनस्य तस्य बलस्य मह्ना महत्वेन हेतुना । | नृम्णस्य मह्ना बलस्य सेनालक्षणस्य महत्त्वेन । |
| नाहमिन्द्रः । | 834. नाहमिन्द्रो ब्राह्मणोऽहं तत्प्रसादादेवावाप्ततद्रूप इति । |
| देवतासतत्वस्य भावितान्तःकरणस्य प्रीतिरुत्पद्यते । | 'दृष्टार्थस्य' इति देवतार्थं सतत्त्वतो दृष्टवतो भावितान्तः करणस्य तत्रोपजातप्रीतेः । |
| अन्ताद्यक्षरविपर्ययेण । | आद्यन्तविपर्ययेण । |
| IV.14. एवं तदाह प्रकर्षेणार्जयिता वा संगृहीता वा रसानामिति । | प्रपूर्वस्यार्जयतेः पर्जन्यः । स हि रसान् प्रकटीकरोति । |
| वि वृक्षान् विविधं हन्ति । | 835. विवृक्षान् हन्ति विहन्ति वृक्षान् पर्जन्यः अशनिपातैः । |
| विश्वं सर्वमस्माद् बिभाय । | विश्वं बिभाय सर्वाणि चास्माद्भूतानि बिभ्यति महावधात् पर्जन्यात् । |
| अनागा अनपराधोऽपि चास्माद् ईषते ईषतिहनतीति गतिकर्माणौ । | अनागा अपि अनपराधोऽपि सन् सर्व एव अस्माद्वर्षकर्मवतः......ईषते पलायते । |
| हन्ति दुष्कृतः पापकृतः पापकारिणः । | हन्ति उपशमयति सुभिक्षं कुर्वन्...। |
| बृहस्पतिः । बृहतः पाता वाग्वात्मना शोषयिता । | बृहतो महतोऽस्य जगत उदकस्य वा पाता रक्षिता । |
| IV.15. अयास्यस्य । | अयास्यस्याङ्गिरसस्यार्षम् । |
| अश्ना'''अपिनद्धम् । मधु उदकं । परि सर्वतोऽपश्यत् दृष्टवान् । | अशनवता व्यापनवता मेघेनापिनद्धम्'''मधु उदकं पर्यपश्यत् सर्वतोऽपश्यत् । |

विरवेण रवः शब्दो विविधशब्देन शब्दयित्रा।

चमसं न चमसमिव यथा तक्षा वृक्षं स्थं चमसं तद्वत्।

चमन्ति भक्षयन्त्यस्मिन्निति चमसः सोमपात्रम्।

ब्रह्मणस्पतिः। ब्रह्मणोऽन्नस्य वृष्टिप्रदानादिना पाता रक्षिता।

तदाह भाष्यकारः—अशनवन्तमास्यन्दनवन्तमिति।

IV.16. मधुधारं 'कर्मण्यण्' उदकस्य धारयितारम्।

अभीत्ययमतृणदित्येतेन सम्बध्यते।

पपिरे पीतवन्तः पिबन्ति वा।

स्वर्दृशः स्वरादित्यस्तस्य द्रष्टारः।

उत्सं मेघम्।

निवसन्ति हि तेन हेतुभूतेन तत् क्षेत्रम्।

IV.17. वयं हितेनेव यथा हितेन केनचिन्मित्रेण कश्चित् तद्वज्जयेम शत्रूनिति।

आ हरेति शेषः।

परा च वर्षकर्मश्रवणेन मध्यमत्वे हेतुर्भवतीत्याह।

धेनुरिव यथा धेनुः पयः क्षीरं धार्यते तद्वदस्मासु निमित्तभूतेषु धुक्ष्व क्षारय।

किञ्च य एते त्वदनुचरा माध्यमिका देवगणा मरुदादय ऋतस्योदकस्य पतयः पातारस्ते च नोऽस्मान्नित्यमेव मृडयन्तु सुखं ददतु सुखयन्त्वित्यर्थः।

IV.18. जामित्वं च त्रिविधं दृश्यते। एकं तावत् शब्दतोऽर्थतश्च।

एकस्यामृचि समानाभिव्याहारः समानमभिव्याहरत्यर्थचैवमेदेन...तज्जामीत्येकं मतम्।

836. विवरेणा विकृत्य भीषणेन अतिमहता रवेन शब्देन।

यथा कश्चित्कुशलः शिल्पी वृक्षमध्यात् चमसं यज्ञपात्रं निर्हरेत्।

'चमसः' चमेर्भक्षणार्थस्य। तत्र हि सोमश्चम्यते।

ब्रह्म अन्नमृगादि वा। तस्योभयस्याप्यसौ वर्षेणौषधीरभिनिष्पादयन पाता सम्पद्यते।

अश्मशब्दात् 'अशनवन्तम्' इति आस्यशब्दात् 'आस्यन्दनवन्तमिति' भाष्यकारः।

837. मधुधारम् उदकं धारयितारम्।

अभ्यतृणत् अभ्यहन् ब्रह्मणस्पतिः।

पपिरे पिबन्ति।

स्वर्दृशः सूर्यस्य रश्मयः।

उत्सं मेघम्।

तदपाश्रयेण हि ग्रामे क्षियन्ति कुटुम्बिनः।

838. हितेन केनचिदाप्तेन मित्रेण संयुक्ताः सन्तो वयं जयेम गवाश्वादीनि।

'आ' इत्यस्योपसर्गस्य सम्बन्धि क्रियापदमध्याजहार भाष्यकारः।

यतः परया वर्षलिङ्गयोपपादयति मध्यस्थानः क्षेत्रस्य पतिरिति।

839. धेनुर्यथा पयो दोग्धि एवमस्मासु धुक्ष्व प्रक्षर।

ऋतस्य उदकस्य पतयः पातारो माध्यमिक देवाः क्षेत्रस्य पतिप्रमुखाः मृळयन्तु। नित्यमस्मान् रक्षन्तु पूजयन्तु च।

840. तदेतत्पुनरुक्तं द्विविधम्। समानशब्दार्थमसमानशब्दार्थं च।

पदान्तरेण यः कश्चित्पूर्वेऽर्धर्चेऽभिहितोऽर्थस्तमेवोत्तरेऽर्धर्चेऽभिदधज्जामि भवति......

'एकं' तावदाचार्यमतम्।

तत्समानपददगतं च जामीत्यपरं मतम् ।

यत्रैतदपि नास्ति स्मृतिविच्छेद इति तदेव जामीति मतान्तरम् ।

यथाशक्ति सर्वत्र विशेषो वक्तव्य इति भावः ।

IV.19. अलब्धलाभो योगः ।

लब्धस्य रक्षणं क्षेमः ।

अधस्पदात् अधश्च पादयोर्मे पयः प्रदेशस्त-स्मात् प्रसादाकाङ्क्षया सन्मुखं निरीक्षमाणा यूयमुद्वदत ऊर्ध्वं वदत ।

कश्चिन्मधुमान्न मधु अण्वपि श्च्योतति ।

तस्य पाता अधिष्ठातृत्वेन ।

अमीवा हिंसिता सर्पादी रोगो वा तस्य हन्ता ।

IV.20. सखा च सुशेवः सुसुखः ।

शेवः शिष्यतेर्वकारो नामकरणः ।

षकारस्थाने वकारः प्रविशतीत्यर्थः ।

अन्तस्थशब्दः क्रियावाची न यरलववाची ।

यद्यद्रूपं कामयते तत्तद्देवता ऐश्वर्यवशाद् भवति ।

यत्किञ्चित् प्राणिनो वा सर्वमिन्द्रो बोभवीति पुनः पुनर्भवति प्रतिपद्यत इत्यर्थः ।

स्वैर्मन्त्रैराहूयमानः स्तूयमानो वेति शेषः ।

IV.21. वाचस्पतिः प्राणात्मनेन्द्रः ।

कृतपाप्मा अतः सम्बन्धादपगतप्राणमिवात्मानं मन्यमानः कृतनिर्णेजनः सन्नाह ।

हे वास्तोष्पते धनस्यान्नाख्यस्य स्वामिन् ।

यदेव समाने पादे समानाभिव्याहारं भवति तज्जामि भवतीत्यपरम् ।

एवं येन केनचित् स्वल्पेनापि विशेषेण तदजामि भवतीत्यपरम् ।

841. एवमादिषु यथा समानशब्देष्वसमानशब्देषु च पुनरुक्तेषु यः कश्चिद्विशेषो वक्तव्यः ।

योगो नाम लिप्सितस्यार्थस्य प्राप्तिः ।

क्षेमो नाम तत्परिपालनम् ।

ते यूयमाक्रान्तमूर्धानो मया मम अधस्पदात् पादयोरधो वर्तमानाः सन्मुखप्रेक्षा अस्वाधीन-सर्वार्थवृत्तयो भूत्वा नित्यं मां वदत ।

कश्चिन्मधुमान्न तु मध्वविरतं मुहुर्मुहुश्च्योततीति ।

842. तदधिदेवताभावेन रुद्रात्मना च तत्कृतेनोप-कारेण रक्षिता मध्यमः ।

843. अमीवा रोगस्तस्य हन्ता ।

843. सखा मित्रं सुशेवः सुष्ठु सुखो भव ।

'शेव इति सुखनाम' । तत्कस्मात् ? शिष्यतेः । वकारो नामकरणः ।

असौ वकारः । स षकारस्य स्थानमुपगच्छति ।...

अन्ते तिष्ठति धातोर्यो वर्णः सोऽन्तस्थः । न संज्ञा यथा अन्तस्था यरलवाः ।

अस्त्येतदैश्वर्यं देवतायाः । यद्यदिच्छति रूपं तत्तत्करोति ।

यावन्ति कानिचिद्रूपाणि मघवा इन्द्रो भवितु-मिच्छति तानि सर्वाण्यप्रतिबन्धेन बोभवीति पुनः पुनर्भवतीति ।

स्वैर्मन्त्रैः हूयमानो वा स्तूयमानो वा ।

844. 'वाचस्पतिः'...वाचः पाता वा पालयिता वा, प्राणात्मनेन्द्रः ।

अपगतप्राणमिवात्मानं मन्यमानः पापकृत्पाप-सम्बन्धात्कृतश्चित्कृतनिर्णेजनः सन् प्राणं ब्रवीति ।...

हे वसोष्पते हे धनस्य अन्नस्य च पते ।

निरामय नियमेन रमय त्वम् ।

अदूभ्य आदित्य आदित्यादयम् ।

IV.22. इन्धनवर्जितो दीदयद् दीप्यते ।

यश्च भवन्तं विप्रासो मेधाविन ईळते स्तुवन्ति अध्वरेषु ।

मधुमतीर्मधुस्वादयुक्ता वृष्टिलक्षणा अपो दा देहि ।

यमो मध्यस्थानो वायुरित्युक्तम् ।

परेयिवांसं पर्यागतवन्तं प्राप्तवन्तमित्यर्थः ।

प्रवतः ।···मनुष्यजातीः ।

उद्वतश्च देवजातीः ।

निवतश्च तिर्यग्जातीः ।

IV.23. वैवस्वतं विवस्वत आदित्यस्यापत्यभूतं मध्यमम् ।

अग्निरपीत्यादिविचारोपन्यासो मन्ये मनस्मयादिरूपोऽयमस्य मध्यमस्थानस्य व्यभिचारनिवृत्यर्थः ।

तमग्निमेता वक्ष्यमाणा ऋच :।

सेनेव यथा सेना सेनापतिना सृष्टाऽवसृष्टाऽभ्यनुज्ञाता सती ।

भयं दधाति जनयतीत्यर्थः ।

बलवाची वामशब्दः बलमादधाति ।

दिद्युदिति वज्रनाम । वज्रनामानि स्वायुधमात्रवचनान्येव ।

प्रतीकं दर्शनमुच्यते ।

IV.24. यमो ह जातः युगपज्जातत्वाद्यमोऽत्राग्निरुच्यते ।

ततश्च समानपितृकत्वाद् भ्रातरौ युवाम् ।

निरामय नियमेन रमय ।

अदूभ्य आदित्यस्ततो मध्यमः ।

845. हे अपांनपात् यस्त्वम् अनिध्मो अनिन्धनोऽपि दीप्यसे ।

यं च त्वाम् अध्वरेषु यज्ञेषु विप्रा मेधाविन ईळते स्तुवते ।

मधुमतीः मधुरसाः मधुरस्वादाः अपो देहि अभिषवाय ।

'यमो'···'यच्छति' उपरमयति जीवितात्सर्वं भूतग्राममिति यमः ।

846. परेयिवांसं पर्यागतवन्तं सर्वतः प्राप्तवन्तम् ।

प्रवतो मनुष्याः ।

उद्वतो देवाः ।

निवतस्तिर्यञ्चः तथा गत्युपपत्तेः ।

वैवस्वतं विवस्वतः पुत्रम् ।

'अग्निरपि यम उच्यते' इति विचारोपप्रदर्शनाय ।

यथाग्निरपि यमशब्देनोच्यते तथेमा ऋचोऽनुप्रवदन्ति ।

847. सेनेव सृष्टा निश्रिता । अथवा । सेनापतिना विसृष्टा प्रेरिता ।

अमं दधाति भयं वा ।

बलं वा दधाति ।

दिद्युत् आयुधम् ।

प्रतीकं दर्शनम् ।

यस्येदमेवंलक्षणमर्चिः स एव यमोऽग्निः ।

848. तौ युवामेवं कृत्वा एकपितृकौ एक जन्मानौ यमौ भ्रातरौ ।

| | |
|---|---|
| सर्वजगत्प्रदेशमातराविस्यर्थः । | मातारौ सर्वस्य लोकस्य निर्मातारौ । |
| किञ्च जारः कनीनां जरयिता कन्यानाम् । | जारः कनीनां पतिर्जनीनाम् । |
| पतिर्जनीनां जनयो भार्यास्तासां पतिः । | पतिर्जनीनां पालयिता जायानाम् । |
| IV.25. प्रथमोऽनुपजातपुरुषसम्भोगेच्छावस्थां त्वां विविदे विन्नवान् लब्धवान् । | सोमः त्वां प्रथमो विविदे विन्नवान प्राप्तवान । |
| 'अग्निर्मह्यमथो इमम्' इति च पठन्ति । तेषामिदमुदाहरणम् । | 849. अग्निर्मह्यमथो इमामिति च केचिदधीयते निगममुपचयहेत्वर्थम् । |
| चराथा चराथया । | चराथा चरन्त्या जंगमया । |
| चरन्त्या पश्वाहुत्या वसत्या निवसन्त्यौषध्याहुत्येति । | पश्वाहुत्या वसत्या च निवसन्त्या औषधाहुत्या । |
| इन्द्रं आहवनीयात्मना दीप्तं सन्तम् । | इन्द्रं समिन्द्र भोगैः सर्वभोगानामीश्वरं प्रदातारमिति । |
| IV.26. प्रमीतेः प्रमीतिः प्रमरणं ततः प्रमरणाद् वृष्टिद्वारेण त्रायते । | प्रमीतिः प्रमरणं ततः सर्वलोकं त्रायते वर्षद्वारेण । |
| मेदयतेर्वा स्नेहनार्थस्य सर्वमसावुदकेन स्नेहयति । | 849,850. 'मेदयतेर्वा' स्नेहनार्थस्य । सर्वं ह्यसावुदकेन स्नेहयति । |
| यातयती 'यति प्रयत्ने' कृष्यादिकर्मसु प्रयत्नं कारयति । | 850. आयातयति कृष्यादिषु प्रवर्तयति तत्कर्मपूर्वकत्वात्कृष्यादिकर्मणाम् । |
| ब्रुवाणः शब्दं स्तनयित्नुलक्षणं कुर्वन् । | प्रब्रवाणः स्तनयित्नुं कुर्वन् । |
| घृतवत् घृतसंयुक्तं जुहुत । | घृतवत् घृतोन्मिश्रं जुहोत जुहुत हे मनुष्याः । |
| 'नैव कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत्' इत्याह । | 851. नित्यं हि ते कर्मवन्तो भवन्त्यारम्भशीलत्वात् । |
| तेन पश्चादयस्तु न कामतः कण्डूयनादिसमर्थाः । | ते हि न कामकारतोऽङ्गानि प्रसारयितुं शक्नुवन्ति । |
| IV.27. क्रमणो वा क्रामत्यन्तरिक्षे । | 'क्रमणो वा' । क्रमणसाधनम् । स्वयमेव वा क्रामति । |
| हिरण्यश्चासौ गर्भश्चेति प्रजापतिस्तत्पुरुषः । | 852. हिरण्यमयश्चासौ गर्भश्चेति समानाधिकरणः । |
| हिरण्यगर्भः समवर्तत संवृत्त उत्पन्न इत्यर्थः । | हिरण्यगर्भः एव अग्रे समवर्तत समभवत् उदपद्यत । |
| पृथिवीमित्यन्तरिक्षनाम । | पृथिवीम् अन्तरिक्षम् । |
| कं देवं हविषा परिचराम । | अनेन चरुलक्षणेनाज्यलक्षणेन वा हविषा तं वयं परिचरेम । |

| | |
|---|---|
| IV.28. गृभेरिति गृणात्यर्थे वर्तमानस्येति वर्णव्यापत्त्या गर्भः प्रधानम् । | 853. 'गृभेः' धातोः गृणात्यर्थे वर्तमानस्य । |
| प्राधान्यादेव च स्तुत्यो गर्भः । | स्तुत्यो हि गर्भः । |
| गृहेरेव गर्भ इति भावः । | तदेवं गर्भग्रहणहेतुकोऽयमिति ग्रहेर्गर्भः । |
| अप्रमोदात्पुनः पुंसः प्रजनं न प्रवर्तते । | प्रमुदितयोः संपर्काद्गर्भग्रहणं च । |
| लिङ्गभेदः केवलम् । | केवलं लिङ्गकृतो विशेषः । |
| मधुमन्तः स्वादुयुक्ताः । | 854. मधुमन्त उदकवन्तः । |
| IV.29. तेभिस्तैर्नोऽस्माकमविता वर्षिता रक्षिता वा भवेति । | तेभिः तैः त्वमस्माकम् अविता तर्पयिता भवेत्येतदाशास्महे । |
| सर्वचेष्टानां तल्लीनत्वात् सर्वस्य कर्ता । | यावदिदं किंचिद्भूतं करिष्यमाणं क्रियमाणं च तस्य सर्वस्य कर्ता । |
| भौवनस्य विश्वकर्मण आर्षमिदम् । | 855. भौवनस्य विश्वकर्मणः प्रजापतेरार्षम् । |
| विमना विविधं भूतजातमुत्पन्नं मनो यस्य सः । | 856. विमना विभूतमनाः विभूतप्रज्ञानः । |
| सन्दृक् सम्यक् प्रविभागेन द्रष्टा । | संदृक् परमः प्रकृष्टः अव्यवधानेन संद्रष्टा सम्यक् प्रविभागेन द्रष्टा । |
| IV.30. तानि समिषा मदन्ति सह मोदन्ते एकीभवन्ति । | समिषा मदन्ति—इषा उदकेन अद्भिः परियुताभिः सुसूक्ष्माभिः सह तेन कर्मणा समानं अविशेषेण मादन्ते । |
| ऋषिशब्देनात्र दर्शनाद्रश्मय उच्यन्ते । | यत्रैतानि सप्तऋषीणानि रसानामाकर्षणानि द्रष्टॄणि वा रश्मीन् ज्योतींषि एकं भवन्ति । |
| विधाता विभागेन दाता शुभानामशुभानां च । | 857. विधाता च तद्योग्यानां विषयाणाम् । |
| तानि इषा अन्नभूतेन शरीरेण योग्येनेत्यभिप्रायः । | तानि इषा अन्नेन सह मोदन्ते तृप्यन्ति । |
| IV.31. तदभिवादिनी तस्य चेतिहासस्यभिवादिनीयमृग् भवति । | 859. तस्यैवार्थस्येतिहासोक्तस्याभिवादिनी आभिमुख्येन वादिनी 'एषा ऋग्' भवति । |
| न्यसीदत् निषण्णो वेद्याम् । | न्यसीदत् एवं कर्मण्यङ्गभावमुपजगाम । |
| पिता नो धर्माधर्मोत्पादनद्वारेण शरीरस्य जनकत्वात् पिता पालयिता वास्माकम् । | 860. स नः पिता जनिता सोऽस्माकं पिता पाता रक्षिता । |
| स आशिषा मनसाभिलषितार्थप्रार्थना आशीस्तया आशिषा । | 859. स आशिषा । आशीः प्रार्थना कामः । |
| IV.32. प्रथमच्छत् प्रथममुत्कृष्टं छादयिता । | 860. प्रथमच्छत् । प्रथमोऽप्रजत्वात् । प्रजापतिभावेन मुख्यस्य छादयिता । |

सोम्यं सोममयं मधु।

IV.43. वेनः......कान्तो दीप्तो मध्यमस्थानः।

पृश्निगर्भाः पृश्निरादित्यस्तस्य गर्भभूता गर्भत्वमापन्नाः।

रजसो विमाने रज उदकं तस्मिन् मीयते उत्पद्यते यस्मिन् तद्रजसो विमानमन्तरिक्षम्। तस्मिन्नायतने स्थितमिति शेषः।

अपां सूर्यस्य च संगमनेऽन्तरिक्ष इत्यर्थः

विप्रा मेधाविनः।

मतिभिः स्तोत्रशस्त्रलक्षणादिभिः।

रिहन्ति पयन्ति...स्तुवन्तीत्यर्थः।...

IV.44. स्तुत्यर्थाल्लिहेर्धातोः।

IV.44. यथा जीर्यति परिणमते उपचयरूपेण गर्भस्तथा तथा जरतीति जरायुर्गर्भस्य वेष्टकः।

दीयते ह्यसौ पुरुषेण स्त्रियै।

तथा च प्रवादः स्त्रीणां प्रत्यग्रगृहीतगर्भाणां चिरलब्धो मे गर्भ इति।

स च मध्यमः प्राणः। प्राणश्च वायुः।

स हि शरीरादुत्क्रामन्नन्यानसून्नयतीति।

जीवातवे चिरजीवनाय।

IV.45. घृतेनोदकेन ...वृष्टिलक्षणेन चोदकेन तनं शरीरं वर्धयस्वात्मनोऽस्माकं च।

देव्यः षट् संख्याकाः...द्यौश्च पृथिवी चाहश्च रात्रिश्चापश्चौषधयश्चेत्येताः।

वीरयध्वं...वीरान् शूरान् वीरवतो वा पुत्रवतोऽस्मान् कुरुतेत्यर्थः।

कष्टं हि पुत्रमरणम्।

मध्यमोऽभिप्रेतो गन्तान्तरिक्षे।

इदं सोम्यं मधु सोममयं तन्मधु।

871. 'वेनः'......सर्वलोककान्तो हि मध्यमः सर्वस्योपकरित्वात्।

पृश्निगर्भाः पृश्निरादित्यः...तस्य गर्भत्वमुपागताः।

रजसो विमाने रज उदकं तद्यत्र निर्मीयते

872. तत्रावस्थितः अन्तरिक्षलोक इत्यर्थः।

872. अपां च संगमे सूर्यस्य च संगमे समागमनस्थाने।

विप्रा मेधाविनः स्तोतारः।

मतिभिः स्तुतिभिः प्रज्ञापूर्वकाभिः।

रिहन्ति......लिहेर्धातोः वर्धयन्ति पूजयन्ति वेत्यर्थवचनम्।

यथा यथा गर्भो भवति तथा तथा तदुत्पद्यते।

दीयते हि स पुरुषेण स्त्रियै धारणाय।

भवति च वादः स्त्रीणामभिनवगृहीतगर्भाणाम् 'अचिरलब्धो मे गर्भः' इति।

स पुनरयमिन्द्रो मध्यमः प्राणः।

स पुनर्यदेतस्माच्छरीरादुत्क्रामत्यथेतरान् प्राणान् 'असून्' अन्यत्र नयति।

873. जीवातवे चिरम् अस्माकं जीवनाय मनो धारय।

घृतेन उदकेन त्वमात्मानं यथाकालं वर्धयस्व।

देवीः षट् द्यौश्च पृथिवी च अहश्च रात्रिश्च आपश्चौषधयश्चेति।

वीरयध्वं वीरान् पुत्रान् इच्छत दातुम्।

874. कष्टं हि पुत्रमरणम्।

इह अभिप्रेयो मध्यमः।

| | |
|---|---|
| शुरुधो वृष्टिलक्षणा आपः सन्ति । | शुरुधः आपः सन्ति विद्यन्ते । |
| IV.46. वृजिनानि पापानि दुर्भिक्षादीनि हन्ति । | 875. वृजिनानि वर्जनीयानि अयशांसि हन्ति नाशयति । |
| ऋतस्यैव श्लोकः स्तनयित्नुलक्षणः । | ऋतस्य एवमतिमहान् श्लोकः शब्दः स्तनयित्नुलक्षणो भवति । |
| आयोर्मनुष्यनामैतत् । | आयोः अयनस्य मनुष्यस्य । |
| इन्दुः कस्मात् ? इन्धतेर्दीप्तिकर्मणः । | 'इन्दुः'—इत्येतत्पदम् । स कस्मात् ? 'इन्धेः'-दीप्त्यर्थस्य । |
| IV.47. इषवान् छान्दसत्वादिषः इळ स्तुतिं प्रतीच्छन् वा । अन्नं वा । | 876. इषवान नित्यं अन्नवान । कामवान् वा । |
| स्तोतृभ्यो देयेनान्नेन स्तुतीच्छया तद्वानित्यर्थः । | कामिनां स्तोतॄणां नित्यमभिमतफलसम्प्रदानोन्मुखः । |
| मननं स्तवनमस्मदीयं प्रेरेजति कम्पते चलति गच्छतीत्यर्थः । | नित्यमस्याकं मन्म रेजति मननानि प्रज्ञानानि रेजयति आकम्पयति । |
| वधैः प्रहारैः । अजेत जयेत । दुर्मतिं पापबुद्धिम् । | वज्रप्रहारैरतिदुःसहैः अजेत जयेत् क्षिपेद्वा दुर्मतिं पापमतिम् । |
| परुच्छेप ऋषिरित्यभिधेयवचनः । | 877. 'तत्' च पुनरेतत् परुच्छेपस्य मन्त्रदृशः शीलम् । |
| स कस्मात् परुच्छेपः ? पर्ववन्महच्छेपोऽस्येति । | 'परुच्छेपः' कस्मात् ? 'परुच्छेप ऋषिः', तस्य हि 'पर्ववत्' महान् शेपः प्रजननम् । |
| IV.48. वाय्वादीनि इन्दुपर्यन्तानि सप्तविंशतिर्यथा समाम्नायमनुक्रान्तानि । | इतीमानि सप्तविंशतिर्देवतानामधेयान्यनुक्रान्तानि । |
| मन्त्रस्वभावप्रदर्शनार्थम् । | देवतास्वभावोपप्रदर्शनार्थमिदमुक्तम् । |
| प्रजापतिः प्रजानां पाता वा पालयिता वेति धात्वन्यत्वमात्रम् । | 'प्रजापतिः'—प्रजानां पाता वा पालयिता वा । |
| त्वमेव परिगृह्णासि रक्षसि वा । | 878. त्वमेवैतानि सर्वाणि सर्वतः परिगृह्य सर्वतो भवसि । |
| वयं स्याम पतयः स्वामिनो रयीणां धनानामित्याशीर्मन्त्रगतैव । | वयं स्याम पतयो रयीणाम् । रयीणां धनानां पतयः 'इति', इयमपरा 'आशीः' । |
| यत्रापि नास्ति तत्राप्येकवाक्यतायै कल्प्येति भाष्यकाराभिप्रायः । | यत्रापि न स्यात्तत्राप्यध्याहार्येति स्तुत्याशिषोर्नित्यसम्बन्धादिति । |
| इह त्विन्द्रो मध्यमोऽभिधेयः । | इह त्वभिधेयो मध्यमः । |

IV.49. यः कर्मात्मना वृष्टिलक्षणास्वप्सु जायते तमब्जाम् ।

बुध्ने बन्धने नदीनां नदीशब्देन शब्दकारिणीनामपां स्थानेऽन्तरिक्षे ।

इदमपीतरद् बुध्नं शरीरमुच्यते ।

इयांस्तु विशेषः । बुध्नमन्तरिक्षं तत्र भवो बुध्न्यः ।

रिषे रेषणाय हिंसनाय । धात् दात् कस्मैचिदपि ।

IV.50. स्रिधत् स्रवत् मा विनशदित्यर्थः ।

ऋतायोर्यज्ञकामस्य ।

एको सहायवान् । असहायो यः सर्वकार्येषु सहायान्तरं नापेक्षत इत्यर्थः ।

स समुद्रमन्तरिक्षनाभितत् । तदाविवेश आविशति ।

भुवनं भूतजातं वि चष्टे पश्यतिकर्मायम् ।

तमेनमेवं रूपं पाकेन मनसा परिपक्वेन मनसाऽहमपश्यं दूरस्थमपि सन्तमन्तितोऽन्तिके सन्निधौ ।

IV.51. पुरूरवा मध्यमस्थानः । विज्ञायते हि 'वायुः प्राण एव पुरूरवाः' इति ।

अस्मिंस्त्वयि वृष्टिप्रदानाय कर्मात्मना जायमाने ।

ग्नाः स्त्रिय आपो मेघस्था वा ।

स्वगूर्ताः 'गुरी उद्यमेन' ताः प्रतिगन्तुं स्वयमेवोद्यताः स्वयंगामिन्य इत्यर्थः ।

रणाय मेघेन सह संग्रामाय अवर्धयन् वर्धयन्ति मध्यमस्थानं देवगणाः ।

ग्नाः स्त्रियो देवानां पत्न्यः ।

असुरैः सह संग्रामाय सर्ववीर्यैरवर्धयन् वर्धि-

879. अहिम्, अप्सुजम् उदकजन्मानम् ।

बुध्ने नदीनां नदनानां अपां बन्धने एतस्मिन्नन्तरिक्षे ।

इदमपीतरत् शरीरं बुध्नमित्युच्यते ।

एतावांस्तु विशेषः, बुध्नमन्तरिक्षं तन्निवासात् ।

रिषे धात् रेषणाय हिंसनाय कस्मैचित् ।

मा स्रिधत् मा सुस्रवत् । नित्यमविनाशेन वर्ततामिति ।

ऋतायोः अस्य यजमानस्य यज्ञकामस्य ।

880. एक एवाद्वितीयः । यस्य पतने गमने प्रतिमानन्यद्द्वितीयं नास्ति ।

समुद्रम् अन्तरिक्षं नित्यम् आविशति ।

भुवनं सर्वाणि इमाणि भूतानि अभिविपश्यति यथा द्रष्टव्यानि ।

तमेवं वर्तमानमहं पाकेन मनसा विपक्वप्रज्ञानेन सर्वगतमपि सन्तम् अन्तिकम् इव अपश्यम् ।

'पुरूरवाः' मध्यमः । विज्ञायते हि 'प्राण एव हि पुरूरवाः' इति ।

881. इतस्मिन् पुरूरवसि जायमाने वर्षकर्मण्यात्मानं प्रतिलभमाने प्रावृट्काले ।

'ग्नाः' आपः ।

स्वगूर्ताः स्वयंगामिन्यः ।

रणाय मेघेन सह रमणीयाय संग्रामाय अवर्धयन् वर्धयन्ति माध्यमिका देवाः ।

ग्ना सर्वा देवपत्न्यः ।

882. असुरैः सह दस्युहत्याय शत्रुवधाय अव-

तवन्तः ।

देवा देवा इत्यध्यायपरिसमाप्तिप्रज्ञापनफलोऽभ्यासः सिद्धः ।

IV.52. इह तु मध्यमोऽभिधेयः ।

अभरत् अहरत् स्वमास्यं प्रापितवान् पीतवानित्यर्थः ।

यत्र सहस्रं सुत्याः कुर्वन्तीति शेषः ।

सहस्रसाध्ये हि यदपि सत्रत्वाद् ऋत्विजां दक्षिणा नास्ति ।

[ पुरन्धिः ] बहुप्रज्ञो बहुकर्मा वा ।

IV.53. अथवा रातिर्दानम् 'अरातयो'ऽदानबुद्धयोऽनधिकृतपुरुषजातीः ।

सूयत इति सोमः ।

तस्यैवैषा स्वतनूश्चन्द्रमाः ।

यद्वायुरिति रसात्मकत्वादशोषणाच्च । सोऽयमध्यात्मापद्यते ।

'तस्य' नैघण्टुकेन प्राधान्येन निदर्शनार्थमुदाहरामः ।

IV.54. अतिशयेन स्वाद्वया मदिष्ठया अतिशयेनैव मदयित्र्या ।

इन्द्रस्य पातुमर्थायेत्यर्थः ।

सोमस्य नैघण्टुकत्वेन योदाहृता सा निगदेनैव व्याख्याता ।

अथ…प्राधान्यस्तुतिप्रतिपादनार्था भवति ।

चन्द्रमसो वा एतस्य [ वा ] प्रकृतस्यौषधिसोमस्य ।

संपिषन्त्योषधिमोषधिरूपम् । के ? सामर्थ्याद् रासायनिकाः ।

सोमं हितं मन्यन्ते यं ब्रह्माणो ब्राह्मणाः ।

IV.55. एवमौषधे सोमेऽर्थयोजना ।

धेयन ।

द्विरभ्यासोऽध्यायपरिसमाप्तौ यस्मात्तल्लक्ष्यते समाप्तम् ।

883. इह त्वभिधेयो मध्यमः ।

अभरत् अपिबत् ।

सहस्रं सुत्यानां यत्र कुर्वन्ति अयुतं च दक्षिणाः प्राप्नुवन्ति न तु दीयन्ते सत्रत्वात् ।

884. अदक्षिणत्वात्सत्राणाम् ।

884. पुरन्धि बहुनो धनस्य दाता ।

रीतिर्दानार्थः तत्प्रतिषेधेनारातिः ।

885. 'सोमः'…यदेनमभिषुण्वन्ति ।

अस्यैषैव स्वा तनूर्यच्चन्द्रमा रसात्मकत्वात् ।

वायुर्वा सोममेवमात्मानमापाद्याभिषूयत इति भवति स मध्यमः ।

उभयम् 'उदाहरिष्यामः' परार्थत्वं स्तुतेः स्वार्थत्वं च ।

स्वादिष्ठया स्वादुतमया मदिष्ठया मदयितृतमया ।

इन्द्राय इन्द्रार्थं पातवे पानाय ।

इन्द्रार्थं पवस्वेत्यस्वार्थता लक्ष्यते ।

886. 'अथ' शब्देन विशेषाधिकारवाचिना स्वप्रधानतां स्तुतेरधिकरोति ।

चन्द्रमसो वाधिदैवमापन्नस्य । ओषधिसोमस्य वाधियज्ञमापन्नस्य ।

यत्संपिषन्ति संचूर्णयन्ति अभिषुत्य पिबन्ति सोममोषधिं केचिद्रासायनिकाः ।

यं ब्राह्मणाः सोमं विदुः ।

'इत्यधियज्ञम्'–इति विषयमुपप्रदर्शयति ।

| | |
|---|---|
| IV.49. यः कर्मात्मना वृष्टिलक्षणास्त्वप्सु जायते तमब्जाम् । | 879. अहिम्, अप्सुजम् उदकजन्मानम् । |
| बुध्ने बन्धने नदीनां नदीशब्देन शब्दकारिणीनामपां स्थानेऽन्तरिक्षे । | बुध्ने नदीनां नदनानां अपां बन्धने एतस्मिन्नन्तरिक्षे । |
| इदमपीतरद् बुध्नं शरीरमुच्यते । | इदमपीतरत्' शरीरं बुध्नमित्युच्यते । |
| इयांस्तु विशेषः । बुध्नमन्तरिक्षं तत्र भवो बुध्न्यः । | एतावांस्तु विशेषः, बुध्नमन्तरिक्षं तन्निवासात् । |
| रिषे रेषणाय हिंसनाय । धात् दात् कस्मैचिदपि । | रिषे धात् रेषणाय हिंसनाय कस्मैचित् । |
| IV.50. स्रिधत् स्रवत् मा विनशदित्यर्थः । | मा स्रिधत् मा सुस्रवत् । नित्यमविनाशेन वर्ततामिति । |
| ऋतायोर्यज्ञकामस्य । | ऋतायोः अस्य यजमानस्य यज्ञकामस्य । |
| एको सहायवान् । असहायो यः सर्वकार्येषु सहायान्तरं नापेक्षत इत्यर्थः । | 880. एक एवाद्वितीयः । यस्य पतने गमने प्रतिमानन्यद्द्वितीयं नास्ति । |
| स समुद्रमन्तरिक्षनामैतत् । तदाविवेश आविशति । | समुद्रम् अन्तरिक्षं नित्यम् आविशति । |
| भुवनं भूतजातं वि चष्टे पश्यतिकर्मायम् । | भुवनं सर्वाणि इमाणि भूतानि अभिविपश्यति यथा द्रष्टव्यानि । |
| तमेनमेवं रूपं पाकेन मनसा परिपक्वेन मनसाऽहमपश्यं दूरस्थमपि सन्तमन्तितोऽन्तिके सन्निधौ । | तमेवं वर्तमानमहं पाकेन मनसा विपक्वप्रज्ञानेन सर्वगतमपि सन्तम् अन्तिकम् इव अपश्यम् । |
| IV.51. पुरूरवा मध्यमस्थानः । विज्ञायते हि 'वायुः प्राण एव पुरूरवाः' इति । | 'पुरूरवाः' मध्यमः । विज्ञायते हि 'प्राण एव हि पुरूरवाः' इति । |
| अस्मिंस्त्वयि वृष्टिप्रदानाय कर्मात्मना जायमाने । | 881. इतस्मिन् पुरूरवसि जायमाने वर्षकर्मण्यात्मानं प्रतिलभमाने प्रावृट्काले । |
| ग्नाः स्त्रिय आपो मेघस्था वा । | 'ग्नाः' आपः । |
| स्वगूर्ताः 'गुरी उद्यमेन' ताः प्रतिगन्तुं स्वयमेवोद्यताः स्वयंगामिन्य इत्यर्थः । | स्वगूर्ताः स्वयंगामिन्यः । |
| रणाय मेघेन सह संग्रामाय अवर्धयन् वर्धयन्ति मध्यमस्थानं देवगणाः । | रणाय मेघेन सह रमणीयाय संग्रामाय अवर्धयन् वर्धयन्ति माध्यमिका देवाः । |
| ग्नाः स्त्रियो देवानां पत्न्यः । | ग्ना सर्वा देवपत्न्यः । |
| असुरैः सह संग्रामाय सर्ववीर्यैरवर्धयन् वर्धि- | 882. असुरैः सह दस्युहत्याय शत्रुवधाय अव- |

तवन्तः ।

देवा देवा इत्यध्यायपरिसमाप्तिप्रज्ञापनफलोऽभ्यासः सिद्धः ।

IV.52. इह तु मध्यमोऽभिधेयः ।

अभरत् अहरत् स्वमास्यं प्रापितवान् पीतवानित्यर्थः ।

यत्र सहस्रं सुत्याः कुर्वन्तीति शेषः ।

सहस्रसाव्ये हि यदपि सत्रत्वाद् ऋत्विजां दक्षिणा नास्ति ।

[ पुरन्धिः ] बहुप्रज्ञो बहुकर्मा वा ।

IV.53. अथवा रातिर्दानम् 'अरातयो'ऽदानबुद्धयोऽनधिकृतपुरुषजातीः ।

सूयत इति सोमः ।

तस्यैवैषा स्वतनूश्चन्द्रमाः ।

यद्वायुरिति रसात्मकत्वादशोषणाच्च । सोऽयमध्यात्मापद्यते ।

'तस्य' नैघण्टुकेन प्राधान्येन निदर्शनार्थमुदाहरामः ।

IV.54. अतिशयेन स्वाद्व्या मदिष्ठया अतिशयेनैव मदयित्र्या ।

इन्द्रस्य पातुमर्थायेत्यर्थः ।

सोमस्य नैघण्टुकत्वेन योदाहृता सा निगदेनैव व्याख्याता ।

अथ···प्राधान्यस्तुतिप्रतिपादनार्था भवति ।

चन्द्रमसो वा एतस्य [ वा ] प्रकृतस्यौषधिसोमस्य ।

संपिषन्त्योषधिमोषधिरूपम् । के ? सामर्थ्याद् रासायनिकाः ।

सोमं हितं मन्यन्ते यं ब्रह्माणो ब्राह्मणाः ।

IV.55. एवमौषधे सोमेऽर्थयोजना ।

धेयन ।

द्विरभ्यासोऽध्यायपरिसमाप्तौ यस्मात्तल्लक्ष्यते समाप्तम् ।

883. इह त्वभिधेयो मध्यमः ।

अभरत् अपिबत् ।

सहस्रं सुत्यानां यत्र कुर्वन्ति अयुतं च दक्षिणाः प्राप्नुवन्ति न तु दीयन्ते सत्रत्वात् ।

884. अदक्षिणत्वात्सत्राणाम् ।

884. पुरन्धि बहुनो धनस्य दाता ।

रीतिर्दानार्थः तत्प्रतिषेधेनारातिः ।

885. 'सोमः'···यदेनमभिषुण्वन्ति ।

अस्यैषैव स्वा तनूर्यच्चन्द्रमा रसात्मकत्वात् ।

वायुर्वा सोममेवमात्मानमापाद्याभिषूयत इति भवति स मध्यमः ।

उभयम् 'उदाहरिष्यामः' परार्थत्वं स्तुतेः स्वार्थत्वं च ।

स्वादिष्ठया स्वादुतमया मदिष्ठया मदयितृतमया ।

इन्द्राय इन्द्रार्थं पातवे पानाय ।

इन्द्रार्थं पवस्वेत्यस्वार्थता लक्ष्यते ।

886. 'अथ' शब्देन विशेषाधिकारवाचिना स्वप्रधानतां स्तुतेरधिकरोति ।

चन्द्रमसो वाधिदैवमापन्नस्य । ओषधिसोमस्य वाधियज्ञमापन्नस्य ।

यत्संपिषन्ति संचूर्णयन्ति अभिषुत्य पिबन्ति सोममोषधिं केचिद्रासायनिकाः ।

यं ब्राह्मणाः सोमं विदुः ।

'इत्यधियज्ञम्'–इति विषयमुपप्रदर्शयति ।

चन्द्रमसि त्वधिदैवतं योज्यते ।

न च तस्याश्नाति कश्चनादेवो देवेभ्योऽन्यः ।

अथानन्तरं चैषापरा पूर्ववद्विकल्पेन प्राधान्यस्तुतिप्रतिपादनार्था भवति चन्द्रमस इतरस्य वा ।

प्रपिबन्ति सवने सवने प्रकर्षेण पिबन्ति सामर्थ्याद् ऋत्विग्यजमानाः ।

रसहरणाद्वा सति शोषणसामर्थ्ये त्वदीयस्य रसस्याशोषणात् ।

IV.56. ओषधिसोमस्य हि प्रत्यहं शुक्लपक्षे एकैकं पर्णमुपजायते द्रक्ष्यत इत्यभिप्रायः

एवमौषधे सोमयोजना ।

चन्द्रमसि तु ।

किञ्च समानां संवत्सराणाम् ।

प्रत्यहमेकैकस्याः कलाया उपजनेनापगमेन च युक्ते रूपविशेषैः ।

IV.57. यद्वा चन्द्रो माता चन्द्रश्चासौ माता च निर्माता वा ।

चन्दतेर्धातोः कान्त्यर्थस्य । कान्तं हि तद् भवति ।

चमेर्वा पूर्वं चम्यमानो रश्मिभिरश्यमानो द्रवति ।

चारु रुचेर्विपर्ययेण ।

एवं पौर्णमासीममावास्यां च निष्पादयन् दर्शपौर्णमासयोर्भागं देवेभ्योऽन्यादिभ्यो विदधाति निष्पादयत्यायन् ।

IV.58. यदा त्वादित्यदेवतो द्वितीयः पादः ।

यद्यपि चादित्यस्य पुरस्तात् पुराणे चन्द्रमसः स्थानं कथ्यते तथापि रसानुप्रदानसामान्याच्च

887. 'अथाधिदैवतम्' इति विषयान्तरमधिकरोति। उक्तं हि 'चन्द्रमसो वा' इति ।

न तस्याश्नाति कश्चन अदेव इति ।

तथा चेयमपरा अन्या प्राधान्यस्तुतिरप्यस्ति सोमस्येत्युपप्रदर्शनार्थमाह ।

888. प्रपिबन्ति प्रारभन्ते पातुमृत्विग्यजमानाः त्रिषु सवनमुखेषु ।

रसहरणाद्वा सर्वरसापहारी वायुः समर्थः सन्यन्न शोषयति तेन सोमो रक्षितो भवति ।

एकैकं पर्णमपचीयते इति ओषधेः सोमस्य चन्द्रमसः सम्पद्यते ।

एवमधियज्ञेऽपि स एव ओषधिः सोमः ।

अथाधिदैवे ( चन्द्रमाः ) ।

889. समानां संवत्सराणाम् ।

889. कलानामुपचयापचयविशेषाभ्यां रूपविशेषाश्चन्द्रमसः प्रतितिथि भवन्ति ।

चन्द्रश्चासौ माता च निर्माता सर्वस्येति चन्द्रमाः । चन्द्रः पूर्वपदं मातोत्तरपदम् ।

'चन्द्रः' कस्मात् ? 'चन्दतेः कान्तिकर्मणः'। नित्यकान्तो ह्यसौ ।

'चमेर्वा पूर्वं' द्रमतेरेवोत्तरपदम् । कोऽर्थः । चम्यमानो भक्ष्यमाणो देवैरसौ द्रमतीति चन्द्रमाः ।

'चारु' कस्मात् ? 'रुचेः आद्यन्तविपरीतस्य' दीप्तिकर्मणः ।

890. एककर्मेऽपि पूर्वपक्षात् पौर्णमास्यमावास्योः स्वगत्या काले तिथिं विभज्य देवेभ्यो ददति ।

891. आदित्यदैवतो द्वितीयः पाद इत्येके ।

ननु सूर्यात्परतः शतसहस्रे योजनानां चन्द्रमसः स्थानमिति पौराणिकाः स्मरन्ति ।

स्थानवत्त्वं तावदुपपन्नम् ।

कर्मसंयोगेन तु द्युस्थानत्वे सति सर्वदेवतानां विशेषस्थाननियमो विवक्षितः ।

शतशब्दो बहुनाम बहुबलान्यक्षाणि यस्य षडिन्द्रिय इत्यर्थः ।

892. बहुबलानि अक्षाणि इन्द्रियाणि यस्य स शतबलाक्षः बह्विन्द्रियः ।

मुद्गलस्य पुत्रो मौद्गल्यः स मन्यत इति शेषः ।

मुद्गलस्यापत्यं मौद्गल्य ।

तथा च श्रुतिः–'प्राणमुत्क्रामन्तं सर्वे प्राणा उत्क्रामन्ति' इति ।

विज्ञायते हि—'प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' इति ।

IV.59. मा नोऽस्मकं प्रजां दुहितृप्रभृतिं मा रीरिषो हिंसीः । मोत ( उत ) चार्थे मा च वीरान् पुत्रान्पौत्रांश्च ।

मा त्वमस्माकं प्रजां पुत्रान् पौत्रांश्च रीरिषो हिंसीः । मा उत वीरान् अन्यानपि येऽस्मदाश्रयाः पुरुषास्तानपि मा हिंसीरिति ।

IV.60. मन्दमानाय मोदमानाय । शब्दक्रियो वा महिः । शब्दाय्यमानाय ।

893. मन्दमानाय हृष्यमाणाय । अथवा । शब्दाय्यमानाय ।

एवं पृथिवीस्थानादन्यत्व उक्ते विष्णुर्विश्वानरो वरुणः केशीति द्युस्थानादपि च विश्वानरादवच्छेत्तुम् । परापि भवति ।

894. द्युस्थानोऽपि हि विश्वानरः समाम्नातः । अस्यां तु परस्यां व्यपदेशादुत्तमेन ज्योतिषा विश्वानरस्यासंशयं मध्यमत्वमित्येवमुदाह्रियते ।

उदश्रेत् उदश्रयदुच्छ्रितं कृतवान् करोति वा, ···वायोश्च विश्वानरत्वात् ।

उदश्रेत् उच्छ्रयति ऊर्ध्वमुपनयति विश्वानरो मध्यमो वायुः ।

IV.61. यतः क्रत्वादिकर्मणा देवानां रशमीनामजनिष्ट जातम् । किं तत् ? उष आख्यं चक्षुर्जनिता आविरक आविष्करोति ।

895. क्रत्वा तत्कर्मणा देवानां रश्मीनां चक्षुः ख्यातं प्रकाशः अजनिष्ट जायते उषाः ।

धाता मध्यमस्थानो वर्षकर्मणा सर्वस्य विधाता ।

'धाता' कस्मात् ? स हि सर्वस्य विधाता स्रष्टा । उदकपूर्वकत्वात् सर्वविधानस्य मध्यमः ।··

विधाता धात्रा व्याख्यातः । तस्यैषा । देवतान्तरैः सह स्तुतिसंनिपातो बहुदेवतायामृचि ।

'विधाता, धाता व्याख्यातः' । धातेव विधाता तस्यैष निपातो भवति स्तुतिसाधारण्येन बहुदेवतायामृचि ।

IV.62. कला अवयवाः शेरतेऽवतिष्ठन्ते समुदाये हि अवयवाः समुदायवृत्त्या वर्तन्ते । समुदायाद् विक्षिप्ता मात्राः कला इति ।

896. 'कलशः...कला अवयवाः सोमसमुदायात्केचित्पृथक्कृताः । ते शेरते आसते अस्मिन् ।'' कला अपि विक्षिप्ता भवन्ति कुतश्चित्समुदायादिति ।

अथेति गणाधिकारः ।

897. अथातःशब्दावुक्तार्थौ तयोः पुनरुपन्यासो बहुवचनविशिष्टोऽयमपरोऽधिकार इति ।

आश्रितभेदो वायुर्बहुवचनान्तेन मरुच्छब्दे·

वायुरेव हि भेदेनापेक्ष्यमाणो मरुदभिधानो

नाभिधीयते ।

सर्वे एव च मध्यमस्थाना देवगणा मरुतः ।

सर्वा स्त्री मध्यमस्थाना,

पुमान् वायुश्च सर्वगः ।

गणाश्च सर्वे मरुत-

इति वृद्धानुशासनम् ॥

IV.63. पौराणिकास्तु मारीचात्काश्यपाद्दित्यां जज्ञिरे मरुतां (सप्त) सप्तका गणा इत्याहुः ।

बहुप्रकारं शब्दं कुर्वन्ति ।

स्वश्वैः शोभनगमनैरित्यर्थः । अर्चन वार्कैः स्वर्चैः सुस्तुतिभिरित्यर्थः ।

IV.64. सुमायाः मायेति कर्मवचनं प्रज्ञानाम वा सुकर्माणः सुप्रज्ञा वा ।

आ गन्तनेति सम्बन्धः । रुद्रासो हे रुद्राः ।

सुविताय सुविगमनाय यज्ञकर्मणे यज्ञसमाप्त्यर्थमित्यर्थः ।

तृष्णजे न नशब्द उपमार्थीयः । तृष्णा पिपासा यस्मिन् काले जायते तया वा यो जयति स तृष्णजो ग्रीष्मान्तस्तस्मिन्निव काले ।

IV.65. उत्सा मेघा उदन्यवे उदककामस्य जनस्यार्थायागच्छन्ति तद्वदागच्छत ।

ऋभवो वक्तव्याः । विद्युतप्रकाशनमुरु विस्तीर्णं भान्ति । उरुशब्दात् ऋकारो रेफोऽज्भक्तिश्च । भातेराकारलोपः ।

IV.66. विष्ट्वी विष्ट्वा व्याप्य कृत्वेत्यर्थः । शमीति कर्मनाम कर्माणि प्रख्यातानि ।

सौधन्वनाः सुधन्वन आङ्गिरसस्य पुत्राः । ऋभवः ऋभुप्रभृतयः,...ऋभुर्विभ्वा वाज इति । तदेतदार्भवानि 'किमुश्रेष्ठ' इत्यस्य सक्तस्य संस्तवेन युक्तानि सर्वर्ग्वेदशाखासु बहूनि

बहुवचनभाग् भवति ।

नैरुक्तसमयस्तु सर्व एव गणा मरुतः ।

उक्तं च वार्तिके—'मध्यमा वाक्स्त्रियः सर्वाः पुमान् सर्वश्च मध्यमः । गणाश्च सर्वे मरुतो गणभेदाः पृथक्कृतेः' ।

अग्नौ पुराणे चैत एव प्रसिद्धाः सप्तस्कन्धवायुविचारिणो मारीचात् कश्यपाद्दित्यां ये जज्ञिरे । बहुप्रकारं च ते रुवन्तीत्यर्थः ।

898. स्वश्वैः सुगमनैः । यद्वा । स्वर्चैः शोभनमर्चनम् येषां तैः, सुष्ठु पूजितैः ।

सुमायाः । हे सुमायाः सुकर्माणः सुप्रज्ञा वा ।

899. हे रुद्रा आगच्छत यूयम् ।

सुविताय एतस्मै कर्मणे सुष्ठु सगुणाय यथाशास्त्रं क्रियमाणाय प्राप्त्यर्थम् ।

900. तृष्णजे न तृष्णजे इव । तृडुपजायते यस्मिन् विशेषतः काले स तृडुपजः कालो घर्मान्तः तस्मिन् यथा ।

उत्साः...उत्सप्रभवा मेध्या आपः उदन्यवे उदकमिच्छते लोकाय आगच्छन्ति प्रावृषि तथास्मन्मत्या प्रतिहर्यमाणा आगच्छतेति ।...

'ऋभवः' कस्मात् ? उरु भान्तीति वा । ते हि बहु भान्ति दीप्यन्ते । उरुशब्दात्पूर्वपदं भातेरुत्तरपदम् ।

901. 'विष्ट्वी शमी' इति द्वे अपि कर्मनामनी । यतोऽजामितायै भाष्यकारः पूर्वं तावन्निराह 'कृत्वा' इति, किं कृत्वा ? शमी कर्माणि ।...

ऋभुर्विभ्वा वाज इति सुधन्वन आङ्गिरसस्य त्रयः पुत्राः बभूवुः ।

आर्भवाणां मन्त्राणां स्वभावोपप्रदर्शनार्थमाह ।...

ऋभुणा वाजेन च बहुवन्निगमा भवन्ति...स

सूक्तानि विद्यन्ते।

ह्याभिवाणां मन्त्राणां स्वभावः।'''ऋभोश्च बहुवचनेन चमसस्य च संस्तवेन बहुनि दशतयीषु सूक्तानि भवन्ति।

मन्त्रस्वाभाव्यमुपलक्षणीयं मन्त्रव्यभिचारप्रदर्शनायाह–'आदित्यरश्मयोऽप्यृभव उच्यन्ते'। इति उदाहरणम्।

'आदित्यरश्मयोऽप्यृभव उच्यन्ते' इत्यभिधेयव्यभिचारमुपप्रदर्शयति।

IV.67. किञ्च अगोह्यस्य गृहितुमशक्यं स्यादित्यस्य।

902. किञ्च। अगोह्यस्य योऽयम् अगोह्यः आदित्यः अगृहनीयः न गृहितुं शक्यः केनचिदपि अस्य।'''

ततश्च युष्मद्विना निरालोकोऽयं लोकः।

ततश्च युष्मद्विनाभावे निरालोकोऽयं लोकः सम्पद्यते।

अङ्गिरसः 'अङ्गारेष्वङ्गिराः' इति व्याख्याता। वचनकृतो विशेषः।

अङ्गिरसो व्याख्याता, एकवचनेन 'अङ्गारेष्वङ्गिराः' इति।

IV.68. ऋषयो द्रष्टारो मन्त्राणामतिमेधसः।

903. ऋषयः अवितथस्य ब्रह्मणो द्रष्टारः।'''

त अङ्गिरसोऽङ्गिरा नाम ऋषिस्तस्य सूनवः पुत्रास्ते अग्नेरग्नितः सकाशात् परिजज्ञिरे पारंपर्येण जाताः। अग्नेः सकाशादङ्गिराः।

ते अग्नेः परि जज्ञिर इति। अग्नित्वमापन्नस्याङ्गिरसोऽधि सकाशाद्ये जज्ञिरे ते एते।

ऊर्ध्वे पितृलोकमीरतां गच्छन्तु। अवरेऽवस्थाः पृथिवीस्थाः।

ये तावत् अवरे पितरः पृथिवीमाश्रितास्ते तावत् उदीरताम् ऊर्ध्वे गच्छन्तु।

किञ्च असुं प्राणं य ईयुर्गताः। स्थूलं विग्रहं त्यक्त्वा सूक्ष्माः प्राणरूपतामापन्ना इत्यर्थः।

904. असुं य ईयुः प्राणमात्रमूर्तयः अस्थूलविग्रहाः।

IV.69. सोमसम्पादिनः कर्मण्यंगभावं गच्छन्तः सोमं सम्पादयन्ति।

सोम्यासः सोमसम्पादिनः कर्मण्यङ्गभावमुपगच्छन्तो ये सोमं सम्पादयन्ति।

अपरेषां परेषां च मध्यस्थानत्वप्रतिपादनायाह माध्यमिको यमः। स च तेषां राजा पितृपतिरुच्यते,'''मन्यन्ते नैरुक्ताः।

'माध्यमिको यम इत्याहुः नैरुक्ताः। तस्मात्पितॄन्माध्यमिकान्मन्यन्ते स हि तेषां राजेति।

अथर्वणं निराह–अथनवन्त इति, नैरुक्तधातुश्चरत्यर्थः,'''गमनवन्त इत्यर्थः। तत्प्रतिषेधोऽथर्वणमगमनम्। तेनाथर्वणेनागमनेन तद्वन्तोऽथर्वन्तः सन्तोऽथर्वाणः।

'अथर्वाणः' कस्मात्? ते ह्येते 'अथनवन्तः'। किमिदमथनं येन ते तद्वन्तः। यत आह थर्वतिश्चरतिकर्मा गच्छत्यर्थः। ततः किम्? तत्प्रतिषेधः। पुरस्तादकारः। न थर्वन्तीत्यथर्वाणः।

नवग्वा मासे मासे पिंडपितृयज्ञे गतिर्येषाम्।

905. नवग्वाः नवगतयः पितृयज्ञानागन्तुं येषां प्रतिमासं नवा गतिर्भवति।

IV.70. नवनीतगतय इति। विज्ञायते हि 'स्वयं विलीनमाज्यं पितॄणाम्' इति।

नवनीतगतयो वा...विज्ञायते हि। 'स्वयं विलीनं पितॄणाम्' इति।

अंगिरा इत्यादि मध्यमस्थानो देवगण इति नैरुक्ताः। तदधिकारे समाम्नानात्।

माध्यमिको देवगण इति नैरुक्ताः। ऋभवोऽङ्गिरसो भृगवोऽथर्वाण इति'''पितर इत्याख्यानम्।

पितर इत्याख्यानविदः पौराणिकाः स्मरन्ति। ते सनत्कुमारादयो देवविशेषा एव।

त एव ऋभुसनत्कुमारादय इत्याख्यानविदः स्मरन्ति।

प्रसङ्गादाह—अथाप्यृषयः स्तूयन्त इति।

907. एवमृषयोऽपि स्तूयन्त इति प्रदर्शयत्ययमप्यस्तीति मन्त्राणां विषय इति।

IV.71. आप्त्या इन्द्रसहचारिमध्यमस्थानो देवगणः। तेषामेव स्तुतिसन्निपातो भवति ऐन्द्रयामृचि। तमिन्द्रमहं स्तौमीति वाक्यशेषः।

'आप्त्याः'-अपीन्द्रसहचारिण ऋषिय एकतद्वितत्रिताः।'''ऋषिपक्षे मध्यस्थानाः। स्तुषेय्यं स्तोतव्यम् अहं स्तौमीन्द्रम्।

सप्त दानून् दातॄनुदकस्य मेघान्। दानवचनो दानुशब्दः। नमुचिप्रभृतीन् दानवानित्यर्थः।

908. सप्त दानून् सप्त दातॄन् मेघान्। असुरान दानवान। नमुचिप्रभृतीन् पृथक्त्वपक्षे।'''

IV.72. एतदुक्तं भवति। यान्यस्योपमानान्युपादीयन्ते तेभ्योऽधिकतर इन्द्र उणः।

य आप्नोत्यभिभवति च प्रतिमानानि भूरि बहून्यपि। तदुक्तम् 'यैरेनं प्रतिमिमते नैनं तानि दभ्नुवन्ति' इति।

प्रथमागामित्वं चादितेरदीनत्वाद् देवमातृत्वाच्च।

'तासामदितिः प्रथमागमिनी भवति'। सा कस्मात्। उक्तं हि 'अदीना देवमाता' इति।

अदितिः प्रातस्तनी सन्ध्या। सा चावश्यायलक्षणरसानुप्रदानसम्बन्धान्मध्यमस्थाना वोच्यते।

अहोरात्रे मित्रावरुणौ। न तयोर्वा सन्धिवेला तस्यां प्रथममवश्यायरसानुप्रदानसम्बन्धात्तां मध्यमामदितिमभिप्रेत्योच्यते।

IV.73. शब्दश्रुतिसामर्थ्याद्वा दक्षस्य वा जन्मनि त्वत्तस्तव वा जन्मनि दक्षादित्येवमध्याहार्यम्। त्वत्तो जायमान आदित्ये आदित्याद्वा त्वयि जायमान इत्यर्थः।

911. आदित्यो दक्षो दाक्षायण्यदितिरिति'''एवं कृत्वोक्तम् 'इतरेतरजन्मानावितरेतरप्रकृती'इति।

IV.73. परोर्धर्चो दक्षस्य विशेषणार्थः। अतूर्तपन्थास्त्वरतेस्तूर्तोऽतूर्तस्त्वरावर्जितः पन्था यस्य स''' योऽतूर्तपन्था इत्यादिगुणस्तस्य दक्षस्य जन्मनीत्येवं यत्तावध्याहृत्यैकवाक्यता योज्या।

910. अथवा। दक्षस्य वा। यदा दक्षस्त्वत्तो जातो व्रते च कर्मणि प्रवृत्तः स्वाधिकारयुक्तोऽयम् अतूर्तपन्थाः पुरुरथो अर्यमा सप्तहोता विषुरूपेषु जन्मसु''' '''इत्यैतिहासिकपक्षे योजना

हविष्मान् आविवासति इति परिचर्यायामित्यस्य सिद्धये दृष्टान्तः।

विवासतिः परिचर्यायाम्—इत्यत्र निगमः—

देववीतये वीतिर्गतिर्देवान् प्रति वीतये गमनाय। अशनार्थो वा वीतिः। देवैर्भक्षणाय।

देववीतये देवभोजनाय।

IV.74. अथ कोऽयं दक्षः ? अदितेः पुत्र आदित्यो दक्ष इत्याहुर्ब्रह्मविदः। आदित्यमध्ये च स्तुन इति।

'इमा गिर आदित्येभ्यः' इत्यत्र इदं तर्हि कथं यदैतिहासिका आहुः। अदितिर्दाक्षायणीति। उभयमपि चेदं निगमे श्रूयते। आदित्यो दक्षोऽदितिर्दाक्षायणीति। तद्यथा 'आदितेर्दक्षो अजायत' इत्युदाहरणम्।

'आदित्यो दक्ष इत्याहुः' देवता सतत्त्वविदः। केन दर्शनेन ? 'आदित्यमध्ये च स्तुतः'।

'इमा गिरः'। इत्युपक्रम्य ब्रवीति 'तुविजातो वरुणो दक्षो अंशः' इति आदित्यमध्ये स्तुतेरादित्य एवासाविति।

911. यद्येवं नन्विदमपरं विरुध्यते यदैतिहासिका आहुः—'अदितिर्दाक्षायणी' इति। उभयमपि चैतन्निगमे श्रूयते आदित्यो दक्षो दाक्षायण्यदितिरिति—तद्यथा 'आदितेर्दक्षो अजायत···'।

IV.75. समूदे समुदितवती संवादं कृतवतीत्यर्थः। एवमियमाख्यानपक्षे योजना।

यदा तु माध्यमिकवाक् सरमा तदैवम्। अनावृष्ट्या पीडितो नदन्तं स्तनयित्नुमुपश्रुत्य सासूयं मन्त्रदृगाह। किमिच्छन्ती सरमा मध्यमस्थाना वाक्।

913. समूदे संवादं कृतवतीत्यर्थः। इत्याख्यानविद एवं मन्यन्ते।

वाक्पक्षे तु चिरकालीनवृष्ट्युपरमे कदाचिदभिनवमेघसं वे सहसैव स्तनयित्नुमुपश्रुत्य कुत इयं माध्यमिका वाक् चिरेणागतेति विस्मितस्तामसूयन्निव ब्रवीति—'किमिच्छन्ती सरमा' इति।

सरस्वती नदीवत् 'इमं मे गङ्गे' इत्यत्र व्याख्याता। देवतावद् व्याख्यायते। तथा च 'तत्र सरस्वतीत्येतस्य' इत्यादिनोत्कृष्टस्य देवतापदस्यायमवसरः।

914. सरस्वती व्याख्याता नदीवत् इति। तद्देवतावत्—इत्युक्तमिदं तव।

IV.76. सरस्वती मध्यमस्थाना वाक्।

धियावसुः धीरिति कर्मनाम। वस्विति धननाम...यस्याः सा कर्मधना प्रज्ञाधना वा।···

केतुशब्दोऽपठितोऽपि कर्मनाम प्रज्ञानामैव वा।

सरस्वती माध्यमिका वाक्।

धियावसुः कर्मधना।

915. केतुना स्वेन कर्मणा प्रज्ञया वा।

IV.77. यस्मात् माध्यमिकां वाचं मन्यन्ते नैरुक्ताः।···

अविचेतनानि अप्रज्ञातार्थानि स्तनयित्नुलक्षणानि शब्दरूपाणि।

तस्मान्माध्यमिकां वाचं मन्यन्ते नैरुक्ताः।

916. अविचेतनानि अविज्ञातार्थानि शब्दरूपाणि स्तनयित्नुलक्षणानि।

IV.78. तस्यैषापरा। किमर्था ? इयमेव माध्यमिका वाक् सर्वप्राण्यन्तर्गता धर्माधर्माभिवादिनी भवतीति विभूत्युपदर्शनार्था भवतीति।···

अनुमतिः कस्मात् ? अनुमननात्। अनु-

तस्या एषापरा भवति। सा पुनः किमर्थम् ? इयमेव वाक् सर्वप्राण्यन्तर्गता माध्यमिकी सर्वार्थाभिवादिनीति भवतीति विभूत्युपप्रदर्शनार्थम्

917. अनुमतिः अनुमननात्। अनुमता किलेय-

मता किलासौ देवैर्ऋषिभिश्च चतुदशके पक्षे।

IV.79. वामदेवस्य। इत् पदपूरणः। अनुमन्यासै अनुमन्यस्व यदनुमन्तव्यम्। हे अनुमते त्वं शं (च) सुखं च नोऽस्माकं कृधि। इषमन्नं च तोकायापत्याय नोऽस्माकं स्वभूताय··· देहि। प्रतारिष इति सम्बन्धः। तरतिश्च वृद्धयर्थः। प्रवर्धय च नोऽस्माकमायूंषि।

पञ्चदशके पक्षे राकेत्युच्यते पञ्चदशी प्रतिपद्वा। राका कस्मात्? रातेर्दानार्थस्य। दीयते हि तस्यां देवेभ्यो हविः।

IV.80. उक्थ्यम् वक्तव्या प्रशंसा यस्य तं वक्तव्यप्रशंसमनुपक्षीणकीर्तिमित्यर्थः।

सिनी चासौ वालिनी चेति सिनीवाली देवपत्नी।

IV.81. कुहूः कस्मात्? गूहतेर्धातोः। गूढो ह्यदृश्यश्चन्द्रमास्तत्र तत्र भवति। अतश्चन्द्रमसो गूहनाद्वर्णव्यापत्त्या कुहूः।

क्वाभूदिति वा। तस्यामप्रत्यक्षत्वाद्वितर्क्यश्चन्द्रमा भवति।

IV.82. अथवा तस्यै ते इति द्वे अपि चतुर्थ्यौ द्वितीयार्थे। हविषेति (तु) तृतीया स्वार्थ एव। तां त्वां हविषा विधेम परिचरेम।

यमी यमं चकमे। तामसावनया प्रत्याचचक्षे। एवं संवादसूक्तशेषः।

यदा नैरुक्तपक्षे मध्यमस्थाना यमी तदा मध्यमस्थानो यमो वायुर्वैद्युतो वा वर्षकाले व्यतीते तामाह।

IV.83. उर्वशी व्याख्याता उरु अभ्यश्नुते इत्यादिना। तदिहापि यथासम्भवं योज्यं निर्वचनम्।

उर्वशीपुरूरवसोः सम्वादे पुरूरवा मध्यस्थान

ऋषिभिर्देवैश्चातुर्दशके पक्षे।

918. अन्विदनुमत इति। वामदेवस्यार्षम्। देविकासु विनियोगः। हे अनुमते त्वम् अनुमन्यासै अनुमन्यस्व अस्माकं यदनुमन्तव्यं त्वया शं च नस्कृधि। सुखं चास्माकं कुरु। इषम् अन्नं चास्माकं तोकाय अपत्याय धेहि। आयूंषि च न प्रतारिषः प्रतीर्णानि कुर्वित्येतदाशास्महे।

सैव पौर्णमासी पञ्चदशके पक्षे 'राका' इत्युच्यते। सा पुनः कस्मात्? रातेर्दानकर्मणः, हविर्दाननिमित्तं हि सा भवति।

919. उक्थ्यम् वक्तव्यप्रशंसं च अपरिसमाप्तस्तुतिम्।

920. सिनिनी च सा वालिनी चेति सिनीवाली।

921. 'कुहूः गूहतेः'। निगूहत्यसौ चन्द्रमसम्।

क्वाभूदिति वा। तस्यामप्रत्यक्षत्वाद्वितर्क्यश्चन्द्रमा भवति।

तस्यै तुभ्यं हे देवि कुहु हविषा विधेम। दद्म इत्यर्थः। अथवा। त्वां हविषा परिचरेमेति।

292. यमी किल यमं चकमे भ्रातरम्। तां किल यमोऽनयर्चा प्रत्याचचक्षे।

त्रित्वपक्षे तु माध्यमको यमो माध्यमिकां वाचमुषसमात्मनः प्रविभक्तामिव कृत्वोभयस्थानां तां ब्रवीति।

923. 'उर्वशी व्याख्याता'।...तदिहापि देवतायां योज्यम्। 'उर्वभ्यश्नुते'। बहूदकं व्याप्नोति।

मध्यमः पुरूरवाः त्रित्वपक्षे ब्रवीति।

ऐळोवा। नैरुक्तपक्षे मध्यमस्थानः स्तनयित्नु-
लक्षणाया वाचोऽधिष्ठात्री या देवता तामाह।

IV.84. यदा त्वैतिहासिकपक्षस्तदा उर्वश्यप्सरा पुरू-
रवाश्चैळः।
तस्याः सकाशादाहितगर्भाया यदा जनिष्टो
जनिष्यते आयुर्नाम।
नर्यो नृभ्यो हितः...नरापत्यमिति चेत्यैति-
हासिकरक्षाभिप्रायः।
पृथिवी व्याख्याता 'प्रथनात् पृथिवी' इति।
इह तु मध्यमस्थानाभिधेया।
बळिति सत्यनाम। इत्थाशब्दोऽमुत्रेत्यस्मि-
न्नर्थे। सत्यममुत्रान्तरिक्षे।

IV.84,85. हे महिनि महो महत्वमुदकं वा प्रभूतं तेन
तद्वति तदाह भाष्यकारः महतीत्युदकवती
वेति।

IV.85. इन्द्राणी माध्यमिका। इन्द्रस्य वा पत्नी।

तमेतमिन्द्रमधिकृत्यैतद् ब्रूम-इत्याह भाष्यकारः
तस्याः प्रकृताया एषापरा। किमर्थमिति नेत्
उच्यते। नेह प्रसिद्धो वृषाकपिः ऋषिः।
किन्तर्हि? वृषानोऽभिप्रेतः। नैरुक्तानां तु
तदुपप्रदर्शनायेन्द्रो ब्रवीति।

IV.86. अत्र नैरुक्तपक्षप्रदर्शनायोच्यते। किं योऽय-
मिति वृषाकपिरिति प्रसिद्धो मनुष्येषु। नेत्यु-
च्यते। यस्येदमप्यं हविरिति। देवतायाश्च
हविषा सम्बन्ध (इति) नैरुक्ता। ऐतिहासिक-
पक्षे तु यस्य स्वभूतमिति स्वस्वामिसम्बन्धः
प्रदर्शितः। तदेतद् ब्रूम इत्याह भाष्यकारः
पूर्ववत्।
गौरी मध्यमस्थाना स्तयित्नुलक्षणा वाग्
विद्युद्वा। या दीप्त्या दीप्तत्वाद्रोचतेर्ज्वलति-
कर्मण इत्याह।

924. ऐतिहासिकपक्षे त्वैलः पुरूरवाः उर्वश्या अप्स-
रसा वियुक्तो ब्रवीति।
मम नरस्यापत्यमायुर्नाम राजा यं पुराणविदः
कथयन्ति।
नर्यो नृभ्यो हितः पथ्यः सत्यसङ्कल्पकरः 'नरा-
पत्यमिति वा' इत्यैतिहासिकपक्षं द्योतयति।
'पृथिवी व्याख्याता'। 'अथ वै दर्शनेन
पृथुः' इत्यत्र। इह तु माध्यमिका।

925. बळ इति सत्यस्य नाम इत्थेति अमुत्रेत्यर्थः।

हे महिनि महति। अथवा। उदकवति।

'इन्द्राणी-इन्द्रस्य पत्नी'। इन्द्रस्य विभूतिः
पृथक्त्वे वा निर्ज्ञाता पौराणिकैः।

926. तमेतम् इन्द्रमधिकृत्य ब्रूम-इत्याचार्यो ब्रवीति
तस्या एषापरा भवति। सा पुनः किमर्थम्?
ऋषिर्वृषाकपिः प्रसिद्धः। स पुनरादित्योऽभि-
प्रेतो नैरुक्तानाम्। तदुपप्रदर्शनायापरामाह।

927. सख्युर्वृषाकपेर्ऋते। य एष मम सखा वृषा-
कपिस्तस्मादृते। किं योऽयमृषिर्मनुष्येषु
प्रसिद्धः। नेत्युच्यते।

'गौरीः रोचतेः' ज्वलत्यर्थस्य। माध्यमिका
वाक्। सा पुनर्दीप्तिमती।

IV.87. मध्यमेन एकपदीत्युच्यते। द्विपदी द्वाभ्यां सहकारिकारणाभ्यां मध्यमेन चादित्येन द्विपदी। ...मध्यमैव गौरी न गुणयोगादन्या काचिदित्यर्थः।...समुद्राः समुद्र इत्यन्तरिक्षनाम। तात्स्थ्याच्च ताच्छब्द्यम्। समुद्रस्थाः समुन्दनकारिणो वा मेघाः।

928. मध्यमेन सहैकत्वमापन्ना। द्विपदी मध्यमेन चादित्येन च।
गौरीति गुणाभिधानमप्रसिद्धाभिधेयं छन्दसि देवतायाम्।
समुद्राः मेघाः।

IV.88. गौर्मध्यस्थाना वाक्। अमीमेदनु मीयतिः शब्दकर्मा अन्वमीमेत्। स्तनयित्नुलक्षणेन शब्देनानुशब्दयति। वत्सं रसहरणसामान्यादात्मनो वत्सं वत्सभूतमादित्यम्।

929. गौः माध्यमिका वाक् पुत्रं अन्वमीमेत् अनुशब्दयति महद्भिः। स्तनयित्नुशब्दैः आदित्यम्।

घर्मधुगिति याज्ञिकाः। अतस्तदभिप्रायेणान्यथा मन्त्रस्य योजना। गौर् घर्मधुक् सानुशब्दयति वत्सं मिषन्तं तामेव मातरं निरीक्षमाणम्। मूर्धानं चास्य जिघ्रतीति शेषः। हिङ्करोति मातेव ज्ञानायात्मनः।

930. घर्मधुक्पक्षे—गौरेव गौः, अन्वमीमेत् अनुशब्दयति वत्समेव वत्सं मिषन्तं तमेवोन्मुखं पश्यन्तम्। एवमपि च प्राप्य मूर्धानं अस्य उपघ्राय हिङ्ङित्येवं शब्दं करोति।

धेनुर्मध्यमस्थाना धयतेर्वा पानार्थस्य। पीयते हि सा तत्प्रवृत्तवृष्ट्युदकद्वारेण। धिनोतेर्वा प्रीणनार्थस्य प्रीणयति हि सा कृत्स्नं जगत्।

धेनुः धयतेर्वा। धीयतेऽसौ वत्सेनेति। 'धिनोतेर्वा'। तर्पयत्यसावुदकेन पयसा वा।

IV.89. घर्मधुक्पक्षे पयो यजुर्भिः साविषत् (अभि) सुवतु अभ्यनुजानातु संश्रयमाणं पयो यजुष्मदिति संस्कारेण यजुषा तद्वत्। सुप्रब्रवीमीति पाठः।
अघ्न्या मध्यमस्थाना। कस्मात्? अघघ्नी अघस्य दुर्भिक्षादेर्हन्त्री। अहन्तव्या वा घर्मधुक्पक्षे स्पर्शनेनाघस्य पापस्य हन्त्री।

931. घर्मधुक्पक्षे...श्रेष्ठम् अतिशयेन प्रशस्यमेतं सवम् एतत् यजुष्मत्पयः साविषत् सुनोतु अभ्यनुजानातु सविता। यद्धि सवित्रा प्रसूतं क्रियते तदेव साधु भवति।
अघ्न्या कस्मात्। सा हि सर्वस्यैव 'अहन्तव्या भवति'। 'अघघ्नीति वा'। सा हि पापं हन्ति यदि वाग्यदि गौः।

IV.90. भगवती भगं धनं तेनैव रश्म्युपहृतेनोदकाख्येन धनेन धनवती। हिशब्दः पदपूर्णः भूया भव। अथोऽनन्तरं तेनैव त्वत्प्रवृत्तेन धनेन वयमपि भगवन्तो धनवन्तः। स्याम भवेम।

भगवती धनवती उदकेनोदकवती भव। अथ इदानीमेव त्वयि भगवत्यां वयमपि त्वदुत्सृष्टेनोदकेन भगवन्तो धनवन्तः स्याम।

तस्या एषापरा वसुसम्बन्धत्वान्माध्यमिकत्वप्रदर्शनार्था।

932. 'तस्या एषापरा भवति' सा पुनः किमर्थम्? रूपतो हि पूर्वस्मिन् मन्त्रे घर्मधुक् सुतरामु

हिङ् इत्येव रूपं स्तनयित्नुलक्षणं कुर्वती । वसुपत्नी वसु धनं वृष्ट्युदकाख्यं तस्याधिपतिभूता ।

पद्यते यतः परया वसुभिर्देवैः सम्बन्धान्माध्यमिकैव देवतेत्युपपादयति । हिङ् इत्येव प्रकारं शब्दं स्तनयित्नुं कुर्वती वसुपत्नी वसूनामुदकानामीश्वरा ।

IV.91. पथ्या स्वस्तिः प्रकरणान्मध्यमस्थाना । तन्निवासात । पथ्यन्तरिक्षे भवा पथ्या स्वस्तिशब्दोऽप्युक्तनिर्वचनः । प्रायणीयायां 'पथ्यां स्वस्ति प्रथमां प्रायणीये यजति' इति यथा दृष्टे द्वे पदे एवं समाम्नाते ।

933. 'पथ्या स्वस्तिः' इति वक्तव्यम् । अत्र पूर्वपदं पन्था अन्तरिक्षम् । तन्निवासात् पथ्या स्वस्तिरित्युक्तं निर्वचनम् । यथा प्रायणीयायां यजतिप्रयोगो दृष्टस्तथा समाम्नातः 'पथ्यां स्वस्ति पूर्वां यजति' इति ।

IV.92. देवगोपा देवी चासौ गोप्त्री च देवानां सा गोप्त्री च । देवा वा गोप्तारो यस्या इत्येवमाशास्यते या सा देवगोपा ।

देवगोपा देवी चासौ गोप्त्री चेति देवगोपा । देवान दातॄनस्मान् गोपायत्विति वा । हविषो गोपायतु । अथवा । देवा माध्यमिका द्युस्थाना वा रश्मय एनां गोपायन्त्विति वा ।

अनसः अनितेरनो वायुस्तस्मात् ।

934. अनसो वायोः ।

IV.93. अथवा अनः शकटम्...अनस इव यथा कश्चिदनस शकटात् स्तेनादिना संपिष्टात् संपिष्यमाणादित्यर्थः । शाकटिकोऽपसर्पेत् तद्वत् ।

'अनो वायुरनितेः' धातोः प्राणनार्थस्य । अपि वोपमार्थे स्यात् । अनस इव शकटात् यथा शाकटिकः शकटात्केनचित् संपिष्यमाणादपसर्पेदेवं वायुना संपिष्यमाणान्मेघादपासरदुषा इति द्वितीया कल्पना ।

तस्या एषापरा । किमर्था ? उत्तमाप्युषा आदित्यसंश्रया । इयं तु मध्यमा मेघसंश्रया इति प्रदर्शनायाह ।

'तस्या एषापरा भवति' । सा पुनः किमर्थम् । उत्तमापि ह्युषा आदित्यसंश्रयाद्भवति । इयं तु मध्यमा मेघसंश्रया वायोरेव संस्तवादिति मध्यमास्वभावप्रायोवृत्त्युपप्रदर्शनार्थम् ।

एतदिति वृष्ट्युदकं भूमिगतं प्रदर्शयन्नाह । अस्या उषस आधाराधेयसम्बन्धेन सम्बन्धि । अनः शकटं मेघाख्यम् ।

935. विशीर्णमुदकभावेन पृथिव्यां संक्लेद्य अवस्थितं दर्शयन् ब्रवीति मेघम् । एतदस्याः उषसः अनो मेघाख्यमाश्रयभूतम् ।

IV.94. यूथस्य माता गजादेः पशुजातस्य यत्किंचिद् यूथं तस्य सर्वस्य मातृभूता । मेघयूथस्य वा निर्मात्री ।

936. यूथस्य माता मेघयूथस्य निर्मात्री मध्यमा ।

IV.95. रोदसी मध्यमस्थानस्यैव रुद्रस्य पत्नी । श्यावाश्वस्य । रंहतेर्गतिकर्मणो रथस्तं मेघम् ।

रोदसी रुद्रस्य पत्नी', रुद्रस्य विभूतिः ।

937. श्यावाश्वस्यार्षम् । अग्निमारुते विनियोगः ।

नु क्षिप्रम् । मारुतं मरुतां सम्बन्धिनम् । तेन सम्बन्धेन घनकलकललक्षणेन वयं श्रवस्युं श्रवणीयम् । आहुवामहे···आह्वयामहे ।

IV.96. अथातो द्युस्थाना देवता मध्यमस्थानानन्तरं समाम्नायक्रमेण लिङ्गवचनविभागेन व्याख्यायन्त इति शेषः ।

तत्काले मध्यमस्थानस्य हीयमानरूपत्वाद् द्युस्थानस्य च प्रतिक्षणमुपचीयमानरूपत्वात् । तदनन्तरं क्रमेणोपचीयमानप्रकाशद्युस्थानदेवतारूपा···ज्योतीरूपोत्तमाद्यनुरोधेन च द्युस्थान एव ( वा ) ।

अश्विनौ कस्मात् ? यस्मादश्नुवाते व्याप्नुतः कृत्स्नं जगत् । ( केन ) रसेनावश्यायरसेनैको मध्यमः तेजसाऽन्य उत्तमः । अश्वैस्तद्वन्ताविर्त्यौर्णवाभो मन्यत इति शेषः ।

IV.97. तत्कावश्विनाविति । तदिति वाक्योपन्यासे । किं पश्न । द्यावापृथिव्यावश्विनावित्येके आचार्या मन्यन्ते । विज्ञायते हि—तौ यौ प्रत्यक्षावश्विनाविमे एव ते द्यावापृथिव्यौ' । द्यौर्ज्योतिषा व्यश्नुते पृथिवी रसेनान्नलक्षणेन ।

तत्र च कालेऽनुतमो भागो हि ज्योतिषा मध्यमः । ज्योतिर्भागमेवानुगतस्तमसा उत्तम आदित्योऽश्विशब्दवाच्यः ।

IV.98. आगच्छन्तावश्विनावदृष्ट्वा आगतौ च सहसैव दृष्ट्वा वामदेव एवमाह ।

तयोरेतस्यामृच्युपवर्णितयोरूर्ध्वमर्धरात्रादित्येवं समानकालयोः ।

तत्र व्यभिचारं दर्शयति असंस्तवेनेति—पृथक्स्तवेनेत्यर्थः । एष वक्ष्माणोऽर्धर्चः । तस्य च पूर्वस्मिन् मन्त्रे वसातयो राज्यो न जन-

स्तोता ब्रवीति । नु क्षिप्रं वयं रथम् आहुवामहे आह्वयामहे मारुतं मरुत्संयुक्तं श्रवस्युं श्रवणीयं यशस्विनम् ।

939. व्याख्याता मध्यस्थाना देवताः सवचनलिङ्गविशेषाः । अधुना तेनैव समाम्नायानुक्रमेण द्युस्थाना व्याख्येयाः ।

सत्यप्यवियोगे प्राथम्यात् प्रथमस्य समाम्नानं युक्तमिति चेन्न तत्कालेन मध्यस्थानस्य हीयमानरूपत्वाद् द्युस्थानस्य च वर्धमानरूपत्वात् अतोऽनन्तरं च द्युस्थानदेवता रूपान्तरसंस्थानादिति ।

940. 'अश्विनौ' कस्मात् ? 'यद्व्यश्नुवाते सर्वम्' । केन । रसेनान्यः । रसेनोदकेन सर्वम् व्यश्नुते व्याप्नोति । ज्योतिषैकः । अश्वैरश्विनावित्यौर्णवाभः । अश्वैस्तद्वन्तौ ताविर्त्यौर्णवाभ आचार्यो मन्यते ।

'तत्कौ अश्विनौ' इति विचारः । तदिति वाक्योपादाने । काविताविश्विनाविति विचारार्थः प्रश्नः । 'द्यावापृथिव्यावित्येके' । विज्ञायते हि—'तौ यौ प्रत्यक्षदैवतमश्विनाविमे एव द्यावापृथिव्यौ' इति । द्यौर्ज्योतिषा व्याप्नोति पृथिव्यन्नेन ।

तत्र यत्तमोऽनुप्रविष्टं ज्योतिषि तद्भागो मध्यमस्य रूपम् । यज्ज्योतिस्तमस्यनु प्रविष्टः तद्भागं तद्रूपम् 'आदित्यः' ।

941. उपजातदेवतादर्शनचक्षुरतीतेषु रात्रिपर्यायेषु सन्ध्यौ प्राप्ते सहसैवाश्विनौ दृष्ट्वा मन्त्रदृग्ब्रवीति।···

'तयोः' अश्विनोः समानकालयोः । उभयोरपि हि तयोरूर्ध्वमर्धरात्रात्काल इति समानकालः।···

नन्वस्यामृचि वसातिषु स्म चरथ इति वसातयो हि जनपदा अपि प्रसिद्धाः । तदधिपती राजानौ पुण्यकृतौ अश्वैस्तद्वन्ताविति शक्यते

पदा: । अश्विनौ च मध्यमोतमौ न राजानौ पुण्यकृताविति । अस्यार्थस्य प्रतिपादनार्थमस्यार्धर्चस्योपादानम् ।

IV.99. वसाते रात्रे: पुत्रोऽन्य एक उच्यते जनैर्मध्यमः । उषस: पुत्रोऽन्य उत्तमः । तदनन्तरं जन्मत्वात् । पृथक्स्तुतित्वं च । एकैकस्याभिजनसम्बन्धप्रदर्शनात । उषस: पुत्रत्वेन सूर्येण सह समानख्यानाद् (वासात्यस्य) असंशसं मध्यमो वासात्यो रात्रे: पुत्र: (निश्चित:) । तयोरेषापरा भवति । मध्यमोत्तमावश्विनावित्यस्यैव द्रढिम्न: कारणं संस्तवप्रदर्शनाय च ।

इहेहेति वीप्साद्रिवचनेनान्तरिक्षे द्यौश्च निर्दिश्यते इह चान्तरिक्षे इह च दिवि । जाता जातौ भवन्तौ । समवावशीतां सम्यगत्यर्थं पुन: पुनर्वावशेते ( शस्येते ) स्तूयेत इत्यर्थः ।

IV.100. तयोरेषापरा संस्तुतप्रायं दर्शयितुम् ।

तयोरेवैषापरा प्रातरेवानयोर्यागोपीति प्रायमेव दर्शयितुम् ।

IV.101. तयो: काल: प्रागुक्तः । ऊर्ध्वमर्धरात्रात्प्रकाशीभावस्यानुविष्टम्भमिति । सम्प्रति तु परावधिप्रदर्शनाय तयो: स्तुतिकाल ऊर्ध्वमर्धरात्राद्य: सूर्योदयपर्यन्तो द्रष्टव्य: । उदितो यागकाल: ।

यथोक्तं 'उषा: कस्मात् उच्छतीति सत्या:' इति द्युस्थानाया विकल्प: ।

IV.101,102. तदाह उच्छतेरितरेति । सा ह्युदकानि विवासयति विवास्यते वा

कल्पयितुम् ।........मा भूदेषा मन्त्रार्थयोजनेत्यत आह । 'वासात्यो अन्य उच्यते ...'इति ।

942. एको वासात्य उच्यते एकश्च उषस: पुत्र इति । एवमेतस्मिन् भिन्नस्तुतावर्धर्चे उषस: पुत्रेण सूर्येण सह समानख्यानादसंशयं मध्यमो वासात्यो रात्रेः पुत्र इति ।

'तयोरेषापरा भवति' । सा पुनः किमर्थम् । मध्मोत्तमावश्विनावित्यस्यैवार्थस्य दृढतायै स्फुटं यदेतस्यामेतत्परस्यामृचि ।

हे अश्विनौ युवामुच्येथे । इहेह जातौ इहं च मध्यस्थाने इह च द्युस्थाने जातौ समवावशीतां संस्तूयेथे ।

943. 'तयोरेषापरा भवति' । सा पुनः किमर्थम् । संस्तुतप्रायावितौ समानकालौ समानकर्माणावित्युक्तं तदुपप्रदर्शनार्थम् ।

'तयोरेषापरा भवति' । सा पुनः किमर्थम् । नैवानयोरन्यस्मिन् काले इज्यास्ति । यद्यपि क्रियेतानिज्यैव सेति सुतरां परया संस्तवं कालं चोपप्रदर्शयति ।

944. 'तयो: कालः सूर्योदयपर्यन्त:' । 'प्रकाशीभावस्यानुविष्टम्भम्' । इयत: कालात्प्रभृतिसूर्योदयपर्यन्तस्तयोः काल: । ततः परं यागकाल: ।

यच्चोक्तम् 'उच्छतीति सत्या:' इति तद्वेदं विकल्पेन द्युस्थानाया: ।

किं तर्हि 'उच्यते' एव सा विवासनार्थस्य । उदकानि विवासयति विवास्यते वा मघान्

मेघान्मध्यमेन ।

तस्या एषापरा उत्तमसम्बन्धलिङ्गप्रदर्शनार्था ।

IV.103. एकस्या एवोषसः पूजार्थं बहुवचनम् । भवन्तो मे गुरव इति यथा ।

निरित्येष समित्येतस्य स्थाने । संस्कुर्वाणा आयुधानीव धृष्णवो यथा भस्मगोमयपरिमार्जनादिभिः संस्कारैः संस्कुर्वन्ति आयुधानि योद्धारो दीप्तिमन्ति कुर्वन्ति तद्वदित्यर्थः । उपसर्गव्यत्ययस्य मन्त्रान्तरेऽप्यर्थं दर्शयितुमाह—'एमीदेषां निष्कृतम्'...इति ।

IV.104. कवषस्य वाक्षस्य वार्षम् ।

जारिणीव यथा जारि (णी स्त्री) चारित्ररक्षासंकल्पं परित्यज्य स्त्री संकेतस्थानं प्रतियन्तीति ।

सूर्या । एषैवोषा सूर्या सम्पद्यते आदित्योदयकालं प्रत्यभिसृतकालतमा ।

IV.105. अथवा शल्मलिमिति प्रसिद्धो वृक्षविशेष एवोच्यते । तद्विशेषणं सुकिंशुकमिति । लुप्तोपमं चैतत् । किंशुकमिति यद्यपि पलाशकुसुमं प्रसिद्धं तथापीह लोहितत्वसामान्यात् पुष्पत्वसामान्याच्च किंशुकशब्देन शाल्मलिपुष्पमुच्यते । सुपुष्पितमिव शाल्मलिं लोहितायमानमित्यर्थः ।

IV.106. किंशुकं क्रंशतेर्गिति । क्रंशतिर्नैरुक्तधातुः प्रकाशनार्थः ।

नैरुक्तपक्षे च सविता सुषुम्नाख्यः सूर्यरश्मिस्तत्कृतां ज्योत्स्नां दुहितृभूतां सोमाय राज्ञे

मध्यमेनेति ।

945. 'तस्मा एषापरा भवति' सा पुनः किमर्थम् ? पूर्वस्यामृचि चित्रं धनमाहरेत्युक्तम् । तच्च पुनरुभयोरप्युषसोरविशिष्टम् । विशिष्टं तु परस्यामुत्तमलिङ्गं—'पूर्वे अर्धे रजसो भानुमञ्जते' इति । अतः परोदाह्रियते ।

946. 'एकस्या एव पूजनार्थे बहुवचनम्' इति वचनभेदप्रतिसमाधानम् ।

निरित्येष समित्येतस्य स्थाने सामर्थ्याद् व्यत्ययः । संस्क्रियमाणानि ह्यायुधान्यतिनिर्मलानि भवन्ति ।

यथा चोपपद्यते उपसर्गव्यत्ययस्तथा निगममुदाजहार । 'एमीदेषाम्' इति ।

946. कवषस्य वाक्षस्य वार्षम् ।

947. जारिणीव व्यभिचारिणीव काचित्स्त्री चारित्रमात्मनोऽविगणय्येति ।

'सूर्या'...यथा सूर्यस्योदयकालं प्रत्यभिसृष्टतमा भवति गततमा भवति तथा तथा सैषा उषाः सूर्या सम्पद्यते ।

948. 'अपि वोपमार्थे स्यात् । सुकिंशुकमिव शल्मलिमिति' । किंशुकमिति पलाशपुष्पे प्रसिद्धिः । इह तु रक्तपुष्पत्वसामान्यात् सुपुष्पितमिव शल्मलिमिति सामर्थ्यात् । तेनोपमानयोग आदित्यस्य पुष्टतर इति किंशुकशब्दः पुष्पिते शल्मलौ गौण इति भाष्यकाराभिप्रायः ।

'किंशुकं क्रंशतेः' धातोः प्रकाशनार्थस्य । तद्धि दीप्तिमद्भवति ।

'सविता सूर्यां प्रायच्छत्सोमाय राज्ञे प्रजापतये वेति च ब्राह्मणम्' । नैरुक्तपक्षे ज्योत्स्नां सोमाय

प्रायच्छत् । यदा प्रजापतये तदा मध्यमा योषा उदकप्रयत्नो न दीयंत इति योजयन्ति केचित् । वृषाकपायी वृषाकपेरादित्यस्य पत्नी । एषैव सूर्या । अभिसृष्टकालतमा अरुणोदयावस्था उषः प्रभैव सूर्यावस्थाना अभिसृष्टकालतमा पूर्ववद्वृषाकपाय्युच्यते ।

सुपुत्रे मध्यममस्याः पुत्रमाह साहचर्याद्रसहरणाद्वा माध्यमिकां च स्नुषां ताभ्यां सुपुत्रे सुस्नुषे च ।

IV.107. स्नुषा कस्मात् ? साधुसादिनी (इति) वा साधौ शोभनेऽर्थे श्वशुरस्य सन्तानलक्षणे परिचर्यालक्षणे वा सीदत्येवंशीला । साधुसानिनीति वा ( तां वा ) संभजत एवंशीला । ( स्वपत्यं सन्तनोति वा ) अथवा स्नुशब्दो ( अपि ) अपत्यनाम तत्सनोति । यं प्रति स्नुषाव्यपदेशस्तस्यापत्य संभजत इति ।

उक्षा उक्षतेर्वृद्धयर्थस्य । वर्धयन्ति हि त ओषधीरवश्यायाः । अत एव वा बहुत्वाद् वृद्धा भवन्ति । स्वार्थ एव वा उक्षन्ति सिञ्चन्ति सर्वमधोभागवत्युदकेनेति ।

IV.108. सरण्यूः । सैव यदा सूर्यं प्रत्यात्मानं सरणेन नयति तदोष.प्रभारुणोदयावस्थाभिसृतकालतमा सरण्यूरुच्यते ।

द्वा मिथुना द्वौ मिथुनौ स्त्रीपुंसौ मध्यमंच तमोभागं तदन्तर्गतां च माध्यमिकां वाचं तच्च तदासीद् वृषाकपाय्या रक्तं रूपं तेन रूपेण सह त्रितयमपीत्यर्थः ।

ऐतिहासिकपक्षे (तु) सरण्यूर्नाम त्वष्टुर्दुहिता । तां देवतारूपत्वादमृताममरणधर्माणं मर्त्येभ्यः सर्वे-

IV.109. मनुष्येभ्यो (देवा) अपागूहन् नाशितवन्त

ददाति । उषसं वा मध्यस्थानाय प्रजापतये ददाति । केचित्त्वैतिहासकपक्षे इच्छन्ति ।

949. 'वृषाकपायी-वृषाकपेः पत्नी' । वृषाकपिरादित्यः । तस्य पत्नी तद्विभूतिः उषःकाले यदवश्यायान् वर्षति कम्पयति च तद्गुणयोगात् । सा पुनः एषैव सूर्या 'अभिसृष्टकालतमा' वृषाकपायीत्युच्यते ।

सुपुत्रे'''इन्द्रेण रसहरणसामान्यात्सहस्थानसामान्यात् । सुस्नुषे माध्यमिकया वाचा मिथुनसामान्यात् ।

950. 'स्नुषा साधुसादिनीति वा साधुसानिनीति वा' । सन्तानलक्षणे सीदति अङ्गभावमुपैति स्नुषा । साधु सनोति संततिं संभजतीति वा स्नुषा । 'स्वपत्यं तत्सनोतीति वा'–सु इत्यपत्यनाम प्रसूयते हि तदिति । तदियं श्वशुरस्य सनोति संभजतीति वा स्नुषा ।

उक्षणः उक्षतेः वृद्धयर्थस्य । वर्धयन्ति हि ओषधीरवश्यायाः । त एव वा बहुत्वाद्वृद्धा भवन्ति । उक्षतेर्वा सेचनार्थस्य । 'उदकेन' ह्यवश्यायाः सर्वमिदं सिञ्चन्ति ।

'सरण्यूः' इति वक्तव्यम् । सैव यदा सूर्यं प्रति अविभागेन प्रसृता भवति तदा 'सरणात्' सरण्यूरित्युच्यते ।

951. द्वा द्वौ मिथुना मिथुनौ सरण्यूः । 'मध्यमं च माध्यमिकां च वाचमिति नैरुक्ताः' । यदा हि सरण्यूरादित्यस्य सकाशं मण्डलमनुप्रविष्टा भवत्यविभागेन तदोदिते आदित्ये विच्छिद्यते मध्यमस्य माध्यमिकायाश्च वाचः काल इत्येष तयोस्त्यागः । 'यमं च यमीं चेत्यैतिहासिकाः'... तां त्वाष्ट्रीं सरण्यूमश्वां कृत्वा तथा सत्यश्विनोर्जन्म भविष्यं पश्यन्तो लोकहिताय अमृताम्

इत्यर्थः ।

IV.109. विवस्वत एव सकाशाद् द्वौ मिथुनौ स्वपुत्रौ यमं च यमीं च सरण्यू इति । इतिहासदर्शनाभिवादिन्येषा ऋग्भवति ।

त्वष्टा देवः । दुहित्रे षष्ठ्यर्थे चतुर्थी स्वस्या दुहितुः सरण्यूनाम्न्याः । वहतुं वहनं विवाहं कृणोति करोतीति । एतेन कारणेन संपरिहाणारार्थम् ।

नैरुक्तपक्षे त्वस्यामृचि त्वष्टा मध्यमस्तमोभागस्तस्य दुहिता उषाः । तेन रात्रिरूपेण स्वैरुदये

IV.110. जन्यमानत्वात्तस्या वहनं प्रापणमनुप्रवेश आदित्ये तं स मध्यमस्त्वष्टा रात्रिरूप आत्मापगमनेन करोति ।

रात्रिरादित्यस्येति च रात्रिशब्देन रात्रेरेकदेशत्वादुषा एवोच्यते सम्बन्धत्वात् । सा च देवधर्मेणादित्यस्य माता ।

द्यौरेव न भूमिः । आविर्भूतप्रकाशा उदेष्यतादित्येन कीर्णा रश्मयो यस्या एवमस्थः ।

IV.111. यान्यनेन संगच्छता तमसा पिहितान्यनुपलभ्यमानत्वादगृहीतानि विश्वा तानि विश्वाणि सर्वाणि रूपाणि घटपटस्तम्भादीनि प्रतिमुञ्चते मनाक् क्रमापनयेनोपलभन प्रतिमुञ्चतीव ।

विनाकमख्यदिति सवितुः कालोपलक्षणार्थे मन्त्रलिङ्गम् । तत्पशुगुणसामान्येन समर्थयन्नाह– 'अधो रामः' इत्यादि ब्राह्मणम् ।

IV.112. तद्वेलायां तस्यां वेलायामधस्तम उपरिष्टाज्ज्योतिर्विकीर्णरश्मित्वात् ।

अमरणधर्मिणीं देवीमपागूहन् अन्तर्हितां चक्रुः मर्त्येभ्यो मनुष्येभ्यः ।

द्वावन्यौ मिथुनौ यमं च यमीं चेति विवस्वतः सकाशादजहात् हित्वा ननाशेति 'तत्रेतिहासमाचक्षते' । ऋजुरितिहासाथः ।

952. त्वष्टा देवो विश्वकर्मा यं पुराणविदो वदन्ति स दुहितुः वहतुं वहनं विवाहं करोतीति ।

नैरुक्तपक्षे तु त्वष्टा मध्यमस्तमोभागस्योषसो दुहितुः दूरे हितायाः प्रकाशरूपायाः वहतुं वहनं विवस्वतः करोति ।

संक्षेपतो भाष्यकारोऽर्थं निराह—'रात्रिरादित्यस्य' उषा जाया । सा 'आदित्यस्योदयेऽन्तरधीयते ।

953. यदा यस्मिन काले द्यौरेवापहततमस्का भवति न पृथिवी । पृथिव्यां तमो भवति । दिव्यपहते तमसि विक्षिप्ता अस्यां रश्मयो भवन्ति । स सावित्रः कालः ।

954. विश्वानि सर्वाणि रूपाणि रूपवत्सु अर्थेषु प्रतिमुञ्चते आबध्नाति तमोऽपघ्नन् रूपाण्याविःकुर्वन् ।

'वि नाकमख्यत्' इति सवितुः कालोपलक्षकं मन्त्रलिङ्गं तत्पशुगुणसामान्येन समर्थयन्नाह— 'अधोरामः सावित्रः' इति पशुसमाम्नाये विज्ञायते ।

उपरिष्टाच्च ज्योतिः । शुक्लं तदा दिवि भवति कीर्णरश्मित्वात्तस्याः । अधस्तात्तु भूम्यां तदा तमो भवति ।

एतस्माद्देवतागुणसामान्यात्पशुरपि सावित्रस्त-द्रूप एवाघोराम इति ।

कृकवाकुशब्दस्य पूर्वं कृक इत्येतत् तच्छब्दानु-करणनिमित्तम्, वचेरुत्तरम् । कृक इत्येवं ह्यसौ ब्रवीतीति कृकवाकुः ।

IV.113. ज्योतिर्भग (उच्यते) इत्यस्यैवार्थस्य द्रढिम्नः कारणमाह । 'अन्धो भग इत्याहु'र्ब्रह्मवादिनः । तत्कथम् ? नास्मिन् द्रष्टृणां धान्यदर्शनमस्ती-त्यर्थः । अनुत्प्रमः सूर्याभावमनागतो मण्डला-कारतया न दृश्यत इत्यर्थः ।

अथवा प्राशित्रस्येक्षणभक्षणादीनि मन्त्रवन्ति कर्तव्यानीति । अस्य विधेः स्तुतिपरेऽर्थवादे तद्भगाय परिजह्रुः । तस्य 'अस्याक्षिणी निर्जघान' इत्यादौ भगस्य सिद्धमन्धत्वमैति-हासिकपक्षे, तत्तु मन्दप्रयोजनम् ।

IV.114. सूर्यो वाच्यः । स पुनः सर्तेः प्रागवस्थातः सरणात् । सुवतेर्वा सुकर्मसु जगतः प्रेरणात् । स्वीर्यतेर्वा वायुना ह्ययं सुष्ठु सर्वदैवोदयास्तमयौ प्रतीर्यतेऽतः सूर्यः ।

केतवः केतुरिति प्रज्ञानम् । प्रज्ञानसतत्वाः । ...अश्वैरपि प्रज्ञानसतत्वैर् (एव) भवितव्यम् । अथवा केतवो रश्मयः ।

सौर्ये सूक्ते जातवेदस्पदसन्निधानशङ्काव्यावृत्त्यर्थ-माह कमन्यमिति । परा च यत्र जातवेदश्शब्दो (अपि) नास्ति ।

IV.115. चित्रं प्रातर्मध्यन्दिनापराह्णेषु नानारूपत्वाच्चित्रं चायनीयं वा पूज्यं ज्योतिः ।

तथा च विज्ञायते रहस्यब्राह्मणे सर्वानुप्रवेशि-त्वम्–'सूर्य आत्मा जगतस्तस्थुषश्चेत्येतदुहैवो-पेक्षेत' इति ।

चक्षुर्मित्रादीनामित्यत्रापि विज्ञायते–'असा-

एतस्मात् कालदेवतागुणसामान्यात् पशुरपि तथारूप एव भवति सावित्रः ।

955. कृकवाकुशब्दस्य पूर्वपदं शब्दानुकरणम् । 'कृकः' इत्येवमसौ शब्दं करोति । 'वचेरुत्तरम्' वाकुरित्येतत् । कृक इत्येवं वक्तीति कृकवाकुः ।

956. आह । 'अन्धो भगः इत्याहुः' । तस्य कोऽर्थ इति । उच्यते । स हि सूर्यभावम् 'अनुत्सृतो न दृश्यते' । नास्मिन् द्रष्टृणां ध्यानं दर्शनम-स्तीत्यन्धः । न पुनरसावेव न पश्यतीति ।

'प्राशित्रमस्याक्षिणी निर्जघान' इति च इत्यैति-हासिकपक्षाभिप्रायोऽयमर्थवादः प्राशित्रस्य भागस्यानन्वीक्षणस्तुत्यर्थम् ।

'सूर्यः' इति वक्तव्यम् । स पुनरयं भगकालात सृतः सूर्यो भवति । सर्तेर्वा सूर्यः । 'सुवतेर्वा' प्रसवार्थस्य, स एव हीदं सर्वं प्रसुवति जनय-तीत्यर्थः । स्वीर्यतेर्वा...वायुना ह्ययं सुष्ठु ईर्यते ।

957. केतवः रश्मयः अश्वा वा ।

957. जातवेदसं सूर्यमिति श्रवणात्संदेहः, किमियं जातवेदस्युत सौरीति । परा त्वसंशयमेव सौरीति परा निजगाद ।

चित्रं चायनीयं पूजनीयम् ।

958. विज्ञायते हि रहस्यब्राह्मणे–'य एष सूर्य आत्मा जगतस्तस्थुषश्च' इति । एतदिहैवोपेक्ष्यमिति । भेदपक्षे तु मित्रप्रभृतीनामेतच्चक्षुरिति । याज्ञिकपक्षे चक्षुषा ते पश्यन्तीति । तत्रापि

वादित्यो देवानां चक्षुः' इति।

विज्ञायते हि। 'एष वै विश्वेषां देवानां चक्षुः' इति।

( अनन्तरं ) पूषा वक्तव्यः । स कस्मात् ? यद्रश्मिपोषं पुष्यति। यद्यदा रश्मिभिः परिविष्टो भवति तदा पूषा भवति।

'अथ यत्' यदा 'रश्मिपोषम्' आपूर्णस्तेजसा रश्मीन् सूर्यः 'पुष्यति' बिभर्त्ति 'तत्' तदेव 'पूषा' भवति।

IV.116. शुक्रशब्दोऽत्र शुक्लपर्यायः शुक्लं ते तव। अन्यदेकम्। किं पुनस्तत् ? सामर्थ्याद्रूपम्। यजतं ते अन्यत्। यजतशब्दोऽत्र शुक्लप्रतियोगत्वाल्लोहितपर्यायः। लोहितं ते अन्यदपरं रूपम्।

हे पूषन्! शुक्रमन्यत् तव रूपम्, यल्लोहितमन्यत्तव रूपम्। शुक्लेन व्यपदेशात्सामर्थ्याल्लोहितादि। यजतं यज्ञियं यज्ञार्हमन्यत्।

'इयं वै पूषा' इति पृथिवीतो व्यवच्छेदाय पथि रक्षितृत्वाधिकारप्रदर्शनाय वा पूष्णः परा च।

959. पथि रक्षितृत्वे पूष्णोऽधिकारः । तत्परिप्रख्यापनार्थम्। अथवा 'इयं वै पूषा' इति विज्ञायते। तद्व्युदासार्थम्।

IV.117. अभ्यानट् अभिव्याप्नोति स्तौतीत्यर्थः। चन्द्राग्राः चन्द्रं चन्दतेः कान्तिकर्मणः। कान्तं प्रियमग्रं यासां ताश्चन्द्राग्राः । आयत्यामपि हि तानि धनानीत्यर्थः।

'अभ्यानट्'स्तुत्या कामप्राप्त्यर्थमभिव्याप्नोमि।··· शुरुधश्चन्द्राग्राः। शुचं संरुन्धन्ति यानि धनानि चायनीयाग्राणि अभिपूजितागमानि।

अनन्तरं विष्णुर्वक्तव्यः स किमवस्थः? यद्विषितो भवति यदा विविधं सितो रश्मिभिर्व्याप्त इत्यर्थः।

960. अथ यत् यदा 'विषितो' व्याप्तोऽयमेव सूर्यो रश्मिभिः भवति तदा विष्णुः भवति।

IV.118. विष्णुः कस्मात् ? विशतेस्तीव्ररश्मिद्वारेण सर्वत्र व्यावेशात्। व्यश्नोतेर्वा विश्वं रश्मिभिर्व्यश्नुत इति।

'विशतेर्वा' यदाविष्टः प्रविष्टः सर्वतो रश्मिभिर्भवति तदा विष्णुर्भवति। व्यश्नोतेर्वा। विपूर्वस्य वाश्नोतेः। यदा रश्मिभिरतिशयेनायं व्याप्तो भवति व्याप्नोति वा रश्मिभिरयं सर्वं तदा विष्णुरादित्यो भवति।

स्थानभेदप्रकारेण त्रिप्रकारं निधत्ते पदम्। पृथिव्यामग्न्यात्मना। अन्तरिक्षे विद्युदात्मना। दिव्यादित्यात्मना। एतच्च शाकपूणिमतम्।

त्रेधा निदधे पदं निधत्ते पदम्। निधानं पदैः कः ? तत्र तावत् 'पृथिव्यामन्तरिक्षे दिवीति शाकपूणिः' । पार्थिवोऽग्निर्भूत्वा पृथिव्यां यत्किञ्चिदस्ति तद्विक्रमते तदधितिष्ठति । अन्तरिक्षे विद्युदात्मना, दिवि सूर्यात्मना।

अथवा त्रेधा निदधे पदमिति प्रातरुदयगिरौ।

961. 'समारोहणे' उदयगिरावुद्यन् पदमेकं निधत्ते।

मध्यन्दिने मध्ये द्युलोकस्य। सायाह्नेऽस्तगिरौ।

'विष्णुपदे' मध्यन्दिनेऽन्तरिक्षे। 'गयशिरसि' अस्तं गिरौ। 'इत्यौर्णवाभः' आचार्य एवं मन्यते।

पांसुरे पांसवो यस्मिन् स सन्ति पांसुरो रो मत्वर्थीयः।

'पांसुरे' इति रो मत्वर्थः।

IV.119. त्रेधा निदधे पदं यद्विद्युदात्मकस्य पदं तत्समूढं छन्नं नित्यं न दृश्यत इत्यर्थः। क्व? पांसुरे प्यायने वर्धने वान्तरिक्षे (इत्यभिप्रायः) लुप्तोपमो वा पांसुरशब्दः।

यथा पांसुले प्रदेशे पदं न्यस्तमुत्क्षेपणसमनन्तरमेव पांसुरभिाकीर्णत्वान्न दृश्यते, एवमस्य मध्यमं विद्युदात्मकं पदमाविष्कृतिसमकालमेव व्यवधीयते।

इह तूत्तमोऽभिधेयः। तस्यैष निपात ऐन्द्र्यामृचि।

962. इह तु नियमतो द्युस्थानः। तस्यैष निपातो भवत्यैन्द्र्यामृचि।

IV.120. 'आ त्वा रथम्' इति ऐन्द्रं सूक्तं प्रैयमेधसं तत्रेयमृक्।

'आ त्वा रथं यथोतये' इत्येतस्मिन्नैन्द्रे सूक्ते प्रियमेधेन दृष्टे।

IV.121. भुरण्यतीति गतिकर्मा पठितश्चासौ न केवलं गत्यर्थः। किं तर्हि? शीघ्रकरणार्थोऽपीति। एतत्प्रतिपादनार्थं 'भुरण्युरिति क्षिप्रनाम' इत्यादि भाष्यम्।···भुरण्युरिति शीघ्रशकुनिरुच्यते।

963. 'भुरण्युरिति क्षिप्रनाम'। 'भुरण्युः' क्षिप्रगामी 'शकुनिः'।

अथवा योऽयं स्वर्गकामस्य सुपर्णनामाग्निश्चीयते सोऽत्र शकुनिशब्देनोच्यते। स हि

IV.122. स्वर्गकामस्य विधानात् क्षिप्रं यजमानं स्वर्गलोकमभिवहति।

स पुनरयमेव योऽधियज्ञे अग्निश्चीयते। स सुपर्णः। विज्ञायते हि 'स्वर्गाय वै लोकायाग्निश्चीयते' इति।

त्वं हे वरुण ज्योतिषा कृत्स्नस्य जगतः। आ परितः पश्यसि अनुगृह्णासि। येनेति यच्छ्रुतेः साकांक्षत्वात् तत्ते (ऽत्र) वयं स्तुम इति वाक्यशेषः।

हे भगवन् वरुण पावक पावयितः येन ख्यानेन दर्शनेन अनुग्राहकेण त्वं···अनुपश्यसि। किं तस्य दर्शनस्येति। अपरिसमाप्तं वाक्यमिति यद्वृत्तमपेक्ष्य तद्वृत्तमध्याजहार। तत्ते दर्शनमनुग्राहकं वयं स्तुमः' इति वाक्यशेषः।...

अथवा येनेत्येतत् समानाधिकरणं तच्छब्दमध्याहृत्य परयर्चैकवाक्यता योज्यते।

अपि चैवं यथोक्तमपि चैवमन्यथा स्यात्। कथमिति। यथोत्तरा ऋक्। तयाऽपि सहैकवाक्यतोपेक्ष्या। कथमिति। यतः पुनः पठति।

तेन वि द्यामेषि येन चक्षसा भुरण्यन्तं

964. येन हे पावक वरुण ख्यानेन जनां अनु भुर॰

पश्यसि तेन पश्यमिति सम्बन्धः ।

IV.123. अथवा तच्छब्दमात्राध्याहारेण पूर्वेणैक-वाक्यता योज्यते ।

IV.124. येन भुरण्यन्तं पश्यसि तेनास्मानपि मनुष्यान् पश्यसीत्येतस्यामेवैकस्यामेवैकवाक्यता ।

अन्येषामपि मन्त्राणां साकांक्षत्वे सति प्रदर्शनं द्रष्टव्यम् ।

केशी वाच्यः स पुनरिहादित्य एव नभसो मध्यमासीन एवमस्य उच्यते । कथम् ? केशा रश्मय इत्यादिनिरुक्तेस्तैः प्रकृष्टैस्तद्वान् ।

IV.125. इदमादित्याख्यं ज्योतिरुच्यते ।

विष्णातेः शौचार्थस्य । तद्धि प्रथमं शौचसाधनम् । विपूर्वस्य सचतेर्वा । तद्धि स्नानपानावगाहार्थिभिः सेव्यते ।

रजसा वृष्टिलक्षणेनोदकेन । वैद्युतो गूढो वायुरित्यपरे ।

IV.126. एकस्य वायोस्तृणपर्णधूल्यादिचालनेनानुमानेनार्थापत्त्या वा ददृशे दृश्यत उपलभ्यते न रूपम् ।

अथ यद्रश्मिभिरुपसंहृतप्रायभूताभिः प्रकम्पयन्नेति गच्छति तत् तस्माद् वृषाकपिः ।

IV.127. यमो निरुक्तः यच्छतीति सतः इति । इह त्वादित्योऽस्तमयावस्थः सन्नुच्यते ।

अहोरात्रादिजीवितकालातिगमनेन प्राणिनामायुषो मथनात् पुण्यकृद्भिर्वावृतः क्षयो निवासो

ण्यन्तं पश्यसि तेनैव ख्यानेन तयैव ख्यात्या प्रज्ञया युक्तस्त्वं वि यामेषि विविधमेषि ।

अपि वोत्तरस्यामेकवाक्यता स्यात् । 'अपि' 'तर्हि' 'पूर्वस्याम्' अप्युपेक्ष्या । कथमिति । यतः पठति ।

965. हे पावक वरुण येन ख्यानेन ययैवानुग्राहकप्रज्ञया जनाननु भुरण्यन्तं पश्यसि त्वं पुण्यकारिणः तेनैव ख्यानेन तयैवानुग्रहकारकबुद्ध्या अस्माकं जनानभिविपश्येति ।

एष साकांक्षाणां मन्त्राणामेकवाक्यताप्रकार उपप्रदर्शितः ।

'केशि' इनि वक्तव्यम् । अत्र केशा रश्मयस्तैस्तद्वान् । आदित्यो यो मध्यन्दिने भवति । 'काशनाद्वा' । प्रकाशनादित्यर्थः । रश्मयोऽपि केशाः काशनादेव ।

966. यत आह दर्शयन्नेवादित्यं केशीदं ज्योतिरुच्यत इति ।

विषमुदकं विष्णातेर्विपूर्वस्य स्नातेः शुद्ध्यर्थस्य । विपूर्वस्य वा सचतेः । सर्वत्र व्याति शयेन यत्सक्तमिति तदपि केशी ।

असावप्यमूर्तत्वादप्रकाशः सन् रजसोद्भूतेन प्रकाशतेऽसौ वायुरागच्छतीति । उदकेन च वैद्युतः ।

967. गतिरेकस्य रजसोद्भूतेन पार्थिवेनोदकेन वा दृश्यते न रूपं मध्यमस्य ।

यदा रश्मिभिः उपसंहृतैरुपसंपन्नैः भूतानि अभिप्रकम्पयन्नेति तदा 'वृषाकपिः भवति' ।

968. यमो वक्तव्यः । स पुनः 'व्याख्यातो' निर्वचनतः । इह त्वादित्यो ऽभिधेयः ।

969. यस्मिन् वृक्षे आदित्ये । स हि स्वगत्या कालमतिक्रामयन् सर्वभूतानामायूंषि क्षणयति ।

यस्मिंस्तदूत्रश्चनाद् व्रतनिवासत्वाद्वा वृक्षशब्देनात्रादित्यमण्डलमुच्यते ।

अथवा लुप्तोपममेतत् । वृक्ष इव यथा वृक्षे सुपलाशे शोभनपर्णे ।

वृश्चतीति वृक्षः। व्रतः क्षये वा। पुण्यकृद्भिर्वृतो निवास इत्यर्थः ।

'वृक्षे इव सुपलाशे इति'-ऐतिहासिकपक्षे ।

IV 128. अज एकपाद्वक्तव्यः । स च किलस्तमितावस्थ आदित्यः ।

विज्ञायते हि-'अग्निः पादो वायु: पाद आदित्यः पादो दिशः पादः' इति ।

एकेनांशेनोदकं सवस्थं जगतः पिबति ।

'अज एकपात्' इति वक्तव्यम् । स पुनरयमादित्यो नित्यम् ।

विज्ञायते हि-'अग्निः पादो वायुः पाद आदित्यः पादो दिशः पादः' इति ।

970. एकेनांशेनोदकं सर्वस्माज्जगतः पिबत्यजनश्चेत्यज एकपात् ।

अस्मिंश्च पक्षे निगमं दर्शयति 'एकं पादं नेत्खिदति···' इति ।

हंस आदित्यः । हंससदृशो वा हन्ता वा तमसाम् ।

'निगमोऽपि हि भवति' एवास्मिन्नर्थे-'एकं पादं नोत्खिदति ।

आदित्यो हंसः महतस्तमसो बाधनो वा हन्ता ।

IV.129. पावीरवी पविः शल्यः कण्वादिवलः यद् यस्माद् विपुनाति विभजति विपाटयतीत्यर्थः, भूमिं कार्यं वा । तेन पविना तद्वत् काण्डभल्लकाद्यायुधं पवीरं रोमत्वर्थे, तद्वानिन्द्रः पवीरवान् वा यस्याः सा च आयुधवत इन्द्रस्य स्वभूतेत्यर्थः ।

दिव्या वाक् माध्यमिकायाः स्तनयित्नुलक्षणाया अधिष्ठात्री ।

971. पविः शल्यो भवति'। कस्मात् ? 'यद्विपुनाति' विदारयति कायम् । तेन शल्येन 'तद्वत् पवीरमायुधम्' । रो मत्वर्थे। तेन शल्यवतायुधेन तद्वानिन्द्रः पवीरवान् ।

स इन्द्रो यस्या वाचो माध्यमिकाया देवता सा ऐन्द्री वाक् पावीरवी ।

IV.130. पृथिवी वक्तव्या । सा तु प्रथनादिति निरुक्ता । इह तु विशेषण सम्बन्धाद् द्यौरवाभिधीयते । तस्या निपात ऐन्द्रयामृचि अभिधेयत्वेन न स्तुत्येन ।

इह तु द्युस्थानोऽभिधेयः पावमान्यामृचि ।

971,972. पृथिवी व्याख्याता । तस्या एष निपातो भवति' दिवः पृथिव्या 'ऐन्द्राग्न्यामृचि' न स्तुत्यत्वेन । किं तर्हि ? नैघण्टुकत्वेन केवलम् ।

'तस्यैषः' समुद्रस्य निपातो भवति पावमान्यामृचि ।

IV.131. पवित्रशब्देनात्र रश्मय उच्यन्ते । यदा उदकं मध्यमायामर्पयितुमन्तरिक्षप्राप्तैः पवित्रै रश्मिभिस्तद्वन्तः । के ? सामर्थ्यान्मरुदादयो माध्यमिका देवगणाः ।

973. रश्मयः पवित्रवन्तः अमुष्मादादित्यमण्डलात् प्रसृता मध्यस्थाने मरुत्प्रभृतिभिर्देवगणैः संयुज्यन्ते । तत्संयोगाद् माध्यमिका देवगणाः पवित्रवन्तो भवन्ति ।

एषां त्रयाणां देवतान्तरैः सह स्तुतिसाधारण्येन निपातो भवत्यन्यस्यां बहुदेवतायामृचि।

तेषामेव निपातो भवति स्तुतिसाधारण्येन 'अपरस्यां बहुदेवतायामृचि' ।

IV.132. प्रत्यक्तमस्मिन ध्यानमिति वा। कारकविन्यासमात्रमेतत्।

974. 'प्रत्यक्तमस्मिन् ध्यानमिति वा'। अधिकरणं कारकम्। तथा हि तस्मिन्ध्यानकार्ये सफलं लक्ष्यत इति।

न ह्ययं स्वाधिकारं व्यभिचरति रसादानादिकम्। नित्यमनुतिष्ठतीत्यर्थः।

तेषां दध्यङ्ङादीनामेव स्तुतिसाधारण्येन निपात ऐन्द्र्यामृचि।

975. न ह्ययं स्वस्मादधिकारात् थर्वति। न कदाचित् स्वमधिकारं मुञ्चति।

तेषामेव निपातो भवत्यैन्द्र्यामृचि।

IV.133. भेदपक्षे चाथर्वादय ऋषय इति व्याख्यानम्। नैरुक्तानां तु पूर्वमिति सिद्धम्।

अथातो द्युस्थाना देवगणा इति भेदाभेदाभ्यां मन्त्रेषु स्तुतिदर्शनात् भेदेनोक्तमं स्तुत्वा सम्प्रत्यभेदेन सर्वावस्थं तुष्टूषमाण आह। अथात इत्यादि।

976. पृथक्पक्षे आदित्यसहचारिण एते ऋषयः।

एतदेव हि गुणविकारोपजनापेक्षया भेदाभेदाभ्यां मन्त्रदृशः पश्यन्तोऽभिष्टुवते। तदर्थं विशेषतः पुनरधिकारवचनम्—'अथातो द्युस्थाना देवगणाः' इति।

IV.134. प्रत्येकमप्येते मित्रादयो द्युस्थानत्वेनोपलक्षितव्याः। शास्त्रगौरवप्रसङ्गात्तु न समाम्नाताः।

977. प्रत्येकमप्येते मित्रादयो द्युस्थानत्वेनोपेक्ष्याः। शास्त्रातिगौरवभयात्तु न पृथक् द्युस्थानत्वेन समाम्नाताः। ते त्वादित्यलिङ्गलिङ्गितेषु मन्त्रेषु पृथक् पृथगुपेक्ष्यास्तत्स्तुतीनां पृथगपि विद्यमानत्वात्।

सप्त ऋषयोऽप्यवयवनिर्वचनेन निरुक्ताः। 'सप्त सप्ता संख्या'। 'ऋषिदर्शनात्' रश्मयोऽभिधेयाः, इन्द्रियाणि वा।

978. 'सप्तऋषयो' वक्तव्याः। ते पुनरमी व्याख्याता निर्वचनतः। इह त्वभिधेया रश्मय इन्द्रियाणि वा।

IV.135. अध्यात्मं तु सप्त ऋषयः सप्तसंख्यानि। कानि? अर्षणानि स्वं स्वं विषयं प्रति गन्तॄणि मनष्षष्ठानीन्द्रियाणि विद्यासप्तमानि। विद्या विज्ञानं तत्सप्तमानि। प्रतिहितानि प्रतिनिहितानि शरीरे शरीरात्मनि।

अन्ये वर्णयन्ति। अस्तमीयुः स्वप्नावस्थायामात्मनो भोक्तर्येव भावनारूपेण लीयन्ते। यद्भावनोपादानं भोक्तुः स्वप्नदर्शनं भवति।

979. 'अथाध्यात्मम्'। मण्डलवदस्मिञ्छरीरे रश्मिवदिन्द्रियाणि प्रतिहितानि निहितानि तच्छरीरं नित्यं रूपाद्यालोकनाद्युपकारेण रक्षन्ति अप्रमाद्यन्ति।

बुद्धिद्वारेण भोक्तर्येव भावनारूपेण लीयन्ते यद्भावनोपपादकः स्वप्नभोक्तुः स्वप्नो भवति।

IV.136. देवौ प्राज्ञश्चात्मा चितिमात्रेण यः शरीरं

प्राज्ञश्चात्मा परमात्मा चिन्मात्रेण यः शरीरं

व्याप्य वर्तते । यस्यावेशादेतच्छरीरं न दुष्यति । तस्य व्यापारो भोगस्तमसौ करोति (एव) तैजसश्च य आहारं पचति ।

अत्रासत ऋषयः सप्त अत्रादित्यमण्डले सप्तसंख्याका रश्मयः । साकं सह । ये अस्य गोपा महतो बभूवुः येऽस्य जगतो गोप्तारो भवन्तीत्यधिदैवतम् ।

अथाध्यात्मम् । तिर्यग्बिलश्चमस ऊर्ध्वबुध्नः शिर इहाभिप्रेतम् । तिरश्चीनानि बिलानि चक्षुरादीनि यस्मिन् । आहारस्य चमनात् । ऊर्ध्वे च कायस्य बन्धनस्थानात् । ऊर्ध्वं च बोधकं चक्षुरादि यस्मिन् ।

IV.137. देवानामेव च सख्यं स्तुत्यस्तोतृलक्षणं यष्टृयष्टव्यस्वलक्षणं च । उपसेदिम उपसीदेम उपगच्छेम वयमित्याशास्महे । देवा नोऽस्माकमायुः प्रतिरन्तु जीवसे तिरतिर्वृद्ध्यर्थः प्रवर्धयन्तु चिरं जीवनाय ।

IV.138. विश्वान् देवानधिकृत्येदानीं गतमेवाधियज्ञं किञ्चिद् विचारयिष्यन्नुपोद्घलयति ।

तदिति समाम्नायस्यनुस्मृतये । एतदिति वक्ष्यमाणार्थसान्निधिकरणाय ।

प्रयोजनं च गायत्रच्छन्दोयुक्तैर्न्यैरपि बहुभिर्वैश्वदेवैरधियज्ञं गायत्रम् ।

IV 139. यदेव विश्वलिङ्गं विश्वशब्दोपेतं मन्त्रजातं सूक्तं वा, तदेव वैश्वदेवानां स्थाने युज्यते, न बहुदेवतात्वमात्रेणेति शाकपूणिर्मन्यते ।

तत् किमस्यापि यास्कस्य मतम् । नेति । यत आह ।

वैश्वदेवं हि मन्त्रजातं समाम्नाये क्रियार्थमुत्पद्यमानं आम्नायस्य क्रियार्थत्वात् गायत्रे छन्दसि तावदेवोत्पत्तुमर्हति ।

न च तत्सर्वास्वपि दाशतयीषु गायत्रे छन्द-

व्याप्य वर्तते तैजसश्च प्राणोऽन्नं पानं पचनव्यूहस्वरसान्तर्भूतं तेजोवायुवृत्तिः ।

980. ये अस्य महतो जगतः आत्मनो वा गोपाः गोप्तारः एते रश्मयो बभूवुः भवन्ति ।···ते रश्मयः सप्त सपर्णा ऋषणाद्दर्शनादस्य धर्मस्य ऋषय उच्यन्ते—'इत्यधिदैवतम्' ।

'अथाध्यात्मम्' इति । तिर्यग्बिच्छद्रमिदमेव शिरः चतसः । चम्यन्ते ह्यनेन रसा इति । ऊर्ध्वबन्धनश्च । उपरि ह्यवस्थितमेतद्बन्धनमस्य शरीरस्य । एतद्वियोगे हि विस्रंस्यते शरीरम् ।

981. देवानां सख्यं समानख्यानतां याज्ञे कर्मणि

982. समानमङ्गभावम् उपसेदिम गच्छेम वयम् । ततश्च तथा भूतानामस्माकं ते देवाः प्रतिरन्तु प्रवर्धयन्तु आयुः जीवसे चिरं जीवनायेत्येतदाशास्महे ।

983. अधुना विश्वेदेवानधिकृत्य तद्गतमेवाधियज्ञे किंचिद्विचारयिष्यन्नुपोद्घन्ति ।

'तत्' इति समाम्नायस्यानुस्मृतये । 'एतत्' इति वक्ष्यमाणार्थसंनिधीकरणाय ।

अस्त्येवास्मिंश्छन्दसि प्रयोजनं च गायत्रच्छन्दोयुक्तैरन्यैरपि बहुभिर्वैश्वदेवैर्मन्त्रैरधियज्ञे ।··· विश्वशब्दोपेतं मन्त्रजातं सूक्तं वा तदेव वैश्वदेवानां स्थाने विनियुज्यते न बहुदेवतामात्रेण 'इति शाकपूणिः' मन्यते ।

तत्किमस्यापि यास्काचार्यस्यैतदेवाभिमतमुत नेति । यत आह ।

वैश्वदेवं हि मन्त्रजातं समाम्नाये क्रियार्थमुत्पद्यमानमाम्नायस्य क्रियार्थत्वाद्गायत्रे छन्दसि तावदेवोत्पत्तुमर्हति ।

न च तत्सर्वास्वपि दशतयीष्वस्ति छन्दस्यलं-

म्यलं कर्मोत्पादने । प्रयोजनं च तच्छन्दोयुक्तै-
रधियज्ञे वैश्वदेवैर्मन्त्रैः । न च ते सन्ति ।
बहुदेवताश्च तस्मिंश्छन्दसि ।
युक्तं यत्तान्योप्येरन्निति यास्कः परयन्नाह । यत्तु
किञ्चिदित्यादि ।
बहुदेवतान्यपि वैश्वदेवानां स्थाने युज्यन्त
एवेति ।
भूतांशो नाम काश्यप एकेनाश्विलिङ्गेन युक्त-
मनेकं ददर्श ।
यथैकेनापि छत्रिणा सर्वे छत्रिणो भवन्ति ।

IV.140. इदानीं यस्यामश्विलिङ्गं यया चर्चा सूक्तमा-
श्विनं सेयमृग्व्याख्यायते ।
अभितष्टीयं चैतल्लिङ्गं भवति ।

IV.141. साध्या इति वाच्याः । देवा रश्मयो वाभि-
धेयाः । साध्याः कस्मात् ? साधनात् स्वव्या-
पारस्य ।
ऐतिहासिकानां तु कर्मभिरात्मनः साधनात्
पूर्वो देवसमूहः । ते च किल विश्वसृजो नाम
ऋषयः सहस्रसंवत्सरेणेदं विश्वमसृजन्त ।
साध्याः सन्ति देवा नैरुक्तानां साध्या रश्मय
उच्यन्ते । तदाह द्युस्थानो रश्मिर्दैवगण
इति ।

IV.142. वसवो वाच्याः । यद् विवसते सर्वम्
यद् यस्माद्विभागेनावस्थितमिदं सर्वमाच्छाद-
यन्तीति स्थानत्वात् । अतस्त्रिस्थानेष्वाच्छा-
दकत्वाद्वसवस्त्रिस्थानाः ।
तथा वसव आदित्यरश्मयो विवासनात् तम-
साम् । तस्माद् द्युस्थानाः ।

IV.143. भाष्ये तु सुगाव इति शोभनान्यागमना-
न्यभिप्रेतानि । तद्विशेषणं सुपथानीति
शोभनमार्गाणीति ।

कर्मोत्पादे । प्रयोजनं च तच्छन्दोयुक्तैरपि
विविधैर्मन्त्रैर्भवति । न च ते तथाविधाः
सन्तीति बहुदेवताश्च तस्मिंश्छन्दसि सन्ति ।

984. युक्तं यद्बहुदेवतानि ओप्येरन्निति यास्काचार्यः
परहन्नाह–'यत्तु किञ्चित्...' ।
बहुदेवतान्यपि वैश्वदेवानां स्थाने युज्यन्त
एवेति ।
भूतांशो नाम ऋषिः काश्यपः । स एकेनाश्वि-
लिङ्गेन युक्तमनेकर्चं सूक्तं ददर्श ।
यथैकेनापि छत्रिणा मध्यगतेन छत्रिणो भवन्ति।...
अश्विलिङ्गं येन पर्फरीसूक्तं सर्वमाश्विनम् ।

985. अभितष्टीयं सूक्तं चैन्द्रम् । तदपि 'एकलिङ्गम्'
इति ।
'साध्याः देवाः साधनात्' । ते हि सर्वमिदं
साधयन्ति । यदन्येन सर्वकर्मभिरसाधितं
तत्साधयन्तीति साध्या उच्यन्ते ।
ते च पुनः प्राणाः विश्वसृज ऋषयो ये सहस्र-
संवत्सरेण सत्रेणेदं विश्वमसृजन्त त एवैतेऽधि-
दैवं रश्मयः ।

987. अतः सप्त ऋषयो देवाः विश्वेदेवाः साध्या
इति सर्व एते प्राणा रश्मयो वेत्युपपद्यते ।

'वसवः' इति वक्तव्यम् । ते पुनरमी त्रि-
स्थानाः । ते यस्मात्सर्वमिदं विभागेनावस्थित-
माच्छादयन्ति ।

वसव आदित्यरश्मयो विवासनात् । तस्मात्
द्युस्थानाः ।
स्वागमनानि शोभनानि आगमनानि ।

इतरेषां वसूनां त्रिस्थानतां दर्शयितुमाह ।

IV.144. वाजिनो निरुक्ताः । 'वाजी वेजनवान्' इति । केवलं वचनकृतो विशेषः । रश्मयोऽभिधेयाः । देवाश्वा वा ।

IV.145. देवपत्न्यो वाच्याः । ताः पुनर्देवानां पालयित्र्यः पालनीया वा । पत्नीसंयाजदेवताः । पत्नीसंयाजाश्च तृतीयसवनस्य स्थाने । तच्च द्युभक्तीति द्युस्थानत्वम् ।

प्रथमार्थे द्वितीया देवानां पत्न्यो भवत्यः । उशत्यो हविस्तुतीश्च कामयमानाः । अवन्तु अवतिर्गतिकर्मा गच्छन्तु नोऽस्मान् प्रति । गत्वा च प्रावन्तु प्राकर्षेण रक्षन्तु नोऽस्मान् ।

IV.146. हे देवीर्देव्यः सुहवाः सुह्वानाः शर्म गृहं सुखनाम वा यच्छत प्रयच्छत ।

सामान्योक्तानां विशेषाभिधित्सया पराऽनन्तरा ।

ग्नाशब्दः स्त्रीवचनः । अपि स्त्रियो व्यन्तु कामयन्ताम् । किम् ? सामर्थ्याद् हविः । कतमाः स्त्रियः ? देवपत्नीः—देवानां पत्न्यः कामयमानाश्च । इन्द्राणी इन्द्रस्य पत्नी···आकारः शृणोत्विति सम्बध्यते ।

IV.147. भाष्यकारस्तु देवपत्नीप्रकरणानुविधानेन पदकारमनवेक्ष्य रोदसीशब्दं रुद्रपत्नीवचनमुदाजहारेति ।

इह 'यस्यां देवतायां' इत्यत्र स्तुतिलक्षणा देवतेति देवतालक्षणमुक्तम् । सा च स्तुतिर्नाम्ना बन्धुभिः कर्मणा च प्रदर्शिता ।

इहेदानीं कर्मातिक्रमेण गुणभूयस्त्वेन च प्रदर्शनीयेति ।

988. त्रिस्थाना इत्युक्तम् । यत इतरयोरपि स्थानयोः प्रदर्शयति ।

989. 'वाजिनो व्याख्याताः' । 'अपि स वाजी वेजनवान्' इत्यत्र । केवलमत्र बहुवचनकृतो विशेषः । रश्मयश्चाभिधेयाः । पृथक्त्वे देवाश्वाः ।

990. 'देवपत्न्यः' वक्तव्याः । ताः पुनः 'देवानां पत्न्यः' पालयित्र्यः पालनीया वा । पत्नीसंयाजेष्वेता इज्यन्त इत्यतस्तृतीयसवनभक्तित्वादादित्यं भजन्ते ।

या एता देवपत्न्यो नित्यमस्मत्तो हविरुशन्ति कामयन्ते ता अस्मत्तो हविरुपभुज्य ततोऽस्मान् अवन्तु प्रतितर्पयन्तु धनेन ।

991. सुहवाः स्वाह्वानाः अस्माकं यच्छन्तु ददतु शरणं गृहं सुखं त्राणं वेत्येतदाशास्महे । 'तासामेषापरा भवति' । सा पुनः किमर्थम् ? सामान्यतः पूर्वस्यामुक्ताः । विशेषतः परस्यामुच्यन्ते । पूर्वयैव समानार्षविनियोगा ।

पुरुषैः पीतमग्न्यादिभिः अपि ग्नाः स्त्रियो व्यन्तु पिबन्तु एतदाज्यम् । कतमाः ? इन्द्राण्यग्नाय्यश्विनी राट् । आशृणोतु च रोदसी । आभिमुख्येन च स्थित्वा शृणोतु ।

अथर्वणे रोदसीत्यप्रगृह्य पदम् । तदपेक्ष्यैकवचनेन भाष्यकारो निराह 'रोदसी रुद्रस्य पत्नी' ।

993. स्तुतिलक्ष्या देवतेति । 'यत्काम ऋषिर्यस्यां देवतायाम्···' इत्यत्र ताः स्तुतयः कर्माधिकारनिरताः ।

स्वकर्माधिकारातिक्रमेण स्वगुणातिशयेन च यास्ता उपप्रदर्श्याः ।

इमा वक्ष्यमाणा अतिशयवत्यः स्तुत्य इति । स्तुतय इत्येव किं स्तुतिशब्देन पूर्वाचार्या आचक्षते । प्रसिद्धा हीयं तेषां संज्ञेत्यभिप्रायः ।···

याप्यति शयवत्यभिमता सापि प्रकृत इवान-तिरिक्तेत्यर्थः । कुत एतदित्याह ।

न गुणाणां विभूतेरियत्तास्ति देवतायाः । तथा चोक्तम्—'ऋचीषमः' । 'नार्वागिन्द्रम्' इति ।

नैरुक्तसमयानुवृत्त्ये त्वतिस्तुतयः प्रदर्श्यन्ते । सोऽतिस्तोता पूर्वाचार्यो वा । पूर्वक्रमानुवृत्त्यै-वाग्निमेव वातिस्तुतिविषयत्वेन प्रथममाह ।

IV.148. अत्र स्वाधिकारातिरेकेण स्तुतिर्व्याख्याता ।

किञ्च दामेव दाम बन्धनं यथा कश्चिद् वत्साद् विमुञ्चेत्तद्वद् विमुमुग्धि विमुञ्च ।

इन्द्रस्यातिस्तुतिः ।

यत् यदि द्युवो द्युलोकाः शतं हे इन्द्र ते तव उपमा नास्तीति शेषः । शतं भूमीरुत

IV.149. अपि शतं च भूमयोऽपि स्युर्भवेयुः । सहस्रं सूर्याः सहस्रं च सूर्याः ।

यत् यदाऽस्तमयकाले । उदञ्च उदञ्चितार ऊर्ध्वं गामिनः । के ? सामर्थ्याद्रश्मयः । हे वृषाकपे आदित्य । गृहं स्वमण्डलाख्यम् । हे इन्द्र अत्यन्तेश्वर । अजगन्तन व्यत्ययेन प्रथमस्य स्थाने मध्यमः । अगमन् गतास्त्वदीयमण्डल-मनुप्रविष्टा भवन्तीत्यर्थः ।

IV.150. आदित्यरश्मीनामतिस्तुतिः ।

यदादित्येन रश्मयो व्यसृक्षत विपूर्वस्य सृजेः कर्मणि कारके आत्मनेपदप्रथमपुरुषस्य बहुवचन इदं रूपं विसृष्टा भवन्तीत्यर्थः । किमर्थम् ?

अन्येऽप्याचार्या एवमेवैता आचक्षते कथयन्ति शिष्येभ्योऽतिस्तुतय एता इति । प्रसिद्धा हीयमेतासु संज्ञेत्यभिप्रायः ।

न ह्यतिशयो नाम देवतायाः स्तुतिरस्ति । कस्मात् ?

न विभूतेरियत्तास्ति यामनिरिच्य स्तूयेत । तदुक्तम् 'ऋचीषमः' इति । तथा च 'नार्वा-गिन्द्रं प्रतिमानानि देभुः' इति ।

994. नैरुक्तसमयानुवृत्तयेऽतिस्तुतयः प्रदर्श्यन्ते । 'सः' इति स्तोता असावाचार्यः 'अग्निमेव' अधिकृत्य 'प्रथममाह' । किं कारणम् ? येनैव हि क्रमेण स्तुतय उपप्रदर्शितास्तेनैवात्र क्रमेणातिस्तुतयो व्याख्याः प्रदर्शयितुम् । यथैतस्मिन् सूक्ते स्वकर्माधिकारव्यतिरेके-णातिशयेन वा स्तुतिः ।

अंहः पापं यदात्मनः कायकृतं तदस्मत्तो दामेव वत्सात् विमुमुग्धि त्वं प्रमुञ्च ।

'अथैन्द्रस्य' ।

995. हे भगवन् इन्द्र यदि तव शतं दिवः शतं च भूमयः सहस्रं च सूर्याः ।

हे भगवन वृषाकपे इन्द्र यदा त्वम् उदञ्चः उदङ् एव वर्तमानः प्रदक्षिणं भुवनानि परि-गच्छन गृहम् अजगन्तन । गृहानुप्रवेशे हि व्यवधीयते च भगवानस्तं गच्छन्नादित्य इत्ये-तस्मात्सामान्यादुच्यते गृहमिन्द्राजगन्तन इति ।

996. 'अथैषादित्यरश्मीनाम्' अतिस्तुतिः ।

व्यसृक्षत व्यसृजत यदादित्यो रश्मीनहन्यहनि सोतोः सर्वभूतप्रसवाय अभ्यनुज्ञानाय तत्प्रका-शितलोकस्य सर्वकर्मोपपत्तेः । तदा किमिति ।

सोतोः प्रसवाय प्रकाशद्वारेणाभ्यनुज्ञानाय सर्वप्राणिकर्मणाम्। तदा नेति प्रतिषेधार्थी-यममंसतेति सम्बध्यते ।

तदा ते रश्मयः सर्वकर्मण्यनुगमनात् नेम्द्रं देवममंसत।

मत्सखा अहं मन्त्रदृक् सखा स सखिभूतो यस्य सः। अथवा मदनं मद् हर्षः सखिभूतोऽत्यन्तसहचारी यस्य स हर्षसहायोऽत्यन्तपुष्ट इत्यर्थः।

मत्सखा मम सखा इति मन्त्रदृगाह। अथवा। सर्व एव मन्यन्ते ममायं सखा ममायं सखेति। अथवा। मदनसखा हर्षसखेत्यर्थः।

IV.151. चत्वारि मितानि अव्यक्तपरिमाणानि पदानि । इयती वाक् । तदेतद् भेदेन हि चत्वारि वाचः परिमितानि पदानि न पञ्चमम्। कतमानि तानि ? ओंकारमहाव्याहृतयश्चेत्यादीनि । (तानि) सर्वाणि विदुर्ब्राह्मणा ये मनीषिणो मेधाविनः । यस्मात्तेषां चतुर्णां पदानां गुहा···गुहायामिव त्रीणि निहितानि नेङ्गयन्ति। इगिर्गत्यर्थः। न गमयन्तीत्यर्थः। तुरीय चतुर्थं वाचो मनुष्या वदन्ति।

998,999. चत्वारि वाचः परिमितानि पदानि। न पञ्चमं पदमस्ति। तानि पुनः ब्राह्मणा विदुः। किं सर्वे। न। ये मनीषिणः ये मेधाविनः। तेषां च पुनः पदानां गुहायां त्रीणि निहितानि नेङ्गयन्ति नार्थं वेदयन्ते न प्रख्यापयन्ति। तुरीयं चतुर्थं भागम् एकं पदं मनुष्याः परिज्ञानार्थं वदन्ति ।

IV.152. गवादीनि नामानि। कुतः ? तेषां तत्वं सर्वमनुष्यैर्ज्ञायमानत्वात् । आख्यातोपसर्गनिपातास्तु (अ) प्रसिद्धार्थत्वान्नार्थं सर्वे वेदयन्ते।

999. तत्राप्रसिद्धार्थत्वादाख्यातोपसर्गनिपातपदान्यर्थं न वेदयन्ते। नामानि तु प्रसिद्धतमार्थत्वाद्गवाश्वादीन् वेदयन्त्यर्थान्।

आत्मप्रवादा इति । आत्मानं ये प्रवदन्ति अध्यात्मवादिनस्तन्मते आत्मनि या वाक् सा व्यावहारिकीत्येकां वदन्ति ।

आत्मानं ये प्रवदन्त्याचार्यास्ते आत्मप्रवादाः···

अथ पशुगताव्यक्ताया या अन्या व्यक्ता तां ब्राह्मणेष्वदधुः। उभयीं वाचं देवानां वैदिकी या च मनुष्याणां लौकिकी इत्यर्थः।

'ततो या वागत्यरिच्यत तां ब्राह्मणे न्यदधुः' निहितवन्तः। 'तस्माद्ब्राह्मणा उभयीं वाचं वदन्ति या च देवानां या च मनुष्याणाम्। लौकिकी वैदिकी चेत्यर्थः।

अक्षरस्यातिस्तुतिः प्रवल्हितेव।

'अथ' पुनः 'एषाक्षरस्य' अतिस्तुतिः प्रवल्हितेव।

IV.153. अस्यामृचि शाकपूणेस्तावन्मतेन ओंकारं कृत्वा ऋचामध्ययनप्रारम्भात् शास्त्रानुवचनादिषु ऋगन्ते प्रणवस्य योगाद् ऋचः सम्बन्ध्येतदक्षरम्।

1000. अस्या निर्वचनत्रयमधियज्ञाधिदैवाध्यात्मविकल्पेन ओंकार आदित्य आत्मा चेति। तत्र तावच्छाकपूणिपक्षमाश्रित्याधियज्ञगतमुच्यते । 'कतमत्तदेतदक्षरमो३मित्येषा वागिति' शाकपूणेरभिप्रायः।

तस्य किल ओमित्येतस्य ब्रह्मणः प्रथमायां मात्रायां पृथिव्यग्निर्ऋग्वेदः पृथिवीनिवासिनो जना इत्येतत् । द्वितीयायां मात्रायामन्तरिक्षं वायुर्यजूंषि अन्तरिक्षनिवासिनो जना इत्येतत् । तृतीयायां द्यौरादित्यः सामानि द्युनिवासिनो जना इत्येतत् । तेनेदं जगतः परं व्योम ।

IV.154. पूर्वस्येतिहासस्योपसंहारश्रुतेस्ताद्भाव्यापत्त्या प्रणवविग्रहात्मानमनुप्रविश्य ब्रह्मणः साम्यमापन्ना विद्वांस इमे समासते । समित्येकीभावे तेन सह एकीभूता आसते ।

IV.155. 'ऋचो अक्षरे' इति । ऋगित्यादित्यमण्डलमुच्यते । आदित्यमण्डलं कस्मात्? ऋग्भवति । यद् यस्मादेनमर्चन्ति । अर्चनादृगित्यर्थः । तस्मिन्नेवंरूपे यस्मिन् देवा रश्मयो भौमानां रसानामाहरणधारणाभ्यामधिनिषण्णाः सन्ति ।··· अयं पिण्डशरीरमृग्भवति । स्नानोद्वर्तनपरिषेकानुलेपनार्चनात् । प्रत्यृतो वा सर्वाणि सर्वेन्द्रियशक्त्यनुगमाद्वेत्यर्थः ।

IV.156. अक्षरं न क्षरति न स्रवति न क्षीयते न न शुष्यति शरीरादित्यर्थः ।

IV.157. सत्यपि चैतस्मिन् निरुक्ताख्ये तर्केणैव देवदेवताधिदैवधिपुष्पफलेतिहासप्रकरणादिनिरपेक्षेण सता मन्त्रा न निर्वक्तव्याः । किं तर्हि ? प्रकरणमपेक्ष्य ।

ऋषीणां तु साक्षात्कृतधर्मणां वेदाभ्यासवत्त्वेन प्रत्यक्षज्ञानं धर्मानुग्रहवशेन स्यात् ।

तस्माद् भूयोविद्यः प्रशस्यः शास्त्रागमविशुद्धये मनुष्यापेक्षयेत्याह षष्ठेन ।

IV.158. तेऽनूचानाः सुखग्रहणायेमं मन्त्रार्थचिन्तालक्षणं तमुपायमभ्यूहन् ग्रन्थीकृतवन्तः ।

प्रथमायां मात्रायां पृथिवी अग्निः ऋग्वेदः पृथिवीलोकनिवासिन' इत्येव । द्वितीयायां मात्रायामन्तरिक्षं वायुर्यजूंषि तल्लोकनिवासिनो जना इति । तृतीयायां मात्रायां द्यौरादित्यः सामानि तल्लोकनिवासिनो जना इति । विज्ञायते हि 'ओंकार एवेदं सर्वम्' इति ।

1000. ते हि तत्परिज्ञानात्ताद्भाव्यमुपगताः प्रणव-
1001. विग्रहमात्मानमनुप्रविश्य समीकृता निर्वान्ति शान्तार्चिष इवानला इति ।

'आदित्य इति पुत्रः शाकपूणेरेषर्ग्भवति' इति मण्डलमभिप्रेतम् । 'यदेनमर्चन्ति' इति । यस्मादेनमर्चन्ति तस्माद् ऋक् ।

रश्मयोऽत्र देवा उच्यन्ते य एतस्मिन्नधिनिषण्णा भवन्ति ।

आत्मेत्यात्मप्रवादाः । अयमृग्भवति शरीरमिति । इन्द्रियाण्यत्र देवा उच्यन्ते । तानि हि विषयेषु द्योतन्त इति देवाः ।

1002. 'अक्षरं' कस्मात् ? तद्धि 'न क्षरति' । नान्यथाभावमापद्यते । अथवा । 'न क्षीयते' । न कदाचिदप्यामूलतो विनश्यति ।

1003. यद्यप्ययमभ्यूहस्तथापि न तु पृथक्त्वेन मन्त्रा निर्वक्तव्याः । कुतः पृथक्त्वेन । प्रकरणात् ।

तस्येदानीमपि स्याद् ऋषिस्तपस्वी च । निर्दग्धकल्पषयोस्तयोः प्रतिबन्धकाभावाद्यथावदर्थं मन्त्राणां पश्यतः ।

तेषु यः कश्चिद्भूयोविद्यो बहुश्रुतो भवति स एव मन्त्रार्थपरिज्ञाने प्रशस्यो भवति ।

1004. ते देवा एतं समस्तार्थमूहमपि भवन्तोऽनेन मन्त्रार्थान शक्यन्तेऽभ्यूहितुमिति ।

अन्यत्वेपि चैतद् द्रष्टव्यम । अतश्चैतदेवं येन मन्त्रोऽप्याह ।

सखायः समानख्याना ऋत्विजोऽन्य च शास्त्रज्ञाः ।

IV.159. सेयं निरुक्तविद्या श्रुतिमति वर्तत इति शेषः । श्रुतित उत्कृष्टतरेत्यर्थः । कुतः ? यत इयं बुद्धिर्बुद्धेः कारणम् ।

तस्माच्छन्दस्सु तस्या एतस्य निरुक्तविद्याया निराकांक्षाय ऋक्पादार्धचेशेषा उपेक्षितव्याः ।

मन्त्रार्थोऽप्येतस्मिन् विषये बृहस्पतिना दृष्टो ब्रह्म वा स्वयं प्राह ।

1005. सखायः समानख्याना ऋत्विजः । ते हि प्रयोगेऽभियुक्तत्वाददतितरां विद्वांसः ।

इदानीमुपसंहरति 'सेयं विद्या' इति । श्रुतिमतीति । आद्या इयमेवैका विद्या । बुद्धि वर्षेति । ज्यायसी सर्वाभ्यो विद्याभ्यः । महानेष तर्कः ।

1006. 'तस्माच्छन्दःसु' शाखान्तरेषु निगमोदाहरणानामाकाङ्क्षित्वनिराकाङ्क्षायै वाक्यशेषाः पादार्धर्चादिलक्षणा 'उपेक्षितव्याः' ।

# APPENDIX II.

Passages of Skandasvāmin, preserved as quotations by Devarājayajvan in his commentary on the *Nighaṇṭu*, compared with the former's commentary on the *Nirukta*.

| *Volume and Page.* | स्कन्दस्वामी | *Chapter, section and number of the word.* | देवराजयज्वा |
|---|---|---|---|
| II.42. | गौरिति पृथिव्या नामधेयम् । मुख्यत्वाद् भूतपृथिव्या अधिदेवताया उदाहरणम् 'गोषदसि' इति । गार्हपत्योपस्थाने विनियोगात, गार्हपत्यस्य च गवि पृथिव्यां सादनात,गोशब्दस्य च पृथिव्यभिधानता निश्चिता । सर्वशब्दानामाख्यातजत्वप्रतिज्ञानात् प्रवृत्तिनिमित्तमाह—यद्दूरं गता भवति । नैरन्तर्यणात्माकाशादिवद् दूरेऽप्युपलब्धेर्गमिक्रियाव्यवहारः । अन्यत्र चान्यत्र चोपलब्धेर्दूरापदेशः । प्रत्ययोपात्तरूढ्यर्थसम्बन्धाच्च गमिरत्र नैरन्तर्योपलब्धिर्दूरविशिष्टं गमनमुपादत्ते, तक्षा परिव्राजक इति यथा । यद्यपि चायं गोशब्दः पश्वादावनेकत्र रूढः, तथाप्यस्य तत्र तत्र मन्त्रवाक्यार्थसमवायसम्भवादभिधेयं निश्चित्य तदवयवभूतस्य गमेस्तद्विशेषविषयतैव व्यतिरेकव्यावृत्त्यर्थं पूर्ववत् प्रदर्शनीयेति । यच्चास्यां भूतानि प्राणिनो गच्छन्ति । चो वार्थे । कारकविकल्पश्चायम् । कर्तरि कारकेऽधिकरणे वेत्यर्थः 'गातेः' वा स्तुत्यर्थस्य, औकारप्रत्ययः । धातुविकल्पश्चायम् । गीयते स्तूयते ऽसाविति गौः, गायन्ति वास्यां स्थिता इति गौः । | I.1.1. (गौः) | अस्य स्कन्दस्वामी "दूरं गता भवति नैरन्तर्येणात्माकाशादिवद्दूरेऽप्युपलब्धेर्गतिक्रियाव्यवहारः । अन्यत्र चान्यत्र चोपलब्धेर्दूरोपदेशः । प्रत्ययोपात्तरूढ्यर्थसम्बन्धाच्च गमिरत्र नैरन्तर्योपलब्धिर्दूरविशिष्टं गमनमुपादत्ते तक्षा परिव्राजक इति यथा । यच्चास्यां भूतानि प्राणिनो गच्छन्ति । चो वार्थे । 'गातेः' वा स्तुत्यर्थस्य । गीयते स्तूयतेऽसाविति गायन्ति वास्यां स्थिता इति गौः । उदाहरणम् 'गोषदसि' इति गार्हपत्योपस्थाने विनियोगाद् गार्हपत्यस्य च गवि पृथिव्यां सदनात् गोशब्दस्य पृथिव्यभिधानता निश्चिता ।"इति । |
| II. 113. | छादनार्थत्वश्च विशिष्टम् । | I.1.10. (उर्वी) | "छादनार्थत्वं विशिष्टम् ।" इति स्कन्दस्वामी । |
| II. 263. | यद्यपि च 'द्यतेः' क्तिनि 'द्यतिस्यति' इति त्वेवं सिध्यति अदितिरिति । तथापि द्यतेर्नित्यं विपूर्वत्वान्न त्वव्याप्ति 'दीङ् क्षये' इत्यस्य छान्दसं रूपं द्रष्टव्यम् । तथा चोक्तम् 'न संस्कारमाद्रियेत । अर्थनित्यः परीक्षेत' इति । | I.1.14. (अदितिः) | अत्र भाष्ये स्कन्दस्वामी । "यद्यपि नञ्पूर्वात् 'द्यतेः' क्तिनि 'द्यतिस्यतिमास्थाम्' इतीत्वे च रूपं सिध्यति । तथापि द्यतेर्नित्यमपूर्वादर्थान्वयाच्च 'दीङ् क्षये' इत्यस्यैवेदं छान्दसं रूपं द्रष्टव्यम् । तथा चोक्तम् "न संस्कारमाद्रियेत । अर्थनित्यः परीक्षेत" इति । |

| | |
|---|---|
| II. 57. इळाशब्दस्य छान्दसत्वादाकारलोपः । | I.1.15. "इळश्छान्दसत्वादाकारलोपः" इति स्कन्द-(इळा) स्वामी । |
| II. 60. निरमणात् नियमेन रमणात् । निश्चलत्वेनावस्थानादित्यर्थः । रमन्ते वाऽस्यां भूतानि । | I.1.16. अस्य स्कन्दस्वामी । "निरमणात् । निश्च-(निर्ऋतिः) लत्वेनावस्थानादित्यर्थः रमन्ते वाऽस्यां भूतानि ।" इति । |
| II. 70. अन्तरा मध्ये सर्वभूतानां क्षान्तं शान्तं स्थितं निष्क्रियं वा शान्तमव्यूढम् निष्कम्भस्थानात्मकत्वात् । अन्तरा इमे रोदस्यौ द्यावापृथिव्यौ क्षियतीति वा । अन्तरा इमे क्षोण्याविति वा क्षान्तम् । एवमनेकविकल्पमुत्तरपदम् । अन्तराशब्दात् पूर्वपदम् । शरीरेष्वित्यादि—अन्तराशब्दात् पूर्वपदम् । अक्षयशब्दादुत्तरपदमिति विशेषः । विनाशिष्वप्यविनाशीत्यर्थः । | I. 3. 6. इत्यादिभाष्यस्य स्कन्दस्वामिग्रन्थो यथा-(अन्तरिक्षम्) दृष्टं लिख्यते । 'अन्तरा मध्ये सर्वभूतानां क्षान्तं शान्तं निष्क्रियं वा शान्तमव्यूढं विष्कम्भस्थानात्मकत्वात् । अन्तरा इमे रोदस्यौ क्षियतीति वा । अन्तरेमे क्षोण्याविति वा । एवमनेकविकल्पमुत्तरपदम् । पूर्वशरीरेष्वन्तरक्षयमिति वा । अन्तःशब्दात् पूर्वपदम् । अक्षयशब्दादुत्तरपदम् । विनाशिष्वप्यविनाशीत्यर्थः" इति । |
| III.113. ध्वरतिर्हिंसाकर्मा तत्प्रतिषेधः । | I.3 16. ध्वरतिर्हिंसाकर्मा तत्प्रतिषेधः । (अध्वरम्) |
| II.467, III.126, IV.42. अध्वरं यज्ञम् । | ,, "अध्वरं यज्ञम्" । इति स्कन्दस्वामी व्याख्याति । |
| See Nirukta 2.14.and Nirukta-bhāṣya-ṭīkā on the same. | I.4. स्वरादीनि षट् तु भाष्यकारेण स्कन्दस्वामिना (स्वः) च कृतव्याख्यानानीति नास्माभिरत्रोच्यन्ते । |
| IV.141. साध्याः कस्मात् ? साधनात् स्वव्यापारस्य । | I.5.14. "रसाह (भ)-रणादिकं स्वव्यापारं साध्नुवन्ति (साध्याः) संसिद्धं कुर्वन्ति" इति स्कन्दस्वामी |
| II.90. दिशस्तावत्, क्रान्त्वा सर्वमतीत्य स्थिताः, आकाशवत्, व्यतिरेकपक्षे । अव्यतिरेकेऽपि त एव शब्दादयः सर्वत्र सन्ति संस्थिताश्चेति । उपदिशोऽप्येवमेव, अव्यतिरेकेऽपीतरेतरापेक्षया परत्वापरत्ववत् सर्वत्र व्यवहारास्तित्वम्। | I.6.5. अत्र स्कन्दस्वामी । "क्रान्त्वा सर्वमतीत्य (काष्ठाः) स्थिताः । आकाशवद् व्यतिरेकपक्षे । अव्यतिरेकेऽपि त एव शब्दादयः सर्वत्र सन्ति संस्थिताश्चेति । उपदिशोऽप्येवमेवाव्यतिरेकेऽपीतरेतरापेक्षया परत्वापरत्ववत् सर्वत्र व्यवहारास्तित्वम्" इति । |
| II.101. वस्तोरितीदृशमेवेदं नाम, न विभक्त्यन्तरम् । 'दोषावस्तोर्वहीयसः प्रपित्वे' इति च समस्त- | I.9.1. अत्र स्कन्दस्वामी । 'वस्तोरितीदृशमेवेदं नाम । (वस्तोः) न विभक्त्यन्तरम् । 'दोषावस्तोर्हविष्मती घृताची' । 'दोषावस्तोर्वहीयसः प्रपित्वे' । |

स्यापि दर्शनात् । वस्तोः—ज्योतिरिति वस्तोः । द्योतत इति द्यौः । एवं सर्वत्र ।

इति समस्तस्यापि दर्शनात् । वस्तोः ज्योतिरिति वस्तोः । द्योतत इति द्यौः । एवं सर्वत्र" इति ।

II.166. क्वेति सप्तमीसामानाधिकरण्यात् दोषावस्तोऽपि सप्तम्या एव । अव्ययलुगध्यवसितः ।

" "क्वेति सप्तमी सामानाधिकरण्यात् दोषावस्तोरित्यपि सप्तम्या एवाव्ययलुगध्यवसितः" । इति स्कन्दस्वामी ।

II.212. वेसरशब्दस्य चायमेकारस्याकारश्छांदसः । सादृश्येन च विशेषणं वेसरसदृशानि । कतमानि पुनस्तानि वा सन्ति कानि तानि हि या वेसरो निष्पादकगताभ्यां विरुद्धाभ्यां जातिभ्यामश्वजात्या च सम्बन्धः । एवं यावद्वौ निष्पादकौ पूर्वभागापरभागौ तद्गताभ्यां विरुद्धाभ्यां पूर्वभागगतेन चोष्णेन च सम्बन्धाद् वेसरसदृशानि ।

I.9.4. अत्र भाष्ये स्कन्दस्वामी । "वेसरशब्दस्याय- (वासरम्) मेकारस्याकारः । सादृश्येन चात्र वर्तते । यथा वेसरो निष्पादकगताभ्यां विरुद्धाभ्यां जातिभ्यामश्वत्वजात्या गर्दभत्वजात्या सम्पन्नः । एवं यावद् द्वौ निष्पादकौ पूर्वभागापरभागौ तद्गताभ्यां विरुद्धाभ्यां शीतोष्णाभ्यां पूर्वभागगतेन शीतेनापरभागगतेन चोष्णेन सम्बन्धाद्वेसरसदृशत्वाद्वासरम् ।" इति ।

III.115. अश्मेति मेघनाम पर्वतनाम वा । द्यावापृथिव्यौ वा तद्व्यापनयोगात् ।

I.10.8.अत्र स्कन्दस्वामिना मेघत्वेन व्याख्यातम् । (अश्मा)

II.103. आ उपर उपल इत्यादि, आङभिविधौ मर्यादायामित्यन्ये, विनोपरोपलाभ्यां साधारणानीत्यर्थः । आ उपरादीनीति वक्तव्ये उभयोरुपादानं रलयोरविशेषत्वप्रदर्शनार्थम् । एकयोगक्षेमश्चाङ्गीकृत्याह—उपर उपलो मेघो भवतीति । वक्ष्यमाणनिगमापेक्षयोपलशब्दस्य च पाषाणे प्रसिद्धतरत्वात् 'एषामुपरः स्थविष्ठो मध्यमः' इति तत्संघातश्च सर्वत उपलशब्दवाच्यत्वेन प्रसिद्ध एवेति मेघग्रहणं कृतम् मर्यादापक्षस्य च मेघग्रहणमेव लिङ्गमिति, उत्तराणि मेघस्यैवेति । यदा पर्वतस्तदा—उपेत्य रमन्तेऽस्मिन्नप्राणीति । मेघपक्षे आप इति । अभिविधिपक्ष इदं निर्वचनमिति भाष्यकाराभिप्रायः । इतरत्र वृत्त्यभावादेव रमिश्च तिष्ठत्यर्थे, तिष्ठन्ति संहन्यन्ते वा ।

I.10.18,19 इत्यादिभाष्यस्य स्कन्दस्वामिग्रन्थः । (उपरः, "आ उपर उपल इति । आङभिविधौ । उपलः) मर्यादायामित्यन्ये । विना उपर उपल इत्येताभ्यां साधारणानीत्यर्थः । आ उपरादिति वक्तव्ये उभयोरुपादानं रलयोरविशेषत्वप्रदर्शनार्थम् । एकयोगपक्षे लत्वं(पक्षत्वं)चाङ्गीकृत्याह— उपर उपलो मेघो भवतीति । वक्ष्यमाणनिगमापेक्ष्या उपलशब्दस्य च पाषाणे प्रसिद्धतरत्वात् 'तेषामुपरः स्थविष्ठो मध्यमः' इति । तत्संघातशब्दे च पर्वत उपलशब्दवाच्यत्वेन प्रसिद्ध एवेति मेघग्रहणं कृतम् । मर्यादापक्षस्य च मेघग्रहणमेव लिंगमिति । उत्तराणि मेघस्यैवेति । यदा पर्वतस्तदा उपेत्य रमन्ते ह्यस्मिन्नप्राणीति । मेघपक्षे आप इति । अभिविधिपक्षे चेदं निर्वचनमिति भाष्यकाराभिप्रायः । इतरत्र प्रत्यभावादेव रमिश्च तिष्ठत्यर्थे । तिष्ठन्ति संहन्यन्ते वा" इति स्कन्दस्वामिग्रन्थः ।

II.95. अहिगोपाः—अहिर्मेघो गोपायिता ।

II.107. वाङ्नामानीत्यादि—उत्तराणि सप्तपञ्चाशत्, श्लोक इत्यादीनि । उच्यतेऽनेनेति वागिन्द्रियम् । तत्कार्यं शब्दोऽपि—उच्यत इति वाक् । उच्यतेऽनयार्थ इति वा वाक् । स्तनयित्नुलक्षणा माध्यमिका सापि उच्यत इति वाक् । तदधिष्ठात्र्यपि देवता वागिष्यते । सर्वस्याश्च तस्या मेघहेतुत्वाद् मेघनामभ्यः पराणि सप्तपञ्चाशत् श्लोक इत्यादीनि नामानि ।

III.138. स्वाहेत्येतत्पूर्वपदं सु आहेति वा । स्वाहाकारान्तो होममन्त्राणां कर्तव्यः । 'न ह वै ता आहुतयो देवान् गच्छन्ति ये अवषट्कृता वा अस्वाहाकृता वा भवन्ति' इति श्रुतेः । स्वाहाकारस्य सम्प्रदानत्वेन मन्त्रान्तेऽवश्यंभावित्यादयमर्थो यस्यान्ते श्रूयते स होममन्त्रः शोभनमर्थमाह । अथवा प्रजापतेः स्वा आत्मीया वागाहेति स्वाहा । एवं हि श्रूयते 'स्वा ह्येनं वागभ्यवदत् तत् स्वाहाकारस्य जन्म' इति । एवमिति स्वाहाकाररूपा वाक् प्रजापतेर्निसृष्टेत्यर्थः ।
अथवा स्वं प्राहेति यजमानस्य स्वयं हविर्देवतायै दत्तं तदुद्देशेन त्यागात् तस्य यजमानस्येत्येवं प्राहेति स्वाहा । सम्प्रदानत्वं स्वाहाकारस्य स्पष्टमनेन प्रकारेण प्रदर्शितं भवति । स्वाहुतमित्यादि । अथवा यदनेन स्वाहाकारेण जुहोति तदेव सुष्ठु मर्यादया जुहोतीति । एवं च सति पूर्वकाणि निर्वचनानि ब्रूतेः । इदं जुहोतेरिति ।

I.10.21. अत्राहिशब्दं मेघनामत्वेनाभाषयत् स्कन्द-(अहिः) स्वामी ।

I.11. इति भाष्ये स्कन्दस्वामी । "उत्तराणि सप्त-(वाङ्नामानि) पञ्चाशत् श्लोक इत्यादीनि वाङ्नामानि । उच्यतेऽनेनेति वागिन्द्रियम् । तत्कार्यः शब्दोऽपि—उच्यत इति वाक् । उच्यतेऽनयार्थं इति वाक् । स्तनयित्नुलक्षणा माध्यमिका, सापि उच्यते इति वाक् । तदधिष्ठात्र्यपि देवता वागिष्यते । सर्वस्याश्च तस्या मेघहेतुत्वाद् मेघनामभ्य उत्तराणि" । इति ।

I.11.24. "स्वाहेत्येतत् स्वाहाकृतिशब्दस्य पूर्वपदं (स्वाहा) स्वाहाकारान्तो होममन्त्राणां कर्तव्यः । 'न ह वै ता आहुतयो देवान् गच्छन्ति या अवषट्कृता वा अस्वाहाकृता वा भवन्ति' इति श्रुतिः । स्वाहाकारस्य सम्प्रदानत्वेन मन्त्रान्तेऽवश्यंभावित्वात् । अयमर्थो यस्यान्ते श्रूयते स होममन्त्रः शोभनमर्थमाह । अथवा प्रजापतेः स्वा आत्मीया वागाहेति स्वाहा । 'स्वा ह्येवं वागभ्यवदत् तत् स्वाहाकारस्य जन्म' इति भावमिति स्वाहाकाररूपा वाक् प्रजापतेर्निसृष्टेत्यर्थः । अथवा स्वं प्राहेति यजमानस्य स्वयं हविर्देवतायै दत्तं तदुद्देशेन त्यागात् तस्य यजमानेनेत्येवं प्राहेति स्वाहा । सम्प्रदानत्वं स्वाहाकारस्य स्पष्टमनेन प्रकारेण दर्शितम् । स्वाहुतमित्यादि । अथवा यदनेन स्वाहाकारेण जुहोति तदेव सुष्ठु मर्यादया जुहोतीति । एवं च सति पूर्वकाणि निर्वचनानि ब्रूमः । इदं तु जुहोतेरिति ।"

III.123. स धिषणशब्द 'धिषेः' इत्यस्य दधात्यर्थे वर्तमानस्य। सा ह्यर्थान् धारयति।

I.11.44. अत्र स्कन्दस्वामिना पठितात् 'धिषि (धिषणा) धारणे' इत्यस्मात्।

II.476. सोमस्य गल्दया गालनेन क्षारणेन प्रदानेन पूरणेन तृप्तेत्यर्थः। आगालनात् पूरणात्।
? स्कन्दस्वामिनिरुक्तभाष्ये नोपलब्धम्।

I.11.54. गलेः पूरणार्थत्वं स्कन्दस्वामिनोक्तम्। (गल्दा)
I.12.3. 'क्षद स्थैर्ये' इति स्कन्दस्वामी। (क्षद्म)

IV.38. मधु कस्मात्? उच्यते। मेघोदरवर्ति सलिलं मध्वभिप्रेतम्। तच्च पुनर्वैद्युतात्मना दह्यमानं सरसवर्णेन तद्गतेनैव वायुना ध्मायमानं धमति। अतो धात्वर्थसम्बन्धासम्भवाद् धमतेराद्यन्तविपरीतस्येत्याह। नैरुक्तधातुर्वा धमतिर्गतिकर्मान्तर्णीतण्यर्थो निष्कालने द्रष्टव्यः। निर्ध्माय्यते हि तन्मेघात् निष्काल्यत इत्यर्थः।

I.12.11. "मेघोदरवर्ति सलिलं मध्वित्युच्यते तच्च (मधु) पुनर्वैद्युतात्मना दह्यमानं सरःस्वर्णेन तद्गतेनैव वायुना ध्मायमानं धमति। अतो धात्वर्थसम्बन्धासम्भवाद् धमतेराद्यन्तविपरीतस्य बाहुलकादुप्रत्ययोः। मधु। नैरुक्तधातुर्वा 'धमतिर्गतिकर्मा।' अन्तर्णीतण्यर्थो निःकालने द्रष्टव्यः। निर्धाम्यते निःकाल्यते हि तन्मेघात्।

II.14. मध्विति, 'मनेः' उकारप्रत्यये नकारस्य व्यापत्तिर्धकारेण।

यद्वा 'मद तृप्तौ'।' अस्माद् बाहुलकादुप्रत्ययो धान्तादेशश्च।

II.217. माद्यतेर्वा मधु सोममित्यर्थः। 'मद तृप्तौ' तृप्यन्ति हि सोमेन देवताः।......तेनापि हि तृप्यन्ति पातारः।

माद्यन्ति हि तेन पीतेन प्राणिनः।

IV.17. मधुमन्तं मधूदकं भूम्नि मतुप् बहुनोदकेन तद्वन्तम्। रसवचनो वा मधु स्वादुतमम्... ...। मधुश्च्युतं मधु स्वादु स्यात् स्वादूदकस्य क्षरितारम्।
? स्कन्दस्वामिनिरुक्तभाष्ये नोपलब्धम्।
See Skanda on RV. I, 80. 1.

यद्वा मधुवत् स्वादुत्वात् (स्वादुरसात्) मध्वित्युच्यते।" इति स्कन्दस्वामिनिर्वचनानि।

I.12.31. अत्र 'शश प्लुतगतौ'। अन्तर्णी- (अहिः) तण्यर्थः। निर्गमय भूमौ पातय कं? उच्यते—अहिं मेघं वृत्रमित्यर्थः।" इति स्कन्दस्वामिभाष्यम्।

II.158. सुखम्—सुष्ठु हितं खेभ्यः। नेयं हि योगलक्षणा चतुर्थी इन्द्रियाणामचैतन्यात् सुखादिभिरनभिसम्बन्धात्। अत इयं हेतौ पञ्चमी। इन्द्रियविषयसन्निकर्षस्य सुखहेतुत्वादुपपद्यत

I.12.44. इति भाष्ये स्कन्दस्वामी। "सुष्ठु (सुखम्) हितं खेभ्यः। नेयं हितयोगलक्षणा चतुर्थी इन्द्रियाणामचैतन्यात् सुखादिभिरनभिसम्बन्धात्। अत इयं हेतौ पञ्चमी। इन्द्रियविषयसन्निकर्षस्य सुखहेतुत्वादुपपद्यते

| | |
|---|---|
| इन्द्रियाणां हेतुता । यथाश्रुतसम्बन्धानुपपत्तेश्च सम्बन्धयोगिपदान्तराध्याहारः । अतिशयेन हितं पुरुषस्य खेभ्यः, सुखहेतुकमित्यर्थः । हितं वा पुरुषे, आत्मधर्मत्वात् सुखादीनाम्, धर्म्यधिकरणत्वाच्च धर्माणाम् ।<br>अथवा खेभ्य इति चतुर्थ्येव । खशब्देन च 'आत्मा मनसा संयुज्यते मन इन्द्रियेण' इति सम्बन्धसम्बन्धात् पुरुष एवोच्यत इति यथाश्रुतसम्बन्धः । तथा चोपनिषद्वर्णः—'स एव इह प्रविष्ट आनखाग्रेभ्यो यथा क्षुरः क्षुरधानेऽवहितः स्यात्' इत्युपक्रम्य 'प्राणन्नेव प्राणो भवति' इति प्राणादिशब्दैस्तस्यैवाभिधानं दर्शयति । | इन्द्रियाणां हेत्वर्थका यथाश्रुतसम्बन्धानुपपत्तेश्च सम्बन्धयोग-( योग्य )-पदार्थान्तराध्याहारः । अतिशयेन हितं पुरुषस्य स्वेभ्यः स्वहेतुक-खेभ्यः, (खहेतुककहेतुक) मित्यर्थः । हितं वा पुरुषे,आत्मधर्मत्वात् सुखादीनाम्,धर्म्माधिकरणत्वाच्च धर्माणाम् । अथ वा खेभ्य इति चतुर्थ्येव । खशब्देन च 'आत्मा मनसा संयुज्यते मन इन्द्रियेण' इति सम्बन्धिसम्बन्धात् पुरुष एवोच्यत इति यथाश्रुतसम्बन्धः; तथा चोपनिषद्वर्णः । 'स एष इह प्रविष्ट आ नखाग्रेभ्यो यथा क्षुरः क्षुरधानेऽवहितः स्यात्' इत्युपलक्ष्य 'प्राणान्ते च प्राणानां भवति' इति प्राणादिशब्दैस्तस्यैहाभिधां दर्शयति । |
| II.159. खं पुनः खननेः,……उत्पूर्वस्य, उत्खनति विनाशयति । किम् ? परं ब्रह्मप्राप्तिसुखम् । कथम् ? तद् द्वारेण ग्राम्यसुखप्रवृत्तेरधोगमनात् । | खं पुनः खननेरुत्पूर्वस्य, उत्खनति विनाशयति । किम् ? परं ब्रह्मप्राप्तिसुखम् । कथम् ? ग्राम्यसुखप्रवृत्तेरधोगमनात्" । इति । |
| ? स्कन्दस्वामिनिरुक्तभाष्ये नोपलब्धम् । | I.12.45. "क्षद स्थैर्ये" इति स्कन्दस्वामी<br>( क्षत्रम् ) |
| II.349. यादुरी यादुरित्युदकनाम रो मत्वर्थे रेतोलक्षणेनोदकेन तद्वती, भूम्नि च मत्वर्थीयः । | I.12.48. अत्र स्कन्दस्वामी । "यादुरित्युदक-(यादुः) नाम । रो मत्वर्थीयः" इति । |
| IV.84. हे महिनि महो महत्वमुदकं वा प्रभूतं तेन तद्वति । तदाह भाष्यकारः । महतीत्युदकवती वेति । | I.12.56. 'महिनि' इति अत्र "मह उदकनाम" इति (महः) स्कन्दस्वामी । |
| II.271. अयं हि युमिश्रणे पठ्यते । प्रयुज्यते च 'जनयत्यै त्वा संयौमि' इति । ततोर्थान्तरेपि वृत्तिं दर्शयितुमस्य पाठः । मिश्रणविपरीतपृथग्भावेऽपि दर्शनात् । न चायं वेरुपसर्गस्यार्थः । शब्दस्यापि प्रयोगे प्रतीतिदर्शनात् । युतं धनमस्य भोजनमस्य युतोऽयमिति पृथग्भूत इति गम्यते । | I.13.2. अस्य निर्वचने स्कन्दस्वामिना प्रतिपादितः । (यव्याः) 'यु मिश्रणे' इति पठ्यते प्रयुज्यते च । 'जनमत्यै त्वा संयौमि' इति । तथापि पृथग्भावेऽपि वर्तते । न चायं वेरुपसर्गस्यार्थः । केवलस्यापि दर्शनात् । युतं धनमस्य युतं भोजममस्य युतोऽयमिति पृथग्भूत इति गम्यते' इति । |

II.111. ऋतावरीः—आमन्त्रितविभक्तेः स्थाने द्वितीया, ऋतमुदकं तेन तद्वत्यः, भूम्नि मतुप्, हे बहूदका इत्यर्थः ।

I.13.23' अत्र स्कन्दस्वामिना "नदीनाम" इति (वयः-ऋता- नोक्तम् । वयः)

IV.38. अर्वेत्यर्त्तेरन्तर्णीतण्यर्थस्य 'अन्येभ्योऽपि दृश्यन्ते' इति वनिपि रूपम् । ईरणवानिति भाष्ये त्वर्थप्राप्तवचनं द्रष्टव्यमिति ।

I.14.3. भाष्ये स्कन्दस्वामी ।,"भाष्ये तु 'अर्वेरण-(अर्वा) वान्' इति अर्थप्राप्तवचनं द्रष्टव्यम् । अर्त्तेर-न्तर्णीतण्यर्थात् 'अन्येभ्योऽपि दृश्यन्ते' इति वनिति रूपम् ।'

II.116. अस्य निर्वचनम् दधत् धारयन् सादिनं साधीयः क्रामति । दधत् क्रन्दति हर्षाद् हेषा-रवं करोति । दधदाकारी भवति—अधि-ष्ठित ईषदवनतमध्यभागः, उन्नतकन्धरः, कुञ्चितघोणः, स्तिमितचक्षुः, कर्णशुक्तिस्व-कारो भवति ।

I.14.7. अत्र स्कन्दस्वामी । "दधिक्राः दधत् (दधिक्राः) धारयत् सादिनं साधियः क्रामति । दधत् क्रन्दति हर्षार्थे(र्थं) हेषारवं करोति दधदित्याकारी भवति । अधिष्ठितम्, ईषदवनतं मध्यभागः, उन्नतकन्धरः, कुञ्चितघोणः, स्तिमितचक्षुः, कर्णशुक्तिकाकारो भवति ।" इति ।

II.118. इतिहासपक्षे नैरुक्तपक्षेऽपि पूर्वपक्षापरपक्षौ, आहोरात्रे वा । हरी इन्द्रस्य, सोमपानादि-क्रियासाधनभूतत्वात् । रोहितोऽग्नेः । नित्यपक्षे ज्वाला अश्वाः, व्याप्तिमत्यः, हरित-वर्णाः प्रातरादित्यस्य । अश्विकाले रासभवर्णौ, तत्कालोचितेन श्यामलेन वर्णेनापदेशः । अजाः—अजनात्, पूष्णः काले रश्मयो गच्छन्ति सर्वतः, प्रावृषि पृषत्यो विचित्रा मेघमाला मरुताम् । उषसः काले तमोरूपा रश्मिमाला गन्त्र्यः । सवितुः काले श्यामवर्णा भवन्ति । 'छन्दांसि वै विश्वरूपाणि' इति बृहस्पतेः । वायोः प्रवृत्तौ तृणपर्णपांस्वदेः सञ्चरणान्मि-श्रणान्नियुतः ।

I.15. "इतिहासपक्षे नैरुक्तपक्षेऽपि पूर्वपक्षापरपक्षा-वहोरात्रे वा । हरी इन्द्रस्य । सोमपानादि-क्रियायाः साधनत्वात् । रोहितोऽग्नेः । नित्य-पक्षे ज्वाला अश्वाः, व्याप्तिमत्यः । हरित आदित्यस्य । हरितवर्णा रश्मयः प्रातरादित्यस्य । रासभावश्विनोः । अश्विनोः काले रासभवर्णौ, तत्कालोचितेन श्यामलेन वर्णेनापदेशः । अजाः पूष्णः । अजा अजानात् । पूष्णः काले रश्मयो गच्छन्ति सर्वतः, प्रवृषि पृषत्यो विचित्रा मेघमाला मरुताम् । अरुण्यो गाव उषसः । उषसः काले तमोरूपा रश्मिमाला गन्त्र्यः । श्यावाः सवितुः । सवितुः काले श्यामवर्णा भवन्ति । 'छन्दांसि वै विश्वरूपाणि' इति बृहस्पतेः । नियुतो वायोः । वायोः प्रवृत्तौ तृणपर्णपांश्वादेः सञ्चरणान्मिश्रणान्नियुतः ” इति स्कन्दस्वामिग्रन्थः ।

II.118. तावन्त्येवोत्तराणि जमदित्यादीनि ज्वलतो दीप्तिमतः सत्त्वस्य नामधेयानि । दीप्त्याभक्ष-

I.17.1. अत्र स्कन्दस्वामी । "तावन्त्येवोत्तराणि (जमत्) जमदित्यादीनि ज्वलतो दीप्तिमतः

यदिव जमत् । अपकालितुमलं कलमलीकिनम् । जनं पराभावयति शोभयति शब्दानुकरणं वा जञ्जणाभवन् । तमः पापादिमलं मलभावान्नयतीति मलमलाभवन् । पूर्ववद्वानुकरणम् । मलमलायतेऽग्निरिति । यथाप्रसिद्धमर्चिरादयः शृङ्गाणीति ज्वाला एवोच्यन्ते । इति ।

यति दिव जमत् । अपकालितमलं कलमलीकिनम् । (नं) परिभावयति शोभयति शब्दानुकरणं वा जंजणाभवन् । तमः पापादिवद् मलं मलभावं नयति । पूर्ववद्वानुकरणम् । मलमलायते गिरिति ( गिरिरिति ) यथात्र पूर्च्चिरादयः । शृङ्गाणीति ज्वाला एवोच्यन्ते" इति ।

II.326. आघृणिरित्यनवगमः । आहृतदीप्तिरागतक्रोधो वेत्यर्थः । अतश्चानेकार्थमपि । ज्वलन्नामसु क्रोधनामसु वा घृणिशब्दस्य पाठात् ।

I.17.10. अत्र "ज्वलन्नामसु क्रोधनामसु च पाठा- (घृणिः) दनेकार्थत्वम्" इति स्कन्दस्वामिवचनात् ।

III.112. सर्वत्राध्यायान्ते द्विरुक्तिः पदस्य वाक्यस्य वा शब्दशास्त्रे 'तस्य परमाम्रेडितम्' इति आम्रेडितमिति महासंज्ञा प्रणयनस्य प्रयोजनं वर्णितमन्वर्थसंज्ञाविज्ञानम् । आम्रेड्यतेऽधिकमुच्यते । नैवंजातीयकं द्विवचनं जाघट्यत इति शब्दविदो विदाञ्चक्रुः । यथाहो दर्शनीयाहो दर्शनीयेति ।

I.17. अत्र स्कन्दस्वामी । "अन्यत्रापि स (जमत्) एव सर्वत्र यद्वा, द्विरुक्तिः पदस्य वाक्यस्य वा शब्दशास्त्रे 'तस्य परमाम्रेडितम्' इति महासंज्ञाकरणस्य प्रयोजनं वर्णितमन्वर्थसंज्ञानम् । आम्रेड्यतेऽधिकमुच्यते इति तेनैवंजातीयकद्विर्वचनानि जायन्त इति ( ०द्विर्वचनाज्जाघटयत इति ) शब्दविदो विदाञ्चक्रुः । यथाहो दर्शनीयाहो दर्शनीयेति" इति ।

II.120 ज्वलनकर्मसम्बन्धादाह—कर्मनामान्युत्तराण्येव षड्विंशतिः । आपः अप्न इत्यादीनि । क्रियत इति कर्मणि कारक इत्यर्थः । अनाश्रितविशेषाणाञ्च कर्मणां नामानि सति साधारण्ये, साधारणानि च निर्णेतव्यानि वाक्यार्थवशात् ।

II.1. इति भाष्ये स्कन्दस्वामी । "ज्वलनकर्मसम्बन्धादाह—कर्मनामान्युत्तराण्येव षड्विंशतिः । आपः अप्न इत्यादीनि । क्रियत इति कर्म । अनाश्रितविशेषाणाञ्च कर्मणां नामधेयानि सति साधारण्ये, साधारणानि च निर्णेतव्यानि वाक्यार्थवशात्" इति ।

II.84. निगमप्रसङ्गादाह—व्रतमिति कर्मनाम, वृणोतीति । कर्तरि सत इति कृतव्याख्यानम् । तद्धि शुभमशुभं वा वृणोति बध्नाति कर्तारम् । तथा च श्रुतिः—'तं विद्याकर्मणि समन्वारभेते पूर्वप्रज्ञा चेति ।' इदमपीतरद्व्रतम्—गुडलवणस्त्र्यादिविषयनिवृत्तिरूपं कर्म । एतस्मादेव

II.1.7. अत्र स्कन्दस्वामी । "व्रतमिति कर्मनाम (व्रतम्) वृणोतीति कर्तरि सत इति कृतव्याख्यानम् । तद् द्विविधम्, शुभमशुभं वा । वृणोति निबध्नाति कर्तारम् । तथा च श्रुतिः । 'तं विद्याकर्मणि समन्वारभेते पूर्वप्रज्ञा चेति ।' इदमपीतरद्व्रतम्—गुडलवणस्त्र्यादिविषयनिवृत्ति-

द्वारेण यागकर्माणि । प्रज्ञां वा दीपयति तस्य स्योन्मीलयति प्रज्ञाम् । बुभुक्षितस्य न प्रतिभाति किञ्चित् । अत उच्यते । तस्य निष्पत्तिद्वारेण धियो विराजतीति । अथवा धिय इति तद्वदुपलक्षणम् । धीमन्ति सर्वाणि भूतानि प्रतीत्यर्थः । विराजति विविधं दीप्यते इष्टे ।

I.57. मधुच्छन्दस आर्षम्, मारुतीयमृक् । आदित्यथपर्याय आनन्तर्ये, अहेति विनिग्रहार्थीय एवशब्देन समानार्थः । अनन्तरमेव स्वधां स्वधेत्युदकनाम, उदकमनु पश्चात्, कस्य ? सामर्थ्याद्वृष्टेः पश्चादनन्तरमेव तदुदकमित्यर्थः । किं कुर्वन्ति ? उच्यते पुनर्गर्भत्वमेरिरे । 'ईर गतौ' इत्यस्य ण्यन्तस्येदं रूपम्, पुनर्गर्भत्वं गमयन्ति मरुतः । एतदुक्तं भवति—वार्षिकांश्चतुरो मासान् वर्षित्वाऽनन्तरमेवाष्टौ मासांस्तदुदकं रश्मिभिः प्रत्याहृतमागामिनि संवत्सरे पुनर्गर्भत्वमापादयन्ति मरुत इति । दधाना धारयन्तोऽन्तरिक्ष आदित्यमण्डले वा, उदकनामैतत्, तदेवोदकं यज्ञसम्पादि । एवमत्रार्थान्तरस्यासम्भवात् सत्यां च गतावानर्थक्यात् पदपूरणत्वस्यान्याय्यत्वादहशब्दो विनिग्रहार्थीय एवशब्देन समानार्थ इत्युपपन्नम् ।

सरस्वती । सा च यागकर्माणि प्रज्ञा वा दीपयति वृष्टिद्वारेण । ( वा अथा ? अथवा ) धियो विश्वा इति षष्ठ्यर्थे द्वितीया । राजतिरप्यैश्वर्यकर्मा । कर्मणां प्रज्ञानां वा सर्वासां विविधमीष्ट इत्यतर्थः ।

I.6.4. षडादहस्वधामिति मारुत्योऽनन्तरा ऋचः सुरूपकृत्नुमित्यैन्द्रमामेधातिथेरित्यैन्द्रत्वे प्राप्तेऽयमपवादः । आदहस्वधाभिरयेताः षडनन्तर मरुद्देवता वीळुचिदारुजत्नुभिरित्यस्या देवतान्तरोपदेशात् तद्वर्ज ( न ? ) मन्याः षण्मारुत्यः प्रतीयेरन् । तन्निवृत्त्यर्थमनन्तरवचनम् । आन्छन्दोऽथशब्दपर्याय आनन्तर्ये । अहेति विनिग्रहार्थीय एवशब्दार्थे । स्वधामिति स्वधाशब्द उदकनाम । अन्विति पश्चादर्थे । कस्य पश्चात् । सामर्थ्याद्वृष्टेः । एवं सम्बन्धयोजनाद्वृष्टेः पश्चादेवोदकं पुनर्गर्भत्वम् एरिरे । ईर गतावित्यस्य ण्यन्तस्येदं रूपम् । गमयन्त्यापादयन्ति मरुतः । पुनश्शब्दश्चातीतसंवत्सरगर्भत्वापादनापेक्षः । एतदुक्तं भवति—वार्षिकांश्चतुरो मासान् वर्षित्वा तदनन्तरमष्टौ मासांस्तदुदकं रश्मिभिः प्रत्याहृत्य त(मा? दा) गामिसंवत्सरे वर्षितुं पुनर्गर्भमापादयन्ति मरुत इति । अथवा स्वधेत्यन्ननाम । सस्यलक्षणं चात्रान्नमुच्यते । अनुशब्दश्च पश्चादर्थे एनेन सम्बध्यते । स्वधामनु सस्यलक्षणस्यान्नस्य पश्चात् सस्यान् निष्पाद्यानन्तरमेव पुनर्गर्भत्वमापादयन्ति मरुत इत्यर्थः । किं, सामर्थ्यादुदकम् । किं कुर्वन्तः । उच्यते । दधाना धारयन्तोऽन्तरिक्ष आदित्यमण्डले वा । किं नाम । तदेवोदकम् । नामेति ह्युदकनामपठितम् ।

कीदृशं, यज्ञियं यज्ञसम्पादि मरुद्भिर्गृह्यते । अष्टौ मासानन्तरिक्ष आदित्यमण्डले वा धार्यमुदकं गर्भीभवत्यत एवमुच्यते—दधाना नाम यज्ञियं पुनर्गर्भत्वमेरिर इति । अथवा नामशब्दः संज्ञावचनः । धारयन्तो यज्ञियां संज्ञाम् । कतमाम् । सामर्थ्यान्मरुत इत्येताम् । मरुन्नामानमित्यर्थः । अथैवमन्यथास्या ऋचोऽर्थयोजना—अनुशब्दः पश्चादर्थः सामर्थ्याद् वृष्ट्यैव सम्बध्यते । स्वधामित्येतत् तु सस्यलक्षणान्नवचनं गर्भत्वमेरिर इत्येतेन संबध्यते । दधाना इत्यापि दधातिर्दानार्थः । नामशब्दोऽप्युदकनाम । एवमेकवाक्यता । वृष्टेः पश्चादनन्तरमेव सस्यलक्षणमन्नं पुनर्गर्भत्वमेरिरे मरुतो ददतः उदकं यज्ञसम्पादि । एतदुक्तं भवति—वर्षास्त्वोषधीर्जनयित्वा न तावत्येव कृतार्थीभवन्ति मरुतः, किं तर्हि, ता एव पुनर्गर्भयन्ति उदकदानेनेति ।

II.225. मधुच्छन्दसा इन्द्र उच्यते । इन्द्रेण ईश्वरो मरुद्गणस्तेन सह । सं हिशब्दः पदपूरणः, संदृश्यसे संजग्मानः सङ्गच्छमानस्त्वमबिभ्युषा भयवर्जितेन । किं च मन्दू प्रथमाद्विवचनमेतत्, मदनशीलौ युवामिन्द्रमरुद्गणौ । अथवा मन्दू इत्येतदपि तृतीयैकवचनान्तमेव मरुद्गणविशेषणम् । मन्दुना मदिष्णुना मरुद्गणेनेति । समानवर्चसा इत्येतेन व्याख्यातम् । द्विवचनान्तं वा । तृतीयैकवचनान्तं वा । समानदीप्ती युवाम् । समानदीप्तिना वा मरुद्गणेनेति ।

I.6.7. इन्द्रेणेति सहयोगलक्षणा तृतीया । इन्द्रेण सह त्वं मरुद्गण । सं हि दृक्षसे हिशब्दः पदपूरणः । सम्यग् दृश्यसे । सञ्जग्मानः सङ्गच्छमानः तत्र तत्र वृत्रवधादौ कार्ये अबिभ्युषा भयवर्जितेन । 'तस्या एकान्तरायास्तु अर्धर्चोऽन्त्यो द्विदेवतः' या ऐन्द्रमारुत्युक्ता (न?) ऋक् एका वीळुचिदिति । तस्या एका- (न्तरा?) न्तरा या इन्द्रेण सं हीत्येषा तस्या, अर्धर्चोऽन्त्यो द्विदेवतः ऐन्द्रमारुतः । मन्दू । मन्दतेर्मोदनार्थस्यैतद् रूपम् । नित्यप्रमुदितौ । समानवर्चसा तुल्यदीप्ती च इन्द्रमरुद्गणौ ।

III.5. मधुच्छन्दसः । इच्छब्द एवार्थे । इन्द्रमेव गाथिनो गेयत्वाद् गाथानि सामानि तद्वन्त उद्गातारः । बृहत् अत्र तृतीयाया अलुक् बृहता बृहन्नाम्ना साम्ना महता वा । इन्द्रमेवार्केभिः

I 7.1. इच्छब्द एवार्थे । इन्द्रमेव । (सं ?) गीयन्ते इति गाथाः सामानि । तद्वन्तो गाथिनः उद्गातारः । तृतीयार्थे द्वितीयेयं बृहन्नाम, महता साम्ना इन्द्रमेव अर्केभिः मन्त्रैः ऋग्ल-

अर्कैर्मन्त्रैः ऋगाख्यैः। अर्किणो मन्त्रवन्तो होतार इत्यभिप्रायः। इन्द्रमेव वाणीः द्वितीया व्यत्ययेन तृतीयार्थे वाणीभिर्वाग्भिर्यजुराख्याभिरध्वर्यवः। अनूषत 'णु स्तुतौ' इत्यस्य रूपम्। एताभिः स्तुवन्तीत्यर्थः।

II.447. मधुच्छन्दसः। स नो वृषन् न इति तादर्थ्ये चतुर्थीयं वृषन्नित्येतेन सम्बध्यते, अस्मदर्थं वर्षितः, यो हि सर्वार्थं वर्षति वर्षत्यसौ मधुच्छन्दोर्थम्। अत एष इन्द्र आमन्त्र्यते स नो वृषन्निति। अमुं चरुमिति मेघनाम मेघं सत्रादावन् सत्रेति सत्यनाम सततपर्यायो वा तदुपपदस्य ददातेर्वनि रूपम्। हे सत्य सततं वा दातरित्यर्थः। अपावृधि अपावृणु उद्घाटय अस्मभ्यमस्मदर्थम्। अप्रतिष्कुतः। 'स्कुञ् आप्रवणे' आप्रवणमागमनं प्रवतेर्गत्यर्थत्वाद् अन्येनाप्रतिगतोऽप्रतिष्कुतो युद्धे अन्येनाप्रतिनियुक्तपूर्व इत्यर्थः, अप्रतिस्खलितपूर्वो वा। अत्र च स नो वृषन्निति तच्छब्दश्रुतेः प्रत्यक्षकृतत्वाच्चास्य मन्त्रस्य अप्रतिष्कुत इति चानामन्त्रितत्वादेकवाक्यतार्थं यच्छब्दोऽध्याहार्यः। यस्त्वमप्रतिष्कुतः सोपावृधीति।

II.457. मधुच्छन्दसः। तुञ्जे तुञ्जे दाने दाने। कस्य? सामर्थ्याद् वृष्टेर्धनानां वा ये उत्तरे पूर्वेभ्यः प्रकृष्टतराः स्तोमा मदीया इन्द्रस्य वज्रिणः। यच्छब्दश्रुतेस्तच्छब्दो ऽध्याहार्यः। तैरपि न विन्धे विदेर्लाभार्थस्येदं रूपम्, न लभेः। अस्येन्द्रस्य सुष्टुतिं तैरपि नाशेषानिन्द्रगुणान प्रकाशयितुं शक्नोमीत्यर्थः। एतदुक्तं

क्षणैः अर्किणो मन्त्रवन्तो होतारः। इन्द्रमेव वाणीः। वाङ्नामैतत्। तृतीयार्थे चात्र द्वितीया। यजुर्लक्षणैरध्वर्यवः अनूषत अस्तुवन्।

I.7.6. न इति तादर्थ्ये चतुर्थीयं वृषन्नित्यनेन सम्बध्यते। अस्मदर्थे व (र्षीत ? र्षितः)। यो हि सर्वार्थे वर्षति वर्षत्यसौ मधुच्छन्दोर्थम्। तत एवमामन्त्रयते नो वृषन्निति। अमुं चरुं मेघम्। चरुरिति मेघनाम। सत्रादाव। सत्रा इति सत्यनाम सततपर्यायो वा। सत्यसततयोर्दातः। अपावृधि उद्घाटय। अस्मभ्यम् अस्मदर्थम्। अप्रतिष्कुतः। स्कुञ् आप्रवणे। आप्रवणमागमनं प्रव (र्ते ?) तेर्गत्यर्थत्वादन्येनाप्रतिगतः अप्रतिष्कुतः। युद्धेऽभि (प्र ? यु) ज्ञानः अन्येनाप्रत्यभियुक्तपूर्व इत्यर्थः। अत्र च स नो वृषन्निति तच्छब्दान्मन्त्रस्य चास्य प्रत्यक्षकृतत्वाद् अप्रतिष्कुत इत्येतस्यानामन्त्रितत्वाद् यच्छब्दोऽध्याहार्यः। यस्त्वमप्रतिष्कुतः सोऽपावृधि।

I.7.7. तुञ्ज इति न (व ? य) ज्ञनाम। किन्तर्हि तुञ्जतेर्दानकर्मणस्तु (ञ्जा ? ञ्जो) दानम्। दाने दाने। कस्य। सामर्थ्याद् वृष्टेः धनानां वा। य उत्तरे पूर्वेभ्यः प्रकृष्टतमा मदीयाः स्तोमा इन्द्रस्य वज्रिणः। यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः। तैरपि न विन्धे। विदेर्लाभार्थस्येदं रूपम्। अहमस्येन्द्रस्य सुष्टुतिं सुष्ठु स्तुतिम् अशेषगुणप्रकाशनरूपाम्। तैरपि नाशेषानिन्द्रगुणान् प्रकाशयितुं शक्नोमीत्यर्थः। अथवायं न विन्ध इति स्पर्शनार्थो वा।

भवति येऽपि दानपरितुष्टस्य ममात्यन्तम-
हान्तः स्तोमास्तेपीन्द्रस्य गुणैकदेशवर्तिनः
समस्तगुणप्रकाशनमप्राप्ताः किं पुनरन्य इति।

(वारेपि ?) न विन्धे न स्पृशामि । अस्य
सुष्टुतिम् अशेषप्रकाशनरूपाम् । एतदुक्तं
भवति—येऽपि दानपरितुष्टस्य ममात्यन्त-
महान्तः स्तोमाः, ते ऽपीन्द्रस्य गुणैकदेश-
वर्तिनः समस्तगुणप्रकाशनमप्राप्ताः । किं
पुनरस्येति ।

I.79. मधुच्छन्दस आर्षम् । आ इत्येष वीत्येतस्य
स्थाने, विसृजताध्वर्यवो दत्तेत्यर्थः । ईमिति
पदपूरणः । एनं सुते सोमे, व्यत्ययेन सप्त-
म्येषा द्वितीयार्थे, सुतं सोमं मन्दिं तर्पयिता-
रमिन्द्राय मन्दिने तर्पयितव्याय । अथवा
सृजतिरत्र प्रक्षेपार्थः, प्रक्षिपतैनं सुतेऽस्मिं-
श्चमसस्थे सोमेऽभ्युन्नयतेत्यर्थः । इन्द्रायेन्द्रार्थं
चक्रिं करणशीलं स्वकार्याणाम्, विश्वानि
सर्वाणि वृत्रवधादीनि कर्माणि चक्रये
साधुकर्त्रे ।

I.9.2. आ इत्युपसर्गः सृजतेत्याख्यातेन सम्बन्धयि-
तव्यः । ईमिति पदपूरणः । एनं सोमम् असृ-
जत । सृजतिरत्र दानार्थः । ( केव ) लोऽपि
( दविद्धि ? वि) सृजतीत्युच्यते । अध्वर्यूणां
चायं प्रैषः । दत्त यूयमध्वर्यवः । सुते । द्वि-
तीयार्थे सप्तमीयम् । अभिषुतम् । अथवा
सुत इति स्वार्थे एव सप्तमी । सृजतिस्तु
प्रक्षेपणार्थः । प्रक्षिपतैनं सोममन्यस्मिन् प्रह्-
चम (से ? स) स्थे (यन् प्रते ?) पुनरभ्युन्न-
यतेत्यर्थः । कीदृशम् । मंदिं तर्पयितारम् ।
कस्मै इन्द्राय । सम्प्रदाने तादर्थ्ये चतुर्थीयम् ।
इन्द्राय दत्त ( म ? ) इन्द्राय वाभ्युन्नयत ।
कीदृशाय । मन्दिने तर्पयित्रे ( तर्पयि )
तव्याय वा । कीदृशम् । ( कि ? चक्रिं )
ताच्छील्येऽ(यकं ? यं किन्) । स्वकार्यकर-
णशीलम् । कीदृशाय । विश्वानि चक्रये सर्व-
वृष्ट्यादिकर्मकरणशीलाय ।

II.311. गायतिरर्चतिकर्मा । गायन्ति स्तुवन्ति
त्वाम् । के ? गायत्रिणो गायत्रं साम ते तव
तन्वन्त उद्गातारः । न च त एत केवलाः
किं तर्हि ? अर्चन्ति स्तुवन्ति अर्कं देवं त्वाम्,
अर्किणो मन्त्रोऽत्रार्क उच्यते तद्वन्तो होतारो-
ऽपि । ब्रह्माणो ब्राह्मण ऋत्विक् तत्पुरुषास्तु
ब्राह्मणाः शंस्योनीनवेक्ष्येदं बहुवचनम् । ब्राह्मणा
अपि त्वां हे शतक्रत बहुकर्मन् बहुयज्ञ इन्द्र ।
उद्वंशमिव येमिरे यथा हि कश्चिद् वंशमुद्य-

I.10.1. गायतिरर्चतिकर्मा । स्तुवन्ति त्वा गाय-
त्रिणः । गायत्रं साम, तद्वन्त उद्गातारः । न च
त एव केवलाः । किन्तर्हि । अर्चन्ति स्तुवन्ति
अर्कं नवं त्वाम् अर्किणः । मन्त्रोऽत्रार्क
उच्यते । तद्वन्तः होतारोऽपि । ब्रह्माणः
ब्रह्मैकर्त्विक् तत्पुरुषांस्तु ब्राह्मणाच्छंस्यादीनपे-
क्ष्येदं बहुवचनम् । ब्रह्माणोऽपि त्वा हे शत-
क्रतो । बहुकर्मन् । बहुप्रज्ञ । वा । उद्वंश-
मिव येमिरे यथा ( किञ्जि ? कश्चि ) द्

-च्छति एवमुद्यमिरे उद्यच्छन्ति उत्क्षिपन्तीत्यर्थः ।

वंशमुद्यच्छेद , एवमुद्यच्छन्ति उत्क्षिपन्ति, उच्छ्रयन्तीत्यर्थः । वीर्यवृद्धिस्त्वात्रोच्छ्रायोऽभिप्रेतः । स्तूयमाना हि देवता वीर्येण वर्धन्ते । सर्वर्त्विजः स्वैः स्वैः स्तोत्रैस्त्वां स्तुवन्तीति समस्तार्थः ।

III.43. मधुच्छन्दसः । आभिमुख्येन श्रोतारौ कर्णौ यस्य तस्य सम्बोधनं हे आश्रुत्कर्ण श्रुधी शृणु हवमाह्वानम । नु इति क्षिप्रनाम । चिदिति चार्थे क्षिप्रं च दधिष्व धारय । मे गिरः स्तुतीर्याज्यानुवाक्यादिलक्षणाः हे इन्द्र स्तोमं च शस्त्राख्यम् । इमं मम स्वभूतम् । कृष्वा कुरुष्व युजः युज्यत इति युक् सहायः । चिदप्यर्थे । सहायादपि कुत्साद्वा विष्णोर्वा मतिशायिकोऽयमासन्नतरमित्यर्थः ।

I.10.9. हे आश्रुतकर्ण ! श्रुधी हवम् आह्वानं श्रुत्वा च नूचिद्दधिष्व । नु इति क्षिप्रनाम । चिच्छब्दः पदपूरणः । क्षिप्रं धारय मनसि स्थापय शृण्वित्यर्थः । श्रवणार्थ एव वा सामर्थ्याद् दधातिः । किम् । गिरः स्तुतीः लौकिकीर्याज्यानुवाक्यालक्षणा वा । न च गिर एव केवलाः । किन्तर्हि । हे इन्द्र ! स्तोमम् इमं ममैव स्वभूतं शस्त्रलक्षणम् । श्रुत्वा च कृष्व कुरुष्व । युजश्चित् सद्मनः सन्निकृष्टतमः । कः पुनरिन्द्रस्य सहायः·········सखित्वात् सख्युश्च सहायताया अवश्यम्भावित्वाद्विष्णुर्वा । तस्यापि'सखे विष्णोवितरम्'इति इन्द्रस्य सखित्वदर्शनाद् मरुद्गणो वा ।

IV.73. मेधातिथेः । यो भवन्तमग्निं देववीतये वीतिर्गतिर्देवान प्रति वीतये गमनाय । अशनार्थो वा वीतिः । देवैर्भक्षणाय । हविष्मान् आविवासति परिचरति । तस्मै द्वितीयार्थे चतुर्थी तम् । हे पावक पावयितः मृळय सुखय ।

I.12.9. यो भवन्तमग्निं देववीतये । ( तप ? वी ) तिर्गत्यर्थः । अशनार्थो वा । देवान प्रति गमनाय देवानां वो हविर्भक्षणाय । हविष्मान हविः संयुक्तो यजमानः । आविवासति परिचर्यायामाभिमुख्येन परिचरति । तस्मै । द्वितीयार्थे चतुर्थ्येषा । तं हे पावक ! शोधयितः ! मृळय सुखय । (सुखय सर्वं यन्त्वामस्तोष्म ?) ।

III.53. अग्ने देवान् इहास्मदीये यज्ञे । आवह आह्वय । आहूय च सादय उपवेशय । योनिषु सवनाख्येषु । उपविष्टांश्च सतः परिभूष । यो यथा परिग्रहीतव्यस्तं तथा परिगृहाण यागाय स्वयमपि च पिब सोमं ऋतुना सह ।

I.15.4. आग्नेयी । चतुर्थी ऋग् ( अग्नि ) देवता । हे अग्ने ! देवान् इहावह आहूय च सादय उपवेशय योनिषु स्थानेषु त्रिषु सवनाख्येषु । ( स्वा ? सा ) दयित्वा च परिभू (य ? ष) परिपूर्तो भवतिः परिग्रहे । यथा यागार्थं परिग्रहीतव्यं तथा परिगृहाण यजेत्यर्थः ।

अथवा भूष ( य ? ) अलङ्कार इत्यस्यैतद्रूपम्, परिभूष्व स्वमण्डलदेवान् । स्वयमपि च ( विश्व ? पिब ) ऋतुना सह सोमम् ।

III.113. मेधातिथेः । अत्र यथा श्रुतसम्बन्धानुपपत्तेरेकवाक्यतायै यच्छब्दाध्याहारः प्रदर्शितो भाष्यकारेण द्रविणोदा यस्त्वमिति । द्रविणसो द्रविणं धनं दक्षिणालक्षणं हविराख्यं वा तस्मिन्निमित्तभूते कर्तृत्वेन वा तस्य सर्तारः । तस्य वा सम्भक्तार ऋत्विजः । अथवा सकारान्त एव धनवचनः । ततश्च द्रविणस इति पञ्चमी । तच्छ्रुतेश्च पिबत्विति शेषः । तेनायमर्थो भवति । द्रविणोदा नाम देवः । द्रविणसो धनात् सोमाख्यादेकदेशं स्वांशलक्षणं पिबतु । यमृत्विजो ग्रावहस्तासो अध्वरे । व्यत्ययेनैकवचनं बहुवचनस्य स्थाने । ध्वरतिर्हिंसाकर्मा तत्प्रतिषेधः । अवैगुण्याक्ष आदिभिरहिंसितेष्वित्यर्थः । यज्ञेषु ज्योतिष्टोमादिषु । अथवाध्वरे ज्योतिष्टोमादौ ये प्रतीतिसवचनं यागाभ्यासास्तेषु देवं दानादिगुणम् ईळते याचन्ते स्तुवन्ति वर्धयन्ति वा सः ।

I.15.7. चतस्रो द्रविणोदसः । सप्तम्याद्याश्चतस्रः ऋचः द्रविणोद ( स्य ? सः ) ईळत इत्यस्य स्तुत्या(त्य)पेक्षत्वाद् देवतानां च स्तुत्यत्वाद् द्रविणोदःशब्दस्य च देवतावचनत्वात् । द्रविणो- ( दाः ) द्वितीयार्थे प्रथमा । द्रविणोदसम् । द्रविणसः द्रविण ( इ ? मि ) ति धननाम, एतदिच्छ (ति ? न्ति) द्रविणस्य (न्तीत्यपि ? न्तीति क्वचि) सुगागमः । द्रविणस्युर्विप- (न्य ? र्य) य इति यथा। द्रविणस्यतेः छन्दसत्वात् क्विप् , क्विपि चाद्युदात्तत्वम् । द्रविणसाधनका (म ? मा) इत्यर्थः । ग्रावहस्तासः गृहीताभि ( ष्ट ? ष ) वग्रा ( व ? वा ) ण ऋत्विजः । अध्वरे यज्ञेषु । अध्वरशब्दोऽत्र ध्वरतेर्हिंसाकर्मणः क्रियाशब्दः, न यज्ञनाम व्यत्ययेन चैकवच (न ? नम्) । सादगुण्याद् रक्षआदिभिरहिंसितेषु यज्ञेषु । अथवा अध्वरशब्दः समस्तज्योतिष्टोमादिवचनः । यज्ञशब्द ( स ? स्त ) दवयवभूताभ्यासविशेषवचनः । ज्योतिष्टोमादावध्वरे येऽभ्यासविशेषाख्या यज्ञास्तेषु । देवं दातारं दीप्तं वा । ईळते स्तुवन्ति ।

II.424. मेधातिथेः । सोमानं सोतारम् । कस्य ? सामर्थ्यात् सोमानाम् । स्वरणं 'स्वृ शब्दोपतापयोः' शब्दयितारमुच्चारयितारं च । कस्य ? सामर्थ्यात् स्तुतीनां यष्टारं स्तोतारं चेत्यर्थः । कृणुहि कुरु मां बहुधनप्रदानेन । बहु धनं देहि येनाहं यष्टा स्तोता च स्यामित्यभिप्रायः । अथवा सर्वत्र यः शब्यते स स्वर्यत इति

I.18.1.सोमानमिति चाद्या याः पञ्च ता ब्रह्मणस्पतेः । सोमानमित्यादौ याः पञ्चर्चस्ता ब्रह्मणस्पतिदेवताः । सोमानं 'षुञ् अभिषवे' अभिषोतारम् । कस्य ? सामर्थ्यात् सोमस्य नः । स्वरणं 'स्वृ शब्दोपतापयोः' शब्दयितारम् अर्चयितारं च । कस्य? सामर्थ्यात् स्तुतीनाम् । यष्टारं स्तोतारं चेत्यर्थः । कृणुहि कुरु मां धनप्रदानेन । अथवा सर्वत्र यः शब्यते स

स्मरण: ल्युट् कर्मसाधन: प्रकाश्यत इत्यर्थ: । कतमोऽसौ कक्षीवान् ? उच्यते । य औषिज: पौत्र: । अथवा कक्षीवन्तमिति न ऋषिनाम न चोपमानम् । किं तर्हि ? आत्मनो विशेषणम् । उशिक्शब्दोऽपि मेधाविनाम । योऽहं कर्मलक्षणेन मनुष्यात्ययवभूतेन तेन तद्वान् औशिज: । उशिजस्त्व मेधाविन: कण्वस्य पुत्रो मेधातिथिर्नाम । यच्छुतेस्तदध्याहार: । तं मां सोमानं स्वरणं च कुर्विति सम्बन्ध: । अथवा हस्त्यश्वस्य कक्षादिस्तद्वान् ईश्वर इत्यर्थ: । उशिज उशिग्वष्टे: कान्तो ह्यसौ ।

स्वरणः प्रकाश इत्यर्थः । अभिषोतारं मां स्वरणं देवमनुष्येषु प्रकाशं कुरु । हे ब्रह्मणस्ने ! कमिव ? उच्यते । कक्षीवन्तम्, लुप्तोपममेतद् द्रष्टव्यम् कक्षीवन्तमिव ऋषिम् । कतमोऽयं कक्षीवान ? (यः ?) उच्यते । य औशिजः उशिक्पुत्रः ?

II.191. ············अस्य वैतद्रूपम्, रोगादीनां होता, अनातङ्क इत्यर्थ: । वसुवित्-'विद्लृ लाभे' वसूनां च लब्धा लम्भयिता वा दान इत्यर्थः । पुष्टिवर्धन:-सर्वप्रकारायाश्च पुष्टेर्वर्धयिता—स न:-अस्मान् अभिलषितार्थसम्पादनेन विप्रकारीत्यर्थ: । अथवा—रेवानित्यादिभि: पुत्र उच्यते, य एवंरूप: पुत्र: स ब्रह्मणस्पते: प्रसादेनास्मान् सेवताम् । अस्माकं जायतामित्यर्थः । अस्मिंश्च पक्षे यस्तुर इत्याद्यक्षरलोपेन चक्तुरः प्राह इत्येवं वा नेयम् ।

I.18.2. यो ब्रह्मणस्पती रेवान् धनवान् यश्च अमीवहा रोगाणां हन्ता वसुवित् 'विदिर्लाभे' अपूर्वाणामपि धनानां लब्धा । अथवा विन्दतिरत्र सामर्थ्यादन्तर्णीतण्यर्थ: । धनानां लम्भयिता स्तोतृभ्यो दातेत्यर्थः । पुष्टिवर्धनः सर्वप्रकारायाः पुष्टेर्वर्धयिता । स: नः सिषक्तु सेवतां, यस्तुरः त्वरिता क्षिप्रकारीत्यर्थः । अथवा यो रेवानित्यादिभि: पुत्रं प्रति निर्दिश्यते । ब्रह्मणस्पतिप्रसादाद् धनवत्त्वादिगुणः पुत्रोऽस्मान् सचताम् अस्माकं जायतामित्यर्थः ।

IV.42. मेधातिथेः । त्यच्छब्दश्रुतेर्यच्छब्दाध्याहार: । त्यं तं चारु शोभनमध्वरं यज्ञं प्रति गोपीथाय गोशब्देनात्र सोम उच्यते । पीथं पानं सोमपानाय प्रकर्षेण हूयसे । एतज्ज्ञात्वा मरुद्भिः सह हे अग्ने आगहि आगच्छेति ।

I.19.1. आग्निमारुतमुत्तमम् । अध्यायस्योत्तमं सूक्तमाग्निमारुतम् । प्रतिशब्दो लक्षणे कर्मप्रवचनीय: । त्यच्छब्दस्तच्छब्दपर्याय: । तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहर्तव्यः । योऽयमस्माभिः प्रकल्पित: तं प्रति । कीदृशम्? चारुं शोभनम् । अध्वरं यज्ञम् । गोपीथाय, सोमोऽत्र गौरुच्यते, सोमपानाय । प्रहूयसे प्रकर्षेणाहूयसे । एतज्ज्ञात्वा मरुद्भिः सहाग्ने आगहि ।

„ मेधातिथेरेव । अभि: कर्मप्रवचनीय: प्रतिना तुल्यार्थ: । अभि त्वा त्वां प्रतीत्यर्थः । पूर्व-

I.99.9. अभिशब्दोऽत्र 'अभिरभागे' इति लक्षणे कर्मप्रवचनीयः । त्वां प्रति । पूर्वपीतये पूर्व-

पीतये अनादिकालप्रवृत्ताय पानाय। सृजामि सृजिरन्यार्थोऽत्र उत्सृजामि। सोम्यं सोममयं मधु। एतज्ज्ञात्वा मरुद्भिः सह हे अग्ने अभ्यागच्छेति।

कालप्रवृत्ताय पानाय सृजामि। शुद्धोऽप्यत्र सृजतिः सोपसर्गार्थे द्रष्टव्यः। उत्सृजामि। अनादिकालप्रवृत्तं यत् पानं तदर्थं तुभ्यं ददामीत्यर्थः। किम् ? सोम्यं सोममयं मधु। द्रवत्वसामान्यान्मृष्टत्वसामान्याच्च सोमरसोऽत्र मधूच्यते। एतज्ज्ञात्वा मरुद्भिरग्न आगहि।

II.87. श्यावाश्वो मरुतः स्तौति। अरा इव—यथा अराश्चक्रस्य तुम्बस्य वा तद्वत्। अचरमाः—चरमः पश्चिमः स येषां नास्ति ते अचरमाः। पश्चिमाभावादेवाग्रिमस्याप्यभावः, अनग्रिमपश्चिमा इत्यर्थः। अहा इव—अहानीव च संवत्सरस्य सहजातत्वाद्धि तुल्यकाला मरुतः, नैषामग्रिमो न पश्चिमोऽप्यस्ति कश्चित्। प्र प्रजायन्ते—एकः प्रशब्दः 'प्रसमुपोद' इति पादपूरणः, अपरः प्रकर्षार्थः, प्रकृष्टा जायन्ते प्रतिदिवसं वर्द्धमानाः प्रकृष्टा भवन्तीत्यर्थः। अकवाः—अकुत्सिताः। महोभिः—स्वैर्माहात्म्यैः, पृश्नेः—दिवः पुत्राः, उपमासः—उपमाभूताः सर्वस्य।

अथवा—उपमा इत्यन्तिकनाम, दिवः पुत्राः सन्निकृष्टाश्चेत्यर्थः। रभिष्ठाः—अतिशयेन वेगवन्तः, स्वया मत्या प्रज्ञया मरुतः संमिमिक्षुः मिक्षतेर्गतिकर्मणः। एतद्रूपं सङ्गच्छतेः। यादृश्येषां योग्या प्रज्ञा परानुग्रहात्मिका तादृश्येषामुत्पद्यत इत्यर्थः।

अथवा मन्यतेरर्चतिकर्मणो मतिः स्तुतिस्तया संगच्छन्ते स्तोतृभिः स्तूयन्त इत्यर्थः।

V.58.5. अरा इव यथा अराश्चक्रस्य अरथस्य वा तद्वच्चरमाः चरमः पश्चिमः स येषां न विद्यते ते अचरमाः·······अग्रिमस्याप्यभावः। अनग्रिमपश्चिमा इत्यर्थः। अहा इव अहानी(नि) इव संवत्सरस्य समजातत्वाद्धि तुल्यकाला मरुतः नैषामग्रिमः पश्चिमो वा कश्चित् प्र प्रजायन्ते। एकः प्रशब्दः पदपूरणः प्रसमुपोदः पादपूरण इति।··················प्रकृष्टा जायन्ते प्रतिदिवसं प्रतिवर्धमानप्रकर्षा भवन्तीत्यर्थः। अकवा अकुत्सिता महोभिः पृश्नेः दिवः पुत्राः सन्निकृष्टाश्चेत्यर्थः। रभिष्ठ अ·········मत्या प्रज्ञया मरुतः संमिमिक्षु म्यक्षतेः ग(? ग) तिकर्मण एपद्रूपम्। संगच्छन्ते यादृश्येषां योग्या परानुग्रहात्मिका तादृश्युपपद्यत इत्यर्थः। अथवा मन्यतेरर्चा कर्मणो मतिः स्तुतिः·············स्तूयः इत्यर्थः।

III.154. गर्गस्य। हे वनस्पते वनस्पतिविकार रथ। वीड्वङ्गः वीड्ड दृढमङ्गमवयवो यस्य स दृढावयवः। हि शब्दो यस्मादर्थे गोभिः

VI.47.26. वनस्थदेवतृचः परो वनस्पते प्रभृ रथदेवत्योऽयं मन्त्रः परस्तृचो इत्येतस्मात्प्रभृति एतदादिरित्यर्थः। वनस्पतिशब्दोऽयमथापि तद्विनेन कृत्स्नवन्निगमा भवन्तीति एवं वनस्पतिविकारे प्रयुक्तः हे वनस्पते वनस्पति

सन्नद्ध इत्येतेन सम्बध्यते । भूया भव । एवमस्मत्सख अस्माकं सखिभूतो मित्रमिव व्यसनपात इत्यर्थः । प्रतरणः संग्रामाणां निर्वोढेत्यर्थः । सुवीरः शोभनवीरयुक्तः । कस्मादेवमुच्यते दृढाङ्गो भवति ? यस्माद् गोभिर्गोविकारैश्चर्मभिः श्लेष्मणा च सन्नद्धा सम्यग्बद्धोऽसि तस्माद् वीळयस्व दृढीकुर्वात्मानम् । तया वीड्वङ्गतया आस्थाता आरोढा च ते तव जयतु जेत्वानि कृत्यार्थे त्वप्रत्ययः जेतव्यानि शत्रूना वृन्दानि धनानि वा तेषम् ।

विकार रथ वीळु अङ्गः हि विळूनि संस्तब्धानि दृढानि अङ्गान्यवयवा यस्य स वीड्वङ्गः । हिशब्दस्तु पदपूरणः । एवार्थं वा । ईदृशावयव एव भूयाः । भवस्त्वमस्मत्सखा अस्माकं सखिस्थानीयः सखित्वेन चात्र तद्गतं व्यसनेष्वहानं लक्ष्यते । यथा सखा सख्युर्व्यसनेष्वहाता तथा त्वमस्माकमहाता भवेत्यर्थः । प्रतरणः प्रतीर्यते येन संग्रामः स प्रतरणः सङ्ग्रामनिर्वहणे समर्थ इत्यर्थः । सुवीरः शोभनवीरयुक्तः । यस्ते वीरो योद्धा स शोभनः अभीरुरस्त्वित्यर्थः। कस्मादुच्यते?गोभिस्सन्नद्धो असि गोशब्दोऽत्र तद्विकारश्चर्माणि श्लेष्मा चोच्यन्ते । एकवाक्यताप्रसिद्ध्यर्थं च यस्माच्छब्दावध्याहार्यौ यस्माद्गोविकारैश्चर्मभिः श्लेष्मणा च सन्नद्धः। णह बन्धने । सम्यक् बद्धोसि । तस्मात्कृतदार्ढ्याभ्युपायत्वाद्वीळयस्व । वीळयतिः संस्तम्भकर्मा संस्तम्भय दृढीकुर्वात्मान दृढीकृतवति चात्मानं त्वयि आस्थाता आरोढा ते तव जयतु । जेत्वानि कृत्यार्थे यन्त्वप्रत्ययः जेतव्यानि.............नानि शत्रुधनानि वा ।

III.154. गर्गसेव । उप आ इत्येतस्य स्थाने । श्वसिः सामर्थ्यात्पूरणे । आपूरय स्वेन ध्वनिना । किम्? पृथिवीमुत द्यां दिवञ्च । पुरुत्रा बहुधा ते तव शब्दं मनुतां शृणोत्वित्यर्थः । विष्ठितं विविधं स्थितं स्थावरमित्यर्थः । अतिशयप्रदर्शनं च विष्ठितशब्देन स्थावरस्येहोपादानम् । इतरथा श्रोत्राभावाद् घोषमननमनुप-

VI.47.29. परं तु दुन्दुभेर्वदितव्यम् । परस्य दुन्दुभिर्वदतेत्यर्थः । अर्धतृतीयानाम् ऋचामुपेत्येष आङ्स्थाने । श्वसतिरन्यत्र प्राणार्थो वा श्वस प्राणन इति पदार्थोपधावकः सुपाठः । इह तु सामर्थ्या(दा)पूरणार्थः आपूरय। केन?सामर्थ्यात्स्वेन शब्देन । किम्? पृथिवीमुतद्यां दिवमपि । अथवा श्वसतिवर्धकर्मा स्वमाघातय स्वशब्देन द्यावापृथिव्यौ तावन्तं शब्दं कुरु यावन्तं संप्राप्योभे द्यावापृथिव्यावाहती उभे अपि द्यावापृथिव्यौ प्रतीत्यर्थः । एवं च कृतवति त्वयि पुरुत्रा नायं बहुधाशब्दसमानार्थो······

पत्रं स्यादित्यभिप्रायः । जगत् जङ्गमं च । परस्तात्तच्छ्रुतेर्यदध्याहारः । य एवमुक्तोऽसि सः । हे दुन्दुभे सजूः सम्प्रीयमाण इति इन्द्रेण देवैश्च सह । दूराद्दवीयो दूरतरम् । अपसेध अपगमय शत्रून् । तथा नदत एव शब्दं श्रुत्वा तव शत्रवो नश्यन्तीत्यभिप्रायः ।

प्रत्ययस्याभावात् । किंतर्हि ? देवमनुष्यपुरुषपुरुमर्त्ये (र्त्ये)भ्यो द्वितीयासप्तम्योर्बहुलमिति सप्तम्यास्त्रप्रत्ययः । विष्ठितमित्यनेन चास्य सम्बन्धः । पुरुषु, बहुषु प्रदेशेषु विष्ठितं विविधं स्थितं कं सामर्थ्याच्छब्दं कस्य ? ते तव मनुतां मनु बोधने बुध्यताम् ।

मनु सर्वं जङ्गमं प्राणिजातमित्यर्थः । केचित्तु विष्ठितशब्दस्थापरवचनः । जगदित्येतेन समुच्चीयते । स्थावरं जङ्गमं च बुध्यतामिति । एवं व्याचक्षते । स्थावरस्य शब्दबोधासम्भवात्सदुन्दुभे सजूः सम्प्रीयमाणः इन्द्रेण देवैस्सह योगलक्षणैषा तृतीया । इन्द्रेण च देवैश्च सह दूराद्दवीया दूरतरम् । अपसेधतिर्गतिकर्मा सामर्थ्याच्चान्तर्णीतण्यर्थः । अपगमय नाशयास्मच्छत्रून् तथा नद यथा शब्दं श्रुत्वास्मच्छत्रवो दूराद् दूरतरं नश्यन्तीत्यर्थः ।

IV.117. ऋजिश्वन आर्षम् । स नो रासदिति तच्छ्रुतेर्यदध्याहारः । यं पथस्पथः परिपतिं यावान् कश्चित् पन्थास्तस्य सर्वस्य । परिपतिं परीत्येषोऽधीत्येतस्य स्थाने, अधिपतिं स्वामिनम् । पूषा हि महति पथि सम्प्रती(प्रै)त्यतः पथोऽधिपतिरुच्यते । वचस्या तृतीयैकवचनस्य याजादेशः । स्वार्थिको वा यकारो वच एव वचस्या ततस्तृतीयाया अलुक् तया वचस्यय(या) स्तुतिलक्षणेन वचसेत्यर्थः । कामेन कृतः । करोतिः क्रियासामान्यवचनः सामर्थ्यादिह प्रेरणे वर्तते । अभिलाषेच्छया प्रेरितः । अभ्यानट् अभिव्याप्नोति स्तौतीत्यर्थः । अर्कं देवं पूषणम् । स नोऽस्मभ्यम् । रासत् रासतिर्दानकर्मा ददातु । शुरुधोऽन्यत्र शुरुध आपो भवन्ति शुचं रुन्धन्तीति । इह तु सामर्थ्याद् धनानि शुरुध उच्यन्ते । तान्यपि हि शुचं मनोदुःख-

VI.49.8. पूषाऽत्र स्तूयते—स नो दासदिति तच्छब्दाद्यच्छब्दोध्याहार्यः । यं पथस्पथः यावान् कश्चित्पन्थाः ।············परिपतिं परीत्येष दधातीत्येतस्य स्थानेऽधिपतिं स्वामिनम् । पूषा हि महति पथि प्रतिभये वा रक्षां करोति । अतः पथोऽधिपतिरुच्येत । वचस्या तृतीयैकवचनस्यायं याजादेशः । स्तुतिलक्षणेन वचसा······वचनः सामर्थ्यादिह प्राणे वर्तते । अभिलषतेर्गेच्छया प्रेरितः अभ्यानट् अभिव्याप्नोति स्तौतीत्यर्थः । अर्के देवम् । सः नः अस्मभ्यं रासत् ददातु । शुरुधः । अन्यत्र शुरुध आपो भवन्ति । शुचं संरुन्धतीति । इह··· धनानि तान्यपि हि शुचं मनोदुःखम् उपभोगसाधनाभावकृतं संरुन्धन्ति । कीदृशी शुरुधा? उच्यते चन्द्राग्राश्चन्द्रं छन्दतो(चन्दतेः) कान्तिकर्मणः कान्तः(न्तं) प्रियमग्रं यासां तारचन्द्राग्रा

मुपभोगसाधनाभावात्कृतं सुतरां संरुन्ध-न्तीति । कीदृशीः शुरुधः ? चन्द्राग्राः चन्द्रं चन्दतेः कान्तिकर्मणः । कान्तं प्रियमग्रं यासां ताश्चन्द्राग्राः । आयत्यामपि हि तानि धनानी-त्यर्थः । किञ्च धियं धियं कर्म कर्म ज्योति-ष्टोमादिकं तदपि सीषधाति लोडर्थे पञ्चमो लकारो व्यत्ययेन विकरणं प्रसाधयतु पूषा । अभ्यानडित्यस्य व्याख्यानमभ्यापन्न इति । वाऽतिरिक्तः पाठः । चन्द्राग्र इति बहुव्रीहिः । भाष्ये तु समानाधिकरणः प्रदर्शितः । चायनी-यान्यग्राणि चायनीयानि च तान्यग्राणि चेति ।

II.408. ऋजिश्वन आर्षम् । मिम्यक्षेति म्यक्षतेर्गति-कर्मणो रूपम् । गच्छति येषु द्वितीयार्थे एषा सप्तमी । यान युष्मान् रोदसी रुद्रस्य पत्नी नु इति पदपूरणः । देवीर्मरुतः । 'रुद्रस्य ये मीळ्हुषः सन्ति पुत्राः' इति मन्त्रान्तरे दर्श-नात् । तेनैषां रोदसी माता सा च स्नेहेन पुत्रान् प्रत्यलश्च गच्छति अतस्त एवमुच्यन्ते । गच्छति यान युस्मान् रोदसी देवी यांश्च सिषक्ति रश्म्याहतरसेन प्राणेन सेवते । पूषा किंविशिष्टः ? अभ्यर्धयज्वा अल्पानपि अनभ्यर्धयन मरुद्भ्यो ददाति न तं वा स्तो-तृभ्योऽसौ ददाति स येष्विति यच्छब्दश्रुते-स्तच्छब्दोऽध्याहार्यः । ते श्रुत्वा हवमाह्वानं ते मरुतः, यदा हेति पदपूरणः, याथ गच्छथ यदेति वचनात् तदेत्यध्याहार्यम् । तदा भूमा यश्च बहुशब्दाद् विपुलवचनाद् बहुत्ववचनाद्वा इमनिचि छान्दसत्वादाद्युदात्तत्वम् । सामर्थ्या-च्चात्र अन्तर्णीतमत्वर्थता बहुवचनस्य लुक् 'शेश्छन्दसि' इति । तेनायमर्थः । वैपुल्यवन्ति बहुत्ववन्ति वा महान्ति बहूनि वेत्यर्थः । कानि ? सामर्थ्यात् शत्रुवृन्दानि रेजन्ते

आयत्यामपि हि ता(न्य)नुबन्धीनि धनानीत्यर्थः। किञ्च धियं धियं············ज्योतिष्टोमादिकं सीषधाति लोडर्थेऽयं पञ्चमोलकारः । व्यत्ययेन च विकरणः प्रसाधयतु पूषा ॥

VI.50.5. मिम्यक्षेति म्यक्षतेर्गतिकर्मणो रूपम् । गच्छति येषु द्वितीयार्थे सप्तम्येषा । यान् युष्मान् । रोदसी रुद्रस्य पत्नी देवी । नु इति पादपूरणः । मरुतो हि रुद्रस्य पुत्राः तेनैषां रोदसी माता माता च स्नेहात् पुत्रे प्रत्यवश्यं गच्छति । अत एवमुच्यते–मिम्यक्ष । येषु रोदसी नु देवीति यां सिषक्ति रश्म्यात्तरसा अभ्यर्धय । ऋधु वृद्धौ जयतिर्दानार्थकः अल्पा-नपि रक्षानभिवर्धयन् मरु·········साभ्यर्ध-यज्वा । अथवा अभिगतं प्राप्तं देवेभ्यो लब्ध-मित्यर्थः । अभिगतं च तदर्धं च अभ्यर्धं कस्या-र्धम्? हविषः ये तद्यो यजते सोभ्यर्धयज्वा । अत्रेतिहासमाचक्षते । देवाः किल विष्णुयज्ञेना-यजते(जन्त)। पूषणमभि चाब्रुवन् । वर्धतां नो हविरिति । तावब्रुवतैकैकमवदानमावयोरस्त्विति तौ देवा अब्रुवन् यन्मध्यादवद्यति । तत्तस्या देवतायाः यस्यै ह···रुच्यते । यत्पूर्वार्धात्तत्पूष्णः यदुत्तरार्धात्तदग्नेरिति । तावब्रूतामेतदवदान-मनेन त्रैलोक्यकल्पं वो भरिष्यतीति । एऽ? एतदपेक्ष्यैतदुच्यते । अभ्यर्धयज्वेति तथा चान्यत्रापि पूष्णोऽग्नेश्च हविरर्धभाक्त्वेन स्तुति-

दृश्यते रेजते इति भयवेपनयोः । अस्मान् मरुतो हन्तुमागच्छन्तीति मन्यमानानि बिभ्यति ध्वजाग्राणि वा कम्पन्ते । पदकारास्तु भूम रेजन्ते इति ह्रस्वत्वं पठन्ति इति । क्रियाविशेषणमिदमेकवचनान्तमिति मन्यन्ते। तदा च स्वार्थिक इमनिच् द्रष्टव्यः । बहु सुष्ठु रेजन्ते इत्यर्थः। अध्वनि अन्तरिक्ष-नाम अस्य च रेजन्ते इत्येनेनैव संबन्धो याथ इत्यनेन वा अन्तरिक्षे रेजन्ते अन्तरिक्षे वा यदा वा याथेति । कीदृशे ? प्रविक्ते प्रकर्षेण विविक्ते इमौ दीर्घे विस्तीर्णे इत्यर्थः ।

दृश्यते । प्रत्यधिर्यज्ञानामिति पूष्णः प्रत्यधि देवस्य देवस्य मम हेतुमे यच्छब्दश्रुतेस्त-च्छब्दोऽध्याहर्तव्यः । ते श्रुत्वा हवमाह्वानं हे मरुतः यत् यदाहुरिति । तु पदपूरणम् । यथा गच्छथ । यदेति वचनात्तदेत्यध्याहार्यम् । तदा भूम । बहुशब्दाद्विपुलवचनाद्बहुत्ववचना-द्वायमनिचि छान्दसमाद्युदात्तं चात्रा(न्त)र्णीत-मत्वर्थता बहुवचनस्य च लुक् । शेश्छन्दसि बहुलमिति वैपुल्यवन्ति बहुत्ववर्तित्वान्महानि (न्ति) बहूनि वेत्यर्थः। कानि? सामर्थ्याच्छत्रु-वृन्दानि रेजन्तेऽभ्यसते रेजत इति भयवेप-नयोः । अस्मान् हन्तुं मरुत आगच्छन्तीति मन्यमानानि बिभ्यन्ति (ति) अथवा भ्रम-मह······क्ति बहूनि वा ध्वजाग्राणि तानि रेजन्ते कम्पन्ते । पदकारास्तु—भूमेति ह्रस्व-करणात् क्रियाविशेषणमिदमेकवचनान्तमिति मन्यन्ते । तत्र स्वार्थिक इमनिच् द्रष्टव्यः । बहुरेजन्त इत्यर्थः । क्व ? अध्वनि अध्वेत्यन्त-रिक्षनाम । अस्य रेजन्त इत्येतेन वा सम्बन्धः ······त्येतेन वान्तरिक्षे रेजन्ते । य अन्त-रिक्षे वा यदा यथेति प्रविक्ते शुद्धेर(द्वो ऽ)पि विचित्रविपूर्वार्थे द्रष्टव्यः । प्रकर्षेण विविक्ते शुचौ वा विस्तीर्णेवेत्यर्थः ।

IV.131. ऋजिश्विन आर्षम् । उतशब्दोऽप्यर्थे समुच्चयलक्षणे । नोऽस्माकम् । अहिर्बुध्न्यश्च बुध्न्यमन्तरिक्षं तस्मिन् भवः । शृणोत्वाह्वा-नम् । कुत एतत् ? हुवाना इति परस्ताच्छ्र-वणात् । आह्वय माम् । ननु चाह्वानस्य श्रूय-माणत्वान्न च केवलोऽहिर्बुध्न्यः । किं तर्हि ? अज एकपात् । अजश्च एकः पादो यस्य स एकपात् । पृथिवी समुद्रः पृथिवी च समुद्रश्च द्यौश्चादित्यश्चेत्यर्थः । विश्वे देवाः सर्वे देवाः

VI.50.14. अहिर्बुध्न्यादयोऽत्र स्तूयन्ते—उत अपि नः अस्माकम् अहिः बुध्न्यः बुध्नमन्तरिक्षं तस्मिन् भवः शृणोतु किम्? आह्वानम् । कुत एतत् हुवाना इति परस्ताद्वचना········ त्वात् । नच को(के)वलो हि किं तर्हि अजश्च एकपात् एका(कः) पात् यस्य सः एकपात् पृथिवी च समुद्रश्च विश्वेदेवाः ऋतावृधः सत्य-स्य यज्ञस्य उदकस्य वा वर्धयितारः हुवानाः आहूयमानाः शृ(श्रु) त्वा चाह्वानमागता सन्तः

कीदृशाः ? ऋतावृधः सत्यस्योदकस्य यज्ञस्य वा वर्धयितारः । हुवाना हूयमानः(नाः)। श्रुत्वा चाह्वानमागताः सन्तः स्तुता अस्माभिः । मन्त्रास्तृतीयार्थे प्रथमा मन्त्रैः । कविशस्ता अन्यैरपि मेधाविभिर्नित्यमेव स्तुता अवन्तु पालयन्तु । मन्त्रा इत्यतिरिक्तपाठः :

स्तुतोऽस्माभि...र्थे मन्त्रः कविः(वि) शस्ता अन्यैरपि मेधाविभिर्नित्यं स्तुताः अवन्तु पालयन्तु । एवमत्राप्यहिर्बुध्न्यादयः स्तूयन्ते ।

III.52. भरद्वाजस्य । हे अग्नीपर्जन्यौ । अवतं गच्छतम् । धियं कर्मनामैतत् कर्म मे मम श्रुतम् । अस्मिन् हवे आह्वाने सुहवा स्वाह्वानौ । सुष्टुतिं शोभनां च स्तुतिं चास्माकं स्वभूतां गत्वाच्चेळामन्नम् । अन्यो युवयोरेकः । जनय जनयत गर्भमन्यः । एवं प्रजावतीरिषः प्रजासन्निहितान्यन्नानि । आधत्तमस्मे आभिमुख्येन स्थापयतमस्मासु । चतुर्थ्यर्थे वा श आदेशः । आभिमुख्येन दत्तमस्मभ्यमित्यर्थः ।

VI.52.16....(अग्नी)पर्जन्यावत्र देवता इह अग्नीपर्जन्यौ अवतं गच्छतं पालयतम् । वां धियं कर्मया...........स्वं मे मम स्वभूतं न केवलं कर्म । किं तर्हि?अस्मिन् हवे तृतीयार्थे सप्तम्येषा । अनेनाह्वानेन हे सुहवा स्व... (ह्वा)नौ अनेनाह्वानेन नित्यमाहूताविस्यर्थः । सुष्टुतिं शोभनां स्तुतिं नः अस्माकं स्वभूतं (तां) किञ्च आइळामन्यः युवयोरेकः पर्जन्यः जनयत् वृष्टिप्रदानेन जनयतु गर्भमोषधीनामन्योऽग्निः अग्निन (ादि) त्या-न्तर्गतेन पच्यमाना ओषधयो गर्भं भजन्ते । अत एवमुच्यते—गर्भमन्य इति गर्भमन्य इति । किञ्च प्रजावतीः प्रजासहिताः इषोऽन्नानि आधत्तमस्मे अस्मासु दत्तमस्मभ्यमित्यर्थः ।

II.327. भरद्वाजस्यार्षम् । एहि आगच्छ । वां त्वशब्दस्यायं छान्दसत्वात्तकारलोपस्त्वम् । हे विमुचो नपात् संहारकाले ग्रसित्वा प्रजाः पुनः सृष्टिकाले विमुञ्चतीति प्रजापतिस्तस्य नपात् पौत्रम् । कथं पुनः प्रजापतेः पौत्रत्वम् ? उपनिषत्सु कृत्स्नस्य जगतोऽद्भ्यः, अपां च प्रजापतिः स्रष्टा ततस्तदुत्पत्तिश्रुतेः । अपत्यमात्रनाम वा नपाच्छब्दः प्रजापतेरपत्यभूतः । आघृणे आगतदीते पूषन् संसचावहै पूषापेक्षं च द्विवचनम् । अहं च त्वं च आवां परस्परं सेवावहै । अहं त्वां हविषा च संसेवे त्वमपि मां सेवस्व सेवितुं मामिच्छस्व । रथी

VI.55.1.एहि आगच्छ वां त्वां शब्दस्यायं छान्दसस्तकारलोपः । त्वां हे विमुचो नपात् संहारकाले ग्रसित्वा प्रजाः पुनः सृष्टि......... मुञ्चतीति विमुक् प्रजापतिः तस्य नपात् पौत्रः कथं पुनः पूषा प्रजापतेः पौत्रः ? उपनिषत्सु कृत्स्नस्य जगतोऽद्भ्यः अपां च प्रजापतित उत्पत्तिश्रुतेरपत्यनाम वा नपाच्छब्दः प्रजापतेरपत्यभूत आघृणे संसचावहै व्यत्ययेनेदमेकवचनस्य स्थाने द्विवचनं पत्न्यपेक्षं वा अहं ससेवै......पत्नीयजमानौ स्तुतिभिर्हविभिश्च संसेवावहै संसेव्यमानश्च रथी सारथिवचनेऽयं शब्दाप्रवर्तमानसामान्यादि (ह)......

सारथिस्थानीयो नेता ऋतस्य यज्ञस्य नो भवति।

नेतरि प्रयुज्यते। ऋतस्य यज्ञस्य नः अस्माकं स्वभू (तस्य)'''श्चत्येवमेतद्द्वयोर्बहुवचनम्। आवयोः स्वभूतस्य भव। अथवा वामित्यावां शब्दस्य छान्दस आकारलोपः। पू'''पक्षं च द्विवचनं''''''स्तुत्या हविषा च संसेरेव त्वमपि मां संसेवस्व। सेवितुं च मामिच्छन् ऋतस्य नो भवति।

II.173. भरद्वाजस्य। माता आदित्यस्य रात्रिः। ततोऽनन्तरमुत्पत्तेस्ततोऽस्य जन्मावगमनात्। तस्या मातुः। दिधिषुम्-धारयितारम्, स्वोदयेन विरोद्धारमित्यर्थः। अब्रवम्—ब्रवीम्यहम्, यद्विवक्षितम्। स च मयोच्यमानः स्वसुर्जारः-एकतो रात्रेर्जातत्वादादित्यस्य स्वसा उषाः, भ्राता भगिन्याः सहचारी भवति, तदीयानाञ्च क्रीडनकानामपहर्ता बाल्ये। आदित्यश्चोषसा सहचारी, तदीयानाञ्च रसानामवश्यायानां शोषणेनापहर्ता। अतः सहचर्यसामान्यात्तदीयरसापहरणसामान्याच्चोषा अस्य स्वसा उच्यते। तस्या जरयिता, तदुदये हि सा जीर्यति, अतस्तस्या जारः शृणोतु। नः अस्माकम्। भ्राता इन्द्रस्य—उभयोरिन्द्रादित्ययोरेव। कस्मात् कारणात्? मनोजातत्वात् भरणाद्वा, स हि रसान्मध्यमस्य रश्मिभिरादाय तैस्तं बिभर्ति। सखा मम-स्तुत्यस्तोतृत्वलक्षणेन सम्बन्धेन सखीभूतः।

VI.55.5. अन्यस्या वा कस्यश्चित्स्वसु भो भोक्ता श्रूयते—यथा प्रजापति (:) प्रजापतिर्वै स्वां म (दु) हितरमभ्यध्याय............ .... ......नाशयिता उच्यते जनैः। आदित्यो हि पूषा स च स्वोदयेनोषसं जरयति मातुर्दिधि (षुम्) पूष्णो माता रा (त्रिः)...... जनयति दिधिषुशब्दः ज्येष्ठस्य भ्राता सायायां अनियुक्तप्रवर्तते। तस्य वा वाचकः ज्येष्ठायां वा''''''आढायां य (:) कनीयस्या उद्वोढा तस्य तच्चैतद्द्वयमपि न मातरं प्रति सम्भवति। अतोऽत्र दिधिषुशब्दः दध धारण इत्येतस्य क्रियाशब्दो विज्ञायते। तस्या मातु (:) रात्रे (:) दिधिषुं धारयितारं स्वोदयेन निरोद्धारमित्यर्थः। पूषा ह्यादित्यं (त्यः) सं (सः) स्वोदयेन रात्रिं निरुणद्धि तमब्रवं ब्रवीमि। यद्विवक्षितं स चोच्यमान (:) जारः शृणोतु नः अस्माकं भ्रातेन्द्रस्य उभयोरिन्द्रापूष्णोरेकस्मात् प्रजापतेर्जातत्वात्सखिस्थानीयो मम।

II.398. भरद्वाजस्यार्षम्। आकारो वहन्त्वित्यनेन सम्बध्यते। अजासोऽजाः पूष्णोऽश्वाः पूषणं रथे तृतीयार्थे एषा सप्तमी रथेन निशृम्भास्तच्छब्दश्रुतेर्यच्छब्दोध्याहार्यः। ये निशृम्भाः शीघ्रगामिन इत्यर्थः। कीदृशं पूषणम्।

VI.55.6. अजासः पूष्णोश्वा (:) पूषणम (णं र) थे तृतीयार्थे सप्तम्येषा र (थे) न निशृम्भाते तच्छब्दश्रुते'''(र्ये) च्छब्दोध्या (ध्या) हर्तव्य (व्यः) ये निशृभा (म्भा) स्ते निशृंभा (म्भा) इति निश्लथया दृढया गत्या ये हरन्ति प्रापयन्ति ते निशृभा (म्भाः) शीघ्रगामिनः

उच्यते । जनश्रियं दीप्तमित्यर्थः । देवं दानादिगुणमावहन्तु अस्मान्प्रति । विभ्रतः सम्यग्धारयन्तः ।

अथवा श्रमणं श्रु (शृम्) संपदादित्वात् क्विप् सम्प्रसारणं च छान्दसत्वात् निहितमशूयैते निशृम भा दीप्तौ निशृमश्च दीप्ताश्च निशृभा (म्भा) श्रमवर्जिताश्च दीप्तौ···दश (कीदृशं) पूषणम् उच्यते । जनश्रियम (यम्) दीप्तमित्यर्थः । देवम् आवहन्तु अपनयन्त्वस्मान् प्रति सम्यग्धारयन्त (:) अक्लेशयन्त इत्यर्थः ।

II.50. भरद्वाजस्यार्षम् । उतोऽप्यर्थे । अद इत्यपि द्वितीया सप्तम्यर्थे । अप्यमुष्मिन् स्वैरवयवैः पर्वभिः, कालपर्वभ्यां वा तच्छ्रुताभ्यामहोरात्राभ्यां पर्ववति, भास्वरे वा, गवि गन्तरि आदित्यमण्डले स्थित इत्यर्थः । कोऽसौ ? सूरः । धर्ता चक्रम, चक्राकृति देवादित्यमण्डलम् । हिरण्यम्—उज्ज्वलवर्णत्वात् । हिरण्मयमेव वा । न्यैरयत्–नियतमुदयास्तमयाय प्रैरयत । रथीतमः–अन्येऽपि रथिनः सन्ति, अयं तु मुहूर्तमप्यनवस्थितरथ इत्यतो रथीतमः । अतिशयेन रथीत्यर्थः । अथवा ब्राह्मणचक्रमिति दर्शनाच्चक्रशब्दः समूहवचनः। तस्मात्र सामर्थ्यादुदकस्याह न यस्य कस्यचित्। उदकसमूहं पृथिवीतो रश्मिभिरात्मानमुज्ज्वलन्तं प्रति प्रेरयति भौमान रसानादत्त इत्यर्थः। अथवा हिरण्ययशब्देनोदकमुच्यते 'हिरण्यदा दित्यन्नंमस्मा'इति मन्त्रान्तरे दर्शनादुदकात्मकं चक्रमित्यर्थः ।

VI.56.3. उत अपि अद (:) चक्रस्य वायमव्यवहितस्यापि प्रतिनिर्देश इदं चक्रमिति (सप्तम्यर्थे वा) सप्तम्यर्थे वा प्रथमा । अमुष्मिन् ? पुरुपे पुरुषशब्दो भासुरवचनः भासुरे शुक्रे वर्णे गवि द्युलोके गौ······मिहि द्युनाम सूरं (:) सर्ता गन्ता पूषा चक्रमादित्यमण्डलाख्यं हिरण्ययं हिरणमयं (हिरण्यः) सदृशमुज्ज्वलस्तम(लं तम्) न्यैरयत नियतेन मार्गेण प्रेरयति–उदयायास्तमयाय च रथीतम(:) अतिशयेन रथी परस्त्वादित्यमण्डलमत्र गोशब्देनोच्यत इति मन्यते । तत्र गवीति सप्तमीश्रुतेरवस्थित इति काव्य(वाक्य)शेष इति गव्यादित्यमण्डलेऽवस्थित(:) पूषा चक्रं प्रेरयति । चक्राकृति तदेव वादित्यमण्डलं रथचक्रं वोच्यते—अथवा उदकं चक्रमुत कथं चक्रशब्दो हि समूहवाची ब्राह्मणचक्रं भज । चक्रमिति सामर्थ्याच्चात्रोदकसमूहः। परिगृह्यतेर्वा गत्यर्थस्य चक्रमुदकं त······पृथिवीतो रश्मिभिरात्मानं प्रति वेरयतीति शिष्टपदयोजना सदृशी ।

III.57. भरद्वाजस्य । नु इति क्षिप्रनाम । इन्द्रशब्देन पूषाशब्देन चेन्द्रः । कुतः । द्विवचनस्थानादिकारश्रुतेश्छान्दसत्वाद् विरूपैकशेषो द्रष्टव्यः । इन्द्रापूषणौ नु क्षिप्रं युवां वयं सख्याय स्तुत्-

VI.57.1. सूक्त इन्द्रोऽपि पञ्चमे पञ्चमेऽस्मिन् सूक्ते इन्द्रोऽपि देवता न केवलं पूषैव इन्द्रानुपूषणा परस्परापेक्षमत्रैकैकेन शब्देन द्वयोरपीन्द्रापूष्णोरभिधान······केन प्रत्येकं द्विवचनप्रवृत्तिः । नु इति क्षिप्रनाम क्षिप्रमिन्द्रापूषणौ वयं

स्तोतृत्वलक्षणाय स्वस्तये अविनाशाय हुवेम नित्यमाह्वयेमेत्याशास्महे। वाजसातये वाजमन्नं सातिः संभजनम्। अन्नसंभजनाय चात्मनः युवयोर्वा।

सख्याय सखिभावाय स्वस्तये अविनाशाय च हुवेम आह्वयमा वाजसातये अन्नसंभजनाय च।

IV.116. भरद्वाजस्य। शुक्रशब्दोऽत्र शुक्लपर्यायः शुक्रं ते तव। अन्यत् एकम्। किं पुनस्तत्? सामर्थ्याद्रूपम्। यजतं ते अन्यत्। यजतशब्दोऽत्र शुक्लप्रतियोगित्वाल्लोहितपर्यायः। लोहितं ते अन्यदपरं रूपम्। पूषाप्यादित्यः। तस्य मध्यन्दिने शुक्लं रूपम्, लोहितमुदयास्तमययोः। अथवा शुचेर्दीप्त्यर्थस्य शुक्र रो मत्वर्थीयः। शुक्रं दीप्तिमदुच्यते। दीप्तिमत् ते तवैकं रूपं, मण्डलाख्यम्। यजतं यष्टव्यमन्यमण्डलस्याधिष्ठायकम्। ते चैते विषुरूपे परस्परं भिन्नरूपे शुक्लरोहितत्वरूपेण। ते वा अहनी अहोरात्रे एते त्वमसि। तव चैते कर्मणी यतस्त्वत्कर्तृके एते अतस्त्वमसि। द्यौरिवासि द्यौरिव च त्वमसि यथा द्यौर्व्यापिनी तथा त्वमसीत्यर्थः। विश्वा हि हिरत्र चार्थे सर्वाश्च मायाः। अवसि प्रज्ञाहेतुभूतप्रकाशदानेन त्वं पालयसि। हे स्वधावन् स्वधेत्युदकनाम वा रश्म्याहृतेनोदकेन हविर्लक्षणेनान्नेन वा तद्वत्। किञ्च भद्रा कल्याणी ते तुभ्यं हे पूषन् इहास्मदीये यज्ञे रातिर्हविषो दानमस्तु कृणु।
अथवा भद्रा ते इति तेशब्दः 'कर्तृकर्मणोः कृति' इति कर्तृलक्षणषष्ठ्यन्तः। कल्याणी ते त्वत्कर्तृका रातिरिहास्तु। कल्याणं दानमिहास्मभ्यं देहीत्यर्थः। द्वितीये व्याख्याने यजतमिह भाष्ये भाजनं स्वपानपात्रं तेन तद्वती।

VI.58.1. शुक्रं ते अन्यत् पूषादित्यः तस्य मध्यन्दिने शुक्लं रूपं लोहितमुदयास्तमययोः अथवा शुचेर्दीप्त्यर्थस्य शुक्रं द्यौरिव च त्वमसि द्यौः यथा द्यौर्व्यापिनी तथा त्वमपीत्यर्थः। विश्वा हि हिशब्दोऽत्र चार्थे सर्वाश्च मायाः प्रज्ञाः अवसि प्रज्ञाहेतुभूतप्रकाशदानद्वारेण त्वं पालयसि। हे स्वधाव। स्वधेत्युदकनाम अन्ननाम वा रश्म्याहृतेनोदकेन हविर्लक्षणेन वान्नेन तद्वान् किञ्च भद्रा कल्याणी ते तुभ्यं हे पूषन् इह अस्मदीये यज्ञे रातिः हविर्दानमस्तु भवतु अथवा भद्रा त इति तेशब्दः कर्तृकर्मणोः कृतीति कर्तृलक्षणषष्ठ्यन्तः। कल्याणी त्वत्कर्तृका रातिरिहास्तु कल्याणं दानमिहास्मभ्यं त्वं देहीत्यर्थः।

IV.24. भरद्वाजस्य। वळित्थेति द्वे अपि सत्यनामनी 'अभ्यासे भूयांसमर्थं मन्यन्ते' इति।

VI.59.2. बळित्थेति। द्वयोः सत्यनाम्नोरभ्यासे भूयांसम् अर्थं मन्यन्त इत्यर्थः। यस्ते'''पा(पौ)न-

अथ भूयस्त्वेनापौनरुक्त्यम् । सत्यम् । महिमा माहात्म्यम् । वां युवां युवयोः । इन्द्राग्नीपनिष्ठ 'पण व्यवहारे स्तुतौ च' अतिशयेन स्तुत्य इत्यर्थः । आकारः पूरकः समुच्चये वा 'देवेभ्यश्च पितृभ्य आ' इति वत् । आहरपेक्षया च समुच्चयः । महत्त्वं चातिशयेन स्तुत्यं च । समानश्च वां युवयोर्जनिता जनयिता आदित्यः प्रजापतिर्वा । ततश्च समानपितृकत्वाद् भ्रातरौ युवाम् । न च क्रमजन्मानौ । किन्तर्हि ? यमौ युगपज्जन्मानौ । इहेह मातरौ इह प्रदेशे मातरौ ययोस्ताविहेह मातराविति । इहेह इति च वीप्सा सन्निहिताशेषजगत्प्रदेशप्रतिनिर्देशार्था । सर्वजगत्प्रदेशमातरावित्यर्थः । माता चेन्द्राग्न्योर्धाना सर्वजगत्प्रकृतित्वात् । अदितिर्वा देवमातृत्वात् । तौ चोभावपि सर्वत आत्मनः सर्वजगत्त्वाद् अदितिर्देवमाता अग्नेरिन्द्रेण सह जायमानत्वाद्दर्शनाद्यमोऽग्निः ।

रुक्त्या'''वयो हे इन्द्राग्नी''''''(आ)ता(का)रस्तु पदपूरणवार्थे वा परापेक्षया च स्व'''श्च वां युवयो'''(जनि)ता जनयिता प्रजापतिः समानपितृकत्वाच्च भ्रातरौ युवां न च क्रमवजन्यनो(न्मानौ) किं तर्हि यमौ युगपज्जातौ इहेह मातरा इह इह प्रदेशे माता ययोस्तौ इहेह मातरा इहेहेति च वीप्सा सन्निहिताशेषजगत्प्रदेशप्रतिनिर्देशार्था सर्वजगत्प्रदेशवर्तिमातृकोऽपी(कावि)त्यर्थः । का पुनरिन्द्राग्न्योर्माता आत्मैव वा सर्वजगत्प्रकृतित्वाद् अदितिर्वा देवमातृत्वात् तौ चोभावपि सर्वत्र स्तः आत्मा सर्वजग(गत)त्वाददितिर्देवमाता माहाभाग्यात् ।

II.370. भरद्वाजस्य । यः स्तोता हे इन्द्राग्नी सुतेषु सोमेषु वां स्तवद् आदरेण स्तौति । तेषु व्यत्ययेन षष्ठ्येकवचनस्थाने सप्तमीबहुवचनमेतत् । भसथ इत्येतच्चाख्यातमुत्तरस्मादधर्चादनुषक्तव्यम् । तस्य सोमान् न भसथो भक्षयथः । हे ऋतावृधा ऋतावृधौ सत्यस्य यज्ञस्योदकस्य वा वर्धयितारौ । जोषवाकमविज्ञानमस्पष्टं किमपि वचनं वदतोऽसम्यक् स्तुवत इत्यर्थः । हे पज्रहोषिणा पज्रमन्नं हविराख्यं वा स्तुतिक्रियाविषयं तद् येषामस्ति ते पज्रा व्रातविष्का वा । के पुनस्ते ? ऋत्विग्यजमानाः तेषां स्वभूतं होतव्यं हविः पज्रहोषमित्यर्थः, तेन तद्वन्तौ पज्रहोषिणौ देवा देवौ भसथो भक्षयथः । चनेति पदपूरणः । कदाचिदपीत्यस्य वार्थे । न कदाचिदपि भजतः,

VI.59.4. यः स्तोता हे इन्द्राग्नी सुतेषु सोमेषु वां यु ां स्तवत् आदरेण स्तौति । तेषु व्यत्यये षष्ठ्येकवचनस्य स्थाने सप्तमीबहुवचनमेतत् । तस्य ऋतावृधा सत्यस्य यज्ञस्य वा वर्धयितारौ जोषवाकं वदतः जुषी प्रीतिसेवनयोः प्रीणयितृ सेव्यं वां वचनं जोषवाकम् अत्यन्तोत्कृष्टस्तुतिरित्यर्थः । तां वदत उच्चारयतः स्वभूते यज्ञे स्वभूतं वा सोमं हे पज्रहोषिणा पज्रमन्नं हविर्लक्षणं बलं वा स्तुतिक्रियाविषयं तद्वन्त (:) पज्रा अङ्गिरस ऋषय ऋत्विजो वा तेषां यत्स्व (स्व) भूतं होतव्यं हविः तद्वन्तौ पज्रहोषिणौ देवा देवौ न भसथश्चन भसथ इत्यत्तिकर्मा चनेति निपात (:) पदपूरणो वा कदाचिदपीत्यस्मिन् वाऽर्थे श्रुतिभ्रवणसक्तौ कदाचिदपि न अर्थः (त्थः) न

स हि तेन भावेन शब्दमात्रमस्पष्टमुच्चारयति।

पिबथ (:)। सोमम् उत्कृष्टस्तुतिश्रवणसक्तयोर्युवयोर्भोजनमपि विस्मरतीति (?) समस्तार्थः। यास्कस्त्वा जोषमित्यविज्ञातनामधेयमिति अविज्ञातमपि स्पष्टं वचनं जोषवाक उच्यते--अत्र पूर्वस्मिन्नर्धर्चे भसथ इत्युतरस्मादर्धर्चात्क्रियापदमनुषज्यैकवाक्यता योज्याय (?) सुतेषु सोमेषु युवां सम्यक्तानि तस्य यज्ञे सोमं भसथ (:) अश्नीथ (:) पिबथ इत्यर्थः। जोषवाकं त्वविस्पष्टं वदतः असम्यक् स्तुवतः न कदाचिदपि भसथ इति।

II.490. भरद्वाजस्य। हिशब्दो यस्मादर्थे। पुरु बहु वां युवयोः पुरुभुजा हे पुरुभुजौ बहूनां हविषामभ्यवहर्तारौ पालयितारौ वा यजमानानाम्। देष्णं दानं यस्मात् प्रभूतदायिनौ युवां तस्माद् धेनुं द्रोग्ध्रीं गां नोऽस्मभ्यम्। इषम्--अन्नं च पिवन्तं क्षारयन्तं दत्तमित्यर्थः। असक्राम्--असंक्रामणीं यावज्जीवमनपायिनीम्। यद्वा समेष्वक्रान्तामगतामस्मत् सजातैरप्राप्तपूर्वामित्यर्थः। किञ्च स्तुतश्च स्तुतः क्षविरूपं स्तोतारश्च ये केचित् पृथिव्यां ते सर्वे वां युवयोः हे माध्वी मधुसम्बन्धि मधुनः पूर्णो माधवः 'तस्येदम्' इत्यणि गुणाभावश्छान्दसत्वात्। कोऽसौ। दृतिः। कुतः एतत्। 'यो ह वां मधुनो दृतिराहितो रथ चर्षणे। ततः पिबतमश्विना' इति मन्त्रान्तरे दर्शनात् तेन तद्वतीं माध्वीम् 'ईवनिपौ छन्दसि' इति मत्वर्थे ईकारः। सुष्ठुतिश्च शोभना च या काचित् स्तुतिः सर्वा युवयोरेव। रसाश्च सोमलक्षणा ये वां युवयो रामिदानिम् अग्मम् अनुगच्छन्ति। युवाभ्यां ये प्रदीयन्त इत्यर्थः।

VI.63.8. पुरु हि वां हिशब्दो यस्मादर्थे यस्मात् पुरु बहुः वां युवयोः हे पुरुभुजा बहूनां हविषामभ्यवहर्तारौ पालयितारौ यजमानानां देष्णं दानं यस्मात प्रभूतदायिनौ युवामित्यर्थः। तस्माद्धेनुं दोग्ध्रीं गां नः अस्मभ्यम् इषम् अन्नं च पिन्वतं क्षारयतम् दत्तमित्यर्थः अथवा धेनुमिपिष एव विशेषणम्। धेट् पाने पानेन चात्रोपभोगयोग्यता लक्ष्यते। धेनुं·········मुपभोगयोग्यतामिषम् असक्राम् असंक्रमणीं यावज्जीवमनपायिनीत्यर्थः। अथवा समानेषु न क्रामतीत्यसक्राम्। जनसनखनक्रमगमविड्ढोरनुनासिकः स्यात्। समानस्य छन्दसीति सभाव(ः समाने )ष्वक्रान्तामस्मत् सजातैरप्राप्तपूर्वामित्यर्थः। किञ्च स्तुतश्च स्तोतारश्च ये केचित् पृथिव्यां ते सर्वे वां युवयोः हे माध्वी मधुनः पूर्णे मध्वाः सौदृतिः कुत एतत् यो ह वां मधुनो दृति···मन्त्रान्तरे दर्शनात् तद्वन्तो माध्वी इवनिपौ छन्दसीति मत्वर्थे ईकारः सुष्टुतिश्च शोभना च या काचित् स्तुतिः सा सर्वा युवयोरेव रसाश्च सोमलक्षणाः ये वां युवयोः रातिं दानम् अनु अग्मम् अनुगच्छन्ति······ये प्रदीयन्ते इत्यर्थः।

II.192. भरद्वाजस्य । प्रोपसर्गो भरध्वमित्याख्यातेन । चित्रम्—विचित्रम्, अर्कं मन्त्रं स्तुति लक्षणम्, गृणते—कर्मणि शतृप्रत्ययः, गीयमाणाय स्तोतव्यायेत्यर्थः। तुराय तुर्वतेर्हिंसार्थस्य रूपम्, तुर्विते शत्रूणां हिंसित्र इत्यर्थः। 'त्वर त्वरणे' अस्य वा, त्वरित्रे क्षिप्रकारिणे। मारुताय—मरुतां समूहाय, स्वतवसे—स्वबलाय, भरध्वम्,—प्रभरध्वम्, प्रहरत प्रापयत प्रोच्चारयेत्यर्थः। अथवा—अर्कमन्नं हविर्लक्षणं तद्धेतुमाह्वनीयं प्रति प्रापयत, ऋत्विजाश्चायं प्रैषः। किंच ये मरुतः, सहांसि-बलानि शत्रूणां स्वभूतानि, सहसा-बलेनात्मीयेन, सहन्ते-सहिरभिभवे, अभिभवन्ति । यच्छ्रुतेस्तच्छ्रुतिः, तेभ्यो रेजते-बिभेति, भयेन वा कम्पते। हे अग्ने ! पृथिवी-पृथिव्यपि किमुतान्यानि भूतानि। मखेभ्यः-म इत्यपमितमः वि महनाम ! यद्वा मह इत्यस्य महन्नाम्नो हकारस्य खकारः, महद्भ्य इत्यर्थः। अथवा महो यज्ञस्तमङ्गभावोपगनेन वृष्टिप्रदानद्वारेण वा कुर्वन्ति-'तत्करोति' इति णिच्, ण्यन्तात् 'णेरनिटि' इति णिलोपः—मखा यज्ञकारिण इत्यर्थः। तेभ्यः, विश्व (?) सम्बन्धेनोच्यते।

VI.66.9. प्रचित्रा प्रेत्युपसर्गो भरध्वमित्याख्यातेन संबन्धयितव्यः। चित्रं विचित्रं पूजनीयं वा अर्कं स्तुतिलक्षणं मन्त्रं गृणते । व्यत्ययेनायं कर्मणि कर्तृशब्दः तादर्थ्ये च चतुर्थी स्तुत्याय तुराय त्वरणाय हिंसित्रे वा शत्रूण मारुताय मरुतां समूहाय स्वस्तये स्वबलाय प्रभरध्वं प्रहरत। प्रापयत उच्चारयतेत्यर्थः। अथवा अर्क इत्यन्ननाम हविर्लक्षणमन्नं स्तुत्यादिगुणस्य मरुत्समूहस्यार्थाय हवनीयं विप्रतिप्रापयतेत्यर्थः। पुत्रपौत्रस्य चायं प्रैष ऋत्विजां वा किंच ये मरुतः सहांसि परबलानि सहसा स्वेन बलेन सहन्ते भवन्ति । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः। तेभ्यः रेजते बिभेति कम्पते वा भयेन हे अग्ने पृथिव्यऽपि किमुतान्यानि भूतानि मखेभ्यः अपठितमहन्नामैतत् महद्भ्यः अथवा मख इति यज्ञनाम तस्मात् तत्करोतीत्यस्मिन्नर्थे णिच् । ण्यन्तात् पचादिकोऽच् मखाः यज्ञकारिणः तेभ्यो मखेभ्यः मरुतो हि वृष्टिप्रदाने देवार्थे...... त्वेन यज्ञकारिणः।

I.55. भरद्वाजस्यार्षम्। उभौ तावत् संप्रयुक्तौ जिग्यथुः, न पराजयेथे-न पराजीयेथे केनचित्, न पराजिग्येन पराजीयते कतरश्चन-नेदं किमोरूपम्, एकतरशब्दस्यायं छान्दस एकारलोपः, चनशब्दोऽप्यर्थे, एकतरोऽपि, एनोरेतयोर्भवतोरिन्द्रविष्णवोः, किं चेन्द्रश्च । यस्य समुदायार्थस्य श्रुतेः, समुच्चयस्य द्वितीयेन समुच्चीयमानेन विनाऽनुपपत्तेः, त्वं चेति वाक्यशेषः। इन्द्रश्च त्वं च हे विष्णो । यद्यदाऽपस्पृधेथां स्पर्धेथे शत्रुभिः सह, त्रेधा-

VI.69.8. उभा जिग्यथुः। उभा उभौ तावत् संपृक्तौ जिग्यथुः जयथः नपराजयेथे पराजीयेथे केनचित्। नापि पराजिग्ये पराजीयते। कतरश्चन नेदं क (कि)मोरूपं किं तर्हि एकतरशब्दस्य छांदस एकारलोपश्च न शब्देऽप्यर्थे एकतरोऽपि एनो एनयो (:) भवतोरिन्द्रविष्णोः (ष्ण्वः) किंच इन्द्रश्च च शब्दात् त्वं च हे विष्णो यत् यदा अस्पृधेथां स्पर्धेते शत्रुभिः सह। त्रेधा त्रिशब्दोऽत्रानेकत्वप्रतिपादनपरः अनेकता सहस्रमपि शत्रूणां तत् तदा वि

त्रिशब्दोऽत्रानेकत्वप्रतिपादनार्थः, अनेकधा सहस्रं सहस्रमपि शत्रूणां तत्तदैरयेथां विविधमीरयथस्तारापथ इत्यर्थः। एवमत्र चेति समुच्चयार्थः। इन्द्रश्चेत्येकेन समुच्चयस्याश्रयेणेन्द्रेण सह संप्रयुज्यते, द्वितीयस्तु विष्णुस्तेनाक्षिप्यते।

ऐर ग्ये (ये)थां विविधमीरयथ (:) नाशयथ इत्यर्थः।

II.288. भरद्वाजस्य। संश्वतिकर्मा। शुद्धोऽपि चात्र संपूर्वार्थे द्रष्टव्यः। असंगच्छमाने असजमाने परस्परेणासंमिश्रीभवन्त्योः विक्षिपन्त्यावाश्रितान्। भूरिधारे भूरिणो भूतजातस्य ज्योतिषां च धारयित्र्यौ। पयस्वती उदकवत्यौ। घृतं वृष्टिलक्षणमुदकम्। दुहाते क्षरतो वर्षत इत्यर्थः। सुकृते तादर्थ्ये एषा चतुर्थी शोभनयागादिकर्मचारिणो यजमानस्यार्थाय। शुचिव्रते शुद्धकर्माणौ।
परोऽधेर्चः प्रत्यक्षकृतत्वाद् भिन्नं वाक्यम्। राजन्ती राजतिरैश्वर्यकर्मा ईशाते। अस्य भुवनस्य भूतजातस्य। रोदसी द्यावापृथिव्यौ। अस्मे अस्मदर्थः। रेत उदकनामैतत्। उदकं सिञ्चतं क्षारयतम्। कीदृशम्? यन्मनुर्हितं मनुष्येभ्यो हितम्। यत्संपत्करं तदित्यर्थः।

VI.70.2. भूरिधरे बहोर्भूतजातस्य ज्योतिषां च धारयित्र्यौ घृतं वृष्टिलक्षणमुदकं दुहाते क्षरतः वर्षत इत्यर्थः सुकृते तादर्थ्ये एषा चतुर्थी शोभनयागादिकर्मकारिणो यजमानस्यार्थाय शुचिव्रते शुद्धकर्माणौ परे (रो) धेर्चः प्रत्यक्षकृतत्वाद्भिन्नं वाक्यम्। राजन्ती राजन्तीत्यश्वर्यकर्मा ईशाने अस्य भुवनस्य भूतजातस्य हे रोदसी द्यावापृथिव्यौ अस्मे अस्माकं रेतः उदकं सिंचतं क्षारयतम्। यत् मनुर्हितम्। मनुष्येभ्योहितं सस्यसंपत्करमित्यर्थः।

II.415. भरद्वाजस्य। देवस्य दानादिगुणस्य वयं सवितुः सवीमनि प्रसवेऽभ्यनुज्ञाने श्रेष्ठेऽत्यन्तप्रशस्ये स्याम भवेम वसुनश्च धनस्य च दावने दाने ? त्वं देव सवितः सर्वकर्मसु नित्यमभ्यनुजानीया धनं च दद्या इत्याशास्महे। कीदृशः ? उच्यते। यस्त्वं विश्वस्य सर्वस्य द्विपदो मनुष्यादेर्यश्चतुष्पदो गवादेर्निवेशने स्वावाय व्यवस्थापने प्रसवे चाभ्यनुज्ञाय च सर्वकर्म असि अस्तिर्भवतिना समानार्थः। शुद्धोऽपि चात्र पूर्वार्थे द्रष्टव्यः। भूमनो भूम्नोऽत्यन्तबहुनः।

VI.71.2. देवस्य वां देवस्य वयं सवितुस्तव सवीमनि अभ्यनुज्ञायं (यां) श्रेष्ठे अत्यन्तप्रशस्ये स्याम भवेम वसुनश्च धनस्च च दावने दाने त्वं देवः सविता सर्वकर्ममु नित्यमस्मानभ्यनुजानीया धनं च दद्या इत्येतदाशास्महे इत्यर्थः। योऽहं कीदृशः। उच्यते। यस्त्वं विश्वस्य सर्वस्य द्विपदः मनुष्यादेः यश्चतुष्पदः गवादेः निवेशने स्वापाय व्यवस्थापने प्रसवे च अभ्यनुज्ञायां च सर्वकर्मसु असि अस्ति भवतिना समानार्थः। शुद्धोऽपि चात्र पूर्वार्थे द्रष्टव्यः प्रभवसि यः सर्वस्य प्राणिजातस्य······जाग्रत्कर्मसु च ईशिष्यत इत्यर्थः। भूमनः भूम्नः अत्यन्तं बहोः।

III.61. हे सौमारुद्रौ युवं युवाम् । एतान्यस्मे अस्माकम् । विश्वा विश्वानि सर्वाणि । तनूषु शरीरेषु रोगोपशमनकराणि भेषजानि औषधानि धत्तम् । अरोगशरीरानस्मान् कुरुतमित्यर्थः । किञ्च अवस्यतं स्यतिरुपसृष्टो विमोचने विमुञ्चतमपनयतं वास्मत्त इत्यर्थः । अपनीय चान्यत्र नीत्वा मुञ्चतम् । यत् नोऽस्माकमस्ति तनूषु वद्धं निबद्धम् । अस्यैव विकरणं कृतम् । किं तत् । एनः पापमस्माभिरिति शेषः । अस्मत् पञ्चम्यन्तं पुरस्तात् कृतसम्बन्धम् ।

VI.74.3. सोमारुद्रा ।······वमेतानि अस्मे अस्माकं विश्वा सर्वाणि तनूषु शरीरेषु भेषजानि रोगोपशमनान्यौषधानि धत्तं स्थापयतम् । अरोरा-(ग) शरीरानस्मान कुरुत इत्यर्थः ।······ ( स्यति ) रुपसृष्टो ( विमोच )ने । अपनयतमित्यर्थः । अपनीय च दूरं नीत्वा मुञ्चत ······यन्नो अस्ति तनूषु वद्धं व्यवस्थितम् एनः पापम् । अस्मत् तृतीयार्थे पञ्चम्येषा । अस्माभिः ।

III.157. केवलस्यापि धनुषश्छान्दसत्वादङ् । धन्वना धनुषा गाः शत्रूणां स्वभूताः धन्वना धनुषैव । आजिं यः स्पर्धयैव लक्ष्यवेधफलमात्रं क्रियते तं संग्रामं जयेम । धनुः धनुरेव च शत्रोरपकामं मध्यमपदलोपी समासः अपगतं काममस्मज्जयविषयं कृणोति लोडर्थे लट् करोतु धन्वना । किं बहुना धनुषैव वयं सर्वाः प्रदिशः प्रगतादिभिरवान्तरदिशो जयेम ।

VI.75.2. धन्वना गाः । गध (गौधे) नुज्यार्त्नि(र्त्नी) इषुधि (:) । सर्वमृकृश (ब्दैः) । धनुर्ज्या अ(आ)र्त्नी । इषुधिरित्येतत् सर्वं चतुष्टयमपि ऋचां चापराभिश्चतसृभिः ऋग्भिः स्तुतं तत्रानया तावद्धनुःस्तुतम । धन्वना गा धनुषा गा (:) शत्रूणां स्वभूता धन्वनैवाजिं यत्र स्पर्धयैव केवलया लक्षवेधार्थमिषवः क्षिप्यन्ते । परस्परवधक्रिया सात्र आजिरभिप्रेता तया च तत्कारिणो लक्ष्यन्ते । तान् जयेम । धन्वनैव च तीव्रा अप्रसह्या समद (ा): संग्रामकारिणी सेना जयेम । धनुरेव शत्रोरस्मदीयस्य अपकामम् अपगतं कामं कृणोति । य(अ)त्र लोडर्थे करोतु । धान्वनैव च वयं सर्वाः प्रदिशः प्रगतादिभिः प्रदिश उच्यन्ते । तान् जयेम । अवान्तरदिशां च । जयः दिग्जयमन्तरेण न संभवतीत्यर्थः । गृहीतो दिग्जयः । अथवा प्रकृष्टा दिश(ः) प्रदिश इति अष्टावपि दिश उच्यन्ते । तान् (ताः) जयेमेति ।

III.158. अत्रैकवाक्यतायै यत्तदध्याहारः । या वक्ष्यन्तीव यथा वदिष्यन्ती । इत् पदपूरणः । किञ्चित् काचित् स्त्री आगच्छेत् तद्वत् । आगनीगन्ति पुनः पुनरागच्छन्ति आकृष्यमाणा

VI.75.3. वक्ष्यन्तीव । अनया ज्या स्तुता वक्ष्यन्तीव यथा कश्चिद्वक्ष्य (न्तीव)········ ···काचि···ननुगच्छेत्······(आ)गनीगन्ति अ (आ)गच्छन्ति आकृष्यमाणा कर्णं प्रति

कर्णे प्रति। प्रियं लुप्तोपममेतत्। प्रियमिव सखायं कश्चित् काचित् स्त्री परिषस्वजाना परिष्वजन्ती। किम् ? सामर्थ्यादिषुं श्लिष्यन्तीत्यर्थः। सा योषेव सुरतसमये शिङ्क्ते अव्यक्तं शब्दं करोति। वितताधि धन्वन् धनुष उपरि ज्या इयं समने संग्रामे पारयन्ती। किम् ? सामर्थ्यादिषून्। इषुगमनेन वा पालयन्ती योद्धारम्।

प्रियम्। लुप्तोपममेतत्। प्रियमिव सखायं यथा का········(र)ति काले काचिद्यो (षा) पुंसः सुखकर( का )माप्य(व्यक्तं)···शब्दं कुर्यात्। तद्वदप्यु(प्य) (व्य)क्तं शब्दं करोति। विस्तारिता अधिधन्वन् उपरि धनुष(:) ज्या··· समने स(सं)ग्रामना(म)···संग्रामे पारयन्ती पॄ पालनपूरणयोः पालयन्ती योद्धारम्। अथवा वृणातिरत्र सामर्थ्याद्गत्यर्थः। अरिष्टैः पथिभिः पारयन्तेति यथा गमयन्ती इषून्।

III.174. वायुर्भरद्वाजस्तत्सार्वम्। ते ज्ययाकृष्यमाणे आचरन्ती आगच्छन्त्यौ ये द्वारं प्रति। समनेव समाने भर्तरि मनो ययोस्ते इव योषा योषितौ स्त्रियौ भर्तारं प्रति। मातेव पुत्रं यथा माता पुत्रमुपस्थे अङ्के धारयेदेवं बिभृतां धारयताम्। ये द्वारमप विध्यताम्। अपनयतां च शत्रून्। संविदाने सम्यक् जानन्त्यौ स्वकर्म। आर्त्नी धनुष्कोटी इमे विष्फुरन्ती। स्फुरतिर्वधकर्मा। निघ्नन्त्यौ अमित्रान्। अपपूर्वो व्यधिरपनयने द्रष्टव्यः। अपविद्धो निरस्त उच्यते।

VI.75.4. ते आचर। अनया आर्त्नी स्तुते ते आचरन्ती चरन्ति(ति)गत्यर्थः। ज्या(ज्य)या आष्ट(कृष्य)माणे योद्धारं प्रत्यागच्छन्तौ (न्त्यौ) समनेव योषा भर्त्रा सह समानं मनो यस्याः सा समना भर्तृश्चित्तानुवर्तिनी एकवचनस्य डादेशः योषेत्येकवचनान्तेन समानाधिकरणात्। यास्कस्तूपमेयद्विश्वा (त्वा)···दुपमानमपि योषेत्येतद्द्विवचनान्तं मन्यते। तदयुक्तम्। मातेव पुत्रमित्येकवचनान्तस्याप्युपमानत्वदर्शनात्। यथा भर्तुश्चित्तानुवर्तिनी योषा भर्तारं प्रत्यागच्छेत्तद्वदागच्छन्त्यौ मातेव पुत्रं बिभृतामुपस्थे। उपस्थोऽङ्कः। यथा माताके(ङ्के)पुत्रं बिभृयात्तद्वत् बिभृतां शत्रूंश्च अपविध्यतामपनयताम्। संविदाने सम्यग्जानन्त्यौ आर्त्नी धनु(ष्कोटी)।······इमे कथं पुनरपविध्यताम्। विष्फुरन्ती,स्फुरतीति वधकर्मा,विविधं घ्नत्यौ ( न्त्यौ ) अमित्रान शत्रून्॥

III.155. वायोर्भरद्वाजस्य। परतश्च युद्धोपकरणस्तुतयः। अत्रैकवाक्यतायै यत्तदध्याहारः। बह्वीनामिषूणां पिता पितृस्थानीयः पालयिता वा। यस्य चास्य बहुरिपुगणः पुत्रः पुत्रस्थानीयः पुत्रवद्रक्ष्यत इत्यर्थः। यश्च चिश्चा कृणोति चिश्चेति निपातो ह्रासवचनः। ह्रास-

VI.75.5. बह्वी। अनया इषुधिः स्तुतः। बह्वीनामिषूणां पिता यस्मादुत्पद्यते स तस्य पिता संग्रामवेलायाम् इषुधित इषव उत्पद्यन्ते। तत आकृष्यमाणत्वात् अतस्स तासां(सां) पितेत्यु-(च्य)ते पालयितृसामान्याद्वा बहुः व्यत्ययेनैकमेकवचनम्। बहवः अस्य पुत्राः इषवः। पुत्र-

# APPENDIX V.

Passages from the *Nighaṇṭu-bhāṣya* of Devarāja Yajvan, which bear a striking resemblance to the commentary of Skanda Maheśvara on the *Nirukta* but which are not acknowledged as quotations by Devarāja Yajvan.

| Volume and Page<br>स्कन्दस्वामी | Chapter section and number of the word. देवराजयज्वा |
|---|---|
| IV. 9. अथवा 'क्ष्मायी विधूनने' इत्यस्य । | I. 1. 4. 'क्ष्मायी विधूनने ।'<br>(क्ष्मा) |
| II. 69. चन्द्रं चन्दतेः । | I. 2. 2. चन्द्रश्चन्दतेः ।<br>(चन्द्रम्) |
| ह्रियते चौरैरायम्यमानं बध्यमानं यत्नतो रक्ष्यमाणमपीत्यर्थः । शिल्पिभिर्वा पत्र-कटकादिभावेनायम्यमानं विस्तीर्यमाण-मित्यर्थः । ह्रियते जनाज्जनमिति वा, संव्यवहारार्थम् । द्रव्यस्वभावत्वान्नैकत्रा-वस्थायित्वम्, तस्य सर्वस्य सर्वथा हरतेर्हि-रण्यम् । द्विधातुजत्वप्रदर्शनार्थमाह—हित-रमणम्, हितश्च तदापदि दुर्भिक्षादौ, रमयति च सर्वदा सर्वमित्यतो हिरण्यम् । तेन गृही-तेन मूषकोऽपि रमते, किमुत मनुष्यः । हर्यतेर्वा स्यात् प्रेप्साकर्मणः । सर्वेण हि सर्वदा तत् प्राप्तुमीप्स्यते । | I.2.5. ह्रियते चौरैर्यत्नेन रक्षमाणमपि, शिल्पि-<br>(हिरण्यम्) भिर्वा पत्रकटकादिनिर्माणदशायाम्, राज्ञा वा अपराधिगृहात् । ह्रियते जनाज्जनमिति वा संव्यवहारार्थम् । द्रव्यस्वभावत्वान्नैकत्रावस्था-यित्वं तस्य । अथ वा द्विधातुजं रूपम् । हिनोने रमतेश्च धातुद्वयात् समुदितात् कन्यन्प्रत्ययो बाहुलकात् रूपसिद्धिश्च । हितं च तदापदि दुर्भिक्षादौ रमयति च सर्वदा सर्वमिति । अथ वा हर्यतेः प्रेप्साकर्मणः । हर्यतेः कन्यन् हिरश्च क्रियते । यथाप्राप्तं रूपम् । सर्वैर्हि तत् सर्वदा प्राप्तुमिष्यते । |
| II.148 अम्बुमद्भातीति वा, राजतेरर्थे भातिनाऽऽचष्टे । स्वच्छस्तिमितसरोऽम्बुवदवभासते, कलि-तोपमानं चैतत् । यथा—<br>पुञ्जीकृतमिव ध्वान्तमेष भाति मतङ्गजः ।<br>सरः शरत्प्रसन्नाम्भो नभःखण्डमिवोज्झितम् ॥<br>परमार्थतः स्वरूपमवकाशम् । अम्बुमद्भव-तीति वा, रो मत्वर्थे । | I.3.1. अथ वा अम्बुवद्राजते स्वस्थस्तिमितसरोऽ-<br>(अम्बरम्) म्बुवदवभासते । कल्पितोपमानं चैतत् । यथा—<br>पुञ्जीकृतमिव ध्वान्तमेष भाति मतङ्गजः ।<br>सरः शरत्प्रसन्नाम्भो नभःखण्डमिवोज्झितम् ॥<br>परमार्थतः स्वरूपमवकाशः । अथवा अम्बु-मद्भवति । रो मत्वर्थीयः । |
| II.313. धन्वन्ति गच्छन्ति धवंसन्ति अस्मादापः । | I.3.5. धन्वन्ति गच्छन्ति ध्वंसन्तेऽस्मादापः ।<br>(धन्व) |
| II.345. पोषयति भूतान्यवकाशदानेनोदकधारणा-दिना चोपकारेण । | I.3.13. पोषयति भूतान्यवकाशप्रदानेनोदकदानाद्यु-<br>(पुष्करम्) पकारेण च । |
| „ वपुष्करं वा सन् वकारलोपेन पुष्करम् । | „ वपुष्करं सद्वकारलोपेन पुष्करम् । |
| II.70.71. समुद्द्रवन्त्यस्मादाप इत्यादि । संहता ऊर्ध्वं द्रवन्त्यस्मादापोऽन्तरिक्षात्पार्थिवाच्च, रश्मिभिराकृष्यमाणा वायुना प्रेर्यमाणा इत्यु- | I.3.15. समुद्द्रवन्ति संगता ऊर्ध्वं द्रवन्ति गच्छन्त्य-<br>(समुद्रः) स्मादापो रश्मिभिराकृष्यमाणा आदित्यमण्ड-लम् । ............यद्वा संहता अभिद्रव- |

भयत्र तुल्यमपादानसाधनत्वम् । संहता वाभिद्रवन्त्येनं नदनदीभावेन पार्थिवं भौमरसलक्षणा वायुना प्रेर्यमाणा आदित्यमण्डलाद्वा वर्षाकाले रश्मिभिः पर्यावर्त्यमाना अन्तरिक्षलक्षणमापः । अत्रापि कर्मसाधनत्वमविशिष्टम् । संमोदन्तेऽस्मिन् जलचराणि भूतानि, इतरत्रान्तरिक्षचराणि । अथवा समुदको भवति । समेकीभावे, उदकादुच्छब्दो रो मत्वर्थे । एकीभूतमुदकमस्मिन् विद्यत इति समुद्रः । वर्षास्वन्तरिक्षेऽपि तुल्यम् । समुनत्तीति वा, एको लीलया भुवं क्लेदयति, अपरो वर्षेणेति ।

न्त्येनमापो भौमरसलक्षणा वायुना प्रेर्यमाणा आदित्यमण्डलाद्वा वर्षाकाले रश्मिभिः पर्यावर्त्यमानाः । ············ संमोदन्तेऽस्मिन् भूतानि अन्तरिक्षचारीणीति वा । ········· यद्वा समित्येकीभावे, उदकादुच्छब्दः, गे मत्वर्थीयः । एकीभूतमुदकमस्मिन् विद्यते वर्षास्विति ········· समुनत्ति वर्षेण भुवनं समुद्रः ।

II. 86. सु अरणं गमनम्, तत्सुखाय हिताय वा शोभनं यस्य । ············ सर्वत्र शोभनं वा प्रेरणं तमसां यस्य । सुष्ठु वा ऋतो गतो रश्मिभि रसानादतुम्, भासं वा ज्योतिषां नक्षत्रादीनाम् । स्वृतो भासेति, ········· साऽपि सुष्ठु गता शोभनं वा अरणमस्यां शोभनैर्वा पुण्यकृद्भिरर्यतेऽस्यां सुष्ठु वा पुण्यकृत ईरयतीति । तत्र गमनाय स्वृतो रसैः, कर्मणि क्तः, स्वृता भाभिर्ज्योतिषां स्वयमेवादीप्ता ।

दिव उदाहरणम्—' भूर्भुवः स्वः ' इति ।

आदित्यस्य तु—

एभिर्नो अर्कैर्भवा नो अर्वाङ् स्व१र्णज्योतिः ।

I.4.1. शोभनमरणं गमनं सुखाय हिताय वा यस्य,
(स्वः) शोभनं वा प्रेरणं तमसां यस्य, सुष्ठु वा ऋतो रश्मिभिः रसानादातुं, भासं वा ज्योतिषां नक्षत्रादीनाम् । भासा सुष्ठु ऋतः प्राप्त इति वा स्वरादित्यः । द्यौः सुष्ठु गता शोभनं वा अरणमस्यां शोभनैर्वा पुण्यकृद्भिरर्यते । सुष्ठु वा पुण्यकृत ईरयति । स्वृतो रसैः स्वृतो भाभि ज्योतिषां स्वयमेव वा दीप्ताम् । ' भूर्भुवः स्वः ' इति दिव उदाहरणम् । 'एभिर्नो अर्कैर्भवा नो अर्वाङ् स्व१र्णज्योतिः' इत्यादित्यस्य ।

II.87. प्रास्तुत एनं शुक्रो वर्णः । संस्प्रष्टा रसान्, तन्नन्तोऽयम् । ················· आदाता रसानित्यर्थः । कृतव्याख्यानमन्यत् ।

**अथ द्यौः संस्पृष्टा व्याप्ता ज्योतिर्भिः पुण्यकृद्भिश्च । ' सुकृतां वा एतानि ज्योतींषि यन्नक्षत्राणि ' इति श्रुतेः ।**

**I.4.2.** प्रास्तुत एनं शुक्रो वर्णः । संस्पृष्टा रसान्,
(पृश्निः) तन्नन्तोऽयम् । आदाता रसानित्यर्थः । कृतव्याख्यानमन्यत् ··················

**द्यौस्तु संस्पृष्टा ज्योतिर्भिः पुण्यकृद्भिश्च । 'सुकृतां वा एतानि ज्योतींषि यन्नक्षत्राणि' इति श्रुतेः । 'पृश्नेः पुत्रा उपमासो रभिष्ठाः'**

| | | | |
|---|---|---|---|
| | आदित्यस्योदाहरणम्—'अयं वेनश्चोदयत्' इति व्याख्यास्यते। दिवः— | | इति निगमो दिवः। 'अयं वेनश्चोदयत् पृश्निगर्भाः' इत्यादित्यस्य। |
| | पृश्नेः पुत्रा उपमासो रभिष्ठाः............। | | |
| II. 88. | नाक आदित्यो भवति। नेता प्रापयिता भासामात्मीयानां सर्वत्र, ज्योतिषां प्रणयो नायक इत्यर्थः।.................... अथ द्यौः। कमिति सुखनाम, तत्प्रतिषिद्ध-मकं दुःखं,पुनः प्रतिषिध्यते, सुखमेवेत्यर्थः। ......अस्मिन्नर्थे ब्राह्मणं पठित्वा व्याचष्टे— 'न वा अमुं लोकं जग्मुषे किंचनाकम्। ......उदाहरणम्—'नाकस्य पृष्ठे इति व्याख्यातम्। | I. 4. 3. (नाकः) | नेता भासामात्मीयानां, ज्योतिषां प्रणायकश्चादित्यः। द्यौस्तु, कमिति सुखनाम, न कम् अकम् असुखम्, न अकं यत्र स नाकः। ................................ 'न वा अमुं लोकं जग्मुषे किंचनाकम्' इति ब्राह्मणम्। अत्यन्तसुखमित्यर्थः। 'नाकस्य पृष्ठे अधितिष्ठति श्रितः' इति दिवः। |
| II. 89. | गौरादित्यो भवति। गमयति रसान् मण्डलं प्रति रश्मिभिः। गच्छति वा मध्यमक्षये। अथ द्यौः। यत्पृथिव्या उपरि दूरं गता। 'उतादः पुरुष' इत्यादित्यस्योदाहरणम्। दिवः—'गवामसि गोपतिः'इति। पृथिव्या रसानादातुमाविष्टोऽभिनिविष्ट इत्यर्थः। एवमेव भासां ज्योतिषाम्। भासा वा व्याप्तः। द्यौरप्येवम्। | I. 4. 4. (गौः) | गमयति रसान् मण्डलं प्रति रश्मिभिः। गच्छति वाऽन्तरिक्षे इति गौरादित्यः। यत्पृथिव्या उपरि दूरं गता,.........गौः द्यौः। 'गवामसि गोपतिरेक इन्द्र' इति दिवः। 'उतादः परुषे गवि' इत्यादित्यस्य। |
| | | I. 4. 5. (विष्टप्) | पृथिव्यो रसानादातुमाविष्टोऽभिनिविष्ट इत्यर्थः। एवमेव भासं ज्योतिषाम्। भासा वाऽऽविष्टो व्याप्त आदित्यः। द्यौरप्याविष्टा ज्योतिर्भिः पुण्यकृद्भिश्च। |
| | नयतेः। अपि वा भन एव स्याद्विपरीतः। भासनः सन्नाकारस्य ह्रस्वत्वेन सलोपेन च भनः, भनः सन् नभः। न न भातीति वा, नकारलोपेन नभः। न न भाति भात्येवेत्यर्थः। एतेन द्यौर्व्याख्याता। 'ज्योतिष्मती प्रतिमुञ्चते नभः' शुक्र ऋषभा नभसा इत्युदाहरणम्। | I. 4. 6. (नभः) | नयतेः।...नाकशब्देन समानोऽर्थः। अथ वा भासनशब्दस्याकारह्रस्वत्वं, सकारलोपः, नकारभकारयोश्च स्थानविपर्ययः सान्तत्वं च। सर्वत्र सूत्रप्राप्त्यनुक्तौ पृषोदरादित्वाद्द्रष्टव्यम्। यद्वा न न भाति भाति, भात्येवेत्यर्थः।...एतेन द्यौर्व्याख्याता। 'ज्योतिष्मती प्रतिमुञ्चते नभः'। शुक्रहा नभसेत्युदाहरणम्। |
| II.90 | रशना रश्मिरिति कतिपयप्रयोगविषय एवायं रश्मिः, 'रहत्यादिवत्, न सर्वत्र,बन्धनप्रतीतेः। | I. 5. 4. (रश्मयः) | रश्ना रश्मिरिति कतिपयप्रयोगविषय एवायं रशिः,भरत्यादिवत्,न सर्वत्र बन्धनप्रतीतेः। |

| | |
|---|---|
| II.387. तं तमर्थं प्रत्यागमनात् ।······अभ्यशानात् परस्परं दिग्भिरहोभिः संव्याप्तः । | I. 6. 2. तं तमर्थं प्रत्यागमनात् ।···अभ्यशनात् (आशाः) परस्परदिग्भिराभिः संव्याप्तेः । |
| II.280. सप्त सृप्ता संख्या गता षड्भ्यः सकाशात् । | I.6.13. षड्भ्यः सकाशात् सृप्ता संख्या सप्त । (सप्त ऋषयः) |
| IV.134–135. ये सप्त संख्याका रश्मय ऋषयो द्रष्टृत्वाद् द्रष्टारस्त्रैलोक्यस्य । | „ सप्तसंख्याकाश्च ते ऋषयो द्रष्टारश्च त्रैलोक्यस्येति सप्त ऋषयः । |
| II.459. रात्रिशब्दनिर्वचनार्थं प्रसिद्धं तावदाह गोरूधः प्रसवकाले अङ्गान्तरेभ्य उच्छ्रिततरं भवति । यद्वा उपश्लिष्टमुद्धृतमुद्धृतमिव केनचित् । ततस्स्नेहो रसानुप्रदानसामान्याद् रात्रिरप्यूध उच्यत इति । | I.7.20. रात्रिनामनिर्वचनार्थं प्रसिद्धं तावदुच्यते । (ऊधः) गोरूध उद्धततरं भवति प्रसवकाले अङ्गान्तरेभ्यः उच्छ्रिततरं भवति । यद्वा उपोन्नद्धमुपसृष्टमुद्धतमुद्वृद्धमिव केनचित् । ततः स्नेहं रसानुप्रदानसामान्याद्रात्रिरप्यूध उच्यते । |
| IV.76. वाजो बलं वेगो वा तद्वती वाजिनी । कासौ ? सरस्वत्याः स्वभूता सेना तद्वती वाजिनीवती सरस्वती । अथवा वाजं हविर्लक्षणमन्नं तद्यस्या अस्ति सा वाजिनी यागसन्ततिस्तद्वती वाजिनीवती सरस्वती । | I. 8. 8. वाजो बलं वेगो वा तेन तद्वती वाजिनी । (वाजिनीवती)कासौ ? उषसः स्वभूता तेन तद्वती वाजिनीवती । यद्वा वाजो हविर्लक्षणमन्नाद्यस्या अस्तीति वाजिनी यागसन्ततिः । तद्वती वाजिनीवती । |
| II.101. श्वेत्या श्वेततेः, श्वेतो वर्ण इति वर्णसामान्यम्, सामर्थ्याद्दीप्तिमच्छुक्लवर्णविशेषविषयं द्रष्टव्यम् । उषसि कथा दर्शनात् । | I.8.12. श्वेततेः श्वेत्या । श्विता वर्ण इति वर्णसामान्यम् । सामर्थ्यात् शुक्लवर्णेऽपि । शेषे (श्वेत्या) पर्यवसितं द्रष्टव्यम् । उषसि तथा दर्शनात् । |
| II.308. स्वयमेव तानि गच्छन्ति नहि कश्चित् सारयन् दृश्यते । अपिवा स्वरादित्य एतानि सारयति । तदुदयास्तमयाभ्यां तानि गमयति । | I.9.5. स्वेन आत्मनैव गच्छन्ति । अपि वा (स्वसराणि) स्वरित्यादित्यनाम ।·········आदित्येन सार्यन्ते ।······स हि स्वोदयास्तमयाभ्यां तानि गमयति । |
| III.149. हन्यते हि तैः सोमः । | I.10.2. हन्यतेऽनेन सोमः । (ग्रावा:) |
| II.302. वरमुदकमाहरतीति वा । | I 10.13. वरमुदकमाहरतीति वराहः ।······ |
| II.303. वरं वरमित्येकस्य वरशब्दस्य निवृत्तिः । वरशब्दाद् वृहेश्च वराह इति । | (वराहः) वरं वरमित्यत्रैकस्य वरशब्दस्य निवृत्तिः । वरशब्दाद् वृहेश्च वराह इत्यर्थः । |
| III.8. एवं चरकाध्वर्यूणां ब्राह्मणे इतिहासः श्रूयते—'प्रजापतेर्वा एतज्ज्येष्ठं तोकं यत्पर्वतास्ते पक्षिण आसन् ते परापातमासन् | I.10.15. तथा ( च ) चरकाध्वर्यूणां ब्राह्मणे (रौहिणम्) इतिहासः श्रूयते—'प्रजापतेर्वा एतज्ज्येष्ठं तोकं यत्पर्वतास्ते पक्षिण आसन् । ते यत्र- |

| | |
|---|---|
| यत्र यत्राकामयन्त । अथवा इयं तर्हि शिथिरासीत् । तेषामिन्द्रः पक्षानच्छिनत् तैरिमामदृहदिति ।' | यत्र कामयन्ते तत्परा तमासत । इयं हि शिथिलासीत् । तेषामिन्द्रः पक्षानच्छिनत् । तैरिमा बृहदिति । |
| II.95. वृत्रो वृणोतेराच्छादनार्थस्य, आच्छादयति ह्यसौ कृत्स्नं नभः । वर्ततेर्वा गत्यर्थस्य, गच्छति ह्यसौ नभः । वर्धतेर्वा वृद्ध्यर्थस्य । ब्राह्मणदृष्टास्त्रयोऽपि निर्वचनप्रकारा इति दर्शयति—'यदिमांल्लोकानावृणोत् तद्वृत्रस्य वृत्रत्वमिति विज्ञायते । यथा यदवर्तयत् तथा इषुमात्रमवर्धत' इति । | I.10.28. (वृत्रः) वृणोतेराच्छादनार्थात् आच्छादयति ह्यसौ कृत्स्नं नभः । वर्ततेर्वा गतिकर्मणः···गच्छति ह्यसौ कृत्स्नं नभः । वर्धतेर्वा वृद्ध्यर्थात् ।··· ब्राह्मणोक्ता एवामी त्रयोऽप्यर्थाः—'यदिमांल्लोकानावृणोत् तद्वृत्रस्य वृत्रत्वम् । स इषुमात्रमिषुमात्रं विष्वङ् अवर्धत' इति । |
| II.380. पुनः पुनराह्वयति शब्दं करोति, रसान् वादत्ते, जुहोति वात्मनीति । | I.11.29. (जिह्वा) जोहुवाति पुनः पुनराह्वयति शब्दं करोति, रसान् वादत्ते, जुहोति वा स्वात्मनि । |
| III.159. वाक् पुनः प्रकाशयत्यर्थान् अर्थविशेषान् व्यवच्छेदनाय । खशया मुखाकाशे शेते तत उपलब्धेः । | I.11.43. (कशा) प्रकाशयत्यर्थान् । यद्वा खेशया सती वर्णव्यापत्त्यादिना कशा । वाग्घि मुखाकाशते तत उपलब्धेः । |
| IV.88. पीयते हि सा तत्प्रवृत्तवृष्ट्युदकद्वारेण । | I.11.52. (धेनुः) पीयते हि सा तत्प्रवृत्तवृष्टिद्वारेण । |
| III.166. कृत्स्नं ताभिर्व्याप्तम् ।···अथ चाथर्वणश्रुतिः 'सर्वं वा इदमम्मयम्' इति । | I.12.5. (अम्भः) व्याप्नोति सर्वमम्भः । तथा चाथर्वणी श्रुतिः 'सर्वमिदमम्मयम्' इति । |
| IV.125. विष्णातेः शौचार्थस्य । तद्धि प्रथमं शौचसाधनम् । विपूर्वस्य सचतेर्वा । तद्धि स्नानपानावगाहार्थिभिः सेव्यते । | I.12.15. (विषम्) यद्वा, विपूर्वात् 'ष्णा शौचे' विशेषेण स्नात्यनेनेति विषम् । तद्धि प्रथमं शौचसाधनम् । विपूर्वात् सचतेर्वा पूर्ववत् डप्रत्ययः । तद्धि स्नानपानावगाहार्थिभिः सेव्यते । |
| II.106. ब्रवीतेः शब्दार्थस्य । तद्विपतत् साकारशब्दं करोति । भ्रंशतेर्वा, तदावरणत्वात् । उभयस्माद्वा, मेघेभ्यो भ्रश्यते शब्दवच्चेति । | I.12.19. (बृबूकम्) ब्रवीतेः शब्दार्थात्, भ्रश्यतेर्वाधःपतनार्थात्, उभाभ्यां समुदिताभ्यां वा···क्रमेणार्थः । तद्विपतत् साकारशब्दं करोति । भ्रश्यति दिवोऽनावरणत्वात् मेघेभ्यो भ्रश्यति शब्दवच्चेति । |
| IV.8. आभिमुख्येन युध्यतेऽनेनेत्यायुधम् । | I.12.29. (आयुधानि) आयुध्यतेऽनेनेत्यायुधम् । |
| II.156. मानेन स्वगुणेन परिमाणेन अन्यान् यद- | I.12.52. मानेन स्वगतेन परिमाणेन अन्यान् |

| | |
|---|---|
| पेक्षमस्य महत्त्वं तान् जहाति अतिक्रामति, मानशब्दाज्जहातेश्चेति शाकपूणिः । | (महत्) स्वस्मादूनप्रमाणान् पदार्थान् जहाति अतिक्रामति ।······मानशब्दाज्जहातेश्च···। (*Compare Appendix II, page 334 also*.) |
| III.166. आपः कस्मात् ? आप्नोतेः कृत्स्नं ताभिर्व्याप्तम् । आप्नोतेः संग्रहकर्मत्वात् । अथ चाथर्वणश्रुतिः 'सर्वं वा इदमम्मयम्' इति । | I.12.53. कृत्स्नं ताभिर्हि व्याप्तम् । आप्नोतेः संग्रह- (आपः) कर्मत्वात् । तथा चाथर्वणिका श्रुतिः । 'सर्वं वा इदमम्मयम्' इति । |
| II.402. क्वचिच्च प्रथमा समानाधिकरणे शानच् द्रष्टव्यः । तच्च दर्शयति रुजन्ति कूलानीति रुजाना नद्यः । | I.13.8. अत्र च प्रथमा समानाधिकरणे शानच् (रुजानाः) भवति ।·········रुजन्ति कूलानि । |
| IV.35. तूर्णमश्नुते·········अथवा तीर्णेऽन्तरिक्षे क्षियति निवसति ।·········तूर्णशब्दात् पूर्वपदम् । रक्षतेरश्नोतेर्वोत्तरपदमित्यर्थः । | I.14.14. तूर्णमश्नुते गन्तव्यम् । तीर्णेऽन्तरिक्षे (तार्क्ष्यः) क्षियतीति तार्क्ष्यः । तूर्णशब्दात् तीर्णशब्दाद्वा पूर्वपदम्, अश्नोतेः क्षीयतेर्वोत्तरपदम् । |
| II.252. तद्धि हरति तमः । | I.17.9. हरति तमः । (हरः) |
| II.54. शृङ्गस्थानीयत्वाद्वा दीप्तिरत्र शृङ्गमुच्यते । | I.17.11. शृङ्गशब्देनात्र शृङ्गस्थानीयत्वाद् दीप्तय (शृङ्गाणि) उच्यन्ते । |
| II.55. श्रितं हि तदाश्रितं मण्डले । 'शृणातेः' वा हिंसार्थस्य । हिनस्ति हि तद्ग्रीष्मे प्राणिनः । शरणाय हिंसायै उद्गतमूर्ध्वगतमिति शृणातेरुद्गमेश्चेति पुनर्निर्वचनं द्विधातुजत्वेन । तम आदेर्हिंसार्थमित्यर्थः । अथवा शरणं रक्षा, तदर्थम् । द्विधातुजमेव, रक्षति हि प्राणिनः सस्यनिष्पत्त्यादिना । शिरसो निर्गतमिति वा । शिरःशब्दान्निर्गमेश्च शिरस आदित्यान्निर्गतमित्यर्थः । 'असावादित्यः शिरः प्रजानाम्' इति श्रवणात् । | ,, श्रितं हि तदाश्रितं मण्डले ।···हिनस्ति तद्ग्रीष्मेण प्राणिनः ।···शरणाय हिंसायै गतं मस्तकादेरुद्गतमूर्ध्वगतमित्यर्थः । शृणातेरुद्गतेश्च रूपमित्यर्थः ।···अथ वा शरणं रक्षा,तदर्थमुद्गतं, रक्षति तत् । प्राणिनस्तस्य निष्पत्त्यादिना । शिरसो निर्गतमिति वा । शिरःशब्दान्निर्गमेश्च शृङ्गम् । शिरस आदित्यान्निर्गतमित्यर्थः । 'असावादित्यः शिरः प्रजानाम्' इति श्रवणात् । |
| IV.65.66. विष्ट्वीति नेदं कर्मनामात्र गृह्यते । किन्तु विषेर्व्याप्त्यर्थस्य क्रियाशब्दोऽयम् । स्नात्व्यादित्वादीकारः । विष्ट्वी विष्ट्वा | II.1.6. स्कन्दस्वामी···'विष्ट्वीति नेदं कर्मनाम'·· (विष्ट्वी) अतो विषेर्व्याप्त्यर्थस्य क्रियाशब्दोऽयम् । स्नात्व्यादित्वादीकारः। विष्ट्वा व्याप्तिं कृत्वेत्यर्थः |

| | |
|---|---|
| व्याप्य कृत्वेत्यर्थः । शमीति कर्मनाम कर्माणि प्रख्यातानि । | शमीति कर्मनाम । कर्मणीति द्वितीयाबहुवचनान्तत्वेनाभाष्ययत् । |
| IV.26. कृष्टयं इति मनुष्यनाम । कर्म यतो भवतीति । 'नैव कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत्' इत्याह । कर्मवन्तो भवन्तीति विकृष्टदेहा वा विविधं कृष्टो विक्षिप्तः परिकण्डूयनाद्यभिलषितक्रियानुष्ठानसमर्थो देहो येषाम् । | II.3.7. तथा च भाष्यकारः—'कृष्टय इति मनुष्य- (कृष्टयः) नाम कर्मवन्तो भवन्ति' इति । तथा च श्रीभगवद्गीतायाम्—'नैव कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत् ।' इति ।.......... विविधं कृष्टो विक्षिप्तः परिकण्डूयनाद्यभिलषितक्रियानुष्ठानसमर्थः । कः ? इत्यपेक्षायां, सामर्थ्याद्देहः । स येषामस्तीति पूर्ववन्मत्वर्थीयः । तथा च भाष्यम्—'विकृष्टदेहा वा' इति । |
| II.252. लोका हरांसि । तेषु ह्रियते सर्वम् । त एव वा मृत्युना कालेनाह्रियन्ते । | II.3.10. हरन्ति पदार्थान्, प्रसह्य ह्रियन्ते मृत्युनेति (हरयः) वा । |
| III.89. पूरयितव्याः कामानाम् । | II.3.20. पूरयितव्याः कामानाम् । (पूरवः) |
| II.142. धूर्वन्ति घ्नन्ति उपक्षपयन्ति कर्माणीत्यर्थः । | II.5.18. धूर्वन्ति घ्नन्ति उपक्षयन्ति कर्माणीत्यर्थः । (धुरः) |
| II.143. धारयतेर्वा धूः, धार्यते हि सा बलीवर्दैः । अङ्गुल्योऽपि धार्यः सुवर्णनवोपलादीनि धारयन्तीत्युभयप्रकारेण निर्वचनम् । | ,, धारयतेर्वा औणादिके क्विपि बाहुलकाद् आकारस्य उकारः । अङ्गुल्या हि धार्यं सुवर्णादि धारयति । |
| III. 152. श्रवः श्रूयत इति श्रवः कीर्तिः प्रशंसा । IV. 4. श्रूयत इति कर्मणि कारके । अन्नं वर्ण्यमानं श्रूयते । | II. 7. 4. 'श्रु श्रवणे' । कर्मण्यसुन् । श्रूयते ह्यन्नं (श्रवः) वर्ण्यमानं श्रवो यशः । |
| III. 164. पातेर्वा रक्षणार्थस्य । रक्षितव्यं हि तत् । प्यायतेर्वा । | II. 7. 6.'पा रक्षणे ।'...रक्षितव्यं ह्यन्नम् । प्याय- (पितुः) तेर्वा । |
| I. 68. मघमिति धननाम मंहतेर्दानकर्मणः । तद्धि दीयते । | II. 10. 1. मंहतिर्दानकर्मा । दीयतेऽर्थिभ्यः । (मघम्) |
| II. 122. रिच्यतेऽवतिष्ठते, प्रयतः-म्रियमाणस्य, पुत्रधनम् । न तेनैव सह म्रियत इत्यर्थः । | II. 10. 2. रिच्यतेऽवतिष्ठते प्रयतः म्रियमाणस्य (रेक्णः) धनम् । धनिना सह न म्रियत इत्यर्थः । |
| IV. 89. अघ्न्या मध्यमस्थाना । कस्मात् ? अघघ्नी अघस्य दुर्भिक्षादेर्हन्त्री । अहन्तव्या वा । धर्मधुक्पक्षे स्पर्शनेनाघस्य पापस्य हन्त्री । | II. 11. 1. अघ्न्या । 'अहन्तव्या भवतीत्यघघ्नी' (अघ्न्या) इति भाष्यम् । अघस्य दुर्भिक्षादेर्हन्त्री । स्पर्शनेनाघस्य पापस्य हन्त्री वा । अहन्तव्या । |

| | |
|---|---|
| II. 387. निर्विवक्षयोपन्यास इति चेन्न निपातत्वात्। | II. 15. 16. निर्विवक्षयोपन्यासे इति चेन्न निपात· (आशुः) त्वात्। |
| II. 266. भरतेर्वा। ह्रियन्ते हि तदर्थं योधानामायूंषि धनानि च। | II. 17. 5. हरतेर्वा घः। ह्रियन्ते हि तत्र योधा- ( भरे ) नामायूंषि धनानि च। |
| II. 380. आहूयन्ते तत्रस्थैर्योद्धारः। | II. 17. 7. आह्वयन्तेऽत्र परस्परं स्पर्धया योधाः। (आहवे) |
| III. 163. पृतनाः सेनास्तासां गमनार्थम्। यत्र योद्धुं संगच्छन्ते। जयार्थं वा। | II. 17. 9. पृतनानां सेनानामजनं जयनं वा यत्र। (पृतनाज्यम्) |
| III. 156. सङ्काः सचतेर्गतिकर्मणः सङ्गच्छन्ते वा तत्र योद्धारः संकीर्यन्ते वा। | II. 17. 14. सचतेर्गतिकर्मणो············संकी- ( सङ्का ) र्यन्ते तत्र योद्धारः। सम्यक् कृत्यन्ते छिद्यन्ते आयुधैर्वा। |
| III. 163. प्रधन इत्यपठितमपि सामर्थ्यात् संग्रामनाम। प्रकीर्णान्यस्मिन्निति ग्रहणकरूपेणोपक्षिप्तानीत्यभिप्रायः। यत्र तु परस्परं जिघांसतां प्रवृत्तिस्तत्रोपपन्नतरं निर्वचनम्। चूडामणिमुकुटकटकादिविक्षेपात्। | II. 17. 17. प्रधन इत्यपठितमपि संग्रामनाम। (मीळ्हे) प्रकीर्णान्यस्मिन्निति आभरणरूपेण प्रक्षिप्तानीत्यभिप्रायः। यत्र परस्परं जिघांसतां प्रवृत्तिस्तत्रोपपन्नतरं निर्वचनम्। चूडामणिकटकविक्षेपात्। |
| III. 157. संपूर्वादत्तेः सम्पदादि क्विपि। संभक्षणात् परस्परस्यायुषाम्। समदन्तीति समदः संग्रामा उच्यन्ते। मदतेर्वा क्विपि हर्षकर्मणः पूर्ववत् संहृष्यन्ति हि तत्र योद्धारः। | II. 17. 22. सम्पूर्वादत्तेःक्विप् सम्भक्षयन्ति यो- (समत्सु) द्धृणामायूंषि। सम्पूर्वात् 'मदी हर्षे' इत्यस्माद्वा। क्विपि समो मलोपः। संहृष्यन्ति तत्र सुभटाः। |
| II. 149. मथ्यन्ते हि तत्र योधाः, स्खलतेर्वा, स्खलन्त हि तत्र योधाः। | II. 17. 38. मथ्यन्ते हि योद्धारस्तत्र। 'स्खल (खले) सञ्चलने' इत्यस्माद्वा घः। व्यत्ययेन सकारलोपः। स्खलन्ति तत्र कातराः। |
| IV. 9. द्यतेः खण्डनार्थस्य। द्युतेर्वा उज्ज्वलत्वात्। | II.20.1. द्योततेः। उज्ज्वलत्वात्। द्यतेर्वा······। (दिद्युत्) |
| I.119. पवतिर्गतिकर्मा, गन्तारं शत्रूणामुपरि। | II.20.5. पवतिर्गतिकर्मा। 'अच इः।' गन्ता ( पविः ) शत्रून्, गम्यतेऽनेन यश इति वा। |
| II.152. वर्जयति प्राणैरिति केचिद् वाक्यशेषमध्याहरन्ति। अन्ये वर्जयतिमेव विनाशार्थं वर्णयन्ति। | II.20.9. वर्जयति प्राणैः शत्रून्। अन्ये वर्जयति- ( वज्रः ) मेव विनाशार्थमाहुः। विनाशयति शत्रून्। |
| „ तत्र कुत्स इत्येतद्यदा वज्रः, तदा कृन्ततेः, | II.20.11. कृन्ततेः। 'स्तुवृश्चिकृत्यृषिभ्यः कित्' |

| | |
|---|---|
| छिनत्तीति कुत्सः, ऋकारस्योकारः सोनामकरणः । | (कुत्सः) इति सप्रत्ययः । कृन्ततेरकारस्य बाहुलकादुत्वम् । कृन्तति शत्रून् । |
| II.455. मेघस्य पर्वतस्य वा समुच्छ्रिताः प्रदेशाः कूलानीव । शातनं तेषाम् । | II.20.12. मेघस्यान्तं पर्वतस्य वा समुच्छ्रिताः (कुलिशः) प्रदेशाः कुलानीव, तेषां शातनात् । |
| IV.8. तीक्ष्णं ह्यायुधं योद्धारमुत्साहयति । | II.20.14. तीक्ष्णमिहायुधं योद्धारमुत्साहयति । (तिग्मम्) |
| II.55. प्रभवति हि तत्सर्वस्यानुग्रहाय । | III.1.4. भवति तत् सर्वस्यानुग्रहाय । ( भूरि ) |
| II.326. तवतेर्वृद्ध्यर्थस्य । | III.3.6. तवतिर्वृद्ध्यर्थः । (तवसः) |
| III.144. अथवा उरु भातीति ऋभुर्विस्तीर्णमन्तरिक्षम् । तस्मिन् यः क्षयति वसति स ऋभुक्षाः । अथवा ऋभवः सौधन्वनास्तेषां यः क्षयति राजति ईष्टे इत्यर्थः स ऋभुक्षाः । | III.3.10. उरु विस्तीर्णं भाति । ऋतेन सत्येन (ऋभुक्षाः) यज्ञेन वा भाति भवति वा ऋभुः।··· क्षयतेरैश्वर्यकर्मणः क्षियतेर्वा······ऋभूणां क्षयति ईष्टे, ऋभौ महति स्थाने निवसति वा । |
| IV.107. उक्षा उक्षतेर्वृद्ध्यर्थस्य । | III.3.11. उक्षा । उक्षतेर्वृद्ध्यर्थात् । (उक्षा) |
| II. 68. तद्धि स्वमाश्रयमावृणोति । | III.7 2. तद्धि स्वाश्रयमावृणोति । (वव्रिः) |
| IV.92. या वामं या वननीयं संभजनीयम् । प्रशस्यनाम वा प्रशस्यम् । | III.8.9. सम्भजनीयो हि प्रशस्यः । (वामम्) |
| II.347. अवयुनम् अकान्तमप्रज्ञानं वा । | III.8.10. कान्तिमान् प्रज्ञावान् वा । (वयुनम्) |
| III.146. स्तुत्यो ह्यसौ लोकस्य । स्तोता वा देवानाम् । | III.15.3. स्तुत्यो लोकस्य । स्तोता वा देवानाम् । (गृत्सः) |
| II.111 बृहती मनीषा, मनस ईश्वरस्तुतिः प्रज्ञा वा,···मनस ईषया मनःपूर्विकाया महत्या स्तुत्या वा । | III.15.11. यद्वा मनस ईषा स्तुतिः प्रज्ञा वा (मनीषिणः) मनीषा । |
| II.181. कुर्वन्ति कर्माणीति करवः । | III.18.2. कुर्वन्ति कर्माणि । (करवः) |
| II. 185. कूपं कुत्सितं पानमस्मिन्निति, कृच्छ्र- | III. 23.1. कुत्सितं पानमत्र, कृच्छ्रसाध्यत्वात् |

| | |
|---|---|
| साध्यत्वात् शौचासम्भवाद्वा । कुप्यन्ति वा तत्र मनुष्यास्तृष्णया परस्परेणेति । | ( कूपः ) शौचासम्भवाद्वा ।'''कुप्यन्त्यस्मै मनुष्या दुगदानजलत्वात् । |
| IV. 15. अवतं अवातितमधोगतमात्मनोधः स्थितमित्यर्थः । | III. 23. 7. अवातति खन्यमानोऽधो गच्छति । (अवतः) |
| II. 164. वनर्गू वनगामिनौ अरण्ये मुष्णन्तौ ।<br>„ वनर्गुर्वनगामीति । | III. 24. 9. तस्करो हि मोषणार्थं सदा वनं गच्छति । (वनर्गुः) |
| III. 20. निण्यः अन्तर्हितः । | III. 25. 1. निर्णीतं बहिर्नीतं, निर्गतमन्तर्हितं वा । (निण्यम्) |
| III. 105. प्रपूर्वस्येरतेः परापूर्वस्य वा वेतेर्गतिकर्मणः परावच्छब्द इति दर्शयति प्रेरितवत इत्यादिना । प्रकर्षेणेरितादादित्यात् परागतादस्याग्नेरित्यादिना । | III. 26. 5. ईरयतेर्वेहतेर्गतिकर्मणो वा संसाधनेऽर्थे (परावतः)वर्तमानात् प्रोपसर्गात् परोपसर्गाद्वा'''प्रशब्दस्य पराभावः । प्रकर्षेण ईरति विक्षिप्तं परागतमिव वा तद्भवति । |
| IV. 94. परावतः दूरनामेदं दूरात् प्रेरित इति । परावत इत्यस्य निर्वचनं प्रकर्षेणेरितात् परागतात् प्रवेशाद्वा । | |
| II. 187. अभीके अभ्यक्त आसन्न इत्यर्थः । सोपसर्गौ सप्तम्यन्तौ दृष्टाविति तथा पठितौ । पित्व इत्यासन्नार्थः, '''विप्रकृष्टदेशकाला प्रपित्व इति । | III. 29. 1-2. पित्वशब्द आसन्नार्थः विप्रकृष्टदेश(प्रपित्वे, अभीके) कालयोः प्राप्तिः प्रपित्वे इति ।''' अभ्यक्ते आसन्ने इत्यर्थः । सोपसर्गौ सप्तम्यन्तौ यथादृष्टाविति पठितौ । |
| II. 188 दभ्रम्, दभ्नोतेः वधार्थस्य, तद्धि सुदम्भं सुच्छेदं भवति अल्पत्वात् । सु-सौकर्येण । अर्भकमवहृतम्—ऊनपरिमाणम्, हकारस्य च भकारः । | III. 29. 3-4.दभ्रमिति दभ्नोतेर्वधकर्मणः ।'''सुद(दभ्रम्, अर्भकम्) म्भं सुच्छेदम् अल्पत्वात् । सुसौकर्येण ।'''हकारस्य भकारे गुणे रपरत्वे अकारोपजने च अर्भकमिति निपात्यते । अवहृतमूनपरिमाणमित्यर्थः । |
| II. 192. स्वेनात्मना भूतग्रामं धारयत इति स्वधे । | III. 30. 1. स्वेनात्मना भूतग्रामं धारयतः । ( स्वधे ) |
| „ पुराणि वा धारयित्र्यौ पुरन्धी । | III. 30. 2. पुराणि धीयन्तेऽनयोः । (पुरन्धी) |
| II. 388. ताभ्यां हि विविधं रुद्धानि सर्वभूतानि । | III. 30. 4. आभ्यां हि विविधं रुद्धानि सर्वभूतानि । |

II. 197. हन्तेर्लिङुत्तमैकवचने वा 'अभ्यासाच्च'इति कुत्वस्याभावो नकारलोपश्छान्दसत्वादित्याह-जाघानेत्यर्थ इति ।

II. 199. यद् यस्मिन्निधीयते स्थाप्यते मृगपक्षि-ग्रहणाय इति निर्वचनम् ।

II. 202-203. अथवा योनिः शिताम·········। तेन शितामतो गुदादित्यर्थः ।

श्यामं वा यजमांसं कालेयकाख्यं शिताम उच्यते । श्वेतं वा मांसं मेद आख्यम् ।··· दोः बाहुः ! स शिताम भवति । अङ्गे श्रितत्वात् । श्रितशब्दस्य पृषोदरादित्वाद् रेफस्य लोपः । त इत्यस्य दीर्घत्वम् मशब्दश्चोपजनः । ····················· गुदोऽत्र योनिरुच्यत इत्युक्तम् । स हि विषितः । ' षिञ् बन्धने '। विविधं शितो बद्धो भवति । गुदो हि पुरीषोत्सर्गवेलायां विकसति । संकुचत्यन्यदा । न च विविधं बद्धस्य विकसनमुपपद्यते । सितशब्दस्य सकारस्य शकारः । तशब्दस्य दीर्घत्वम् । मकारश्चोपजनः। पृषोदरादित्वात् । शितिशब्दः श्वेतवर्णवचनः । तस्येकारस्याकारः । मांस इत्यस्यापि आकारस्य ह्रस्वत्व अनुनासिक 'स'शब्दलोपः ।

II. 206. मेहना मंहतेः दानकर्मणः । अकारस्य एकारः । अनुस्वारलोपश्च । शाकल्यपक्षे मंहनीयं दानार्हम् । अस्ति तव । छन्दोगानां तु मेहनाशब्दो नैवास्ति । 'यदिन्द्र चित्र मेह नास्ति' इत्येवंरूपः पाठः ।··· असद्वेत्यर्थिधर्मप्रसङ्गेन चेदमस्या ऋचः शाखान्तरे वेदान्तरे वाऽधीतस्या अवयवस्य व्याख्यानं द्रष्टव्यम् ।

IV. 1. 1. हन्तेर्लिङुत्तमैकवचने णलि द्विवचने 'अ-(जहा) भ्यासाच्च' इति कुत्वाभावो नकारलोपश्छान्दसत्वात् । जघानेत्यर्थः ।

IV. 1. 2. निधीयते स्थाप्यते मृगपक्षिग्रहणाय । (निधा)

IV. 1. 3. श्रितशब्दस्य रेफलोपः । 'त' इत्यस्य (शिताम) दीर्घत्वं मशब्दश्चोपजनः । अङ्गे श्रितत्वाद् दोः शिताम । सितशब्दस्य वा सकारस्य शकारः । अन्यत् पूर्ववत् । योनिः शिताम । योनिर्गुदम् । विषितः विविधं सितो बद्धो भवति पुरीषोत्सर्गवेलायां विकसति । संकुचत्यन्यस्मिन् । न च विविधं बद्धमेतदुपपद्यते । यद्वा श्यामशब्दस्य यकारस्य सम्प्रसारणम् । ताशब्दस्यागमः । श्यामत्वाद्यकृच्छिताम । यद्वा शितिशब्दस्य श्वेत (वर्ण) वचनपर्यायस्य तिकारेकारस्याऽऽकारः । मांसशब्दस्याकारस्य ह्रस्वत्वम् । अनुना सिकसशब्दयोर्लोपः । श्वेतमांसत्वान्मेदः शिताम ।

IV. 1. 4. मंहतेर्दानकर्मणो युच् । बाहुलकादकार-(मेहना)स्यैकारो नकारलोपश्च ।···मंहनीयं दानार्हम् । छन्दोगानां म इह ना इत्येवंरूपः पाठः । प्रसङ्गेन च वेदान्तराधीतस्यावयवस्य व्याख्यानं भाष्यकारेण कृतम् ।

II. 207. मेरूनसीति । अनेकर्थश्च । दमे मनो यस्य स दमूना अक्रूर इत्यर्थः। अथवा दाने। मनो यस्य सः। अथवा दान्तेषु शीलवत्सु पुरुषेषु। दान्तं वा मनो यस्य सः। अपि वा दम इति गृहनाम। सामर्थ्याच्चात्र यजमानगृहे वर्तते। तस्मिन् दमेदं गृहमिति। एवं मनो यस्य स दमूनाः। सर्वेष्वेतेषु वर्णानां लोपविकारौ दर्शयितव्यौ।

IV.1.5. 'दम उपशमे दाने वा' दान्तेषु पुरुषेषु वा, (दमूनाः) दमे यज्ञगृहे वा मनो यस्य स दमूनाः।··· दमशब्दो व्याख्यातो गृहनामासु।···'दमेरूनसिः' इति वैयाकरणाः।

II. 208. मूषिकाः पुनर्मुष्णातेः। ता हि सुस्थापितमपि हरन्ति।

IV. 1. 6. मूषिकाः। सुगुप्तमपि मुष्णन्ति हरन्ति। (मूषः)

II. 212. ईषतेर्गतिकर्मणः। इषेर्वा इच्छार्थस्य 'इषिमदिमुदिसुखी' त्यौणादिकरप्रत्ययान्तस्य। ऋषेर्वा दर्शनार्थस्य रूपम्। गतेन त्वां प्रति त्वद्ध्यानपरेणेत्यर्थः। एषित्रापि त्वत्साध्यस्य फलस्य द्रव्यं वा सर्वार्थानाम्।

II. 211. मनोविशेषणमेतत्।

IV. 1. 7. 'इषु इच्छायाम्'। 'इषिमदिमुदि' इत्या- (इषिरेण) दिना किरच्प्रत्ययः। यद्वा ईषयतेर्गतिकर्मणः। ऋषेर्दर्शनार्थस्य वा बाहुलकात् किरच् इषभावश्च। मनोविशेषणमेतत्। एषिशब्दात् सामर्थ्यस्य। यद्वा त्वां प्रति गतेन त्वद्ध्यानपरेणेत्यर्थः। द्रष्टा वा सर्वार्थानाम्।

II.213. लोण्मध्यमपुरुषबहुवचनस्य। तात् 'तप्तनप्तनथनाश्च' इति छान्दसस्तनादेशः। तत्र तशब्द एवार्थवान् नशब्दस्त्वनर्थक उपजनश्चात्र विकरणो धातुर्वा तन्त्रमित्यस्य प्रतिपादनार्थमाह। कर्तन हन्तन यातनेति। अनर्थका उपजना भवन्तीति बहुवचनं भाष्ये। आद्येप्येवंरूपा उपजनाः सन्तीत्यस्य प्रतिपादनार्थम्।

IV.1.8. करोतेर्लोण्मध्यमपुरुषबहुवचनस्य तशब्दः। (कुरुतन)तस्य तात्। 'तप्तनप्तनथनाश्च' इति छान्दसस्तनादेशः। तत्र तशब्द एवार्थवान् नशब्दस्तूपजनोऽनर्थकः। कुरुतनेत्यस्य प्रति पादनार्थमाह भाष्यकारः 'कर्तनयातनहन्तनेत्यनर्थका उपजना भवन्ति' इति। अत्र बहुवचनमन्येऽप्येवंरूपा उपजनाः सन्तीति प्रदिपादनार्थम्।

II.216. जग्धं भक्षितमन्नमस्मिन् ध्रियते तिष्ठति धीयते वा प्रक्षिप्यते।

IV. 1.9. जग्धं भक्षितमन्नमस्मिन् ध्रियते तिष्ठति (जठरम्) धीयते वा प्रक्षिप्यते।

II.219. तनोतेर्निष्ठायां मतुपि उपधाया इकारो वकारस्य सम्प्रसारणं परलोपश्च।

एवं तुदेस्तुभवत्। अत्राप्युपधेत्वं संयोगस्य च तत्त्वम्। परं पूर्ववत्। तिलमात्रतुन्न-

IV.1.10 तनोतेस्तुदेश्च निष्ठायां मतुपि उपधाया (तितउ) इत्वं दकारलोपो वकारस्य सम्प्रसारणं परलोपश्च। तिलमात्रं तुन्नं वा। तिलशब्दात्तिः। तुन्नशब्दादुकारतकारौ। मत्वर्थे बहुव्रीहिः।

मिति वेति । तिलशब्दार्थस्तदितकारोष्ठोतशब्देन व्युत्पन्नः परलोपश्च । मयडर्थे बहुव्रीहिः ।

„ ततेन ' मध्ये तुन्नैश्छिद्रैस्तिलमात्रैश्च तद्वत् ।

तततेन मध्येन तुन्नैश्छिद्रैस्तिलमात्रैश्च तैस्तद्वत् ।

II.449. ते ह्यन्नं गन्धं च प्रति सृप्तौ भवतः ।

IV.1.11. अन्नं गन्धं च प्रति सृप्ते भवतः । (शिप्रे)

II.221; 317. शिप्रे हनू नासिके वा ।

„ हनू नासिके वा ।

II.221. मध्यशब्दात् 'सुपां सुलुक्' इत्येवमयमकारः सप्तम्याः स्थाने छान्दसत्वात्, मध्ये इत्यवगमः ।

IV.1.12. मध्यशब्दात् सप्तम्येकवचनस्य 'सुपां (मध्या) सुलुक्' इत्यादिना आकारः । 'मध्ये' इत्यर्थः ।

II.224. तृतीयैकवचने वा 'सुपां सुलुक्' इति पूर्वसवर्णः । मदिष्णू मदिष्णुना वेत्यवगमः ।

IV.1.13 तृतीयैकवचनस्य वा 'सुपां सुलुक्' इत्या-(मन्दू) दिना पूर्वसवर्णः । मदिष्णू मदिष्णुना वा ।

II.226. ते च सप्त, तेषां य अन्तर ईरिताः प्रेरता विरला इत्यर्थः ।.......... .........
अश्वस्यान्त एकत उरोऽन्यतो जघनं स येषामीर्मा प्रेरितः पृथुरित्यर्थः ।

IV.1.14. ते च सप्त, तेषां ये अन्तः ईरिताः (ईमान्तासः) प्रेरिता विरला इत्यर्थः । अथ वा अश्वस्य अन्तो जघनं स येषामीर्मा पृथुरित्यर्थः ।

II.228. कायमानश्चायमानो योनिद्विन पश्यन्नित्यर्थः । कामयमानो वा ।

IV.1.15. चायमानः । चकारस्य ककारः । यद्वा'''
(कायमानः) कामयमान इत्यस्य मकारलोपः ।

„ लुब्धमित्यवगमः ।

IV.1.16. लुब्धमित्यर्थः । (लोधम्)

II.229. अनुशायिनं वाशिनं वेत्यवगमः । अग्निरभिधेयः ।

IV.1.17. अयमग्निरुच्यते । अनुशायिनमाशिनं (शीरम्) वा । अनुगम्य भूतानि जङ्गमानिजाठरात्मना, स्थावराणि च सूक्ष्मेण अनभिव्यक्तशक्त्यात्मना यः शेते व्यवतिष्ठते अश्नाति वा । एवंशीलः ।

II 230. शीरम् अनुगम्य भूतानि जङ्गमानि जाठरात्मना स्थावराणि च सूक्ष्मेण चाभिव्यक्तशक्त्यात्मनाऽयं शेते व्यवतिष्ठते अश्नाति वा, एवंशीलः स शिरोऽग्निः, तं शीरमनुशायिनं वेत्यर्थः ।

II.231. बहुवचनस्य स्थान एकवचनम् । विदथेषु इत्यवगमः । विविधं हिंसितेषु अधःकृतेष्वित्यर्थः ।

IV.1.18. बहुवचनस्य स्थाने एकवचनम् । विवि-(विदथे) धं हिंसितेषु कुपितेषु इत्यर्थः ।

II.231. द्रुपदेषु दारुमयेषु पादुकाख्येषु ।

IV.1.19. द्रुममयेषु पदेषु पादुकाख्येषु इत्यर्थः । (द्रुपदे)

II.232. तीर्थे पानायावगाहनाय वा क्षिप्रमागच्छन्ति ।

IV.1.20. तुग्व तीर्थमित्यर्थः । तद्धि पानायावगा-(तुग्वनि) हनाय वा क्षिप्रमागच्छन्ति ।

| | |
|---|---|
| II.233. नमतेर्मकारात्परं सकारागमः । | IV.1.21. नमेर्मकारात्परः सुगागमः । ( नंसन्ते ) |
| III.78. नसतिराप्नोतेर्नमतेर्वार्थे । आप्नुवन्ति नमन्ति वा तं प्रति । | IV.1.22. अत्राप्नोतेर्नमतेर्वार्थे वर्तते ।···आप्नुव- ( नसन्त ) न्ति नमन्ति वा । |
| II.234. 'ब्राह्मण इदमाहतम्' इत्यादौ दर्शनादाहन्निर्वचनार्थे वचनवन्तः ।<br>„ आहननवन्त इत्यवगमः । | IV.1.23. 'ब्राह्मण इदमाहतम्' इत्यादिप्रयोगदर्श- (आहनसः) नात् आहन्तिर्वचानार्थः । आहननवन्तः, वचनवन्त इत्यर्थः । |
| II.235. अद्मनि उपपदे सदेः सनेर्वा 'अन्येभ्योऽपि दृश्यते' 'क्विप्' इति क्विपि रूपम् । | IV.1.24. अद्मनि उपपदे सदेः सनोतेर्वा 'अन्ये- (अद्मसत्) भ्योऽपि दृश्यन्ते' 'क्विप् च' इति क्विपि रूपम् । |
| II.238. इष्मिणो गन्तार इषितारो वा स्तुतीनां हविषां च द्रष्टारो सर्वार्थानामित्यर्थः ।<br>„ देवताः प्रत्यूह्यमानत्वाद्वाहःशब्देनात्र स्तुतिरुच्यते । अथवा एतद्रूपसमीपे तदुदकस्योद्धृतस्य स्थानमावाह इति लोके प्रसिद्धम् । तत्सादृश्यात् सोमरसस्य पूर्णमधिषवण इति चर्म वाह इत्युच्यते । | IV.1.25. इषितारो हविषां स्तुतीनां च गन्तारो (इष्मिणः) द्रष्टारो वा सर्वार्थानाम् ।<br>IV.1.26. देवताः प्रत्यूह्यमानत्वात् वाहः स्तुतिः । ( वाहः ) अथ वा यदेतत् कूपसमीपे तदुदकस्योद्धृतस्य स्थानमावाह इति लोके प्रसिद्धम्, तत्सदृशत्वात् सोमरसस्य पूर्णमधिषवणं चर्म वाह इत्युच्यते । |
| IV.75. तकतेर्गतिकर्मणः । सर्वतो गच्छतीति । अथवा तक्म्योष्णं तत्परित उभयत एनां परिगृह्य वर्तत इति । तदुक्तं तक्मेत्युष्णनाम तकतीति सत इति । तेन परिमितकर्मा स···परितक्म्येति । | IV.1.27. परिपूर्वात् तकतेर्गतिकर्मणो मनिन् । प- (परितक्म्या) रित सर्वतो गच्छति सर्वस्मिन् देशे गतिरस्ति । अथ वा तक्म्योष्णं तत्परित उभयत एनां परिगृह्यते वर्तत इति । तदुक्तं 'तक्मेत्युष्णनाम तकत इति सतः' इति । तेन परितक्मा सति यकारोपजनेन परितक्म्या । |
| II.240. सु इति इते मृते इत्यवगमौ । विकल्पेन एतेः क्तप्रत्यये इतः । तस्मिन् सु इत्युपसर्गस्य यणादेशे प्राप्ते छान्दसत्वादुवङ् । 'षूङ्-प्राणिगर्भविमोचनयोः' इत्यस्य वा क्तप्रत्यये इडागम उपजनः । सुगते प्रजायामिति वेत्यर्थः । | IV.1.28. सुपूर्वादेतेः क्तप्रत्ययः । 'षूङ् प्राणिगर्भ- (सुविते) विमोचनयोः' इत्यस्य वा क्तः । छान्दसत्वादिडागमः । उवङ् च । सप्तम्येकवचनम् । शोभनं गम्यते यत्र स्वर्गादौ तत् प्रसूते प्रजायां वा । |
| I 244. ददातेः । 'आतो मनिन् क्वनिब्वनिपश्च' इति | IV.1.32. ददातेः 'आतो मनिन्क्वनिब्वनिपश्च' इति |

| | |
|---|---|
| मा[illegible] वनिप् प्रत्ययः । ततो दावच्छब्दात् | (दावने) व्यत्ययेन कर्मणि वनिप् । ततः षष्ठ्यर्थे द्वितीयार्थे वा चतुर्थी । |
| II.291. भन्दसा च षष्ठ्यर्थे द्वितीयार्थे वा । | |
| [illegible] [illegible]शब्द उपपदे अर्तेर्गत्यर्थस्य कर्मण्यणि कूपारः। अकूपारः कच्छपो हि सति सम्भवे वादा गच्छति न कूपम् । अल्पोदकत्वात् । | IV.1.33. कूपशब्दे कर्मण्युपपदे अर्तेः कर्मण्यण् । (अकूपारस्य) न कूपारः अकूपारः । कच्छपो हि सति सम्भवे ह्रदं गच्छति न कूपमल्पोदकत्वात् । |
| II.247. 'शो तनुकरणे' । इत्यस्य व्यत्ययेन शपेः श्लौ औकारस्येत्वे यत् छान्दसं रूपम् । | IV.1.34. 'शो तनूकरणे ।' दिवादिः परस्मैपदी । (शिशीते) व्यत्ययेन शपः श्लौ ओकारस्येत्वमात्मनेपदञ्च । |
| II. 249. अप्रायुवोऽतिच्छिन्नचेतस्का अप्रमाद्यन्त इत्यर्थः । | IV.1.37. अप्रायुवः, अप्रगतमनस्काः न प्रमाद्यन्त (अप्रायुवः) इति । |
| ,, च्यावयिता स्तोमानाम् । देवानां प्रतिगमयिता स्तोतेत्यर्थः । रूढत्वाच्च तक्षादिवदतिप्रसङ्गनिवृत्तिः । | IV.1.38. देवान् प्रति स्तोमानां च्यावयिता स्तोते- (च्यवानः) त्यर्थः । रूढित्वादिप्रसङ्गनिवृत्तिः । |
| II.252. ज्योतिर्हरः । तद्धि हरति तमः । उदकं हरः । तदपि च हरति सर्वम् । लोका हरांसि । तेषु ह्रियते सर्वम् । त एव वा मृत्युना कालेनाह्रियन्ते । | IV.1.40. हरो ज्योतिरुदकलोकवाचकम् । ज्योति- (हरः) र्हरति तमः । उदकं वहत् हरति सर्वम् । लोकेषु ह्रियते सर्वम् । त एव वा कालेन मृत्युनाह्रियन्ते । |
| II.253. व्यन्त इत्यत्र य एष धातुः स दयतिवदनेकार्थ इत्यर्थः । | IV.1 42. व्यन्त इत्यत्र य एष धातुः स दयति- (व्यन्त) वदनेकार्थ इत्यर्थः । |
| II.255. वाशीशब्दः छेदनद्रव्यविशेषवचनस्तस्य सकारस्य शकारेण व्यापत्तिः । | IV.1.44. वाशीशब्दः छेदनद्रव्यविशेषवचनः, (वाशी) तस्य सकारस्य शकारेण व्यापत्तिः । |
| II.256. विषम इत्यवगमः । | IV.1.45. विषमः । (विषुणः) |
| II.257. अतीरे बालिशसमानजातीयविषयत्वात् । | IV. 1. 46. अतिरेकबालिशसमानजातीयानां (जामिः) वाचको जामिशब्दः । अतिरेकः पुनरुक्तमुच्यते, पुनर्जायमानत्वात् ।......... बालिशो मूर्खः । स हि जात एव न केवलं कस्मैचित् पुरुषार्थायालम् । अत्र निगमः पर्येष्यः । |
| II.258. अतिरेकः पुनरुक्तमुच्यते तस्य नाम पुनर्जायमानत्वात् । .................. बालिशो मूर्खस्तस्य वा नाम । स हि जात एव केवलं न कस्मैचित् पुरुषार्थायालम् । तत्र निगमः पर्येष्यः । | |
| II.263. ऐतिहासिकानां देवानां माता उच्यते । नैरुक्तानामदीनादिगुणः । अध्यात्मपक्षे प्रकृतिः । | IV.1.49. ऐतिहासिकानां मते देवमाता नैरु- (अदितिः) क्तानां मते अदीनादिगुणः । अथ वात्मपक्षे प्रकृतिः । |

II.265. प्रेरितवन्तः ।

IV.1.50. प्रेरितवन्त इत्यर्थः । गमः ।
(एरिरे)

II.266. वज्रस्ताडितो वाहनं वेगश्रान्तो जसुरिरुच्यते ।

IV.1.51. ताडितो वज्रमुक्तो ...श्रान्ता
(जसुरिः) जसुरिः ।

II 267. मन्दतेः स्तुतिकर्मणो घञि मदनं मन्दः स्तुतिस्तद्वान्मन्दी । छान्दसत्वात् 'अत इनिठनौ' नेष्यते । 'एकाक्षरात् कृतो जाते सप्तम्यां च न तौ स्मृतौ' इति ।

IVI.53. मन्दतेः स्तुतिकर्मणो घञि मन्दः स्तुतिः।
(मन्दिने) छान्दसत्वात् 'अत इनिठनौ' नेष्यते । 'एकाक्षरात् कृतो जाते सप्तम्यां च गतौ स्तुतौ (स्मृतौ)' इति ।

II.269. कर्माणीत्यभिधेयवचनम् । दसयंत एनानि ।

IV.1.56. दंसयः कर्माणि । दंसयन्त्येनानि ।
(दंसयः)

II.274. यदुदात्तं तत्प्रथम देशविषयं द्रष्टव्यम् । यदनुदात्तं तदन्वादेशविषयम् । ......... तथो ाहरणे दर्शनात् । 'अस्या ऊ षु णः' 'अस्य वामस्य' इति । इतरत्रापीति 'दीर्घायुरस्या यः पतिः' 'तृतीयो भ्राता घृतपृष्ठो अस्य' इति ।.......................

II.275. तीव्रः स्फुटोऽर्थः प्रयोजनं यस्य तत् तीव्रार्थमतिशयेन तीव्रार्थतरं यदुदात्त तदतिशयेन स्फुटप्रयोजनम् । तदर्थस्यान्येनादिष्टत्वात् ।

IV.1.61-62. शब्दान्तरेणानादिष्टस्य सन्निधिवि-
(अस्याः । अस्य) शिष्टपदार्थलक्षणस्याभिधेयस्योच्चारणं प्रथमादेशः । आदिष्टस्य तस्योच्चारणमन्वादेशः। तत्र प्रथमादेशविषयत्वादुदात्तम्। पदद्वयं तीव्रार्थतरमतिस्फुटप्रयोजनम् । अन्यानादिष्टस्त्रार्थत्वात् । अन्वादेशविषयत्वादनुदात्तं पदद्वयमल्पीयोर्थतरमतिशयेनास्फुटप्रयोजनम् । अन्यादिष्टस्वार्थत्वात् । 'अस्या ऊ षु ण उप सातये भुवः' 'दीर्घायुरस्या यः पतिः' 'अस्य वामस्य पलितस्य होतुः' 'तृतीयो भ्राता घृतपृष्ठो अस्य' ।

II.286. अविद्यमानं ध्यानमस्मिंस्तदिदमन्धः । किं पुनर्ध्यानम् ? दर्शनम्, तद्धि तमसि न भवति आलोकाभावात् ।

IV.2.6. अविद्यमानं ध्यानं दर्शनमस्मिन् आलो-
( अन्धः ) काभावात् ।

II.288. परस्परेणासंमिश्रीभवन्त्योः विक्षिपन्त्यावाश्रितान् ।
हन्तिकर्मेत्यर्थावगमं दर्शयति ।

IV.2.7. परस्परेण सम्मिश्रीभवन्त्यौ । अवक्षिप-
( असश्चन्ती ) न्त्यावाश्रितान् वा ।
IV.2.8. अत्र तु हन्त्यर्थः ।
( वनुष्यति )

II.290. 'तरति मृत्युं तरति पाप्मानं तरति ब्रह्महत्याम्' इति हन्ति विनाशयति व्यपोहतीति हन्त्यर्थे तरतेः प्रयोगदर्शनाभेदमर्थानवगतम् । किन्तर्हि ? उकारषकारानवग-

IV.2.9. तरति मृत्युं तरति ब्रह्महत्यां विनाशयन्ति
( तरुष्यति ) व्यपोहतीति हन्त्यर्थे तरतेः प्रयोगदर्शनात् तरतेरुकारषकारावुपजनावित्याहुः ।

मात् शब्दानवगतमेवैतद् इति वर्णयन्ति ।

| | |
|---|---|
| II.291. भन्दतेः स्तुतिकर्मणः । | IV.2.10. भन्दतेः स्तुतिकर्मणः<br>( भन्दनाः ) |
| II.292. भन्दनाः स्तुतीः । | „ भन्दना स्तुतिरित्यर्थः । |
| II.294. आङ्पूर्वस्य हन्तेरप्रत्यये आहन्तीत्याहना इत्येतद्रूपं भवति । तस्य संबुद्धौ आहनः । असभ्यवचना मामाह । | IV.2.11. आहन्तेरसुनि आहन्ति आहनाः सम्बुद्धौ<br>( आहनः ) आहनः असभ्यवचनादाहन्तुः । |
| II.295. अश्नोतेरक्षाः । तस्य च 'उदितो वा' इति विभाषितेट्त्वात् लुङि सिचि अनिट्-पक्षे अष्टेत्यनवगमः । इट्पक्षे अशिष्टेति । | IV.2.12. अश्नोतेर्लुङि सिचि 'उदितो वा' इति<br>( सोमो अक्षाः ) अनिट्पक्षे आडागमे च आष्टेति ।<br>इट्पक्षे आशिष्टेति । |
| II.299. अवनादित्यर्थप्रतीतिवचनम् । | IV.2.15. अत्र अवनं गमनं रक्षणं तर्पणं वा । |
| II.298. अतो रक्षणतर्पणमात्रम् । | ( ऊतिः ) |
| II.299. 'हासतिः स्पर्धायाम्' | IV.2.16. हासतिः स्पर्द्धायां हर्षणे वा वर्त्तते । |
| III.174. हासमाने स्पर्धमाने परं हृष्यन्तौ वा । | ( हासमाने ) स्पर्द्धमानौ परस्परं हृष्यन्तौ वा । |
| II.299. पड्भिः पानैः सोमस्य स्पाशनैर्वा बन्धनैः स्पर्शनैस्तव गुणानां स्तुतिलक्षणैः । | IV.2.17. पानैः सोमस्य । यद्वा स्पाशनैर्बन्धनैः<br>( पड्भिः ) स्पर्शनैः स्तुतिलक्षणैर्गुणानाम् । |
| II.300. माध्यमिकं ज्योतिस्तदुच्यते । स्वपनमित्यर्थप्रतीतिवचनम् । | IV.2.18. स्वपितीति ससम् । माध्यमिकं ज्योति-<br>( ससम् ) रुच्यते । |
| II.301. द्वैधं द्विधेति वेत्यवगमः । | IV.2.19. द्विधेत्यर्थः ।<br>( द्विता ) |
| II 302. व्रा वरणा वरितारो नेष्टारोऽहतिकृतत्व-सामान्यं वा । व्रा व्रात्यस्थानीया लुब्धकादय इहाभिप्रेताः । | IV.2.20. वरितारोऽन्वेष्टारो मृगादीनाम् । व्रात्य-<br>( व्राः ) स्थानीया लुब्धकादयः । |
| II.309 इषव इत्यभिधेयवचनम् । | IV.2.23. अत्र इषव उच्यन्ते ।<br>( शर्याः ) |
| II.310. अन्ने मृग्यम् । अत एव केचिन्न पठन्त्येवान्ने । | IV.2.24. अन्ने मृग्यमुदाहरणम् । अत एव केचिन्न<br>( अर्कः ) पठन्त्यन्नेऽर्कम् । |
| II.311. रथनेमिरित्यभिधेयवचनम् । रथचक्रधारेत्यर्थः । वज्रोऽपीति । | IV.2.25. रथनेमिर्वज्रश्च पविः ।<br>( पविः ) |
| II.236. वक्ष उरः । | IV.2.26. उर इत्युच्यते ।<br>( वक्षः ) |
| II.314. सचा इत्यनवगतो निपातः । सहेत्यर्थः । | IV.2.30. सहार्थोऽयं निपातः ।<br>( सचा ) |

II. 315. चिदित्येष निपातोऽनुदात्तः पुरस्तादेव षष्ठे व्याख्यातः। 'चिदित्येषोऽनेककर्मा' इति । 'चतुरश्चिद्ददमानात्' इत्यादि । स एव रूपसामान्यात्, अथापि पशुनामेह भवति नैगमे प्रकरणे। स चोदात्तश्चिनोतेश्चयतेर्वा।

IV.2.31. निपातो नाम च । निपातोऽनुदात्तः। (चित्)'चिदित्येषोऽनेककर्मा' इत्यादिना व्याख्यातः। 'चतुरश्चिद्ददमानात्' इत्युपमायाम्।...... नाम तु चिनोतेश्चयतेर्वा क्विपि चिदिति भवति।

II.316. आ इत्याकार उपसर्गो यः पुरस्तादेव'आ इत्यर्वागित्यर्थे' इत्यत्र व्याख्यातः। पुनश्च अथाप्युपमार्थे दृश्यत इति निपात इत्युक्तः। इहाप्यध्यर्थ इत्याह । अध्यर्थश्च 'अधीत्युपरिभाव' इत्युक्तम् । उदारणे पदविभागं दर्शयितुमाह। अभ्र आँ अपः अभ्रे अध्यय इत्यर्थकथनम् ।

IV.2-32. 'आ इत्यर्वागर्थे' इत्युपसर्गो व्याख्यातः। (आ) ......यदभ्र आँ अपः' इत्यध्यर्थस्य । समुच्चयार्थत्वेन'अथाप्युपमार्थे भवति।' इति च निपातश्च। अध्यर्थेऽप्युपरिभावे वर्तते।

II.317. यशो वा अन्नं वेत्यभिधेयवचनम्।

IV.2.33. अत्र यशोऽन्नं वाऽभिधीयते। (द्युम्नम्)

II.318. स च मन्त्रादिषु करणसाधनः। अग्न्यादिषु कर्मसाधनः ।

IV.2.34. मन्त्रादिषु करणसाधनः। अग्न्यादिषु (पवित्रम्) कर्मसाधनः ।

II.321. तोदो गृहस्थः ।

IV.2.35. तोदो गृहस्थः । (तोदः)

II.323. सुगमन इत्यर्थः।

IV.2.36. सुगमन इत्यर्थः। (स्वश्वाः)

II 326. आहृतदीप्तिरागतक्रोधो वेत्यर्थः । अतश्चानेकार्थमपि । ज्वलन्नामसु क्रोधनामसु वा घृणिशब्दस्य पाठात् । दीप्तिनामत्वमङ्गीकृत्योदाहरणम्—

एहि वां विमुचो नपादाघृणे संसचावहै।

IV.2.39. घृणिशब्दो ज्वलन्नामसु क्रोधनामसु (आघृणिः) च व्याख्यातः । आगतदीप्तिरातक्रोधो वा । 'आघृणे सं सचावहै' इति दीप्तिनामत्वे निगमः । क्रोधवचनत्वेऽन्यदुदाहरणं कर्तव्यम् ।

II.327. क्रोधवचनत्वे त्वन्यदुदाहरणं कर्तव्यम्।

„ पृथुजव इत्यवगमः । 'ज्रि अभिभवे' इत्यस्येदं रूपम् । वेगेनान्यानभिभविता महाजव इत्यर्थः।

IV.2.40. 'ज्रि अभिभवे ।'......पृथुः ज्रयो (पृथुज्रयाः) यस्य सः । वेगेनान्यानभिभविता महाजव इत्यर्थः ।

„ अतनवन्ततित्यवगमः । अततेरथरादेशः। युर्नामकरणः।

IV.2.41. अततेः।......युस्प्रत्ययो धातोरथरा-(अथर्युम्) देशश्च ।......अतनं गमनमथर्युशब्देनो-

II.328. अथर्युमतनवन्तं देवान् प्रति गमनवन्तमित्यर्थः ।

II.329. आहवनीयं प्रति गतानीत्यर्थः । कृतकानीति वा ऋत्विग्भिः संस्कृतानीत्यर्थः । अथवा इन्द्रविशेषणमेतत्, इन्द्रः काणुका कान्तो वल्लभः सोमस्य । अथवा कणेशब्दः श्रद्धाप्रतीघातेऽस्ति 'कणेमनसी श्रद्धातीघाते' इति तस्य काणुका इति रूपं क्रियाविशेषणं च ।

II.330. मन्त्र इत्यभिधेयवचनम् । गव्यधिकृतत्वादिति हेतुवचनम् । गोशब्दश्चात्र पशुमात्रोपलक्षणः । यागादिष्वधिकृतत्वादधिकृतो गवीति । अधिकृतपशुरित्यवगमः ।

II.331. तच्छब्दवत्वाविति । संशासनशब्दोऽध्रिग्वादिरस्मिन्नस्तीति । अतोऽध्रिग्वादिशब्दादध्रिगुरिति ।·········अध्रिग्वावाप्रभृतीनां च मध्ये अध्रिगोर्मुख्यत्वाद् अध्रिगुशब्देनाभिधानं तच्छब्दवत्वादिति युक्तम् ।

II.333. अनेकार्थतां दर्शयन्नाह—अग्निरपीत्यादि । ······अध्रिगो हे अधृतगमन ।

II.334. इन्द्रोऽप्यध्रिगुरुच्यत एव । न तस्यापि कश्चिद् गमनं प्रतिबन्धुमुत्सहते । ······ अध्रिगवे अधृतगमनोऽध्रिगुस्तस्मै अधृतगमनाय सर्वत्राप्रतिहतगमनायेत्यर्थः ।

II.335. स्तोम इत्यभिधेयकथनम् । आघोष इत्यवगमः । प्रत्याघुष्यत इत्याङोऽनुनासिकः । घोषशब्दस्य गूषशब्देन व्यापत्तिः ।

" आपातितमन्युरित्यवगमः ।

II.336. सोमो वेन्द्रो वाभिधीयते । यदा सोम स्तदा आपान्तमन्युरित्यादीनां पदानामयमर्थः । मन्युर्दीप्तिरापादिता संस्कारेणोत्पादिता दीप्तिर्यस्य स आपान्तमन्युः समुत्पाद्यते । मत्वर्थीयस्य लुक् । गमनवन्तमित्यर्थः ।

IV.2.42. आहवनीयं प्रति गतानि । ऋत्विक् (काणुका) प्रति कृतानि ऋत्विग्भिः संस्कृतानि सर्वाणि विशेष्यन्ते । यद्वा काणुकाशब्द इन्द्रविशेषणम् । सोमस्य कान्तः वल्लभः । यद्वा कणेशब्दः 'कणेमनसी श्रद्धाप्रतीघाते' इति तस्य काणुकेति रूपं क्रियाविशेषणं च ।

IV.2.43. अधिकृतो गौर्यस्मिन् मन्त्रे सोऽध्रिगुः । (अध्रिगुः) अधिकृतशब्दस्याध्रिभावः । गोशब्दश्चात्र पशुमात्रोपलक्षकः छागादिष्वधिकृतत्वात् । यद्वा अध्रिग्वादिशब्दवत्वादध्रिगुः । अध्रिग्वयाप्रभृतीनामध्रिगोर्मुख्यत्वादध्रिगुशब्देनाभिधानम् । अग्निरिन्द्रश्चाध्रिगुशब्देनोच्यते । अधृतगमनः सर्वत्राप्रतिहतगतिरित्यर्थः ।

IV.2.44. घुष्यते आघोषः । घोकारस्य गूकारभावः। (आङ्गूषः) आङोऽनुनासिकश्छन्दसि । इत्यनुनासिको व्यत्ययेन । स्तोमोऽभिधेयः ।

IV.2.45. आपादितमुत्पादितं संस्कारेण मन्यु(आपान्तमन्युः)र्दीप्तिर्यस्य । आपादितशब्दस्यापान्तभावः । मन्युशब्दो व्याख्यातः क्रोधनामसु । सोम उच्यते इन्द्रश्च । आपान्तमन्युरुत्पादितदीप्तिरुत्पादितक्रोधो वा ।

दितदीप्तिरित्यर्थः । ...............यदा पुनरिन्द्रस्तदा दीप्तिर्वा क्रोधो वा सोमपानेनापान्तमन्युरुत्पादितदीप्तिर्वा उत्पादितक्रोधो वा ।

II.341. उरु महत् स्थानं यशो वा व्याप्नोतीति उर्वशीत्यवगमः । उरुभ्यामश्नुते सम्भोगकाले कामिनं वशीकरोति शिल्पाचारकुशलेत्यर्थः । उर्वशिनीत्यवगमः । उरुर्वा महान् वशः कामोऽस्य महेच्छेत्यर्थः । व्यधिकरणे वा बहुव्रीहिः, बहुषु कामोऽस्याः, बहूनां वा कामो यस्यामिति ।

IV.2.47. उरु महत् स्थानं यशो वा व्याप्नोति (उर्वशी) उरुभ्यां वा अश्नुते सम्भोगकाले कामिनं वशीकरोति । शिल्पोपचारकुशलेत्यर्थः । उरुर्वा वशः कामोऽस्याः (यस्याः) । महेच्छेत्यर्थः । व्यधिकरणो बहुव्रीहिः । बहुषु कामो यस्याः, बहूनां वा कामो यस्याम् ।

II.346. कान्तिर्वेत्यभिधेयम् ।

IV.2.48. व्याख्यातं प्रज्ञानामसु । कान्तिः प्रज्ञा (वयुनम्) वाभिधेयः ।

II.347-8. वाजपस्त्यं वाजं चान्नं पतनं च परमेतदन्नाद्यमस्माकमिति मन्यमानाः पतन्ति यस्मिन् देवास्तमित्यर्थः ।

IV.2.49. वाजशब्दो व्याख्यातोऽन्ननामसु, पस्त्य- (वाजपस्त्यम्) शब्दो गृहनामसु । वाजश्च पस्त्यश्च परममेतदन्नाद्यमस्माकमिति मन्यमाना यस्मिन् देवा पतन्ति तम् ।

II.347. वाजगन्ध्यं वाजेनान्नेन सक्त्वादिना मिश्रयितव्यम् ।

IV.2.50. गन्ध्यं मिश्रयितव्यमित्यर्थः । ( वाजगन्ध्यम् )

II.348. गन्ध्यं ग्राह्यं भोज्यमात्मना मिश्रयितव्यं भक्षयितव्यमित्यर्थः ।

IV.2.51. ग्राह्यं गृह्यमाणस्य मिश्रीभावात् आ- (गन्ध्यम्) त्मना मिश्रयितव्यं भक्षयितव्यमित्यर्थः ।

II.349. आगधिता आगृहीता आमिश्रिता अवयवैर्गाढं परिष्वक्ता सतीत्यर्थः । परिगधिता सर्वतोऽन्तर्बहिश्च मिश्रिता आलिङ्गनचुम्बनपुरस्सरं प्रक्षिप्तप्रजनना स्वानुरागं संभोगयाय परिगृहीता च सतीत्यर्थः ।

IV.2.52. आगृहीता, अवयवैर्गाढं परिष्वक्ता ( गधिता ) सतीत्यर्थः । परिगधिता, सर्वतोऽन्तर्बहिश्च मिश्रिता आलिङ्गनचुम्बनपुरस्सरं प्राप्तप्रजनना सती सानुरागं सम्भोगाय परिग्रहीता च सतीत्यर्थः ।

II.350. कृतयान इत्यवगमः । शत्रून् प्रति कृतमेव यानं येन नित्यं कृतगमन इत्यर्थः । हस्त्यश्वरथेत्यादि साङ्ग्रामिकं कृतमाकल्पितं प्रयाणाभिमुखं यानं यस्य ।

IV.2.53. कौरशब्दः कृतशब्दपर्यायः । शत्रून् ( कौरयाणः ) प्रति कृतमेव यानं येन । नित्यं कृतगमन इत्यर्थः । यद्वा हस्त्यश्वरथ इत्यादि संग्रामिकं कृतं कल्पितं प्रयाणाभिमुखं यानं वाहनं यस्य स कौरयाणः ।

II.351. तूर्णयान इत्यवगमः । क्षिप्रगमन इत्यर्थः ।

IV.2.54. तूर्णयानः क्षिप्रगमन इत्यर्थः । ( तौरयाणः )

आह्रितयानोऽलज्जितयान इत्यर्थः । यो हि अर्थिभ्यो दातुं न शक्नोति स ह्रीतो गच्छति तदस्य नास्ति, अतः श्लाघ्यगमन इत्यभिप्रायः ।

IV.2.55. अह्रीतयानोऽलज्जितयानः । यो ह्य- (अह्रयाणः) र्थिभ्यो दातुं न शक्नोति, स ह्रीतो गच्छति, तदस्य नास्ति अतः श्लाघ्यगमन इत्यभिप्रायः ।

II.352. शत्रूणां जीवनस्य हरणमेवंशीलं यानं यस्य स हरमाणयानः । शत्रुजीवितानां हन्तेत्यर्थः ।.........हरयाणे शत्रुजीवितैश्वर्यादिहर्तृयाने ।

IV.2.56. शत्रूणां जीवितैश्वर्यादिहन्तृयानं यस्य (हरयाणः) सः । शत्रुजीवितादीनां हर्तेत्यर्थः ।

II.353. तस्य हि यङ्लुकि 'उरत्' इत्यभ्यास ऋकारस्यात्वे 'रुग्रिकौ च लुकि' इति रुकि निष्ठायाश्छान्दसत्वादिटि ऋकारस्य यणादेशे 'रो रि' इत्यभ्यासलोपे ढ्लोप-दीर्घत्वे चारित इति । ण्यन्तस्य वा लुगभावश्छान्दसत्वात् ।............आरितो यश्च प्रत्यृतः कर्मणि कर्मणि यागस्य स्तोमान् स्तोमशब्दो यज्ञोपलक्षणो यज्ञं प्रति गत इत्यर्थः ।

IV.2.57. ऋ गतौ...यङः...लुकि...द्विर्वचने (आरितः) उरदत्वाभ्यासस्य ऋकारस्यात्वे 'रुग्रिकौ च लुकि' इति लुकि निष्ठायां छान्दसत्वादिट्, ऋकारस्य यणादेशे 'रो रि' इत्यभ्यासरेफलोपे ढ्लोपे पूर्वस्य दीर्घत्वे च आरित इति। ण्यन्तस्य वा लुगभावश्छान्दसत्वात् । स्तोमान् प्रति ऋतः यज्ञं प्रति गत इत्यर्थः ।

II.358. अहिच्छत्रकमभिधेयम् । यत् क्षुभ्यत इति हेतुवचनम् । यद्यस्मादयत्नेनैव शक्यं क्षोभयितुम् । क्षोभ्यमिति न्याय्यम् ।

IV.2.61. क्षोभ्यमिति......अयत्नेनैव क्षोभयितुं (क्षुम्पम्) शक्यम् । अहिच्छत्रकमुच्यते ।

II.359. सोमोऽभिधेयः ।............निचान्तो भक्षितः प्रीणातीति ।

IV.2.62. निचान्तो भक्षितः प्रीणातीति निचु- (निचुम्पुणः) म्पुणः सोमः । 'अपां जामिर्निचुम्पुणः ।' नियमेन चम्यत इति निचमनमुदकं, तेन पूर्यत इति समुद्रः । निगमः पर्येष्यः । नीचैरस्मिन् क्वणन्ति नीचैः शब्देनात्र कर्म कुर्वन्ति इत्यवभृथो निचम्पुणः ।

II.360. समुद्रोऽपीत्यादि । निचमनेन नियमेनाचम्यन्त इति निचमनमुदकं तेन पूर्यते । पर्येष्यो निगमः । अवभृथोऽपि कर्मविशेषः सोऽप्येवमुच्यते कस्मात् ? नीचैरस्मिन् । क्वणन्तीति नीचैः शब्देन कर्म कुर्वन्तीत्यर्थः ।

II.361. यस्मादसौ नित्यमाकाशे पद्यते गच्छति ।...............पक्ष्यभिधेयः ।

IV.2.63. पदिः पक्षी । आकाशे ह्यसौ नित्यं (पदिम्) पद्यते गच्छति ।

II.362. पदनं पादु इत्यवगमः ।

IV.2.64. पदनं पादुः । (पादुः)

II.364. विवृतं स्पष्टं व्यक्तं ज्योत्स्नारूपं ज्योति-

IV.2.65. वृकश्चन्द्रमाः । विवृतं स्पष्टज्योतिष्म-

रस्य न नक्षत्राणामिवाव्यक्तम् । विवृतं वा नक्षत्रादिज्योतिरमुष्मिन्नुदितेऽपि । न ह्यसावादित्यवत् प्रच्छादयतीत्यर्थः । अविकृतत्वं वा शीतत्वात् । औष्ण्यं हि प्रकृतं ज्योतिषे अग्न्यादौ दर्शनात्। ह्रासवृद्धिभ्यां वाल्पत्वेन महत्त्वेन विकृतं ज्योतिरस्मिन् । विक्रान्तं दिगन्तराणि ज्योतिरस्य । नक्षत्रादिभ्यः प्रकृष्टमित्यर्थः । वृकश्चन्द्रमाः ।

II.366. आदित्योऽपीत्यादि । यद्यस्मादावृङ्क्ते आवृणोति जगत् प्रकाशनेन । अथवा वृणक्तीति वधुकर्मसु पाठाद् यस्माद् विनाशयति तमांसीत्यर्थः । आवृणेति वेदकानि रश्मिभिः संभजत इत्यर्थः ।

II.367. श्वापि वृक इति श्वजातीयोऽपि योऽयं लोके प्रसिद्धो वत्सोरणकानां विवर्तनादाता असावप्युरणानां विकर्तनयोगाद् वृक उच्यते। विविधमसौ कृन्तीति वृङ्क्ते तस्माद् वृकः।

II.369. जोषमित्यविज्ञातस्य अस्पष्टस्य नामधेयम् । तद्धि जोषयितव्यं संस्कर्तव्यं सेवितव्यं वा ज्ञानाय स्पष्टतार्थे ।

II.370. कृन्ततेरिति धातुनिर्देषः । यशो वान्नं वा प्रसिद्धमभिधेयम् । यशो हि द्विषतः कृन्तति । दुर्भुक्तं वान्नं माषादि ।

II.371. इयमपि तत्र लोकप्रसिद्धा चर्ममयी कृत्तिरेतस्मादेव । बहुधा कृत्ता हि सा शरीरात् । यद् सूत्रमयी तदोपमार्थे कृत्तजरद्वस्त्रखण्डग्रथितत्वात् कर्तनसामान्यात् कृत्तिरिव कृत्तिः कन्थोच्यते ।

„ कितवोऽभिधेयः । स्वं हन्तीति व्युत्पत्तिप्रदर्शनम् । ततः स्वकर्मोपपदे स्वघाते भूते 'कर्मणि हनः' इति स्वघातीति स्यात् ।

( वृकः ) त्वाद्विवृतं इत्युच्यते । न हि नक्षत्राणामिवाव्यक्तमस्य ज्योतिः । विकृतविक्रान्तशब्दयोर्वृकभावः । विकृतत्वं ज्योतिषः शीतत्वाद् ह्रासवृद्धिभ्यां वा । विक्रान्तत्वं ज्योतिषो दिगन्तरगमनात् । 'अरुणो मासकृद् वृकः ।'

„ आदित्य उच्यते । आवृङ्क्ते आवृणोति जगत् प्रकाशेन । आवृणोति चोदकानि रश्मिभिः सम्भजत इत्यर्थः । यद्वा, वृणक्तेर्वधकर्मणः पूर्ववद्रूपम् । विनाशयति तमांसि ।

„ विविधं कृन्तति उरणादीनि विकर्ता सन् वृकः श्वा । विपूर्वात् कृतन्तेः पूर्ववद्रूपसिद्धिरुन्नेया ।

IV.2.66. जोषयितव्यं वचनम् । विस्पष्टार्थे सेवि-
(जोषवाकम्) तव्यं वचनम् । अविस्पष्टं वचनमित्यर्थः ।

IV.2.67. कृन्ततेः रूपम् । यशोऽन्नं वा । यशो
(कृत्तिः) हि द्विषतः कृन्तति, दुर्भुक्तं वान्नं माषादि भोक्तारम् ।

„ शरीरात् कृन्तति चर्ममय्यपि कृत्तिः । सूत्रमय्यपि कृत्तिः क्षरद्वस्त्रखण्डग्रथितत्वात् कर्तनसामान्यात् । कृत्तिरिव कृत्तिः कन्थोच्यते ।

IV.2.68. स्वशब्दे कर्मण्युपपदे भूतेऽर्थे 'कर्मणि
( श्वघ्नी ) हनः' इति णिनि प्रत्ययः । स्वं धनं हतवान् स्वघाती सन् श्वघ्नी कितवः ।

II.372. किमः सर्वनामसु पाठात् सर्वनामेत्युक्तम् ।

IV.2.69. समशब्दः सर्वपर्यायः सर्वनामसु पठ्यते। ( समस्य )

II.376. दुष्पूयमिति दुःशोभनधनं दुष्पानमिति चेत्यर्थः । तेन कपूय शब्दवाच्ये कर्मणा तद्वत् तस्यानुष्ठातारः कपूयाः । आकारो मत्वर्थीयः, कआयास्सन्तः केपयः कुत्सितकर्मानुष्ठायिनः पापकर्माण इत्युच्यन्ते ।

IV.2.73. कपूयः दुष्पूयः दुश्शोध्यः दुष्कर्मेत्यर्थः । ( केपयः ) कपूयेन तद्वन्तोऽपि कपूयाः । अकारो मत्वर्थीयः । कुत्सितकर्मानुष्ठायिनः पापकर्माणो वोच्यन्ते । कपूयाः सन्तः केपयः ॥

II.378. अंहःशब्देन पापमुच्यते।...अंहसस्त्रायत इति 'आतोऽनुपसर्गे कः' इति अंहस्त्रमिति प्राप्तम् । ...धनुर्वा कवचं वाभिधेयम् ।

IV.2.75. आहन्तीत्यंहः पापम् । पापेन चात्र ( अंसत्रम् ) तत्फलभूतप्रहारादिकं लक्ष्यते । अंहसस्त्रायते । 'आतोऽनुपसर्गे कः' इत्यंहस्त्रे सदंसत्रम्। धनुर्वा कवचं वा ।

II.380. कोकूयते यस्माद् अतः कोकुवा कवतेः शब्दकर्मणः...। पुनः पुनः कवते शब्दं करोति अतः कोकुवानं सत् काकुदं वर्णव्यापत्त्यादिना । कोकूयमान एतं तुदतीति वेति निर्वचनान्तरम् । एतदिति तालुनोऽन्वादेशः ।

IV.2.76. कोकूयते पुनः पुनः शब्दं करोतीति ( काकुदम् ) कोकुवा जिह्वा । कोकुवाधानं सद् वर्णस्तु व्यापत्त्यादिना काकुदं तालु। कोकूयमाना एनत् तुदतीति वा। कोकूयतेर्नुदेश्च काकुदम् ।

II.382. अन्तरिक्षं गणोऽसौ मनुष्याणामभिधेयः । भियो वा नक्षत्रादीनां वा भासः । ततिस्तननं यस्मिन् तत् भीस्तननं भास्तननं वा वीरिटम् । अनालम्बनान्तरिक्षे भीतिः कस्य न जायते । वन्दनं नरेन्द्राय ते हि तस्मात्तत्रापि तद्वयम् ।

IV.2.77. भियो वा नक्षत्रादीनां वा भासः । (वीरिटे) ततिस्ततनं यस्मिन् तत् भी ततनं भास्ततनं वा सत् वीरिटम् । अन्तरिक्षं मनुष्यगणो वा । अनालम्बेऽन्तरिक्षे हि भीतिः कस्य न जायते । बृहन्नरेन्द्रो यते हि तस्मात्तत्रापि तद्वयम् ।

II.384. स पुनरयमहेरर्थे आभिमुख्यादौ । आप्तुमित्यस्यार्थ इति शाकपूणिः ।

IV.2.78. अभेरर्थे । आभिमुख्यार्थे वर्तते । आप्तु- ( अच्छ ) मित्यस्यार्थ इति शाकपूणिः ।

„ परि ईम सीमिति व्याख्यातं षाष्ठिके निपातप्रकरणे । अनेकार्थत्वादिहोपन्यासः ।

IV.2.79-81. परि ईम् सीम् इति व्याख्यातं षाष्ठिके (परि ईम् सीम्) निपातप्रकरणे । अनेकार्थत्वादिहोपन्यासः ।

„ एनमिति एनामिति च पदद्वयमेतत् । अस्या अस्येत्येतेन पदद्वयेन उदात्तं प्रथमादेशे अनुदात्तमन्वादेश इत्येवं नवमे व्याख्यातः । पुराऽनवगतस्तत्रोक्तः । इहानेकार्थत्वादुपन्यासः ।

IV.2.82-83. एनम् एनाम् एतत्पदद्वयमस्या अस्ये- (एनम् एनाम्) त्येतेन पदद्वयेन 'उदात्तं प्रथमादेशे अनुदात्तमन्वादेशे' इत्येवं व्याख्यातम् (नवमे)। स्वरोऽनवगतस्तत्रोक्तः । इहानेकार्थत्वादुपन्यासः ।

| | |
|---|---|
| „ लापितव्यः । प्रतिसारणात् सृणिः । | IV.2.84. लवितव्यं प्रतिसरणात् सृणिशब्देनात्र (सृणिः) दात्रमभिप्रेतम् । |
| II.385. दात्रलवनादित्यर्थः । | |
| II.386. आशुशुक्षणिः आशुशुचा दीप्त्या । कस्य? सामर्थ्यात् तमसः । सनिता वा संभक्ता वा सर्वस्य पाकदाहप्रकाशनादेर्व्यापारस्य । | IV.3.1. आशु शुचा दीप्त्या क्षणिता ,हिंसता तमसां (आशुशुक्षणिः)सनिता सम्भक्ता वा पाकदाहप्रकाशनादेः स्वव्यापारस्य । |
| II 388. मुष्टिरभिधेयः । प्रकाशनादिति निर्वचनम् । प्रकाश्य इत्यवगमः । | IV.3.3. प्रकाश्यत इति काशिर्मुष्टिः । (काशिः) |
| II.389. क्वणतेः शब्दकर्मणः । ताच्छीलिक आरुः । सम्प्रसारणं छान्दसत्वात् । क्वणन इत्यवगमः । मेघोऽभिधेयः । | IV.3.4. क्वणतेः शब्दकर्मणः 'क्वणेरारुः' इति बाहु- (कुणारुम्) लकात् आरु-प्रत्ययस्ताच्छीलिकः, वकारस्य सम्प्रसारणं च । शब्दनशीलः कुणारुः, तन्मेघ उच्यते । |
| II.390.अलं पर्याप्तमातर्दनं हिंसा यस्य बहूदकत्वात्। | IV.3.5. अलं पर्याप्तमातर्दनं हिंसा यस्य बहूदक- (अलातृणः) त्वात् । |
| „ 'लुभो विमोहने' निष्ठायामिट्स्मरणात् । | IV.3.6. सम्पूर्वाल्लुभेर्निष्ठायां 'लुभो विमोहने' इती- (सलल्लूकम्) डागमः । |
| II.392.सरणशीलं वा अत्यन्तं दूरं नष्टमित्यर्थः । | „ सरणशीलमत्यन्तदूरं नष्टमित्यर्थः । |
| II.393. कमिति सुखनाम तस्येयं मकारस्य तकारेण व्यापत्तिः । छान्दसत्वात् पयसश्च सलोपः । कंपयसमित्यवगमः । सुखमस्य पय इति निर्वचनम् । मेघोऽभिधेयः । | IV.3.7. कमिति सुखनाय । तस्येयं मकारस्म तका- (कत्पयम्) रेण व्यापत्तिः । पयसश्च सलोपः। कम्पयसं मुखपयसमित्यर्थः । मेघोऽभिधेयः । |
| II.394. आप इत्यभिधेयवचनम् । विस्रवणादिति निर्वचनम् । विस्रव इत्यवगमः । | IV.3.8 विपूर्वात् स्रवतेः क्विपि । विविधं स्रव- (विस्रुहः) न्तीति विस्रुहः आपः । |
| II 395. ओषधय इत्यभिधेयवचनम् । विरोहणादिति निर्वचनम् । केरुहा इत्यवगमः । मूलविभुजादित्वाद्वा के विरुहा विरोहिण्य इति वा । | IV 3.9. मूलविभुजादित्वात् के विरुहाः सत्यः वी- (वीरुधः) रुधः । विविधं रोहतीति,ओषधय उच्यन्ते । |
| II 396. नक्षद्दाभं दभ्नातिर्वधकर्मा युद्धार्थं नक्षताम- भिगन्तां प्राप्नुवन्तां वा । केषाम् ? सामर्थ्यात् शत्रूणां हन्तारम् । | IV.3.10. युद्धार्थमभिगच्छतां व्याप्नुवतां वा शत्रूणां (नक्षद्दाभं) हन्तारमित्यर्थः । |
| अस्कृधोयुर्दीर्घायुरित्यर्थः । अस्कृधोयुश्चिरस्थायी पुत्रपौत्रानुगत इत्यर्थः । | IV.3.11.दीर्घायुरित्यर्थः । चिरस्थायी पुत्रपौत्रानुगत (अस्कृधोयुः) इति यावत् । |

| | |
|---|---|
| II.397. अकृतदानो यादृशो न कस्मैचिदपि त्वया दत्तपूर्व इत्यर्थः। अकृतपानो वा अभुक्तपूर्वो वा केनचिदित्यर्थः । | ,, अकृतदानो यादृशो न कस्मैचित्त्वया दत्तपूर्व इत्यर्थः। अकृतपानो वा अभुक्तपूर्वः केनचिदित्यर्थः। |
| ,, अशिथिलया गत्या हरणशीलानि श्रथ्याश्र ते हारिणोऽविश्रामहरणाः। | IV.3.12. अशिथिलया गत्या हरणशीला अविश्राम- (निशृम्भाः) हरणा इत्यर्थः । |
| II.398. महत्स्तुतिं वक्तव्यस्तुतिं वा स्तुत्यर्हमित्यर्थः। | IV.3.13. बृहद् वक्तव्यं वा उक्थं स्तुतिर्यस्य सः (बृबदुक्थम्) बृहदुक्थः, तम्; स्तुत्यर्हमित्यर्थः । |
| ,, बृबन् महद् वक्तव्यं वा उक्थं स्तोत्रं स्तुतिर्यस्य तमिन्द्रं महास्तुतिं वा। | |
| II.399. मृदु उदरं यस्य मृदुर्वमानविरोचनयोरकर्ता उदरेऽस्तु इत्येवं य आशास्यते यजमानैः स मृदूदरस्तेन मृदूदरेण सोमेनेत्यर्थः। | IV.3.14. मृदु उदरमस्य। मृदुर्वा वमनविरेचनयोर- (ऋदूदरः) कर्ता उदरे अस्तु इत्येवं यः आशास्यते यजमानैः स मृदूदरः सोमः। आदेर्मकारस्य लोपः । |
| II.398. मृदूदरः सन्नादिलोपेन ऋदूदरः। | |
| II.504. बाहुविशेषणमेतत्, ऋतुशब्दोऽर्देतेर्हिंसार्थस्य शत्रूनामर्देनेन पातयितारौ। | IV.3.15. बाहुविशेषणमेतत्, शत्रूणामर्दनेन पात- (ऋदूप) यितारौ। अर्दनेन हिंसयातिवेधनेन ताडनेनात्मनो गमनेन तद्वत्। इषोर्यच्छरीरं शरीरिणां वा पातयितारौ अर्दनपातिनौ मर्मणीति पाठे। |
| ,, अर्दनेन हिंसया वेधनेन ताडनेन आत्मनो गमनेन तन्वत इषोर्येच्छरीरं शरीरिणं पातयितारौ अर्दनपातिनौ मर्मणि। | |
| II.400. तस्य असंखादन्त्यौ । | IV.3.17. असंखादन्त्यावित्यर्थः। |
| ,, असिन्वती असंखादन्त्याविव चूर्णयन्त्याविव। | (असिन्वती) |
| ,, क्रमयोऽभिधेयाः। | IV.3.18. घृणाः क्रिमय उच्यन्ते। ( कपनाः ) |
| II.401. घुणाः क्रिमयः। | |
| ,, ऋजूका अकुटिला अतिहता प्रसिद्धा दीप्तिर्यस्य स ऋजूकभास्सन् भाऋजीकः। | IV.3.19. ऋजुका अकुटिला अप्रतिहता प्रसिद्धा (भाऋजीकः) भा दीप्तिर्यस्य स ऋजुकभाः सन भाऋजीकः। |
| II.402. सेनाऽभिधेया। | IV 3.21. अत्र सेनाऽभिधेया। (जूर्णिः) |
| II.403. अवनाय अवनेन वेत्यवगमः। | IV.3.22. अवनाय अवनेन वा। (ओमना) |

| | |
|---|---|
| II.405. उपलेपु श्लक्ष्णेपु वालुकासु यवान् प्रक्षिणाति ।······उपलेपु तदाधानभ्रष्टान् यवान् हिनस्ति चूर्णयतीत्यर्थः ।······सक्तुकारिकाऽभिधेया रूढित्वात् । | IV.3.23. उपलेपु श्लक्ष्णेषु वालुकासु यवान् क्षिणो- (उपलप्रक्षिणी) ति हिनस्ति भृज्जतीत्यर्थः । उपलेपु यवान् प्रक्षिपति चूर्णयतीत्यर्थः । सक्तुकारिकाऽभिधेया । |
| II.407. उपस्थशब्दस्य सप्तम्येकवचने धात्वादिसकारोऽवशिष्यते ।······उपस्थ इति । | IV.3.24. उपस्थशब्दस्य सप्तम्येकवचने धात्वादि- ( उपसि ) सकारोऽवशिष्यते । उपस्थ इत्यर्थः । |
| ,, वणिगभिधेयः । प्रकलाविदित्यवगमः । स हि कला मानोन्मानप्रतिमानादिविषयाः प्रकलाश्च गणितरत्नपरीक्षादिका वेद विजानाति । | IV.3.25. प्रकर्षेण कलाः मानोन्मानप्रतिमानादि- (प्रकलवित्)विषयाः प्रकृष्टाश्चगणितरत्नपरीक्षादिका वेद विजानाति । |
| | ,, प्रकलविद् वणिग्भवति । |
| II.408. पूषा किंविशिष्टः ? अभ्यर्धयज्वा अल्पानपि अनभ्यर्धयन् मरुद्भ्यो ददाति न तं वा स्तोतृभ्योऽसौ ददाति सः । | IV.3.26. अल्पानपि रसानभ्यर्धयन् मरुद्भ्यो ( अभ्यर्धयज्वा ) ददाति धनं वा स्तोतृभ्यो यो ददाति सः पूषा विशेष्यते । |
| II.415. प्रसवेऽभ्यनुज्ञाने । | IV.3.31. प्रसवेऽभ्यनुज्ञाने । ( सवीमनि ) |
| ,, सर्वतः पृथुरित्यस्यार्थे द्रष्टव्यः । | IV.3.32. सर्वतः पृथुः । |
| ,, सप्रथाः सर्वतः पृथुः । | ( सप्रथाः ) |
| ,, वेदनानि विज्ञानानीत्यवगमः । | IV.3.33. वेदनानि विज्ञानानीत्यर्थः । ( विदथानि ) |
| II.416. समाश्रयन्त इत्यवगमः । समाश्रिता वेति प्राप्तिविकल्पः । | IV.3.34. समाश्रयन्तः । यद्वा भूते ल्युट् । ( श्रायन्तः ) समाश्रिताः । |
| II.417. आश्रयणात् सोमेनाश्रपणाद्वा होमार्थस्य । आङ् च द्योतकलक्षणः, ईषच्छ्रवणात् । | IV.3.35. आङ् ईषदर्थद्योतकः आश्रयणात् होमा- ( आशीः ) र्थस्य सोमस्य श्रपणं दध्युच्यते । |
| II.418. आशीः सोमस्य श्रपणं दधि । | |
| ,, जिगर्तिर्नैरुक्तो धातुर्निगरणार्थो गृह्णात्यर्थो वा । | IV.3.36. जिगर्तिर्नैरुक्तधातुर्निगरणार्थो वा । ( अजीगः ) |
| II.419. अजीगः अवगिरसि अभ्यवहरसि गृह्णासि भक्षयसीत्यर्थः । | ,, अवगिरति गृह्णाति वा भक्षयतीत्यर्थः । |
| अमूढ इत्यवगमः । | IV.3.37. अमूढेत्यर्थः । ( अमूरः ) |

| | |
|---|---|
| II.420. देवान्च्या···देवान् प्रति अञ्चितया सुगत्या । | IV.3.39. देवान् प्रति ( अक्तया ) गतया ( देवो देवान्च्या कृपा) स्तुत्येत्यर्थः । |
| II.422. विजामातुर्धनादन्ये कुलीनत्वादयो विगता जामातृगुणा यस्मात् सोऽसमाप्तगुणोऽपि जामाता क्रीतापतिरुच्यते । | IV.3.40.धनादन्ये कुलीनत्वादयो विगता जामातृ-(विजामाता)गुणा यस्मात् सोऽसमाप्तगुणो विजामाता क्रीतापतिरुच्यते । |
| IV.138. ओमासोऽवतेः पालनार्थस्य तर्पणार्थस्य वा कर्तरि कर्मणि वा मन्प्रत्यये 'ज्वरत्वर' इत्यादिना ऊठि सम्प्रसारणे जस्यसुगागमे च रूपम् । अवितारो रक्षितारस्तर्पयितारस्तर्पणीया वा । | IV.3.41 अवतेः पालनार्थस्य तर्पणार्थस्य वा ( ओमासः ) कर्तरि कर्मणि वा···इति मन्प्रत्यये 'ज्वरत्वर' इत्यादिना ऊठि ऊमास इति प्राप्ते व्यत्ययेन गुणः । जस् । 'आज्जसेरसुक् ।' रक्षितारस्तर्पयितारस्तर्पणीया वा । |
| II.424. सोतारमित्यवगमः । | IV.3.42. सोतारम् । ( सोमानम् ) |
| „ किमिदानीं कस्य किं छिद्रमिति चरति किमिदं वर्तत इति वा चरति यः स उच्यते । साधुजनवैरी सदा विरुद्धबुद्धिः पिशुनोऽभिधेयः । | IV.3.44. किमिदानीं कस्य किं छिद्रमिति चरति, ( किमीदिने ) किमिदं वर्तत इति वा चरति । साधुजनवैरी सदा विरुद्धबुद्धिः पिशुनोऽभिधेयः । |
| II.427. अथवा ह्यमनं रोग उच्यते, कर्तव्यः शत्रूणां रोगस्तद्वत् । दस्यूनां रोगभूत इत्यर्थः । आत्मवान्वायत्तवानित्यर्थः । | IV.3.45. अमो रोगः कर्तव्यः शत्रूणां, रोगस्त-(अमवान् ) द्वान्, दस्यूनां रोगभूत इत्यर्थः । आत्म-शब्दस्य वा अमभावः । यत्नवान् । |
| „ हिंसितारो गौर्वाभिधेयाः । | IV.3.46. अमीवा रोगः हिंसिता वा । ( अमीवा ) |
| II.428. अस्ति खलु दुर्गतिप्रापककारणभूतं कर्म । दुर्गतिर्गम्यते येन येन तद्दुरितमिहाभिप्रेतम् । | IV.3.47. दुर्गतिप्रापकं कारणभूतम् । पापकं कर्म ( दुरितम् ) दुरितमुच्यते ।···दुर्गतिर्गम्यते येन तद्दुरितम् । |
| II.429. अपवाय इत्यवगमयति । सुखं प्राणांश्चेत्यवगमः । | IV.3.48. अप वयति अपगमयति सुखं प्राणां-( अप्वे ) श्चेत्यर्थः । |
| III.170. व्याधिर्वा भयं वा । | „ व्याधिर्वा भयं वा अप्वा । |
| II.429. अमामयीत्यस्यार्थवचनम् । आत्ममयी अततेर्वाऽमतेर्वा अमतिशब्द इति निर्दिष्टः । मतिरपि प्रकाशरूपत्वाद्दीप्तिरात्मप्रकाशमयी ततिर्मतिर्वा । अमतिर्दीप्तिरभिधेया । | IV.3.49. अमाशब्द आत्मवचनः । आत्ममयी ( अमतिः ) ततिर्मतिर्वा अमतिः । तन्यत इति ततिर्दीप्तिः । आत्मप्रकाशमयी ततिर्मतिर्वा अमतिः दीप्तिरभिधेया । अमाततिशब्दस्य आत्ममतिशब्दस्य वा अमतिभावः । |

| | |
|---|---|
| II.431. पुरन्धीति धीशब्दस्य धी कर्मसु पठितत्वाद् बहुकर्मा बहुप्रज्ञो वोच्यते । | IV.3.51. पुरुशब्दो बहुनाम । धीरिति कर्मनाम ( पुरन्धिः ) प्रज्ञानाम वा । बहुकर्मा बहुप्रज्ञो वा पुरुधिः सन् पुरन्धिः । |
| II.430. पुरन्धिरित्यस्य पुरन्धीरिति वा पुरं दारयतीति वा । | „ पुराणि दारयतीति वा पुरन्धिः । |
| II.432. वर्णविशेषो ज्वलनाविर्भूतप्रकाशरूपोऽभिधेयः । | IV.3.52. वर्णविशेषो ज्वलनाविर्भूतप्रकाशरूपो- ( रुशत् ) ऽभिधीयते । |
| II.433. रिशतेर्हिंसार्थस्य शुद्धस्य ण्यन्तस्य वा स्यतेश्चैतद् द्विधातुजं रूपम् । रिशतां हिंसतां रेशयतां वा घ्नतां घातयतां वा शत्रूणामसितारः क्षेप्तारो नाशयितार इत्यर्थः । | IV.3.53. 'रिश हिंसायाम्' तुदादिः । अन्तर्णीत- ( रिशादसः ) ण्यर्थः । लटः शतरि छान्दसो दीर्घः । अस्यतेर्विच् । रिशतां घ्नतां रेशयतां घातयतां वा असितारः क्षेप्तारो नाशयितार इत्यर्थः । |
| II.434. रिशादसो हे रिशतां रेशयतां वा घ्नतां घातयतां वा शत्रूणामसितारः क्षेप्तारो निरसितारः । | |
| „ सुपूर्वस्य ददातेः क्त्रन् द्रष्टव्यः । सुदान इत्यवगमः । | IV.3.54. सुपूर्वाद् ददातेः क्त्रन्, क्त्रनि बाहुलकात् ( सुदत्रः ) ह्रस्वत्वम् । सुदानः । |
| II.435. सुविद्यत इत्यवगमः । | IV.3.55. सुविद्यत इत्यर्थः । ( सुविदत्रः ) |
| „ आनुपूर्वस्यानुषक्तव्यमित्यवगमः । उपर्युपरि लग्नमित्यर्थः । | IV.3.56. अनुषक्तमुपर्युपरि लग्नमित्यर्थः । ( आनुषक् ) |
| II 436. तूर्णशब्द उपपदे वनोतेः सम्भजनार्थस्य इकारो नामकरणः । तूर्णं वनोतीति तूर्णवनिरिति प्राप्ते तुर्वणिः । | IV.3.57. तूर्णशब्दोपपदात् वनोतेः 'इन् सर्वधातुभ्यः' इतीन् । (तुर्वणिः) तूर्णं वनोति सम्भजते । तूर्णवनिः । |
| II.437. गीर्वाण इत्यवगमः । | IV.3.58. अतो देवोऽभिधेयः । |
| „ देवोऽभिधेयवचनः । | (गिर्वणाः) गीर्वाण इति प्राप्ते दीर्घाभावश्छान्दसः । |
| II.438. असुः प्राणः प्राणश्च वायुः । तत्स्पष्टतरं भाष्यकार आह सुसमीरितस्वसमीरिते । असुसमीरिता इत्यस्य व्याख्यानं वातसमीरिता इति । मरुदादयोऽभिधेयाः । सुसमीरिते सुष्ठु प्रेरिते विस्तीर्णे अन्तरिक्षलोक इत्यर्थः । | IV.3 59. असुः प्राणः । प्राणश्च वातः । वातसमीरिता मरुदादयो हि सेव्याः । ( असुसूर्त्ते सूर्त्ते ) सूर्त्ते इति रजसीत्यस्य विशेषणम् । सुसमीरिते सुष्ठु प्रेरिते विस्तीर्णे रजसि अन्तरिक्षलोकेऽपीत्यर्थः । |
| „ रजसो विशेषणम् । | |

II.439. अभिपूर्वस्याञ्चतेरभ्यक्ता भकारस्य मकारापत्त्या अम्यक्। नित्यं शत्रून् प्रत्यभिगन्ता शत्रुशरीरलग्नेव दृश्यत इत्यर्थः। आयुधाख्या शक्तिरभिधेया।

IV.3.60. आयुधाख्या शक्तिरभिधेया। क्षिप्ता सती (अम्यक्) मां प्रति इव गता। यद्वा अभिपूर्वादञ्चतेः क्विनि अभ्यक् सती भकारस्य मकारापत्त्या अम्यक्। शत्रून् प्रत्यभिगता। यद्वा अमाशब्दः सहार्थे निपातः। अमाक् सती अम्यक् सहभूता।

II.440. यादृश इत्यवगमः।

IV.3.61. यादृशे इत्यर्थः। (यादृश्मिन्)

II.442. अर्हार्थो वा अग्राह्ही अग्रिया इत्यवगमः। ···अग्रमेवाग्रिया आहूता इत्यर्थः।

IV.3.63. अर्हार्थो वा घनि घस्य इयादेशो (अग्रिया) विभक्तेराकारः। अग्राही। यद्वा अग्रा एवाग्रिया। अग्रभूताग्र्या।

II.443. अन्नमभिधेयम्। पचता इत्युभयं चेदं पचेर्धातोः। अत आह पचतिर्नामीभूत इति। तत्र चन इति पचेरेव दूरं विकृतं पच्यमानत्वात् पचनमिति प्राप्ते चनः। पचतेत्याख्यातसरूपनामविभक्तेश्चकारः। पक्व पक्वौ पक्वा इति वेत्यवगमः। पदान्तरसम्बन्धसामर्थ्याद् विशेषनिश्चयः।

IV.3.64-65. पचनशब्दस्य पकारलोपेनान्ते (चनः पचता) सकारोपजनेन चनः। अन्नम्। यद्वा पचेरसुनि बाहुलकात् नोऽन्तादेशः। ······विभक्तेराकारः। पक्वः पक्वौ पक्वा इति वावगमः। पदान्तस्य बहुलसामर्थ्याद् विशेषनिश्चयः।

II.445. आपोऽभिधेया। शुचं संरुन्धन्तीति निर्वचनम्। शुक्शब्दस्यान्तलोपेन इति दर्शयति। शुग्रुध इत्यवगमः। दीप्तिं तापं वा रुन्धत्यग्नेर्मत्तस्य वा घर्मार्तस्य।

IV.3.66. शुचं दीप्तिं तापं वा रुन्धत्यः। शुकपूर्वा[ (शुरुधः) रुधेः'अन्येभ्योऽपि दृश्यन्ते' इति क्विप्। शुग्रुधः (शुक् रुधः) शुरुधः।

„ अमितमात्र इत्यवगमः। अपरिमाण इत्यर्थः। अपरिगणितकालो वा महानित्यर्थः। प्राप्तवचनमभ्यमितो वा मिनोतिर्वधकर्मा, अहिंसितः केनचिद् अभ्यामितः सन् अमितः।

IV.3.67. मितः परिच्छिन्नः। न मितः अमितः (अमिनः) सन्नमिनः अपरिमाण इत्यर्थः, अपरिगणितकालो वा। यद्वा मिनोतेर्वधकर्मणः··· अमिनः अहिंसितः केनचित्। यद्वा क्त एव प्रत्ययः। अमितोऽभ्यमितो वा सन् अमिनः।

II.446. आपोऽभिधेयाः शब्दकारिण्य इति मेघात् पतन्त्यो जज्झतीरित्येवंरूपं शब्दं कुर्वन्तीत्येवंरूपशीलधर्माः।

IV.3.68. जज्झतीरापो भवन्ति शब्दकारिण्य इति (जज्झतीः) मेघात् हन्यमानात् जज्झतीत्येवं शब्दं कुर्वतीत्येवंरूपं शीघ्रम्।

II.447. 'स्कुञ् आप्रवणे' आप्रवणमागमनं प्रवतेर्गत्यर्थत्वाद् अन्येनाप्रतिगतोऽप्रतिष्कुतो युद्धे अन्येनाप्रतिनियुक्तपूर्व इत्यर्थः, अप्रति-

IV.3.69. 'स्कुञ् आप्रवणे।' आप्रवणमागमनम्। (अप्रतिष्कुतः) स्कवतेर्गत्यर्थत्वाद्वा निष्ठा।······ अन्येनाप्रतिगतः अप्रतिष्कुतः। युद्धे अन्ये-

| | |
|---|---|
| स्खलितपूर्वो वा। | नाप्रतिहतपूर्व इत्यर्थः। अप्रतिस्खलितपूर्वो वा। |
| ,, 'शदॣ शातने' इत्यस्य यङि छान्दसत्वाच्च तस्य लुकि रूपम्। | IV.3.70. 'शदॣ शातने।' अस्माद् यङ्लुगन्ताद् व्यत्ययेन शानच्। पुनः पुनरसुरान् तत्पुराणि वा शातयन्। (शासदानः) |
| II.448. शासदानः पुनः पुनरसुरांस्तत्पुरश्च शातयन्। | |
| II.398. सप्रकरस्नं सप्रौ करस्नू बाहुनामैतत्, सप्रौ बाहू यस्य तम्। किमर्थम्? ऊतये तर्पणाय सोमेन पालनाय वात्मनः। | IV.3.71. 'सप्रकरस्नमूतये।' सप्रौ करस्नौ बाहू यस्य (सप्रः) होमेन तर्पणाय पालनाय वात्मनः। |
| II.450. क्वचित्तु पदान्तरसम्बन्धसामर्थ्यात् शिप्रशब्देन शिरस्त्राणमुच्यते। 'शिप्रः शीर्षस्सु वितता हिरण्मयी' इति। सुशिप्रः सुशिरस्त्राण इत्यर्थः संभवति। | IV.3.72. क्वचिच्छिप्रशब्देन शिरस्त्राणमुच्यते (सुशिप्रः) 'शिप्राः शीर्षसु वितता हिरण्ययीः' इति सुशिप्रः सुशिरस्त्राण इत्यर्थः सम्भवति। |
| ,, रमणीयेष्वित्यर्थः। | IV.3.73. रमणीयेष्वित्यर्थः। (रंसु) |
| II.446. द्वयोः स्थानयोर्वीर्येण परिवृद्धोऽपि वेद्या ऋतुमयोर्धियोरुच्यते। मध्यमे च स्थानेऽन्तरिक्षे उत्तमे च दिवि। तस्याः सर्वदेवानां साधारणत्वात्। देवराजत्वेन च प्रसिद्धेः। इतिहासपक्षे तु नान्योऽन्तरिक्षे वीर्येण परिवृद्धः शक्नोति वर्षितुं नापि दिवि आदित्याद् रसान् परिग्रहीतुम्। | IV.3.74. द्वयोः स्थानयोर्वीर्येण परिवृढः इन्द्रः। (द्विबर्हाः) न ह्यन्तरिक्षे वीर्येणापरिवृद्धः शक्नोति वर्षितुं नापि दिवि आदित्याद्रसान् परिगृहीतुं दिवः सर्वदेवतासाधारणत्वाद् देवराजत्वेन च प्रसिद्धिरितिहासेषु द्विबर्हा उच्यते। |
| II.551. प्राकारोऽभिधेयः। | IV.3.75. प्राकार उच्यते। (अक्रः) |
| II.552. उरु कुर्वाण इति प्राप्ते नैकवर्णलोपादिना वाक्यार्थ उराण इति पदवचनम्। | IV.3.76. उरु कुर्वाण इति प्राप्ते नैकवर्णलोपादिना (उराणः) वाक्यार्थः। उराण इति पदवचनम्। |
| ,, अल्पमपि हविरुरु बहु कुर्वाणः। तथा च श्रुतिः 'यद्वै देवो जोषत हविस्तदतिमात्रं वर्धत आधीयोऽपरिमितम्' इति। | ,, स्वल्पमपि हविः उरु बहु कुर्वाणः। तथा च श्रुतिः 'यद्वै देवो जोषत हविस्तत हि मोतुं वर्द्धते अथोऽयमपरिमितः। |
| II.553. स्त्यायतिः संहननार्थः। हिमभावेन संहताः। | IV.3.77. स्त्यायतेः संहननार्थात्। (स्तियानाम्) |
| | ,, हिमभावेन संहता आप उच्यन्ते। |
| ,, तासां स्तियानां पालयितेत्यर्थवचनम्, उप- | IV.3.78. स्तिपाः पातीति विच्। स्तिपा सन् |

| | |
|---|---|
| स्थितान् ज्योतिष्टोमादीन् यागान् पालयति । ततश्चोपस्थितः सन्ननेकार्थलोपे वर्णेन स्तिपाः। अग्निरभिधेयः । स ह्याहुतिद्वारेणापां पालयिता । अङ्गभावोपगमनेन चोपस्थितानां कर्तव्यतया ज्योतिष्टोमादीनाम् । | ( स्तिपाः ) स्तिपाः । यद्वा उपस्थितपाः सन् अनेकवर्णलोपादिना स्तिपाः । अग्निरुच्यते । स ह्याहुतिद्वारेणापां पालयिता । अङ्गभावोपगमनेन चोपस्थितानां कर्तव्यतया ज्योतिष्टोमादीनाम् । |
| II.455. जवरूपया गत्या जरयद्वा प्राणिनो वयो गिरन् वा रसान् रश्मिभिर्यदारोहति नभस्तदादित्यमण्डलम् । | IV.3.79. जवरूपया गत्या जरयन्ति प्राणिनो वयः ( जवारु ) गिरद्वा रसान् रश्मिभिर्यदारोहति नभस्तदादित्यमण्डलमुच्यते । |
| „ जरूथमिति गृणातेर्धातोर्गतिकर्मणः । जरतेर्वा एवमथस्यैवार्चतिकर्मसु पाठात् । 'जृवृभ्यामूथन्' इत्यौणादिक ऊथन् भावसाधनः करणसाधनो वा बाहुलकाद् द्रष्टव्यः । | IV.3.80. गृणातेः स्तुतिकर्मणो जरतेर्वार्चति( जरूथम् ) कर्मणो 'जृवृञोरूथन्' इति भावे करणे वा रूथन् बाहुलकाद् गकारस्य जकारः स्तवनं स्तूयतेऽनेनेति वा जरूथं स्तोत्रम् । |
| „ स्तोत्रमभिधेयम् । | |
| II.456. वज्रोऽपि तुञ्ज उच्यत इत्याह तुञ्जेर्दानार्थस्येति । | IV.3.82. तुञ्जतेर्दानकर्मणो भावे घञ् । दानमित्यर्थः । ( तुञ्जः ) 'तुञ्जे तुञ्जे य उत्तरे' वज्रोऽपि तुञ्जस्तत्रैव व्याख्यातः । |
| II.457. तुञ्जे तुञ्जे दाने दाने । | |
| „ वृद्ध्यर्थस्य बृहेर्भूते'''हिंसार्थे वा भावे ल्युट्, बर्हणं । | IV.3.83. बृहेर्वृद्ध्यर्थस्य 'कृत्यल्युटो बहुलम्' इति ( बर्हणा ) कर्तरि ल्युट् । परिवृढः । हिंसाकर्मणो वा भावे । हिंसा बर्हणा । |
| II 458. अथवा निबर्हयतेर्बर्हणा हिंसोच्यते । | |
| „ ततो धर्मसन्तानादग्निहोत्रादेः कर्मणो नुन्नोऽपेतः । ततो नुन्नः सन् ततनुष्टिः । अथवा ततन इत्येतत् शब्दरूपं तनोतेर्भोगसन्तानं वा । उष्टिशब्दो वशेः कान्तिकर्मणः । भोगसन्तानं वष्टीति ततनुष्टिः । | IV.3.84. वशेर्वा बाहुलकात् कर्तरि क्तिचि सम्प्र(ततनुष्टिम्) सारणे उष्टिः । ततो धर्मसन्तानादग्निहोत्रादेः कर्मणो नुन्नः प्रेरितः । ततनं भोगसन्तानं वष्टि ततनुष्टिः । |
| II.460. इलाबिलाशय इत्यवगमः । इलो बलमन्नं तन्निष्पत्तिहेतुभूतमुदकमत्रेलाशब्दवमायेण इलाशब्देनोच्यते । बिले उदके शेते इति बिलेशयः सन् वर्णव्यापत्तिलोपादिना इलीबिशः । मेघोऽभिधेयः । | IV.3.85. इला अन्नम्, अन्नहेतुभूते उदके वर्तते । ( इलीबिशः ) बिले उदके शेते''''''''इलाबिले शयो यस्य । निपातश्छान्दसः । मेघ उच्यते। इलाबिलशयः सन् इलीबिश' |
| „ कियदप्यपरिमितं स्वर्बलं धारयति । क्रममाणं वाभिमुखं स्वर्बलं धारयति निरुण- | IV.3.86. कियच्छब्दे क्रममाणशब्दे वोपपदे ( कियेधाः ) दधातेर्विच् । कियदप्यविज्ञायमानपरि- |

न्नीति दधातेर्विचि रूपम् । इन्द्रो विशेष्यः ।

II.461. भ्रमिता स्वयं भ्रामयितान्येषामित्यर्थः ।

II.462. किश्च भ्रमिरसि लोकत्रये विभ्रमितासि त्रिष्वपि लोकेष्वप्रतिहतगतिरित्यर्थः ।

„ विप्राप्त इत्यवगमः । विकारोपजनवर्णलोपादिर्द्रष्टव्यः । विस्तीर्ण इत्यर्थः ।

II.463. उदकमभिधेयम् । तद्धि तूर्णमाप्नोत्येवंशीलं तूर्णापि सत्तुरीपम् ।

II.464. रपतेः रसतेर्वा कर्तरि चेति कर्मसाधनो घञ् भावे वा रासो वा रापो वा शब्द उच्यते तद्वद् रापि वा रासि वा सत् सकारपकारोपजनेन रास्पिन् शब्दः । बहूदकं स्तोत्रं वोच्यते । ततस्तादर्थ्यादस्तीत्यर्श आदित्वादिकारः प्रकृतिभावश्च द्रष्टव्यः, रास्पिनो दण्डिमती शालेति यथा । अतश्च शब्दश्च तोदकेन तद्वा । मेघोऽभिधेयः । उच्चार्यमाणेन स्तोत्रेण स्तोता वा ।

II.465. ऋञ्जतिः प्रसाधनकर्मा । विषमस्य समीकरणं वा वर्णधा करणादेवमुच्यते । प्रसाधनमात्मसात्करणं तदर्थ इत्यर्थः ।

II.466. प्राप्तवसू इत्यवगमः । पकारलोपोपजनह्रस्वत्वादीनि द्रष्टव्यानि । अश्वावभिधेयौ ।

„ प्रहिणुत इत्यवगमः ।

II.467. 'स्कुम्भ आप्रवणे' पठ्यते । इह च दानार्थः । अषोपदेशत्वाच्च षत्वानवगमः । क्वचिद् व्युदसनार्थत्वादनेकार्थत्वमपि ।

II.468. अत्यर्थं पुनः पुनर्ददत् ।

माणं स्वबलं धारयति । क्रममाणं वाभिमुखं परबलं धारयति । निरुणद्धीति कियद्धा क्रममाणधा वा सन् कियेधाः । इन्द्रो विशेष्यः ।

IV.3.87. भ्रमिता स्वयम् । त्रिष्वपि लोकेष्वप्रति-(भृमिः)हतगतिरित्यर्थः । अन्तर्णीतण्यर्थो वा भृमिः । भ्रामयितान्यान् ।

IV.3.88. विप्राप्तशब्दस्य विष्पितभावः । यद्वा (विष्पितः) विषेर्व्याप्त्यर्थात् क्तः, इकारपकारावुपजनौ । विस्तीर्ण इत्यर्थः ।

IV.3.89. तूर्णं व्याप्तुं शीलमस्य । णिनिः । (तुरीपम्) तूर्णापि सत्तुरीपम् । उदकमभिधेयम् ।

IV.3.90. रपतेर्वा रसतेर्वा कर्मणि भावे वा घञ् । (रास्पिनः) रापो रासो वा शब्दो यस्य तद्रापि रासि वा सत् सकारपकारोपजनेन रास्पिशब्दो बहूदकं स्तोत्रं वोच्यते । तदस्यास्तीत्यर्श आदित्वादच् प्रकृतिभावश्च द्रष्टव्यः । दण्डिमती शालेति यथा । अतश्च शब्दवतोदकेन तद्वान्मेघोऽभिधेयः । उच्चार्यमाणेन स्तोत्रेण स्तोता वा ।

IV.3.91. प्रसाधनकर्मविषयस्य समीकरणं प्रसा-(ऋञ्जतिः) धनमात्मसात्करणं तदस्येत्यर्थः ।

IV.3.93. प्राप्तवसुनौ । पकारलोपह्रस्वत्वतकारोप-(प्रतद्वसू) जनैः प्रतद्वसु । हरी विशेष्यौ ।

IV.3.94. प्रहिणुतेत्यर्थः ।
(हिनोत)

IV.3.95-96. 'स्कुम्भ आप्रवणे ।' इह दानार्थः । (चोष्कूयमाणः क्वचिद् व्युदसनार्थनश्च । यङि चोष्कूयते) पूर्वत्र लटः शानच् । उत्तरत्र व्यत्ययेन षत्वम् ।

„ अत्यर्थं ददत् इत्यर्थः ।

II.469. अत्यन्तं व्युदस्यति ।

„ स्वयमित्यवगमः ।

II.470. 'इषु इच्छायाम्' इत्यस्य वा करणसाधनः क्तिन् । द्यौर्गम्यते प्राप्यते वा याभिस्ता यागक्रिया इष्टयश्च सत्यो दिविष्टयः ।

II.472. अमात्र इत्यवगमः । मात्रा परिमाणम् । अपरिमाणो महानित्यर्थप्राप्तवचनम् । अभ्यमितो वा मिनातेर्मिनोतेर्वा वधकर्मणः । अभ्यमितः सन् अमत्रः ।

अर्चनमृक् स्तुतिः तया तुल्यः । ऋचा सम इत्यवगमः । ऋचा सम इति वाक्येनार्थप्रदर्शनम् । याप्यतिशयाभिप्रायेण क्रियते साप्यस्यान्नाहावत् समैव भवति नातिरिच्यत इत्यर्थः ।

II.473. ऋचीषमः तुल्ययाभ्यधिकगुणाध्याहाररूपेण अधिकता स्तुतिरनुवादिनी भवति सा यस्येत्यर्थः ।

अनश्लीलदानमित्यवगमः । अर्शसशब्दोऽश्लीलवाची । अश्लीलं किम् ? पापकम् । कस्मादिति चेत् यस्मात् पापवचनं प्रतिपत्तये रातिः पापिष्ठस्य दाता । तद्विपरीतोऽनर्शरातिः ।

अनर्शरातिम् अपापकदानम् उत्कृष्टस्य दातारमित्यर्थः ।

II.447. अर्तेः 'अन्येभ्योऽपि दृश्यन्ते' इत्येवं वनिनि रूपम् । 'अर्वणस्त्रसावनञः' इतिवचनादत्र भावाभावः सिद्धः⋯तथा चाह अप्रत्यृतोऽप्रतिगतोऽन्यस्मिन् अन्यमनाश्रितः स्वतन्त्र इत्यर्थः ।

अनर्वाणमगतमन्यं प्रत्याश्रिततया अपराश्रयमित्यर्थः ।

„ अत्यर्थं व्युदस्यति ।

IV.3.97. स्वयमित्यर्थे वर्तमानो निपातः । ( सुमत् )

IV.3.98. दिविशब्दोपपदात् इषेर्गत्यर्थादिच्छार्था- ( दिविष्टिषु ) द्वा करणे क्तिन् । द्यौर्गम्यते प्राप्यते वा याभिस्ताः ।

IV.3.101. अमात्रशब्दस्य ह्रस्वः । मात्रा परि- ( अमत्रः ) माणम्, अपरिमाणोऽभ्यमितो वा अहिंसितः । मितशब्दस्य मत्रभावः ।

IV.3.102. ऋची स्तुतिः । तया समः । अधिक- ( ऋचीषमः ) गुणाध्यारोपेणापि कृता स्तुतिः अनुवादिनी सा नातिरिच्यत इत्यर्थः ।

IV.3.103. अर्शशब्दोऽश्लीलवाची । रातेः क्तिनि (अनर्शरातिम्) रातिर्दानम् । अश्लीलविषया रातिर्दानं यस्य सोऽर्शरातिः पापकदामः, तद्विपरीतोऽनर्शरातिः । उत्कृष्टस्य दातेत्यर्थः ।

IV.3.104. अर्तेः 'अन्येभ्योऽपि दृश्यन्ते' इति (अनर्वा) वनिप् । नञ्समासः । 'अर्वणस्त्रसावनञः' इति शातृवद्भावाभावः । अप्रत्यृतः अप्रतिगतोऽन्यस्मिन् अन्यमनाश्रितः स्वतन्त्र इत्यर्थः ।

„ अनर्वाणमप्रतिगतमन्यं प्रत्याश्रितम् । तथ अपराश्रितमित्यर्थः ।

II.475. असामीत्यनवगतम् । अत्र च सामिशब्द एवानवगतो यत आह सामिप्रतिषिद्धमसामीति । सामीति कस्मात् ? स्यतेः समाप्त्यर्थस्येति केचित् । तेन सामि समाप्तम् असमाप्तं चोच्यते तस्या नञ् प्रतिषेधः ततश्चासामि असमाप्तमित्यर्थः । अथवा न सामीति किं तर्हि ? सुसमाप्तमिति पाठान्तरेणार्थमाह । उदाहरणम्—
असाम्योजो बिभृथा सुदानवोऽसामि धूतयः शावः ।'''कण्वस्य । असामि असमाप्तमनन्तमित्यर्थः । सुष्ठु वा समाप्तं महदित्यर्थः ।

II.476. गल्दया गालनेन क्षारणेन प्रदानेन पूरणेन तप्तेत्यर्थः ।

II.477. ज्वलनवर्णहीना इत्यक्षरवर्णसामान्यादवगमः ।

II.479. वकुरेण भास्करेण दीप्तेन भयङ्करेण वा भासमानेन वा । केन? सामर्थ्यात् स्वेनायुधेन ज्योतिषा वा ।

II.480. वे इति द्विशब्दस्यार्थेऽपभ्रंशो दृष्टः । एकं कार्षापणमृणिकाय प्रयच्छन् तौ द्वौ मह्यं प्रतिदातव्यावित्येवमभिधेयेन दर्शयति । ततो द्विशब्दादेकशब्दान्नाटयतेश्च वेकनाटा एतत् । एतेनाहं द्विगुणकारिणो वा दायिनो वा द्विगुणं कामयन्त इति वेति ।

II.481. अभिधावतेत्यवगमः ।

II.482. अभिधावत रक्षत मोचयतेत्यभिप्रायः ।

,, ततोऽहुशब्दात् पापवचनाद्रो मत्वर्थे । अंहस्वानित्यवगमः ।

II.484. सत्त्ववाची प्रथमान्तं बलादतीत इति वाक्यस्यार्थे पदम् । बलशब्दादततेश्च बतो दुर्बल इत्यर्थः । अत्यस्तु बतेति निपातो·

IV.3.105. आसामीत्यनवगतम् । अयं च (असामि) सामिशब्द एवानवगतः । यत आह— 'सामि प्रतिषिद्धम् असामि' इति । सामि कस्मात् ? स्यतेः समाप्त्यर्थस्येति केचित् । तेन सामि समाप्तं असमाप्तं चोच्यते । तस्य नञ् प्रतिषेधः । ततश्च असामि असमाप्तमित्यर्थः । अथवा न सामीति । किन्तर्हि ? (अ) सुसमाप्तमिति पाठान्तरेणार्थमाह । उदाहरणम्-'असाम्योजो बिभृथा सुदानवः'। असामि असमाप्तमनन्तमित्यर्थः । सुष्ठु वा समाप्तं पूर्ववदित्यर्थः ।

IV.3.106. गल्दाशब्दो गालनपर्यायः । गल्दया (गल्दया) गालनेन क्षारणेन प्रदानेन पूरणेन तप्तेत्यर्थः ।

IV.3.107. ज्वलनेनाग्निना हीना इत्यर्थः । (जल्हवः)

IV.3.108. बकुरेण भास्करेण दीप्तेन भयङ्करेण वा (बकुरः) भासमानेन वा सामर्थ्यात् स्वेनायुधेन ज्योतिषा वा ।

IV.3.109. बेक इति द्विशब्दस्यार्थे बहुशो दृष्टः । (वेकनाटान्) एकं कार्षापणमापणिकाय प्रयच्छन् द्वौ मह्यं प्रतिदातव्यावित्येवमभिनयेन दर्शयन्ति । ततो द्विशब्दादेकशब्दान्नयतेश्च वेकनाटाः । द्विगुणकारिणो वा द्विगुणदायिनो वा द्विगुणं कामयन्त इति वेति ।

IV.3.110. अभिधावत रक्षत मोचयतेत्य- (अभिधेतन) भिप्रायः ।

IV.3.111. अंहः पापम्, रो मत्वर्थे अंहस्वान् । (अंहुरः)

IV.3.112. सत्त्ववाची प्रथमान्तः । बलादतीत ( बतः ) इति वाक्यस्यार्थे पदम् । बलशब्दादततेर्निष्ठायां च बलातीतः सन् बतः दुर्बल

ऽसत्त्ववचनोऽव्ययम् । यत आह निपातः खेदानुकम्पयोरिति ।'''खेदो दुःखं मानसमनुकम्पा दया तयोर्वर्तते ।

II.485. उदकं वृष्टिलक्षणमभिधेयम् । वातः पुरोवात एतद् वृष्ट्युदकमाप्याययति । तत वात आप्यायनोऽस्येति वाताप्यायन इत्यवगमः । अथवा वातो यदाप्याययति तेन वातेन तदाप्याययत इति कर्मोपपदस्थप्यायतेराङ्पूर्वस्य कर्तरि प्रत्ययो द्रष्टव्यः ।

II.486. चायन्निति वा कामयमान इति वावगमः।

II.488. रथीयतीति प्राप्ते रेफ उपजनः ।

II.490. असंक्रामणीमिति वा ल्युटि णिति प्रत्यये वावगमः। अथवा समानशब्द उपपदे क्रमेः 'जनसन' इत्येवं विटि 'विड्वनोरनुनासिकस्य' इत्यात्वे 'समानस्य छंदसि' इति च सभाव एतद्रूपम् । सभावेषु क्रामतीति सक्रा न सक्रा असक्रा तामसक्राम् ।

„ जसक्राम असंक्रामणीं यावज्जीवमनपायिनीम् । यद्वा समेष्वक्रान्तामगतामस्मत्सजातैरप्राप्तपूर्वामित्यर्थः ।

II.491. ब्रुवो वचनम् । तेन अनवक्षिप्तवचन इत्यवगतः । अप्रतिहतशासन इत्यर्थः ।

II.492. सदानोनुव इत्यवगमः । सदाकणलक्षणशब्दकारिणीत्यर्थः । नोनूयतेर्नोनुवा तस्याः सम्बोधनं सदेत्येतेन पुनः पुनर्दर्शनम् । दुर्भिक्षादिदेवता अलक्ष्मीर्वाभिधेया ।

II.494. ऋषौ पराशीर्णे इत्यवगमः , इन्द्रो पराशातनः । इतिहासपक्षे निर्वचनमेतत् । एवमवस्थस्य वसिष्ठस्य नप्ता । शमीचिरमते शक्तौ जात इत्यर्थः ।

इत्यर्थः । बत निपातोऽसत्त्ववचनोऽप्यव्ययम् । खेदो दुःखं मानसम्, अनुकम्पा, दया, तयोर्वर्तते ।

IV.3.113. उदकं वृष्टिलक्षणमभिधेयम् । वातः (वाताप्यम्) पुरोवात एतद्वृष्ट्युदकमाप्याययति वातेनाप्याय्यत इत्यर्थः । अथ वा वातो यदाप्याययति (तेन वातोप्याय्यत [प्याथाष्वत] इति) कर्मोपपदात् कर्तरि प्रत्ययः ।

IV.3.114. चायन् कामयमानो वा ।
(चाकन्)

IV.3.115. रथीयतीति प्राप्ते रेफ उपजनः ।
(रथर्यति)

IV.3.116. संपूर्वात् समानपूर्वाद्वा क्रमेः 'जन-(असक्राम्)सनखनक्रमगमो विट्' छन्दस्युपसर्गेऽपि इति हि तत्रानुवर्तते । 'विड्वनोरनुनासिकः स्यात् ।' आतो लोपश्छान्दसः । 'समानस्य छन्दस्यमूर्ध' इति समानशब्दस्य सभावः । न सक्रा असक्रा ताम् । यावज्जीवमनपायिनीं समानेष्वक्रान्तामगताम् । अस्मत् सजातैरप्राप्तपूर्वामित्यर्थः ।

IV3.118. ब्रवः वचनम् । अनवक्षिप्तवचनः । (अनवब्रवः)'''अप्रतिहतशासन इत्यर्थः ।

IV.3.119. सदानोनुवशब्दात् सम्बुद्धौ नोनुव-(सदान्वे) शब्दस्य न्वेभावः । दुर्भिक्षाधिदेवता अलक्ष्मीर्वाभिधेया । सदा करणलक्षणशब्दकारिणीत्यर्थः ।

IV.3.21. पराशीर्णः पराशरः ऋषिः । पराशीर्णस्य (पराशरः) स्थविरस्य वसिष्ठस्य नप्ता चिरमृते शक्तौ जात इत्यर्थः । 'पराशरः शतयातुर्वसिष्ठः ।' रक्षसां पराशातयिता पराशर इन्द्रः ।

II.495. आयुधविशेषोऽभिधेयः ।
„ इह शतघ्न्यां वर्तते ।

II.496. कृतदन्त इति तु न्याय्यम् । उदाहरणे देवतापदसामान्याधिकरण्यात् । सर्वथा मन्त्रे स्त्रीलिङ्गप्रतिरूपकमेतत् । यतः पुल्लिङ्गमेव दर्शयति । कः तरळ इति पाठः ।

II.497. दानमनस इत्यवगमः ।

II.498. संशृणोतेरिच्छायां छान्दस आरः प्रत्ययो द्रष्टव्यः । संशेतेर्हिंसार्थस्येति केचित् । संस्मरणदीर्घनिद्रया दीर्घदिदृक्षया संशयानं वा हिंसात्मनस्तामिच्छतीति शरारुः संशिशयिषुरिति ।
संशिशयिषुर्वा दीर्घनिद्रयाभिमन्यते । दुष्टेनाशयेनाभिभवति ।

499. इदंयुरित्यनवगतम् । क्वचिन्मान्ताव्ययप्रतिषेधादनेकार्थे च । प्रत्ययस्यार्थभेदादिदं कामयमान उच्यते कर्मेदं सामान्येन प्रदर्शिते यथाभिलषितं धानादि द्रव्यमिच्छति स इदंयुः । तेन चेदं वसुयुः, वागंयुः,किंयुः, विप्रयुरित्याद्यवगतानवगतक्यजन्तमात्रोपसंग्रहार्थे निगमेषु पठिता विशेषार्थमिति निरुक्तकाराभिप्रायः । अत एव च सामान्यस्य विशेषोऽनुदाहरणमिति । तेषां च वसूयवो वसुकामा इत्यादिषु बहुधागतत्वाद् विशेषेणेह किञ्चिद् भाष्यकार उदाजहार । अनेकार्थत्वं दर्शयन्नाह अथापि तद्वदर्थे भाष्यते युज्यत इत्यर्थः । तदिति मतुप्प्रकृतिः सामान्येन निर्दिश्यते । तेन तद्वदर्थे मत्वर्थ इत्यर्थः ।

IV.3.122. शतघ्न्यामायुधविशेषे वर्तते ।
(क्रिविर्दती)

IV.3.123. कृत्तदन्तशब्दस्य करूळतीभावः । (करूळती) सुपां सुलुक् इति सोर्लुक् । स्त्रीलिङ्गप्रतिरूपकमेतत् । तत्कः' इति पुल्लिङ्गनिर्देशात् ।

IV.3.124.दानमनस इत्यर्थः ।
( दनः )

IV.3.125. ससुपसर्गार्थविशिष्टात् शृणातेः···
( शरारुः )···आरुर्व्यत्ययेनेच्छायां भवति । यद्वा समुपसर्गार्थविशिष्टाच्छिदेर्हिंसार्थाद्वा···ग्रहणं कर्तव्यमिति तच्छीलादिषु विहित आलुभुजिन्च्छायामत्र भवति । संसरणदीर्घनिद्रया दीर्घदिदृक्षया संशयितं वा हिंसात्मनस्तामिच्छतीति शरारुः । 'शरारुरभिमन्यते' संशिशरिषुः संशयिषुर्वा दीर्घनिद्रया हि मन्यते । दुष्टेनाशयेन हि भवति ।

IV.3.126.इदंयुरित्यनवगतम् । क्वचि मान्ताव्यय-
( इदंयुः) प्रतिषेधात् अनेकार्थत्वे प्रत्ययस्यार्थे भेदात् 'इदं कामयमान उच्यते ।'कर्म इदं सामान्येन प्रदर्शितम् । यथा हि लक्षितं धनादि तद्य इच्छति स इदंयुः । तेनेदं वसूयवः । शंयुः किंयुः विप्रयुरित्याद्यवगतानवगतक्यजन्तमात्रोपसंग्रहार्थं निगमेषु पठितं न विशेषार्थमिति निरुक्तकाराभिप्रायः । अत एव च सामान्यविशेषयोरुदाहरणमिति । तेषां च वसूयवो वसुकामा इत्यादिषु बहुधागतत्वाद्विशेषेणेह किञ्चिद्भाष्यकारोदाजहार । अनेकार्थतां दर्शयन्नाह'अथापि तद्वदर्थे भाष्यते ।' प्रयुज्यत इत्यर्थः । तद्वदिति मतुप्प्रकृतिः । सामान्येन निर्दिश्यते । तेन तद्वदर्थे मत्वर्थ इत्यर्थः ।

II.500. किंकृताः क्रिया इत्यवगमः । मन्त्रे सप्तम्यन्त इति तथैवायं निगमेषु पठितः ।

II 501. कीकटनाम्नि अनार्यनिवासे देशे कृपणा वा कीकटाः ।

„ किंकृताः किमर्थमुत्पादिता अदो वाराः किमा करोतेश्चेत्यर्थः । अथवा यागदानादिभिः किंकृताभिः किं पिबतखादनेत्येवंप्राया एवं प्रेप्सा प्रेक्षा येषां ते अश्रद्दधाना नास्तिकाः किंक्रियाः सन्तः कीकटाः ।

II.503. भिन्द इति वा भयद इति वा भासमानो द्रवतीति वा वाक्यार्थे पदवचनम् । विदारणभयदानभासमानद्रवलक्षणानामर्थे सम्भवात् । अक्षरवर्णसमान्याच्चेदमाह ।

II.505. प्रसिद्धत्वान्निगमो न प्रदर्शितः ।

„ कर्तेत्यवगमः ।

II.506. गर्भस्याच्छादनमभिधेयम् ।

II.507. जरायोरन्तर्गर्भवेष्टनम् ।

„ पृथिव्यभिधेया । अपगतभासमित्येवमाद्याः शब्दसमाधाय उपपद्यन्ते । धात्वन्यत्वकृतो विशेषः ।

III.73. अग्निरग्रणीः···मुख्यसंस्तुतः । सेनानीत्वाद्वा । 'अग्निर्देवतानां सेनानीः' इति हि विज्ञायते । अग्रोपपदात् 'सत्सूद्विष' इत्यादिना क्विप् । यद्वा अग्रं प्रथमं यज्ञेषु कर्तव्येषु तादर्थ्येन प्रणीयते । अग्रशब्दादेव नयतेश्च पूर्ववत् प्रत्ययः स एव । यद्वा अङ्गं शरीरं यज्ञस्य तन्नयति सन्नममानः ।··· सम्यक् स्वयमेव प्रह्वीभवन् । हविषां वा करणत्वेन साधनभावं प्रतिपद्यमान इत्यर्थः ।

IV.3.127. मन्त्रे सप्तम्यन्त इति तथैव निगमेषु (कीकटेषु) पठ्यते । किंकृताः किंक्रियाः वा सन्तः कीकटाः । किंकृताः किमर्थमुत्पादिताः, असदाचाराः । अथ वा यागदानादिभिः क्रियाभिः कृताभिः पिबत खादतेत्येवंप्राया प्रेक्षा येषां ते किंक्रियाः । 'किं ते कृण्वन्ति कीकटेषु गावः ।' कीकटनाम्नि अनार्यनिवासे देशे । कृपणा वा कीकटाः ।

IV.3.128-129. भिन्द इति वा भयद इति वा (बुन्दः-बृन्दम्) भासमानो द्रवतीति वाक्यार्थे पदवचनम् । विदारणभयदानभासमानद्रवणलक्षणानामर्थे सम्भवादक्षरवर्णसामान्याच्चेदमुक्तम् ।

„ प्रसिद्धत्वान्निगमो न प्रदर्शितः ।

IV.3.130. कर्तेत्यर्थः ।

(किः)

IV.3.131. गर्भस्याच्छादनमभिधेयम् ।

(उल्बम्)

„ जरायोरन्तर्गर्भवेष्टनं श्रुतम् ।

IV.3.132. पृथिव्यभिधेया । अपगतभासमि- (ऋबीसम्) त्येवमाद्याः शब्दसमाधय उपपद्यन्ते । धात्वन्यत्वकृतो विशेषः ।

V.1.1. अग्रोपपदान्नयतेः 'सत्सूद्विष' इत्यादिना (अग्निः) क्विप् ।···इति बाहुलकादिन् प्रत्ययोऽग्रशब्दस्य रेफाकारयोर्लोपश्च । अग्रणीः । मुख्यत्वसंस्तुतेः । सेनानीत्वाद्वा । 'अग्निर्देवानां सेनानीः' इति श्रुतिः । अग्रं प्रथमं यज्ञेषु कर्तव्येषु तादर्थ्येन प्रणीयते । अङ्गोपपदाद्वा समर्थोविशिष्टान्नमतेः···। अङ्गं शरीरं यज्ञस्य तत् सन्नममानः स्वयमेव प्रह्वीभवन् हविषां पाककरणत्वेन साधनभावं प्रति-

अस्मिन् पक्षे अञ्जशब्दात् पूर्वभागः । सप्तमतेः परभागः ।······ नञोऽकारः क्नोपयतेः स्नेहार्थस्य ककारनकारौ । ककारस्य गकारापत्तिः ।···नञ्‌विशिष्ट स्नेहयतेः स्नेहनविपरीतं विरूक्षणं लक्ष्यते । विरूक्षयतीत्यर्थः । दग्धव्यस्यैधादेः शोषणादक्नोपनो विरूक्षण इत्यर्थः ।··· अञ्जेर्जकारस्य दहेश्च हकारस्य निष्ठायां गकारापत्तिर्द्रष्टेति ।···एतेः अयनमित्यादिरूपत्वेन परिणतस्याकारमादत्ते । गकारं विकल्पेन । नीः नयतिः परो डिप्रत्ययान्तः । इतश्चात्रायमभिव्यक्तश्च सुप्रकाशकत्वाद्दाहात्मकत्वेन वा नयति हविर्देवान् प्रतीत्यग्निः ।

पद्यमानो नयति । नञ्पूर्वात् क्नोपयतेः स्नेहनार्थात् निन्प्रत्यये ककारनकारव्यातिरिक्तं लुप्यते । ककारस्य गकारापत्तिश्च । नञ् विशिष्टेन स्नेहनेन च तद्विपरीतं विरूक्षणं च लक्ष्यते, विरूक्षयतीत्यर्थः । दग्धव्यस्यैधादेः शोषणाद्विरूक्षण इत्यर्थः । यद्वा एतेरयनमित्यादौ दर्शनादकारः । अञ्जेर्जकारस्य दहेर्हकारस्य च निष्ठायां गकारापत्तिर्द्रष्टव्येति तयोरन्यतरस्मात् गकारः । नयतेः पूर्ववड्डिः । इतश्चांजनयमभिव्यक्तं वा सुप्रकाशकत्वात्मकत्वेन वा नयति हविः प्रतीत्यग्निः ।

III.83. जातानि सर्वाणि भूतानि वेद लोकपालत्वात् । जातानि वा तिर्यगादीनप्येनं विदुः । कारकभेदः केवलम् । सर्वस्मिन् वा भूतजाते विद्यते ।···जातवित्तो···वित्तं धनं हविर्लक्षणमैश्वर्यादि इतरद्वा ।···जातविद्यो वा 'विद विचारणे' इत्यस्य, वेदो विचारणं जाता विद्या यस्य वैश्वानरविद्यायामिह च कृत विचार इत्यर्थः । श्रुतेर्वोत्तरपदं जातमात्र एव विद्योतते प्रज्ञानस्वभावत्वाद् जात विद्योतन इत्यर्थः ।

V.1.2. जातानि सर्वाणि भूतानि वेद लोकपाल(जातवेदाः)त्वात् । तानि चैवं विदुः । जाते जाते सर्वस्मिन् भूतजाते विद्यते । जातं वेदो हविर्लक्षणं धनमैश्वर्यादि इतरद्वा यस्य सः । जातं वेदो विचारणं यस्य, वैश्वानरविद्यया । इह च कृतविचार इत्यर्थः । जातमात्र एव विद्योतते प्रज्ञानस्वभावत्वात् । जातं वेदः प्रज्ञानं वास्य ।

III.86. सर्वान् नरानितो लोकान्तरं नयति । ···विश्वानराणां नेतृत्वेन सम्बन्धी वैश्वानरः । इदमर्थेऽण् । विश्व एनमित्यादि कर्मार्थे प्रणयति···अपि वा विश्वान् जन्तून् अरः 'ऋ गतौ' इत्यस्य छान्दसत्वाद्भूते पचादित्वादच् । उपपदविभक्तेश्चालुक् ।···सर्वाणि भूतानि अरः प्रत्यृतः प्रविष्ट इति वैश्वानरः । ···स च सामर्थ्यात् प्राणाख्यो वायुः । तेन जन्यमानत्वात् तस्यापत्यं वैश्वानरः ।

V.1.3. विश्वान्नरानितो लोकाल्लोकान्तरं नयति । (वैश्वानरः) इदमर्थेऽण् । विश्वानराणां नेतृत्वेन सम्पन्नो वा कर्मार्थे प्रणेतृत्वेन सम्पादिनो (तो) ऽस्य वैश्वानरः ।···अपि वा विश्वान् जन्तून् अरः । 'ऋ गतौ' इत्यस्य छान्दसत्वात् पचाद्यच् । उपपदविभक्तेश्चालुक् । सर्वाणि भूतान्यरः प्रत्यृतः प्रतिगतः प्रविष्ट इति विश्वानरः प्राणः । तेन जन्यमानत्वात्तस्यापत्यं वैश्वानरः ।

| | |
|---|---|
| III.113. धनस्य बलस्य वा दाता । | V.2.1. धनस्य बलस्य वा दाता द्रविणोदाः । (द्रविणोदाः) |
| III.125. सा हि पुत्रापेक्षया निर्वैस्तरान्नता कात्स्न्यपक्षेऽभिप्रेता । | V.2.3. पुत्रापेक्षया नीचैः सुतरां नतो हि पौत्रः । (तनूनपात्) |
| III.129. [ द्वारो जवतेर्वा । द्रवतेर्वा । वारयतेर्वा । तासामेषा भवति । ] द्वारः कस्मात् ? जवतेर्गतिकर्मणः । जकारस्य दकारापत्त्या । द्रवतेर्वा रेफलोपे ।···वारयतेर्वा दकार उपजनः । अनभिमतो हि तास्वेव निवार्यते । | V.2.7. जवतेर्वा द्रवतेर्वा वारयतेर्वा स्यात् । ( द्वारः ) जवतेर्जकारस्य दकारः, द्रवतेः रेफलोपः, वारयतेर्डागमश्च निपातनात् । गम्यते ह्याभिर्यज्ञगृहम् । अनभिमतो हि तास्वेव निवार्यते । |
| II. 15. द्वार इति, द्वारो जवतेर्वा द्रवतेर्वा वारयतेर्वेति | |
| III.131. अग्निपक्षे दीप्तिरुषास्तमसो विवासनात् । आहुतिर्नक्ता अनक्त्यग्निमिति स्मयतेः । | V.2.8. अग्निपक्षे उषा दीप्तिस्तमसो विवासनात् । आहुतिर्नक्ता अनक्त्यग्निमिति । (उषासानक्ता) |
| ,, दैव्या होतारा आकारो द्विवचनस्य स्थाने । पार्थिवमध्यमावभिप्रेयौ । | V.2.9. उभयत्राकारो द्विवचनस्य ।···पार्थिवमध्यमावग्नी उच्येते । ( दैव्या होतारा) |
| ,, तिस्रो देवीः प्रथमार्थे द्वितीयेति । | V.2.10. प्रथमार्थे द्वितीया । (तिस्रो देवीः) |
| III.132. त्वष्टा मध्यमस्थान आप्रीत्वादिह समाम्नातः । तूर्णशब्दादश्नोतेश्च त्विषेर्वा स्याद्दीप्त्यर्थस्य । | V. 2. 11. तूर्णशब्दोपपदादश्नोतेस्तन्निपात्यते । ( त्वष्टा ) त्वष्टा मध्यमस्थानः । आप्रीत्वादिह समाम्नातः । त्विषेः···दीप्तो ह्यसौ वैद्युतत्वात् । |
| III.122. हे वनस्पते वनानां पाता अग्ने । | V.2.12. वनानां पाता । (वनस्पतिः) |
| III. 123. तस्मादग्निरित्यभिप्रायः । अन्तरनुप्रविष्टोऽपि यतो निर्भवति । अतः पानेति व्यपदिश्यते । पिबतेर्वैतद्रूपमिति । | ,, अग्निरन्तरनुप्रविष्टोऽपि यतो न दहति । अतः पानेति व्यपदिश्यते । पिबतेर्वैतद्रूपम् । |
| III.138. अत्र स्मरणार्थमुत्तमस्य प्रयाजस्य वक्ष्यमाणदेवतासंकीर्तनकृतत्वात् स्वाहेति । एवं पूर्वोक्तिकरणमुच्चारणं वा समीक्ष्य वक्ष्यमाणदेवतानां ताः स्वाहाकृतय उच्यन्ते । | V.2.13. अत्र स्मरणार्थमुत्तमस्य प्रयाजस्य वक्ष्यमाणदेवता सङ्कीर्तनपरत्वात् स्वाहेति । एवं पूर्वोक्तिकरणमुच्चारणं वा समीक्ष्यमाणदेवतानां ताः स्वाहाकृतय उच्यन्ते । (स्वाहाकृतयः) |
| III.146. मस्जेरुकप्रत्यये जस्त्वोत्वाभ्यां मज्जूका इति प्राप्ते छान्दसत्वाज्जरकस्य [डकारः] । | V.3.3. मस्जेः 'शलि मण्डिभ्यामूकन्' इति बाहुलकादूकनि जस्त्वकुत्वाभ्यां ( मण्डूकाः ) |

झल्यपि चान्त्यात्पूर्वो नुम् । मदतेर्वा मौवादिकस्य मोदतिकर्मणः ।···मन्दतेर्वा चौरादिकस्य 'मद तृप्तिधने' इत्यर्थस्य तृप्तिकर्मणः ।···नित्यमदत्वान्नित्यतृप्तत्वान्नित्यहृष्टत्वाद्वा मण्डूकाः । 'शलिमण्डिभ्यामूकण्' इति मण्डयतेरुत्पत्तिलाघवादिति वैयाकरणाः । रेखाभक्तिविचित्रकत्वान्मण्डिता इव । मण्ड उदकम् । तस्मिन्नोको निवास एषामिति वा । प्रसङ्गादाह मदेर्हर्षार्थस्य । हृष्यन्ति हि तत्स्नानपानावागाहार्थिनः ।

III.148. अश्नोतेः कर्मभूता व्याप्नुवन्ति गृहन्त्येनां देवितारः । करणभूता वा अभिव्याप्नुवन्त्येभिः परस्परमित्यर्थः ।

III.150. नरान् शंसतीति कर्मोपपदे 'अन्येषामपि दृश्यते' इति······नरशंसः सन् नराशंसः। ततः स्वार्थिकः प्रज्ञादित्वादण् । नराशंसः एव नाराशंसः । मन्त्रोऽभिधेयः ।

III.153. [रथो रंहतेर्गतिकर्मणः । स्थिरतेर्वा स्याद् विपरीतस्य । रममाणोऽस्मिंस्तिष्ठतीति वा । रपतेर्वा रसतेर्वा । तस्यैषा भवति ।

स कस्मात् ? रंहतेः रथः । स्थिरतेर्वा विपरीताक्षरस्य । रममाणो विस्रब्ध इत्यर्थः । द्विधातुजत्वमत्र । रमतेरेवेति वैयाकरणाः । 'हनिकुषिनीरमिकाशिभ्यः क्थन्' इति क्थन् स्मरणात् । रसतेर्वा शब्दार्थस्य । भवति हि तस्यागच्छत उपलब्धिः ।

III.154. दुन्दुभिः शब्दानुकरणनिमित्तमेतन्नाम । द्रुमशब्दस्य वा रेफलोपः । भिदेश्चाद्यन्तविपर्ययः । उकारश्चोपजन इत्याह । द्रुमो भिन्न इति वेति । भिन्नो निष्कुषितः । दुन्दुभ्यतेर्वा स्यान्नैरुक्तधातोः । ताड्यते ह्यसौ युद्धसमये ।

मज्जूका इति प्राप्ते छान्दसत्वाज्जकारस्य डकारापत्त्या चान्त्यात् पूर्वस्य नुमि ष्टुत्वम् । निमज्जन्ति हि ते जले । मदतेस्तृप्त्यर्थत्वात् मन्दतेर्वा मोदत्यर्थात्··· नित्यमदत्वात् नित्यतृप्तत्वात् नित्यहृष्टत्वाद्वा मण्डूकाः । मण्डतेर्वा यथाप्राप्ते ऊकनि मण्डूकाः । रेखाभक्तिविचित्रवद्वा मण्डितादेव ।···मण्ड उदकम् । हृष्यन्ति हि तत्र स्नानपानावगाहार्थिनः । मण्डे ओको निवास एषाम् । मण्डशब्दादोकशब्दाच्च मण्डूकाः ।

V.3.4. अश्नोतेः······अश्नुवन्ते व्याप्नुवन्ति गृहन्त्येनान् देवितारः । अभिव्याप्नुवन्त्येभिः (अक्षाः) परस्परमिति वा ।

V 3.6. नरान् शंसतीति कर्मोपपदेऽण् । 'अन्येषामपि (नाराशंसः) दृश्यते ।' ततः प्रज्ञादित्वात् स्वार्थिकोऽण् नराशंस एव नाराशंसः । मन्त्रोऽत्राभिधेयः ।

V.3.7. रंहतेर्गतिकर्मणः । 'हनिकुषिनीरमिकाशिभ्यः (रथः) क्थन्' इति क्थन् ।···स्थिरतिर्नैरुक्तधातुः । विपरीताक्षरः ।······यद्वा रमतेस्तिष्ठतेश्च द्विधातुजं (रूपम्) । रममाणो विस्रब्धोऽस्मिंस्तिष्ठति रथी । (यद्वा) रमतेरेव यथाप्राप्तः क्थन् । रमणीयो हि रथः । रसतेर्वा शब्दार्थात् ।······भवति हि तस्यागच्छत उपलब्धिः ।

V.3.8. शब्दानुकरणनिमित्तकमेतन्नाम द्रुमशब्दस्य (दुन्दुभिः) वा रेफान्तलोपः । भिदेश्चाद्यन्तविपर्ययः । उकारश्चोपजनः । द्रुमो भिन्नः निष्कुषितः । दुन्दुभ्यतेर्वा नैरुक्तधातोर्वधकर्मणः इन । ताड्यते ह्यसौ युद्धसमये ।

| | |
|---|---|
| III.155. इषवो निधीयन्ते यस्मिन् । कर्मण्यधिकरणे च इति किः । | V.3.9. इषवो निधीयन्तेऽस्मिन् । 'कर्मण्यधिकरणे (इषुधिः) च ।' इति किः । |
| ,, हस्ते हस्तसमीपे स्थितो हन्यते ज्यया शरपुङ्खेन । | V.3.10.हस्तसमीपे स्थितो हन्यते ज्यया शरपुङ्खेन (हस्तघ्नः) वा । |
| III.157. धन्वतेर्गत्यर्थस्य वधार्थस्य वा ।...... धन्वन्त्यस्मादपयन्ति अस्मात् । अपयन्तश्च घ्नन्तीषवः । अपादानत्वाच्चास्योभयोपपत्तित्वम् । | V.3.12. धन्वतेर्गत्यर्थाद् वधार्थाद्वा ।...... (धनुः) धन्वन्त्यपनयन्त्यस्मादिषवः, घ्नन्ति वा । अपादानत्वाच्चास्या वधोपयोगित्वम् । |
| III.158.इषति हन्तीति गतिकर्मणो वधार्थस्य वा । | V.3.14. इषतेर्गतिकर्मणो वधार्थाद्वा । (इषुः) |
| III.161. उरु विस्तीर्णं खं सुषिरमस्य । ऊर्ध्वं वा उपरि भागे खं मुखमस्य । ऊल् अन्नं तत्करोतीत्युक्तमुलूखलम् । सर्वनिर्वचनेषु वर्णव्यापत्त्यादि वाच्यम् । ततः शब्दानुकरणनिमित्तत्वाद्वर्णव्यापत्त्यादिना उलूखलमभवदिति । तस्मादनुकरणनिमित्तकमेवाङ्गीकृत्य ब्राह्मणमपि दर्शयति । 'उरु मे कुरु' इति । एवमुरुकरमेतत् । | V.3.16. उरु विस्तीर्णं खं सुषिरमस्य । उर्ध्वं वा (उलूखलम्) उपरि भागे खं मुखमस्य । ऊर्क् अन्नं तत्करोति इत्यूर्करम् ।......शब्दानुकरणनिमित्तकं वा नामैतत् । यतो मुसलाघातजनितध्वनिमुरु मेषु कुर्वित्येवमब्रवीत् । सर्वनिर्वचनेषु वर्णव्यापत्त्यादि वाच्यम् । |
| III.162.प्रजां प्रजाहेतुभूतं बीजं वर्षति सिञ्चति । बृहेर्वातिशयेन [रेतः] सेक्तुं बृहति उद्यच्छत्यात्मानम् । | V.3.17.प्रजाहेतुभूतं बीजं वर्षति सिञ्चति । वृहेर्वा... (वृषभः) अतिशयेन रेतः सेक्तुं वृहति उद्यच्छत्यात्मानम् । |
| III.163. द्रुमविकारकाष्ठखण्डः । | V.3.18.द्रुमविकारः काष्ठखण्डोऽत्र द्रुशब्देनोच्यते । (द्रुघणः) |
| III.166. ओषद् दाहं क्षुधं धयन्ति पिबन्ति नाशयन्तीत्यर्थः । | V.3.22.ओषं दाहं धयति पिबति विनाशयतीत्यर्थः । (ओषधयः) दोषं वातपित्तादिकं वा । |
| III.167. दोषं वातपित्तादिकं वा । | |
| II.97. प्ररमयति प्रक्रीडयति भूतानि नक्तञ्चराणि कौशिकपिशाचादीनि । उपरमयति कर्मभ्य इतराणि दिवाचराणि । | V.3.23. प्ररमयन्ति भूतानि नक्तञ्चारीणि, उपरम- (रात्रिः)यन्ति दिवाचराणि स्वव्यापारेभ्यः, प्रदीयन्तेऽस्यामवश्याया मध्यमेन । |
| ,, प्रदीयन्तेऽस्यां मध्यमेन अवश्यायाः । | |
| III.168. अरण्यानी अरण्यपालयित्री अधिदेवता काचिदिति नैरुक्ताः । 'महदरण्यम्' इति | V.3.24. अपार्णमपगतं ग्रामाद्रि । अरमणं वा । (अरण्यानी)न हि तद्रमयति, अरण्यं वनम् । अरण्य- |

| | |
|---|---|
| वैयाकरणाः । अपार्णमपगतम् । कुतः ? ग्रामादिति पूर्वस्यैव निराकांक्षतायै । अरमणं वा नहि तद्रमणमिति भयहेतुत्वात् । | पालयित्री अधिदेवता काचिदिति नैरुक्ताः। महदरण्यमिति वैयाकरणाः । |
| III.169. श्रत् सत्यं तस्मिन् धीयते । तथा च मन्त्रे 'अश्रद्धामनृतेऽदधात् श्रद्धा सत्ये प्रजापतिः' इति । सा च धर्मार्थसुखादिवर्गे यथाशास्त्रमधिकृतपुरुषस्य कर्मानुष्ठानहेतुभावप्रदा बुद्ध्यधिदेवता श्रद्धा । | V.3.25.श्रत् सत्यं तस्मिन् धीयते। तथा च मन्त्रः (श्रद्धा) 'अश्रद्धामनृते दधाति श्रद्धां सत्ये प्रजापतिः' इति । <br> „ धर्मार्थसुखापवर्गेषु यथाशास्त्रमधिकृतः पुरुषस्य कर्मानुष्ठानहेतुभावप्रख्यानात् (प्रस्थानात् ) बुद्ध्यधिदेवता श्रद्धा । |
| III.170. अग्नायी सा पुनरग्नेः पत्नी । <br> IV.146. अग्नायी अग्नेः पत्नी । | V.3.28. अग्नेः पत्नी । <br> (अग्नायी) |
| III.171. मुसलं मुहुर्मुहुः सरणात् । उत्क्षिप्योत्क्षिप्य निपातनान्मुहुः सरणम् । | V.3.29. उत्क्षिप्योत्क्षिप्य निपातनान्मुहुः सरणं (उलूखलमुसले) मुसलम् । |
| III.172. शकटे सोमलक्षणानि हवींषि निधीयन्ते ययोः । | V.3.30. सोमलक्षणानि हवींषि निधीयन्ते ययोः। (हविर्द्धाने) |
| III.166. विविधं कूलपाटनात् । विपाशानाद्वा यथा तथा वक्ष्यति । विविधदेशप्रापणाद्वा । उदकस्योत्तानत्वात् ।···विपाशनादित्युक्तस्योपपत्तिवचनं व्यपाशयन्त व्यपास्ता विक्षिप्ता हतपुत्रस्योद्भूततमोवृत्तेर्वसिष्ठस्येतिहासः । | V.3.32. विविधं कूलपाटनात् । विपाशनात् । ( विपाट्शुतुद्र्यौ ) अपुत्रस्योद्भूततमोवृत्तेर्मुमूर्षोर्वसिष्ठस्य कण्ठे शिलाबन्धन( ने )साधनभूता पाशा अस्यां ( व्यपाशयन्त विक्षिप्ताः ) । विविधदेशप्रापणाद्वोदकस्यापनत्वात् विपाट् । |
| III.165. शुतुद्री शुद्राविणीति निर्वचनम् । शु इति क्षिप्रनाम । क्षिप्रद्राविणीत्यर्थवचनम् । आशुशब्दात् तुदेः [ च ] शुतुद्री । तुन्नेव प्रतोदने । | „ शुतुद्री शुद्राविणीत्यर्थः । आशु-तुन्न-द्राविणीशब्देभ्यो वा । आशु तुन्ने प्रतोदे द्रवतीति शुतुद्री । |
| III.174. ते हि ज्ययाकृष्यमाणे सङ्गच्छतः। <br> „ हिंसायां हि ते साधने भवतः । | V.3.33. ते हि ज्ययाकृष्यमाणे सङ्गच्छेते । ( आर्त्नी ) हिंसासाधने भवतः । |
| III.175. शुनो वायुः। क्षिप्रं वातीति निर्वचनम्। अन्तरिक्ष इत्यर्थप्राप्तार्थवचनम् । सीरः सरणात् | V.3.34.क्षिप्रं गच्छत्यन्तरिक्षमिति शुनो वायुः।··· (शुनासीरौ ) सदा सरणात् सीर आदित्यः। |
| „ देव्यौ जोषयित्र्याविति निर्वचनेन प्रथमाद्वितीयस्य स्थाने पूर्वसवर्ण इति । अभि- | V.3.35. देव्यौ जोषयित्र्यौ । पूर्वसवर्णः । द्यावा- ( देवीजोष्ट्री ) पृथिव्यौ अहोरात्रे वाभिधेये । सस्य- |

धेयमाचष्टे । द्यावापृथिव्याविति वाहोरात्रे वा अन्ये नैरुक्ताः । सस्यं व्रीह्यादि । समा-संवत्सरः । एतद्देवीजोष्ट्रीशब्दवाच्यमिति कात्थक्यो नैरुक्तविशेष मन्यत इति शेषः ।

समे इति कात्थक्यः । सस्यं व्रीहिः, समा-संवत्सरः ।

IV.4. वरुणः । अन्तरिक्षे उदकस्यावरणाद्वायुरेव ।

V.4.2. अन्तरिक्षे उदकमावृणोति (इति वरुणः) । (वरुणः)

IV.6. अत्यर्थं वा शब्दं कुर्वन्मेघोदरस्थो द्रवति । रोदयतेर्वा इतीतिहासाश्रयं निर्वचनम् । स हि शत्रुकलत्राणि रोदयति । ब्राह्मणोक्तमपि निर्वचनं दर्शयति । यदरुददिति काठकं प्रवचनम् । यदरोदीदिति हारिद्रविकं मैत्रा-यणीयानाम् । रुद्रः किल पितरं प्रजापति-मिषुणा चिच्छेद । तमनुशोचन्नरुदत् ।··· काठकम् । 'यदरोदीत्तद्रुद्रस्य रुद्रत्वम्' इति हारिद्रविकम् ।

V.4.3. रोरूयमाणोऽत्यर्थं शब्दं कुर्वन् मेघोदरस्थो (रुद्रः) द्रवतीति रोरूयमाणशब्दपूर्वाद् द्रवतेर्वा 'रोदेर्णि लुक् च' इति रक् । स हि शत्रुक-लत्राणि रोदयति । रुदेरेव वा णिजन्तात् बाहुलकाद्रक् । 'रुद्रः किं पितरं प्रजापति-मिषुणा चिच्छेद । तमनुशोचन्नरुदद् यदरु-दत्तद्रुद्रस्य रुद्रत्वम्' इति ।

IV.10. इन्द्रः कस्मात् । इरा अन्नं तेन सम्बन्धात् तद्धेतुभूतमुदकं लक्ष्यते । लक्षितलक्षणया तेनापि तदाधारभूतो मेघः । इराहेतुभूतो-दकाधारमपर्यन्तधारात्मना दृणाति विदारयति मेघम् । बीजं वाङ्कुरात्मना व्रीह्यादि । तदसौ वृष्टिप्रदानेन विदारयति । अङ्कुरो-द्भेदाभिप्रायं च विदारणम् ।···इरामन्नं ददाति ।···इरां दधातीति वा । तदेव पूर्व-पदम् । दधातेर्दानार्थस्य धारणार्थस्य वोत्तर-पदम् ।···इन्दवे द्रवति । द्रवतिर्गतिकर्मा । गच्छति सोमं पातुमित्यर्थः । तस्मिन्नेव वा रमते प्रियत्वान्नवन इति । इन्धे दीपयति भूतानि शरीरमध्यवर्ती पञ्चवृत्तिः प्राणो वायुः । शरीरभूतानि तेन विनाशादात्मनो वेपयन्ति । अत इन्धनादिन्द्रः ।···

इन्धेन एनं मध्यतो वा स्थितं शरीरे मध्य-मप्राणभावेन क्षेत्रज्ञसंज्ञकं प्राणैरितरैर्योगा-

V.4.4. इरा अन्नमनेन सम्बन्धाद्वा तद्धेतुभूतकं (इन्द्रः) बलं लक्ष्यते । तेन बललक्षितलक्षणया तदा-धारभूतो मेघः । इरां मेघं धारात्मना दृणाति विदारयति । बीजं व्रीह्यादि तथासौ वृष्टिप्रदानेन विदारयति । अङ्कुरोद्भेदेना-भिकाशश्च विदारणम् । इरामन्नं तद्ददाति वा । इरां दधाति धारयति वा । इन्दावुप-पदे द्रवतेः रमतेर्वा निपातनम् । इन्दवे द्रवति गच्छति सोमं पातुमित्यर्थः । इन्दौ रमतेऽतिप्रियत्वात् नान्यत्र । इन्धेर्वा निपा-तनम् । इन्धे दीपयति शरीरमध्यवर्ती पञ्च-वृत्तिः प्राणो वायुः । शरीरभूतादि इध्यते वा प्राणैः । शरीरमध्यवर्ती प्राणभावेन क्षेत्रज्ञ-सञ्ज्ञकः । प्राणैर्योगादिभिर्योगबलेन वा सम्यगभिमुख्येन दीपयति आत्मोपासकाः । इदमुत्पादीकरोति पश्यति वा इन्द्रः । इदं कृत्स्नं जगद् वृष्टिप्रदानद्वारेण करोति लोक-

दिभिः ।...समदीपयन् आत्मोपासका योग-बलेन । सम्यगाभिमुख्येन दीपितवन्तो दीपयन्ति वा ।...इदं कृत्स्नं जगत् । वृष्टि-प्रदानद्वारेण करोतीति । दृशेर्वोत्तरपदं लोक-पालत्वादस्य । सर्वस्य शुभाशुभकर्मणो दर्शनादेवौपमन्यवो मन्यते । इन्वतेर्वा पूर्व-पदम् । ईश्वर इनः । 'दृ भये'इत्यस्य ऋदो-रपि दरोभयं तत्करोतीति णिच । इनश्चासौ दारयिता चेति । द्रावयतेर्वोत्तरपदम् । आदर-यिता वा यज्वनाम् ।

पालत्वात्, अस्य सर्वस्य शुभाशुभकर्मणो द्रष्टा वा । इदुपपदे दारयतेर्द्रावयतेर्वा इन्द्रपदम् । इताश्च शत्रूणां दारयिता द्राव-यिता च । यद्वा, इताश्च यज्वनामादरयिता च । सर्वत्र निपातनाद्रूपसिद्धिः ।

IV. 13. प्रर्जन्यस्तृपेः । कथम् । अन्तर्णीतण्यर्थस्य क्विपि अन्ताद्यक्षरविपर्ययेण । तर्पयति तृप् । ततः परो जनशब्दो हितार्थे योनामकरणः । ...तृपेर्जनशब्दस्येत्याह तर्पयिता चासौ जन्य-श्चेति जनाय हितो जन्यः । परशब्दस्या-कारलोपे जयतेश्च न्यप्रत्ययः ।...अथवा प्रेत्यस्य रेफलोपेनार्जयतेश्चाकारयोः पररूप-त्वेन न्यप्रत्ययः । एवं तदाह प्रकर्षेणार्जयिता वा संगृहीता वा रसानामिति ।

V.4.5. तृपेरन्तर्णीतण्यर्थात् क्विपि तर्पयतीति तृप् । (पर्जन्यः) जनहितो जन्यः हितार्थे यत् । तृप चासौ जन्यश्चेति तपशब्दस्य परभावः ।...पर-शब्दातो लोपश्च निपात्यते । परः प्रकृष्टो जेता जनयिता वा । प्रशब्दोपपदादर्जयते-रघ्न्यादित्वान्निपातेन पर्जन्यः,प्रकर्षेणार्जयिता संग्रहीता रसानाम् ।

IV. 14. बृहतः पाता वाग्वात्मना शोषयिता भौमस्य रक्षिता वान्तरिक्षे रसस्य महतो जगतो वा ।

V.4.6. बृहतो भौमरसस्य वाग्वात्मना पाता पाल-(बृहस्पतिः) यिता पोषयिता रक्षिता वा पिता रक्ष-यिता महतो जगतो वा ।

IV. 15. ब्रह्मणोऽन्नस्य वृष्टिप्रदानादिना पाता रक्षिता । धात्वन्यत्वमात्रम् । हविषो वा पाता रक्षिता ।

V. 4. 7. ब्रह्मणोऽन्नस्य वृष्टिप्रदानादिना रक्षित (ब्रह्मणस्पतिः) हविषो वा ।

IV.16. निवसन्ति हि तेन हेतुभूतेन तत् क्षेत्रम् । तस्य पाता वा पालयिता वेति पतिः ।

V. 4. 8. निवसन्ति हि तेन हेतुभूतेन, तस्य (क्षेत्रस्य पतिः) पाता ।

IV. 19. सामर्थ्यात्तच्च वास्त्वन्तरिक्षम् । तस्य पाता अधिष्ठातृत्वेन ।

V. 4. 9. सामर्थ्यात्तच्च वास्त्वन्तरिक्षम्, तस्य (वास्तोष्पतिः) पाता अधिष्ठातृत्वेन ।

IV.21. यज्ञेन वाचः सम्भवात् प्राणस्य वाग्रूपतया व्यवस्थानात् प्राणो वाचः पातेति व्यप-दिश्यते ।

V. 4. 10. अतः प्राणस्य वाग्रूपतयाप्यवस्थानात् (वाचस्पतिः) प्राणो वाचः पातेति व्यपदिश्यते ।

अद्भ्य आदित्य आदित्यादयम् । अपि च 'यदा वा असावादित्यो न्यङ् रश्मिभिः' इत्येवमस्यादित्याज्जातत्वम् । तत्र मध्यमो जात इति एवमयं तनूनप्त्रा व्याख्यातः ।

IV.22. मध्यस्थानो वायुरित्युक्तम् ।

IV. 24. अथवा प्रयच्छति स्तोतृभ्यः कामानिति यमः ।

IV.26. मित्रः कस्मात् । प्रमीतेः प्रमीतिः प्रमरणं ततः प्रमरणाद् वृष्टिद्वारेण त्रायते । संमिन्वानो द्रवतीति वा 'डुमिञ् प्रक्षेपणे' सम्यक् प्रक्षिपन् वृष्टिम् । विधिमिव सेचते वा सम्यक् सिञ्चन् द्रवत्यन्तरिक्षे । मेदयतेर्वा स्नेहनार्थस्य सर्वमसावुदकेन स्नेहयति ।

IV. 27. 'प्राजापतिरकामयत' इति बहुकामत्वात् कः । क्रमणो वा क्रामत्यन्तरिक्षे । यद्वा कमिति सुखनाम । अत एवाह सुखो वेति । सुखो वा वृष्टिप्रदानादिना ।

IV.28. सर इत्युदकनामेति ।

IV.29. मध्यस्थानो वायुर्वृष्टिद्वारेणावस्थितः शम्बरः । सर्वचेष्टानां तल्लीनत्वात् सर्वस्य कर्ता ।

IV.35. अथवा तीर्णेऽन्तरिक्षे क्षियति निवसति । तूर्णमर्थं क्षरतीति वा । तूर्णं वार्थमुदकाख्यं क्षरति ।

IV. 41. वातो वातीति सत इति ।

IV. 42. अग्निर्व्याख्यातो द्वादशाध्याये । इह मध्यमोऽभिधेयः ।

IV.43. वेनो वेनतीति कान्तिकर्मसु पठात् । वेनतेः कान्त्यर्थस्य । कान्तो दीप्तो मध्यमस्थानः ।

V. 4.11. अद्भ्य आदित्य आदित्यादयम् । 'यदा (अपां नपात्) वा असावादित्यो न्यङ् रश्मिभिः पर्यावर्तेत' इत्येवमस्यादित्याज्जातत्वम् । तत्र मध्यमो जायत इति । एवमयं तनूनप्त्रा व्याख्यातः ।

V. 4. 12. मध्यस्थानो वायुः । यच्छति प्रय- (यमः) च्छति स्तोतृभ्यः कामान् ।

V.4.13. प्रमीतान्मरणात् त्रायते ।···यद्वा 'डुमिञ् (मित्रः) प्रक्षेपणे ।'···सम्मिन्वानः सम्यक् वृष्टिं प्रक्षिपन् सम्यक् सिञ्चन् वा द्रवत्यन्तरिक्षे ।···सर्वसस्यान्युदकेन स्नेहयति ।

V.4.14. 'प्रजापतिरकामयत' इति बहुकामत्वात् (कः) कः । क्रमणो वा क्रमत्यन्तरिक्षे । कमिति सुखनाम । सुखो वा वृष्टिप्रदानादिना ।

V.4.15. सर इत्युदकम् ।
(सरस्वान्)

V.4.16. मध्यमस्थानो वायुः । वृष्टिद्वारेण सर्वस्य (विश्वकर्मा) कर्ता सर्वचेष्टानां तदधीनत्वात् ।

V.4. 17. स्तीर्णे विस्तीर्णेऽन्तरिक्षे क्षियति क्षरति (तार्क्ष्यः) रक्षत्यश्नाति, तूर्णं वार्थमुदकाख्यं क्षियति क्षरति वा, अश्नुते वा तमः ।

V.4.22. वाति वातः ।
(वातः)

V.4.23. व्याख्यातः । इह मध्यमोऽभिधेयः ।
(अग्निः)

V.4.24. वेनतेः कान्तिकर्मणः। पचाद्यच् । कान्तो (वेनः) दीप्तो मध्यमस्थानः ।

| | |
|---|---|
| IV.44. असून्नयतीति निर्वचनम् । स च मध्यमः प्राणः । प्राणश्च वायुः । स हि शरीरादुत्क्रामन्नन्यानसून्नयतीति । विज्ञायते हि 'प्राणमुत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' इति । | V.4.25. असून्नयतीति असुनीतिः । स च मध्यमः (असुनीतिः) प्राणः । प्राणश्च वायुः । स हि शरीरादुत्क्रामन्नन्यानसून्नयति । 'विज्ञायते हि 'प्राणमुत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' । |
| IV.45. गन्ताऽन्तरिक्षे । | V.4.26. अर्तौ गन्तान्तरिक्षे । ( ऋतः ) |
| IV.48. प्रजानां पाता वा पालयिता वेति धात्वन्यत्वमात्रम् । | V.4.28. प्रजानां पाता । (प्रजापतिः) |
| „ इह त्विन्द्रो मध्यमोऽभिधेयः । | V.4.29. इह त्विन्द्रोऽभिधेयः । ( अहिः ) |
| IV.49. योऽहिः स एव बुध्न्यः। इयांस्तु विशेषः। बुध्नमन्तरिक्षं तत्रभवो बुध्न्यः । अहिश्चासौ बुध्न्यश्चेति समानाधिकरणावहिर्बुध्न्यशब्दावसमस्तौ । तथापि अहिं बुध्नियं शंसतीति श्रुतौ लिङ्गं भवति । | V.4.30. योऽहिः स एव बुध्न्यश्चेति समानाधि- (अहिर्बुध्न्यः) करणश्चाहिर्बुध्न्यशब्दोऽसमस्तः । तथा च 'अहिना बुध्न्येन अहिर्बुध्न्यः शंसति' इति श्रुतौ लिङ्गम् । |
| IV.50. इह मध्यमोऽभिधेयः । | V.4.31. इह शोभनगमनत्वान्मध्यम उच्यते । ( सुपर्णः ) |
| IV. 51. विज्ञायते हि 'वायुः प्राण एव पुरूरवाः' इति । स कस्मात् ? बहुधा रोरूयते । अनेकविधमत्यर्थं स्तनयित्नुलक्षणं शब्दं करोतीति पुरूरवाः । | V.4.32. अनेकविधमित्यर्थः । स्तनयित्नुलक्षणं (पुरूरवाः) शब्दं करोतीति पुरूरवाः । विज्ञायते हि 'वायुः प्राण एव पुरूरवाः' इति । |
| IV.52. इह तु मध्यमोऽभिधेयः । | V.5.1. इह मध्यमोऽभिधेयः । ( श्येनः ) |
| IV.53. सूयत इति सोमः । | V.5.2. सूयते सोमः । ( सोमः ) |
| IV.56. चायन् द्रवति चायन् पश्यन् लोकपालत्वात् । द्रवति गच्छति । यद्वा चन्द्रो माता चन्द्रश्चासौ माता च निर्माता वा । यद्वा चन्द्रं मानमस्येति वा । चन्द्रो ह्लादकं मानं निर्माणमात्मनः कर्मणां वास्येति चन्द्रमाः । यद्वा पाठान्तरं चान्द्रं चन्द्रसम्बन्धि- मानं मासस्य युगस्य वा यस्यास्य | V.5.3.चायन् पश्यन् लोकपालत्वाद् द्रमति(द्रमन् ) ( चन्द्रमाः ) गच्छति । चन्द्रशब्दे उपपदे मातेश्च 'चन्द्रे मो डित्'इत्यसुन् । यद्वा, चन्द्रश्चासौ निर्माता । चन्द्रमानं निर्माणमात्मनः कर्मणां वास्य । यद्वा, चन्द्रं चन्द्रसम्बन्धि मानमस्य, चान्द्रमाः सन् ह्रस्वत्वेन चन्द्रमाः ।··· चारु शोभनं द्रवति गच्छति मन्दगतित्वाद् |

चन्द्रमाः । स ह्रस्वत्वेन चन्द्रमाः ।…चारु द्रवति शोभनं गच्छति । मन्दगतित्वाद्वा चिरं द्रवति ।

वा । चिरं द्रवति वा ।

IV.58. मारयतीति सत इति म्रियतेरन्तर्णीतण्यर्थस्य 'भुजिमृङ्भ्यां युकृत्युकौ' इत्येवमौणादिकस्त्युक्प्रत्ययः । मृतं च्यावयतीति वा मृतमिति वर्तमानसामीप्ये । आसन्नमृत्युश्च चरमोच्छ्वासकाले शरीराच्च्यावयतीति… अथवा मृतः क्षीणायुः [संस्कारः] उच्यते । तं मृतं मध्यमः प्राणः शरीराच्च्यावयति ।

V.5.4. म्रियतेरन्तर्णीतण्यर्थात् 'भुजिमृङ्भ्यां युक्-(मृत्युः) त्युकौ'इति त्युक्प्रत्ययः । मारयति प्राणिनः । मृतं च्यावयतीति वा । मृतमिति वर्तमानसामीप्ये आसन्नमृत्युं चरमोच्छ्वासकाले शरीराच्च्यावयतीति । अथवा मृतः क्षीणायुः संस्कार उच्यते । तं मृतं मध्यमः प्राणः शरीराच्च्यावयतीति मृत्युः ।

IV.61. वर्षकर्मणा सर्वस्य विधाता ।

V.5.6-7. वर्षकर्मणा सर्वस्य हि दधाति । (धाता । विधाता)

IV.63. मितं प्राप्य च रुवन्ति स्तनयित्नुलक्षणं शब्दं कुर्वन्ति । अमितं वा बहु च । बहुप्रकारं शब्दं कुर्वन्ति ।…महद्रुवन्तीति वा महदुच्चैर्द्रवन्तीति वा । महदन्तरिक्षं द्रवन्तीति वा ।

V.5.8. मितं रुवन्ति स्तनयित्नुलक्षणं शब्दं कुर्वन्ति । (मरुतः) अमितं वा बहुप्रकारं रुवन्ति । महदुच्चैर्द्रवन्ति, महदन्तरिक्षं द्रवन्तीति वा मरुतः ।

IV.65. विद्युतप्रकाशनमुरु विस्तीर्णं भान्ति ।… ऋतेन वोदकेन दीप्यन्ते सश्चितेन तैः सहाविर्भवन्तीति वा ।

V.5.10. विद्युत्प्रकाशनमुरु विस्तीर्णं भाति । ऋतेन (ऋभवः) वोदकेन दीप्यन्ते, ऋतेन सत्येन चान्तःसहाया( यि ) भवन्ति ।

II.179. यज्ञे देवस्य वितते महतो वरुणस्य हि ।
ब्रह्मणोऽप्सरसं दृष्ट्वा रेतश्चस्कन्द कर्हिचित् ॥
तत्परीक्ष्य सवर्णो न स जुहाव विभावसौ ।
ततोऽर्चिषोऽभूद् भगवान् भृगुरङ्गारतोऽङ्गिराः॥
अत्रैवान्वेषणादत्रिः खननाद्विखनो मुनिः ।
इत्थं प्रजापतेर्जाताः पुराणा ऋषिसत्तमाः ॥

V.5.11. देवस्य वितते यज्ञे महतो वरुणस्य च ।
(अङ्गिरसः)ब्रह्मणोऽप्सरसो दृष्ट्वा रेतश्चस्कन्द कर्हिचित्॥
तत्प्रतीक्ष्य समर्थेन स जुहाव विभावसौ ।
ततोऽर्चिषोऽभृद् भगवान् भृगुरङ्गारतोऽङ्गिराः॥
अत्रैवान्वेषणादत्रिः खननादिकखना मुनिः ।
इत्थं प्रजापतेर्जाताः पुराणा ऋषिसत्तमाः ॥

IV.69. अथनवन्त इति । नैरुक्तधातुश्चरत्यर्थः।… गमनवन्त इत्यर्थः । तत्प्रतिषेधोऽथर्वणमगमनम् । तेनाथर्वणेनागमनेन तद्वन्तोऽथर्ववन्तः सन्तोऽथर्वाणः । अथवा अथर्वतेरनिप्रत्ययः । अथर्वाणो गन्तारः । यस्तु भाष्येऽथनशब्दः । असामर्थ्यवशब्दस्यैवार्थविव-

V.5.13-14. थर्वतिश्चरत्यर्थो नैरुक्तधातुः । न थर्व-(अथर्वाणः ।) णमथर्वणमगमनं तेन ततो-(भृगवः) ऽथर्वणान्तः सतोऽथर्वाणः । यद्वा, थर्वतेः 'श्वन्नुक्षन्पूषन्' इत्यादिना कनिन् प्रत्ययान्तो निपात्यते । अथर्वाणोऽगन्तारः । भृगवः भृज्यमानाः महत्तेजस्वित्वात् (भृज्यमानो न

| | |
|---|---|
| रणम् । भृगुर्भृज्यमानो न देहेन वचनकृतो विशेषः । | दग्धः तेजस्वित्वात् )। |
| IV.71.आप्त्या इन्द्रसहचारिमध्यमस्थानो देवगणः। सर्वव्यापित्वादाप्नोतेः । | V.5.15. आप्नोतेः‥‥‥आप्नुवन्ति सर्वमाप्त्या ( आप्त्याः ) मध्यमस्थाना इन्द्रसहचारिदेवगणाः । |
| IV.62.सर्वा स्त्री मध्यमस्थाना पुमान्वायुश्च सर्वगः। गणाश्च सर्वे मरुत इति वृद्धानुशासनम् ॥ | V.5.16.सर्वा स्त्री मध्यमस्थाना पुमान्वायुश्च सर्वशः। (अदितिः) गणाश्च सर्वे मरुत इति वृद्धानुशासनम् ॥ |
| IV.79. अनुमन्यासि अनुमन्यस्व यदनुमन्तव्यम् । | V.5.20-21. अनुमन्यते यदनुमन्तव्यम् । ( अनुमतिः। राका ) |
| ,, दीयते हि तस्यां देवेभ्यो हविः । | ,, दीयते हि तस्यां देवेभ्यो हविः । |
| IV.80. वालं पर्व अमावास्याख्यम् । पर्व कस्मात् ? वृणोतेः । वृण्वन्ति हि तत्र देवता हवींषि तस्मिन् पर्वणि । अन्नेन हविर्लक्षणेनान्नवती वालिनी वा । तस्यां केशश्मश्रुवपनश्रुतेः । वालैस्तद्वती वालिनी सिनी चासौ वालिनी चेति सिनीवाली देवपत्नी । पक्षे चैतन्निर्वचनम् । | V.5.22. वालं पर्व वृणोतेः ।‥‥‥‥ (सिनीवाली)तत्र देवता हवींषि । वाले सिनेन हविलक्षणेनान्नेन तद्वती वालसिनीति प्राप्ते सिनीवाली । यद्वा तस्यां केशश्मश्रुवपनश्रुतेर्वालैः केशैः सिनीवाली । अन्नवती सिनी चासौ वालिनी चेति सिनीवाली । देवपत्नीपक्षेऽपि चैतन्निर्वचनम् । |
| IV.81. गूढो ह्यदृश्यश्चन्द्रमास्तत्र तत्र भवति । अतश्चन्द्रमसो गूहनावर्णव्यापत्त्या कुहूः । क्वाभूदिति वा । तस्यामप्रत्यक्षत्वाद्वितर्क्यश्चन्द्रमा भवति । क्व पुनरसावभूदित्येवम् । अतः कुहूः । | V.5.23. गूढो ह्यदृश्यश्चन्द्रमास्तत्र भवति तस्याम- ( कुहूः ) प्रत्यक्षत्वात् । क्व पुनरसावभूदिति वितर्क्यश्चन्द्रमा भवति । |
| IV.82. व्याख्याता यमेन । | V.5.24. यमेन व्याख्याता । ( यमी ) |
| IV.83. उर्वशी व्याख्याता उरु अभ्यश्नुते इत्यादिना । तदिहापि यथासम्भवं योज्यं निर्वचनम् । | V.5.25. व्याख्याता । उर्वश्नुते इत्यादि यथासम्भवं ( उर्वशी ) योज्यम् । |
| IV.84.पृथिवी व्याख्याता 'प्रथनात् पृथिवी' इति । इह तु मध्यमस्थानाभिधेया । | V.5.26. व्याख्याता । इह मध्यमाभिधेया । ( पृथिवी ) |
| IV.85. इन्द्राणी माध्यमिका । इन्द्रस्य वा पत्नी । | V.5.27. मध्यमस्थाना इन्द्रस्य पत्नी वा । ( इन्द्राणी ) |
| IV.91. प्रायणीयायां 'पथ्यां स्वस्ति प्रथमां प्रायणीये यजति' इति यथा दृष्टे द्वे पदे एवं समाम्नाते । | V.5.32-33. 'पथ्यां स्वस्ति प्रथमां प्रायणीये यजति' (पथ्या।स्वस्तिः)इति दृष्टत्वात् द्विपदमेव समाम्नातम् । |

IV.92. उच्छतीति व्याख्याता।

IV.95. रोदसी मध्यमस्थाना। मध्यमस्थानस्यैव रुद्रस्य पत्नी।

IV.96.अश्विनौ कस्मात्। यस्मादश्नुवाते व्याप्नुतः कृत्स्नं जगत्। [ केन ] रसेनावश्यायरसेनैको मध्यमः तेजसान्य उत्तमः। अश्वैस्तद्वन्तावित्यौर्णवाभो मन्यत इति शेषः।

अश्विशब्दे निरूप्याभिधेयं निरूपयिष्यन्नाह।

IV.97. [ तत्कावश्विनौ। द्यावापृथिव्यावित्येके। अहोरात्रावित्येके। सूर्याचन्द्रमसावित्येके। राजानौ पुण्यकृतावित्यैतिहासिकाः ]। तत्कावश्विनाविति। तदिति वाक्योपन्यासे। किं प्रश्ने। द्यावापृथिव्यावश्विनावित्येके आचार्या मन्यन्ते। विज्ञायते हि 'तौ यौ प्रत्यक्षावश्विनाविमे एव ते द्यावापृथिव्यौ।' द्यौर्ज्योतिषा व्यश्नुते पृथिवी रसेनान्नलक्षणेन। अहोरात्राविति। अहर्ज्योतिषा रात्रिरवश्यायेन। सूर्याचन्द्रमसाविति। सूर्यो ज्योतिषा चन्द्रमा रसेन ह्लादिना। राजानावित्यौर्णवाभमतेन। तयोः काल ऊर्ध्वमर्धरात्रात्प्रकाशीभावस्यानविष्टम्भम्।

V.5.34. उच्छतीति व्याख्याता।
( उषाः )

V.5.36. रुद्रस्य मध्यमस्थानस्य पत्नी माध्यमिका ( रोदसी ) वाक्।

V.6.1 सर्वं जगद् व्याप्नुतः। अवश्यायरसेन ( अश्विनौ ) मध्यमः, तेजसोत्तमः। द्यावापृथिव्यावहोरात्रे सूर्याचन्द्रमसौ वाश्विशब्दाभिधेयौ। द्यौः ज्योतिषाश्नुते,पृथिवी रसेनान्नलक्षणेन। अहर्ज्योतिषा,रात्रिरवश्यायेन। सूर्यो ज्योतिषा, चन्द्रमा रसेनाऽह्लादादिना वा। अश्वैस्तुरङ्गैस्तद्वन्तौ राजानौ पुण्यकृतावित्यौर्णवाभः। 'कदेदमश्विना युवम्।' तयोः काल उर्ध्वमर्धरात्रात् सूर्योदयपर्यन्तः। तस्मिन्नान्या देवता उपास्ते।

IV.101.उषाः कस्मात्? वष्टेः कान्त्यर्थस्य। कान्ता ह्यसौ। उच्छतेर्वा।

V.6.2. वष्टेर्वोच्छतेर्वा।
( उषाः )

IV.104. एषैवोषाः सूर्या सम्पद्यते।

V.6.3. एषैवोषाः सूर्या सम्पद्यते।
( सूर्या )

IV.106. वृषाकपेरादित्यस्य पत्नी।

V.6.4. वृषाकपेरादित्यस्य पत्नी।
( वृषाकपायी )

IV.108. सैव यदा सूर्यं प्रत्यात्मानं सरणेन नयति तदोषःप्रभारुणोदयावस्थाभिसृतकालस्तमासरण्यूरुच्यते।

V.6.5. सैवोषाः प्रभातकृदुदयावस्था सूर्यं प्रत्या- (सरण्यूः) त्मानं सरणेन नयति तदा सरण्यूरुच्यते।

IV.110. तस्य कालो यदा द्यौरपहततमस्काकीर्ण-

V.6.6-7. तस्य कालो यदा द्यौरपहततमस्काकीर्ण,

| | |
|---|---|
| रश्मिर्भवति । | ( त्वष्टा । सविता )रश्मिर्भवति । |
| IV.112. भजनीयो भूतानां स्वकार्यप्रयुक्तानां सावित्रात्कालादनन्तरवर्तिज्योर्विशेषो भगाख्योऽत्यन्तभास्वरः प्रकाशः प्रागुपसर्पणादनाविर्भूतमण्डल इत्यर्थः । | V.6.8. भजनीयो भूतानां स्वकार्यप्रयुक्तानाम् ( भगः) त्वष्टृकालानन्तर्वर्त्तिज्योतिर्विशेषो भगाख्यः । प्रागुत्सर्पणादनाविर्भूतमण्डल इत्यर्थः । |
| IV.114. स पुनः सर्त्तेः प्रागवस्थातः सरणात् । स्ववतेर्वा सुकर्मसु जगतः प्रेरणात् । स्तीर्यतेर्वा वायुना ह्ययं सुष्ठु सर्वदैवोदयास्तमयौ प्रतीर्यतेऽतः सूर्यः । | V.6.9. प्रागवस्थानः । सरति कर्मसु जगत् प्रेरयति (सूर्यः) वायुना ह्ययं ( घटाम् । ) सुष्ठु सर्वदैवोदयास्तमयौ प्रति ईर्यते । |
| IV.115. यद्यदा रश्मिभिः परिपुष्टो भवति तदा पूषा भवति । | V.6.10.यदा रश्मिभिः परिपुष्टो भवति तदा पूषा। ( पूषा ) |
| IV.118.विशतेस्तीव्ररश्मिद्वारेण सर्वत्र व्यावेशात् । व्यश्नोतेर्वा विश्वं रश्मिभिर्व्यश्नुत इति। | V.6.11.तीव्ररश्मिद्वारेण सर्वत्र ह्याविशति । विशे- ( विष्णुः ) र्बाहुलकान्नुप्रत्ययादि । विश्वं रश्मिभिर्व्यश्नुते वा । |
| IV.119. इह तूत्तमोऽभिधेयः । | V.6.12. इह उत्तमोऽभिधेयः । ( विश्वानरः ) |
| IV.124. स पुनरिहादित्य एव नभसो मध्यमासीन एवमवस्थ उच्यते । कथम् ? केशा रश्मय इत्यादिनिरुक्तेस्तैः प्रकृष्टैस्तद्वान । प्रकाशनाद्वा | V.6.14-15. केशा रश्मयः । प्रशंसायामिनिः । (केशी । केशिनः)प्रकृष्टः केशैस्तद्वान् 'काशृ दीप्तौ ।' काशनं काशः, तद्वान् काशी सन् केशी । नभसो (तमसो) मध्यगत आदित्य उच्यते । |
| IV.126. वर्षिता चासाववश्यायानाम् । कम्पमानश्च स्वयमेवास्तं गच्छन् कम्पयते । दिवाचारीणि भूतानि भयात् कम्पयति । | V.6.16. अयं च सेचयिता, अवश्यायादीन् कम्प- ( वृषाकपिः ) यंश्च चरति । दिवाचारीणि भूतानि भयात् कम्पयतीति वा । |
| IV. इह त्वादित्योऽस्तमयावस्थः सन्नुच्यते । | V.6.17. अस्तमयावस्थ आदित्य उच्यते । ( यमः ) |
| IV.128. स च किलास्तमितावस्थ आदित्यः । द्वैपदं चैतत् । अजनो गमन एकश्च पादः । कस्य ? ब्रह्मणः । कुत एतत् ? विज्ञायते हि 'अग्निः पादो वायुः पाद आदित्यः पादो दिशः पादः ' इति । तेनाजश्चासावेकपाच्चेति । ············एकेन पादेनांशेन सर्वमिदं जगज्ज्योतिरात्मनानुप्रविश्याश्नन् | V.6.18. अस्तमा( ता )वस्थ आदित्य उच्यते । (अज एकपात्) द्वैपदं चैतत् ।···एकश्च पादः कस्य ? ब्रह्मणः । कुत एतत् ? विज्ञायते हि 'अग्निः पादो वायुः पाद आदित्यः पादो दिशः पादः' इति । तेनाजश्चासावेकपाच्चेति ।······एकेन पादेनांशेन सर्वमिदं जगज्ज्योतिरात्मना प्रविशन् पाति, एकेनांशेन उदकं सर्वस्य जगतः |

पाति । एकेन पादेन पिबतीति वा एकेनांशेनोदकं सर्वस्य जगतः पिबति । एकोऽस्य पाद इति ।

पिबति । क्विपि तकारोपजनः । एकोऽस्य पाद इति ।

IV.130. इह तु विशेषणसम्बन्धाद् द्यौरेवाभिधीयते ।

V.6.19. इह द्यौरुच्यते ।

( पृथिवी )

IV.132. प्रत्यक्तो ध्यानमिति वा ············ प्रतिगतो ध्यानं ············अथवा ध्यानं लोकस्य कृत्याकृत्यविषयं लोकपालत्वात् । तद् ध्यानं प्रत्यक्तः प्रतिगच्छतः । प्रत्यक्तमस्मिन् ध्यानमिति वा ।

V.6 21. ध्यानं ज्ञानं लोककृत्याकृत्यविषयं लोकपा( दध्यङ् ) लत्वात् । ध्यानं प्रतिगतं प्रत्यक्तमस्मिन ध्यानमिति वा ।

„ इह तु द्युस्थानो वाच्यः । न ह्ययं स्वाधिकारं व्यभिचरति रसादानादिकम् । नित्यमनुतिष्ठतीत्यर्थः ।

V.6.22. इह तु उत्तमो वाच्यः । न ह्ययं स्वाधि( अथर्वा ) कारं व्यभिचरति, रसादानादिकं नित्यमनुतिष्ठतीत्यर्थः ।

„ मननाद् बोधनादर्चनाद्वा आदित्यः ।

V.6.23. मननात् स्वाधिकारादेः, अर्च्यत इति वा ( मनुः ) मनुरादित्यः ।

II.80. आदत्ते रसान् भुवो रश्मिभिः । आदत्ते भासम्, तदुदयेऽन्तर्धानादादानव्यपदेशः । ज्योतिषां चन्द्रनक्षत्रग्रहादीनाम् । ······ आदीप्तो भासा इति वा, ज्योतिरन्तरापेक्षया दीप्तः । भासां ज्योतिषाम् इति,···अदितेः पुत्र इति वा । 'दित्यदित्यादित्य' इति ण्यः । तथा च ब्राह्मणम् 'अदितिः पुत्रकामा···।'

V.6.24. भुवो रसं रश्मिभिरादत्ते । ज्योतिषां ( आदित्याः ) चन्द्रनक्षत्रग्रहादीनां भासमादत्ते वा । तदुदयेऽतद्धानादानव्यपदेशः । आदीप्तः ज्योतिरन्तरापेक्षया हि स्वभासा । अदितेः पुत्रा वा आदित्याः 'दित्यदित्यादित्य' इति ण्यः । तथा च 'अदितिः पुत्रकामा' इत्यादि ब्राह्मणम् ।

IV.134. रश्मयोऽभिधेयाः । इन्द्रियाणि वा ।

IV.135. मनष्षष्ठानीन्द्रियाणि विद्यासप्तमानि ।

V.6.25. रश्मय इन्द्रियाणि वा मनष्षष्ठानि विद्या( सप्त ऋषयः ) सप्तमानि ।

IV.137. रश्मयश्चाभिधेयाः ।

V.6.26. देवा रश्मय उच्यन्ते ।

( देवाः )

IV.138. विश्वे देवासः सर्वे देवाः ।

V.6.27. सर्वे देवाः ।

( विश्वे देवाः )

IV.141. देवा रश्मयो वाभिधेयाः । साध्याः कस्मात् ? साधनात् स्वव्यापारस्य ।······ ऐतिहासिकानां तु कर्मभिरात्मनः साधनात् पूर्वो देवसमूहः । ते च किल विश्वसृजो

V.6.28. नैरुक्तपक्षे रश्मयः । ऐतिहासिकानां तु ( साध्याः ) कर्मभिरात्मसाधनात् पूर्वे देवसमूहाः । ते च किल विश्वसृजो नाम ऋषयः ।

नाम ऋषयः ।

IV.142. यद् विवसते सर्वम् यद् यस्माद्विभागेनावस्थितमिदं सर्वमाच्छादयन्तीति स्थानत्वात् । अतस्त्रिस्थानेष्वाच्छादकत्वाद्वसवस्त्रिस्थानाः । यावत् किञ्चित् पृथिवीस्थानमग्निभक्ति तत्सर्वं वसुत्वेनाभिप्रेत्यैतदुच्यते । अग्निर्वसुभिः सम्बन्धाद्वासव इति तदाधिपत्येन समाख्यातत्वादग्निभक्तवसवः पृथिवीस्थानाः, एवमिन्द्रो वासवो मरुद्भिर्वसवः समाख्यातः । तस्मान्मरुतो वसवो मध्यम स्थानाः । तथा वसव आदित्यरश्मयो विवासनात् तमसाम् । तस्माद् द्युस्थानाः ।

V.6.29. त्रिभागेनावस्थितमिदं सर्वमाच्छादयन्ति । ( वसवः) अत्र त्रिस्थाने छादकत्वात् । वसवो यावत् किञ्चित् पृथिवीस्थानमग्निभक्ति तत् सर्वं वसुत्वेनाभिप्रेत्यैतदुच्यते— 'अग्निर्वसुभिः सम्बन्धाद्वसव इति तदाधिपत्येन समाख्याताः । तस्मादग्नि हरति नि वसवः पृथिवीस्थानः । एवमिन्द्रो वासवः मरुद्भिर्वासवः समाख्याताः। तस्मान् मरुतो वसवो मध्यमस्थानाः। (तथा)वसव आदित्यरश्मयो विवासनात्तमसाम् । तस्माद् द्युस्थानाः ।

IV.144. रश्मयोऽभिधेयाः । देवाश्वा वा ।

„ वाजिनो रश्मयो देवाश्वा वा ।

V.6.30. रश्मयोऽभिधेयाः । देवाश्वा वाजिनः । ( वाजिनः )

IV.145. ताः पुनर्देवानां पालयित्र्यः पालनीया वा ।

V.6.31. देवानां पालयित्र्यः पालनीया वा । ( देवपत्न्यः )

---

## आ

## ऊ



## ऋ

## ए



## ऐ



## ओ



## औ

## क्

## ख्

## ग्

## ट्



## त्

### ध्



### न्

## प्

## य्

## र्

## श

## ष्



## स्

Printed at the Dayanand Press, Lahore.

# APPENDIX VI.

Passages of the commentary of Skandasvāmin, which bear a striking resemblance to the *Niruktasamuccaya* of Vararuci.

| स्कन्दः | वररुचिः |
|---|---|
| P.I.70. ब्रह्मेत्यादित्य उच्यते। | P. 3. ब्रह्मशब्देनादित्यमण्डलमुच्यते। |
| P.I.70. बुध्न्याः–बुध्नमन्तरिक्षं तस्मिन् भवा बुध्न्या दिशः। | P. 5. बुध्न्याः-बुध्नमन्तरिक्षा (क्षम्) बद्धा अस्मिन् धृता आप इति वा तत्र भवा बुध्न्या दिश उच्यन्ते। |
| P.I.70. उपमा उपम इत्यन्तिकनाम सन्निकृष्टा अस्यैवादित्यस्य। | P. 6. उपमा उपे (पम इ) त्यन्तिकनाम परितो भूता अस्यादित्यस्य। |
| P.I.70. विष्ठा विष्टभ्यावस्थात्रीः। | P. 6. विष्ठा विष्टभ्य स्थात्रीः। |
| P.IV.57. उषसामिति पूजार्थे बहुवचनम्। | P. 7. उषसामेकस्या एव पूजनार्थे बहुवचनम्। |
| P.IV.58. यदा त्वादित्यदेवतो द्वितीयः पाद······'पूर्वापरं चरतो' इति पूर्वस्यामपि ऋच्युभयोः स्तुतिदर्शनादत्राप्यादित्यदेवत इति। | P. 8. अथवा 'पूर्वापरं चरत' इति पूर्वस्यामृचि सूर्याचन्द्रमसोः सहस्तुतिदर्शनादत्रापि स्तुतिसभवाद् द्वितीयः पाद आदित्यदेवता (तः) |
| P.II.264. अध्यात्ममपि अदितिः प्रकृतिः कारणं ब्रह्म······तत्प्रभवत्वे सति सर्वमदितिरिति व्याख्येयम्। | P. 14. नित्यपक्षेणा (दितिः) प्रकृतिरुच्यते तद्विकारः सर्वमिति योज्यम्। |
| P.II.264. पञ्चजनाश्च गन्धर्वादयः। निषादपञ्चमा वा वर्णाः। किं बहुना। अदितिरेव जातम्। | P. 14. पञ्चजनाश्चत्वारो वर्णा निषादः पञ्चम इति गन्धर्वादयो वा······किं बहुना। अदितिजातम्। |
| II.234. नमन्ते वर्षाद्युपकारेण प्रह्वीभवन्ति। | |
| III.140. प्रदिशः प्रकृष्टा दिशश्चतस्रोऽपि। अथवा······प्रदिशोऽवान्तरदिश उच्यन्ते ताश्चतस्रश्च दिशः। तादर्थ्याच्च विश्वं भुवनमुच्यते दिक्शब्देन। | P. 20. नमन्तां नम प्रह्वत्वे प्रह्वीभवन्तु। प्रदिशः प्रकृष्टा दिशश्चतस्रः। दिक्शब्देनात्र दिङ्निवासिन उच्यन्ते मञ्चाः क्रोशन्तीति यथा। |
| P.IV.21. आकारस्योपयातमित्याख्यातेन सम्बन्धः। | P. 21. आकार उपयातमित्यनेन सम्बध्यते। |
| P.II. 22. वः। छान्दसत्वाद् द्वितीयैकवचनस्य वसादेशः। त्वाम्। | P. 29. वः। छान्दसत्वादेकवचनस्य वसादेशः। त्वाम्। |
| P.II. 22. वसूनां धनानाम्। अथवा षष्ठीश्रुतेरर्थायेति शेषः। | P. 29. वसूनां वस्विति धननाम धनानां षष्ठीश्रुतेरर्थायेति शेषः। |
| P.II. 251. यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः। | P. 34. पुरस्ताद्यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः। |
| I. 5. निशब्दोऽत्र व्यत्ययेन आ इत्यस्य स्थाने | P. 34. उपसर्गव्यत्ययश्च भाष्यकारेण दर्शितः। |

| स्कन्दः | वररुचिः |
|---|---|
| दर्शयिष्यति भाष्यकार उपसर्गव्यत्ययम्—निरित्येष समित्येतस्य स्थाने इति । | अथापि निरित्येष समित्येतस्य स्थाने । |
| P. II. 189. 'नमो महद्भ्यः' शुनःशेपो यूपे बद्धो विश्वान् देवानाह । | P. 35. 'नमो महद्भ्यः' शुनःशेपो विश्वान् देवान् प्रार्थयते । |
| P.II. 189. आशिनेभ्यः अशू व्याप्तौ इत्यस्येदं रूपम्, व्याप्तृभ्यः । | P. 35. आशिनेभ्यः अशू व्याप्तावित्यसौ प्रत्ययो भवति व्याप्तृभ्यः । |
| P.II. 159. सत्सु विद्यमानेषु स्तम्भकुम्भकरकादिषु भावेषु यत् तायते तत् सत्यम् । | P. 51. सत्सु विद्यमानेषु स्तम्भकुम्भादिषु तायते तेषां प्रकाशकमित्यर्थः । |
| P.II. 83. प्रास्तु प्रकर्षेण भवतु । | P. 54. प्रास्तु प्रकर्षेण अस्तु भवतु । |
| P. IV.114. तच्छब्दसमानार्थत्यच्छ्रुतेर्यच्छब्दोऽध्याहार्यः । | P. 60. तच्छब्दसमानार्थस्त्यच्छब्दः । तच्छब्दश्रुतेः योग्यार्थसम्बन्धो यच्छब्दोऽध्याहार्यः । |
| P.II.11. 'तत्वा' इत्येतत् 'तनु विस्तारे' इत्यस्य क्त्वाप्रत्ययेन रूपम्,'''उदितो वा' इतीटो वैकल्पिकत्वादिकाराभावः, सोऽत्र वर्णलोपः । तत्वा तनित्वेत्यर्थः । | P. 67. तत्वेति तनु विस्तारे इत्यस्य क्त्वाप्रत्ययान्तस्योदितो वेतीटो षेवति एतद्रूपं तत्वा तनित्वा। |
| P.II. 10. यजमानोऽयं हरिश्चन्द्राख्यः जलोदरस्य व्याधेर्मारकत्वात्, तस्य चास्योत्पन्नत्वात् । तथा च हरिश्चन्द्रोपाख्याने ब्राह्मणम्–'अथ हैक्ष्वाकं वरुणो जग्राह तस्य होदरं जज्ञे'इति। | P. 68. अयमपि यजमानो हरिश्चन्द्राख्यो महोदरव्याधिना ग्रस्तः । तथाहि हरिश्चन्द्रोपाख्याने श्रूयते 'अथैक्ष्वाकं वरुणो जग्राह तस्य महोदरं जज्ञे' । |
| P.III.166. मयोभुवः । भवतिरत्रान्तर्णीतण्यर्थः सुखस्य भावयित्र्यः । | P. 76. अन्तर्णीतण्यर्थोऽयं भवति मयसः सुखस्य भावयित्र्यः । |
| cf. N. 2. 16. p. II. 93. | P.87. वृत्रोऽसुरस्त्वष्टुर्पुत्रो मेघो वा धूमादिसंघातः। |
| P.IV.111. कविस्तु कवतेः शब्दकर्मणः । | P.90. अथवा कवतेः शब्दकर्मणः कविः । |
| P. II. 251. भुव इति नायं भूशब्दः पञ्चम्यन्तः पृथिवीवचनः । 'सावेकाचः' इति विभक्तेरुदात्तत्ववचनात्''''''किं तर्हि ? आख्यातमेतत् ।''''''''' भुवः भवसि । | P. 94. नेदं पृथिवीनामधेयस्य भूशब्दस्य रूपम् । किं तर्हि ? लङि वर्णव्यापत्तिरसभावश्च अभवः भवसि । |
| P. II. 74. तथा च स्मृतिः–पुन्नाम्नो नरकाद्यस्मात् पितरं त्रायते सुतः । | P. 106. पुन्नाम्नो नरकाद्यस्मात् पितरं त्रायते पुनः सुतस्तस्मात्पुत्र इति प्रोक्तः पूर्वमेव स्वयं- |

स्कन्दः

वा ।

P.III.9. मृधः मृधं करोतीत्याद्युक्तनिर्वचनम् । संग्रामकारिण इत्यर्थः। मृधं कुर्वन्तीति विगृह्य तत्करोतीत्यादिना णिच्......'अन्येभ्योऽपि दृश्यते' इत्यादिना क्विप् ततश्च द्वितीया-बहुवचनम् ।

P.III.10. पृतन्यतः पृतनेति संग्रामनाम तस्मा-दिच्छायां क्यच् ।

P. I.119. मृगः सिंहो व्याघ्रो वा......कुचरः कुत्सितकर्मा प्राणिविलमुद्दिश्य चरति ।

P.I.119. अथवा कुचरो गिरिष्ठा इतीन्द्रस्यैते विशेषणे ।

P. I. 119. गिरिष्ठा गिरिर्मेघस्तस्मिन् हन्तव्ये तिष्ठतीति गिरिष्ठाः ।

P.I.36. अन्ये तु 'न निर्बद्धा' इत्यादिना द्योतकत्ववाचकत्वविषयामाचार्यविप्रतिपत्तिं समर्थयन्ते ।

P. I. 34. उपेत्य नामाख्यातयोरर्थस्य विशेषं सृजन्त्युत्पादयन्तीत्युपसर्गाः ।

P. I. 35. तत्र केवलस्यापि प्रयोगः । 'यदुद्वतो निवतो यासि निष्कौशाम्बिः' इति ।

P.II.332. दैव्या देवानां स्वभूताः । हे शमितारः अध्रिग्वावापप्रभृतयः । अपि च मनुष्या अध्वर्युप्रभृतयः ।······दुरो द्वाराणि यज्ञगृहद्वाराणि·········मेध इति यज्ञनाम तत्साधनत्वादत्र पशुर्वै मेध इति तस्य मेधस्य पती स्वामिनौ देवते अग्नीषोमौ तयोरर्थायेत्यर्थः ।······अग्निमुल्कामित्यर्थः । भरत हरत प्रापयत शरणार्थं रक्षार्थं चेत्यभिप्रायः ।

वररुचिः

चारिण्यो गृह्यन्ते ।

P. 108. मृध संग्रामनाम मृधं करोति णिच्-प्रत्ययः । तदन्तात् क्विप् ततश्च णेरनिटीति टिलोपः । द्वितीयाबहुवचनमेतत् । मृधः संग्रामकारिणः ।

P. 109. पृतन्यतः पृतनाशब्दात् संग्रामवचना-दिच्छार्थे क्यच् ।

P. 109. मृगः सिंहो व्याघ्रो वा......कुचरः कुत्सितप्राणिवधमुद्दिश्य चरतीति कुचरः ।

P. 110. यदा कुचरो गिरिष्ठा इतीन्द्रस्यैव विशेषणे ।

P. 110 गिरिष्ठा गिरिर्मेघस्तस्मिन् हन्तव्ये स्थातुं शीलमस्येति गिरिस्थायी ।

P. 114. उपसर्गाः किं द्योतका उत वाचका इति । केचिदाहुः उपसर्गा द्योतका इति......वाचका इत्यपरे !

P.114. उपशब्दः समीपवचनः समीपस्था नामाख्यातयोरर्थे विशेषेण व्रजन्ति ( सृजन्ति ) बोधयन्ति द्योतयन्ति इत्युपसर्गाः ।

P. 114. पृथक् प्रयोगो (गे)ऽपि वाचकत्वमेषां दृष्टम् । यदुद्वतो निवतो यासि निष्कौशाम्बिरिति ।

P. 120. दैव्या देवानां स्वभूताः । अध्रिगुप्रभृतयः हे शमितारः, उत मनुष्या मनुष्या अध्वर्युप्रभृतयः ।······दुरो द्वाराणि यज्ञगृहद्वाराणि ।······मेधो यज्ञस्तत्साधनभूतः पशुरपि मेध उच्यते तस्य पती स्वामिनौ तावग्नीषोमौ तयो रर्थाय······अग्निमुल्कां भरत हरत······सगर्भ्यः समाने गर्भे भवः······समाने यूथे भवः सयूथ्यः ।······

स्कन्दः

······सगर्भ्यः समाने गर्भे भवः।···सयूथ्यः समाने यूथे भवः।······सूर्यं चक्षुर्गमयतात् सूर्यप्रभवत्वाच्च सूर्यमेव प्रत्यस्य चक्षुर्गमयन्ति। सर्वेषां म्रियमाणानामेवंधर्मकत्वेति वचनं यथान्यायमरणपरिग्रहम्। ······मुखनासिकाभ्यां वायुं वा॥य श्वासं संज्ञपयतेत्यर्थः। श्येनं श्येनाकारमस्य वक्षः कृणुतात् कृणुत प्रशसा शस्त्रेणेति केचित्। स्वधित्याकारावित्यपरे अथवा प्रशस्तौ बाहू कृणुतादिति सम्बन्धः शलादोषणी बाह्वोरुपरितने द्वे दोषानित्येतेन

P. II. 333. शब्देनोच्यते। शलाकाकारे दीर्घे इत्यर्थः। ······षड्विंशतिश्चास्य वङ्क्रयः पर्शवस्ता अनुष्ठुया अनुष्ठानेन यत्नेन निश्चयेन वा कृत्स्नम् उच्च्यावयतात् उत्कन्तत। एवं गात्रं गात्रमस्या नूनं कृणुतात् अनतिरिक्तं च कृणुतात्। कुतः? ऊवध्यगोहं भक्षिततृणादि यदजीर्णं पशोरुदरे तिष्ठति तदूवध्यमित्युच्यते यस्मिन् गूह्यते प्रजायते स ऊवध्यगोहस्तं च पार्थिवं गर्तं श्वभ्रं खनतात् खनत। अस्ना असृक्शब्दस्य लोहितवचनस्य 'पद्दन्नोमासृहृद्' इत्येवासन्नादेशः, ततस्तृतीया लोहितेन च रक्षः संसृजतात् संयोजेत। तद्धि पशु रक्षसां भागः। ......सुशमि शमीध्वं शमितं च शमयध्वं च शीघ्रं मा विलम्बिध्वम् मा वा शङ्कां कुरुध्वं हिंसेति। धर्म एवेयं हिंसा शास्त्रविहितत्वात्। अस्य पशोरुत्कर्षहेतुत्वात् तथा चैतरेयकब्राह्मणे 'पशुर्वै नीयमानः'।

P. IV. 86. गौरी छान्दसत्वाद् हलङ्यादिलोपाभावः। गौरी मध्यस्थाना। मिमाय 'माङ् माने' इत्यस्यै छान्दस लिटि रूपम्। निर्मिमीत इत्यर्थः। किं? सामर्थ्यात् कृत्स्नं जगत्। किं

वररुचिः

सूर्यं चक्षुर्गमयतात् सूर्यप्रभवत्वात् सूर्यमेव चक्षुर्गमयत सर्वेन्द्रियाणामेवं धर्मत्वेनापि वचनात् यथान्यायं कारणपरिग्रहार्थम्।······ मुखनासिकानिश्चारिणं वायुमस्य वारयत निरुच्छ्वासं संज्ञपये(यते)त्यर्थः।······श्येनं श्येनाकारमस्य वक्षः कृणुत कुरुत।······ प्रकर्षेण शास्यते हन्यतेऽनेनेति प्रशंशस्त्रमुच्यते। स्वधिती वा शस्त्राकारावित्येके प्रशसा प्रशस्तौ बाहू कृणुतेत्यनुषङ्गः।······ शलादोषणी शलाकाकारे दोषणी दीर्घे इत्यर्थः। ......षड्विंशतिरस्य वंक्रयः पर्शवस्ता अनुष्वं अनुष्ठानेन यत्नेन कृत्स्ना उच्चावचतां उत्कन्तत एवं गात्रं गात्रमस्या नूनमनतिरिक्तं च कृणुत ऊवध्यगोहं भक्षितं तृणादि यदजीर्णं पशोरुदरे तिष्ठति तदूवध्यं तद्धस्मिन् गृह्यते प्रच्छाद्यते स ऊवध्यगोहः। तं च पार्थिवं पृथिव्यां भवं कर्तां खनतात् अस्ना असृक्शब्दस्य लोहितवचनस्य पदादिसूत्रेणासन्नादेशः अस्ना लोहितेन रक्षः संसृजत संयोजयत तद्धि रक्षसां भागः......सुशमि शमीध्वं शमितं च शमयत मा शङ्कां कुरुध्वं हिंसेति धर्म एव सा हिंसा शास्त्रेण विहितत्वात् अस्य च पशोरुत्कर्षो भवति तथा च श्रूयते।

( अग्रे पाठस्त्रुटितः )

P. 128. गौरी छान्दसत्वात्सुलोपाभावः। वाङ्नामैतत्। वाङ्मध्यस्थानात्......सा मिमाय। माङ् माने। मिमीते कृत्स्नं जगदिति शेषः। तक्षती कुर्वती सलिलानि वृष्टिलक्षणानि

स्कन्दः

कुर्वती ? उच्यते । वृष्टिलक्षणानि सलिलानि तक्षती तक्षतिः करोतिकर्माऽयं कुर्वती ददतीत्यर्थ ।......

P. IV.86. सा चतुष्पदी चतसृभिर्दिग्भिः । दिशोऽपि ह्यवकाशदानेन सहकारिकारणत्वं प्रतिपद्यन्ते ।......सहस्राक्षरा सहस्रमिति बहुनाम अक्षरमित्युदकनाम बहूदकेत्यर्थः । परमे प्रकृष्टे व्योमन् । व्योमेत्यन्तरिक्षनाम लुक् सप्तम्याः व्योमन्यन्तरिक्षे सप्तमीश्रुतेः स्थितेति शेषः ।

P.II.78. एवमाख्यानस्वरूपाणां मन्त्राणां यजमाने नित्येषु च पदार्थेषु योजना कर्तव्या । एष शास्त्रे सिद्धान्तः । ......औपचारिकोऽयं मन्त्रेष्वाख्यानसमयः । परमार्थेन तु नित्यपक्ष इति सिद्धम् ।

P.III.140. सौचीकमग्निं देवा ऊचुः । हव्यं नो वहेति ।......(पुरुषः) सवनीयः पशुरुच्यते ......अथवा पुरु बहु कर्म सुनोतीति पुरुषम् ।

P.III.82. यदा नैरुक्तपक्षे मध्यमस्थाना यमी तदा मध्यमस्थानो वायुर्वैद्युतो वा वर्षाकाले व्यतीते तामाह ।

P.III.21. भोजाय भोजो दाता तस्मै ।

P.III.16. विश्वामित्रप्रयुक्तैः कैश्चिद्राक्षसस्त्वमित्याभिप्रयुक्तो वसिष्ठ आह ।

P. III. 17. अवान्तरप्रलयादूर्ध्वं प्राग् जगत्स्रष्टेर्वावस्था । तामियमृक् पराचष्टे । न मृत्युरादितः । मर्तॄणामभावान् मृत्योश्चाभावात् । प्रतिद्वन्दिरूपत्वाच्चामृतस्य 'अमृतं न' अमृतमपि नैवासीत् । तर्हि तस्मिन् काले न रात्र्या नापि रात्रे अह्नः अह्नो वासीत् प्रकेतः प्रज्ञानमियं

वररुचिः

तक्षती तक्षतिः करोतिकर्मा । कुर्वतीह...... सा चतुष्पदी दिग्भिर्दिशो व्यवकाशदानेनास्य वृष्टिकर्मणि सहकारिकारणत्वं प्रतिपद्यन्ते......सहस्राक्षरा सहस्रमिति बहुनाम अक्षरमित्युदकनाम अक्षयत्वात्......परमे उत्कृष्टे व्योमन् सुपां सुलुगिति सप्तम्येकवचनस्यु लुक् द्रष्टव्यः । व्योमन् अन्तरिक्षे स्वस्मिन् स्थाने स्थितेति वाक्यशेषः ।

P.142. एवं नैरुक्तपक्षे योजना । औपचारिकोऽयं मन्त्रेष्वाख्यानसमयो नित्यत्वविरोधात् । परमार्थेन तु नित्यपक्ष एवेति नैरुक्तानां सिद्धान्तः ।

P.143. सौचीकमग्निं विश्वेदेवा ऊचुः हव्यं नो वहेति सो ऽग्निरब्रवीत्.................. पुरुषं बहुलं कर्म सुनोतीति पुरुषः सवनीयः पशुरुच्यते ।

P.146. नैरुक्तपक्षे तु यमी मध्यस्थाना वाक् । यमश्च मध्यमस्थानः सा यमी वर्षाकाले ।

P.149. भोजयतीति भोजोऽन्नं दातोच्यते ।

P.150. विश्वामित्रप्रयुक्तं किल कश्चिद् राक्षसो मायावी वसिष्ठरूपेण वसिष्ठस्य पुत्रशतं जघान...

P.154. अवान्तरप्रलयादूर्ध्वं प्राग् जगत्स्रष्टेर्यावस्था सानयर्चोच्यते न मृत्युरासीत् । मर्तॄणामभावात् मृत्युश्च नासीत् अमृतं जीवनमपि नैवासीत् प्राणिनामभावात् तर्हि तस्मिन् काले न रात्र्या नापि रात्रेरह्नो वासीत् प्रकेतः प्रज्ञानमियं रात्रिरिदं अहरिति । अथवा प्रकेतः प्रज्ञाप-

स्कन्दः

रात्रिरिदमहरिति। अथवा प्रकेतः प्रज्ञापयिता आदित्यः स ह्युदयास्तमयाभ्यां रात्र्यहनी विभजते स नासीत् । आनीत् 'अन प्राणने' इत्यस्यैव लुङि रूपम् । अजीवीत् केवलमित्यर्थः । अवातं शरीरस्याभावात् मुखनासिकाभावे ताभ्यां यो नाभिप्रदेशात् प्रयत्नः प्रेरितो ऽनुगच्छति तद्रहितम् । एतदुक्तं भवति । अलौकिकमेतत्प्राणनं यतः स्वधयान्नेन तत्रैव शक्त्यात्मना लीनेन प्रणीतयन् स्मितवदित्यर्थः तदेकं कारणमात्माख्यम् । ह: पादपूरणः ।

P.II.502. अपत्यार्थे प्रस्कण्ववत् प्रमगन्दः ।

वररुचिः

यिता आदित्यः स ह्युदयास्तमयाभ्यां रात्र्यहनी विभजते स नासीत्.........आनीत् अन प्राणने प्राणितवत् केवलमित्यर्थः अवातं अवातन्नाभिप्रदेशादुत्थितो यो वातो मुखनासिकाभ्यां निर्गच्छति तद्रहितमलौकिकमेतत्प्राणनमित्यर्थः। स्वधया स्वधाशब्दोऽन्नवचनः स्वधयान्नेन तत्रैव शक्त्यात्मनावस्थितवदित्यर्थः । तदेव कारणमात्माख्यं ब्रह्म तस्मात् । हेति पदपूरणः ।

P.161. प्रमङ्गदः प्रोऽपत्यार्थे प्रस्कण्व इति यथा ।

# Appendix VII.

## Additions, Corrections And Revised Emendations

## VOL. I

| P. | L. | For | Read |
|---|---|---|---|
| 3. | 7. | ०दोषैर्दुष्टस्य | ०दोषादुष्टस्य |
| 3. | 10. | प्रतिपन्नस्य | निजशाखाप्रतिपन्नस्य |
| 5. | 6. | आवननवन्तो | आहननवन्तो |
| 5. | 9. | हन्तेः | हन्ते |
| 5. | 10. | यतो वा | अतः |
| 6. | 6. | ०लैङ्क्तेलैङ्घते० | लक्षते लञ्छतेः Cf. N. 4. 10. |
| 6. | 7. | लैम्पते० | लग्यतेः Cf. N. 4. 10. |
| 6. | 7. | लज्ज्यतेश्च | लज्जतेश्च |
| 7. | 1. | ०दन्नाशनम् | ०दध्वाशनम् |
| 7. | 10. | प्रकरप्रक्षिप्ते | प्रकरे प्रक्षिप्ते |
| 7 | 11. | तद्दृष्ट्वा | तं दृष्ट्वा |
| 8. | 4. | Dash after | ०र्थां should be omitted. |
| 9. | 5. | 'स्वरितञितः' ह्या० | स्वरितञितो ह्या० or 'स्वरितञित' इत्या० |
| 11. | 3. | ०मपूर्वं न परञ्च | ०मपूर्वमनपरञ्च |
| 11. | 10. | आख्यातेनाचष्टे | अनाख्यातमाचष्टे |
| 13. | 4. | प्रागूर्ध्वमित्यर्थः cf.P.1.13.Line | प्रागूर्ध्वं चेत्यर्थः 8. प्रागूर्ध्वञ्च |
| 13. | 11. | च Should be | added after चतुष्ट्वसंख्या |
| 26. | 1. | यद्वा | यथा |
| 26. | 3. | तथापि | अथापि cf.N.7.3. |
| 30. | 5. | ०मानावस्थां प्रत्य० | ०मानावस्थाप्रत्य० |
| 30. | 6. | Add 'तत्' after | ऽवधारणं |
| 30. | 11. | त्वेना श्रित० | त्वे ऽश्रित० |
| 31. | 5. | विनाशि० | विनाशि० |
| 34. | 6. | कर्मोपपदे नभस्य | कर्मोपसंयोगद्योतस्य |
| 34. | 8. | द्योतकश्च | द्योतश्च |
| 34. | 8. | कारयति | कायति |
| 34. | 9. | ०न्नञ्चेतत् | ०न्नञ्चैतत् |
| 34. | 9. | अर्थसूक्त | अर्थस्तूक्त |
| 35. | 4. | तद्भावाभाविन्वेनां० | तद्भावभावित्वेना० Cf. P. 1. 14. 8, 9. |
| 36. | 2. | विशेषणम् | विकरणम् |
| 36. | 4. | ०दवाशिष्टा० | ०दविशिष्टा० |
| 36. | 9. | ०दपरात | ०दवरात् |
| 37. | 2. | भर्तव्यः, | भर्तव्य,vocative |
| 37. | 5. | ०रत्वद्विशेषणं | ०रत्वाद्विशेषणं, |
| 38. | 4. | आयुष्मत एव वा | आयुर्वचन एव वा |
| 38. | 9. | वाक्शब्दलक्षया | धकधकलक्षणया |
| 39. | 1. | विध्वा | विदुध्वा |
| 40. | 9,10. | निःसममित्येत० | निः समित्येत० |
| 40. | | Footnote 17. | [ऋ. ८-७५-९] |
| 41. | 1. | Put a fullstop after न्योषतात् The vedic quotation begins with उदग्ने। | |
| 41. | 1. | Put a fullstop after पराच। | |
| 41. | 6. | दीध्यमान | दीध्यान |
| 41. | 9. | विद्वान् | विद्वन् |
| 41. | 18. | दृष्टव्यः | द्रष्टव्यः |
| 42. | 1,2. | शोभने मानन | शोभनेन मानेन |
| 42. | 3. | ब्रांह्मं | ब्राह्मं |
| 42. | 7. | समभजमानः | संभजमानः |
| 42. | 13,14. | ०नापरोधर्मः | ०नापरो ऽर्धः |
| 44. | 2. | वसतीत्यर्थे कथनाल्लक्षणानां cf.AB.2.20.5:- वसतीवरीष्वेकधनासु च। | वसतीवरी and एकधन are synonyms of water cf. S.B. 3.9.2.16. तदासु विश्वान् देवान् संवेशयन्त्येते वै वसतां वरं तस्माद्वसतीवर्यो नाम। |
| 44. | 4. | दशा पवित्रान् | दशापवित्रान् Cf. |

| P. L. | For | Read |
|---|---|---|
| | | 1. 45. 5. |
| 45. 2. | 'असर्जिषत Should be omitted. | |
| 45. 5. | द्यावापृथिवी is also a dual form but the regular classic form is द्यावापृथिव्यौ | |
| 47. 12. | चेदमेव तस्य | चेदमेतस्य |
| 48. 13. | अनेकाथ | अनेकार्थ |
| 49. 2. | तस्याश्चिच्छदः | तस्यां चिच्छदः |
| 49. 8. | 'अर्थापय' इति | अर्थाय य इति It is not a quotation. |
| 49. 9. | सुनाम्नो | सुनम्नो |
| 49. 13. | ०वापकुत्सितम् | ०वावकुत्सितम् |
| 50. 13. | किञ्चिद् | कञ्चिद् |
| 51. 6. | एते | एवं ते |
| 52. 11. | ०रूपमा० | ०रूपमा० |
| 53. 4. | कर्थ | कर्म |
| 53. 8. | Sign of interrogation is to be put after तद्वान् and कश्चासौ, and to be omitted after ऽर्थः। | |
| 54. 9. | वज्रं Should be added after दारणाद्वा | |
| 54. 9. | तद्वन्नौ- | तद्वन् ! नौ |
| 55. 1. | Footnote 2, | read भरद्वाजो |
| 55. 1. | ०जयेथे Should | be omitted. |
| 55. 2. | पराजिग्येन | परा जिग्ये न |
| 55. 4. | For यस्य समुदायार्थस्य श्रुतेः | the reading of B. & C. is preferable. See footnote 9. |
| 55. 7. | ०मीरयथस्ताराप- थ इत्यर्थः | ०मीरयथः, नाशयथ इत्यर्थः Cf Skanda's commen. on RV. VI. 69. 8. |
| 55. 9. | योऽग्निः | यो अग्निः |
| 55. 9. | यो अग्निः कव्यवाहनः is a quotation from VS. 19. 65. Cf. RV. X. 16. 11. The reading in the RV. is कव्य for कव्य, but as the commentator has used the word हविः in his explanation, it is clear he read कव्य० and derived his quotation from VS. | |

| P. L. | For | Read |
|---|---|---|
| 57. 13. | Add नाम before उदकनामैतत्। | नाम is a synonym of Water, see Ngh. 1 12. |
| 58. 5. | स्यन्दन स्वभावा | स्यन्दनस्वभावा, |
| 58. 8. | एव शब्देन | एवशब्देन |
| 53. 9. | न चेतौ | न चैतौ |
| 62 7. | अन्यस्थत्वमन्ये० | अन्यतस्त्वन्ये० |
| 62. 10. | मधुस्वादु० | मधु स्वादु० |
| 63. 3. | निपात समुदाया० | निपातसमुदाया० |
| 63. 9. | आण्डागर्भस्थानि | आण्डा गर्भस्थानि |
| 64. 5. | अक्षसूक्तमियमृक् | अक्षसूक्त इयमृक् |
| 64. 6. | घोरण | घोरेण |
| 64. 8. | Add मा before | कार्ष्ण्यर्थः |
| 65. | Footnote 19. प्रोथ | प्रोथृ |
| 66. 2. | दंमन इति | दंस इति |
| 66. 4. | स निर्लोभो | सनिर्लोभो |
| 66. 9. | निरूप्य | निरुप्य |
| 67. 8. | कर्तृकारकेन | कर्तृकारके |
| 67. 9. | I propose to read यमो यच्छतीति मतः | for यमयोश्चिदिदिति See N. 10. 19. |
| 67. 10. | नि चनेन | निर्वचने |
| 68. 12. | तषा | शिष्टं |
| 68. 12. | यद्वन्नि० | यद्ध नि० |
| 69. 14. | ०दित्योदितेः | ०दित्यो ऽदितेः |
| 69. 14. | एष | प्रेत्येष |
| 70. 9. | सर्वस्य | सर्वस्य वा |
| 70. 10. | यः इवोभि— | यः सो ऽभि— |
| 70. 11. | प्रथममस्यां | प्रथमं पूर्वस्यां |
| 70. 12. | सीमत | सीमात |
| 70. 13. | अत्राध्याहार्यः | आङत्राध्याहार्यः |
| 70. 15. | Emendation in footnote 14 | |

| P. L. | For | Read |
|---|---|---|
| | 'कान्तरुचीः' etc. is cancelled. | |
| 71. 3. | विवृतादिव करोति | विवृता दिवा करोति |
| 71. 5. | ०म्यर्थादतो | ०म्यर्थादन्यो |
| 72. 12. | एव | एक |
| 73. 6. | कारणमपरमन्नं | कारणं परमन्नं |
| 73. 14. | ध्वरतिर्हिंसा० | ध्वरतिर्हिंसा० |
| 75. 8. | व्यक्तयर्थेस्याक्षी | व्यक्तयर्थस्याक्षि |
| 75. 10. | विध्येव | विद्ध्येव |
| 75. 13. | ऋच्छन्तीव | ऋच्छन्ती इव |
| 75. 14. | नपुंसकस्यात् 'स्त्रीनद्योर्नुम्' | 'वा नपुंसकस्य' Pa. 7. 1. 79. 'आच्छीनद्योर्नुम्' Pa. 7. 1. 80. |
| | Footnote 24 | [Pa. 7. 1. 79, 80.] |
| 75. 15. | ऋच्छन्तीति | ऋच्छन्ती इति |
| 75. 15. | गच्छन्तीव | गच्छन्ती इव |
| 76. 1. | व | वे |
| 76. 1. | ०लक्षण | लक्षणे |
| 76. 2. | ऋच्छन्तीवे० | ऋच्छन्ती इवे |
| 76. 6. | ०र्थस्य दर्शन० | ०र्थस्यादर्शन० |
| 76. 12. 13. | कर्मणः[19], विद० | ०कर्मणः, विद[19]० |
| 77. 8. | यजुर्ब्राह्मणेषु च | यजुःषु ब्राह्मणेषु च |
| 77. 8. | येऽप्रवृत्तेऽर्थे | ये प्रवृत्तेऽर्थे |
| 77. 11, 13. | ०वाक्यार्थ प्रति० | वाक्यार्थप्रति० |
| 78. 3. | संभवात्। निष्प्रयोजनत्वं तेषां | संभवान्निष्प्रयाजनत्वम्। तेषां |
| 78. 5. | निपातोदाहरण० | नियतोदाहरण० |
| 78. 7. | विज्ञायते | विज्ञायेत |
| 78. 14. | बहूपत्या | बह्वपत्या |
| 79. 1. | बिभ्यन्तो | बिभ्यतो |
| 79. 1. | वाश्यन्तेऽल्पशीतत्वात्, शिशिरं० | वाश्यन्ते, अल्पशीतत्वाच्छिशिरं० |
| 79. 4. | The Svarita accent is on द्रा and not on या | |
| 79. 12. | The anudatta accent is on दं and not on ह | |
| 79. 15. | ०भावः। पूर्वपदस्य च मध्योदात्तत्वं संगत | ०भावः पूर्वपदस्य च मध्योदात्तत्वम्। संगत |
| 80. 11. | प्रतिवचः | प्रति वचः |
| 80. 12. | हरसे | is unnecessary. |
| | सप्र० | संप्र० |
| 80. 13. | प्रतिश्रृण्वित्यर्थः | प्रति श्रृण्वित्यर्थः |
| 81. 2, 3. | न वै सुविदुरिव...... Cf. न वै सुविदुरिव मनुष्या यज्ञं तस्मान्न सर्वं इवर्ध्नोति ........ दक्षिणामेवैतां ददाति यज्ञस्याद्धृत्यै इष्टी वा एतेन ......काठके ९।१३॥ न वै सुविदुरिव मनुष्या यज्ञम्। तस्मान्न सर्वं इवर्ध्नोति। यद्दक्षिणां ददाति यज्ञस्यार्धः। कापिष्ठले ८।१ न वै सुविदुरिव मनुष्या नक्षत्रं मीमांसन्त इव ह्यदितेन वाव पुण्याहं पुण्याह आधत्ते। काठके ८।३॥ कापिष्ठले ६।८॥ | |
| 82. 2. | मदतीत्यर्चितकर्मा | मदतीत्यर्चतिकर्मा |
| 82. 2. | Footnote 4. | [निघ. ३-१४] |
| 82. 5. | बिभेम च | बिभिमश्च |
| 83. | Footnote 2. | [यतश्च निर्धारणम् Pa. 2. 3. 47.] |
| 84. 3. | संविज्ञात० | संविज्ञान० |
| 84. 13. | चेच्छब्दश्च शब्दस्य | चेच्छब्दश्चशब्दस्य, |
| 85. 1. | आसंजनीति | आसजनीति |
| 86. 10. | णितमाह | णिच् तमाह |
| 87. 2. | चाननुगतित्वा० | चाननुगतत्वा Cf. I. 86. 5. |
| 87. 4. | यदेतेर्निवि | यदेतेर्णिचं |
| 88. 2. | अशन प्रत्या० | अशनप्रत्या० |
| 92. 1. | भविष्यस्या | भविष्यन्त्या। |
| 92. 8. | प्रवृत्तिस्ताम् | प्रवृत्तिस्तम् |
| 93. 9. | व्याकणस्य | व्याकरणस्य |

| P. | L. | For | Read |
|---|---|---|---|
| 94. | 10. | ०षिद्धार्थः | ०षिद्धार्थाः |
| 95. | 1. | विघ्नन् | निघ्नन् |
| 95. | 8. | संचुकोचयति | संकोचयति |
| 96. | 16. | ०मंहे | ०महे |
| 101. | 15. | प्रेषण | प्रेषण |
| 104. | 5. | Anudatta accent is on धी and not on प | |
| 104. | 16. | ०स्यास्मौ | ०स्यास्मो |

| P. | L. | For | Read |
|---|---|---|---|
| 106. | 8. | कुर्वश्च | कुर्मश्च |
| 108. | 9. | लिङ्गाभावात् | लिङ्गभावात् |
| 104. | 16. | ०पदशार्थं | ०पदेशार्थं |
| 118. | 6. | कल्पितकादित्वा० | कपिलकादित्वा० Cf. संज्ञाछन्दसोर्वा कपिलकादीनामिति वक्तव्यम्। महाभाष्य ८।२।१८ |
| 119. | 2. | प्राणिबिल० | प्राणिवध० |
| 121. | 2. | ब्रह्मणाध्या० | ब्राह्मणाध्या० |

# VOL. II

| P. | L. | For | Read |
|---|---|---|---|
| 2. | 1. | इत्येतत् | इत्येतद् |
| 4. | 1. | तिरश्च | तिरश्चा |
| 4. | 2. | ०मयवार्थं | ०मयवार्थः |
| 4. | 2. | प्रणीनं | प्रीणनं |
| 6. | 4. | ०वर्णास्मामा० | ०वर्णसामा० |
| 6. | 13. | ०प्रारत्वेन | ०प्रकारत्वेन |
| 7. | 13. | अवकृतायाश्च | अविकृतायाश्च |
| 8. | 11. | विस्तार० | विस्तर० See also II. 15. 4. |
| 8. | 12. | अवत्तमिमि | अवत्तमिति |
| 11. | | Footnote 25. | Read पा. ६-१-३७ |
| 12. | 2. | ०दूरार्थें | ०दूरार्थं |
| 12. | | Footnote 5. | Read पा. २-१-३९ |
| 14. | 7. | उकार० | ऊकार० |
| 15. | 2. | द्रारो जवतेर्वा द्रवतेर्वा वारयते वा is a quotation from N. 8.9. | |
| 16. | 1. | श्रयने: | श्रयतेः |
| 16. | 2. | इकारस्य | अकारस्य |
| 17. | 9. | ०गान्धि० | गान्धि० |
| 17. | 12. | त्वा त्वा | त्वा त्वां |
| 17. | 15. | ०रश्वशब्दं | रश्वं शब्दं |
| 18. | 2. | मांसपचनी | मांस्पचनी |
| 18. | 8. | लेट् | लट् |
| 18. | 9. | सैनानीकेन | सैनानीकेन |
| 18. | 10. | परस्या | परस्पा |
| 18. | 13. | दिदिहीत्य० | दिदीहीत्य० |
| 19. | 1 | दिदिहीत्य० | दिदीहीत्य० |

| P. | L. | For | Read |
|---|---|---|---|
| 19. | 5. | दिदिहि | दिदीहि |
| 19. | 7. | यदादीध्ये | यदादीध्ये |
| 19. | 12. | बप्सन् | बप्सत् |
| 19. | | Footnot 10. | [पा. ६-१-३७] |
| 20. | 7. | तत्रेस्थादि | तत्रेत्यादि |
| 21. | 2. | वित्तनि | क्तिनि |
| 22. | 1. | ०तेनाभि?प्रत्य० | ०त्वेनाभिप्रत्य० |
| 22. | 8. | ईडामहे | ईडमहे |
| 22. | 9. | मर्पयन्तः | सपर्यन्तः |
| 23. | 3. | इत्यविशेषो० | इति । अविशेषो० |
| 24. | 1. | व्रीहि | व्रीहिं |
| 24. | 1. | ददाति | दाति |
| 24. | 4. | ०शब्द | ०शब्दं |
| 24. | 7. | म्लेच्छ० | म्लेच्छ० |
| 25. | 10. | त्वा त्वा | त्वा त्वां |
| 27. | 1. | ०ऽध्वर्यवादिषु | ०ऽध्वर्यवादिषु |
| 27. | 6. | दण्ड्यः पुरुषः इति, अभि० | दण्ड्यः, पुरुष इत्यभि |
| 27. | 11. | दा इत्यस्य | दद इत्यस्य |
| 28. | 2. | अधारयन्त is unnecessary. | |
| 29. | 1. | नार्ष्टिकैः | नाष्टिकैः cf मनु० ८-२०२ नाष्टिको लभते धनम् । |
| 36. | 2. | ०षङ्गश्च | ०षङ्गश्च |
| 36. | 16. | ०र्धीतिनेनेति | ०र्धीतिनेति |
| 42. | 3. | सादनात् | सदनात् |
| 45. | 2. | शुक्रा | शुक्रौ |
| 44. | 7. | मिश्रणसंभवात् | मिश्रणासंभवात् |

| P. | L. | For | Read |
|---|---|---|---|
| 45. | 2. | बोधस्सूप० | वोधस्सूप० (वा + ऊधस्सु + उप) |
| 46. | 11. | अभूम | अभूम |
| 50. | 5. | धर्ता | सर्ता । cf. RV. SK. 6. 56. 3. |
| | | Full stop should be omitted after सूर: | |
| 50. | 5,6. | ०कृति देव० | ०कृतित्वादेव० |
| 51. | 5. | सुषुम्न | सुषुम्ण |
| 51. | 8. | वषट् | वाट् |
| 52. | 1. | ०रच्छा० | ०रश्मा० |
| 52. | 3. | वषट् | वाट् |
| 52. | 5. | वष् शब्दस्यैव | वाषट्शब्दस्यैव |
| 54. | 3. | तंदुरु० | तदुंरु० |
| 54. | 4. | वा | वां |
| 54. | 11. | याप्तिरित्यर्थः | व्याप्तुरित्यर्थः |
| 54. | 13. | अर्वागिद | अर्वागिदं |
| 57. | 8. | इषया अकार | इषयन् यकार |
| 57. | 8. | एत्रं कर्मासि | एवंकर्मासि |
| 59. | 7. | दधति० | दधाति० |
| 62. | 14. | चैतत्। उदकानि | चैतदुदकानि । |
| 63. | 7. | ०र्निनाम० | ०र्निर्नाम० |
| 65. | 1. | पुलिङ्ग० | पुंलिङ्ग० |
| 66. | 6. | पुलिङ्गाः | पुंलिङ्गाः |
| 66. | 9. | नपुंसकस्त्रीलिङ्गे | पुंस्त्रीलिङ्गे |
| 68. | 4. | पुलिङ्ग० | पुंलिङ्ग० |
| 70. | 3. | निष्कम्भ | विष्कम्भ |
| 70. | 5. | ०अन्तराश० | ०अन्तःश० |
| 73. | 11. | ०स्मृते | ०स्मृतेः |
| 74. | 2. | दूषिता | इषिता |
| 74. | 6. | गतेरु० | एतेरु० |
| 74. | 8. | पुरुषः | पुरुत्रः |
| 77. | 3. | ०वात्मावा० | ०वात्मनाव० |
| 78. | 1. | ०त्नुर्व्या० | ०त्नुव्या |
| 78. | 2. | शमस्यै | शमस्मै |
| 78. | 6. | जायमानो | यजमानो |
| 80. | 14. | कस्मान् | कस्मात् |
| 81. | 1. | ०पेक्षया दीप्तः। भासां | ०पेक्षयादीप्तो भासा |
| 83. | 6. | आदितेः | अदितेः |
| 84. | 2. | ०काल | ०कालं |
| 84. | 3. | नियमः | निगमः |
| 84. | 7. | अवश्रथयः | अवश्रथय |
| 84. | 12. | रसाहरणाच्च | रसहरणाच्च cf. N 3. 16; 11. 5. |
| 84. | 15. | मध्यमश्च | मध्यमञ्च |
| 84. | 18. | प्रङ्गा० | ०प्रसङ्गा० |
| 85. | 3. | इत्यन्येषां | इति । अन्येषां |
| 86. | 4. | रश्मिभि | रश्मिभी |
| 86. | 13. | सुमना | सुमना |
| 86. | 15. | ०ज्योरिति | ०ज्योतिरिति |
| 87. | 16. | ०भूता | ०भूताः |
| 88. | 2. | ०कर्मणः। एतद्रूपं | ०कर्मण एतद्रूपम् |
| 88. | 2. | संगच्छते | संगच्छन्ते |
| 88. | 10. | गवतते | गतवते |
| 89. | 2. | उमादः पुरुषः | उतादः परुषे |
| 89. | 5. | भासां | भासं |
| 94. | 1. | बलानिन्द्र | बलांनिन्द्र |
| 101. | 6. | आकरोऽप्यर्थे | आकारोऽध्यर्थे |
| 101. | 8. | कथा | तथा |
| 102. | 2. | ०रंर्जुनञ्च | ०रर्जुनञ्च |
| 103. | 1. | वश्वानरी० | वैश्वानरी० |
| 104. | 1. | ०पेक्षायोप० | ०पेक्षयोप० |
| 104. | 4. | ०भ्रर्णीति | ०भ्राणीति |
| 110. | 5. | शैध्यात् | शैघ्र्यात् |
| 111. | 4. | उपरमध्वं | उपरमध्वं |
| 111. | 6. | ययतो | च यतो |
| 113. | 10. | विस्तीर्णा | विस्तीर्णाः |
| 113. | 10. | प्रगृह्य | प्रगृह्य |
| 114. | 5. | शोभान० | शोभन० |
| 115. | 8. | लोटि | लेटि |
| 117. | 8. | ऋतुं | क्रतुं |
| 117. | 14. | इत्याभ्यास० | इत्यभ्यास० |
| 118. | 10. | उसषः | उषसः |
| 118. | 12. | ०पांस्वदेः | पांस्वादेः |
| 120. | 7. | ०त्वाच्चेषां | ०त्वाच्चैषां |
| 123. | 5. | ०दुदुर० | ०दुदर० |
| 123. | 16. | स्त्रीपुसं० | स्त्रीपुंस० |
| 128. | 7. | अभ्रतृका० | अभ्रातृका० |

| P. L. | For | Read |
|---|---|---|
| 128. 8. | आभ्रातृका० | अभ्रातृका० |
| 131. 1. | पुनर्देविष्यामिति | न पुनर्देविष्यामीति |
| 132. 16. | पुनर्दहितुः | पुनर्दुहितुः |
| 135. 6. | ०कुल— | ०कुल |
| 136. 5. | मतेः | मनेः |
| 137. 10,11. | रक्षस्व० | रक्षःस्व० |
| 140. 11. | सक्षयः | स क्षयः |
| 143. 5. | अन्यः | अन्धः |
| 148. 16. | अम्बुराद्युका० | अम्बु र स्युका० |

149. 19; 150. 1, The emended text of mss. A is the following 'वियातयत इति वा वियातयेति वा' विविधं यातयति शत्रूनिति वियातः तस्य सम्बोधनं, विपूर्वस्य यातयतेर्वा' शे प्रत्यये वियातयेति । वियातयेति वियातरिति वेति पाठान्तरम् ।
The emended text of mss. B. C. D. is the following वियातरिति वा वियातयेति वा । विविधं याति शत्रूनिति वियाता, तस्य सम्बोधनं, विपूर्वस्य यातयतेर्वा शे प्रत्यये धारयः पारय इति वत् तस्य सम्बोधनम् वियातयेति । वियातयेति वा धियातयितरिति वेति पाठान्तरम् ।

| P. L. | For | Read |
|---|---|---|
| 151. 5. | मनुष्या— | मनुष्या |
| 157. 6. | स्वावा | स्वावान् |
| 157. 14. | ०भ.थस्य | ०मानस्य |
| 157. 14. | ०र्थोपयोग। | ०र्थे प्रयोग Cf. N. 7. 31. |
| 157. 19. | अग्निघातौ | अग्निवातौ |
| 158. 7. | रहन्ति | हरन्ति |
| 158. 13. | ०णमाचै० | णामचै० |
| 161. 1. | वात्यर्थानि | चायत्यर्थानि |
| 162. 16. | वादि० | इवादि० |
| 165. 3. | ०पठाठः | ०पपाठः |
| 165. 5. | ०बन्धनो | ०मन्थनो |
| 167. 4. | मनुष्य० | न मनुष्य० |
| 167. 8. | सामन्येन | सामान्येन |
| 167. 15. | सहावे हि | सहावेहि |
| 168. 7. | ०भ्राजननेन | ०भ्राजनेन |
| 168. 14. | यदा | तदा |
| 168. 17. | अततेर्वा | तनोतेर्वा Cf. II. 169. Line 15. |
| 169. 8. | व्याप्यश्च क्षेत्रश्च | व्याप्यश्च क्षेत्रश्च |
| 172. 8. | कुतएवमुच्यते ? | कुत एवम् ? उच्यते |
| 172. 12. | ०सनर्थो | ०सन्नर्थो |
| 172. 15. | तविष्यतते | तविष्यते |
| 172. 16. | सनन्तस्तु | सन्नन्तस्तु |
| 172. 16. | तावधिषति | तितावधिषति |
| 173. 10. | मनोजात० | मनोर्जात० |
| 175. 5. | स इत्युपमा | सत्युपमा |
| 175. 7. | वदेत् | वदिति |
| 175. 13. | न चिन्वाथा | न चिन्न्वाथा (न चित् नु आ था) |
| 176. 7. | स्वरशब्द० | स्वःशब्द० |
| 176. 11. | जनयन्तम् | जयन्तम् |
| 178. 1. | द्व्याहारे (?) | ऽध्याहारे |
| 183. 16. | प्रतिदित्सा | प्रतिषेधात् (cf. 'जिघ्रः संज्ञायां प्रतिषेधः'—महाभाष्ये p. II. 92.) |
| 184. 11. | तन्वात् (?) | तद्वान् |
| 184. 18. | भारताः | भरताः |
| 184. 19. | करवः | कुरवः |
| 185. 1. | ऋत्विग्भिः | ऋग्भिः |
| 185. 9. | अध्येपितस्य | अध्येषितस्य |
| 185. 15. | धर्म | घर्म |
| 187. 10. | अपित्व | आपित्व |
| 187. 14. | आपः | अपा |
| 191. 4. | होता | हन्ता |
| 191. 6. | चिप्रकारी | क्षिप्रकारी |
| 192. 1. | स्वंतवसे | स्वतंवसे |
| 192. 10. | म इत्यपभितमःवि | मख इत्यपठितमपि |
| 192. 11. | महो | मखो |
| 193. | Footnote 1. खण्डारम्भस्य खण्डस्य समाप्ति निर्देशो न दृश्यते | नै दृश्यते |

| P. L. | For | Read |
|---|---|---|
| 193: 13,14. | मन्त्रद्वार | मन्त्रदृग्वा |
| 195. 3. | विस्मरणार्थः | स्मरणार्थः |
| 197. 8. | ०गतः। प्रत्ययोऽपि | गतः प्रत्ययोऽपि। |
| 198. 12. | सेनानामभि० | सेना तामभि० |
| 201. 7. | अग्नणां | अग्राणाम् |
| 201. 12. | ताति | तानि |
| 201. 12. | बहु स्तुती० | बहुस्तुती० |
| 201. 15. | ०कृताति | ०कृतानि |
| 201. 15. | इष्यते | उच्यते |
| 202. 8. | कार्षम् | काष्टम् |
| 203. 6. | प्रसार्थ० | प्रासार्थ० |
| 203. 6. | श्याघकृत्त एत्र कालेयकाख्यं। अवदा० | श्यामयकृत्त एव कालेयकाख्यादवदा० |
| 203. 7. | श्यायतेरित्यर्थस्य | श्यायतेर्गत्यर्थस्य |
| 203. 12. | श्वेतस्यां सं | श्वेतस्मांसं |
| 204. 4. | योनिमिति | योनिरिति |
| 204. 20. | भजेन्निरु० | भजेर्निरु० |
| 205. 1. | नवैवाख्या० | नामैवाख्या० |
| 205. 1. | येन | नाम |
| 205. 2. | तो | नो |
| 205. 5. | मिहो० | मंहो० |
| 205. 6. | दर्शेति | दर्शयति |
| 206. 6. | तुव | तव |
| 206. 6. | मेहनास्ति | म इह नास्ति |
| 206. 7. | इत्येपं | इत्येवं |
| 206. 8. | असद्वेत्य० | नस्तदित्य० |
| 206. 9. | ०तस्या | ०ताया |
| 206. 9. | ०स्य द | ०स्येदं |
| 206. 11. | दादरणाद्वा | आदरणाद्वा |
| 206. 13. | ०द्रुसः | द्रुसुः |
| 207. 1. | इत्यस्मि। सोमा० | इति। अस्मिन् सोमा० |
| 207 2. | इत्याधि० | इत्यधि० |
| 207. 10. | दमेदं (?) | ममेदं |
| 208. 4. | ०हानार्थौ | ०हार्थौ |
| 208. 5. | यथोक्तमश्वा० | यथोक्तश्वा० |
| 208. 8. | ०योक्री | ०योक्त्री० |
| 208. 13. | दावुपादाय | प्रतिपदादावुपादाय |
| 208. 13. | निहत्या० | विहत्या० |
| 209. 7. | सजत्येवं को | संतपन्त्येकं |
| 209. 7. | पर्शस्था० | पर्शुस्था |
| 210. 3. | उत्तरेणा० | उत्तरणा० |
| 210. 4. | ०मुत्तारतम् | ०मुत्तारयतम् |
| 210. 5. | विहन्तो | व्यदन्तो |
| 210. 15, 16. | सुवर्ण | सुपर्ण |
| 210. 16. | दीपति | दिवीति |
| 211. 2. | ०मवाप्नुवन् | ०मनाप्नुवन् |
| 211. 3. | ०जालये | ०जाले |
| 212. 6. | पृषित्रापि त्वत्साध्यस्य पलस्य द्रव्यं वा | पृषित्रा वा त्वत्साध्यस्य फलस्य द्रष्टा वा |
| 212. 16. | वा सन्ति कानि | सन्ति कानि वा |
| 212. 16. | या | यथा |
| 212. 17. | च सम्बन्धः | गर्दभत्वजात्या च सम्पन्नः |
| 212. 18. | चोष्णेन च | शीतेनापरभागगते चोष्णेन |
| 213. 5. | तात् | 'तस्य तात्' |
| 213. 8. | आन्येष्येवंरूप | अन्येष्येवंरूपा |
| 213. 9. | यथाक् चोयक् | यथा 'क्त्वो यक्' [Pa.५-१-४७] |
| 213. 9. | 'भत्वाशयत्रदे विभजस्ववेद' | 'हत्वाय शत्रून् विभजस्व वेदः' RV. १०-८४-२ |
| 213. 19. | आननकेन | आहननेन |
| 213. 19. | संगत | संगतिम् |
| 214. 5. | कीनाशः | कीनाशाः |
| 214. 6. | शुना | शुनो |
| 214. 6. | भेदम्, उद० | भेघमुद० |
| 214. 12. | श्रुष्टि | श्रुष्टिं |
| 214. 15. | ०लक्षणे तत्पूतं | ०लक्षणेन पूतं |
| 214. 16. | प्रियमाणं | प्रीयमाणः |
| 214. 18. | इषिरेणैव तुर्थव्युत्पत्तिः | मदिर इषिरेणेवत्वस्य व्युत्पत्तिः |
| 215. 3. | तपिष्ठेन | तापिष्ठेन |
| 215. 4. | ०बन्धिनी प्रणय० | बन्धी न प्रणय० |

| P. | L. | For | Read |
|---|---|---|---|
| 215. | 5. | तं यच्छति यद्वा स | तमिच्छति यः स |
| 215. | 7. | ०त्मानो० | ०त्मनो० |
| 215. | 7. | अभिप्रायाः | अभिप्रायान् |
| 215. | 9. | ०सन्ति | ०सति |
| 215. | 9. | ०च्छन्ति | ०च्छति |
| 216. | 4. | ०क्षतत्वात् | ०क्षितत्वात् |
| 216. | 6. | वेत्स्ये० | वेत्स्ये० |
| 217. | 6. | संपिब | स पिब |
| 217. | 15. | दुत्वाद्वा | स्वादुत्वाद्वा |
| 219. | 5. | ०मनुदिति (?) | ०मनुवदति |
| 219. | 7. | मनुपि | मतुपि |
| 220. | 5. | काल्परनाम्ना | चापरनाम्ना |
| 220. | 7. | अक्षत सस्कुवन्ति | अक्षतं संस्कुर्वन्ति |
| 220. | 8,9. | प्रज्ञातार्थत्वाद् वाचः प्रज्ञानं मनश्च केचित्। भाष्ये 'अकृषत प्रज्ञानम्' इत्याभिधीयते | प्रज्ञानार्थत्वाद् वाचः प्रज्ञानम्, अतश्च केचिद् भाष्ये 'अकृषत प्रज्ञानम्' इत्यधीयते |
| 220. | 17. | पात्र० | चात्र० |
| 221. | 6. | ०तद्वत्। भद्रं | ०तद्वद् भद्रम्। |
| 221. | 15. | ०यमकारः | ०यमाकारः |
| 222. | 5. | कृष्णादे० | कृष्यादे० |
| 222. | 7. | भाष्येऽपि सत्सं-हियत इत्यर्थः। कथम्? न न शब्दार्थविवरण। | भाष्ये विततं संहित इत्यर्थकथनं न च शब्दार्थविवरणं |
| 222. | 15. | अवनयतीत्यर्थ | अपनयन्तीत्यर्थः |
| 222. | 19,20. | वासर इत्ये० | वासरित्ये० |
| 223. | 14, 15. | अहा तत् | अहस्तत् |
| 224. | 3. | कर्मणा यदाख्येयेनाह। | कर्मणोदयाख्येनाहः। |
| 224. | 12. | इकारो | उकारो |
| 226. | 4. | य अन्तर (?) | येऽन्तास्ते |
| 227. | 10. | एनं | एणं |
| 227. | 13. | एन० | एण० |
| 228. | 4. | योनिद्वेन | योनिद्वयं |
| 228. | 10. | यतिक्षो (?) | तितिक्षा |
| 229. | 7. | नाश्व० | नानश्व० |
| 229. | 10. | शाक० | शाप० |
| 229. | 10. | मदीया तत्र सायकं | मदीयतपोसायकं |
| 230. | 11. | ०मन्तेरात्मनः | ०मन्तरात्मनः |
| 232. | 17. | ०करणाभिः | ०करणाभिः |
| 233. | 8. | तते | एते |
| 233. | 9. | प्रयितृभः | प्रयाभ्याः |
| 233. | 9. | ०नाम्नी | ०नाम्न्या |
| 235. | 1. | नः | न |
| 235. | 4. | तत्रात्मनि | तत्राग्नि |
| 235. | 5. | एदसत्वादनवगतम् | एतत्सत्त्वानवगतम् |
| 236. | 6. | उदकेचरो वा | शुन्ध्युरादित्य उदकेचरो वा |
| 236. | 9. | अन्नमन्नदनादन्नं | अन्न इत्यदनादन्नं |
| 237. | 8. | एवणिन | एषणिनः |
| 237. | 13. | छान्दसत्वात्। दसुगागमश्रिये | छान्दसत्वादसुगागमः। श्रिये |
| 238. | 3. | इषितारो | एषितारो |
| 238. | 14. | प्रत्यूहमानत्वादहःशब्देन | प्रत्युह्यमानत्वाद्वाहःशब्देन |
| 240. | 12. | धृषिरभावे | धृषिरभिभवे |
| 241. | 8. | यतः | य इति |
| 241. | 14. | अथ | अध |
| 241. | 17. | क्षिप्यर्माणे | क्षिप्यमाणे |
| 241. | 19. | विमुच्न्ते | विमुच्यन्ते |
| 242. | 1. | शत्राभि० | शत्रुभि० |
| 242. | 1. | द्रव्यमाना | दह्यमाना |
| 242. | 2. | ०र्भागभूमिः | ०र्दग्धभूमिः |
| 242. | 8. | वहति | हन्ति |
| 242. | 13. | मां विहायस | मां वायस |
| 242. | 13. | दयतिना० | डयतिना० |
| 242. | 15. | सजोषसा | सहोषसा |
| 243. | 6. | अनेकार्थः। | Should be omitted |
| 243. | 10. | सदु० | सेदु० |
| 246. | 5. | सामर्थ्यादिदम् | सामर्थ्याद् धनम् |
| 246. | 7. | । इत्यकुपरणं | इति । अकुत्सितं परणं |

| P. | L. | For | Read |
|---|---|---|---|
| 246. | 8. | ०पालस्य | ०पालनस्य |
| 246. | 9,12. | दावं | दाव |
| 246. | 12. | अकूपरणस्येति | अकुपरणस्येति |
| 246. | 13. | वरणं परणं | परणं वरणं |
| 246. | 14. | अकूपारः | अकुपारः |
| 247. | 12. | शपेः | शपः |
| 248. | 1 | आकर्षेण | प्रकर्षेण |
| 249. | 11. | च्यवनमि० | च्यवानमि० |
| 250. | 5. | ०दृष्टावित्यर्थः | ०वृष्टावित्यर्थः |
| 250. | 10. | अनवगत० | अवगत० |
| 250. | 11. | असुक्प्रत्य० | असुन्प्रत्य० |
| 250. | 11. | ०नाम्नावग० | ०नाम्नानवग० |
| 250. | 12. | ०णावगत० | ०णानवगत० |
| 250. | 13. | नैव गताः | ते ऽनवगताः |
| 250. | 14,15. | ०नैका० | ०नेका० |
| 251. | 4. | 'चकारणान्नु रजाशया' | चरकाणान्नु 'रजाशया' |
| 251. | 16. | ०रादिष्टो० | ०रादिष्टो० |
| 251. | 16, 17. | नियुतो वायेरिति | Quotation from Ng. 2. 15. |
| 251. | 17. | इत्थम्भूलक्षणे | इत्थम्भूतलक्षणे |
| 252. | 2. | ०जनन० | ०नयन० |
| 252. | 16. | ०राग्नय० | ०रात्रेय० |
| 253. | 8. | वा प्राप्नुवन्तम् | वा प्राप्नुवन्ति |
| 253. | 10. | शुद्धं केवलं | अशुद्धं न केवलं |
| 253. | 13. | सहृष्टौ | संहृष्टौ |
| 253. | 13. | अनुहग्रह० | अनुग्रह० |
| 253. | 18. | ०मुच्यते | ०मुह्यते |
| 254. | 6. | वर्धयन्त्यो | वर्धयन्त्यो |
| 254. | 17. | प्रशस्याः | प्रशस्याः |
| 254. | 17. | वसूयवोः | वसूयवः |
| 256. | 12. | कृत्प्रत्ययः | कृत्यप्रत्ययः |
| 256. | 18. | गुं ॰ | गुर् |
| 257. | 3. | अतीरे बालिश-समा० | अतिरेकबालिशा-समा० |
| 259. | 7. | ०जाय० | ०जात० |
| 259. | 11. | वा ण्यन्तस्य वा पाथिता | पातेर्ण्यन्तस्य वा पालयिता |
| 259. | 11. | रक्षयितव्येत्यर्थः | रक्षयितेत्यर्थः |

| P. | L. | For | Read |
|---|---|---|---|
| 260. | 8. | जातिवचनः । संज्ञाति० | ज्ञातिवचनः । सा ज्ञाति० |
| 260. | 10. | ०रिक्षाख्यातम् | ०रिक्षाख्यम् |
| 261. | 1. | द्वे नात्मनस्ततः | द्वे नैकस्ततः |
| 261. | 6. | चतुर्थ्या । अत्र | चतुर्थ्या अत्र |
| 261. | 13. | शंमु० | शमु० |
| 261. | 16. | प्रां पापत्वं | अपापत्वं |
| 261. | 16. | दधाति धत्त | दधात धत्त । |
| 261. | 16. | एव एते | एवमेते |
| 261. | 19,20. | ०दात्तत्वात् | ०दात्तत्वम् |
| 261. | 20. | यो नित्यमुदात्तः | योरित्ययमुदात्तः |
| 263. | 3. | ०काना | ०कानां |
| 263. | 5,6. | नित्यं विपूर्वत्वान्न त्वयाच्चि | नित्यमवपूर्वत्वाद-र्थान्वयाच्च |
| 264. | 16. | ०भ्यस्तेः | ०भ्यस्तः |
| 265. | 3. | ०नौमतत् | ०नामैतत् |
| 265. | 4. | अभिनुभि (?) मर्यादायाम् | आ हिनुहि मर्यादया |
| 265. | 6. | पतिर्न राशे | पतिरीष्टे |
| 266. | 5. | एवम० | एनम० |
| 267. | 13. | मदनं | मन्दनं |
| 267. | 14. | इतिठनौ | इनिठनौ |
| 267. | Footnote 17 | | [पा० ५-२-११५] सूत्रे महाभाष्ये । |
| 269. | 7. | ०मपिचिद्वाना० | ०मपिधाना० |
| 269. | 8. | अवगच्छतमा० | अपगतमा० |
| 269. | 12. | दसयन्त | दंसयन्त |
| 269. | 19. | मन्वना | मन्वाना |
| 270. | 2. | ददातीत्यर्थः | ददतीत्यर्थः |
| 271. | 5. | ०मुस्राविर्णं | ०मुत्स्राविणं |
| 271. | 16. | जनयद्यै | जनयत्यै VS.1.22. |
| 271. | 21. | मैत्रावरुणीनां | मैत्रायणीयानां |
| 272. | 20. | नियमो | निगमो |
| 274. | 8. | द्वादेशो वा | ऽन्वादेशो वा |
| 274. | 11. | अस्य | अस्य |
| 275. | 1. | ०णादिष्टस्य | ०णानादिष्टस्य Cf. line. 14. |
| 275. | 2. | इत्यर्थ० | इत्यत्र — |
| 257. | 15. | ऽल्पवानर्थः | ऽल्पीयोऽर्थः |
| 275. | 18. | ०ल्पीयार्थ० | ०ल्पीयोर्थ० |

